Harih Om

# ŚRĪMAD
# BHĀGAVATA MAHĀPURĀṆAM

*of Maharṣi Vedavyāsa*

**SKANDHA - IV**

**With the Commentaries :**

*Bhavarthadipika of Sri Sridharaswami, Bhagavatachandrachandrika of Sri Vira Raghavacharya, Padaratnavali of Sri Vijayadhvaja Tirtha*

**Edited by**


Panditaraja, Sahitya Visarada, Vacaspati, Siromani Vidwan,
Recipient of President's Certificate of Honour
**Dr. N.C.V. Narasimhacharya,** M.A., B.O.L.,
SPECIAL OFFICER
**SRI BHAGAVATHA PROJECT**
T.T.Devasthanams, Tirupati





Published by
**EXECUTIVE OFFICER**
**Tirumala Tirupati Devasthanams**
Tirupati
**2004**

ओं नमो वेङ्कटेशाय

श्रीवेदव्यासमहर्षिप्रणीतम्

# श्रीमद्भागवतमहापुराणम्

## चतुर्थः स्कन्धः

श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका, श्रीवीरराघवनिर्मिता श्रीभागवतचन्द्रचन्द्रिका,

श्रीविजयध्वजविलिखिता पदरत्नावली चेति त्रिभिः व्याख्यानैः भूषितम्


पण्डितराजः साहित्यविशारदः वाचस्पतिः शिरोमणिः विद्वान् इति बिरुदभाजा

**राष्ट्रपति पुरस्कार ग्रहीत्रा**

**डा.एन्.सि.वि. नरसिंहाचार्येण**

(विशिष्टाधिकारी, श्रीमद्भागवत शोधपूर्ण परिष्करण परिषत्)


**परिष्कृतम्**





**तिरुमल तिरुपति देवस्थान**

**कार्यनिर्वहणाधिकारिभिः**

**प्रकाशितम्**

**2004**

हरिः ओम्

ईशानां जगतोऽस्य वेङ्कटपतेर्विष्णोः परां प्रेयसीं
तद्वक्षःस्थलनित्यवासरसिकां तत्क्षान्तिसंवर्धनीम् ।
पद्मालङ्कृतपाणिपल्लवयुगां पद्मासनस्थां श्रियं
वात्सल्यादिगुणोज्ज्वलां भगवतीं वन्दे जगन्मातरम् ॥



श्रीमद्वेङ्कटनायकस्य हृदये द्वेधा विधायाऽऽत्मनो
मूर्तिं शश्वदियं कृपामृतझरीस्रोतस्विनी भार्गवी ।
उद्धर्तुं निखिलानगण्यविषमांहोवह्निदग्धात्मनो
जन्तून् सन्निदधाति विश्वजननी पद्मावती रक्षतात् ॥

हरिः ओम्

लोकोद्धारैकदीक्षापरनिगममहाहर्म्यधर्म्यप्रदीपः
स्वाङ्घ्रिद्वन्द्वप्रपन्नाखिलदुरिततमोध्वंसिपुण्यप्रदीपः ।
दिङ्मूढेभ्यो नरेभ्यः प्रकटितसरणिः स्नेहदीप्रः प्रदीपः
युष्मानस्मान्समस्तानवतु वृषगिरिस्थास्नु मङ्गल्यदीपः ॥



श्रीमद्भागवतं पुराणमखिलाम्नायैकसारः क्व वा ?
प्रज्ञादुर्विधकिम्पचानधिषणाः शैक्षाः क्व वा मादृशाः ?
भक्त्या चापलतस्तथाऽपि च परिष्कर्तुं वयं व्यापृताः,
एतत् प्राभृतयाम वेङ्कटपतेः पादाब्जयोः, स्वीक्रियात् ॥

# The Critical Edition of Srimad Bhagavata

## The Editorial Board

# Contents

**FOREWORD**

Vedas are the source of Sanatana Dharma. Puranas explain the meaning of the Vedas by way of narration of interesting stories. Amongst these Puranas, Vyasa's Bhagavatam is considered to be the best. It is the ripened fruit fallen from the Kalpavruksha of the Vedas.

In this Kali Yuga, devotion towards God, is said to be the easiest way of crossing the ocean of Samsara. In the books extolling 'Bhakti Tattva' there is no treatise which equals this Bhagavata.

The King Parikshit of Pandava race, was severely cursed by Srungi, due to a heinous crime committed by him to the latter's father. The king came to know that he would sure meet his death at the end of a week. At that critical juncture he was expecting a Guru who would show him a way out. At the moment, Sage Suka, the son of Vyasa, happened to come to him, by the grace of God. The Sage preached the king, the Bhagavata Purana, for a week. That is the reason why, Bhagavata Pravachanams are arranged generally for a week.

The Bhagavata Project was established by T.T.D. with the intention of bringing out a critical edition of Bhagavata. Eminent scholars have since completed the onerous task of editing the book with three famous commentaries.

The process of printing the sacred work, is under progress. So far, the first Skandha and three volumes of the tenth Skandha have been published. The present volume is the fourth Skandha. The well-known scholar, and recipient of President's award, late Dr. N.C.V. Narasimhacharya, has edited this volume. Our grateful thanks are due to him.

We are putting forth our sincere efforts to publish the remaining volumes soon. It is hoped that the readers would receive this volume with due devotion and respect.

**Ajeya Kallam,** I.A.S.
Executive Officer,

Tirupati,
2-4-2004

## INTRODUCTION

To the Vaishnavites, the most favourite treatise is the Srimadbhagavata, the best of all the Puranas. It perfectly reveals the actionless state imbued with knowledge, detachment and devotion. "One who hears or reads this holy Purana, with devotion and discrimination, is sure to attain Liberation", says Bhagavata.

While Bhagavadgita is a theoretical treatise, the Bhagavata is a treatise full of practical illustrations, according to the experts in spiritual field. What is enunciated in the Gita by way of theory is amply illustrated by interesting stories in Bhagavata. For example, Lord Krishna says in the Gita that there are four kinds of devotees worshipping Him, namely Aarta, Jijnaasu, Arthaarthi andJnaani.

The nature of all these devotees is clearly explained in Bhagavata through beautifulstories. Aarta Bhakta is Gajendra, Jijnaasu Bhakta is Uddhava, Arthaarthi Bhakta is Dhruva, while Jnaani Bhakta is Suka. The stories of Gajendra etc. are very famous in Bhagavata.

Bhagavata, in its Twelfth Canto, explains its own greatness as follows: "The other Puranas shine amongst the virtuous, so long as this Purana is not known. Srimadbhagavata is the essence of the entire Vedanta. One who is satisfied by this ambrosia of Bhagavata will not relish any other Purana. This Purana is considered as the foremost of all the other Puranas, just as the Ganga amongst the rivers, Vishnu amongst Gods and Siva amidst the devotees of Lord Vishnu."

The readers are aware that the TTD is publishing various religious books in numerous languages. In order to bring out the critical edition of Srimadbhagavata Purana, with well-known commentaries, the Bhagavata Project was established by the TTD..

Eminent scholars edited this holy book after perusing a large number of editions with three famous commentaries of Sridhara, Veeraraghava and Vijayadhwaja. All the information related to this critical edition, has already been given in the introduction of the first Skandha itself.

The first Skandha and the three volumes of the tenth Skandha have already been published by the TTD. The present volume is the fourth Skandha. The publication of the remaining volumes is under progress.

In this Skandha, the destruction of Daksha Yagna, the story of Dhruva, the account of Vena, the story of Pruthu and the Puranjanopakhyana and other subjects are vividly described. Daksha Prajapati while performing Yagna, despises Lord Siva and gets annihilated. Dhruva, on the other hand, though a child, inspired by Narada, performs penance soliciting the grace of Lord Vasudeva and becomes the Pole-star.

Vena, due to his unrighteous conduct, gets destroyed, while Pruthu with his righteous conduct becomes a glorious king. Similarly, the story of Puranjana, is pregnant with philosophical thought. These stories attract the hearts of readers and fill them with piety.

This Skandha was edited by well-known Sanskrit scholar, recipient of President's award, and our Guru, Sriman Dr. N.C.V. Narasimhacharya Swami. He reached the Lotus feet of the Lord, even before the publication of this book.

The scholars who assisted in preparing this edition are: 1. Sriman K.C. Jayachandra Sastri, 2. Sriman U. Venkatramaiah and 3. Sriman Varada Rajan, who deserve the gratitude of the readers.

The research assistants, namely, Sriman S.B.S. Bhattachaarya and Smt. S. Purnavalli also deserve our commendation. Sri I. Venkateswara Rao and Dr. S. Dasaratha and others who helped immensely in proof reading of the work also deserve our gratitude.

Sri Ajeya Kallam, IAS, the revered Executive Officer of the TTD and Dr.V.R.Panchamukhi,the well-known Sanskrit scholar; the revered Chancellor of Rashtriya Sanskrit Vidya Peeta, Tirupati and Hon. Member of the TTD Board and Dr. Medasani Mohan, the Director of Annamacharya Project and other members of the advisory committee of the Bhagavatam project are offered our deep gratitude for their keen interest and co-operation in bringing out this edition.

Tirupati,
2-4-2004

Samudrala Lakshmanaiah,
Special Officer,
Sri Bhagavata Project, T.T.D.

# निवेदनम्

*श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियं*
*यस्मिन्पारमहंस्यमेक तदखिलं ज्ञानं परं गीयते।*
*यत्र ज्ञानविरक्तिभक्तिसहितं नैष्कर्म्य माविष्कृतं*
*तच्छृण्वन् विपठन् विचारणपरो भक्त्या विमुच्येन्नरः ॥* (भाग. 12-13-18)

पुराणश्रेष्ठत्वेन प्रसिद्धं श्रीमद्भागवतं विष्णुभक्तानां नितरां प्रियतमं भवति। अत्र ज्ञानवैराग्यभक्तिभिः सहितं नैष्कर्म्यं सुष्ठु प्रकटीकृतमस्ति। यस्तावत् विचारणशीलस्सन् भक्त्या पुराणमिदं श्रुणोति अथवा पठति स मुक्तो भवतीत्यत्र न संशयः।

भगवद्गीता लक्षणग्रन्थ इति, भागवतं लक्ष्यग्रन्थ इति च तत्त्वज्ञा वदन्ति। सिद्धान्तरूपेण भगवद्गीतायां प्रतिपादिता विषया भागवते अत्यन्तं रुचिराभिः कथाभिर्निरूप्यन्ते। तथाहि। गीतायां भगवता श्रीकृष्णेन भक्ताः चतुर्विधा भवन्तीति प्रत्यपादि। एतेषां चतुर्विधानामपि भक्तानां स्वरूपं भागवते कथाकथन रूपेण सम्यङ्निरूपितमस्ति। आर्तभक्तः गजेन्द्रः, जिज्ञासुभक्त. उद्धव , अर्थार्थिभक्तः ध्रुवः, ज्ञानिभक्तः शुक इत्येवं गजेन्द्रादीनां भक्तानां कथाः भागवते प्रसिद्धा एव।

अपि चास्य पुराणस्य महिमा अस्मिन्नेव ग्रन्थे द्वादशे स्कन्धे त्रयोदशाध्याये एवं परिकीर्तितः -

*राजन्ते तावदन्यानि पुराणानि सतां गणे।*
*यावन्न दृश्यते साक्षात् श्रीमद्भागवतं परम्॥*

*सर्ववेदान्तसारं यत् श्रीभागवतमिष्यते।*
*तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित्॥*

*निम्नगानां यथा गङ्गा देवाना मच्युतो यथा।*
*वैष्णवानां यथा शम्भुः पुराणानामिदं तथा॥* (भाग- 12-13-14,15,16)

तिरुमल तिरुपति देवस्थानेन अनेकासु भाषासु धार्मिका आध्यात्मिकाश्च बहवो ग्रन्थाः प्रकटीक्रियन्त इति पाठका जानन्त्येव। पुराणश्रेष्ठं भागवतमपि सुप्रसिद्धव्याख्यानैस्सह परिष्कृत्य प्रकटीकरणीयमिति तदर्थमेव 'श्रीभागवत परिष्करण परिषत्' इति काचन संस्था स्थापिता। सुप्रसिद्धा विद्वांसः बहुग्रन्थपरिशीलनेन भागवतमिदं श्रीधरीय, वीरराघवीय विजयध्वजीयाख्यैः त्रिभिर्व्याख्यानैः सम्यक् परिष्कृत्य मुद्रणयोग्यप्रतिं सज्जीचक्रुः।

ग्रन्थस्यास्य परिष्करणमधिकृत्य ज्ञातव्याः विषयाः सर्वेऽपि प्रथमस्कन्धस्य पीठिकायामेव विशदीकृताः।

इतः पूर्वं प्रथमस्कन्धः एवं दशमस्कन्धस्य त्रयो भागाश्च देवस्थानेन प्रकाशिताः। चतुर्थः स्कन्धः अधुना पाठकानां करकमलमलङ्करोति। अवशिष्टानामपि स्कन्धानां प्रकाशनं सत्वरं सम्पत्स्यते।

अस्मिन् चतुर्थस्कन्धे, दक्षाध्वरध्वंसः, ध्रुवोपाख्यानम्, वेनचरित्रम्, पृथोश्चरितम्, पुरञ्जनोपाख्यानम् इत्येतदादयो विषयाः क्रमेण वर्ण्यन्ते।

दक्षप्रजापतिः यज्ञं कुर्वन् भगवन्तं शिवं अनादृत्य भ्रष्टो बभूव। बालोऽपि ध्रुवः नारदस्य उपदेशेन भगवन्तं वासुदेवमाराध्य ध्रुवस्थानं लेभे। अधर्मप्रवृत्तेः वेनस्य विनाशः, परमधार्मिकस्य पृथोः वैभवम्, तत्त्वार्थपूर्णं पुरञ्जनोपाख्यानं इत्येतदादयो बहवः अंशाः स्कन्धेऽस्मिन् पाठकानां हृदयानि रञ्जयन्ति, तेषु भक्तिभावमपि उपस्थापयन्ति।

विद्वद्वर्यैः राष्ट्रपतिपुरस्कारेण सम्मानितैः, बहुभाषानिपुणैः अस्मद्गुरुभिः श्रीमद्भिः डा.यन्.सि.वि. नरसिंहाचार्य स्वामिभिः व्याख्यानत्रयसमलङ्कृतोऽयं ग्रन्थः महता श्रमेण परिष्कृतः। ग्रन्थप्रकाशनात्पूर्वमेव ते महाभागाः यशश्शरीरा बभूवुः।

अस्य ग्रन्थस्य परिष्करणे सम्पादने च बहुधा उपकृतवन्तः श्रीमन्तः के.सि. जयचन्द्रशास्त्रिणः, यु. वेङ्कटरामय्यनामानः आ. वरदराजन्नाह्वयाश्च कृतज्ञताञ्जलि मर्हन्ति, एवं श्रीमान् यस्.बि.यस्. भट्टाचार्यः, श्रीमती. यस्. पूर्णवल्ली च कृतज्ञता मर्हतः।

मुद्रणसमये अक्षरशोधनकर्मणि सहकारं प्रदत्तवन्तः श्रीमन्तः श्री. ऐ.वेङ्कटेश्वररावु महोदयाः, डा.यस्. दशरथाख्यः एवं अन्येच धन्यवादान् अर्हन्ति।

किञ्च अस्य ग्रन्थस्य मुद्रणे नितरां श्रद्धां प्रदर्शितवद्भ्यः ति.ति.दे. श्रीकार्यनिर्वहणाधिकारिभ्यः श्री अजेय कल्लं I.A.S. महाशयेभ्यः एवं ति.ति.दे धर्मकर्तृमण्डलीसदस्येभ्यः विद्वद्वर्येभ्यः डा. वी. आर्. पञ्चमुखिमहादयेभ्यः, अन्नमाचार्य प्राजेक्ट्, निदेशकेभ्यः डा. मेडसानि मोहन् महाशयेभ्यः एवं अन्येभ्यश्च भागवत सम्पादन परिष्करण मार्गदर्शक मण्डली सदस्येभ्यः सादरं कृतज्ञताञ्जलयः समर्प्यन्ते।

'लोकास्समस्ता स्सुखिनो भवन्तु'

तिरुपतिः

2-4-04

***समुद्राल लक्ष्मणय्य***

विशिष्टाधिकारी

श्रीभागवतपरिष्करण परिषत्

ति.ति.देवस्थानम्

# LIST OF ABBREVIATIONS

(of the Edition of Srimad Bhagavata Mahapurana being referred to)

1.A. Edited by Sri Krishna Sankara Sastri-contains about 30 commentaries -Printed in Devanagari Script at Ahmedabad, Gujarat.

2.B. Printed in Devanagari Script at Brindavan-contains 9 commentaries.

3.G. Contains text only-Printed at Gita Press, Ghorakhpur-in Devanagari Script.

4.H. Contains Sridhara's Commentary. Edited by Sri Hayagriva Sastry. Printed in Telugu Script at Madras.

5.J. Contains Sridharacharya's Commentary-Edited by Prof. J.L. Sastri-in Devanagari Script.

6.M. Contains the commentary of Sri Vijaya Dhvaja Tirtha-Printed in Devanagari Script Madhva Edition.

7.Ma. Contains the commentary of Sri Vijaya Dhvaja Tirtha-Printed in Devanagari Script-Another Madhva Edition.

8.T. Contains the commentary of Sri Veera Raghavacharya -Printed in Telugu Characters-Published by Sri Tridandi Srimannarayana Ramanuja Jeer Swami

9.V. Contains the commentary of Sridharacharya-Printed at Vavilla Press, Madras in Telugu Script.

10.W. Contains the commentary of Sri Veera Raghavacharya- Printed in Telugu characters-Published by the Maharaja of Wanaparti Samsthan, Andhra.

## LIST OF ABBREVIATIONS

### Commentaries

1. श्रीध० श्रीधरस्वामिविरचिता भावार्थदीपिका

2. वीर० श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

३. विज० श्रीविजयध्वजतीर्थकृता पदरत्नावली

# Texts cited in commentaries and their Abbreviations

| Abbreviation | Name of the Book | Abbreviation | Name of the Book |
|---|---|---|---|
| अथ.शिखा.उ. | अथर्वशिखोपनिषत् | ब्र.सू. | ब्रह्मसूत्राणि |
| अद्वै.उ. | अद्वैतोपनिषत् | - | ब्राह्मे |
| - | अध्यात्मे | - | भद्रिकायाम् |
| - | अभिधानम् | भ.गी. | भगवद्गीता |
| अम.को. | अमरकोश. | भर.सं. | भरद्वाजसंहिता |
| अष्टा. | अष्टाध्यायी | - | भागवततन्त्रे |
| - | अहिर्बुध्न्यसंहिता | भाग. | भागवतम् |
| आगम.प्रा. | आगमप्रामाण्यम् | - | भविष्यत्पुराणे |
| आप.श्रो.सू. | आपस्तम्ब श्रौतसूत्रम् | भारते.आनु. | भारते आनुशासनिकपर्व |
| - | आग्नेये | भारते.आरण्य | भारते आरण्यपर्व |
| ईशा.उ. | ईशावास्योपनिषत् | भारते. उद्योग | भारते उद्योगपर्व |
| उणा. सू. | उणादिसूत्राणि | भारते.शान्ति | भारते शान्तिपर्व |
| - | उत्पलमाला | मनु.स्मृ. | मनुस्मृतिः |
| ऋक्.सं. | ऋक् संहिता | - | महाकौर्मे |
| ऐत.उ. | ऐतरेयोपनिषत् | - | माहात्म्ये |
| कठ.उ. | कठोपनिषत् | म.ना.उ. | महानारायणोपनिषत् |
| - | कापिलेये | महा.उ. | महोपनिषत् |
| कुमार.स. | कुमारसम्भवम् | माण्डू.उ. | माण्डूक्योपनिषत् |
| कौषी.उ. | कौषीतक्युपनिषत् | - | माध्यन्दिनश्रुतिः |
| - | क्रियायोगे | मुण्ड.उ. | मुण्डकोपनिषत् |
| - | गारुडे | मैत्रा.उ. | मैत्रायण्युपनिषत् |
| - | गोपालः | याज्ञ.स्मृ. | याज्ञवल्क्यस्मृतिः |
| - | चाक्रायण श्रुतिः | रामा. | रामायणम् |
| छान्दो.उ. | छान्दोग्योपनिषत् | - | रुद्रः |
| जित.स्तो | जितन्ता स्तोत्रम् | - | लक्ष्मीतन्त्रे |
| - | तत्त्वनिर्णये | वर.स्तवः | वरदराजस्तवः |
| - | तन्त्रभागवते | - | वामने |
| तैत्ति.आ. | तैत्तिरीय आरण्यकम् | - | वाराहे |
| तैत्ति.उ. | तैत्तिरीयोपनिषत् | - | वररुचिः |
| तैत्ति.सं. | तैत्तिरीयसंहिता | विष्णु.ध.पु. | विष्णुधर्मोत्तरपुराणम् |
| - | दत्तः | विष्णु.पु. | विष्णुपुराणम् |
| - | नारदीये | - | विष्वक्सेनसंहिता |
| निरा.उ. | निरालम्बोपनिषत् | वे.नि. | वेदनिघण्टुः |
| - | निरुक्तम् | - | शब्दनिर्णये |
| नृ.उ.ता.उ. | नृसिंह उत्तरतापिन्युपनिषत् | शार्ङ्ग.पद्ध. | शार्ङ्गधरपद्धतिः |
| - | पञ्चतन्त्रे | - | शिशुपालवधम् |
| - | परमसंहिता | श्वेता.उ. | श्वेताश्वेतरोपनिषत् |
| - | पाञ्चरात्रे | सुबा.उ. | सुबालोपनिषत् |
| - | पाद्मपुराणम् | सुभा. | सुभाषितरत्नभाण्डागारम् |
| पु.सू. | पुरुषसूक्तम् | सूर्य.उ. | सूर्योपनिषत् |
| - | प्रकाशिकायाम् | - | स्कान्दे |
| प्रश्न.उ. | प्रश्नोपनिषत् | - | षाड्गुण्ये |
| बृह.उ. | बृहदारण्यकोपनिषत् | - | हरिवंशे |
| - | ब्रह्मतर्के | हला.को. | हलायुधकोशः |
| - | ब्रह्मवैवर्त्ते | - | हेमचन्द्रः |

# श्रीमद्भागवतमहापुराण - चतुर्थस्कन्धस्थ - विषयानुक्रमणी

# श्रीमद्भागवतमहापुराण चतुर्थस्कन्धीय
# अध्यायार्थसङ्ग्रहश्लोकाः

तत्रतु प्रथमाध्याये मनुकन्यान्वयाः पृथक्। वर्ण्यन्ते यत्र यज्ञादिमूर्तिभिः प्रभवा हरेः ॥ १ ॥

द्वितीये प्रथमाध्यायोपक्षिप्त भव दक्षयोः। विद्वेषे वर्ण्यते हेतु र्विश्वसृड्यज्ञसम्भवः ॥ २ ॥

तृतीये तु सती तात यज्ञोत्सवदिदृक्षया। गमिष्यन्ती महेशेन वारिता नीतिहेतुभिः ॥ ३ ॥

चतुर्थे तु पतिं हित्वा गता पित्राऽवमानिता। रुषा निर्भर्त्स्य तं यज्ञे जहौ देहमितीर्यते ॥ ४ ॥

पञ्चमे तु सती देहत्याग माकर्ण्य शङ्करः। वीरभद्रं रुषोत्पाद्य तेन दक्षमजीघनत् ॥ ५ ॥

षष्ठे तु देवसङ्घेन सह गत्वा भवं विधिः। सान्त्वयामास दक्षादि जीविताद्यर्थ मादरात् ॥ ६ ॥

सप्तमे विष्णु रुद्रूत स्स्तुतो दक्षभवादिभिः। यज्ञं प्रवर्तयामास दक्षेनेति निरूप्यते ॥ ७ ॥

मनुकन्यान्वये प्राप्ता दक्षयज्ञ कथोदिता। मनुपुत्रान्वये प्राप्ता ध्रुवचर्याऽथ पञ्चभिः।
अष्टमे गुरुदारोक्ति रोषमत्सरतः पुरात् निर्गतेन ध्रुवेणाऽऽह तपसा तोषणं हरेः ॥ ८ ॥

नवमे तु हरिं स्तुत्वा लब्ध्वा तस्मा द्वरान् ध्रुवः। प्रत्यागत्याऽकरो द्राज्यं पित्रा दत्तमितीर्यते ॥ ९ ॥

दशमे भ्रातृ हन्तॄणां यक्षाणामकरो द्वधम्। एक एवाऽलकां गत्वे त्यस्य विक्रम ईर्यते ॥ १० ॥

एकादशे तु यक्षाणां दक्षं दृष्ट्वा मनुः स्वयम्। आगत्य वारयामास ध्रुवं तत्त्वोपदेशतः ॥ ११ ॥

द्वादशे धनदेनाभिनन्दितः पुर मागतः। यज्ञै रिष्ट्वा हरेः स्थान मारुरोहेति कीर्त्यते ॥ १२ ॥

एवं पञ्चभिरध्यायै र्ध्रुवचर्याऽनुवर्णिता। अथैकादशभि श्चित्रं पृथुचारित्र मुच्यते ॥
तत्र त्रयोदशे वक्तुं पृथोर्जन्म ध्रुवान्वये। अङ्गो वेनपितापुत्रक्रौर्याद्गत इतीर्यते ॥ १३ ॥

चतुर्दशे तु दुष्पुत्रभया दङ्गे गते द्विजैः। अभिषिक्तस्य वेनस्य रोषा त्तै र्वध उच्यते ॥ १४ ॥

ततः पञ्चदशे विप्रै र्मथना द्वेन बाहुतः। जातस्य तु पृथो रुक्त मभिषेकार्हणादिकम् ॥ १५ ॥

षोडशे सर्वलोकेशै स्सत्कृतं भार्यया युतम्। मुनिप्रयुक्ता स्सूताद्याः स्तुवन्ति स्मेति वर्ण्यते ॥ १६ ॥

तत स्सप्तदशे लोके क्षुधः प्रशमयन् पृथुः। ग्रस्त बीजां महीं हन्तुं यत्तो भीत्या तया स्तुतः ॥ १७ ॥

आलोलतुलसीमाल मारूढविनतासुतम्। ज्योति रिन्दीवरश्याम माविरस्तु ममाऽग्रतः ॥
अष्टादशे महीवाक्या द्वत्सपात्रादि भेदतः। पृथ्वादिभि स्तु क्रमश स्सा दुग्धेति निरूप्यते ॥ १८ ॥

ऊनविंशेऽश्वमेधाङ्ग हयापहरणात्पृथोः। इन्द्रं हन्तुं प्रवृत्तस्य धात्रा वारण मुच्यते ॥ १९ ॥

विंशे तु विष्णुना साक्षात्पृथो र्यज्ञेऽनुशासनम् । वरदान प्रसङ्गेन प्रीतिश्चाऽन्योन्य मीर्यते ।। २० ।।

एकविंशे तु पृथुना प्रजाना मनुशासनम् । महासत्रे सुरादीनां महासदसि वर्ण्यते ।। २१ ।।

द्वाविंशे तु परंज्ञानं पृथवे हरिशासनात् । सनत्कुमारो भगवानुपादिशदितीर्यते ।। २२ ।।

त्रयोविंशे सभार्यस्य वने नित्यसमाधितः । विमान मधिरुह्याऽथ वैकुण्ठगति रीर्यते ।। २३ ।।

एकादशभिरध्यायैः पृथो श्चरितमीरितम् । प्रचेतसा मथाऽष्टाभि स्तन्मध्ये पञ्चभिः पितुः ।
(चतुर्विंशे प्रपौत्रात्तु पृथोः प्राचीनबर्हिषः प्रचेतसां जनि स्तेभ्यो रुद्रगीतञ्च वर्ण्यते ।।) ।। २४ ।।

प्रचेतस्सु तपस्यत्सु तत्पित्रे नारदो घृणी । प्राचीनबर्हिषेऽध्यात्मं परोक्षेणाऽऽह पञ्चभिः ।।
(पुरञ्जनकथाव्याजा त्पञ्चविंशे तु नारदः । आत्मनो बुद्धिसङ्गेन विविधा माहसंसृतिम् ।
प्रचेतस्सु तपस्तीव्रं तप्यमानेषु नारदः । पुरञ्जनकथा कूटं प्राह प्रचीनबर्हिषे ।।) ।। २५ ।।

षड्विंशे मृगयाव्याजा त्स्वप्नजागरणोक्तिभिः । सद्बुद्धित्यागयोगाभ्यां संसृति स्सा प्रपञ्च्यते ।। २६ ।।

सप्तविंशेप्रियापुत्रा द्यासक्त्या विस्मृतात्मनः । काल कन्या द्युपाख्यानै र्जरारोगा द्युदीर्यते ।। २७ ।।

अष्टाविंशे तु वैदर्भ्या ध्यानेन स्त्रीविचिन्तया । स्त्रीत्वं प्राप्तस्य दैवेन कदाचि न्मुक्तिरुच्यते ।। २८ ।।

ऊनत्रिंशे परोक्षार्थव्याख्याने नोपसंहृतम् । स्त्रीसङ्गतो भवस्त्वीश सङ्गा न्मुक्ति रुदीर्यते ।। २९ ।।

प्रसङ्गात्पञ्चभिः प्रोक्तं वृतं प्राचीनबर्हिषः । वर्ण्यते त्त पुनर्द्वाभ्यां प्रस्तुतञ्च प्रचेतसाम् ।।
(तत्र त्रिंशे तप स्तुष्टा द्देवा ल्लब्धवरा स्ततः । आगत्य वार्क्षी मुद्वाह्य राज्यं चक्रु रितीर्यते ।। ३० ।।

एकत्रिंशे सुते दक्षे धुरं न्यस्य प्रचेतसः । नारदोक्तेन मार्गेण गता मुक्ति रितीर्यते ।। ३१ ।।



# श्रीमद्भागवतपाठविधिः

स्नातः शुचिर्भूत्वा प्राणा नायम्य त्रिराचम्य च मङ्गलपाठपूर्वकं भगवन्तं प्रणमेत्। तदनु सञ्चितैः षोडशोपचारैर्मानसोपचारैर्वा व्यासं शुकं वासुदेवं श्रीमद्भागवतग्रन्थं च सादरं सविनयं सभक्तिभावं सम्पूजयेत्। ततः पाठारम्भात् प्राक् 'ओं नमो भगवते वासुदेवाय' इति द्वादशाक्षरमन्त्रम् 'ओं क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा' इति गोपालमन्त्रं वाऽष्टोत्तरशतवारं जपेत्। पश्चादेवं विनियुञ्जीत-

## विनियोगः

ओं अस्य श्रीमद्भागवताख्यस्तोत्रमन्त्रस्य नारद ऋषिः, बृहती छन्दः, श्रीकृष्णः परमात्मा देवता, ब्रह्म बीजम्, भक्तिः, शक्तिः, ज्ञानवैराग्ये कीलकम्, मम श्रीमद्भगवत्प्रसादसिद्ध्यर्थं पाठे विनियोगः।

## ऋष्यादिन्यासः

'नारदर्षये नमः' शिरसि। 'बृहतीच्छन्दसे नमः' मुखे। 'श्रीकृष्णपरमात्मदेवतायै नमः' हृदि। 'ब्रह्मबीजाय नमः' गुह्ये। 'भक्तिशक्तये नमः' पादयोः। 'ज्ञानवैराग्यकीलकाय नमः' नाभौ। श्रीमद्भगवत्प्रसादसिद्ध्यर्थकपाठविनियोगाय नमः सर्वाङ्गे। द्वादशाक्षरमन्त्रेण हृदयाद्यङ्गन्यासं करन्यासं च कुर्यात्। अथवाऽधोऽङ्कितरीत्याऽङ्गन्यासकरन्यासौ विदध्यात् -

## अङ्गन्यासः

ओं क्लां हृदयाय नमः। ओं क्लीं शिरसे स्वाहा। ओं क्लूँ शिखायै वषट्। ओं क्लैं कवचाय हुम्। ओं क्लौं नेत्रत्रयाय वौषट्। ओं क्लः अस्त्राय फट्।

## करन्यासः

ओं क्लां अङ्गुष्ठाभ्यां नमः। ओं क्लीं तर्जनीभ्यां नमः। ओं क्लूं मध्यमाभ्यां नमः। ओं क्लैं अनामिकाभ्यां नमः। ओं क्लौं कनिष्ठिकाभ्यां नमः। ओं क्लः करतलकरपृष्ठाभ्यां नमः।

## अथ ध्यानम्

कस्तूरीतिलकं ललाटफलके वक्षःस्थले कौस्तुभं नासाग्रे नवमौक्तिकं करतले वेणुं करे कङ्कणम्।
सर्वाङ्गे हरिचन्दनं च कलयन् कण्ठे च मुक्तावलिं गोपस्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः॥

अस्ति स्वस्तरुणीकराग्रविगलत्कल्पप्रसूनाप्लुतं वस्तु प्रस्तुतवेणुनादलहरीनिर्वाणनिर्व्याकुलम्।
स्रस्तस्रस्तनिबद्धनीविविलसद्गोपीसहस्रावृतं हस्तन्यस्तनतापवर्गमखिलोदारं किशोराकृति॥

इत्येवं ध्यात्वा पाठमारभेत।

## श्रीमद्भागवतसप्ताहपारायणस्य दैनन्दिनविश्रामस्थलानि निम्नाङ्कितपद्येषु निरूपितानि

मनुकर्दमसंवादपर्यन्तं प्रथमेऽहनि। भरताख्यानपर्यन्तं द्वितीयेऽहनि वाचयेत्।
तृतीये दिवसे कुर्यात् सप्तमस्कन्धपूरणम्। कृष्णाविर्भावपर्यन्तं चतुर्थे दिवसे वदेत्॥

रुक्मिण्युद्वाहपर्यन्तं पञ्चमेऽहनि शस्यते। श्रीहंसाख्यानपर्यन्तं षष्ठेऽहनि वदेत्सुधीः।
सप्तमे तु दिने कुर्यात् पूर्तिं भागवतस्य वै। एवं निर्विघ्नतासिद्धिर्विपर्यय इतोऽन्यथा॥

हरिः ओम्

# श्रीमद्भागवतमहापुराणम्

ओं नमो भगवते वासुदेवाय

## चतुर्थःस्कन्धः

### प्रथमोऽध्यायः

#### मैत्रेय उवाच

मनोस्तु शतरूपायां तिस्रः कन्याश्च जज्ञिरे।
आकूतिर्देवहूतिश्च प्रसूतिरिति विश्रुताः[1] ।। १ ।।

आकूतिं रुचये प्रादादपि भ्रातृमतीं नृपः।
पुत्रिका धर्ममाश्रित्य शतरूपानुमोदितः ।। २ ।।

प्रजापतिस्स भगवान् रुचिस्तस्यामजीजनत्।
मिथुनं ब्रह्मवर्चस्वी[2] परमेण समाधिना ।। ३ ।।

यस्तयोः पुरुषस्साक्षाद्विष्णुर्यज्ञस्वरूपधृत्[3]।
या स्त्री सा दक्षिणा भूतेरंशभूताऽनपायिनी ।। ४ ।।

#### श्री श्रीधरस्वामिविरचिता भावार्थदीपिका

*श्री भागवतगूढार्थ पदभावार्थ दीपिका। मनोवर्तिं हरौ वृत्तिं दत्वा सन्दीप्यतां बुधैः ।।

यत्कृपारससंसिद्ध भिषङ्कूकमपीह माम्। वाचालयति तं वन्दे परमानन्दमाधवम् ।।

अथैकत्रिंशदध्यायैर्विसर्गस्तुर्य ईर्यते। स[4] सर्गस्त्वीश्वराधीनैर्ब्रह्ममन्वादिभिः कृतः ।।

1. Af, Jf सुव्रताः 2. W तेजस्वी 3. G.M धृक्; W भृत् * These Two Verses beginning with 'श्रीभागवत' and 'यत्कृपा' are not found in A&J
4. A, J. वि

तत्र तु प्रथमेऽध्याये मनुकन्यान्वयाः पृथक्। वर्ण्यन्ते यत्र यज्ञादिमूर्तिभिः प्रभवा हरेः ॥

मनुकन्यान्वयं विस्तरेण वक्तुमाह-**मनोरिति**[1]। चकारात् द्वौ पुत्रौ च। तुशब्दात् अन्यतोपि पुत्रलाभस्सूचितः ॥ १ ॥

तद्दर्शयितुमाह - **आकूतिमिति**। [2]पुत्रिकाधर्ममाश्रित्येति - "अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्। अस्यां यो जायते पुत्रः स मे पुत्रो [3]भविष्यति" (मनु. स्मृ. 9-3 अधिकपाठः) [4]इति भाषा[5]बन्धेन कन्यादानं पुत्रिकाधर्मः। स च अभ्रातृकायां कन्यायां पुत्रार्थिन एव प्रसिद्धः। तथापि पुत्रबाहुल्यकामः तथा कृतवान् इत्याह - भ्रातृमतीमपीति ॥ २ ॥

**प्रजापतिरिति**। मिथुनं पुरुषं स्त्रियञ्च। [6]परमेण समाधिना ईश्वरध्यानेन ॥ ३ ॥

**य इति**। भूतेः लक्ष्म्याः अंशभूतः अतः तयोर्विवाहः न विरुद्ध इति भावः ॥ ४ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

तृतीये "स्वायम्भुवस्य च मनोर्वंशः परमसम्मतः" (भागः 3-21-1) इति स्वायम्भुवचरित्रतत्सन्तती पृष्टे। तत्र स्वायम्भुवचरितमभिधाय "एतत्त आदिराजस्य मनोश्चरितमद्भुतम्। वर्णितं वर्णनीयस्य तदपत्योदयं शृणु ॥" (भाग 3-22-39) इति तत्सन्ततिकथनं प्रतिज्ञाय तावत् देवहूतिसन्ततिं प्रक्रम्य कलानसूयादयो नव पुत्रिकाः कपिलाऽऽख्यः पुत्रः तच्चरितमित्येतानि कथितानि। इदानीमस्मिन् स्कन्धे मनुपुत्रस्योत्तानपदः सन्ततिं विस्तरेण वक्ष्यमाणः तत्रादौ आकूतिप्रसूत्योर्वंशं देवहूतिदुहितृसन्ततिं चाह मैत्रेयः - **मनोस्त्विति**। हे *सुव्रत! विदुर! आकूत्यादयः तिस्रः कन्याः मनोः स्वायम्भुवात् तद्भार्या[7]यां शतरूपा[8]यां जज्ञिरे। चकारात् द्वौ पुत्रौ च जज्ञात इत्यर्थः ॥ १ ॥

[9]मनोस्त्विति तुशब्दादन्योऽपि पुत्रलाभः सूचितः, तद्दर्शयितुमाह - **आकूतिमिति**। नृपो मनुः भ्रातृमतीं प्रियव्रतोत्तानपाद-भ्रातृमतीमपि स्वदुहितरं आकूतिं पुत्रिकाधर्ममाश्रित्य "अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्। अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति" (मनु. स्मृ. 9-3 अधिकपाठः) इति भाषाबन्धनपूर्वकप्रदानं पुत्रिकाधर्ममाश्रित्य पुत्रबाहुल्यकामः उक्त भाषाबन्धनं कृत्वा रुचये प्रादात् दत्तवान् ॥ २ ॥

---

1. A.J °स्त्विति। 2. V omits पुत्रिकाधर्ममाश्रित्येति - 3. A.J °भवेदिति 4. J omits इति 5. V प्रबन्धेन 6. A,J omit परमेण
7. A याः 8. A या 9. A omits मनोस्त्विति। *विश्रुताः इत्यस्य स्थाने सुव्रत इति वीरराघवादृतः पाठः।

स लब्धभार्यः ब्रह्मतेजस्वी ब्रह्मवर्णोचित धर्मानुष्ठानजनिततेजोविशेषयुक्तः भगवान् प्रजापतिः रुचिः सर्वोत्कृष्टेन समाधिना भगवन्तमाराध्य तस्यामाकूत्यां मिथुनं स्त्रीपुंमिथुनं अजीजनत् उत्पादयामास ॥ ३ ॥

किं तन्मिथुनं यदजीजनत् तत्राह - **यस्तयोरि**ति । तयोरपत्ययोर्मध्ये यः पुरुषः सः यज्ञः क्रतवः त एव स्वं स्वीयं[1] रूपं शरीरं तद्बिभर्तीति तथा साक्षाद्विष्णुः विष्णोरंशः । अयमपि कपिलवदंशावतारः । यज्ञस्वरूपभृत् इत्यनेन यज्ञनामकत्वं सूचितम् । तयोर्या स्त्री सा नाम्ना दक्षिणा भूतेः लक्ष्म्याः अंशभूता विष्णोः अनपायिनी । अतस्तयोर्मिथोविवाहः न विरुद्धः इति भावः ॥ ४ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

पशुपतिरपि प्रेक्षादक्षो यतोऽगमदुन्नतिं सकलजनतावन्द्यं स्थानं ध्रुवो यदनुग्रहात् ।

पृथुरथमहीदोहात्कीर्तिं शुभां समपीपलत् तमिममजितं वन्दारूणाममन्दमुदं नुमः ॥

अभिनवरविप्रद्योताली विभासि वपुश्श्रियं हरिहयहरब्रह्मश्लाघ्य प्रभूत सदाशिषम् ।

कमलनयन स्वातन्त्र्येक्षादयादरसत्क्रियां शरणमनिशं विश्वस्यास्योदयां श्रियमीमहे ॥

तृतीयस्कन्धजलधेरुन्मग्नोऽहं कथञ्चन । चतुर्थस्कन्धसरसीमवगाढुं पुनर्यते ॥

मानेतिहाससङ्घातैरच्युताङ्घ्रि सरोरुहे । आत्मप्रद्योतनी भक्तिः पुनश्च प्रतिपाद्यते ॥

अत्रादौ हरौ निरतिशयप्रेमलक्षणभक्तिविधानाय पशुपतेर्दक्षाध्वरध्वंसलक्षणचरित्रं वक्तुं स्वायम्भुवमनुचरितमनुवदति - **मनोस्त्विति** । "पुनः पुनः कथां प्राहुरभ्यासादुत्तमं फलम् । विज्ञापयितुकामास्तु विद्वांसस्तत्र तत्र तु" (आग्नेये) इति वचनात् पुनरुक्तकथानुवादो न दोषायेति ज्ञातव्यं, विशेषवाचिना तुशब्देनापि फलाधिक्यं विशिनष्टि द्वौ पुत्रौ चेति । पुत्रानुकर्षणार्थश्चकारः ॥१॥

भ्रातृमतीमपि आकूतिं पुत्रिकाधर्ममाश्रित्य रुचये प्राद्वादित्यन्वयः । अस्या यः पुत्रो भवेत् स मत्पुत्र एवेति प्रतिज्ञाय प्रदानं पुत्रिकाधर्मः राजार्थं न पुत्राभावात् मनुना दौहित्रः पुत्रत्वेन वृतः । किन्तु स साक्षाद्विष्णुरिति जानता तत्पितृत्वे ज्ञानातिशयवान् मुक्तौ सुखातिशयवान् स्यामिति, भ्रातृमतीमित्यनेन पुत्रवत्त्वप्रतीतेः । प्रियव्रतोत्तानपादाविति वक्ष्यमाणत्वाच्च ॥ २ ॥

---

1. A omits स्वीयं

प्रजापतिशब्दस्यानेकाभिधेयवृत्तित्वेन कोऽत्र विवक्षित इत्यत उक्तं - **रुचिरिति**। राजपुत्रीत्वेन परिचर्यादौ अहङ्कारसम्भवेन प्रेमाभावेन तत्त्यागसम्भवेनापत्यानुत्पत्त्या मनोराशा निष्फलाऽभूदिति लोकापवादः परिहृतोऽनेन, अत एव भगवानिति ॥ ३ ॥

मिथुनं विवेचयति - **यस्तयोरिति**। नाम्ना यज्ञ इति स्वरूपधृक् औत्पत्तिकसौन्दर्यधारी। यज्ञस्वरूपधृगित्येकं वा पदं "यज्ञो विष्णुर्देवता" इति श्रुतेः। अनेन विष्णुनामानं यजमानं व्यावर्तयति। भूतेर्लक्ष्म्याः "भूतिः श्रीभस्मजन्मसु" (वैज. को. 6-2-27) इत्यभिधानम्। अनपायिनी जन्ममरणरहितेत्यनेनास्याः श्रीनारायणवदाविर्भाव एवेति ध्वनयति॥ ४ ॥

**आनिन्ये स्वगृहं पुत्र्याः पुत्रं विततरोचिषम्।**
**स्वायम्भुवो मुदा युक्तः रुचिर्जग्राह दक्षिणाम्॥ ५ ॥**

**तां कामयानां भगवानुवाह यजुषां पतिः।**
**[1]तुष्टायां तोषमापन्नोऽजनयत् द्वादशाऽऽत्मजान्॥ ६ ॥**

**तुष्टयोरभवन् देवा यामा नाम महाबलाः।**
**तोषः प्रतोषस्सन्तोषो भद्रश्शान्तिरिडस्पतिः।**
**[2]इध्मः कविर्विभु[3]र्वह्निः[4] सुदेवो रोचनो द्विषट्॥ ७ ॥**

**तुषिता नाम ते देवा आसन् स्वायम्भुवान्तरे।**
**मरीचिमिश्रा ऋषयो यज्ञस्सुरगणेश्वरः॥ ८ ॥**

**श्रीध०** [5-]**आनिन्ये** इति। पुत्र्या आकूतेः पुत्रं यज्ञम्[-5]॥ ५ ॥

**तामिति**। यजुषां यज्ञानां मन्त्राणां वा। पतिर्विष्णुः॥ ६ ॥

**तुष्टयो**रिति। द्विषट् द्वादश॥ ७ ॥

प्रसङ्गात् स्वायम्भुवमन्वन्तरगतं षट्कमाह - **तुषिता** इति द्वाभ्याम्। "मन्वन्तरं मनुर्देवा मनुपुत्रास्सुरेश्वरः। ऋषयोऽशावतारश्च

1. This half-verse is not found in A G, J & M  2. M इन्द्रः  3. M भुवः  4. A, G, J स्वह्न. ; M स्वाह  5--5. V omits

हरेष्षड्विधमुच्यते'' **(भाग: 12-7-15)** इति वक्ष्यति। तत्र स्वायम्भुवो मनुः, तुषिता देवताः। मरीचिप्रमुखाः सप्त ऋषयः। यज्ञः हरेरवतारः। स एव सुरगणेश्वरः इन्द्रः ॥ ८ ॥

**वीर०** स्वायम्भुवो मनुः मुदा युक्तः मिथुनजन्मनिमित्तहर्षयुक्तः स्वपुत्र्याः आकूत्याः पुत्रं वितततेजस्कं विष्ण्वंशसम्भूतं यज्ञं[1] पूर्वकृतभाषाबन्धनाद्धेतोः स्वगृहं प्रति आनिन्ये आनीतवान्। रुचिस्तु दक्षिणां स्वकन्यां जग्राह पुत्रिकामेव पुत्रत्वेनाऽपालय दित्यर्थः ॥ ५ ॥

कामयानां पतिं कामयमानां तां दक्षिणां यजुषां यज्ञानां मन्त्राणां वा पतिः यज्ञाख्यः भगवान् उवाह उपयेमे[2]। पश्चात् यस्यां[3] तुष्टायां स्वस्मिन् प्रीतियुक्तायां दक्षिणायां स्वयमपि प्रीतियुक्तः द्वादशपुत्रानजनयत्। अत्र 'तुष्टयोरभवन् देवा द्वादशैते महाबलाः' इति पाठान्तरम्। तदा तुष्टयोः परस्परं सन्तोषयुक्तयोः यज्ञदक्षिणयोः द्वादशपुत्राः अभवन्नित्यर्थः ॥ ६ ॥

तानाह - **तोष** इति। तोषादयो द्विषट् द्वादशपुत्राः ॥ ७ ॥

सर्वे तुषिता नाम तुषिता इति प्रसिद्धाः। परस्परतुष्टाभ्यां पितृभ्यां जातत्वादिति भावः। ते तुषिताः देवाः मरीचिप्रभृतयः ऋषयः सुरगणेश्वरो यज्ञश्च स्वायम्भुवमन्वन्तरे आसन् स्वस्वसन्तानवर्धनेन लोकमर्यादापालनेन चासन्। अनेन स्वायम्भुवमन्वन्तरगतं षट्कं कथितम्। ''मन्वन्तरं मनुर्देवा मनुपुत्रा महौजसः। ऋषयोंऽशावतारश्च हरेष्षड्विधमुच्यते'' (भाग. 12-7-15) इति। तत्र स्वायम्भुवो मनुः, तुषिताः देवाः, मरीचिमुख्याः ऋषयः। यज्ञः हरेरवतारः, स एव सुरगणेश्वरः इन्द्रः ॥ ८ ॥

**विज०** स्वायम्भुवेन विवाहकाले यदुक्तं तत्सत्यं कर्तुं कार्यान्तराऽऽसक्त्या न विस्मृतं तेनेति भावेनाह - **आनिन्ये** इति ॥५॥

यजुषां पतिः सकलवेदप्रतिपाद्यत्वेन तदनुसारिहेतुत्वेन तत्प्रवर्तकत्वेन वेदपतिरित्यर्थः। हरिणा यदर्थमवतीर्णं तत्प्रयोजनमाह - तुष्टायामिति। तुष्टायां दक्षिणायाम् ॥ ६ ॥

द्विषट् द्वादश ॥ ७ ॥

तोषादीनां समुदितं नामाह - **तुषिता** इति। अदित्यामुत्पन्नत्वात् यथा आदित्या नाम देवाः तथा तुष्टायामुद्भूतत्वात् तुषिता नाम देवाः मरीचिमिश्राः मरीचिमुख्याः सुरगणेश्वरः इन्द्रः यज्ञः स्वयमिन्द्रः अभूत् ॥ ८ ॥

---

1. A omits यज्ञं  2. A omits उपयेमे। पश्चात्  3. W omits यस्यां

**प्रियव्रतोत्तानपादौ मनुपुत्रौ महौजसौ ।**

**तत्पुत्रपौत्रनप्तॄणामनुवृत्तं [1]तदन्तरम् ॥ ९ ॥**

**देवहूतिमदा[2]त्तात कर्दमायाऽऽत्मजां मनुः ।**

**तत्सम्बन्धि श्रुतप्रायं भवता गदतो मम ॥ १० ॥**

**दक्षाय ब्रह्मपुत्राय प्रसूतिं भगवान् मनुः ।**

**प्रायच्छद्यत्कृतस्सर्गः त्रिलोक्यां विततो महान् ॥ ११ ॥**

**याः कर्दमसुताः प्रोक्ताः [3]नव ब्रह्मर्षिपत्नयः ।**

**तासां प्रसूति[4]प्रसवं प्रोच्यमानं निबोध मे ॥ १२ ॥**

**श्रीध० प्रियव्रतेति** । प्रियव्रतोत्तानपादौ मनुपुत्रौ [5]पृथ्वीपालकौ । तदेवं यज्ञस्य द्वैरूप्येण षड्विधत्वम् । तयोः पुत्रपौत्रनप्तॄणां वंशैरनुवृत्तं व्याप्तं पालितं तत् मन्वन्तरम् ॥ ९ ॥

**देवहूतिमिति** । श्रुतप्रायं बाहुल्येन श्रुतम् । तत्कन्यावंशानामश्रुतत्वात् प्रायग्रहणम् ॥ १०, ११ ॥

**या** इति । प्रसूतिप्रसवं पुत्रपौत्रादिभिर्विस्तारम् ॥ १२ ॥

**वीर०** प्रियव्रतोत्तानपादौ मनुपुत्रौ पृथ्वीपालकौ तयोः [6]प्रियव्रतोत्तानपदोः पुत्रपौत्रनप्तॄणां वंशैरनुवृत्तं व्याप्तं पालितञ्च तत् मन्वन्तरमित्यर्थः ॥ ९ ॥

एवमाकूतिसन्ततिः कथिता । अथ देवहूतिदुहितृसन्ततिं कथयिष्यन् देवहूतिचरित्रन्तु विस्तरेण तृतीये त्वया श्रुतमित्याह - **देवहूति**मिति । तत्सम्बन्धि [7]देवहूतिसम्बन्धि चरितं गदतः मम मत्तः भवता श्रुतप्रायं बाहुल्येन श्रुतत्वात् [8]श्रुतप्रायमित्युक्तम् ॥ १० ॥

प्रसूतिसन्ततिस्तु [9]तत्प्रसङ्गानुप्रसङ्गेन महता [10]प्रबन्धेन कथनीयेति सापि पश्चात् वक्ष्यते इति अभिप्रायेणाऽत्र सङ्गृह्णाति दक्षायेति । यत्कृतः दक्षप्रसूतिभ्यां कृतः सर्गः त्रिलोक्यां महान् विततः । आकूत्यादिसन्तत्यपेक्षया प्रसूतिसन्ततेः वैपुल्यमनेन कथितम् ॥ ११ ॥

अथ देवहूतिदुहितृसन्ततिरुच्यते इत्याह - **या** इति । हे **क्षत्तः** ! कर्दमस्य सुताः कलादयः मरीच्यादीनां पत्नयः पत्न्यः याः उक्ताः तृतीये, तासां कर्दमसुतानां प्रसूतेः प्रभवं पुत्रपौत्रादिसन्तानविस्तरं मे मया प्रोच्यमानं कथ्यमानं निबोध ॥ १२ ॥

---

1. AF य. 2. V, W तात 3. V, W आसन् ; Af क्षत्तः । 4. M प्रसरं • 5. V पृथिवी 6. A omits प्रियव्रतोत्तानपदोः 7. A omits देवहूतिसम्बान्धि 8. A इति भावः 9. A तत्प्रसङ्गेन 10. W ग्रन्थेन

**विज०** स्वायम्भुवमन्वन्तरं कैरनुवृत्तमिति तत्राह - **प्रियव्रतेति**। नप्तारः पौत्रपुत्राः ॥ ९ ॥

देवहूतिकथामनुवदति - **देवहूतिमिति**। तत्सम्बन्धि चरितं श्रुतप्रायं प्राचुर्येण श्रुतं किञ्चिदवशिष्टमस्तीत्यर्थः ॥ १० ॥

प्रसूतिं कस्मै अदात् इति तत्राह - **दक्षायेति** ॥ ११ ॥

एवमनूद्य वक्तव्यांशमाह - **याः कर्दमेति**। पत्नयः पत्न्यः प्रसूतिप्रसरं प्रसूतिप्रपञ्चम् ॥ १२ ॥

**पत्नी मरीचेस्तु कला सुषुवे कर्दमात्मजा।**
**[1]कश्यपं पूर्णिमानञ्च ययोरापूरितं जगत् ॥ १३ ॥**

**पूर्णिमाऽसूत विरजं[2] विश्वगं[3] च परन्तप !**
**देवकुल्यां हरेः पादशौचाद्याभूत्सरिद्दिवः ॥ १४ ॥**

**अत्रेः पत्न्यनसूया त्रीन् जज्ञे[4] सुयशसस्सुतान्।**
**[5]दत्तं दुर्वाससं सोममात्मेशब्रह्मसम्भवान् ॥ १५ ॥**

## विदुर उवाच

**अत्रेर्गृहे सुरश्रेष्ठाः स्थित्युत्पत्त्यन्तहेतवः[6]।**
**[7]किञ्चिच्चिकीर्षवो जाता एतदाख्याहि मे गुरो ॥ १६ ॥**

**श्रीध० पत्नीति**। ययोः वंशेन[8] आपूरितम् ॥ १३ ॥

कश्यपस्य वंशं षष्ठे वक्ष्यति। द्वितीयस्य वंशं तावदाह[9] - **पूर्णिमेति**। देवकुल्यां नाम कन्याञ्च। श्रीहरेः पादप्रक्षालनात्[10] जन्मान्तरे या दिवः सरित् गङ्गा अभूत् ॥ १४ ॥

**अत्रेरिति**। आत्मेशब्रह्मसम्भवान् विष्णुरुद्रब्रह्मणामंशैः सम्भवान्[11] उत्पन्नान् ॥ १५ ॥

**अत्रेरिति**[12]। किञ्चित् किं स्वित्, किं कर्तुमिच्छवः इत्यर्थः ॥ १६ ॥

---

1. Af यज्ञं च 2. M विश्वगां 3. W चापि सत्तम। 4. V, W सुषुवे सुयशस्सुतान् 5. V, W दूं 6. M स्थित्यन्तोत्पत्ति 7. A, G, J किंस्विं
8. A adds पुत्रयोः 9. J, V omit तावत् 10. A, J omit प्र 11. A, J सम्भूतान् ॥ 17 ॥ 12. V किंस्वित् किञ्चित्, किं कर्तुं मिच्छव इति वा ॥16 ॥

**वीर० तदेवाऽऽह - पत्नीति।** कर्दमसुता मरीचेः पत्नी कला कलानाम्नी कश्यपं पूर्णिमानञ्च द्वौ पुत्रौ सुषुवे। पुत्रौ विशिनष्टि - ययोः कश्यपपूर्णिम्नोः वंशजैर्जगदापूरितं व्याप्तम्॥ १३॥

हे सत्तम! पूर्णिमा मरीचिपुत्रः विरजं विश्वगं चापि पुत्रं देवकुल्यां कन्यां च असूत उत्पादयामास। देवकुल्यां विशिनष्टि हरेः भगवतः पादशौचात् पादप्रक्षालनात् या दिवः सरित् गङ्गा अभूत्। सैवेयं देवकुल्या दिवस्सरिदभिमानिनी देवतेत्यर्थः॥ १४॥

अत्रेः या पत्नी अनसूया कर्दमस्य द्वितीया दुहिता सा[2] सुयशसः निर्मलकीर्तिसम्पन्नान् त्रीन्[3] सुतान् जज्ञे। तानाह - दत्तं[4], दुर्वाससं, सोमञ्चेति। तान् विशिनष्टि - आत्मेशब्रह्मसम्भवान् आत्मा परमपुरुषः[5], ईशः[6] रुद्रः, ब्रह्मा चतुर्मुखः तेभ्यः सम्भवान् तदंशभूतान् इत्यर्थः। यद्वा आत्मेश ब्रह्मणां सम्भवः अभिव्यक्तिः येषु तान्। अत्र आत्मशब्देन "ममान्तरात्मा तव च" (म.भा. 12-339-4) इत्यादिना प्रसिद्धं विष्णोः परमात्मत्वं, इतरयोः जीवत्वञ्च सूच्यते। ननु परमात्मनः सर्वान्तर्यामिनः जीवद्वारा ज्ञानशक्त्या द्यन्यतमगुणाविर्भावरूपांशावतारत्वं युक्तं, कथं पुनः परमात्मांशभूतयोः अणुस्वरूपयोः जीवविशेषयोः ब्रह्मरुद्रयोः पुनर्जीवान्तरानुप्रवेशरूपांशावतारत्वम्? सत्यम् - "अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते। यया क्षेत्रज्ञशक्तिस्सावेष्टिता नृप सर्वगा॥ संसारतापानखिलान् अवाप्नोत्यतिसन्ततान्। तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता॥ सर्वभूतेषु भूपाल! तारतम्येन वर्तते॥" (विष्णु. पु. 6-7-61 to 63) इत्युक्तरीत्या जीवस्य यद्धर्मभूतं ज्ञानं तदविद्याकर्मणा तिरोहितं सत् तारतम्येनावतिष्ठते। तत्र परमात्मप्रसादात् अविद्याख्यावरणस्य निवृत्तौ असङ्कोचेन प्रसृत्तं भवति। अत एव मुक्तौ निश्शेषमावरणनिवृत्तौ "स चानन्त्याय कल्पते" (श्वेता - उ. 5-9) इति धर्मभूतज्ञानस्यासङ्कोचेन प्रसरादानन्त्यं जीवस्य श्रुतं सूत्रितञ्च। "प्रदीपवदावेशस्तथा हि दर्शयति" (ब्र.सू. 4-4-15) इत्यणोरप्यात्मनः एकदेहस्थितस्यापि असङ्कुचित धर्मभूतज्ञानद्वारा स्वल्पपरिमाणस्य दीपस्य स्वधर्मभूतप्रभा द्रव्यद्वारेणानेक घटपटादिप्रकाशकत्ववदनेकशरीरपरिग्रह इति सूत्रार्थः। एवञ्च ब्रह्मरुद्रयोः परमपुरुषप्रसादादज्ञानावरणनिवृत्तिः अस्मदाद्यपेक्षया ज्ञानप्रसरबाहुल्यात् तद्धर्मभूतज्ञानस्य दुर्वासस्सोमयोरनुप्रवेशात् तदंशावतारत्वं तयोरुपपन्नम्। एवमन्यत्रापि यत्र क्वचिज्जीवस्य जीवान्तरांशत्वमुच्यते तत्र अयमेव न्यायः वेदितव्यः॥ १५॥

एवं दत्तादीनामात्माद्यंशावतारत्वमुक्तं तत्रान्तरेण निमित्तं परमात्मादीनामवतरणासम्भवात् तत्कारणं पृच्छति विदुरः - अत्रेरिति। स्थित्यादिकर्तारः सुरश्रेष्ठाः आत्मादयः अत्रेर्गृहे किं स्विच्चिकीर्षवः किं कर्तुमिच्छवः जाताः तज्जननप्रयोजनं[7] हे गुरो! मे मह्यमाख्याहि कथय॥ १६॥

---

1. A तौ 2. W omits सा 3. W omits त्रीन् सुतान् 4. A दत्तमित्यादिना तान् 5. A परमात्मा 6. A adds विष्णुः 7. A एतज्जन्म प्र०

**विज०** चन्द्रकलाव्यावृत्यर्थं कर्दमात्मजेति। ययोः सन्तत्या॥ १३॥

विश्वगां विशिनष्टि - देवकुल्येति। दिवः सरित् स्वर्गनदी देवकुल्या देवकुलप्रिया॥ १४॥

जज्ञे जनयामास। आत्मा विष्णुः ईशः रुद्रः, ब्रह्मा चतुर्मुखः। ब्रह्मणः सोमे विशेषाऽऽवेश एव, न तु पृथग्जननम्॥ १५॥

विदुरः श्रुतदत्ताद्यवतारः विशेषजिज्ञासया पृच्छतीत्याह - **अत्रेरिति**। गृहे भार्यायां स्थित्यन्तोत्पत्तिहेतवः पालनसंहारसृष्टीनां कारणभूताः॥ १६॥

## मैत्रेय उवाच

**ब्रह्मणा चो[1]दितः सृष्टौ अत्रिर्ब्रह्मविदां व[2]रः।**
**सह पत्न्या य[3]यावृक्षं कुलाद्रिं तपसि स्थितः॥ १७॥**

**तस्मिन् प्रसूनस्तबकपलाशाशोककानने।**
**वार्भिस्स्रवद्भिरुद्धुष्टे निर्विन्ध्यायाः समन्ततः॥ १८॥**

**प्राणायामेन संयम्य म[4]नो वर्षशतं त[5]पः।**
**अतिष्ठदेकपादेन निर्द्वन्द्वोऽनिलभोजनः॥ १९॥**

**शरणं तं प्रपद्येऽहं य एव जगदीश्वरः।**
**प्रजामात्मसमां मह्यं प्रयच्छत्विति चिन्तयन्॥ २०॥**

**श्रीध० ब्रह्मणेति**। ऋक्षं नाम कुलाद्रिम्। तपसि स्थितस्सन्॥ १७॥

**तस्मिन्निति**। स[6] च तस्मिन् कुलाद्रौ। प्रसूनानां स्तबकाः येषु पलाशाशोकेषु तेषां कानने। निर्विन्ध्या नाम नदी तस्याः स्रवद्भिः वार्भिः उद्धुष्टे नादिते॥ १८-२०॥

**वीर० तत्र निमित्तं कथयन्नाह - ब्रह्मणेति**। ब्रह्मण चतुर्मुखेन सृष्टौ निमित्तभूतायां सृष्ट्यर्थमित्यर्थः। चोदितः आदिष्टः ब्रह्मविदग्रेसरः अत्रिः पत्न्या अनसूयया सह ऋक्षाख्यं कुलाचलं तपसे तपश्चर्तुं स्थितः आस्थितः॥ १७॥

---

1. A, G, J नो॰ 2. M वर! 3. M ययौ ऋक्षं 4. M मनोः 5. A, G, J, M, V मुनिः 6. A, J omit स च

स च मुनिः तस्मिन् कुलाद्रौ प्रसूनानां स्तबका येषु पलाशाशोकेषु तेषां कानने। निर्विन्ध्याख्यायाः नद्याः स्रवद्भिः वार्भिः समन्तादुद्घुष्टे नादिते॥ १८॥

प्राणायामेन मनो नियम्य शीतोष्णादि सहः वायुभक्षः संवत्सर शतमेकपादेन भुवमवष्टभ्य तप आतिष्ठत्॥ १९॥

तस्यात्रेरभिसन्धिविशेषमाह - **शरणमिति**। य एव ''यतो वा इमानि भूतानि जायन्ते'' (तैति.उ.3-1) इत्यादि श्रुतिप्रसिद्ध एव जगदीश्वरः जगत्सृष्टिस्थितिप्रलयप्रवर्तकः तं शरणम् अहं प्रपद्ये, मह्यमात्मसमां स्वतुल्यां प्रजां प्रयच्छत्विति चिन्तयन् अतिष्ठदिति पूर्वेणान्वयः॥ २०॥

**विज०** परमभागवतस्य अत्रेः प्रियचिकीर्षैव प्रथमं प्रयोजनम्। द्वितीयं योगप्रवर्तनाय अवतारः इति भावेन मैत्रेयः प्रश्नं वक्तीत्याह- **ब्रह्मणेति**। ऋक्षं ऋक्षनामानम्। किमर्थं यात इति तत्राऽऽह - तपसीति। गत्वा तपसि स्थितोऽभूदित्यन्वयः॥१७॥

तस्मिन् ऋक्षनाम्नि। प्रसूनानां स्तबकः येषां ते प्रसूनस्तबकाः तेषां पलाशाशोकानां काननं यस्मिन् स तथा तस्मिन्। नाम्ना निर्विन्ध्यायाः नद्यः स्रवद्भिः स्यन्दमानैः वार्भिः जलैः समन्ततोप्युद्घुष्टे गर्जिते॥ १८॥

**वर्षशत**मिति। द्वितीयया एकस्मिन् क्षणेऽपि पादद्वयेन नातिष्ठदिति द्योतयति॥ १९॥

तपोविषयमाह - **शरण**मिति। किं मनोगतं तव इति तत्राऽऽह - प्रजामिति॥ २०॥

**तप्यमानं त्रिभुवनं प्राणायामै[1]धसाग्निना।**
**निर्गतेन मुनेर्मूर्ध्नः समीक्ष्य प्रभवस्त्रयः॥ २१॥**

**अप्सरोमुनिगन्धर्वसिद्धविद्याधरोरगैः।**
**वितायमानयशसः त[2]दाऽऽश्रमपदं ययुः॥ २२॥**

**[3]तत्प्रादुर्भावसंयोगविद्योतितमना मुनिः।**
**[4]उत्तिष्ठन्नेकपादेन [5]ददर्श विबुधर्षभान्॥ २३॥**

**प्रणम्य दण्डवद्भूमौ उपतस्थे[6]ऽर्हणाञ्जलिः।**
**वृषहंससुपर्णस्थान् स्वैस्स्वैश्चिह्नैश्च चिह्नितान्॥ २४॥**

---

1. M 'मैधिता' 2. M मुदाऽऽ' 3. W तदाविर्भाव 4. उत्तिष्ठदेक 5. M ददृशे 6. Af कृताञ्जलिः

**श्रीध० तप्यमानमिति**। प्राणायाम एव एधः सन्दीपकं[1] काष्ठं[2] यस्य तेन, मुनेर्मूर्ध्नः निर्गतेनाग्निना तप्यमानं समीक्ष्य तदाश्रमपदं ययुरित्युत्तरेणान्वयः[3] ॥ २१ ॥

**अप्सर** इति। अप्सरः प्रमुखैः वितायमानं[4] विस्तारेण गीयमानं यशो येषां ते ॥ २२ ॥

**तदिति**। तेषां प्रादुर्भावः प्राकट्यं तस्य संयोगः सन्निधिस्तेन विद्योतितं मनो यस्य। उत्तिष्ठन्नुत्कर्षेण तिष्ठन् ॥ २३ ॥

**प्रणम्येति**। अर्हणं पुष्पादिकमञ्जलौ यस्य सः। उपतस्थे पूजयामास। वृषाद्यारूढान् स्वैस्स्वैश्चिह्नैः त्रिशूलकमण्डलु चक्रादिभिः ॥ २४ ॥

**वीर०** प्राणायाम एव एधः दारुनिचयः यस्य तेन मुनेरत्रेर्मूर्ध्नः शीर्षकपालान्निर्गतेन अग्निना तपोऽग्निना सन्तप्यमानं त्रैलोक्यं समीक्ष्य त्रयः प्रभवः आत्मेशब्रह्माणः ॥ २१ ॥

अप्सरोमुनिप्रभृतिभिः प्रस्तूयमानकीर्तय. तदाश्रमस्थानं ययुः। अत्र य एव जगदीश्वरः तं शरणं प्रपद्ये इति सृष्टिस्थिति-प्रलयप्रवर्तकत्वेन आकारेण परमात्मनः उपासितत्वात् तस्य ब्रह्मरुद्रान्तर्यामितया ताद्रूप्येण सृष्टिसंहारकारणत्वात् तयोः ब्रह्मरुद्रयोरपि तत्रागमनमुपपन्नमिति वेदितव्यम् ॥ २२ ॥

तेषाम् आत्मेशब्रह्मणामाविर्भावः प्राकट्यं तस्य संयोगः सान्निध्यं, तेन विद्योतितं मनो यस्य स मुनिः अत्रिः एकपादेनोत्तिष्ठन् विबुधश्रेष्ठान् आत्मेशब्रह्मणो ददर्श ॥ २३ ॥

ततो भूमौ दण्डवत्प्रणम्य अर्ह्यते पूज्यते अनेनेत्यर्हणं पुष्पादिकमञ्जलौ यस्य सः, उपतस्थे समीपे स्थित्वा तुष्टाव। एतदेव प्रपञ्चयति गरुडवृषाद्यारूढान् स्वैः स्वैश्चिह्नैः शङ्खचक्रत्रिशूलकमल[5]कमण्डल्वादिभिर्लक्षितान् ॥ २४ ॥

**विज०** अत्रेः तपोमाहात्म्यं, तेन प्रसन्नानां त्रयाणां देवानां तदाश्रमगमनं वक्ति - **तप्यमान**मिति ॥ २१ ॥

अप्सर आदिभिर्वितायमानं प्रपञ्चीक्रियमाणं यशो येषां ते तथा ॥ २२ ॥

तत्प्रादुर्भावः तेषां प्रकाशः तस्य सम्बन्धः तेन विद्योतितमतिप्रकाशितं मनो यस्य स तथा ॥ २३ ॥

अर्हणं अर्च्यादिसाधनं अञ्जलिश्च यस्य स तथा। शूलकमण्डलुचक्रादिभिः चिह्नितान् अङ्कितान् ॥ २४ ॥

---

1. J, V सन्दीपको 2. J, V काष्ठं 3. V रित्यन्वयः 4. V विस्तार्यमाणं 5. A omits कमल

कृपावलोकन[1] हसद्वदनेनोपलम्भितान्[2] ।
तद्रोचिषा[3] प्रतिहते निमील्य मुनिरक्षिणी ॥ २५ ॥

चेतस्तत्प्रवणं युञ्जन्नस्तावीत् संहताञ्जलिः ।
श्लक्ष्णया सूक्तया वाचा सर्वलोकगरीयसः ॥ २६ ॥

## अत्रिरुवाच

विश्वोद्भवस्थितिलयेषु विभज्यमानै र्मायागुणै[4]रनुयुगं[5] विगृहीतदेहाः ।
ते ब्रह्मविष्णुगिरिशाः प्रणतोस्म्यहं व स्तेभ्यः क एव भवतां[6] म इहोपहूतः ॥ २७ ॥

एको मयेह भगवान् विविधप्रधान[7] श्चित्तीकृतः प्रजननाय कथं नु यूयम् ।
अत्राऽऽगतास्तनुभृतां मनसोऽपि दूरा ब्रूत प्रसीदत महानिह[8] विस्मयो मे ॥ २८ ॥

### मैत्रेय उवाच

इति तस्य वचश्श्रुत्वा त्रयस्ते विबुधर्षभाः ।
प्रत्याहुः[9] श्लक्ष्णया वाचा प्रहस्य[10] तमृषिं प्रभो ! ॥ २९ ॥

### देवा ऊचुः

यथा कृतस्ते सङ्कल्पो भाव्यं तेनैव नान्यथा ।
सत्सङ्कल्पस्य[11] ते ब्रह्मन् यद्वै[12] ध्यायति[13] तद्वयम् ॥ ३० ॥

श्रीध० कृपेति । कृपया अवलोकनं यस्मिन्, हसच्च तद्वदनञ्च तेनोपलम्भितान् प्रसन्नत्वेन ज्ञापितान्, तेषां रोचिषा दीप्त्या ॥ २५ ॥

चेत इति । श्लक्ष्णया मधुरया । सूक्तया गम्भीरार्थया ॥ २६ ॥

---

1. A, G, J, M लोकेन 2. M लसत् 3. M तच्छोचिषा 4. M गुणं 5. M, W प्र° 6. V, W भगवान् 7. A, J प्रधानैः
8. M °नति 9. M प्रत्यूचुः 10. M प्रहसन्तो मुनिं 11. M तत् 12. Af ध्यायसि 13. A ते व°

**विश्वेति**। अनुयुगं कल्पे कल्पे, विभज्य गृहीतो देहो यैस्ते। प्रसिद्धाः ब्रह्मविष्णुगिरिशाः यूयम्। वो युष्मान् प्रणतोऽस्मि। **तेभ्यः** सकाशात् क एव मे मया उपहूतः, 'शरणं तं प्रपद्ये' इति एकस्यैव निर्दिष्टत्वात् **स च युष्मासु क इति युष्माभिरेव** कथ्यतामित्यर्थः ॥ २७ ॥

अस्य प्रपञ्चः - **एक** इति। विविधैः प्रधानैरुपचारैः। विविधप्रधान इति वा पाठः। प्रजननाय पुत्रोत्पत्त्यै चित्तीकृतःचित्तेनैक्यं नीतः। मनसोऽपि दूरा अगोचराः सन्तः कथं नु त्रयोऽप्यत्राऽऽगताः ॥ २८, २९ ॥

**यथेति** ॥ ते त्वया यथा कृतः सङ्कल्पः तेन तथैव भाव्यं नान्यथा। यतः सत्सङ्कल्पस्य सत्यसङ्कल्पस्य[1] ते तव[2] सङ्कल्पः। तर्हि कथं एकस्मिन् ध्यायमाने त्रयः प्रतीताः स्थ। तत्राहुः - यदेकं जगदीश्वराख्यं तत्त्वं भवान् ध्यायति त एते वयं त्रयोऽपि हि[3] तदेवैकं तत्त्वं नास्माकं भेदोऽस्तीत्यर्थः ॥ ३० ॥

**वीर०** कृपया अवलोकः यस्मिन् हसच्च तद्वदनञ्च तेन उपलम्भितान् प्रसन्नत्वेन ज्ञापितान् तेषां शोचिषा दीप्त्या प्रतिहते अक्षिणी नेत्रे निमील्य ॥ २५ ॥

चेतः चित्तं तत्प्रवणं विबुधर्षभाऽऽसक्तं कृत्वा बद्धाञ्जलिःसन् मुनिः अत्रिः मधुरया वाचा सर्वलोकेभ्यः श्रेष्ठान् विबुधर्षभान् अस्तावीत् स्तुतवान् ॥ २६ ॥

स्तुतिमेवाऽऽह - **विश्वेति** द्वाभ्याम्। विश्वस्योद्भवादिषु निमित्तभूतेषु विश्वसर्गाद्यर्थमित्यर्थः। अनुयुगं प्रतिकल्पं विभज्यमानैर्मायाया गुणैः रजस्सत्त्वतमोभिः उपलक्षिता गृहीता देहा यैस्ते, यूयं ब्रह्मविष्णुगिरिशाः अतः तेभ्यो वः युष्मभ्यं प्रणतोऽस्मि। युष्माकं मध्ये क एव भगवान् जगदीश्वरः उपहूतः शरणं तं प्रपद्ये इत्येकस्य निर्दिष्टत्वात्, स एष युष्मासु कतम इति युष्माभिरेव कथनीय[4] इत्यर्थः ॥ २७ ॥

एतदेव प्रपञ्चयति - **एक** इति। प्रधानः सर्वोत्कृष्टः एक एव भगवान् सर्वेश्वरः विविधैरुपचारैः मया प्रजननाय सर्वेश्वरतुल्यपुत्रलाभाय चित्तीकृतः चित्तविषयीकृतः उपासित इति यावत्। अतः तनुभृतां देहिनां मनसोऽपि दूराः मनसापि ग्रहीतुमशक्याः यूयं त्रयोऽपि कथमत्राऽऽगताः तत्र कारणं ब्रूत कथयत। प्रसीदत मह्यं प्रसन्ना भवत। अत्र त्रयाणामागमने मम महान् विस्मयो वर्तते ॥ २८ ॥

---

1. J. V omit सत्यसङ्कल्पस्य 2. A. J omit तव 3. A. J omit हि 4. A °यम्°

इत्येवं तस्यात्रेः वचः श्रुत्वा त्रयो ब्रह्मविष्णुशिवाः प्रहस्य श्लक्ष्णया गम्भीरया वाचा हे प्रभो ! वश्येन्द्रिय ! विदुर ! तमृषिं अत्रिं प्रत्याहुः ॥ २९ ॥

उक्तिमेवाह[1] द्वाभ्याम्[2]। ते त्वया यथा कृतः सङ्कल्पः तेनैव तथा भाव्यं नान्यथा असत्यः। सत्सङ्कल्पस्य ते सङ्कल्प । कथमेकस्मिन् ध्याते त्रय आगताः तत्राहुः - हे ब्रह्मन् ! त्वं यदेकं जगदीश्वराख्यं तत्त्वं ध्यायसि तद्वयं तदेव तत्त्वं सद्वारकमद्वारकं च त्रिमूर्तिरूपेणावस्थितमित्यर्थः। मूर्तिविशेषनिर्धारणमन्तरेण जगत्सृष्टिस्थितिलयहेतुरीश्वरः इति हि त्वत्सङ्कल्पः। अतो वयमागताः इत्यभिप्रायः। ननु यद्वै ध्यायसि त[3]द्वयमित्यनेन त्रिमूर्त्यैक्यं प्रतीयते। सत्यमैक्यमस्त्येव, ततः किम् ? ब्रह्मशिवयोः भगवत्पारतन्त्र्यमस्मिन् पुराणे पूर्वापरग्रन्थेषु श्रूयमाणं विरुध्यत इति चेन्न "सर्वगतत्वादनन्तस्य स एवाहमवस्थितः। मत्तस्सर्वमहं सर्वं मयि सर्वं सनातने" (विष्णु. पु. 1-19-85) इति वत् ब्रह्मात्मकत्वबुद्ध्या चतुर्मुखशिवयोः अभेदव्यवहारोपपत्तेः। तथा हि तयोर्ब्रह्मात्मकत्वं स्फुटमुच्यते महाभारते - तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः। सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्कचित् (म.भा. 12-339-4) इति सद्वारकंचावस्थितं तद्ब्रह्मैव वय मित्यर्थः। अत्रेदमवधेयम् - यद्यपि कचित्कचित् "ब्रह्मा नारायणः शिवश्च नारायणः" (त्रि.म.ना.उ. 2-8) "ब्रह्मा नारायणाख्योऽसौ कल्पादौ भगवान् यथा। प्रजास्ससर्ज भगवान् ब्रह्मा नारायणात्मकः। (विष्णु.पु. 1.4.1) ततस्स भगवान्विष्णूरुद्ररूपधरोऽव्ययः। ततः कालाग्निरुद्रोऽसौभूत्वा सर्वहरो हरिः॥ सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम्। ससंज्ञां याति भगवानेक एव जनार्दनः" (विष्णु.पु. 1-2-66) इत्यादिषु त्रिमूर्त्यैक्यं प्रतीयते। तथापि "नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते नारायणात् द्वादशादित्याः रुद्राः वसवः सर्वाणि च्छन्दांसि च", (नार - 1) "एको ह वै नारायण आसीन्न ब्रह्मा नेशानः। (महा. उ.1-1) "यन्नाभिपद्मादभवत् स महात्मा प्रजापतिः" (महा.उ.1-1) "तत्र ब्रह्मा चतुर्मुखः अजायत सोऽग्रे भूतानां मृत्युमसृजत्, त्र्यक्षं त्रिशिरस्कं त्रिपादं खण्डपरशुम्" (म.हा.उ. 1-4) "ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः। विभूतयो हरेरेताः जगतस्सृष्टिहेतवः" (विष्णु. पु. 1-22-31) इत्यादिषु भगवतः तयोश्च भेदावगमात् सामानाधिकरण्यस्य च "सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते !", (विष्णु धर्मे, 68-52) "हरो हरति तद्वशः" (भाग 2-6-31) इत्याद्यानुगुण्येन अन्तर्यामित्वेनाप्युपपत्तेः अभेदो न युक्तः। ननु एवमपि ब्रह्मविष्णुरुद्रेन्द्राः "ते सर्वे सम्प्रसूयन्ते" इति ब्रह्माद्यविशेषेण विष्णोरप्युत्पत्ति श्रवणात् त्रिमूर्त्युत्तीर्णं तत्त्वान्तरमेष्टव्यं तदेवैतत् त्रिमूर्त्याकारेणावस्थितमिति, मैवम् - सदेवेत्यादिवाक्येषु कण्ठोक्त्या "सर्वं वाक्यं सावधारणम्" इति न्यायाच्च सावधारणेषु प्रत्येकमेकैकस्य स्वव्यतिरिक्तसमस्तकारणत्वबोधनात् समुच्चित्यकारणत्वानुपपत्तेः

1. W उक्ति॰ 2. A omits द्वाभ्याम् 3. A ते व॰

कारणत्वोपास्यत्वबोधकवाक्यस्थित सामान्यशब्दानां विशेषवाचिपदे सति तत्पर्यवसानस्याऽऽपच्छागपशुन्यायसिद्धत्वात् अचितः सर्वकारणत्वानुपपत्तेः ईक्षणाद्यर्थविरोधाच्च विशेष्यव्यवस्थापकत्वानुपपत्तेः चिद्विशेषाणां साधारणब्रह्मरुद्रेन्द्रवैश्वानरादिपदवाच्यानां पुरोवादप्रसिद्धेन्द्रादीनां कार्यत्वकर्मवश्यत्वयोः श्रुत्यैव प्रतिपन्नत्वात् तद्वाचिनां तेषां विशेष्यव्यवस्थापकत्वानुपपत्ते. श्रीपतेरसाधारणपुरुषनारायणादिपदवाच्यस्य कुत्रापि कर्मवश्यत्वा श्रवणात् तदुत्पत्तेश्च ''अजायमानो बहुधा विजायते'' (पुसू. 2-1) इति अवतारत्वस्य श्रवणेन कर्मकृतत्वस्यापोदितत्वात् इतरोत्पत्तेः तदपवादाभावात् तस्य सर्वकारणत्वोपपत्तेः तस्य सकलजगत्कारणत्वबोधकश्रुत्यैकार्थ्यात् नारायणस्यैव सर्वोत्कृष्टत्वमेष्टव्यमित्यन्यत्र विस्तरः ॥ ३० ॥

**विज०** कृपया प्रयुक्तेनावलोकेन लसता वदनेन उपलम्भितान् उपलक्षितान् तच्छोचिषा तेषां वपुस्तेजसा । प्रतिहते प्रतिबद्धदर्शनशक्तिनी ॥ २७ ॥

तत्प्रवणं तेषु मग्नं संहताञ्जलिः बद्धाञ्जलिः श्लक्ष्णया मधुरया सूक्त्या वैदिक्या ॥ २८ ॥

कान् गुणानुपसंहृत्य तुष्टावेति तत्राऽऽह - **विश्वेति** ॥ विश्वस्योद्भवस्थितिलयेषु विभज्यमानैः पृथक् पृथक् क्रियमाणैः मायायाः प्रकृतेः गुणैः रजस्सत्त्वतमस्संज्ञैः अनुगुणं कार्यानुकूलं सृष्ट्ये रजोगुणप्रवर्तकत्वेन, रक्षणाय सत्त्वगुणप्रवर्तकत्वेन, संहाराय तमोगुणप्रवर्तकत्वेन प्रगृहीतो देहो यैस्ते प्रगृहीतदेहाः स्वीकृतावताराः हे ब्रह्मविष्णुगिरिशाः ! अहं व. प्रणतोऽस्मि ''प्रजापते ! ''न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव ।'' (मना.उ. 13-16) ''आस्यजानन्तो नाम चिद्विविक्तनमहस्ते विष्णो सुमतिं भजामहे ।'', ''इमा रुद्राय स्थिरधन्वने गिरः । क्षिपेषवे देवाय स्वधाम्ने'' इत्यादिसूक्तोक्ता ये यूयं तेभ्यो वो युष्मभ्यं भूयो भूयः प्रणतोस्मीत्यन्वयः । भक्तिरोमाऽऽश्लिष्टमनाः ब्रह्मस्थः रुद्रस्थः पृथक् स्थितः स्वयमपि विष्णुः त्रिपुरुषसमाः प्रजाः प्रयच्छत्विति यः पूर्वसङ्कल्पः तं विस्मरन् इव अत्रिः दुष्टमोहनार्थं विज्ञापयति - क एवेति । भवतां मध्ये मया इह क एव स्वित् कोनूपहूतः इत्यन्वयः ॥ २७ ॥

एतदेव विवृणोति - **एको मयेति** । इह वने तपः कुर्वता मया विबुधप्रधानः सर्वदेवोत्तमः ब्रह्मस्थः रुद्रस्थः स्वयं विष्णुरेकः भगवानेन प्रजननाय पुत्रतयोत्पत्तये त्रिपुरुषसमानान् पुत्रान् मह्यं ददात्विति चित्तीकृतो ध्यात इत्येवं स्थिते तनुभृतां देहिनां मनसोऽपि दूरविषया यूयं कथं न्वत्राऽऽगताः ? तद्ब्रूत, सम्भाषणेन प्रसीदत । मे इह अस्मिन्नर्थे एकस्मिन् ध्याते त्रयाणामागमनलक्षणे महान्

1. M त्वत्र०

विस्मय इति ॥ "ब्रह्मस्थश्चैव रुद्रस्थः स्वयञ्चापि हरिः प्रभुः । प्रजां त्रिपूरुषसमां यच्छत्वित्यत्रिरैच्छत । तस्मात्स ब्रह्मरुद्राभ्यां सह विष्णुर्जगत्पतिः । आगत्य तु त्रिमूर्त्यंशान् प्रादात्पुत्रान् जनार्दनः । भावित्वाच्चैव कार्यस्य लोकानां मोहनाय च" (ब्रह्मवैवर्ते) इति वचनात् लोकमोहनार्थमत्रिणा विकल्पितं न तत्त्वार्थत्वेन ॥ २८ ॥

तत्त्वं त्विदं, कार्यस्य भावित्वात् सङ्कल्पोपेतत्वात् यथा सङ्कल्पः तथा कार्यमपि भविष्यति । सङ्कल्पस्त्वेक एव तस्माज्झटिति प्रत्यवमर्शनेन तं त्रिलोकमोहनार्थं उक्तविकल्पाभिप्रायं जानन्तः तत्त्वगूहनं विज्ञाय प्रहसन्तः त्रयो देवा आहुरित्याह- **इतीति** ॥ २९ ॥

कर्माप्रतीतेः किमाहुरिति तत्राऽऽह **यथेति** । तपश्चरता त्वया यथा सङ्कल्पः कृतः तेन सङ्कल्पेन तथैव भाव्यं कर्तुमकर्तुमन्यथा कर्तुं समर्थानां भवतां मनीषितं मम दुरवगाहमिति तत्राऽऽह - **नान्यथेति** । स चासौ सङ्कल्पः तत्सङ्कल्पः तत्सङ्कल्पस्यान्यथाभावो; नैव त्वत्सङ्कल्पानुसारेण अस्मत्सङ्कल्पोऽपि व्याख्यात इति भावेनाऽऽहुः - **यद्वै इति** । ब्रह्मस्थः रुद्रस्थः तथा विष्णुः स्वयञ्च त्रिपुरुषसमानान् पुत्रान् प्रयच्छत्विति यत्सङ्कल्पं ध्यायसि ते वयं ब्रह्मविष्णुरुद्रा इति त्रयः तुभ्यं पुत्रान् दास्याम इति सङ्कल्प्य अत्राऽऽगता इति शेषः । निपातद्वयेन प्रमाणान्तरप्रसिद्धिं द्योतयति ॥ ३० ॥

**अथास्मदंशभूतास्ते आत्मजा लोकविश्रुताः ।**
**भवितारोऽङ्ग भद्रं ते विस्रप्स्यन्ति[1] च ते यशः ॥ ३१ ॥**

**एवं कामवरं दत्वा प्रतिजग्मुः सुरेश्वराः ।**
**सभाजितास्तयोस्सम्यग्दम्पत्योर्मिषतोस्ततः ॥ ३२ ॥**

**सोमोऽभूद्ब्रह्मणोंऽशेन दत्तो विष्णोस्तु योगवित् ।**
**दुर्वासाः शङ्करस्यांशो निबोधाङ्गिरसः प्रजाः ॥ ३३ ॥**

**श्रद्धा त्वङ्गिरसः पत्नी चतस्रोऽसूत कन्यकाः ।**
**सिनीवाली कुहू राका चतुर्थ्यनुमतिस्तथा ॥ ३४ ॥**

**तत्पुत्रावपरावास्तां ख्यातौ स्वारोचिषे[2]ऽन्तरे ।**
**[3]उचथ्यो भगवान् साक्षाद्ब्रह्मिष्ठश्च बृहस्पतिः ॥ ३५ ॥**

---

1. M वितरिष्यन्ति ते 2. M,V,W षान्तरे 3. A,G,J उतथ्यो

**श्रीध० अथेति।** विप्रप्स्यन्ति विस्तारयिष्यन्ति। अन्तर्भूतणिजर्थस्य सृप्लृ गतौ इत्यस्य रूपम्॥ ३१॥

**एवमिति।** ताभ्यां सम्यक् सभाजिताः। पूजिताः सन्तः ततः स्थानात्[1] प्रतिजग्मुः॥ ३२॥

**सोम इति।** [2-]अङ्गिरसो ब्रह्मणः तृतीयपुत्रस्य[-2]। निबोध बुध्यस्व॥ ३३॥

(**श्रद्धेति।**) ताः कन्यकाः[3] निर्दिशति - सिनीवालीति॥ ३४, ३५॥

**वीर०** अथ हे मुने! अस्मदंशेन सम्भूताः सुताः लोकविश्रुताः भविष्यन्ति ते तव यशः विप्रप्स्यन्ति विस्तृतं करिष्यन्ति। ते भद्रमस्तु॥ ३१॥

एवमभीष्टं वरं दत्वा तयोः दम्पत्योः अत्र्यनसूययोः सम्यङ्मिषतोः पश्यतोस्सतोः सम्यक् पूजिताः सुरेश्वराः प्रतिजग्मुः॥३२॥

ततो ब्रह्मणश्चतुर्मुखस्यांशेन सोमः विष्णोरंशेन दत्तात्रेयः शम्भोरंशेन दुर्वासाश्च जाताः। अथाङ्गिरसः अङ्गिरसः[4] उत्पन्नाः प्रजाः मया कथ्यमानाः शृणु॥ ३३॥

अङ्गिरसः पत्नी श्रद्धाऽऽख्या कर्दमस्य तृतीया दुहिता, चतस्रः कन्यकाः प्रसूतवती। कन्याः निर्दिशति - सिनीति॥ ३४॥

अपरावपि तत्पुत्रौ अङ्गिरसःपुत्रौ उचथ्यः[5] बृहस्पतिरिति ख्यातौ प्रसिद्धौ स्वारोचिषे मन्वन्तरे आस्ताम्। भगवान् ब्रह्मिष्ठः इति पुत्रद्वयविशेषणम्॥ ३५॥

**विज०** तर्हि प्रसन्नाश्चेत् प्रजा ददत इत्यत्रेः जिह्वाग्रसञ्चलनावकाशमददानाः आहुः - **अथास्मदिति।** अथ ब्रह्मरुद्रस्थो विष्णुः स्वयमित्येते वयमित्युक्त्यनन्तरं व्यवहारान्तरं विरम्यते। तवात्मजा भवितारो भविष्यन्तीति वरं ददुः इत्यर्थः। यद्वा यत एवं च सङ्कल्पोऽथ तस्मादिति लोके ते यशो विस्तृत्य तुभ्यं भद्रं कल्याणं सुखं वितरिष्यन्तीति अन्वयः॥ ३१॥

किमन्यद्ददुरिति तत्राऽऽह - **एवमिति।** कामवरं कामितपुत्रवरं नान्यमिति शेषः। मिषतोः पश्यतोः सतोः, ततोऽत्रेराश्रमात्॥ ३२॥

अंशेनेति तृतीयया सोमः साक्षात् ब्रह्मणोंऽशो न भवति किन्तु तेन विशेषेण सन्निहित एव। तथात्वे विष्णोरंशो दत्तः, शङ्करस्यांशो दुर्वासा इतीव प्रयोगः स्यात् "ब्रह्मणो नावतारोस्ति सन्निधानन्तु केवलम्। ऋते विष्णोरात्मनस्तु तदंशोक्तिः प्रवेशतः॥" (ब्रह्मवैवर्ते) इति वचनात् आत्मनो जीवस्य तदंशोक्तिः विष्ण्वंशवचनं प्रवेशत इति ज्ञेयमित्यर्थः। कथं तर्हि ब्रह्मसम्भवानिति प्रत्यक्षोक्तिरिति चेन्न।

1. V तदाश्रमात् 2--2. V omits 3. A,J कन्याः 4. A omits अङ्गिरसः 5. A उतथ्यः

सृष्टिविशेषान्मानान्तर विरुद्धवदुक्तेः। तथा चोक्तं "सृष्टिभेदाद्विरूपन्तु कथा पञ्चोत्तरं शतम्। वैरूप्यमन्यद्विज्ञेयं तात्पर्यान्मोहनाय च" (स्कान्दे) इति। अत्र ग्रन्थे कथा पञ्चोत्तरं शतं सृष्टिभेदाद्विरूपं विपरीतमिव प्रतीयते इति शेषः। अन्यद्वैरूप्यं तात्पर्याज्ञानान्मोहनायोक्तं इति ज्ञेयमित्यर्थः। कल्पादिभेदादपि कथाभेदो भवतीत्यतोऽपि विरोधो नास्ति। "ऋते तु पाण्डवकथां क्रमात् व्यत्यस्तशक्तिताम्। एतदापादकं चान्यदृते कल्पादिभेदतः। कथाभेदस्तु विज्ञेयो मोहायै तेषु भिन्नता" (वाराहे) इति वचनात्। विदि कृताविति धातोः योगवित् योगशास्त्रकृत् अणिमादियोगज्ञो वा, बोधतेः शब्विकरणे पठितत्वात् परस्मैपदम्। प्रजाः सन्ततीः॥ ३३॥

कन्यकानामान्याह - सिनीवालीति। कृष्णचतुर्दश्यभिमानिनी सिनीवाली, तत्पञ्चदश्यभिमानिनी कुहूः, शुक्लचतुर्दश्यभिमानिनी अनुमतिः, तत्पञ्चदश्यभिमानिनी राका॥ ३४॥

तत्पुत्रौ तस्याः श्रद्धायाः पुत्रौ स्वारोचिषनाममनोः पुत्रयोर्नामाऽऽह - उचथ्य इति। उचितुं स्थापयितुमस्येति उचथ्यः। साक्षात् भगवान् प्रत्यक्षपूज्यः, बृहत्याः वाचः पालकत्वात् स्वामित्वाद्वा बृहस्पतिः, "तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च" (वार्तिक. 15-32 under अष्टा 6-1-157) इति सूत्रात्तकारलोपः सुडागमश्चेति। "ब्रह्मिष्ठो वैदिकतमः"। "बृहस्पतेः न परः साम्नो विदुः" (ऐत.उ.1-5-4) इति श्रुतेः॥ ३५॥

**पुलस्त्योऽजनयत्पत्न्यां अगस्त्यं च हविर्भुजि[1]।**
**सोऽन्यजन्मनि दह्राग्निः[2] विश्रवाश्च महातपाः॥ ३६॥**

**तस्य यक्षपतिर्देवः कुबेरस्त्विलबिलासुतः[3]।**
**रावणः कुम्भकर्णश्च तथान्यस्यां विभीषणः॥ ३७॥**

**पुलहस्य गतिर्भार्या त्रीनसूत सती सुतान्।**
**कर्मश्रेष्ठं वरीयांसं सहिष्णुं च महामते॥ ३८॥**

**क्रतोरपि क्रिया भार्या वालखिल्यानसूयत।**
**ऋषीन्षष्टिसहस्राणि ज्वलतो ब्रह्मतेजसा॥ ३९॥**

**ऊर्जायां जज्ञिरे पुत्राः वसिष्ठस्य परन्तप।**
**चित्रकेतुप्रधानास्ते सप्तब्रह्मर्षयोऽमलाः॥ ४०॥**

---

1. A,G,J र्भुवि 2. M दभ्रोऽग्निः 3. A.G.J° स्त्विडबिडा, M स्त्विडिबिला

चित्रकेतुः सुरोचिश्च [1]विरजा मित्र एव च।
उल्बणो वसुभृद्यानः द्युमान् शक्त्यादयोऽपरे॥ ४१॥

[2]चित्तिस्त्वथर्वणः पत्नी लेभे पुत्रं धृतव्रतम्।
[3]दध्यञ्चमश्वशिरसं भृगोर्वंशं निबोध मे॥ ४२॥

भृगुः ख्यात्यां महाभागः पत्न्यां पुत्रानजीजनत्।
धातारञ्च विधातारं श्रियञ्च भगवत्[4]पराम्॥ ४३॥

आयतिं नियतिञ्चैव सुते मेरुस्तयोरदात्।
ताभ्यां तयोरभवतां [5]मृकण्डः प्राण एव च॥ ४४॥

मार्कण्डेयो [6]मृकण्डस्य प्राणाद्वेदशिरा मुनिः।
कविश्च भार्गवो यस्य भगवानुशनासुतः॥ ४५॥

**श्रीध० पुलस्त्य** इति। पुलस्त्यो हवि[7]र्भुजि पत्न्यामित्यन्वयः। सोऽगस्त्यः [8]जन्मान्तरे दह्राग्निः [9]जाठराग्निः। विश्रवाश्च पुलस्त्यस्य, **सुतः** इति शेषः॥ ३६॥

**तस्येति**। तस्य विश्रवसः [10]इलबिलायां [11]पत्न्यां जातः सुतः कुबेरः। अन्यस्यां भार्यायां [12]कैकस्यां रावणादयस्त्रयः [13]जाताः सुताः॥ ३७,३८॥

**क्रतोरिति**। ज्वलतः प्रकाशमानान्॥ ३९॥

**ऊर्जायामिति**॥ चित्रकेतुप्रमुखाः जज्ञिरे। ते च सप्तर्षयः जाताः॥ ४०॥

तानेवाऽऽह - **चित्रकेतुरिति**। वसुभृद्यानो नामैकः। शक्त्यादयः अपरे अन्यस्याः [14]जाताः पुत्राः॥ ४१,४२॥

**भृगुरिति**। ख्यात्यां पत्न्याम्। पुत्रान् पुत्रौ पुत्रीं च। तानेवाऽऽह **धातारमिति**॥ ४३॥

**आयतिमिति**। तयो र्धातृविधात्रोः॥ ४४॥

---

1. M विरजो 2. M शान्तिस्त्व°, W शान्ता त्व° 3. A दधीच° 4. M° त्प्रियाम् 5. M मृकण्डुः 6. M मृकण्डोस्तु 7. A,J° र्भुवि
8. J, V omit जन्मान्तरे 9. A ज° 10. A,J इडबिडायां 11. J,V omit पत्न्यां 12. A,J केशिन्यां 13. A,J omit जाताः 14. J, V omit जाताः

**मार्कण्डेय** इति। कविश्च भार्गवः भृगोः पुत्रः [1-] यस्य कवेः सुत उशना [-1]॥ ४५॥

**वीर०** पुलस्त्यः पत्न्यां स्वभार्यायां हवि [2] र्भुगाख्यायां कर्दमस्य चतुर्थ्यां दुहितरि अगस्त्यम् अजनयत्। अगस्त्यं विशिनष्टि- योऽगस्त्यः अन्यजन्मनि दह्याग्निः जाठराग्निरभूत् तथा महातपाः विश्रवाश्च पुलस्त्यसुत इत्यर्थः॥ ३६॥

तस्य विश्रवस इति इलविलासुतः इलबिलायां जातः यक्षाणां पतिः प्रभुः देवः कुबेरः तथा अन्यस्यां भार्यायां कैकस्यां रावणादयः त्रयः पुत्राः विश्रवस एव जाताः॥ ३७॥

पुलहस्य भार्या रत्याख्या कर्दमस्य पञ्चमी दुहिता। सती पतिव्रता त्रीन् सुतान् असूत प्रसूतवती। पु[3]त्रान्निर्दिशति कर्मश्रेष्ठमिति। हे महामते!॥ ३८॥

क्रतोरपि भार्या क्रियाख्या, कर्दमस्य षष्ठी सुता ब्रह्मतेजसा ज्वलतः प्रकाशमानान् षष्टिसहस्राणि वालखिल्यान् वानप्रस्थान् ऋषीन् असूयत॥ ३९॥

तथा वसिष्ठस्य भार्यायामूर्जायां कर्दमस्य नवम्यां सुतायां हे परन्तप! चित्रकेतुप्रभृतयः सप्तमहर्षयः निर्मलाचाराः जज्ञिरे। अरुन्धत्या एव नामान्तरमूर्जेति वेदितव्यम्॥ ४०॥

पुत्रान्निर्दिशति - **चित्रकेतुरिति**। द्युमान् तेजस्वीत्यर्थः। शक्त्यादयः अपरे अन्यस्यां भार्यायां जाताः इत्यर्थः॥ ४१॥

अथर्वणः पत्नी कर्दमस्याष्टमी सुता शान्ताऽऽख्या। चित्तिरिति पाठान्तरं, तदा तत्तस्या एव नामान्तरम्। धृतव्रतं दध्यंचमश्वशिरसं च पुत्रं लेभे लब्धवती, अथ मे मत्तः भृगोर्वंशं निबोध शृणु॥ ४२॥

हे महाभाग! [4-] ख्यात्यां ख्यातिनाम्न्यां [-4] कर्दमस्य सप्तम्यां दुहितरि भृगुः धातृविधातारौ पुत्रौ। पुत्रानित्यार्षं बहुवचनम्। भगवत्परां भगवानाश्रयो यस्यास्तां श्रियं लक्ष्म्यंशभूतां कन्याञ्च अजीजनत्॥ ४३॥

मेरुः स्वस्य सुते आयतिं नियतिञ्च तयोः धातृविधात्रोः अदात् दत्तवान्। ताभ्यां धातृविधातृभ्यां तयोः मेरुदुहित्रोः आयतिनियत्योः यथाक्रमं मृकण्डुः (मृकण्डः) प्राणश्चाभवत्॥ ४४॥

ततः मृकण्डोः (मृकण्डस्य) मार्कण्डेयः प्राणात् वेदशिरा मुनिरभवत्। उशना शुक्रः यस्य वेदशिरसः सुतः सः कविः शुक्रश्च भार्गवः भृगुवंशसम्भूतः इत्यर्थः॥ ४५॥

---

1. V omits  2. A° र्भुवा°  3. A तान्  4--4. A ख्यात्याख्यायां

**विज०** त्यक्त्वागादगस्त्यः, 'स्त्यै ष्ट्यै शब्दसङ्घाते' इत्यतः शब्दादिविषयजातं प्रतिगतः न भवतीति वा[1] सः अगस्त्यः अन्यजन्मनि अग्निषु दभ्रो नामाग्निः दभ्रोऽग्निरल्पाग्निः इत्यर्थे अन्यजन्मनीति विशेषणं व्यर्थम्, अत्र पूर्णाग्निः[2] पूर्वत्राल्पाग्निरिति विवेकस्तु गवेषणीयः इति॥ ३६॥

तस्य विश्रवसः। कोऽयं यक्षपतिः इत्यत उक्तं देवः कुबेरः इति। 'कुबि आच्छादने' इति धातोः धनदानेन दारिद्र्यं कुम्बति आच्छादयतीति कुबेरः। अयमर्थः - कस्मिंश्चिद्यक्षेऽपि अतिव्याप्तः स्यात् इत्यत उक्तं इडबिलासुत[3] इति। अन्यस्यां पत्न्याम्॥ ३७, ३८॥

वालखिल्याः अल्पाः येषां ते तथा सन्ततिविधुराः ऊर्ध्वरेतस इत्यर्थः। तान् ब्रह्मतेजसा ब्रह्मनिमित्ततेजसा॥ ३९, ४०॥

अन्येषां नामानि अप्रतिषिद्धत्वात् किमिति नोक्तानीति शङ्का माभूत् इत्याह - **चित्रकेतुरिति**। अपरे सप्तभ्यः अन्ये ते के, शक्त्यादयः शक्तिमुनिप्रमुखाः॥ ४१-४३॥

तयोः आयतिनियत्योः॥ ४४॥

यस्य कवेः॥ ४५॥

**नवैते[4] मुनयः क्षत्तर्लोकान्सर्गैर भवायन्।**
**एष कर्दमदौहित्रसन्तानः कथितस्तव॥**
**शृण्वतः श्रद्दधानस्य सद्यः पापहरः परः॥ ४६॥**

**प्रसूतिं मानवीं दक्ष उपयेमे ह्यजाऽऽत्मजः।**
**तस्यां ससर्ज दुहितॄः षोडशामललोचनाः॥ ४७॥**

**त्रयोदशाऽदाद्धर्माय तथैकामग्नये विभुः।**
**पितृभ्य एकां युक्तेभ्यः भवायैकां भवच्छिदे॥ ४८॥**

**श्रद्धा मैत्री दया शान्तिः तुष्टिः पुष्टिः क्रियोन्नतिः।**
**बुद्धिर्मेधा तितिक्षा ह्रीर्मूर्तिर्धर्मस्य पत्नयः॥ ४९॥**

---

1. A यः   2. A पूर्णः   3. A° बिडा   4. A,G,J त एते, M सर्वे ते

**श्रद्धाऽसूत शुभं[1] मैत्री प्रसादमभयं दया।**

**शान्तिः सुखं मुदं तुष्टिः स्मयं पुष्टिरसूयत॥ ५०॥**

**श्रीध०** (प्रसूतिमिति।) अजात्मजः ब्रह्मपुत्रः न तु प्राचेतसः[2]॥ ४६, ४७॥

(त्रयोदशेति।) युक्तेभ्यः[3] संयतेभ्यः[4] मिलितेभ्यो वा॥ ४८,५०॥

**वीर०** देवहूतिदुहितृसन्ततिमुपसंहरति **नवेति**। हे क्षत्तः! एते नव मरीच्यादयः सर्गैः स्ववंशैः लोकानभावयन् उत्पादयामासुः। कर्दमदुहितृसन्ततिश्रवणफलमाह - एष इति। कर्दमदौहित्रः कर्दमदुहितृसम्बन्धी सन्तानः मया कथितः श्रद्धापूर्वकं शृण्वतः पापनिवर्तकः॥ ४६॥

एवं देवहूतिसन्ततिमाभिधाय अथ मनोः तृतीयायाः दुहितुः प्रसूतेः सन्तानमाह - **प्रसूतिमिति**। अजाऽऽत्मजः ब्रह्मपुत्रः- दक्षः मानवीं स्वायम्भुवमनुदुहितरं प्रसूतिमुपयेमे उवोढ तस्यां प्रसूत्यां अमललोचनाः सौन्दर्यशालिनीः षोडशदुहितृः ससर्ज॥ ४७॥

तत्र त्रयोदशदुहितृः विभुः तत्तदभिप्रायविज्ञानसमर्थः दक्षः धर्माय ददौ एकां दुहितरं अग्नये, एकां युक्तेभ्यः मिलितेभ्यः पितृभ्यः, एकां भवच्छिदे भवाय रुद्राय अदात्। ज्ञानप्रदत्वात् रुद्रस्य भवच्छित्त्वं विवक्षितम्॥ ४८॥

तत्र धर्मपत्नीः त्रयोदश दुहितृः निर्दिशति - **श्रद्धेति**॥ ४९॥

तासां प्रत्येकं सन्ततिमाह - **श्रद्धेति**। आसां श्रद्धादिनामत्वं तदपत्यानां शुभादिनामत्वञ्च श्रद्धादिधर्मयुक्तत्वेन श्रद्धादि- कार्यशुभादि धर्मयुक्तत्वेन च बोध्यं, नाम्नामन्वर्थत्वात्। यद्वा, श्रद्धा शुभाद्यभिमानिदेवतात्वाद्वा तासां तेषाञ्च तन्नामत्वम्॥५०॥

**विज०** अभावयन् अवर्धयन्॥ ४६॥

कर्दमदौहित्रकथाश्रवणफलमाह - **शृण्वत** इति। अजात्मजो दक्षः॥ ४७, ४८॥

युक्तेभ्यः योगेभ्यः हरौ मनोयोगसहितेभ्यः इति वा। भवच्छिदे ज्ञानोपदेशेन संसारनिर्मूलनाय॥ ४९॥

तासां सन्ततिं स्वनामानुगुणमाह - **श्रद्धेत्यादिना**॥ ५०॥

---

1. V, W श्रुतं 2. V omits न तु प्राचेतसः 3. V adds संयुक्तेभ्यः 4. V 'यु'

योगं क्रियोन्नतिर्दर्प मर्थं बुद्धिरसूयत।
मेधा स्मृतिं तितिक्षा तु[1] क्षेमं ह्रीः प्रश्रयं सुतम्[2]॥ ५१ ॥

मूर्तिस्सर्वगुणोत्पत्ती[3] नरनारायणावृषी।
ययो र्जन्मन्यदो विश्वमभ्यनन्दत्सुनिर्वृतम्॥ ५२ ॥

मनांसि ककुभो वाताः प्रसेदुस्सरितोऽब्धयः[4]।
दिव्यवाद्यन्त तूर्याणि पेतुः कुसुमवृष्टयः॥ ५३ ॥

मुनयस्तुष्टुवुस्तुष्टा जगुर्गन्धर्वकिन्नराः।
नृत्यन्ति स्म स्त्रियो देव्य[5] आसीत्परममङ्गलम्।
देवा ब्रह्मादयस्सर्वे उपतस्थुरभिष्टवैः॥ ५४ ॥

देवा ऊचुः

यो मायया विरचितं निजया[6]ऽऽत्मनीदं खे रूपभेदमिव तत्प्रतिचक्षणाय।
एतेन धर्मसदने ऋषिमूर्तिनाद्य प्रादुश्चकार पुरुषाय नमः परस्मै॥ ५५ ॥

सोऽयं स्थितिव्यतिकरोपशमाय सृष्टान् सत्त्वेन नः सुरगणाननुमेयतत्त्वः।
दृश्याददभ्रकरुणेन विलोकनेन यच्छ्रीनिकेतममलं क्षिपतारविन्दम्॥ ५६ ॥

एवं सुरगणैस्तात! भगवन्तावभिष्टुतौ।
लब्धावलोकैर्ययतुरर्चितौ गन्धमादनम्॥ ५७ ॥

ताविमौ वै भगवतो हरेरंशाविहागतौ।
भारव्ययाय च भुवः कृष्णौ यदुकुरूद्वहौ॥ ५८ ॥

स्वाहाभिमानिनश्चाग्नेरात्मजांस्त्रीनजीजनत्।
पावकं पवमानञ्च शुचिञ्च हुतभोजनम्॥ ५९ ॥

---

1. V, W च 2. V, W तथा 3. A, G, J °त्तिर्न° 4. A, G, J °ऽद्रयः; M °ऽम्रयः 5. V दिव्याः 6. M °मा°

**श्रीध० मूर्तिरिति**। सर्वेषां गुणानाम् उत्पत्तिः यस्यां सा॥ ५१-५३॥

**(मुनय)** इति। उपतस्थुः भेजुः॥ ५४॥

**य** इति। निजया मायया यस्मिन् आत्मनि खे गगने रूपभेदं गन्धर्वनगरमिवेदं विश्वं विरचितम्। तस्यात्मनः प्रतिचक्षणाय प्रकाशनाय आत्मानं योऽद्य प्रादुश्चकार [1]प्रकटीकृतवान् तस्मै पुरुषाय नमः। केन रूपेण प्रादुश्चकार। ऋषेः मूर्तिः आकारः यस्मिन् तेन रूपेण॥ ५५॥

**स** इति। सोऽयं नः अस्मान् सुरगणान् अनल्पकरुणायुक्तेन विलोकनेन विशिष्टनेत्रेण दृश्यात् पश्यतु। कथम्भूतेन? यच्छ्रीनिकेतममलमरविन्दं तत्क्षिपता तिरस्कुर्वता। कथम्भूतः? अनुमेयं शास्त्रतो [2]वेद्यं न त्वस्माकमपरोक्षं तत्त्वं यस्य। कथम्भूतान् अस्मान्? स्थितेः जगन्मर्यादायाः व्यतिकरः अन्यथात्वं तस्योपशमाय सत्त्वेन गुणेन सृष्टान्॥ ५६॥

**एवमिति**। लब्धोऽवलोकः यैस्सुरगणैः तैः अभिष्टुतावर्चितौ च सन्तौ ययतुः॥ ५७॥

**ताविति**। भुवो भारस्य व्ययाय नाशाय। चकारः [3]एकवाक्यत्वार्थः। तौ च साम्प्रतमिह आगतौ इत्यर्थः। तदुक्तं तन्त्रे "अर्जुने तु नरावेशः कृष्णो नारायणस्स्वयम्" (तत्त्वविवेके) इति। यदूद्वहः श्रीकृष्णः कुरूद्वहोऽर्जुनः उभावपि कृष्णनामानौ॥५८॥

**स्वाहेति**। अग्न्यभिमानिनो देवान्। स्वाहा नाम तस्य भार्या। हुतभोजनमिति त्रयाणां विशेषणम्॥ ५९॥

**वीर०** त्रयोदशानां मध्ये मूर्त्याख्या धर्मपत्नी सर्वेषां गुणानां [4]कल्याणगुणानां उत्पत्तिः अभिव्यक्तिः ययोस्तावृषी नरनारायणौ भगवदवतारभूतौ असूत। ययोः नरनारायणयोः जन्मनि जन्मकाले अदः एतत् विश्वं सुखितं सत् अभ्यनन्दत्॥५१,५२॥

सर्वेषां मनांसि दिशः सरितः समुद्राः वाताश्च प्रसन्ना अभूवन्। तूर्याणि वाद्यानि देवैरवाद्यन्त [5]ध्वनितानि॥ ५३॥

देव्यः देवानां सम्बन्धिन्यः स्त्रियः अवतीर्णौ नरनारायणौ [6]द्रष्टुकामाः सर्वे ब्रह्मादयः देवाः अभिष्टवैः उपतस्थुः। आगत्य समीपे अभितः स्थित्वा स्तोत्रैः तुष्टुवुरित्यर्थः॥ ५४॥

स्तुतिमेवाऽऽह - **य** इति द्वाभ्याम्। निजया आत्मीयया मायया सङ्कल्पेन स्वात्मन्येवाऽऽधारभूते खे आकाशे रूपभेदं सितनीलादिरूपभेदमिव विरचितुं यदिदं विश्वं रचितं तत्राऽऽकाशदृष्टान्तेन स्वस्यास्पृष्टसृज्यवस्तुदोषत्वमुच्यते। यद्वा [7]यस्मिन् आत्मनि

---

1. A, J प्रकटितवान्  2. A, J विचार्यं  3. A, J एवकारार्थः  4. W omits कल्याणगुणानां  5. W ध्वानितानि  6. A द्रष्टुं  7. A स्वभिन्नात्मनि

जीवे आकाशे रूपभेदमिव इदं देवतिर्यगादिरूपभेदं विरचितं तत्राऽऽकाशदृष्टान्तेन सितनीलादिरूपभेदः मेघादिकृतः, वस्तुतः[1] आकाशादतिरिक्तोपि भ्रान्तदृष्टीनामाकाशाभिन्नत्वेन[2] प्रतीतः तद्वद्देवादिरूपभेदात् विलक्षणे ह्यात्मस्वरूपे तदभिन्नत्वेनैव भ्रान्तदृष्टीनां[3] प्रतीयमानो देवादिरूपभेद इति विवक्षितम्। यथोक्तम्[4] - ''सितनीलादिभेदेन यथेदं दृश्यते नभः। भ्रान्तदृष्टिभिरात्मापि[5] तथैकस्सन् पृथक् पृथक्'' (विष्णु.पु. 2-16-22) इति। अस्मिन् पक्षे यो मायया आत्मनि रचित मित्युक्त्या भगवतः सङ्कल्पादेव जीवस्य बन्धः इत्युक्तं भवति तत् प्रतिचक्षणाय तस्य देवादिरूपसंसृष्टस्य आत्मनः प्रतिचक्षणाय प्रतिबोधनाय देवादिरूपभेदाद्विलक्षण-ब्रह्मात्मकप्रत्य ात्मस्वरूपबोधनाय तद्द्वारा संसारमोचनाय इत्यभिप्रायः। एतेन देवमनुष्यादिसजातीयेन स्वसङ्कल्पोपात्तेन अप्राकृताकर्मवश्येन ऋष्याकारेण धर्मवश्ये[6] गृहे यो भगवान् प्रादुश्चकार प्रादुर्भूतः तस्मै परमपुरुषाय ते नमः ॥५५॥

सोऽयं स्वसङ्कल्पकृतजगद्बन्धमोक्षः भगवान् अनुमेयतत्त्वः शास्त्रैकवेद्यविविधविचित्रशक्तिमत्त्वरूपः स्थितिव्यतिकरो पशमाय स्थितिः पालनं व्यतिकरः सृष्टिः उपशमः संहारः तेषां समाहारे द्वन्द्वः तस्मै जगत्पालनाद्यर्थं पालनाधिकृतभगवदंशभूते न्द्राद्यभिप्रायेण स्थितिपदं प्रयुक्तम्। सत्त्वेनेति गुणत्रयोपलक्षणम्। स्थित्याद्यनुगुणसत्त्वादिगुणविशिष्टत्वेन सृष्टान् अस्मान् सुरगणान् अदभ्रकरुणेन अनल्पदयायुक्तेन विलोकनेन दृश्यात् आशीर्लिङ आर्धधातुकत्वात् पश्यादेशाभावः। दृश्यान् इति द्वितीयान्तपाठे तु पश्यत्विति क्रियापदमध्याहर्तव्यं, दृश्यान् कृपावलोकनविषयत्वयोग्यान् अस्मान् पश्यत्वित्यर्थः। कथम्भूतेन विलोकनेन ? यच्छ्रियो लक्ष्म्याः निकेतं स्थानम् अरविन्दं कमलं तत्क्षिपता तिरस्कुर्वता॥ ५६॥

हे तात ! एवं लब्धः कृपावलोकः यैस्तैस्सुरगणैः अभिष्टुतौ भगवन्तौ नरनारायणौ गन्धमादनाऽऽख्यं पर्वतं प्रति ययतुः गतवन्तौ॥ ५७॥

तावेव हरेरंशतया अवतीर्णौ इमौ नरनारायणौ भुवः भारव्ययाय भारक्षपणाय यदुकुरुकुलश्रेष्ठौ इमौ कृष्णार्जुनौ इहागतौ तावेव कृष्णार्जुनरूपेण अवतीर्णावित्यर्थः॥ ५८॥

एवं धर्मपत्नीनां दक्षदुहितॄणां त्रयोदशानां सन्ततिः कथिता। अथ चतुर्दश्या दक्षदुहितुः सन्तानमाह - **स्वाहेति**। अभिमानिनः स्वाहां भार्यां स्वस्यात्यन्तमनुकूलां मन्यमानात् अग्नेः तद्भार्या स्वाहा स्वाहाख्या त्रीन् पुत्रान् प्रसूतवती। अभिमानिन इत्यात्मजविशेषणं वा, त्रेताग्न्यभिमानिनः देवानित्यर्थः। तानाह - पावकमिति। हुतभोजनमिति त्रयाणां विशेषणम्। हुतं देवतोद्देशेन व्यक्तं चरुपुरोडाशादिकं भुङ्क्ते इति हुतभोजनस्तम्॥ ५९॥

1. A adds तु 2. A भ्रान्ति 3. A भ्रान्ति 4. W त 5. A भ्रान्ति 6. A धर्मस्य

**विज०** शमदमादिसर्वगुणानां उत्पत्तिः ययोस्तौ तथा ॥ ५१-५३ ॥

अभिष्टवैः स्तोत्रैः ॥ ५४ ॥

यो विष्णुर्निजमायया स्वेच्छया। खे रूपभेदमिव यथाकाशे वाय्वादिरूपभेदः आकाशाऽऽधारतया प्रतीयते तथाऽऽत्मनि स्वाधारतया विरचितं इदं विश्वम्। तत्प्रतिचक्षणाय तस्य जगतः स्वस्य च आधाराऽऽधेयभावज्ञापनायाद्य धर्मसदने मूर्त्याख्य धर्मभार्यायां एतेनास्मद्दृष्टिगोचरेण ऋषिमूर्तिना ऋषिवेषधारिणी मूर्तिः यस्य तत्तथा तेन रूपेण। प्रादुश्चकार तस्मै परस्मै पुरुषाय नम इत्यन्वयः। "यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान्" (तत्त्वविवेके) "यथाकाशे विमानादिरूपभेदः प्रतीयते तथा हरौ जगदिदं तत्सामर्थ्यात् प्रतीयते" (ब्राह्मे) इत्यादेः ॥ ५५ ॥

किमिदानीं विशेषाभीष्टं इत्यतः तत्प्रार्थयन्ते - **सोऽयमिति**। यो भगवान् भक्ताभीष्टैकचिन्तामणि. सोऽयमवलोकनेन कटाक्षनिरीक्षणेन सुरगणप्रन्नो दृश्यात् अवलोकयतु इत्यन्वयः। द्रष्टव्यत्वे स्वमुणान् लक्षयन्ति-स्थितीति। स्थितिव्यतिकरोपशमाय स्थितिविघ्नपरिहाराय सत्त्वेन गुणेन सृष्टान्। अस्माभिरपि न साकल्येन ज्ञातुं शक्यत इति भावेनाऽऽहुः - अनुमेयतत्त्व इति। प्रत्यक्षागमानुगृहीतव्याप्तिकेन लिङ्गज्ञानेन ज्ञेयं तत्त्वं अनारोपितज्ञानस्वरूपं यस्य स तथा। अवलोकनस्य स्वविषये जने गुणार्पकगुणोस्ति चेत् प्रार्थनीयतामर्हति, तत्कथमत्राऽऽहुः अदभ्रेति। अदभ्रा अनल्पा पूर्णा करुणा यस्य तत्तथा तेन न केवलमनुग्रहगुणः किन्तु कान्तिगुणोऽप्यस्तीत्याहुः क्षिपतेति। अरविन्दं क्षिपता। स्वकान्तिगुणेन पद्मकान्तिं निरस्यता इत्यर्थः। पद्मस्य कोऽयं माहात्म्यातिशयः इति तत्राहुः - यच्छ्रीनिकेतमिति। यदरविन्दं श्रियो निकेतं निवासस्थानम्। श्रियः निवासस्थानीयत्वं केनचिद्गुणेन भाव्यं। स क इति तत्राऽऽहुः - अमलमिति ॥ ५६ ॥

ततः किं भगवन्तौ अकार्ष्टामिति तत्राऽऽह - **एवमिति** ॥ ५७ ॥

तौ करतलामलकवत् ज्ञापयति - **ताविमाविति**। यदूद्वहः यादवेश्वरः कृष्णः। कुरूद्वहः अर्जुनः। अस्मिन्नरस्य विशेषावेशात् हरेंशत्वं न तु साक्षात्, तदुक्तं "नरे विष्णुस्समाविष्टः स्वयं नारायणो हरिः। अर्जुने च नरावेशः कृष्णो नारायणस्स्वयम्" (तत्त्वविवेके) इति ॥ ५८ ॥

अग्न्यभिमानिनो देवान् अग्नेः स्वाहा नाम्नी। हुतभोजनमिति त्रयाणां विशेषणम् ॥ ५९ ॥

**तेभ्योऽग्नयस्समभवन् चत्वारिंशच्च पञ्च च।**

**त एवैकोनपञ्चाशत्साकं पितृपितामहैः ॥ ६० ॥**

**वैतानिके कर्मणि यन्नामभिर्ब्रह्मवादिभिः ।**

**आग्नेय्य इष्टयो यज्ञे नि[1]रूप्यन्तेऽग्नयस्तु ते ॥ ६१ ॥**

**अग्निष्वात्ता बर्हिषदः सो[2]म्याः पितर आज्यपाः ।**

**साग्नयोऽनग्नयस्तेषां पत्नी दाक्षायणी स्वधा ॥ ६२ ॥**

**तेभ्यो दधार कन्ये द्वे व[3]युनां धा[4]रिणीं स्वधा ।**

**उभे ते ब्रह्मवादिन्यौ ज्ञानविज्ञानपारगे ॥ ६३ ॥**

**भवस्य पत्नी तु सती भवं देवमनुव्रता ।**

**आत्मनस्सदृशं पुत्रं न लेभे गुणशी[5]लतः ॥ ६४ ॥**

**पितर्यप्रतिरूपे स्वे भवायानागसे रुषा ।**

**अप्रौ[6]ढैवाऽऽत्मनात्मानमजहाद्योगसंयुता ॥ ६५ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां

श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां

चतुर्थस्कन्धे प्रथमोऽध्यायः ॥ १ ॥

**श्रीध० तेभ्य** इति । पितरः त्रयः पितामहः एकः तैः, साकं सह ॥ ६० ॥

**वैतानिक** इति । वैतानिके[7] कर्मणि यज्ञे येषां नामभिः[8] आग्नेय्यः अग्निदेवताका इष्टयः निरूप्यन्ते क्रियन्ते त एते अग्नयो न[9] लौकिकाः । अतः बहूनां न वैयर्थ्यमिति भावः ॥ ६१

**अग्निष्वात्ता** इति । सौम्याः सोमपाः येषामग्नौ करणमस्ति ते साग्नयः । तद्रहितास्त्व[10]नग्नयः ॥ ६२ ॥

**तेभ्य** इति । तयोस्तु सन्ततिः ना भवत् जीवन्मुक्तत्वादित्याह - उभे ते इति ॥ ६३ ॥

**भवस्येति** । गुणशीलतः आत्मनः सदृशं देवं अनुव्रतापि सती पुत्रं न लेभे ॥ ६४ ॥

---

1. W °रु  2. G. J. M. V सौम्याः  3. M मेनां वैतरणीं  4. W धरणी  5. M शालिनम्  6. V. W °ढेना°  7. A. J add **वैदिके**
8. A. J omit आग्नेय्यः  9. V अ°  10. V श्चा

तत्र हेतुः - **पितरीति**। स्वे पितरि दक्षे अप्रतिरूपे असदृशे प्रतिकूले सतीत्यर्थः। आत्मना स्वयमेवाऽऽत्मानं देहमजहात् त्यक्तवती। योगसंयुता योगमाश्रित्येति। ६५ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीधरस्वामिविरचितायां भावार्थदीपिकायां

व्याख्यायां प्रथमोऽध्यायः ॥ १ ॥

**वीर०** तेभ्यः पावकादिभ्यः पञ्चचत्वरिंशदग्नयः समभवन् त एव पञ्चचत्वारिंशदग्नयः पितृपितामहैस्साकं सह एकोनपञ्चाशत्। तत्र पितरस्त्रयः, पितामह एकः ॥ ६० ॥

पञ्चचत्वारिंशदग्नीन् विशिनष्टि - **वैतानिक** इति। यन्नामभिः येषामग्नीनां नामभिः वैतानिके वैदिके कर्मणि तथा यज्ञे यद्वा यज्ञरूपे वैतानिके कर्मणि आग्नेय्यः अग्निदेवताका इष्टयः यागाः ब्रह्मवादिभिः वैदिकै[1]र्निरुप्यन्ते त एते अग्नय इत्यर्थः ॥६१॥

अथ पञ्चदश्या दक्षदुहितुः सन्ततिं व[2]र्णयन् तत्पतीन् पितृन्विभजति - **अग्निष्वात्ता** इति। अग्निष्वात्ता अयज्वान ते अनग्नय. येषामग्नौ करणं नास्ति ते अनग्नयः ते च आज्यपा ये च बर्हिषदः यज्वानस्ते साग्नयः अग्नौ करणवन्तः सोम्याः सोमपाश्च। तथा च श्रुतिः "ये वै यज्वानस्ते पितरः बर्हिषदः ये वा अयज्वानो गृहमेधिनस्ते पितरोऽग्निष्वात्ता" इति तेषामुभय[3]विधपितॄणां पत्नी दाक्षायणी दक्षदुहिता स्वधाख्या ॥ ६२ ॥

तेभ्यः पितृभ्यः [4]स्वधा मेधां वैतरिणीञ्च द्वे कन्ये दधार गर्भे धृतवती प्रसूतवतीत्यर्थः। तयोः सन्ततिर्नास्तीत्याह - उभ इति। **ते उभे मेधावैतरण्यौ ब्रह्मवादिन्यौ** ब्रह्मोपदेष्ट्र्यौ ज्ञानं शास्त्रजन्यं, विज्ञानं विवेकादिजन्यं, तयोः पारं अन्तं गतवत्यौ सनकादिवदूर्ध्वरेतस्के ते इति भावः ॥ ६३ ॥

भवस्य रुद्रस्य [5]**या पत्नी** सतीनाम्नी सापि गुणशीलादिभिरात्मनः स्वस्याः सदृशं देवं भवं [6]नित्यं सेवमानापि पुत्रं न लेभे ॥६४॥

तत्र हेतुः - स्वे पितरि दक्षे अनागसे निरपराधिने भवाय रुद्राय रुषा क्रोधेनाप्रतिरूपे असदृशे प्रतिकूले सति आत्मना स्वयमेव आत्मानं देहं अप्रौढैव बालैव सती योगसंयुता अजहात् तत्याज योगाग्निना देहं ददाह इत्यर्थः ॥ ६५ ॥

**विज०** तेभ्यः त्रिभ्यः पितरः पावकादयः पितामहः स्वाहापतिः अग्निः ॥ ६० ॥

---

1. A 'रू' 2. A वक्ष्यन् 3. A विधानां 4. A omits स्वधा 5. W omits या पत्नी 6. A omits नित्यं

इति श्रीमद्भगवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां प्रथमोऽध्यायः ॥ १ ॥

वैतानिके कर्मणि यज्ञकर्मणि ब्रह्मवादिभिर्येषामग्नीनां नामभिः आग्नेय्यः अग्निदैवत्या इष्टयः निरूप्यन्ते ते अग्नयः एतादृशमहिमानः इत्यर्थः ॥ ६१ ॥

तेषां जातिनामान्याह - **अग्निष्वात्ता** इति। तेषामग्नीनाम् ॥ ६२ ॥

ब्रह्मवादिन्यौ वेदविचारविचक्षणे ॥ ६३ ॥

भवपत्न्याः सत्याः कति अपत्यानि ? इत्याशङ्कां परिहरति - **भवस्येति** ॥ ६४ ॥

आत्मसम्मापत्यालाभात् तया सत्या किमकारीति तत्राऽऽह - **पितरीति**। पितरि दक्षे अनागसे भवाय अप्रतिरूपे अननुकूले विरोधिनि सति अप्रौढेव[1] अस्वीकृतेव[2] योगसंयुता प्राणोत्क्रमणनिमित्तयोगनिरतात्मना मनसा आत्मानं हरिं ध्यायन्ती आत्मानं देहं अजहात् अत्याक्षीदित्यन्वयः ॥ ६५ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां

टीकायां प्रथमोऽध्यायः ॥ १ ॥



**1. A 'ढेव' 2. A 'तेव'**

# द्वितीयोऽध्यायः

## विदुर उवाच

भवे शीलवतां श्रेष्ठे दक्षो दुहितृवत्सलः ।
विद्वेषमकरोत्कस्मात् अनादृत्याऽऽत्मजां सतीम् ।। १ ।।

कस्तं चराचरगुरुं निर्वैरं शान्तविग्रहम् ।
आत्मारामं कथं द्वेष्टि जगतो दैवतं महत् ।। २ ।।

एतदाख्याहि मे ब्रह्मन् जामातुश्श्वशुरस्य च ।
विद्वेषस्तु यतः प्राणान् त[1]त्यजे दुस्त्यजान् सती ।। ३ ।।

## मैत्रेय उवाच

पुरा विश्वसृजां सत्रे समेताः परमर्षयः ।
[2]तथाऽमरगणस्सर्वे सानुगा मुनयोऽग्नयः ।। ४ ।।

तत्र प्रवि[3]ष्टमृषयः दृष्ट्वार्कमिव रोचिषा ।
भ्राजमानं वितिमिरं कुर्वन्तं तन्महत्सदः ।। ५ ।।

उदतिष्ठन् सदस्यास्ते स्वधिष्ण्येभ्यस्सहाग्नयः ।
ऋते विरि[4]ञ्चं शर्वञ्च तद्भासाक्षिप्त चेतसः ।। ६ ।।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

द्वितीये प्रथमाध्यायोपक्षिप्ते भवदक्षयोः । विद्वेषे वर्ण्यते हेतुर्विश्वसृड्यज्ञसम्भवः ।।

**भव** इति । सतीं सतीनाम्नीम् ।। १।।

---

1. M अत्यजद्दु° 2. V,W तदा 3. M° ष्टं मुनयः 4. M, V °ञ्चि°

न चासौ कस्यचिद्द्वेषार्ह इत्याह - क इति। चराचरगुरुं जगतो दैवतञ्च तं को द्वेष्टि ? [1-]न कोऽपि द्वेष्टीत्यर्थः[-1]। [2-]कथञ्च निर्वैरं द्वेष्टि[-2] ? निर्वैरत्वे हेतुः । [3]शान्तमिति भावे क्तः[4] । [5]शान्तं शान्तिरेव विग्रहो यस्य । कुतः ? आत्मन्येवाऽऽरामः रतिर्यस्य [6]न तु विषये, तम्। यद्वा कः प्रजापति : दक्षः कथं द्वेष्टि ? एवम्भूते तस्मिन् द्वेषोऽयुक्तः अशक्यश्चेत्यर्थः ॥ २॥

**एतदिति**। यतो हेतोर्विद्विषः यतो विद्वेषात् प्राणान् तत्याज एतदाख्याहि॥ ३॥

[7]एतदेवाऽऽख्यातुमितिहासं प्रस्तौति - **पुरेति**। समेता आसन्॥ ४॥

**तत्रेति**। प्रविष्टं दक्षमिति शेषः। [8]तत् महत्सदः महतीं सभाम्॥ ५॥

उद तिष्ठन्निति। स्वधिष्ण्येभ्यः स्वीयाऽऽसनेभ्यः॥ ६॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

भवाय पितर्यप्रतिरूपे सति आत्मानं तत्याजेति सङ्ग्रहेणोक्तं देह[9]त्यागनिमित्तं त्यागं चाश्रुत्य तद्विस्तरबुभुत्सया पृच्छति **भव** इति त्रिभिः। शीलवतां निर्वैरत्वसमदर्शनत्वादिरूप स्वभाववतां [10]मध्ये श्रेष्ठे भवे रुद्रे दुहितृषु [11]वत्सलः दक्षः सतीनाम्नीमात्मजामनादृत्य कस्मद्धेतोः विद्वेषमकरोत् ? न च दुहितृजामातरौ विद्वे षार्हाविति भावः॥ २॥

इतश्च न भवो विद्वेषार्हः इत्याह - **क** इति। को ब्रह्मा दक्षः चराचराणां गुरुं ज्ञानोपदेष्टारं अचराणामपि ज्ञानसम्पादन[12]समर्थं किमुतचराणामिति कैमु[13]त्यकन्यायद्योतनायाचरपदं प्रयुक्तम्। जगतः जिज्ञासोर्लोकस्य महद्दैवतं आराध्यं ''रुद्रः तारकं ब्रह्म व्याचष्टे'' (जाबालि.उ.) ''शङ्करात् ज्ञानमन्विच्छेत्'' (ब्रह्माण्ड.पु.) इति श्रुतिस्मृतिभ्यां ज्ञानार्थं जिज्ञासुभिः आराध्यमिति भावः। निर्वैरं [14]तं भवं [15]कथं द्वेष्टि अद्वेषीत् इत्यर्थः। निर्वैरत्वे हेतुः - शान्तविग्रहं शान्तिरेव विग्रहः यस्य शान्तिप्रचुरमित्यर्थः। आत्मनि सर्वभूतान्तरात्मनि परमपुरुषे आरामो रतिर्यस्य तं ''सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत'' (छान्दो. उ.3-14-1) इति श्रुत्युक्तरीत्या शमदमादिभिः सर्वात्मकं ब्रह्मैवोपासीतेत्यर्थः॥ २॥

जामातुः भवस्य श्वशुरस्य दक्षस्य च यतो हेतोः विद्वेषोऽभवत् यतश्च विद्वेषात् दक्षस्य दुहिता सती प्राणान् तत्याज एतन्मह्यं हे ब्रह्मन्! आख्याहि कथय॥ ३॥

---

1--1. A,J omit 2--2. A omits 3. A omits शान्तमिति 4. J omits इति 5. J omits शान्तं 6. J. V omit न तु विषये 7. A, J तदें 8. A. J omit तत् 9. A omits त्यागनिमित्तं 10. A omits मध्ये 11. A च सती॰ 12. W समर्थः 13. A ॰त्य 14. A omits तं 15. A omits कथं

एवमापृष्टो मैत्रेयः भवदक्षयोः [1] मिथः विद्वेषनिमित्तं तन्निमित्तसतीदेहत्यागञ्च सप्रपञ्चमुपपादयिषुः औपोद्धातिकीं कथां प्रस्तौति**पुरेति**। विश्वसृजां मरीच्यादिप्रजापतीनां सत्रे, बहुयजमानकर्तृकः यागः सत्रं तस्मिन् परमर्षयः तथा सभृत्याः इन्द्रादयः सुरगणाः अग्नयः अग्न्यभिमानिन्यो देवताश्च समेताः सङ्घीभूता आसन् ॥ ४ ॥

तत्र [2] यज्ञिये देशे प्रविष्टं दक्षमिति शेषः, दृष्ट्वा चतुर्मुखं शिवञ्च विना सर्वे तस्य दक्षस्य भासा आक्षिप्तमभिभूतं तेजः येषां ते सहाग्नयः अग्न्यभिमानिदेवतासहिताः सदस्याः सदसि संस्थिताः स्वासनेभ्यः उदतिष्ठन् उत्थितवन्तः। दक्षं कथम्भूतम् ? शोचिषा देहकान्त्या आदित्यमिव भ्राजमानं महत्सदः महतीं सभां वितिमिरं यथा तथा कुर्वन्तम् ॥ ५,६ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अत्र कतिपयैरध्यायैः हरेः भक्तिविधानार्थं तन्माहात्म्यातिशयज्ञापनाय तन्माहात्म्यातिशयाविनाभूतं दक्षाध्वरध्वंसलक्षणं रुद्रस्य माहात्म्यं कथयति। तत्राऽऽदौ विदुरः "सत्यात्मानमजहात्" इति श्रुतसतीदेहवियोगविशेषं जिज्ञासुर्मैत्रेयं पृच्छति भवे शीलवतामिति विद्वेषाकरणे हेतवः शीलवत्त्वादिना ज्ञापनायोक्ताः ॥ २ ॥

स्वस्य गुरुत्वेऽपि स्वकर्म निन्दितमिति भावेनाऽऽह - **कस्तमिति**। आत्मनि परमात्मन्येव आरामः रतिर्यस्य स तथा तम् ॥ २ ॥

तथा च किमिति तत्राऽऽह - एतदिति। [3] विद्वेषः विद्वेषकारणम् ॥ ३ ॥

विद्वेषनिमित्तं वक्तुं उपोद्धातं रचयति **पुरेति**। न केवलं महर्षय एव किन्तु मुनिमात्रमप्यत्र समवेतं इत्यतो - मुनयः इति पुनर्वचनम् ॥ ४ ॥

किमनेन प्रकृत इति तत्राऽऽह - **तत्रेति**। प्रविष्टं दक्षमिति शेषः ॥ ५ ॥

ब्रह्मपुत्रत्वात् रुद्रस्य श्वशुरत्वाच्च नायं प्राकृतः पुरुषः इति भावेनास्मिन् सभाबहुमानं वक्ति - **उदतिष्ठन्निति**। तस्य दक्षस्य भासा ॥ ६ ॥

**सदसस्पतिभिर्दक्षो भगवान् साधु सत्कृतः।**
**[4] अजं लोकगुरुं नत्वा निषसाद तदाज्ञया ॥ ७ ॥**

---

1. W omits मिथः 2. W यज्ञीये 3. A omits विद्वेषः 4. A अथ

**प्राङ्निषण्णं मृडं दृष्ट्वा नामृष्यत्तदनादृतः ।**

**उवाच वामं चक्षुर्भ्यां अभिवीक्ष्य दहन्निव ॥ ८ ॥**

**दक्ष उवाच**[1]

**श्रूयतां ब्रह्मर्षयो मे सहदेवास्सहाग्नय[2] : ।**

**साधूनां ब्रुवतो वृत्तं नाज्ञानान्न च मत्सरात् ॥ ९ ॥**

**अयं तु लोकपालानां यशोघ्नो निरपत्रपः ।**

**सद्भिराचरितः पन्था : येन स्तब्धेन दूषितः ॥ १० ॥**

**श्रीध. प्रागिति** । प्राक् स्वोपवेशनात् पूर्वमेव निषण्णं उपविष्टं मृडं शिवम् । तदनादृतः तेन अभ्युत्थानादिभिरकृतादर[3]. दक्षः[4] नामृष्यत् नासहत । वामं वक्रं यथा भवति तथा अभिवीक्ष्य ॥ ७, ८ ॥

**श्रूयतामिति** । मे वचनं श्रूयताम् । अज्ञानात् मत्सरात् च न ब्रुवतः ॥ ९ ॥

**अयमिति** । स्तब्धेन उचितक्रियाशून्येन । ध्वस्तेनेति पाठे भ्रष्टेन ॥ १० ॥

**वीर.** ततः स भगवान् दक्षः सदसस्पतिभिः साधु यथा तथा सत्कृतः पूजितः लोकगुरुं अजं ब्रह्माणं प्रणम्य तस्याजस्याऽऽज्ञया निषसाद उपविष्टवान् ॥ ७ ॥

प्राक् स्वोपवेशात् पूर्वमेवाऽऽगत्य निषण्णमुपविष्टं मृडं शिवं दृष्ट्वा तेन मृडेन अनादृत : प्रत्युत्थानादिभिरसत्कृतः दक्षः नामृष्यत् न सेहे । वामं वक्रं यथा तथा दहन्निव चक्षुर्भ्यामभिवीक्ष्य उवाच ॥ ८ ॥

उक्तिमेवाऽऽह - श्रूयतामित्यादिना यज्ञभागं न लभतामित्यन्तेन । हे सहाग्नयो ! महर्षयः ! साधूनां वृत्तमाचारं ब्रुवतः कथयतः मे मम[5] वाक्यं[6] वक्ष्यमाणं श्रूयतां युष्माभिरिति शेषः । इदं वक्ष्यमाणं वचः अज्ञानात् मत्सराच्च न कथ्यत इत्याह अज्ञानादिति । अज्ञानात् मत्सराच्च न कथयिष्यामीत्यर्थः ॥ ९ ॥

अयं रुद्रः नाम्नापि निर्देष्टुम् असहमानोऽयमिति सर्वनाम्ना निर्दिष्टवान् । एवमुत्तरत्रापि लोकपालानां यशोनाशकः निरपत्रपः

---

1. A. G, J, V. W omit दक्ष उवाच 2. M सभ्याः 3. V° रसत्कृत 4. A. J omit दक्ष 5. W omits मम 6. W adds वचः

लज्जारहितः स्तब्धेन[1] विहितधर्मपरित्यागिना मूर्खेण वा येन रुद्रेण सद्भिः आचरितः अनुष्ठितः पन्थाः वैदिकाचारः दूषितः दोषं प्रापितः। विनाशित इति यावत् ॥ १० ॥

**विज.** सर्वोत्थानलक्षणसत्काराभावात् अतः निर्गमनम् , इतरजन बहुमानेनोपवेशनं च सम्भावितमनयोर्दक्षेण किमकारीति तत्राऽऽह- सदसस्पतिभिरिति ॥ ७ ॥

उपविष्टश्चेद्रुद्रविषयकोपोप्युपविष्टः किम् ? तत्राऽऽह- **प्राङ्निषण्णमिति**। नामृष्यदित्यस्य किं लिङ्गं तत्राऽऽह - उवाचेति ॥८॥

वृत्तं सदाचारम् ॥ ९ ॥

किमिदानीं वृत्तं वक्तुं प्राप्तम् ? अत्राह - **अयन्त्विति** ॥ १० ॥

**एष मे शिष्यतां प्राप्तो यन्मे दुहितुरग्रहीत्।**
**पाणिं विप्राग्निमुखतः सावित्र्या इव साधुवत् ॥ ११ ॥**

**गृहीत्वा मृगशाबाक्ष्याः पाणिं मर्कटलोचनः[2]।**
**प्रत्युत्थानाभिवादार्हे वाचाप्यकृत नोचितम् ॥ १२ ॥**

**लुप्तक्रियायाशुचये मानिने भिन्नसेतवे।**
**अनिच्छन्नप्यदां बालां शूद्रायेवोशतीं गिरम् ॥ १३ ॥**

**प्रेतावासेषु यो[3] घोरैः प्रेतै[4] र्भूतगणैर्वृतः।**
**अटत्युन्मत्तवन्नग्नो व्युप्तकेशो हसन् रुदन् ॥ १४ ॥**

**चिताभस्मकृतस्नानः प्रेतस्रङ्न्रस्थिभूषणः[5]।**
**शिवापदेशो ह्यशिवो मत्तो मत्तजनप्रियः।**
**पतिः प्रमथभूतानां तमोमात्रात्मकात्मनाम् ॥ १५ ॥**

**तस्मा उन्मादनाथाय[6] नष्टशौचाय दुर्हृदे।**
**दत्ता बत मया साध्वी चोदिते[7] परमेष्ठिना[8] ॥ १६ ॥**

1. W स्तब्धशब्देनश्र 2. Af अर्केन्दु 3. A. G. J, M घोरेषु प्रे° 4. M घोरैः 5. M प्रेतास्थिग्रन्थि 6. V °दुन्माद
7. V चोदनात्; W चोदितः 8. V °नः

**मैत्रेय उवाच**

**विनिन्द्यैवं स गिरिशमप्रतीपमवस्थितम्।**
**[1]दक्षोऽथाप उपस्पृश्य क्रुद्धः शप्तुं प्रचक्रमे ॥ १७ ॥**

**[2]दक्ष उवाच**

**अयं तु देवयजन इन्द्रोपेन्द्रादिभिर्भवः।**
**[3]सह भागं न लभतां देवैर्देवगणाधमः ॥ १८ ॥**

**श्रीध.** तदेवाऽऽह - **एष** इति। यत् यस्मात् विप्राग्निसमक्षं सावित्रीतुल्यायाः मे दुहितुः पाणिमग्रहीत् ॥ ११ ॥

**गृहीत्वेति।** मृगशावस्य हरिणपो[4]तस्य अक्षिणी इव अक्षिणी यस्याः। प्रत्युत्थानाभिवादार्हे मय्युचितं सम्मानं वाचापि नाकरोत् ॥ १२ ॥

अनर्हाय कन्या दत्ता इत्यनुतप्यमान आह - **लुप्तक्रियाय** इति सार्धैश्चतुर्भिः। उशतीं [5]शुद्धां, वेदलक्षणां गिरम् ॥ १३ ॥

**प्रेतावासेष्विति।** प्रेतावासेषु श्मशानेषु व्युप्ता विकीर्णाः केशाः यस्य ॥ १४ ॥

**चितेति।** चिताभस्मना कृतं स्नानं येन। प्रेतानां स्रजः माल्यानि यस्य स प्रेतस्रक्। नृणामस्थीनि भूषणानि यस्य। शिव इत्यपदेशः नाममात्रं यस्य। तमोमात्रात्मकः केवलतमोरूप आत्मा स्वभावो येषाम् ॥ १५ ॥

**तस्मै** इति। उन्मादाः भूतविशेषाः तेषां नाथाय दुर्हृदे दुष्टचित्ताय। बतेति खेदे। [6-]पूर्वोक्तश्लोकचतुष्कस्य[-6] वास्तवस्त्वयमर्थः - लुप्ताः क्रिया यस्मिन् परब्रह्मरूपत्वात्, अत एव नास्ति शुचिः यस्मात्। अमानिने अभिन्नसेतवे इति च च्छेदः। तस्य परमेश्वरस्य मदीया मानुषी कन्या कथं - योग्या स्यादिति लज्जादिना दातुमनिच्छन्नपि तत्सम्बन्धलोभेन दत्तवान्। शूद्राय इत्यनर्हत्वमात्रे दृष्टान्तः - न हीनत्वे[7]। पूर्वापरस्ववचनविरोधापत्तेः। एतदुक्तं भवति - यथा कश्चित् शूद्राय वेदमर्थलोभेन ददाति तद्वत् इति। प्रेताऽऽवासेष्वित्यादिसर्वं विडम्बनमात्रमिति स्वयमेवाऽऽह - उन्मत्तवदिति। अन्यथा उन्मत्त इत्येव [8]वदेत्। अशिवः नास्ति शिवो यस्मात्। अमत्तोऽमत्तजनप्रिय इति च च्छेदः। पतिः प्रमथभूताना[9]मिति भक्तवात्सल्यमाह - तामसानामपि दोषमपनीय, पातीति

---

1. M दक्षोह्यपः  2. A, G, J, M omit दक्ष उवाच  3. M यज्ञभागं; Af यज्ञे भागं  4. A, J बालस्य  5. J, V omit शुद्धां  6--6. A, J omit
7. V adds यद्वा शोकं द्रावयतीति शोकः आत्मनिष्ठः तस्य वेदवार्णी कर्मविद्यामिव  8. A, J अवक्ष्यत्  9. A, J° नपि

पतिः[1] । नष्टानामपि शौचं शुद्धिः यस्मात् । दुष्टेष्वप्येते मया अनुकम्प्या इति हृत् मनः यस्य सः दुर्हृत् तस्मै । बतेति हर्षे । ब्रह्मणो वाक्यात् लज्जाभयादिकं परित्यज्य दत्तेत्यर्थः ॥ १६ ॥

**विनिन्द्येति** । अप्रतीपं अप्रतिकूलं यथा भवति एवं अवस्थितमपि विनिन्द्य ॥ १७ ॥

**अयमिति** । देवानां यजनसमये देवैस्सह यज्ञे[2] भागं न लभतां किन्तु तेभ्यः पूर्वमेव लभतां अग्रभोजित्वात् । यद्वा तेषु भुक्तवत्सु लभतां सर्वपोषकत्वात् । तत्र हेतुः - देवगणः अधमः यस्मात्सः ॥ १८ ॥

**वीर.** स्तब्धतामेव प्रपञ्चयति - **एष** इति द्वाभ्याम् । एषः रुद्रः यत् यस्मात् मे मम शिष्यतां उपगतः मे दुहितुः सत्याः पाणिं विप्राग्निसाक्षिकं साधुवदग्रहीत्, साधुवदिति वतिप्रत्ययेन वस्तुतोऽसाधुरिति व्यञ्जितम् ॥ ११ ॥

मर्कटस्येव लोचने यस्य सोऽयं रुद्रः मृगशाबस्य हरिणबालकस्य अक्षिणीव अक्षिणी यस्यास्तस्याः सत्याः पाणिं गृहीत्वा ऊढ्वा प्रत्युत्थानाभिवादनादियोग्ये मयि वाङ्मात्रेणापि उचितं सत्कारं नाकृत न कृतवान् ॥ १२ ॥

अनर्हाय कन्यां दत्तवानहं इत्यनुतप्यमान आह - **लुप्तक्रियायेति** सार्धैश्चतुर्भिः । लुप्तक्रियाय लुप्ता क्रिया सदाचारो येन अत एव अशुचये मानिने दुरहङ्कारिणे भिन्नसेतवे भिन्नः भ्रंशितः सेतुः धर्ममर्यादा येन तस्मै अनिच्छन्नपि दातुमिति शेषः, अहं बालां कन्यामदां दत्तवान्; यथा शूद्राय उशतीं निर्दुष्टां वेदलक्षणां गिरं तथेत्यर्थः ॥ १३ ॥

प्रेतावासेषु श्मशानेषु घोरैः विकृतैः प्रेतैः[3] भूतगणैश्च, वृतः वेष्टितः[4] नग्नः विवसनः, व्युप्तकेशः विकीर्णकेशः, उन्मत्त इव हसन् रुदंश्च अटति पर्यटति ॥ १४ ॥

चिताभस्मना श्मशानभस्मना कृतं स्नानं येन, प्रेतानां स्रजः माल्यानि यस्य सः, नृस्थिभूषणः नृणामस्थीनि भूषणानि यस्य सः, स्वयमशिवः अमङ्गलोऽपि शिवापदेशः शिव इति व्यवहारमात्रं यस्य, स्वयं मत्तः मत्तानां जनानां प्रियश्च, तमोमात्राऽऽत्मकः केवलतमोरूपः आत्मा स्वभावो येषां तेषां प्रमथभूतानां प्रमथाख्यभूतविशेषाणां पतिः ॥ १५ ॥

तस्मै उन्मादानां भूतविशेषाणां नाथाय दुर्हृदे दुष्टचित्ताय नष्टशौचाय आचारहीनाय साध्वी सती कन्या मया दत्ता । परमेष्ठिना चोदितः आदिष्टोऽहं दत्तवानित्यध्याहारः, चोदित इत्यार्षत्वात् व्यत्ययेन तृतीयार्थे प्रथमा वा । बतेति खेदे । केचिदत्र लुप्तक्रियायाशुचये इत्यादिग्रन्थं रुद्रनिन्दापरं यथाश्रुतं व्याख्याय वास्तवस्त्वयमर्थः इत्युपक्रम्य लुप्ता क्रिया यस्मिन् परब्रह्मरूपत्वात् अत एव न शुचिः

---

1. A, J omit पतिः  2. A, J omit यज्ञे  3. A omits प्रेतैः  4. A omits वेष्टितः

यस्मात् अमानिने अभिन्नसेतवे इति च च्छेदः। तस्य परमेश्वरस्य मदीया मानुषी कन्या कथं योग्या स्यादिति लज्जया दातुमनिच्छन्नपि तत्सम्बन्धलोभेन दत्तवान्। शूद्राय इति अनर्हत्वमात्रे दृष्टान्तः - न हीनत्वे; अन्यथा[1] पूर्वापरस्वग्रन्थविरोधापत्तेः। एतदुक्तं भवति -यथा कश्चित् शूद्राय वेदमर्थलोभेन ददाति तद्वदिति। प्रेतावासेष्वित्यादिसर्वं विडम्बनमात्रमिति स्वयमेवाऽऽह - उन्मत्तवदिति। अन्यथा उन्मत्त इत्येवावक्ष्यत्। अशिवः नास्ति शिवो यस्मात्। अमत्तः, अमत्तजनप्रियः इति च च्छेदः, पतिः प्रमथभूतानामिति भक्तवात्सल्यमाह - तामसानाम[2]पि दोष[3]मशेषमपनीय पाति इ[4]ति पतिः। नष्टानामपि शौचं शुद्धिः यस्मात् दुष्टेष्वपि गमे मया अनुकम्प्या इति हृत् मनः यस्य स दुर्हृत् तस्मै। बत इति हर्षे'' इति रुद्रस्य प्रशंसापरत्वेन व्याचक्षते। तत्रायं वास्तवोऽर्थः किं दक्षस्याभिप्रेतः ? उत एतत्पुराणकर्तुः ? उतान्यस्य त्वादृशस्य कस्यचित् ? नाद्यः - ''साधूनां ब्रुवतो वृत्तं नाज्ञानात् न च मत्सरात्'' (भाग. 4-2-9) इति वास्तविकत्वमुपक्रम्य ''लोकपालानां यशोघ्नो निरपत्रपः'', (भाग.4.2.10) ''येन स्तब्धेन दूषितः''(भाग. 4-2-10)''एष मे शिष्यतां प्राप्तः'' (भाग. 4-2-11) इत्यादिना निन्दयतोऽभिप्रेतत्वासम्भवात्, निन्दायामेव तस्य तात्पर्याति शयावगमात्। अत एव हि ''दक्षो गिरित्राय विसृज्यशापं तस्माद्विनिष्क्रम्य विवृद्धमन्युः, जगाम'' (भाग. 4-2-19) इति निन्दापूर्वकशापकरणत्वविवृद्धक्रोधत्वविनिष्क्रमणादयः वक्ष्यमाणाः उपपन्नाः। न द्वितीयः- वेदान्तार्थोपबृंहणरूपत्वादस्य पुराणस्य। वेदान्तेषु च ''अनपहतपाप्मा वा अहमस्मि'', ''नारायणाद्रुद्रो जायते'' (ना.रा.उ) इत्यादिषु कर्मवश्यत्व - कार्यत्वादिश्रवणात् तद्विरुद्धार्थानामत्र निबद्धुमयुक्तत्वेन एतत्पुराणकर्त्रभिप्रेतत्वासम्भवात्। अत एव हि ''सद्योऽजायततन्मन्युः कुमारो नीललोहितः। स वै रुरोद देवानां पूर्वजो भगवान् भवः। नामानि कुरु मे धातः। स्थानानि च जगद्गुरो!'' (भाग 3-12-7,8) इति वेदान्तार्थानुसारेणैव कार्यत्वकर्मवश्यत्वचतुर्मुखकृतनामस्थानादिमत्वमुपबृंहितम्। क्वचित्त्रिमूर्त्यैक्यादिकं प्रतीयमानं प्रतर्दन न्यायेनान्यथाप्युपपन्नमिति पूर्वमेव प्रतिपादितम्। न तृतीयः आग्रहमूलकत्वात्। निन्दापरग्रन्थस्य यथाकथञ्चिद्विपरीतार्थपर्यवसानकरणे सर्वत्राप्येवमेव स्यादिति स्तुतिनिन्दयोः व्यवस्थानुपपत्तेश्च। यदप्युक्तं - लुप्ताः क्रिया यस्मिन् परब्रह्म[5]रूपत्वादिति तदयुक्तं परब्रह्मत्वेपि रामकृष्णाद्यवतारेषु लुप्तक्रियात्वादर्शनेन हेतोः व्यभिचारात्। अमानिने अभिन्नसेतवे इति पदच्छेद इत्यप्ययुक्तम् - ''सद्भिराचरितः पन्थाः येनस्तब्धेन दूषितः'' (भाग. 4-2-10) इति ''यज्ञ भागं न लभतां देवैर्देवगणाधम!'' (भाग. 4-2-18) इति पूर्वोत्तरव्याघातात्। तस्य परमेश्वरस्य मदीया मानुषी कन्या इत्याद्यप्ययुक्तं, भवदक्षयोरुभयोरपि चतुर्मुखात् प्रसूतत्वेव दक्षकन्यायाः मानुषीत्वासम्भवात्। ''मनोर्जातावञ्यतौ षुक् च'' (अष्टा. 4-1-61) इति हि मानुषशब्दो व्युत्पादितः। तामसाना[6]मपि दोषमपनीय पातीत्याद्यपि मन्दम्-

1. A omits अन्यथा 2. A °नपि 3. W omits अशेष 4. A omits इति पतिः। 5. W omits रूप 6. W° नपि

"तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु। आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि। मामप्राप्यैव कौन्तेय! ततो यान्त्यधमां गतिम्" (भ.गी. 16-19, 20) इति तामसानां निग्राह्यत्वगानात्। तस्मात् यथोक्त एवार्थः॥ १६॥

सः दक्षः अप्रतीपं अप्रतिक्रियं उदासीनमवस्थितं आसीनं गिरिशं एवं उक्तविधया विनिन्द्य अथ अप उपस्पृश्य आचम्य इत्यर्थः। क्रुद्धः शप्तुं प्रचक्रमे उपक्रान्तवान्॥ १७॥

अयं भवः रुद्रः तुः हेतौ। यतः देवगणाधमः सर्वेभ्यः देवेभ्यः अधमः ततः इन्द्रादिभिर्देवैस्सह देवयजने देवोद्देश्यकयागे यज्ञभागं यज्ञीयभागं[1] न लभतां न प्राप्नुयात्॥ १८॥

**विज०** स्वतः उत्तमास्य शिवस्य दक्षावमानविषयत्वं कथमत्राऽऽह - **एष** इति। गायत्रीविषये, 'पण व्यवहारे' इति धातोः पाणिं व्याहरणमुच्चारणमित्यर्थः[2]। साधुवत् योग्यवत्॥ ११॥

मृगशाबः मृगपोतः, मर्कटलोचने इव लोचने यस्य स तथा केकराक्ष इत्यर्थः॥ १२॥

भिन्नसेतवे लङ्घितमर्यादाय उशतीं गिरं पौरुषेयत्वदिदोषरहितां वेदवाणीम्॥ १३॥

अशुचिकर्मकरणात् अशुचित्वमुक्तं न तु द्वेषादित्याह - **प्रेतावासेष्विति**। व्युप्तकेशः मुक्तकेशः॥ २४॥

चिताभस्मना श्मशानभस्मना कृतं स्नानं येन सः, तथा प्रेतानां अस्थिग्रन्थयः अस्थिभिर्ग्रथितमालाः ता एव भूषणनि यस्य स तथा, शिव इति अपदेशः नाम यस्य स तथा स्वयमपि अशिवोऽशुद्धो हि। उन्मत्तत्वं स्पष्टयति - पतिरिति। केवलं तमोगुणस्वरूपं मनः येषां ते तथा तेषाम्॥ १५॥

अतः किमनुशोककारणमत्राऽऽह - **तस्मा** इति॥ १६॥

न केवलं दक्षेण दोषा एव गणिताः किन्तु स्वानर्थहेतुः शापोपि दत्त इत्याह - **विनिन्द्यैवमिति**। अप्रतीपं अप्रतिपक्षम्॥ २७॥

इन्द्रोपेन्द्रादिभिः देवैस्साह देवयजने यज्ञभागं न लभतामित्यन्वयः॥ १८॥

### [3]मैत्रेय उवाच

**निषिध्यमानस्स सदस्यमुख्यैः दक्षो गिरित्राय[4] विसृज्य शापम्।**
**तस्माद्विनिष्क्रम्य विवृद्धमन्युः जगाम कौरव्य निजं निकेतनम्॥ १९॥**

---

1. A omits यज्ञीयभागं 2. A व्यवहरण' 3. A, G, J, M omit मैत्रेय उवाच 4. V, W गिरीशाय

विज्ञाय शापं गिरिशानुगाग्रणीः  नन्दीश्वरो रोषकषायदूषितः[1]।
दक्षाय शापं विससर्ज दारुणं ये चान्वमोदंस्तदवाच्यतां द्विजाः ॥ २० ॥

नन्दी उवाच[2]

य एतन्मर्त्यमुद्दिश्य भगवत्यप्रतिद्रुहि।
द्रुह्यत्यज्ञः पृथग्दृष्टिस्तत्त्वतो विमुखो भवेत् ॥ २१ ॥

गृहेषु कूटधर्मेषु सक्तो ग्राम्यसुखेच्छया।
कर्मतन्त्रं वितनुतां[3] वेदवादविपन्नधीः ॥ २२ ॥

बुद्ध्या पराभिध्यायिन्या विस्मृतात्मगतिः पशुः।
स्त्रीकामः सोऽस्त्वतितरां[4] दक्षो बस्तमुखोऽचिरात् ॥ २३ ॥

विद्याबुद्धिरविद्यायां कर्ममय्यामसौ[5] जडः।
संसरन्त्विह ये चेममनु[6] शर्वावमानिनम् ॥ २४ ॥

गिरश्श्रुतायाः[7] पुष्पिण्या मधुगन्धेन भूरिणा।
मथ्ना चोन्मथितात्मानः सम्मुह्यन्तु हरद्विषः ॥ २५ ॥

सर्वभक्षा द्विजा वृत्त्यै धृतविद्यातपोव्रताः।
वित्तदेहेन्द्रियारामा याचका विचरन्त्विह ॥ २६ ॥

**श्रीध० निषिध्यमान** इति। सः दक्षः तस्मात् स्थानात् विनिष्क्रम्य जगाम। हे कौरव्य! विदुर! ॥ १९ ॥

**विज्ञायेति**। गिरिशस्य अनुगानां अग्रणीः मुख्यः। रोष एव कषायः तेन दूषितः आरक्तनेत्र इत्यर्थः। तस्य गिरिशस्यावाच्यतां वचनानर्हतां निन्द्यतामित्यर्थः। तेभ्योऽपि शापं विससर्ज ॥ २० ॥

---

1. V, W रूषितः  2. A, G, J omit नन्दी उवाच  3. A, G, J °ते; M, V °तात्  4. M °स्तु नितरां  5. M, W °मसावजः  6. A, G, J, M चामुमनु
7. M गिरेस्सुतायाः  8. A, J omit विदुर

दक्षं शपति - **य** इति। सार्धैः त्रिभिः। एतन्मर्त्यं दक्षशरीरमुद्दिश्य श्रेष्ठं मत्वा।

अप्रतिद्रुहि प्रतिद्रोहमकुर्वति। पृथग्दृष्टिर्भेददर्शी। तत्त्वतः परमार्थात्॥ २१॥

अज्ञत्वमेवाऽऽह - **गृहेष्विति**। कर्मतन्त्रं कर्मपरिकरम्। वेदेषु ये वादाः अर्थवादाः "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" (आप. श्रौ.सू.8-1-1) इत्यादयः तैर्विपन्ना विनष्टा धीर्यस्य॥ २२॥

**बुद्ध्येति**। परो देहादिः तमेवाऽऽत्मत्वेन अभितो ध्यातुं शीलं यस्यास्तया बुद्ध्या विस्मृता आत्मनः गतिः तत्त्वं येन अत
[1]एव पशुतुल्यः। अतितरां स्त्रीकामः अस्त्विति द्वितीयश्शापः। बस्तस्य [2]छागस्य मुख[3]मेव मुखं यस्येति तृतीयश्शापः॥ २३॥

**विद्येति**। अयञ्च शापः अस्य अनुरूप एव इत्याह - विद्याबुद्धिः इयमेव तत्त्वविद्येति बुद्धिर्यस्य अतोऽसौ जड एव। द्विजान् शपति संसरन्त्विति सार्धद्वाभ्याम्। [4]शर्वमवमन्यत इति शर्वावमानी तममुं दक्षं ये [5]च अनुवर्तन्ते [6]ते संसरन्तु जन्ममरणाद्यनु भवन्त्विति एकः शापः॥ २४॥

**गिर** इति। श्रुतायाः वेदरूपायाः पुष्पिण्याः, पुष्पाणीवार्थवादाः मनःक्षोभकत्वात् [7]सन्ति यस्याः अर्थवादबहुलाया इत्यर्थः। मधुगन्धतुल्येन प्ररोचनेन मध्ना मनः क्षोभकेण उन्मथितः आत्मा मनो येषां ते सम्मुह्यन्तु कर्मस्वासक्ताः भवन्त्विति द्वितीयश्शापः॥२५॥

**सर्वभक्षा** इति। सर्वभक्षाः भक्ष्याभक्ष्यविचारशून्याः वृत्त्यै देहादिपोषणाय [8-]न तु मोक्षाय[-8] धृतानि विद्यातपोव्रतानि यैः। वित्तादिष्वेवाऽऽरामः रतिर्येषां ते याचकास्सन्तः विचरन्त्विति च शापचतुष्टयम्॥ २६॥

**वीर.** हे कौरव्य! विदुर! सः दक्षः सदस्यमुख्यैः सभ्यश्रेष्ठैः निषिध्यमानः निवार्यमाणोऽपि विवृद्धः मन्युः क्रोधः यस्य सः, गिरित्राय रुद्राय शापं यज्ञभागानर्हतारूपं विसृज्य तस्मात् सत्रदेशात् बहिः [9]विनिर्गत्य स्वीयं निकेतनं गृहं प्रति जगाम॥ १९॥

गिरिशानुगानां रुद्रपार्षदानां अग्रणीर्मुख्यः नन्दीश्वरः दक्षविसृष्टं शापं ज्ञात्वा रोष एव कषायः तेन रूषितः आरक्तनेत्र इत्यर्थः। [10-]दक्षाय दारुणं शापं[-10] विससर्ज। तथा तस्य रुद्रस्य अवाच्यतां वचनानर्हतां विनिन्द्यतां ये च सदस्याः द्विजाः अन्वमोदन् अभ्यनन्दन् तेभ्यश्च शापं विससर्जेत्यर्थः॥ २०॥

तत्र दक्षं शपति सार्धैस्त्रिभिः। यो दक्षः अज्ञः देहादिविलक्षणाऽऽत्मज्ञानरहितः अत एव पृथग्दृष्टिः अब्रह्मात्मक स्वतन्त्रवस्तुदर्शी

---

1. A, J omit एव 2. J, V omit छागस्य 3. V 'मिव 4. A, J तथा 5. V adds अनुमन्यन्ते 6. J, V omit ते 7. J, V omit सन्ति यस्याः 8- -8. J, V omit 9. A निर्गत्य 10- -10. W omits

अप्रतिद्रुहि प्रतिद्रोहमकुर्वति भगवति भगवदंशावतारस्पे भवे मर्त्यमुद्दिश्य मरणादि धर्मभाजमुद्दिश्य केवलनिकृष्टं ज्ञात्वेत्यर्थः। द्रुह्यति अपकरोति। एतत् एतस्मात्कारणात् एतमिति पाठे एतं भवं मर्त्यत्वेन ज्ञात्वेत्यर्थः। स दक्षः तत्त्वतः प्रकृतिपुरुषेश्वरयाथार्थ्यात्[1] विमुखः पराङ्मुखः भवेत् तत्त्वत्रयज्ञानरहितः भवेदित्यर्थः। अयं प्रथमः शापः॥ २१॥

एवं तत्त्ववैमुख्यरूपं शापं विसृज्य तत्कार्यरूपमतात्त्विकलोककर्माभिरुचिरूपं शापं विसृजति - **गृहेष्विति**। कूटधर्मेषु अविचाल्यानि कर्माणि येषु, प्राकृतगुणसङ्गात्[2] दुर्निवार[3]कर्मसु इति यावत् गृहेषु ग्राम्यसुखेच्छया सांसारिकवैषयिकसुखेच्छया सक्तः अत एव वेदवादैः अल्पास्थिरफलसाधनानि कर्माणि अनन्तस्थिरफलसाधनत्वेन प्ररोचयद्भिः "**अपाम सोमममृता अभूम**" (अथ.शिखा उ. 3-2) "**अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति**" (आप.श्रौ.सू. 8-1-1) इत्यादिभिरर्थवादैः विपन्ना विनष्टा धीः बुद्धि[4]र्यस्य सः, कर्मतन्त्रं कर्मकलापं वितनुतां अल्पास्थिरफलसाधनकर्माणि कुर्यादित्यर्थः। अयं द्वितीयश्शापः॥ २२॥

परो देहादिः तमेवात्मत्वेनाभिध्यातुं शीलमस्यास्तया बुद्ध्या विस्मृता आत्मगतिः जीवात्मपरमात्मयाथार्थ्यावगति[5]र्येन अत एव पशुः पशुतुल्यः अत एव अतितरां नितरां स्त्रीकामः सः दक्षः अचिरात् आशु बस्तमुखः बस्तस्य मेषस्य मुखमिव मुखं यस्य स अस्तु भवेत्॥ २३॥

तथा कर्ममय्यां कर्मात्मिकायां अविद्यायां इयमेव विद्येति तत्त्वविद्येति बुद्धिर्यस्य अत एवासौ दक्षः अजः अजतुल्यः पशुप्रायः अस्तु स्यादिति तृतीयश्शापः। अथ रुद्रावमानिनो दक्षानुकूलान् द्विजान् शपति संसरन्त्विति सार्धद्वयेन। शर्वं रुद्रं अवमन्यत इति शर्वावमानी तं, इमं[6] दक्षमनुसृज्य ये च दक्षकृतशापाभिनन्दिनः इत्यर्थः। ते इहलोके संसरन्तु जन्म[7]जरामरणादिभाजो भवन्तु। अयं प्रथमश्शापः॥ २४॥

ये हरद्विषः ते पुष्पिण्याः पुष्पमात्रफलायाः आपातरमणीयायाः इत्यर्थः। यद्वा पुष्पवत् मनः क्षोभकत्वात् अर्थवादाः **पुष्पशब्देन** विवक्षिताः पुष्पिण्याः तद्बहुलायाः इत्यर्थः। अथवा पुष्पगन्धवत् क्षणमात्रोपभोग्यस्वर्गादिसुखप्रकाशिकायाः श्रुतायाः वेदपूर्वभागरूपायाः गिरः[8] इत्यर्थः। "**यामिमां पुष्पितां वाचम्**"- (भ. गी. 2-42) इत्यादिवत् मध्ना मनः क्षोभकेण भूरिणा मधुगन्धेन मधुगन्धतुल्येन स्वर्गादिसुखप्रकाशकेन उन्मथितः क्षोभितः आत्मा मनः येषां ते हरद्विषः सम्मुह्यन्तु मोहं प्राप्नुवन्तु। नित्यानित्य धर्माधर्मादिषु सर्वत्र विपरीतज्ञाना भवन्त्विति द्वितीयश्शापः॥ २७॥

---

1. A त्म्यात् 2. A संसर्गात् 3. A वार्य 4. W omit बुद्धिः 5. A 'त्मया' 6. A अमुं 7. A omits जरा 8. A omits गिरः

सर्वभक्षाः सर्वं अविहिताप्रतिषिद्धनिषिद्धं भक्षं भक्ष्यं येषां ते हरद्विषः द्विजा वृत्त्यै केवलशरीरापत्यकलत्रादिपोषणायैव धृतानि विद्यातपोव्रतानि यैस्ते वित्तदेहादिष्वेवऽऽरामः रतिः येषां ते याचकास्सन्तः विचरन्त्विति तृतीयश्शापः ॥ २६ ॥

**विज.** ततः किमकारि दक्षेण ? इति तत्राऽऽह - **निषिध्यमान** इति ॥ १९ ॥

एवं दक्षेण शापे शिवाय दीयमाने सति कोऽपि शिवभक्तः तमसहमानः अभूत्किम् ? तत्राऽऽह - **विज्ञायेति** । रोषनाम्ना कषायेण वह्निना दूषितः तस्य शिवस्य अवाच्यतां दोषलक्षणाम् ॥ २० ॥

कोयं शापः दत्तः इति तत्राऽऽह - **य एतदिति** । एतत् मर्त्यशरीरं अद्य श्वो वा नश्वरमुद्दिश्य अप्रतिद्रुहि दोग्धारं प्रति अद्रोहकर्तरि भगवति भक्त्यादिसौभाग्यवति द्रुह्यति वचनादिनेति शेषः । तत्त्वतः यथार्थज्ञानाद्विमुखः बहिर्मुखः भूयादित्यन्वयः ॥ २१ ॥

न केवलं बहिष्कृततत्त्वज्ञानः किन्तु श्रीनारायणाविषयकर्मव्यापारेषु मग्नश्च स्यादित्याह - **गृहेष्विति** । वेदवादेन स्वर्गादिषु पुष्पवादिवेदवाक्येन विपन्ना नष्टा[1] धीः यस्य स तथा । अत्र तत्त्वज्ञानविषयः शापः तात्कालिक एव न तु चिरकालीनः विष्णुवाक्यस्यैव चिरकालीनत्वात् । तदुक्तं "ये ज्ञानविषयाश्शापा मुक्तिगाश्चाधिकारिणाम् । कादाचित्कास्ते भवन्ति नैव ते सार्वकालिकाः" (वाराहे) "तेषां ज्ञानस्य मुक्तेश्च तारतम्यस्य चैव हि । भगवन्नियतत्त्वात्तु शापादिर्नात्र कारणम्" (वाराहे) इति ॥ २२ ॥

इतोऽपि तात्कालिक एव शापः इति भावेन दक्षस्य शापविशेषं मुञ्चति - **बुद्ध्येति** । पराभिध्यायिन्या निरन्तरशब्दादिविषयचिन्ताकातरया बुद्ध्या विस्मृतात्मगतिः विस्मृतपरमात्मगतिः विस्मृतपरमात्मज्ञानः पशुः विवेकशून्यः अतितरां स्त्रीकामः सः दक्षः अचिरात् बस्तमुखोऽस्तु इत्यन्वयः ॥ २३ ॥

शापान्तरञ्चाह - **विद्याबुद्धिरिति** । अजो दक्षः अविद्यायां विद्याबुद्धिः अस्त्विति शेषः । शङ्करद्वेषिणाञ्च शापविशेषमाह - संसरन्त्विति ॥ २४ ॥

संसारे कारणमाह - **गिरेरिति** । पुष्पिण्याः स्वर्गादिपुष्पप्रतिपादिकायाः गर्भीकृतमुक्तिफलायाः कालकूटनिगरणात् दैत्याख्यपापनिगरणाच्च, गिरिः मुख्यप्राणः तेन शिष्यप्रशिष्यादिषु प्रणीतत्वेन व्याख्यातत्वेन च तस्य सुतायाः वेदवाचः भूरिणा बहुलेन मधुगन्धेन विषयसुखलक्षणमकरन्दपरिमलेन मध्ना कामेन उन्मथितः विलोडितः आत्मा मनः येषां ते, तथोक्तास्ते हरद्विषः सम्मुह्यन्तु । मोक्षफलप्रतिपादकवेदतात्पर्यापरिज्ञानेन आत्मनः स्वर्गादिरेव परमश्रेयोस्त्विति विपरीतज्ञानं गच्छन्त्वित्यन्वयः । 'मुह

---

1. A नष्टप्राया

वैचित्त्ये' इति धातोः वैचित्त्यं विपरीतज्ञानं ''गिरिः प्राणस्समुद्दिष्टः तत्सुता वेदवाक्स्मृता। पुष्पं स्वर्गादयः प्रोक्ताः फलं मोक्ष उदाहृतः''(वामने) इति वचनात् उक्त एवार्थो नान्यः इति। ''अनङ्गो मन्मथः मन्थाः कामोऽङ्गज उदाहृतः'' (शब्दनिर्णये) इत्यभिधानात्॥ २५॥

हरद्विषां शापान्तरमपि विसृजति **सर्वभक्षा** इति। पलाण्ड्वादिसर्वभक्षा वृत्त्यै जीवनाय। न धर्मायेति शेषः॥ २६॥

**तस्यैवं[1] वदतश्शापं श्रुत्वा ब्रह्म[2]कुलाय वै।**
**भृगुः प्रत्यसृजच्छापं ब्रह्मदण्डं दुरत्ययम्॥ २७॥**

**[3-]भृगुरुवाच[-3]**

**भवव्रतधरा ये च यें[4] च तान्समनुव्रताः।**
**पा[5]षण्डिनस्ते भ[6]वेयुः सच्छास्त्रपरिपन्थिनः॥ २८॥**

**नष्टशौचा मूढधियः जटाभस्मास्थिधारिणः।**
**विशन्तु शिवदीक्षायां यत्र दैवं सुरासवम्॥ २९॥**

**ब्रह्म च ब्राह्मणांश्चैव य[7]द्यूयं परिनिन्दथ।**
**सेतुं[8] विधरणं पुंसामतः पाष[9]ण्डमाश्रिताः॥ ३०॥**

**एष एव हि लोकानां शिवः पन्थास्सनातनः।**
**यं पूर्वे चानुसन्तस्थुः यत्प्रमाणं जनार्दनः॥ ३१॥**

**तद्ब्रह्म परमं शुद्धं सतां वर्त्म सनातनम्।**
**विगर्ह्य यात पाषण्डं[10][11] दैवं वो यत्र भूतराट्[12]॥ ३२॥**

**मैत्रेय उवाच**

**तस्यैवं वदतश्शापं भृगोस्सभगवान्भवः।**
**निश्चक्राम ततः किञ्चिद्विमना इव सानुगः॥ ३३॥**

---

1. A, G, J द॰ 2. A, G, J, M द्विज 3. A, G, J omit 4. M य एतान् 5. A, G, J, M ॰ख॰ 6. A, G, J, M भवन्तु 7. M ये यूयं 8. A, G, J, M विधारणं; 9. A, G, J, M ॰ख॰ 10. G, M ॰ख॰ 11. V, W ॰ण्डा 12. M भूतराट् सदाः

**तेऽपि विश्वसृजस्सत्रं सहस्रपरिवत्[1]सरम्।**
**संविधाय [2]महेष्वास! यत्रेज्य ऋषभो हरिः ॥ ३४॥**

**आप्लुत्यावभृथं यत्र गङ्गा यमुनयान्विता।**
**विरजेनाऽऽत्मना सर्वे स्वं स्वं धाम ययुस्ततः ॥ ३५॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
चतुर्थस्कन्धे द्वितीयोऽध्यायः ॥ २॥

**श्रीध. तस्येति**। प्रत्यसृजत् प्रत्यदात्। शापरूपं ब्रह्मदण्डम् ॥ २७॥

**भवेति**। सच्छास्त्रस्य परिपन्थिनः प्रतिकूलाः ॥ २८॥

**नष्टशौचा** इति। सुरागौडीपैष्टीमाध्वी च आसवः तालादिसम्भवं मद्यं द्वन्द्वैक्यात् [3]क्लीबत्वं तद्यत्र दैवं पूज्यं, देवतावदादरणीयमिति वा॥ २९॥

**ब्रह्मेति**। ब्रह्म वेदं, कथम्भूतम्? सेतुं मर्यादारूपं तदेवाऽऽह - पुंसां वर्णाश्रमाचारवतां विधारणं धारकम्॥ ३०॥

सेतुत्वं प्रपञ्चयति - **एष** इति द्वाभ्याम्। एष [4]वेदलक्षण एव शिवः पन्थाः, यं पूर्वे ऋषयः अनुसन्तस्थुः आश्रितवन्तः। यत् यस्मिन् जनार्दनः प्रमाणं मूलम्॥ ३१॥

तदिति। भूतराट् भूतानां तामसानां पतिः॥ ३२॥

तस्येति। [5-]एवं तस्य वदतस्स[-5]तः, अन्योन्यशापेन उभयोर्नाशात् विमना इवेति, तथापि भगवदनुगृहीतानां नाशो न स्यादिति भावः॥ ३३॥

ते इति। ऋषभः सर्वश्रेष्ठः हरिः यत्र इज्यः पूज्यः तत् [6]सहस्रपरिवत्सरं सत्रं सम्यग्विधाय हे महेष्वास! विदुर!॥ ३४॥

---

1. A, G, J, M 'रान् 2. M महोत्साहात् 3. A, J षण्ढत्वं 4. A omits वेदलक्षण एव 5. J, V omit 6. A, J omit सहस्रपरिवत्सरं

आप्लुप्येति। यत्र प्रयोगे अन्विता तत्र अवभृथस्नानं कृत्वा ततः स्थानात्[1] स्वं स्वं स्थानं[1] ययुः ॥ ३७॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीधरस्वामिविरचितायां भावार्थदीपिकायां

व्याख्यायां द्वितीयोऽध्यायः ॥ २॥

**वीर.** एवं शपन्तं नन्दीश्वरमालोक्य[2] भृगुः प्रत्यशपदित्याह मैत्रेयः। तस्य नन्दीश्वरस्य ब्रह्मकुलाय[3] एवमुक्तरीत्या शापं ब्रुवतः सतः तं शापं श्रुत्वा भृगुर्दुरत्ययं दुरतिक्रमं ब्रह्मदण्डं ब्रह्मदण्डकल्पं शापं प्रत्यसृजत् प्रत्यदात् ॥ २७॥

तमेवाऽऽह - **भवेति**। भवस्य रुद्रस्य व्रतं पिशाचचर्यादिकं तद्ये धरन्ति ये च भवव्रतधराननुव्रताः अनुसरन्तः ते सर्वे पाषण्डिनः वेदविरुद्धकर्मनिष्ठाः सच्छास्त्राणां भगवच्छास्त्राणां पाञ्चरात्रादीनां परिपन्थिनः प्रतिकूलाः भवेयुः ॥ २८॥

पाषण्डित्वमेव विशदयति - **नष्टशौचा** इति। नष्टशौचाः दुराचाराः मूढधियः परावरतत्त्वज्ञानरहिताः,जटादिधारिणः शिवदीक्षायां "मुद्रिकाषट्कतत्त्वज्ञः परमुद्राविशारदः। भगासनस्थस्तन्मानं[4] ध्यात्वा निर्वाणमृच्छति"

इत्याद्युक्तविधशिवदीक्षायां प्रविशन्तु। यत्र दीक्षायां सुरा पैष्टी आसवं तालादिसम्भवं मद्यं द्वन्द्वैक्यात् क्लीबत्वं, तद्दैवं देवमिव पूज्यं सुराकुम्भस्थापनतत्स्थदेवपूजादेः शैवागमादिष्वभिधानादेवमुक्तम् ॥ २९॥

भवतामयं शापः अनुरूपः एवेति वदन् तमेव द्रढयति[5] - **ब्रह्म चेति**। यतो यूयं पाषण्डं[6] पाषण्डधर्ममाश्रिताः यत् यस्माच्च पुंसां वर्णाश्रमवतां सेतुं स्वर्गापवर्गसाधनयज्ञोपासनादिप्रकाशनेन पुरुषार्थप्रापकं मर्यादारूपं वा विधरणं मातापितृसहस्रवद्धितोपदेशादिना विशेषधारकं प्रवर्तकमिति यावत् ॥ एवम्भूतं ब्रह्म वेदं ब्राह्मणांश्च परिनिन्दथ परिनिन्दितवन्तः ततो विगर्ह्य पाषण्डं यात इत्युत्तरत्रान्वयः ॥३०॥

**वेदस्य सेतुत्वविधरणत्वे प्रपञ्चयति - एष इति। एष एव वेद एव लोकानां वर्णाश्रमवतां शिवः सुखकरः पन्थाः स्वप्रकाश्ययज्ञोपासनादिद्वारा स्वर्गापवर्गोपायः सनातनः अनादिनिधनः "अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा" (भार. शान्ति मोक्ष. २३१-५६) इत्युक्तत्वात् यं वेदं तदुक्तयज्ञोपासनादिरूपधर्ममित्यर्थः। पूर्वे च सात्त्विका ऋषयः चकारादपरे च अनुसन्तस्थुः अनुष्ठितवन्तः। अनेन शिष्टपरिग्रहकथनेन शैवागमानां तद्वैपरीत्यमावेदितम्। जनार्दनो भगवान् यदेव वेदाख्यं ब्रह्म प्रमाणं यस्य सः, आर्षत्वात् क्लीबत्वं 'वेदाः प्रमाणम्' इतिवद्विधेय प्रामाण्यापेक्षया वा[7]। अनेन ब्रह्मणोऽपि शास्त्रयोनित्वकथनेन सर्वापि श्रेयस्सम्पत्तिः**

1--1. A. J omit 2. A °लक्ष्य 3. W °यैव शापं 4. W °मात्मानं 5. A प्रथयति 6. A omits पाषण्ड 7. A omits वा

वेदाधीना इत्युक्तम्। यद्वा यस्मिन् वेदे जनार्दनः प्रमाणं मूलं कारणं इति यावत् "तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः" (सुबा. उ. 2-1) इति श्रुतेः। अनेनापौरुषेयत्वकथतेन पौरुषेयत्वप्रयुक्तभ्रमविप्रलम्भादिदोषराहित्यसिद्धिः। शैवागमानां पौरुषेयत्वं तत्प्रयुक्तदोषवत्वं च सूचितम्॥ ३१॥

तत् तस्मात् परमं निरतिशयश्रेयस्साधनप्रकाशकत्वेन सर्वोत्कृष्टं, शुद्धं अपौरुषेयं सनातनं सतां वर्त्म, ब्रह्म वेदं, विगर्ह्य विगर्हणाद्धेतोः इत्यर्थः। पाषण्डं पाषण्डधर्मं यात प्राप्नुत पाषण्डधर्म एव निष्ठावन्तो भवतेत्यर्थः। यत्र यस्मिन् पाषण्डे वः युष्माकं भूतानां तामसानां पतिः रुद्रो दैवम्॥ ३२॥

अथ शापप्रतिशापौ निगमयन् अनन्तरकथां प्रस्तौति मैत्रेयः - हे साधो ! तस्य भृगोः एवं वदतः सतः भगवान् भवो रुद्रः सानुगः स भृत्यः किञ्चिद्विमना इव इवशब्देन वस्तुतः समदर्शित्वात् वैमनस्याभावः सूच्यते ततः यज्ञभूमेः निश्चक्राम निष्क्रान्तवान्॥ ३३॥

हे महेष्वास ! विदुर ! यत्र यस्मिन् सत्रे ऋषभः पुरुषोत्तमः हरिः इज्यः आराधनीयः तद्विश्वसृजः सत्रं सहस्रपरिवत्सरपर्यन्तं अनुष्ठेयं संविधाय अनुष्ठाय तेऽपि भृग्वादयः॥ ३५॥

यत्र प्रदेशे गङ्गा यमुनया सह अन्विता युक्ता तत्रावभृथं स्नानम् आप्लुत्य कृत्वा ततः स्वं स्वं धाम स्थानं ययुः प्रापुः॥ ३७॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां द्वितीयोऽध्यायः॥ २॥

**विज.** ब्राह्मणकुलाय दीयमानं शापं श्रुत्वापि भीत्या कश्चित्प्रतिशापदानसमर्थो नाभूदिति तत्राऽऽह - तस्यैवमिति। ब्राह्मणानामिदमेवाऽऽयुधं नान्यदिति द्योतनाय ब्रह्मदण्डमित्युक्तम्॥ २७, २८॥

शिवदीक्षायां चाण्डालादिजन्मनां विप्रत्वकारणलक्षणायां सुरया असूनां तर्पणं यस्मिन् तथोक्तम्। यद्वा सुरा नाम नारिकेलादिपुष्पसम्भवं मधूकपुष्पादिसम्भवं आसवं वा॥ २९॥

तीव्रशापप्रदाने निमित्तं वक्ति ब्रह्मेति। विशेषेण धारयति आश्रितानिति विधारणम्॥ ३०॥

सेतुं विशिनष्टि - एष इति। यस्य प्रमाणं सम्यक् वक्ता। "प्रमाणं बोधनेऽत्यन्तमर्यादाशास्त्रहेतुषु। सम्यग्वक्तरि वा यः स्यात्प्रमाणं मरणे गतौ" इति यादवः॥ ३१॥

ब्रह्म वेदं भूतराट् भैरवः ॥ ३२ ॥

स्वावमानं श्रुत्वापि महतां महत्त्वविरोधिविकारो न युक्त इति भावेन तस्य हरस्य ततो निर्गमनञ्च वक्ति - तस्यैवमिति ॥ ३३ ॥

एवं विवादेऽपि सत्रस्यान्तरायो ना भूदित्याह - तेऽपीति । अन्तरायानुत्पादे निमित्तमाह - यत्रेति ॥ ३४ ॥

यत्र गङ्गा भागीरथी यमुनया अन्विता सङ्गता तत्र प्रयागे इति शेषः । अस्यैव कर्मणः स्वाभीष्टफलप्राप्तिहेतुत्वात् इदं समाप्य न कर्मान्तरं प्रारब्धं तैः, किन्तु स्वगृहगमनमेवानुष्ठितमित्याह - विरजेनेति । कर्मणा निर्मलेनान्तःकरणेन, युक्ता इति शेषः ॥ ३५ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां

टीकायां द्वितीयोऽध्यायः ॥ २ ॥



# तृतीयोऽध्यायः

## मैत्रेय उवाच

सदा विद्विषतोरेवं[1] कालो वै ध्रियमाणयोः।
जामातुः श्वशुरस्यापि सुमहानतिचक्रमे॥ १॥

यदाभिषिक्तो दक्षस्तु ब्रह्मणा परमेष्ठिना।
प्रजापतीनां सर्वेषामाधिपत्ये स्मयोऽभवत्॥ २॥

इष्ट्वा स वाजपेयेन ब्रह्मिष्ठा[2]नभिभूय स[3]ः।
बृहस्पतिसवं नाम समारेभे क्रतूत्तमम्॥ ३॥

तस्मिन् ब्रह्मर्षयस्सर्वे देवर्षिपितृदेवताः।
आसन् कृतस्वस्त्ययनाः तत्पत्न्यश्च सभर्तृकाः॥ ४॥

तदुपश्रुत्य नभसि खेचराणां प्रजल्पताम्।
[4]सती दाक्षायणीदेवी पितु[5]र्यज्ञमहोत्सवम्॥ ५॥

[6]व्रजन्तीस्सर्वतो दिग्भ्यः उपदेववरस्त्रियः।
विमानयानास्सप्रेष्ठाः निष्ककण्ठीस्सुवाससः॥ ६॥

दृष्ट्वा स्वनिलयाभ्याशे लोलाक्षीर्मृष्टकुण्डलाः।
पतिं भूतपतिं देवमौत्सुक्यादभ्यभाषत॥ ७॥

### श्रीश्रीधरस्वामिविरचिता भावार्थदीपिका

तृतीये तु सती तातयज्ञोत्सवदिदृक्षया। गमिष्यन्ती महेशेन वारिता नीतिहेतुभिः॥

---

1. M विवदमानयोः 2. M° ष्ठो भूय एव 3. A, G, J च 4 Af दाक्षायणी महादेवी पितृयज्ञमहोत्सवे 5. W पितृयज्ञ 6. M व्रजतीः

**सदेति**। ध्रियमाणयोः [1-]जामातुः श्वशुरस्यापि[-1] अवतिष्ठमानयोः धृङ् अवस्थान इत्यस्मात् [2]निष्पन्नम्॥ १॥

यद्यपि रुद्रविहीनो यज्ञो नास्त्येव तथापि दक्षस्य रुद्रपरित्यागः द्वेषात् गर्वाच्च, तत्र द्वेषे हेतुरुक्तः। गर्वे हेतुमाह - **यदेति**। यदा तु प्रजापतीनां आधिपत्ये अभिषिक्तः तदा तस्य स्मयो गर्वः अभवत्॥ २॥

**इष्ट्वेति**। गर्वादिव [3]सर्वान् ब्रह्मिष्ठान् सेश्वरानभिभूय तिरस्कृत्य "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इति श्रुतेः वाजपेयेनेष्ट्वा [4]बृहस्पतिसवं समारेभे॥ ३॥

**तस्मिन्** इति। कृतस्वस्त्ययनाः कृतमङ्गला. सभर्तृका इति दक्षिणादिभिः प्रथमं अर्हितानामपि पत्न्यर्हणे पुनः अर्हणमुक्तम्॥४॥

**तदिति**। तत् तदा खेचराणां प्रजल्पतां सतां पितृयज्ञमहोत्सवं श्रुत्वा, तत्र व्रजन्तीरूपदेवानां गन्धर्वादीनां वरस्त्रियश्च [5]स्वस्य निलयस्य अभ्याशे समीपे दृष्ट्वा औत्सुक्यात् पतिमभ्यभाषत इति त्रयाणामन्वयः। कथम्भूताः स्त्रियो दृष्ट्वा? विमानानि यानानि यासां ता., प्रेष्ठैस्सहिताः, निष्काणि पदकानि कण्ठेषु यासां, शोभनानि वासांसि यासाम्। लोलानि चञ्चलानि अक्षीणि यासां, मृष्टानि उज्वलानि कुण्डलानि यासां ताः॥ ५-७॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

"दक्षो दुहितृवत्सलः, विद्वेषमकरोत् कस्मात्" (भाग. 4-2-1) इति पृष्टं विद्वेषनिमित्तं [6]कथितम्। अथ "यतः प्राणान् तत्याज दुस्त्यजान् सती" इति पृष्टं प्राणत्यागनिमित्तं तत्प्रकारश्चोच्यते। तत्र प्राणत्यागनिमित्तं अरौद्रकयागारम्भः। स च गर्वात्, गर्वश्च प्राजापत्यात् अधिकारादिति वक्ष्यन् तावत् दक्षभवयोः विद्विषतोः सतोः महान् कालोऽतीतः इत्याह - **सदेति**। एवम् उक्तरीत्या सदा विद्विषतोः मिथो द्वेषं कुर्वतोः जामातुः भवस्य [7]श्वशुरस्य दक्षस्य च ध्रियमाणयोः अवतिष्ठमानयोः सतोः सुमहान् भूयान् कालः अतिचक्रमे व्यतीतः॥ १॥

गर्वनिमित्तमाह - **यदेति**। परमेष्ठिना चतुर्मुखेन ब्रह्मणा यदा सर्वेषां प्रजापतीनां आधिपत्ये दक्षोऽभिषिक्तः तदा तस्य स्मयः गर्वः अभवत् [8]उत्पद्यते स्म॥ २॥

"स्मयाच्चारौद्रकं यागमारेभे" इत्याह - **इष्ट्वेति**। स दक्षः ब्रह्मिष्ठान् ब्रह्मात्मकान् सर्वेषां ब्रह्मात्मकत्वेऽपि रुद्रादेर्ब्रह्मणः

---

1--1. A, J omit 2. A, J omit निष्पन्नम् 3. A, J omit सर्वान् 4. A, J omit बृहस्पतिसवं 5. V स्वनिल॰ 6. A उक्तम्
7 A omits श्वशुरस्य 8. W उपपद्यते

आवेशावतारत्वात् अतिशयेन ब्रह्मत्वमिष्ठन् प्रत्ययेन विवक्षितं, रुद्रानुचरतदाराधकाभिप्रायेण बहुवचनम्। अभिभूय पराभाव्य तेभ्यो यज्ञभागं न दास्यामीत्येवं सङ्कल्प्येत्यर्थः। वाजपेयेनेष्ट्वा वाजपेयाख्यं यागं कृत्वा बृहस्पतिसवं नाम बृहस्पतिसवाऽऽख्यं क्रतूत्तममारेभे आरब्धवान् "वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत" इति श्रुतेः॥ ३॥

तस्मिन् बृहस्पतिसवे समारब्धे सर्वे ब्रह्मर्षयः[1] तथा देवर्षयः पितरो देवाश्च[2] तथा तेषां पत्न्यश्च कृतस्वस्त्ययनाः कृतमङ्गलाः सर्वालङ्कारभूषिताः सभर्तृकाश्चासन् तत्राऽऽगत्य उपविविशुरित्यर्थः। सभर्तृका इत्यनेन भर्तृसान्निध्यात् आनन्दातिशयः सूच्यते॥ ४॥

तत् तथा नभसि खेचराणां प्रजल्पतां पितृयज्ञमहोत्सवं श्रुत्वा दाक्षायणी सती तत्र सर्वाभ्यः दिग्भ्यः व्रजन्तीः उपदेवानां गन्धर्वाणां वरस्त्रियः वरस्त्रीः। "वाऽम्शसोः" (अष्टा. 6-4-80) इतीयङ्। स्वनिलयाभ्याशे स्वगृहसमीपे दृष्ट्वा, औत्सुक्यात् पतिमभ्यभाषतेति त्रयाणामन्वयः। कथम्भूताः स्त्रियाः दृष्ट्वा ? विमानानि यानानि गमनसाधनानि यासां ताः, सप्रेष्ठाः प्रियैस्सहिताः, निष्काणि पदकानि कण्ठे यासां, शोभनानि वासांसि यासां, लोलानि चञ्चलानि अक्षीणि यासां, मृष्टानि उज्ज्वलानि कुण्डलानि यासां ताः॥ ५-७॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अत्र शङ्करदक्षयोः विवादकथनव्याजेन शङ्करस्य वासुदेवचरणारविन्दस्मरणकथनेन हरेरमितमाहात्म्यमेव प्रकाश्यतेऽस्मिन्नध्याये। तत्राऽऽदौ अस्य वैरस्य दीर्घकालीनत्वं दक्षस्य गर्वाधिक्यञ्च वक्ति - **सदा विद्विषतो**रिति॥ १॥

यदा दक्षः परमेष्ठिना ब्रह्मणा सर्वेषां प्रजापतीनां आधिपत्ये अभिषिक्तः तदा तस्य स्मयः मदविशेषोऽभूदित्यन्वयः॥ २॥

अरुद्रभागयज्ञकरणादस्य स्मयो लक्ष्यते इत्याशयेनाऽऽह - **इष्ट्वेति**। स दक्षः नाम्ना वाजपेयेन यज्ञेन हरिमिष्ट्वा ब्रह्मिष्ठः कर्मप्रतिपादकवेदे निष्णातोऽभूदित्यन्वयः। एतच्च कुतो ज्ञातमत्राऽऽह - **भूय इति**। यज्ञान्तरकरणात् सिद्धमित्यर्थः॥ ३॥

तस्मिन् यज्ञे त्रिलोक्याः सम्मेलनेन दक्षस्य स्मयातिशयो लक्ष्यते इत्याशयेनाऽऽह **तस्मिन्निति**॥ ४॥

ननु किमनेन प्रकृत इति तत्राऽऽह - **तदुपश्रुत्येति**। दाक्षायणी सती देवी। मिथः प्रजल्पतां खेचराणां यत् पितृयज्ञविषयवचनं तदुपश्रुत्य अन्तःपुरान्निर्गत्य स्वनिलयसमीपे उपदेववरस्त्रियो दृष्ट्वा अन्तःपुरं प्रविश्य पतिमभ्यभाषतेत्यन्वयः॥ ५-७॥

---

1. A महर्षयः 2. A omits देवाश्च

## सत्युवाच

प्रजापतेस्ते श्वशुरस्य साम्प्रतं निर्यापितो यज्ञमहोत्सवः किल।
वयञ्च तत्राभिसराम वाम ते यद्यर्थिताऽमी विबुधा व्रजन्ति हि॥ ८॥

तस्मिन् भगिन्यो मम भर्तृभिस्स्वकैः ध्रुवं गमिष्यन्ति सुहृद्दिदृक्षवः।
अहञ्च तस्मिन् भवताभिकामये सहोपनीतं परिबर्हमर्हितुम्[1]॥ ९॥

तत्र स्वसॄर्मे ननु भर्तृसम्मिता[2] मातृष्वसॄः क्लिन्नधियञ्च मातरम्।
द्रक्ष्ये चिरोत्कण्ठमना महर्षिभिरुन्नीयमानञ्च मृडाध्वरध्वजम्॥ १०॥

त्वय्येतदाश्चर्यमजात्ममायया विनिर्मितं भाति गुणत्रयात्मकम्।
तथाप्यहं योषिदतत्त्वविच्च ते दीना दिदृक्षे भव मे भवक्षितिम्॥ ११॥

पश्य प्रयान्तीरभवान्[3]ययोषितोऽ[4]प्यलङ्कृताः कान्तसखा वरूथशः।
यासां व्रजद्भिश्शितिकण्ठ! मण्डितं नभो विमानैः कलहंसपाण्डुभिः॥ १२॥

**श्रीध. प्रजापतेरिति**। निर्यापितः प्रवर्तितः हे वाम! शिव! ते यद्यर्थिता इच्छा तर्हि वयञ्च तत्राभिसराम गच्छामः। न चाद्यापि यागो निवृत्तः यतोऽमी विबुधा व्रजन्ति॥ ८॥

औत्सुक्यं प्रकटयन्ती आह - **तस्मिन्निति** षड्भिः। पितृभ्यामुपनीतं दत्तं परिबर्हमलङ्कारादिद्रव्यं भवता सहार्हितुं स्वीकर्तुं अभिकामये। अर्हितमिति पाठे तत्कृतं परिबर्हमिच्छामीति॥ ९॥

**तत्रेति**। स्वसॄः भगिनीः भर्तृभिः सम्मिताः[5] सदृशीः क्लिन्नधियं स्नेहार्द्रचिन्तां चिरम् उत्कण्ठं उत्सुकं मनो यस्यास्सा अहं द्रक्ष्यामि[6]। हे मृड! उन्नीयमानं[7] प्रवर्त्यमानां अध्वरेषु ध्वजमिव दृश्यं श्रेष्ठं अध्वरं, यद्वा उत्क्षिप्यमाणं[8] यज्ञे[9] केतुं यूपं वा॥ १०॥

अहो किं तत्राश्चर्यं येन तवैतदौत्सुक्यमिति चेदत आह - **त्वयीति**। हे अज! एतद्विश्वमाश्चर्यरूपं त्वय्येव त्वन्मायया रचितं[10]

1. Af °मर्पितुम् 2. W सम्मताः 3. M °श्च 4. M °तस्स्व° 5. A adds सहिता इत्यर्थः 6. V omits द्रक्ष्यामि। 7. V adds ऊर्ध्वं क्रियमाणं 8. V adds इति पाठे 9. V यज्ञ 10. V विरचितं

विभाति अतो यद्यपि तव नाश्चर्यबुद्धिः तथाप्यहं योषित् उत्सुकस्वभावा तव तत्त्वं च न जानामि अतो दीना कृपणा सती हे भव ! मे भवक्षितिं जन्मभूमिं दिदृक्षे द्रष्टुमिच्छामि ॥ ११ ॥

दिदृक्षामेव कैमुत्यन्यायेन[1] व्यनक्ति - **पश्येति** द्वाभ्याम् । हे अभवेति सुहृद्वियोगदुःखं त्वया नास्वादितमिति[2] भावः । अन्या योषितः सम्बन्धरहिता अपि प्रयान्तीः पश्य । कान्तसखाः भर्तृसहिताः, वरूथशः सङ्घशः । कथम्भूताः ? यासां विमानैः नभो मण्डितं ताः । हे शितिकण्ठ ! नीलकण्ठेति परानुग्रहाय त्वया विषमपि[3] भक्षितमिति सूचयति ॥ १२ ॥

**वीर.** हे वाम ! हे शम्भो ! ते तव श्वशुरस्य प्रजापतेः दक्षस्य कर्तरि षष्ठी । यज्ञरूपो महोत्सवः सम्प्रति निर्यापितः प्रवर्तितः । तत्र च विबुधाः व्रजन्ति हीत्यपरोक्ष्यं द्योत्यते । यद्यर्थिता अर्थिनो भावः अर्थिता यदीच्छा[4] वर्तते इत्यर्थः । तर्हि तत्र वयमपि अभिसराम गच्छामः ॥ ८ ॥

स्वाभिप्रायं प्रकटयन्त्याह षड्भिः । तस्मिन् यज्ञे[5] महोत्सवे मम भगिन्यः स्वस्वभर्तृभिः सह सुहृद्दिदृक्षवः भगिनी- मातापित्रादीन् द्रष्टुमिच्छवः आगमिष्यन्ति ध्रुवं निश्चयः, आयान्तु, किं तव, तत्र अहं[6] अहमपि तस्मिन्नुत्सवे भवता साकं उपनीतं अस्मत्पित्रादिसमर्पितं परिबर्हं वस्त्राभरणाद्युपायनं अर्हितुं[7] ग्रहीतुं कामये इच्छामि ॥ ९ ॥

किञ्च हे मृड ! चिरौत्कण्ठ्यमनाः बहुकालमौत्सुक्याविष्टमनाः अहं मे मम, भर्तृभिः समानीताः स्वस्या भगिनीः, भर्तृसम्मता इत्यनेन स्वस्या अपि भर्त्रा अनुग्राह्यत्वं सूच्यते । तथा मातृष्वसृः मातृभगिनीः क्लिन्नधियं मद्दर्शनालाभेन क्लिन्नधियं खिन्नचित्तां, मयि प्रेमार्द्रचिन्तां वा मातरं, महर्षिभिः उन्नीयमानमूर्ध्वं क्रियमाणं अध्वरध्वजं यूपञ्च द्रक्ष्ये ॥ १० ॥

अहो किं तत्राध्वरे आश्चर्यं येन त्वं दिदृक्षसीत्यत्राऽऽह - **त्वयीति** । अजातममायया अजस्य कर्मायत्तजन्मादिरहितस्य आत्मनः परमात्मनः विष्णोर्मायया सङ्कल्पेन विनिर्मितं गुणत्रयात्मकं सत्त्वादिगुणत्रयात्मकप्रकृतिपरिणामात्मकं एतद्विविधविचित्रसन्निवेशं जगत् त्वयि आश्चर्यं भाति, विविधविचित्रसन्निवेशजगद्दर्शनमेव ज्ञानिनि त्वय्याश्चर्यबुद्धिजनकं न तत आश्चर्यकरं किञ्चित् तवास्तीत्यर्थः । ज्ञानिनो हि विचित्रं जगत् दृष्ट्वा आश्चर्यं प्राप्नुवन्तीति भावः । अत्र अजात्मनः तव मायया त्वय्येव विनिर्मितं जगदाश्चर्यं भाति इत्यन्वयोऽसङ्गतः, सद्ब्रह्मात्माकाशशिवेन्द्रादिशब्दानां छागपशुन्यायेन "एको ह वै नारायण आसीन्न ब्रह्मा नेशानः" (महा.उ. 1-1) इति नारायणरूपविशेषे पर्यवसानात् तस्यैव कारणत्वेन जगतः तन्मायया निर्मितत्वात् । युक्तञ्चैतत् "अपहतपाप्मा वा अहमस्मि" इति, "नारायणाद्रुद्रोऽजायत" (ना. रा. उ) इति कार्यत्वकर्मवश्यत्वादियुक्तस्य रुद्रस्य कारणत्वासम्भवात्, अन्यथा पूर्वापरविरोधात् । तथापि तवाश्चर्यकरस्यान्यस्याभावेप्यहं योषित् चाञ्चल्यस्वभावा अतत्त्ववित् परावरतत्त्वमजानती, अनेन विशेषणद्वयेन स्थिरचित्तानां

---

1. V °तिक 2. V नानुभूत 3. V omits अपि 4. W omits इच्छा 5. W यज्ञ 6. A आह 7. A omits अर्हितुं

तत्त्वविदाञ्च भगावद्विभूतित्वेन जगदवलोकनमेवाऽऽश्चर्यजनकमिति सूचितमिति यथोक्त एवार्थः साधीयान्। अतो दीना कृपणा सती हे **भव** ! मे भवक्षितिं जन्मभूमिं दिदृक्षे द्रष्टुमिच्छामि॥ ११॥

दिदृक्षामेव कैमुत्यन्यायेन व्यनक्ति - **पश्येति** द्वाभ्याम्। हे अभव ! अन्या अपि मत्पितृसम्बन्धरहिता अपि योषितः वरूथशः सङ्घशः प्रयान्ति ताः पश्य, कथम्भूताः स्त्रियः ? कान्तः प्रियः स एव सखा यासां ताः। हे शितिकण्ठ ! यासां योषितां व्रजद्भिः कलहंसवत्पाण्डुरैः शुभ्रैः विमानैः नभस्स्थलं मण्डितं भूषितम्॥ १२॥

**विज.** किमभाषतेति तत्राऽऽह - **प्रजापतेरि**ति। निर्यापितः प्रवर्तितः किल किंवदन्ती। हे वाम ! श्रेष्ठ ! यदि तवार्थिता अस्ति तत्र तर्हि गमने हेतुमाह - अमी इति। हि यस्मात्तस्मात्॥८॥

गमने निमित्तान्तरमप्याह - **तस्मिन्निति**। मयि गतायां तस्मात् जनात् पूजाविशेषोऽपि भविष्यतीत्याह - अहञ्चेति। परिबर्हञ्च वरवध्वोः दीयमानम्॥ ९॥

न केवलमुक्तमेव प्रयोजनमर्थान्तरमप्यस्तीत्याह - **तत्रेति**। अध्वरध्वजं यज्ञश्रेष्ठं द्रक्ष्ये इत्यन्वयः। "ध्वजश्शेफासिकेतौ च श्रेष्ठे चैत्योन्नतद्रुमे" इत्यभिधानम्। "अस्त्री मेढ्राङ्कयोर्ध्वजः" (वैज.को. 6-5-43) इति। "अङ्कश्चिह्नेऽन्तिकोरसोः" (वैज. को. 6-1-6) इति "उरस्तु वक्षसि श्रेष्ठे" (वैज. को. 6-3-3) इति यादवः॥ १०॥

एवं बहुविधालापैरप्यविकृतेन्द्रियं पतिं दृष्ट्वा तन्माहात्म्यविज्ञापनपूर्वकं स्वाभीष्टमुद्गलयति - **त्वयीति**। हे अज ! रुद्र ! "अजा विष्णुहरच्छागाः" (अम.को. 3-187) इति यादवः। आत्मनो हरेः मायया इच्छया विनिर्मितं गुणत्रयाऽऽत्मकं रजआदिगुणत्रयोपादानकमाश्चर्यं नानावैचित्र्योपेतं एतद्विश्वं त्वयि भाति। नित्यापरोक्षितान्तस्थजगन्नारायणस्वरूपत्वात् तत्प्रसादेन करतलामलकवदेतद्विश्वं तव ज्ञानकोष्ठे वर्तते, अथापि तव द्रष्टव्यांशाभावेऽपि हे भव ! मङ्गल ! हर ! अहं मे भवक्षितिं जन्मभूमिं दिदृक्षे इत्यन्वयः। अत्र हेतुगर्भविशेषणं योषिदिति। युष शब्दादिसेवायां, शब्दादिविषयसेवाशीलत्वादित्यर्थः। अत एव ते तव अतत्त्ववित् यथास्थितत्वत्स्वरूपाज्ञानित्वात् दीना क्षीणा ज्ञानदुर्बला॥ ११॥

इतोपि गन्तव्यमिति भावेनाऽऽह - **पश्येति**। अन्यस्त्रियोपि प्रयान्ति, किं मयेत्यतो गन्तव्यमित्यर्थः। शितिकण्ठ ! नीलकण्ठ ![1] कलहंसवत् पाण्डुभिः धवलैः॥ १२॥

1. A omits नीलकण्ठ।

कथं सुतायाः पितृगेहकौतुकं निशम्य देहस्सुरवर्य ! नेङ्गते।
अनाहुता अप्यभियन्ति[1] सौहृदं[2] भर्तुर्गुरोर्देहकृतश्च केतनम्॥ १३॥

तन्मे प्रसीदेदममर्त्यवाञ्छितं कर्तुं भवान् कारुणिको बताहति।
त्वयाऽऽत्मनोऽर्धेऽहमदभ्रचक्षुषा[3] निरूपिता[4] मानुगृहाण याचितः॥ १४॥

### ऋषिरुवाच[5]

एवं गिरित्रः प्रिययाभिभाषितः प्रत्यभ्यधत्त प्रहसन् सुहृत्प्रियः[6]।
संस्मारितो मर्मभिदः कुवागिषून् यानाह को विश्वसृजां समक्षतः॥ १५॥

### श्रीशङ्कर उवाच[7]

त्वयोदितं शोभनमेव शोभने ! अनाहुता अप्यभियन्ति[8] बन्धुषु।
ते यद्यनुत्पादितदोषदृष्टयः बलीयसाऽनात्म्यमदेन[9] मन्युना॥ १६॥

विद्यातपोवित्तवपुर्वयः कुलैः सतां गुणैष्षड्भिरसत्तमेतरैः[10]।
स्मृतौ हतायाम्भृतमानदुर्दृशः[11] तथा[12] न पश्यन्ति हि धाम भूयसाम्॥ १७॥

**श्रीध. कथमिति**। तदा[13] हे सुरश्रेष्ठ ! पितृगेहोत्सवं निशम्य सुतायाः देहः कथं नेङ्गते द्रष्टुं न प्रचलति तथापि अनाहूताः सन्तः कथं गच्छामस्तत्राह - सौहृदं सुहृत्सम्बन्धि केतनं गृहं तथा भर्त्रादीनाञ्च गृहं अनाहूता अपि अभियन्ति[14] सन्तः। अनाहुता इत्यत्र ह्रस्वत्वमार्षम्॥ १३॥

**तदिति**। हे अमर्त्य ! तत् तस्मात् प्रसीद इदं मे वाञ्छितं कर्तुं भवानर्हति। कारुणिकत्वमेवाऽऽह - अदभ्रचक्षुषा अनल्पज्ञानेनापि त्वया आत्मनो देहस्यार्धे अहं निरूपिता धृता यतोऽर्धनारीश्वरः इति ख्यातोसि। अतः मामनुगृहाण। याचितस्सन्॥ १४॥

**एवमिति**। अभिभाषितः[15] याचितः। को दक्षः यानाह मर्म हृदयं[16] भिन्दन्तीति[17] तथा तान् कुवागिषून् दुरुक्तिबाणान् संस्मारितः सन्[18]॥ १५॥

---

1. M यान्ति 2. M 'दात् 3. Af त्वया सहार्धेहम'; M त्वयाऽपि पूर्णोऽयम' 4. M॰ तोऽनु 5. V, W मैत्रेय उवाच 6. M सुरप्रियः
7. A, G, J श्रीभगवानुवाच; M सम्भुरुवाच 8. M 'यान्ति 9. M 'त्म' 10. M 'मा मदैः 11. M 'मभि' 12. A, G, J स्तब्धा; M तप्ता
13. V omits तदा 14. V यान्ति 15. V adds अभि 16. A, J omit हृदयं 17. A, J 'न्ति ये तान् 18. J omits सन्

**त्वयेति**। 'अनाहुता अपी'ति त्वया यदुदितं उक्तं तच्छोभनमेव, किन्त्वनात्म्यं देहादौ अहङ्कारः तत्कृतेन मदेन मन्युना च ते बन्धवः यद्यनुत्पादितदोषदृष्टयः[1], न उत्पदिता[2] आरोपिता[3] दोषे दृष्टिर्येषां ते, [4]यदि भवन्ति॥ १६॥

[5]ननु विद्यादिगुणयुक्तो दक्षः त्वादृशेषु महत्सु कथं दोषदृष्टिर्भवेत् तत्राऽऽह - **विद्येति**। विद्यादिभिरेव स्मृतौ हतायां विवेकज्ञाने नष्टे सति भूयसां महत्तमानां धाम तेजो न पश्यन्ति हि। ननु गुणैः कथं विवेकनाशः तत्राऽऽह - सतां गुणैः विवेकहेतुभिः अप्यसत्तमानां इतरैः दोषभूतैः अत एव तैर्भृतो धृतः पुष्टो वा 'अहं विद्वान् तापसः' इत्यादिः मानः गर्वः तेन दुष्टा दृष्टिः येषां ते॥ १७॥

**वीर.** हे सुरवर्य! सुरश्रेष्ठ! पितृगेहे कौतुकमुत्सवं निशम्य सुताया देहः कथं नेङ्गते द्रष्टुं न [6]प्रचलति? अथाप्यनाहूतास्सन्तः कथं वा गमिष्यामः, तत्राऽऽह - सौहृदं सुहृदो निकेतनं, तथा भर्त्रादीनां गृहान् अनाहूता अपि अभियन्ति गच्छन्ति सन्तः। अनाहुता इत्यत्र ह्रस्वत्वमार्षम्॥ १३॥

उपसंहरति - **तदिति**। हे अमर्त्य! देव! तत् तस्मात् प्रसीद। इदं मे वाञ्छितं कारुणिको भवान् कर्तुमर्हति। कारुणिकत्वमेवाऽऽह - अदभ्रचक्षुषा अनल्पदयादृष्ट्या त्वया आत्मनो देहस्यार्धे समेंऽशे अहं निरूपिता धृता। यतः अर्धनारीश्वर इति प्रख्यातोऽसि। अतो मया याचितस्त्वं मामनुगृहाण॥ १४॥

एवमाभाषितो भवः प्रत्यभाषतेत्याह मैत्रेयः - **एवमिति**। गिरित्रः गिरिं कैलासं त्रायत इति गिरित्रो भवः। एवम् उक्तरीत्या प्रियया सत्या अभिभाषितः तस्याः प्रियः सुहृदपि मर्मच्छिदः दक्षस्य[7] कुवागिषून् कुत्सिता निन्दापरा वाच एव इषवः तान् प्रति संस्मारितः स्मरणं प्रापितः। निवृत्तप्रेरणात् स्मरतेर्वा णिजन्तात् कर्तरि क्तः। संस्मरन्नित्यर्थः। बहिःप्रहसन्निव प्रत्यभ्यधत्त प्रत्यभाषत। के ते कुवागिषवः यान् स्मरन् प्रत्यभ्यधत्त इत्यत्राऽऽह - कः दक्षः विश्वसृजां प्रजापतीनां समक्षतः अपरोक्षं यानाह "अयं हि लोकपालानां यशोघ्नो निरपत्रपः" (भाग.4-2-10) इत्यादिना उक्तवान् तान् [8]संस्मरन्नित्यर्थः॥ १५॥

प्रिययोक्तमनूद्य प्रत्युत्तरयति भवः त्वयोदितम् इति यावदध्यायसमाप्ति। हे शोभने! यत्त्वयोदितमुक्तं अनाहुता अपि बन्धुषु अभियन्तीति तच्छोभनमेव सत्यमेव। किन्तु बलीयसा अनात्म्यं देहाभिमानः तत्कृतो यो मदः तेन मन्युना क्रोधेन च ते बन्धवः यदि अनुत्पादितदोषदृष्टयः - न उत्पादिता गुणेषु सत्स्वपि दोषेष्वेव दृष्टिः दर्शनं यैस्ते भवन्ति तर्हि अनाहूता अप्यभियन्तीति शोभनमित्यर्थः॥१६॥

---

1. A, J add भवन्ति तर्हि 2. A, J °ते 3. A, J °ते 4. A, J omit यदि भवन्ति 5. V adds ननु 6. W omits प्र°
7. A adds मनसि 8. W omits सं

ननु विद्यातप[1] आदिसम्पन्नो दक्षः तादृशे त्वयि कथमुत्पादितदोषदृष्टिः स्यात् तत्राऽऽह[2] - **विद्येति**। सतां साधूनां गुणैः विद्यातपं आदिभिः षड्भिः असत्तमेषु इतरैर्दोषरूपतां प्राप्तैः विद्यादयः एव आश्रयभेदेन गुणादोषाश्च स्युरिति भावः। स्मृतौ हतायां विवेकज्ञाने नष्टे सति भृतमानदुर्दृशः भृतः पुष्टः मानः 'अहं विद्वान् अहं तापसः' इत्यादिगर्वः तेन दुष्टा दृक्[3] दृष्टिर्येषां ते, भूयसां महत्तमानां तेजः तथा यथावस्थितं[4] न पश्यन्ति। हीति असत्स्वेतत्प्रसिद्धिं द्योतयति॥ १७॥

**विज.** युक्त्यापि गन्तव्यत्वं वक्ति - **कथमिति**। नेङ्गते न चलति। आह्वानाभावे कथं गमनं स्यादित्याशङ्क्य अनाह्वानेप्येषां गृहगमनमुचितं भवतीत्याह - अनाहुता इति। देहकृतः पितुः॥ १३॥

उपसंहरति - **तन्मे** इति। यत एवं गन्तव्ये बहवः हेतवस्सन्ति तत् तस्मात् भवान् पूज्यः त्वं मम प्रसीद। हे अमर्त्य! देव! इदं वाञ्छितं कर्तुमर्हसि इत्यस्मिन्नर्थे बत कृपा कर्तव्या कारुणिकत्वादित्यर्थः। त्वमेव कारुणिको नान्य इत्याशयेनाह - त्वयेति। अदभ्रचक्षुषा सर्वज्ञेन त्वया सह अयं धर्मः पूर्णः गरीयान् निरूपित इति यत् अतः कारुणिकत्वात् प्रार्थितस्त्वमनुगृहाण, वाञ्छितमिति शेष इत्यर्थः॥ १४॥

तथापि प्रियया प्रार्थितश्शङ्करः किमुत्तरमभ्यधादिति विदुरस्य मानसीं शङ्कां परिहर्तुमाह - **एवमिति**। गिरित्रो गिरिशः। कुत्सिता वाच एव इषवः शराः कुवागिषवः तान्। को दक्षः॥ १५॥

किं वा बहुना प्रलापेन? अनाहूता अप्यभियान्तीति यदुक्तं तस्योत्तरं शृण्विति भावेनाऽऽह - **त्वयोदितमिति**। किं तदुदितं इत्यत उक्तं अनाहुता इति। तर्ह्यनभियाने किं कारणमत्राऽऽह - यदीति। ते बान्धवाः अनात्म्यमदेन देहाभिमाननिमित्तदर्पेण जातेन मन्युना क्रोधेन॥ १६॥

असतां विद्यादिकमपि मदविषयजनकत्वेन अप्रयोजकम्, अहेः पयःपानमिवेति भावेनाऽऽह - **विद्या तप इति**। असत्तमा विद्यादिभिः षड्भिः सतां योग्यैर्गुणैः उत्पन्नैर्मदैः स्मृतौ हतायां शास्त्रश्रवणोत्पन्नज्ञाने नष्टे भूयसां महात्मनां धाम प्रभावं न पश्यन्ति। हि यस्मात्तस्मादित्यन्वयः। अदर्शने कारणमाह - अभिमानदुर्दृश इति। "विद्यामदो धनमदः तृतीयोऽभिजनो मदः" (भार.5-34-42) इति मदलक्षणं, कामादिदोषदुष्टेन्द्रियत्वादित्यर्थः। अत एव तप्ता अन्तरिति शेषः॥ १७॥

---

1. A omits तप आदि 2. W अत आह 3. W omits दृक् 4. W omits 'व'

**नैतादृशानां स्वजनव्यपेक्षया गृहान् प्रतीयादनवस्थितात्मनाम्।**
**येऽभ्यागतान् वक्रधिया[1]ऽभिचक्षते आरोपित[2]भ्रूभिरमर्षणाक्षिभिः ॥ १८ ॥**

**तथारिभिर्न व्यथते[3] शिलीमुखैः शेतेऽर्दिताङ्गो[4] हृदयेन दूयता।**
**स्वानां यथा वक्रधियां दुरुक्तिभिः दिवानिशं तप्यति मर्मताडितः ॥ १९ ॥**

**व्यक्तं त्वमुत्कृष्टगतेः प्रजापतेः प्रियाऽऽत्मजानामसि सुभ्रु मे[5] मता।**
**अथापि मानं न पितुः प्रपत्स्यसे मदाश्रयात्कः परितप्यते यतः ॥ २० ॥**

**पापच्यमानेन[6] हृदाऽऽतुरेन्द्रियः समृद्धिभिः पूरुषबुद्धिसाक्षिणाम्।**
**अकल्य[7] एषामधिरोढुमञ्जसा पदं परं द्वेष्टि यथासुरा हरिम् ॥ २१ ॥**

**श्रीध. नैतादृशानामिति।** स्वजनव्यपेक्षया बन्धुदृष्ट्या गृहान्न प्रतीयात् नावलोकयेत्। अनवस्थितचित्तत्वमेवाऽऽह - ये वक्रधिया कुटिलया बुद्ध्या पश्यन्ति। आरोपिता उत्तम्भिता भ्रूः येषु तानि आरोपितभ्रूणि तैः, आरोपिताभिः भ्रूभिरिति वा। अमर्षणैः सक्रोधैरक्षिभिः नेत्रैः[8] ॥ १८ ॥

ननु स्वजनानां गृहं सुहृद्भिः गन्तव्यं तेषां दुश्चेष्टितञ्च विवेकिभिः[9] सोढव्यमिति चेत्[10] न, तस्य अति[11]दुस्सहत्वादित्याह - **तथेति।** अरिभिः शत्रुभिः[12] शिलीमुखैः बाणैः अर्दिताङ्गः खण्डितगात्रोऽपि तथा न व्यथते, यतः शेते स्वपिति, स्वानां दुरुक्तिभिः मर्मसु[13] ताडितो यथा दूयता व्यथमानेन हृदा दिवानिशं तप्यति ॥ १९ ॥

मयि तत्र गतायां नेयं शङ्केति चेत्तत्राऽऽह - **व्यक्तमिति।** व्यक्तं निश्चितं उत्कृष्टा गतिः स्थितिः यस्य तस्य आत्मजानां कन्यानां मध्ये त्वं प्रियेति मे सम्मतासि, अथापि[14] पितुः सकाशात् मानं न लप्स्यसे मदाश्रयात् मत्सम्बन्धात् ॥ २० ॥

ननु एवमपि[15] भगवन्! त्वया किमिति दक्षः तिरस्कृतः? यतोऽसौ त्वां द्वेष्टि अत आह - **पापच्यमानेनेति।** पापच्यमानेन अलं दह्यमानेन हृदा मनसा[16] आतुरेन्द्रियः[17] दुःखितेन्द्रियः काभिः? पुरुषो जीवः तस्य बुद्धिः चित्तं तत्साक्षिणां निरहङ्काराणामित्यर्थः। समृद्धिभिः पुण्यकीर्त्यादिभिः। एषां पदं स्थानं ऐश्वर्यं प्राप्तुमकल्यः[18] अशक्तस्सन् तान्[19] परं केवलं[20] द्वेष्टि। असुरा यथा श्रीहरिं केवलं द्विषन्ति ॥ २१ ॥

---

1. W तया 2. W ह्या° 3. M प्रधने 4. Af शेते क्षताङ्गो 5. A, G, J, M सम्मता 6. M तातप्य° 7. A, G, J, M अकल्प 8. V omits नेत्रैः 9. J, V omit विवेकिभिः 10. J, V omit इति चेत् 11. A, J omit अति 12. J, V omit शत्रुभिः 13. A adds सः 14. V त° 15. J, V omit एवमपि 16. V omits मनसा 17. A, J omit आतुरेन्द्रियः 18. A, J °ल्पः 19. A, J omit तान् 20. A, J omit केवलं

**वीर.** तस्मादेतादृशानां अनवस्थितचित्तानां गृहान् स्वजनव्यपेक्षया स्वजन इति बुद्ध्या न प्रतीयात् न गच्छेत् । अनवस्थितात्मत्वमेवाऽऽह - ये, वक्रा कुटिला तया दृष्ट्या । वक्रधियेति पाठे कुटिलबुद्ध्येत्यर्थः, आरोपिता उत्तम्भिता भ्रूर्येषां, तैः अमर्षणैः साक्रोशैरक्षिभिः गृहान् प्रति अभ्यागतान् पश्यन्ति ॥ १८ ॥

पश्यन्त्वेवमथापि सोढ्वा गन्तव्यमेव बन्धुभिस्तत्राऽऽह - **तथेति** । अरिभिः शत्रुभिः शिलीमुखैः बाणैः अर्दिताङ्गः भिन्नगात्रोऽपि तथा न व्यथते यतः शेते स्वपिति; यथा स्वानां वक्रधियां दुरुक्तिभिः मर्मसु ताडितः दूयता व्यथमानेन हृदयेन दिवानिशं तप्यति । दुरुक्तीनां सोढुमशक्यत्वात् न तद्गृहान् प्रति गन्तव्यमित्यर्थः ॥ १९ ॥

मास्तु त्वद्गमनमहमेका[1] व्रजिष्यामीति चेत् मामनादृत्य गतायाः तवापि पितृकृतः पराभवः प्राणविपत्तये स्यादित्याह - **व्यक्तमिति** यावत्समाप्ति । हे सुभ्रु ! यद्यपि त्वमुत्कृष्टगतेः उत्कृष्टा गतिः प्राजापत्याधिकाररूपा गतिर्यस्य तस्य प्रजापतेः दक्षस्य आत्मजानां दुहितॄणां मध्ये प्रिया प्रीतिविषयासीति मे मता ज्ञाता व्यक्तं स्फुटं, तथापि मदाश्रयात् मदाश्रयणात् मत्सम्बन्धाद्धेतोः त्वं पितुः सकाशात् मानं सम्मानं न लप्स्यसे, यतः मत्सम्बन्धात् को दक्षः परितप्यते क्लिश्यति ॥ २० ॥

ननु कुतस्त्वया दक्षः तिरस्कृतः ? यतोऽसौ त्वां द्वेष्टि, तत्राऽऽह - **पापच्यमानेनेति** । पूरुषबुद्धिसाक्षिणां पूरुषो जीवः बुद्धि र्महान् ते साक्षात् पश्यन्तीति तथा तेषां ब्रह्मात्मकत्वेन प्रकृतिपुरुषयाथात्म्यविदां ब्रह्मविदामिति यावत्, तेषां समृद्धिभिः पुण्यकीर्त्यादिभिः तेषां पूरुषबुद्धिसाक्षिणां पदं स्थानं ऐश्वर्यं अधिकारं वा अधिरोढुं प्राप्तुमसमर्थः । अत एव पापच्यमानेन भृशं तप्यमानेन हृदयेन आतुरेन्द्रियः दुःखितेन्द्रियः तान् परं केवलं द्वेष्टि,स्वयं मूर्खः अज्ञः दुर्भगश्च महद्भिः साम्यमलभमानः तान् केवलं द्वेष्टि यथा असुरा हरिं द्विषन्ति ॥ २१ ॥

**विज.** किमत इति तत्राऽऽह - **नैतादृशानामिति** । आरोपितभ्रूभिरिति ह्रस्वत्वाभावः छान्दसः उन्नमितभ्रूभङ्गैः अमर्षणाक्षिभिः असह्मानलक्षणोपेतनेत्रैः ॥ १८ ॥

दक्षाध्वरागमन कारणान्तरञ्चाह - **तथारिभिरिति** । प्रधने युद्धे शिलीमुखैः शरैः ॥ १९ ॥

किं बहुनानुलप्य त्वम् ? दक्षस्य प्रियपुत्रीत्वेपि मदाश्रयत्वेन तप्यमानात् पितुः पूजां न प्राप्नोषीत्याह - **व्यक्तमिति** । उत्कृष्टगतेः प्राप्तसर्वाधिपत्यस्य ॥ २० ॥

---

1. W त्वदागमन'

मत्पितुर्ज्ञानाधिकारिष्वेकत्वेन सत्वात् कुतो भवति द्वेषः ? इत्याशङ्क्य साम्राज्यमदलक्षणासुरावेशात् मत्पदाधिपत्यं न प्राप्तम् अतो द्वेष इति भावेनाह - **तातप्यमानेनेति**। पूरुषबुद्धिसाक्षिणां पुरुषेन्द्रियप्रेरकाणां अस्मत्सदृशानां समृद्धिभिः एषां पूरुषबुद्धिसाक्षिणां परं पदम् अञ्जसा तत्त्वेनाधिरोढुं अकल्पोऽसमर्थः यतः यस्मात् ततो द्वेष्टि। इदमसुरलक्षणमिति भावेनोक्तं यथेति ॥ २१ ॥

**प्रत्युद्गमप्रश्रयणाभिवादनं विधीयते साधुमिथस्सुमध्यमे !**

**प्राज्ञैः परस्मै पुरुषाय चेतसा गुहाशयायैव न देहमानिने ॥ २२ ॥**

**सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः ।**

**सत्त्वे[1] च तस्मिन् भगवान् वासुदेवो ह्यधोक्षजो मे नमसा[2] विधीयते ॥ २३ ॥**

**तत्ते[3] निरीक्ष्यो न पितापि देहकृत् दक्षो मम द्विट् तदनुव्रताश्च ये ।**

**यो विश्वसृड्[4]यज्ञगतं वरोरु मा मनागसं दुर्वचसाऽकरोत्तिरः ॥ २४ ॥**

**यदि व्रजिष्यस्यतिहाय मद्वचो भद्रं भवत्या न ततो भविष्यति ।**

**सम्भावितस्य स्वजनात्पराभवो यदा[5] स सद्यो मरणाय कल्पते ॥ २५ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टदशसाहस्र्यां

श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां

चतुर्थस्कन्धे उमा रुद्र संवादे तृतीयोऽध्यायः ॥ ३ ॥

**श्रीध.** ननु त्वया प्रत्युत्थान विनयाद्यकरणात् अवज्ञात एवासौ दक्षः[6] तत्राऽऽह - **प्रत्युद्गमेति**। हे सुमध्यमे ! प्रत्युद्गमादिकं मिथः जनैः यत्[7] विधीयते तत्तु[8] प्राज्ञैः भागवतैः[9] साधु विधीयते। साधुत्वमेवाह - परस्मै श्रीवासुदेवाय गुहाशयाय अन्तर्यामिण एव। तच्च चेतसैव। परिपूर्णे तस्मिन् कायिकव्यापारायोगात् अतोऽन्तर्यामिदृष्ट्या मनसैव[10] सर्वं कृतमिति भावः ॥ २२ ।

किञ्च न केवलमभ्यागतेष्वेव श्रीवासुदेवदृष्ट्या नमनं[11] क्रियते किन्तु नित्यमेव मनसि श्रीवासुदेवश्चिन्त्यते इत्याह - **सत्त्वमिति**। विशुद्धं सत्त्वमन्तःकरणं सत्वगुणो वा[12]। वसुदेवशब्दितं वसुदेवशब्देनोक्तम्। कुतः ? यत् यस्मात् तत्र तस्मिन्[13] सत्त्वे पुमान् वासुदेव

---

1. M सत्त्वं च यस्मिन् 2. M मनसा 3. M अत्वया 4. A, G, J, M सृग्यज्ञ 5. V यदाऽऽस 6. A, J omit दक्षः 7. A, J omit यत् 8. V omits तु 9. J, V omit भागवतैः 10. A, J omit एव 11. A मननं 12. V omits वा 13. A, J omit तस्मिन्

ईयते प्रकाशते, अपगतं आवृतं आवरणं यस्मात्सः । अयमर्थः – वासुदेवे भगवति प्रतीयते इति हि वासुदेवः परमेश्वरः प्रसिद्धः, स च विशुद्धे सत्त्वे ईयते[1] प्रतीयते, अतः प्रत्ययार्थेन प्रसिद्धेन प्रकृत्यर्थः निर्धार्यते । ततश्च वासयति देवमिति व्युत्पत्या वा, वसत्यस्मिन्निति वा वसुः, देवः दीव्यति द्योतते इति देवः । वसुभिः पुण्यैः दीव्यति प्रकाशते इति वा वसुदेवशब्दवाच्यं शुद्धं सत्त्वम् । [2-]ततः "तत्र भवः" इत्यण् । अत्र प्रतीतिर्भवतेरर्थः[-2] । ततः किमित्यत[3] आह–सत्वे च तस्मिन् मे मया नमसा नमस्कारेण अनुविधीयते सेव्यते इत्यर्थः । मनसेति पाठे मनसा विशेषेण धीयते धार्यते चिन्त्यते इत्यर्थः । यतः अधोभूतेषु प्रत्याहृतेषु अक्षेषु इन्द्रियेषु[4] जायते प्रकाशते अधोक्षजः[5] इन्द्रियगोचर इत्यर्थः ॥ २३ ॥

**तदिति** । तत्[6] तस्मात् ते[7] त्वया न निरीक्ष्यः । देहकृदपीति पोषकत्वादिभिः औपचारिकपितृत्वव्यावृत्यर्थम् । द्विट् शत्रुः । तदेवाऽऽह - हे वरोरु ! यो दक्षः विश्वसृजो[8] यज्ञगतं मां निरपराधं तिरोऽकरोत् तिरस्कृतवान् ॥ २४ ॥

विपक्षे दोषमाह - **यदीति** । मद्वचः अतिहाय अतिक्रम्य । यतः सम्भावितस्य पूजितस्य[9] सुप्रतिष्ठितस्य यदा पराभवः[10] भवति तदा स पराभवः तस्य मरणाय कल्पते । [11-]अतः त्वं गता सती पुनः नायासीति भावः । दक्षं दृष्ट्वा तज्जमेनं देहमपि विदारयसीति सूचितं भवति[-11] ॥ २५ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्री श्रीधरस्वामिविरचितायां भावार्थदीपिकायां

व्याख्यायां तृतीयोऽध्यायः ॥ ३ ॥

**वीर.** ननु गुरुभूतो दक्षः त्वया प्रणामादिभिः असत्कृतः त्वां द्वेष्टि तत्राऽऽह - **प्रत्युद्गमेति** । हे सुमध्यमे ! प्राज्ञैः अदेहमानिभिः मिथः परस्परं प्रत्युद्गमप्रश्रयणाभिवादनं प्रत्युत्थानप्रणामाभिवादनं विधीयते, मनोवाक्कायैरिति शेषः । प्राज्ञाज्ञसन्निपाते तु प्राज्ञैः गुहाशयाय अन्तर्यामिणे परस्मै पुरुषायैव चेतसैव विधीयते न तु देहाभिमानिने करणत्रयेणेत्यर्थः । "प्राज्ञैः परस्परं मनसैव विधीयते परिपूर्णे तस्मिन् कायिकव्यापारायोगात्" इत्यर्थवर्णनन्तु अशोभनम् । प्राज्ञेष्वपि मिथस्तस्य करणत्रयेण "वैष्णवो वैष्णवं दृष्ट्वा दण्डवत्प्रणमेद्भुवि" (पाद्मे) इत्यादिभिः विहितत्वात् । अन्तर्याम्युद्देशेन मानसिकं प्रत्युद्गमनादिकमस्मै देहाभिमानिने दक्षाय विहितमेव मयेति भावः ॥ २२ ॥

---

1. A, J omit ईयते 2--2. V omits 3. A, J किमतः 4. J omits इन्द्रियषु 5. A, J omit अधोक्षजः 6. V omits तत् 7. A, J omit ते 8. A, J सृजां 9. A, J omit पूजितस्य 10. V adds आस 11--11. A, J omit

ननु किं विशेषेण चेतसैव प्रणतिः विधीयते इत्युच्यते। न तु मनोवाक्कायानामन्यतमेनेत्यत्र कारणमाह - **सत्त्वमिति।** विशुद्धं रजस्तमोभ्यामनभिभूतं सत्त्वं सत्त्वप्रधानं चित्तं वसुदेवशब्दितं वसुदेवशब्देनोच्यते इत्यर्थः। तत्र[1] विशुद्धे सत्त्वे वसुदेवशब्दप्रवृत्ति[2]निमित्तमाह - यदिति। यत् यस्मात् तत्र सत्त्वे पुमान् वासुदेवः अपावृतः अपगतमात्मावरणं यस्मात्सः, ईयते प्रतीयते प्रकाश्यते इति यावत्। "तत्र सत्त्वं निर्मलत्वात् प्रकाशकम्" (भ.गी.14-6) इत्युक्तरीत्या वासुदेवस्वरूप[3] रूपादिप्रकाशकसत्त्वप्रधानत्वात् चित्तस्य द्योतमानत्वात् देवत्वं, भगवतः वासभूतत्वाच्च वसुत्वमिति वसुदेवशब्दितं सत्त्वमित्यर्थः। तस्मिंश्च सत्त्वाख्ये चित्ते अधोक्षजः अधःकृतेषु अक्षेषु इन्द्रियेषु जायते आविर्भवतीत्यधोक्षजः इन्द्रियान्तरागोचरः केवलपरिशुद्धचेतसैव ग्राह्यः भगवान् वासुदेवः, मे मया नमसा विधीयते नमस्क्रियत इत्यर्थः। अतश्चेतसैव भगवान् प्रणम्यत इति भावः॥ २३॥

तस्मात् त्वया पितापि देहकृदपि पालकपितृत्वादिव्यावृत्त्यर्थं देहकृदित्युक्तं, मम द्विट् मद्द्वेषी दक्षः न निरीक्ष्यः निरीक्षितुमयोग्यः तथा तं दक्षं येऽनुव्रताः तेऽपि न निरीक्ष्याः। हे वरोरु! यो दक्षः विश्वसृड्यज्ञगतं विश्वसृजां सत्रे गतं अनागसं निरपराधिनं मां दुर्वचसा दुरुक्त्या तिरोऽकरोत् तिरस्कृतवान्॥ २४॥

यदि मद्वचः अतिहाय अतिक्रम्य व्रजिष्यसि तर्हि भवत्याः तव भद्रं सम्मानं न[4] भवति न भविष्यति प्रत्युत पराभव एव स्यात् इति भावः। बन्धुकृतः पराभवः न दुःखाय भवेदिति चेत् तत्राऽऽह - सम्भावितस्य सर्व सम्मानितस्य स्वजनात् यः पराभवः सः सद्यः मरणाय कल्पते भवति॥ २५॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां तृतीयोऽध्यायः॥ ३॥

**विज.** अभ्युत्थानाभिवादार्हः भवता न सम्मानितः अतः द्वेष इति किं न स्यात् इति तत्राऽऽह - **प्रत्युद्गमेति।** प्राज्ञैः तत्त्ववेदिभिः पुरुषैः वैष्णवेषु आगच्छत्सु मिथः प्रत्युद्गमादिकं चेतसा गुहाशयाय हृदये स्थिताय परस्मै पुरुषायैव विधीयते क्रियते देहाभिमानिने जीवाय न क्रियते इदं तु उभयोस्समत्वे। बन्धुता गुरुत्वनिमित्तेन गुरुत्वेनोक्तं अतः दक्षाय अज्ञाय ज्ञानाभावात् तन्निमित्तद्वेषो न सम्भाव्यत इति॥ २२॥

1. W omits तत्र 2. A °त्तौ 3. A omits रूप 4. A omits न भवति

किञ्च मया प्रत्युत्थानादिना मुख्यतः पूज्यस्तु ब्रह्मादिशरीरान्तःस्थितः हरिरित्याह - **सत्त्वमिति**। विशुद्धं सत्त्वं ब्रह्मादिशरीरं वसुदेवशब्दितं पृथिव्यादिषु[1] पदार्थेषु स्थित्वा विद्योतते तत्कृतमललेपाभावादिति तच्छब्देन शब्दितमित्यर्थः। तच्छब्दवाच्यत्वे निमित्तमाह - यदीयत इति। व्याप्तिक्रीडादिगुणाकरः पुमान्नारायणोऽपावृतः मायालक्षणावरणरहितः ईयते ज्ञायते इति यत् यस्मात् तस्मात् निमित्तान्तरञ्चाह - सत्वं चेति। तत्सत्वं च यस्मिन् हरौ यदधीनतया वर्तते तत्सम्बन्धात् तच्छब्दवाच्यमित्यर्थः। एवञ्च वसुदेवे निवास लक्षणसम्बन्धात् वासुदेवः सोऽधोक्षजः अतीन्द्रियज्ञानी भगवान् मम मनसा विशेषेण धीयते चिन्त्यते। तदुक्तं - "रुद्रेण धीयते विष्णुः विष्णोर्ध्येयो न कश्चन" (ब्रह्म वैवर्ते) इति। अनेन पुरस्स्थितचतुर्मुखब्रह्मणि प्रकाशमान श्रीविष्णुगुणगणोपसंहारलक्षणोपासनैकाग्रचित्तत्वेन स्थितेन मया कार्यान्तरप्रारम्भस्यानुचितत्वात् दक्षान्तस्स्थहरिस्मरणसत्कारेण तत्सत्कारोपि कृत इति द्वेषे कारणं न पश्यामीत्युक्तं भवति। यद्वा यद्विशुद्धं तमआदिगुणानुपरक्तं सत्त्वं तद्वसुदेवशब्दितं, चशब्द एवार्थे। तत्सत्त्वं गुणः यस्मिन् पुंस्येवास्ति पुमान् श्रीहरिस्तत्र तस्मिन्नेव पुंसि अपावृत ईयत इति यस्मात् तस्मात्[2] सः वासुदेवः सात्त्विकप्रियोऽधोक्षजः भगवान् मे मनसा प्रत्युत्थानादिना विशेषेण चिन्त्यत इत्यतो नास्मद्गुरुरित्यभिमानमुग्धत्वेन रजोगुणाभिभूतचित्तत्वेन चात्र हरेः विशेषेण सन्निधानाभावात्तव पिता न सत्कारयोग्यः इति कृत्वा प्रत्युत्थानादिना न मानित इति। अनेन तमआदिगुणाभिभूतत्वेन तत्त्वाज्ञानात् द्वेषोद्रेक इत्युक्तं भवति॥ २३॥

मम त्वत्पूज्यत्वात् मम द्वेषी जनकोपि त्वया द्रष्टुमेवायोग्यः गुरुध्रुग्दर्शने दोषोक्तेरित्याह - **त्वयेति**। देहकृदपि न केवल मान्तरो द्वेषः अपि तु बाह्योऽपि इति भावेनाऽऽह - तदनुव्रता इति। स्थानं निर्दिशति - य इति॥ २४॥

बाधकञ्चाह - **यदीति**। मरणं नाम देहवियोगलक्षणं न त्वकीर्तिलक्षणम्॥ २५॥

इति श्रीमद्भागवते चतुर्थस्कन्धे
श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां
टीकायां तृतीयोऽध्यायः॥ ३॥



1. M omits 'षु    2. A omits तस्मात्

# चतुर्थोऽध्यायः

## मैत्रेय उवाच

एतावदुक्त्वा विरराम शङ्करः पत्न्यङ्गनाशं ह्युभयत्र चिन्तयन् ।
सुहृद्दिदृक्षुः परिशङ्किता भवान्निष्क्रामती निर्विशती द्विधा[1]ऽऽस सा ॥ १ ॥

सुहृद्दिदृक्षाप्रतिघातदुर्मनाः स्नेहाद्रुदन्त्य[2]श्रुकलातिविह्वला ।
भवं भवान्यप्रतिपूरुषं रुषा प्रधक्ष्यतीवैक्षत जातवेपथुः ॥ २ ॥

ततो विनिःश्वस्य सती विहाय तं शोकेन रोषेण च दूयता हृदा ।
पित्रोरगात्स्त्रैणविमूढधीर्गृहान् प्रेम्णाऽऽत्मनो योऽर्धम[3]दात्सतां प्रियः ॥ ३ ॥

तामन्वगच्छन् द्रुतविक्रमां सतीमेकां त्रिनेत्रानुचराः सहस्रशः ।
स[4] पार्षद[5]यक्षा मणिमन्मदादयः पुरोवृषेन्द्रास्तरसा गतव्यथाः ॥ ४ ॥

तां [6]शारिका[7]कन्दुकदर्पणाम्बुज[8]श्वेतातपत्रव्यजनस्रगादिभिः ।
गीतायनैर्दुन्दुभिशङ्खवेणुभिर्वृषेन्द्रमारोप्य वि[9]टङ्किता ययुः ॥ ५ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

चतुर्थे तु पतिं हित्वा गता पित्राऽवमानिता । रुषा निर्भर्त्स्य तं यज्ञे जहौ देहमितीर्यते ॥

**एतावदिति** । उभयत्रानुज्ञाने[10] बलान्निवारणे च सुहृद्दिदृक्षुर्निष्क्रामती[11] भवात्परिशङ्किता पुनर्निर्विशती[12] च तदा सा[13] सती द्विधा [14-]आस उभयनिष्ठचित्ता बभूव । न गता न च स्थिता आन्दोलावद्गतिरभवत्[-14] ॥ १ ॥

**सुहृदिति** । सुहृदां दिदृक्षायाः प्रतिघातेन दुर्मनाः अश्रूणां कलाभिलेशैरतिविह्वला व्याकुला अप्रतिपूरुषं स्वसमानपुरुषान्तररहितम् । प्रधक्ष्यती[15] भस्मीकरिष्यतीव । रुषा जातो वेपथुः कम्पो यस्याः ॥ २ ॥

---

1. M, Ma, Ms द्विधा च 2. A, G, J, N, V, Va °त्यश्रु 3. M °मरासत 4. Af, Gf स्वपार्षदा ये 5. मुख्याः 6. A, G, J, M, Ma, N, T, Va सा° 7. M, Ma मण्डुक, Ms मड्डुक 8. M, Ma, Ms, V, W °जैः 9. M, Ma विलेम्बिता 10. V °ज्ञादाने 11. A, B, J, Va °न्ती 12. A, B, J, Va °न्ती 13. A omits सा 14--14. B, J, Va आस बभूव । न गता न च स्थिता आन्दोलावद्गतिरभवत् ॥ १ ॥ V आन्दोलितचित्ता आस बभूव ॥ १ ॥ 15. B, J, Va add इव

**तत इति**। ततस्तं [1]श्रीरुद्रं विहाय पित्रोर्गृहानगात्। कथम्भूतम् ? यः प्रीत्या तस्यै आत्मनो देहस्यार्धमदात्। त्यागे हेतुः - **स्त्रैणं** स्त्रीस्वभावः, तेन विमूढा धीर्यस्याः सा॥ ३॥

**तामिति**। द्रुतविक्रमां शीघ्रं गच्छन्तीम्। सह पार्षदैर्यक्षैश्च वर्तमानाः मणिमान् मदश्चादिर्येषां ते। [2]पुरः पुरतो वृषेन्द्रो येषां ते। गतव्यथा निर्भयाः। रुद्रातिक्रमेण तस्याः गमनादागतव्यथा इति वा॥ ४॥

**तामिति**। तां [3]सतीं वृषेन्द्रमारोप्य [4]शारिकादिभिः क्रीडोपकरणैः श्वेतातपत्रादिभिश्च महाराजविभूतिभिः सह विटङ्किताः शोभिता ययुः। [5-]शारिकाः पठननिपुणाः पक्षिणः[-5]। गीतायनैर्गीताश्रयैः॥ ५॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

[6]भवोक्तिमर्धेनोपसंहरन् भवान्याः स्वाभिप्रेतार्थलाभनिमित्तशोकं तन्निमितं भर्तरि क्रोधं भर्तारमनादृत्याध्वरे गमनं तत्र पितृकृतपराभवं तन्निमित्तं[7] देहत्यागप्रकारं चाह - **एतावदिति**। शङ्करः एतावदभिधाय उभयत्र पत्न्यास्तत्र गमनेऽगमने च अनुज्ञादाने बलान्निवारणे [8]वा तच्छरीरनाशं चिन्तयन् विरराम तूष्णीमास। ततः सा सती सुहृद्दिदृक्षुः मातापित्रादीन् द्रष्टुमिच्छन्ती[9] निष्क्रामती गृहाद्बहिर्निर्गच्छन्ती पुनः भवात् शङ्करात् परिशङ्किता भर्तुर्वचोऽतिहाय गमने का वा हानिः स्यादिति परिशङ्किता च तदा द्विधा आस बभूव॥ १॥

सुहृदां दिदृक्षायाः द्रष्टुमिच्छायाः [10]यः प्रतिघातः निरोधस्तेन दुर्मनाः दुःखितचित्ता बन्धुषु स्नेहाद्रुदन्ती अश्रूणां कलाभिर्लेशैरतिविह्वला व्याकुला भवानी सती अप्रतिपूरुषं समदर्शित्वेन प्रतिपक्षरहितं भवं रुद्रं रुषा जातवेपथुः उत्पन्नशरीरकम्पा प्रधक्ष्यती भस्मीकुर्वतीव ऐक्षत अपश्यत्॥ २॥

तदा ततः सती विनिश्वस्य दीर्घं निश्वासं विधाय सतां जिज्ञासूनां प्रियो यश्च प्रेम्णा आत्मनो देहस्यार्द्धमदात् दत्तवान् अनेन त्यागानर्हत्वमुक्तम्। तं रुद्रं विहाय स्त्रैणं [11]स्त्रीभावः [12]स्त्रीस्वभावः। तेन विमूढधीः नष्टमतिः शोकेन बन्धुदर्शनासम्भावनानिमित्तशोकेन रोषेण दिदृक्षाप्रतिघातनिमित्तक्रोधेन पुनर्दूयता भर्तुर्वचोऽतिक्रमनिमित्तानर्थसम्भावनापरितप्तेन [13]हृदा [14]हृदयेन च पित्रोर्गृहान्प्रत्यगात्॥३॥

---

1. A, B, J, Va omits श्रीरुद्रं 2. B omits पुरः 3. A, B, J, Va omit सतीं 4. A, B, J, Va सा° 5--5. A, B, J, Va सारिका पठननिरूपिता पक्षिणी। 6. A, B, T °क्त° 7. B, W °त्तदे° 8. A, B, T च 9. A °ती 10. A, B, T omit यः 11. A, B, T omit स्त्रीभावः 12. W omits स्त्रीस्वभावः 13. W omits हृदा 14. A, B, T omit हृदयेन च

द्रुतविक्रमां शीघ्रं पादविक्षेपान् कुर्वतीं एकामसहायां तां सतीं त्रिनेत्रानुचराः सहस्रशोऽनुययुः। एतदेव प्रपञ्चयति सार्धेन। पार्षदैर्यक्षैश्च सहिता मणिमान् मदश्चादिर्येषां ते। पुरः पुरतः वृषेन्द्रो येषां ते। तरसा बलेन गतव्यथा निर्भयाः। यद्वा, आगतव्यथाः इति छेदः। रुद्रगमनाभावाद् आगतव्यथाः सभयाः। तरसा बलात्॥ ४॥

तां सतीं वृषेन्द्रमारोप्य नन्दीश्वरे उपवेश्य शारिकादिभिः[1] क्रीडोपकरणैः शारिका[2] पठननिपुणः पक्षिविशेषः। श्वेतातपत्रादिभिः राजचिह्नैश्च विटङ्किता अलङ्कृताः ययुः॥ ५॥

## श्री विजयध्वजतीर्थकृता पदरत्नावली

हरौ भक्तिविधानार्थं गुर्वादावपि भक्तिरवश्यं कर्तव्येत्यभिप्रेयतेऽस्मिन्नध्याये। तत्र देवीमेवं बाधकं ब्रुवन् शङ्करः किं चकारेति तत्राह - **एतावदिति**। शं सुखं करे यस्य सः, शं करोतीति वा शङ्करः। उभयत्र प्रस्थापने निवारणे च पत्न्या अङ्गनाशं शरीरनाशं, हि यस्मात्तस्माद् विरराम। ततस्तु देवी किमकरोदिति तत्राह - सुहृद्दिदृक्षुरिति। सा देवी सुहृद्दिदृक्षुः स्वाधाम्नो निष्क्रामती भवात्परिशङ्किता स्वधाम निर्विशती चाभूदित्यन्वयः॥ १॥

अन्तः करणवृत्तिभेदाद् द्विधा प्रवृत्तिमती भवानी किमकृतेत्याशङ्क्य तस्या भर्तुः कामजनकमन्त्रौषधैः[3] स्त्रीस्वभावं वक्ति - **सुहृद्दिदृक्षेति**। सुहृद्दिदृक्षायाः प्रतिघातो भङ्गस्तेन दुर्मना दुःखितमनाः अप्रतिपूरुषं प्रतिपक्षपुरुषरहितम्। अनेन कोपरोदनाभ्यां वशीकरणमन्त्राभ्यां वा शिवः अभिमतानुमतिप्रदः स्यादिति भावो दर्शितः॥ २॥

अनेनापि भावेन स्तिमितसमुद्रवत् स्थितं शिवं दृष्ट्वा तद्गमनप्रकारं वक्ति - **तत इति**। दूयता तापवता, सर्वेश्वर्या एष[4] भावः कथमित्यत उक्तं - स्त्रैणेति। स्त्रीणां स्वभावः स्त्रैणं तेन विमूढा धीर्यस्याः सा तथा अज्ञस्त्रियाः स्वभाव एवायं न तु देवस्त्रियाः इति भावेनाह - **प्रेम्णेति**। आत्मन इति पदं द्विरावर्तनीयम्। स्वस्य शरीरस्यार्धमरासत अदत्त। 'रासृ-दान' इति धातुः॥ ३॥

स्वशरीरार्धदो हरस्तस्या एकस्या गमनं कथम् असहतेत्याशङ्क्य तद्भावविदामनुचराणां गमनप्रकारं वक्ति - **तामन्विति**। द्रुतं विक्रमः पादविक्षेपो यस्याः सा तथा तां केचनानुचरा अन्वगच्छन्, न तु मुख्या इत्यत उक्तं - मणिमन्मदादय इति। पार्षदेषु मुख्यैः सह वर्तमानाः सपार्षदमुख्याः। आगतव्यथाः स्वस्ति स्यादस्वस्ति वेति प्राप्तमनोदुःखाः॥ ४॥

शीघ्रतरं गच्छन्त्या रुद्राण्याः पाशाकृष्टैरिवाऽऽगच्छद्भिरनुचरैः किमभूदित्याशङ्क्य राज्ञी गमनवदन्वितयात्राभूदित्याह - **तां**

---

1. A, T सा॰  2. A, T सा॰  3. Ma कामुकजनम॰  4. B. Ma, Ma एवं

**सारिकेति।** सारिका क्रीडाशुकी मण्डुकं जलक्रीडावद्यम्। विलम्बिताः यथा यथा सम्भूय गमनं स्यात्तथा शनैश्चरन्तः। विटङ्किता इति पाठे श्रृङ्गारिता इत्यर्थः ॥ ५ ॥

**आब्रह्मघोषोर्जितयक्षवैशसं विप्रर्षिजुष्टं विबुधैश्च कृत्स्नशः[1]।**
**मृद्दार्वयः काञ्चनदर्भचर्मभिः निसृष्टभाण्डं यजनं समाविशत् ॥ ६ ॥**

**तामागतां तत्र न कश्चनाऽऽद्रियत् विमानितां यज्ञकृतो भयाज्जनः।**
**ऋते स्वसॄः[2] स्वां जननीञ्च सोदराः[3] प्रेम्णाऽश्रु[4]कण्ठ्यः परिषस्वजुर्मुदा ॥ ७ ॥**

**[5]सौदर्य सम्प्रश्न[6]समर्थवार्तया मात्रा च मातृष्वसृभिश्च सादरम्।**
**दत्तां सपर्यां [7]वरमासनञ्च सा नाऽऽदत्त पित्राऽप्रतिनन्दिता सती ॥ ८ ॥**

**अरुद्रभागं तमवेक्ष्य चाध्वरं पित्रा च देवे कृतहेलनं विभौ।**
**अनादृता यज्ञसदस्यधीश्वरी चुकोप लोकानिव धक्ष्यती रुषा ॥ ९ ॥**

**जगर्ह सामर्षविपन्नया गिरा शिवद्विषं धूमपथश्रमस्मयम्।**
**स्वतेजसा भूतगणान् समुत्थितान् निगृह्य देवी जगतो[8]ऽभिशृण्वतः ॥ १० ॥**

**श्रीध. आब्रह्मेति।** आ समन्तात् यो वेदघोषः तेन ऊर्जितं शोभमानं[9] यज्ञसम्बन्धिपशुविशसनं यस्मिन्। यद्वा तेन ऊर्जितम् अतिशयितं यज्ञवैशसं परस्परं स्पर्धा यस्मिन् तद् यजनं यज्ञस्थानं समाविशत् देवी[10]। विबुधैश्च जुष्टं मृदादिभिर्निसृष्टानि निर्मितानि भाण्डानि पात्राणि यस्मिन् ॥ ६ ॥

**तामिति।** कश्चन नाऽऽद्रियत् नाऽऽदृतवान्। यज्ञकृतः दक्षात् यद्भयं तस्मात्। तत्र हेतुः तेन विमानितां, स्वसॄर्जननीञ्च ऋते विना - तास्तु सादराः परिषस्वजुः आलिङ्गितवत्यः प्रेमा[11]श्रुभिः निरुद्धः कण्ठः यासाम् ॥ ७ ॥

**सौदर्येति।** अप्रतिनन्दिता अनादृता सती नाऽऽदत्त न गृहीतवती। कथम् ? सौदर्येण सोदरत्वेन[12] भगिनीनां यः सम्प्रश्नः तत्र समर्था योग्या या वार्ता तया सह तां च नाऽऽदत्त नाऽश्रृणोदित्यर्थः ॥ ८ ॥

---

1. A, B, G, I, J, M, Ma, Ms, T सर्वशः 2. M, Ma, Ms स्वसारो; A, B, G, I, J, T स्वसॄर्वै 3. A, B, G, I, J, M, Ma, Ms, V सादराः 4. A, B, G, I, J, M, Ma, Ms. T प्रेमाऽ 5. M, Ma, Ms, V सौन्दर्य 6. W समस्त 7. W परं 8. Ms ऽनु 9. V शोभितं 10. V omits देवी 11. V प्रेम्णा 12. A (सम्यक्तया)

**अरुद्रेति**। न विद्यते रुद्रस्य भागः यस्मिन् तम्। देवे रुद्रे कृतं हेलनम् अवज्ञानं च आह्वानाद्यकरणात्॥ ९॥

**जगर्हेति**। जगर्ह निन्दितवती। अमर्षेण कोपेन विपन्ना अव्यक्ता तया गिरा[1] शिवं द्वेष्टीति शिवद्विट् तम्। धूमपथः कर्ममार्गः तत्र क्षमः अभ्यासः तेन स्मयो गर्वो यस्य। दक्षवधाय समुत्थितान् स्वाज्ञया निगृह्य निवार्य॥ १०॥

**वीर.** आसमन्तात् ब्रह्मघोषेण वेदघोषेण[2] ऊर्जितं व्याप्तं यज्ञसम्बन्धि वैशसं विशसनं यस्मिन् तत्। ब्रह्मघोषोर्जितं च तद्यज्ञवैशसं चेति कर्मधारयः। विप्रर्षिभिः ब्रह्मर्षिभिः जुष्टं सेवितं तथा विबुधैः देवैश्च सर्वतो जुष्टं मृदादिभिर्निसृष्टानि निर्मितानि भाण्डानि पात्राणि यस्मिन् तत्। यजनं यागस्थानं समाविशत्॥ ६॥

तत्राऽऽगतां तां सतीं जननीं स्वसॄश्च ऋते विना कश्चन कोऽपि नाद्रियत् नादृतवान्। कुतः ? यज्ञकृतो दक्षात् यद्भयं तस्मात्। तत्र हेतुः - तेन विमानिताम् अवमानितां तास्तु सोदराः प्रेमाश्रुभिः निरुद्धः कण्ठो यासां तथाभूतास्तां मुदा परिषस्वजुः आलिङ्गितवत्यः॥७॥

मात्रा मातृष्वसृभिः मातृभागिनीभिश्च सौदर्यसम्प्रश्नसमस्तवार्तया सोदरीणां भगिनीनाञ्च सम्बन्धी यः कुशलप्रश्नादिस्तत्पूर्वया समस्तवार्तया सकलवृत्तान्तेन सह। समर्थवार्तयेति पाठे सौदर्येण सोदरत्वेन भगिनीनां यः सम्प्रश्नः तत्र समर्था योग्या या वार्ता तया सादरं आदरेण सहितं यथा तथा दत्तां[3] सपर्यां पूजाम् उत्कृष्टमासनं च सती नाऽऽदत्त न स्वीकृतवती। तत्र हेतुः पित्रा दक्षेण अप्रतिनन्दिता अनादृता॥ ८॥

अरुद्रभागं न विद्यते रुद्रस्य भागः यस्मिन् तमध्वरं यागं विभौ देवे रुद्रे पित्रा दक्षेण कृतं हेलनम् अपराधं चावेक्ष्य आह्वानाद्यकरणात्। तथा स्वयं यज्ञसदसि पित्रा अनादृता च रुषा लोकान् धक्ष्यती भस्मीकुर्वाणेव चुकोप क्रुद्धवती॥ ९॥

सा सती देवी अमर्षविपन्नया अमर्षेण[4] कोपेन[5] विपन्नया अव्यक्तया गिरा वाचा रुद्रावहेलनादिना समुत्थितान् दक्षं हन्तुमुद्यतान् भूतगणान् मणिमन्मदादीन् स्वतेजसा स्वबलेन निगृह्य निवार्य धूमपथश्रमस्मयं धूमपथेषु धूमादिमार्गप्रदकर्मसु परिश्रमोत्थगर्वं शिवं द्वेष्टीति शिवद्विट् तं दक्षं जगर्ह निन्दितवती निन्दावाक्यान्युक्तवतीत्यर्थः॥ १०॥

**विज.** एवं भर्तृप्रेषितानुचरसूचितस्नेहात् शान्तमनस्कत्वेन पश्चान्न गता किन्तु पुरत एव गत्वा सा यज्ञवार माविशदित्याह - **आब्रह्मेति**। आ समन्तात् ब्रह्मघोषेण वेदध्वनिना ब्रह्मलोकपर्यन्तगामिना ध्वनिना वा ऊर्जितं सङ्कुलं यज्ञार्थं वैशसं पशुसंज्ञपनं पशुहिंसनं यस्मिन् तत्तथा। मृच्च दारु च अयश्च काञ्चनं च दर्भाश्च चर्माणि च तैर्निसृष्टानि निर्मितानि भाण्डानि यस्मिंस्तथा॥ ६॥

1. A, B, J, Va omit गिरा 2. A, B, T omit वेदघोषेण 3. A, B, T omit दत्तां 4. A, T, omit अमर्षेण कोपेन विपन्नया 5. B क्रोधेन

तस्या अवज्ञाकरणप्रकारमाह - **तामागतामिति**। यज्ञकृतो दक्षस्य कश्चनेत्यस्य व्यावृत्तिमाह - ऋते इति, स्वसारः स्वसॄः तत्स्नेहः कुतोऽवगत इति तत्राह - सादराः सानुरागा इति॥ ७॥

सती प्रत्यालिङ्गनादिकं किं कृतवती ? नेति भावेनाह - **सौदर्येति**। प्रधानावज्ञा दुस्सहेति भावेनाह - पित्रेति। अप्रतिनन्दिता अकृतमनस्सन्तोषा॥ ८॥

ततः किमकरोदिति तत्राह - **अरुद्रभागमिति**। न रुद्रस्य भागो यस्मिन् स तथा तम्। कृतहेलनं कृतावज्ञम्॥ ९॥

अधीश्वर्या कुपितमित्यत्र किं लिङ्गमत्राह - **जगर्हेति**। अमर्षेण विपन्नया गद्गदभावं प्राप्तया धूमपथः कर्ममार्गः तद्विषये श्रमः शिक्षा स्मयो गर्वो यस्य स तथा तं, कर्ममार्गेऽतिनिष्णातमित्यर्थः। स्वतेजसा स्वभावेन निगृह्य निवार्य॥ १०॥

## श्रीदेव्युवाच

**न यस्य लोकेऽस्त्यतिशायिनः प्रियस्तथाऽप्रियो देहभृतां प्रियात्मनः।**
**तस्मिन् समस्तात्मनि मुक्तवैरके ऋते भवन्तं कतमः प्रतीपयेत्[1]॥ ११॥**

**दोषान् परेषां हि गुणेष्वसाधवो[2] गृह्णन्ति केचिन्न भवादृशा द्विज[3]।**
**गुणांश्च फल्गून् बहुलीकरिष्णवो महत्तमास्तेष्वविदद्भवानघम्॥ १२॥**

**नाश्चर्यमेतद्यदसत्सु सर्वदा महद्विनिन्दा कुणपात्मवादिषु।**
**सेर्ष्यं[4] महापूरुषपादपांसुभिर्निरस्ततेजस्सु तदेव शोभनम्॥ १३॥**

**यद् द्व्यक्षरं नाम गिरेरितं नृणां सकृत्प्रसङ्गादघमाशु हन्ति तत्।**
**पवित्रकीर्तिं तमलङ्घ्यशासनं भवानहो द्वेष्टि शिवं शिवेतरः॥ १४॥**

**यत्पादपद्मं महतां मनोऽलिभिर्निषेवितं ब्रह्मरसासवार्थिभिः।**
**लोकस्य यद्वर्षति चाशिषोऽर्थिनस्तस्मै भवान् द्रुह्यति विश्वबन्धवे॥ १५॥**

**श्रीध.** निन्दामेवाह - **न यस्येति** त्रयोदशभिः। मुक्तवैरके त्यक्तविरोधे तस्मिन् शिवे भवन्तमृते विना कतमः[5] प्रतीपयेत्

1. M, Ma, Ms प्रतीपकः 2. A, B, G, I, J, T ॰षु 3. M, Ma, Ms द्विजाः 4. M, Ma, Ms सेर्ष्या 5. V adds कः

प्रतिकूलमाचरेत्। वैराभावे हेतवः - यस्य लोके अतिशायिनोऽतिशयितो नास्ति। तथा प्रियश्चाप्रियश्च नास्ति। समासपाठेऽतिशयेन प्रियो नास्ति देहभृतां प्रियोऽयमात्मा[1] यस्य। समस्तस्यात्मनि कारणभूते समस्तरूपे[2] इति वा॥ ११ ॥

तस्य च प्रतिकूलकारणं द्वेधा महत्तमद्रोहेण साक्षात् तद्द्रोहेण च। तत्र पुरुषाणां चातुर्विध्यं वदन्ती महत्तमद्रोहमाह - **दोषानिति** द्वाभ्याम्। हे द्विजेत्यधिक्षेपः। भवादृशाः त्वद्विधाः असूयकाः परेषां गुणेषु दोषानेव गृह्णन्ति न तु गुणान्, [3-]ते अधमा उच्यन्ते[-3]। केचिन्मध्यस्था[4] परगुणेषु दोषान्न गृह्णन्ति, किन्तु यथास्थितान्[5] गुणदोषान् विवेकेन गृह्णन्ति, ते तु महान्त उच्यन्ते। साधवस्तु केवलं गुणानेव गृह्णन्ति न दोषान् ते तु महत्तरा उच्यन्ते। महत्तमास्तु दोषान्न गृह्णन्त्येव, [6]ते च प्रत्युत फल्गूंस्तुच्छानपि गुणान् बहुलीकुर्वन्तीति (बहुली) करिष्णवो भवन्ति। तेषु भवानघमविदत् विदितवान् कल्पितवानित्यर्थः। तच्च "ब्रह्मिष्ठानभिभूय" (भाग. 4-3-3) इत्यनेन सूचितम्॥ १२ ॥

एतच्च दुर्जनेषु युक्तमेवेत्याह - नेति। कुणपं जडं[7] शरीरं तदेवात्मेति वदन्ति ये तेषु ईर्ष्या अक्षान्तिः[8] सेर्ष्यं यथा भवत्येवं महतां विनिन्देति यदेतदाश्चर्यं न भवति। यद्वा महतां पादपांसुभिः सेर्ष्यं निरस्तं तेजः प्रभाव एषामिति। यद्यपि महापुरुषाः[9] स्वनिन्दां सहन्ते तथापि तत्पादरेणवस्तदसहमानाः तेषां तेजो निरस्यन्ति। अतोऽशक्तेषु[10] महन्निन्दनमेवोचितमित्यर्थः॥ १३ ॥

तदेवं महत्तमद्रोहमुक्त्वा तस्मिन्नेव कृतं द्रोहमाह - **यदिति** द्वाभ्याम्। यद्यस्य द्व्यक्षरमात्रमपि[11] शिव इति तत्प्रसिद्धं नाम नृणां सर्वेषामाशु अघं सर्वं हन्ति केवलं गिरैवेरितम् उच्चारितं[12] न तु मनः पूर्वकम्, तच्च[13] सकृदपि प्रसङ्गादपि। तं शिवं द्वेष्टि। न लङ्घ्यं शासनमाज्ञा यस्य। अहो शिवतरोऽमङ्गलरूपः॥ १४ ॥

पापहरत्वमुक्त्वा भुक्तिमुक्तिप्रदत्वेन शिवं वर्णयन्त्याह - **यदिति**। यस्य पादपद्मं महतां[14] मनांस्येवाऽलयः तैः, ब्रह्मरसो ब्रह्मानन्दः स एवाऽऽसवो मकरन्दस्तदर्थिभिः। यच्च अर्थिनः सकामस्य लोकस्य तास्ता आशिषो वर्षति। [15-]विश्वबन्धवे जगत्पित्रे[-15]॥१५॥

**वीर. तान्येवाह - न यस्येति** त्रयोदशभिः। प्रियात्मनः प्रियः निरतिशयप्रीतिविषयः आत्मा परमपुरुषः यस्य सः। "प्रियो हि ज्ञानिनोत्यर्थमहं स च मम प्रियः" (भ.गी. 7-17) इति गीतत्वात्। यस्य रुद्रस्य लोके भवने देहभृतां मध्ये अतिशायनः अतिशयितः प्रियः प्रीतिविषयः तथाऽप्रियो वा नास्ति। सर्वान्तरात्मानं परमात्मानमेव निरतिशयप्रीतिरूपापन्नया भक्त्या भजतः तस्य सर्वं

---

1. V प्रियो यः आत्मा 2. A omits रूपे 3--3. B, J, V, Va omits 4. A, B, J, Va omit पर 5. V गुणान् 6. V omits ते च 7. V मृतं 8. Va अशान्तिः 9. V महान्ताः 10. V उसत्सु 11. B, J, V, Va omit अपि 12. V 'च्च' 13. A, B, J, Va तत्तु 14. A, B, J, Va omit महतां 15--15. B, J, V, Va omit

ब्रह्मात्मकतयानुसन्दधतः प्रियाप्रियादिविभागो नास्तीत्यर्थः। तस्मिन् मुक्तवैरके सर्वभूतसुहृदि समस्तात्मनि स समस्तस्यात्मा आत्मवत्प्रियः तस्मिन्। यद्वा समस्ते आत्मा ब्रह्म पूर्णमिति चित्तं यस्य तस्मिन्। "तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं, सूर्यश्च कक्षीवानृषिर्विप्रश्च" (बृह. उ. 1-4-10) इत्यादि श्रुत्युक्तविधया सर्वात्मकं ब्रह्म सर्वात्मकत्वेन स्वस्मिन् साक्षात्कुर्वतीति वार्थः। योऽहं शरीरकः परमात्मा स एव मन्वादिशरीरक इति श्रुत्यर्थः। यद्वा ब्रह्मण आवेशावतारत्वाद् रुद्रे ब्रह्म[1]दृष्ट्या वा इदमुक्तं - समस्तात्मनीति। अस्मिन् पक्षे षष्ठीतत्पुरुषः स[2]ङ्गतः। एवंविधे रुद्रे भवन्तं विना कतमः को वा प्रतीपयेत् प्रातिकूल्यमाचरेत्॥ ११॥

एवं ब्रह्मविदग्रेसरस्य रुद्रस्य प्रतीपाविषयत्वमुक्तम् अथैतस्मिन् साधौ ब्रह्मविदि कृताप[3]राधात् दुर्जनात् त्वत्तः उत्पन्नमिदं शरीरं त्यक्ष्यामीति वक्ष्यन्ती प्रथमं साध्वसाधुलोकौ विभजति - **दोषानिति**। हे द्विज! पितृशब्देनाऽसम्बोधनं तदधिक्षेपाय भवादृशाः केचित् त्वादृशाः दुर्जनाः परेषां स्वापेक्षया अन्येषां गुणेषु सत्स्वपि दोषानेव गृह्णन्ति तानेवोद्घाटयन्ति न तु गुणान् तेऽसाधव इत्यर्थः। ये पुनः रुद्रादयः दोषान् न गृह्णन्ति किन्तु फल्गूनपि अल्पानपि गुणानेव बहुलीकरिष्णवः वितनोतुमिच्छवो भवन्ति, ते महत्तमाः। गुणेषु साधव इति पाठे ये साधवः फल्गूनपि गुणान् बहुलीकरिष्णवस्ते महत्तमा इत्यन्वयः। तेषु च महत्तमेषु च भवा[4]नघमपराधं अविदत् लब्धवान् कृतवानित्यर्थः॥ १२॥

असतां त्वादृ[5]शानामिदं महत्स्वपचरणं युक्तमेवेत्याह - **नाश्चर्यमिति**। कुणपात्मवादिषु कुणपं शवप्रायं शरीरमेवात्मेति ये वदन्ति तेषु भवादृशेष्वसत्सु सर्वथा सेर्ष्यम् ईर्ष्या अक्षमा सेर्ष्यं यथा भवति तथा महद्विनिन्दा महत्तमविषयनिन्देति य[6]देतत् त[7]दाश्चर्यं न भवति। प्रत्युत महापूरुषपादपांसुभिः महापूरुषाः महत्तमास्तेषाम् अङ्घ्रिरजोभिः निरस्तं तेजः प्रभावो येषां तेषु त्वादृशेषु तदेव महद्विनिन्दनमेव शोभनम् उचितम्। यद्यपि महान्तः स्वनिन्दां सहन्ते, तथापि तत्पादरेणवस्तदसहमानास्तेषां तेजो निरस्यन्ति। अतोऽसत्सु म[8]हद्विनिन्दनमेवोचितमित्यर्थः॥ १३॥

कोऽसावपचारो महत्सु मयाकृत इत्यत्राह - **यदिति** द्वाभ्याम्। यस्य रुद्रस्य द्व्यक्षरं शिव इत्यक्षरद्वयात्मकं नाम नामधेयं प्रसङ्गादपि सकृद्गिरा वागिन्द्रियेणेरितमु[9]च्चारितं नृणामघं पापमाशु द्राक् हन्ति निवर्तयति। सतामपि नामोच्चारणादेः भगवन्नामवदघनिवर्तकत्वादिति भावः। अलङ्घ्यम् अनतिक्रमणीयं शासनमाज्ञा यस्य तं शिवम् अशिवोऽमङ्गलो भवान् द्वेष्टि। अहो कष्टम्। अमङ्गलो द्वेष्टीत्यनेन तद्द्वेषाद्भवतोऽमङ्गलमनन्तरभावीति भावः॥ १४॥

---

1. A, B, T दृष्टैवे॰ 2. A, B, T सम्मतः 3. A, B, T राधिनो 4. A, T ॰नेव॰ 5. A, B ॰शामिदं 6. W omits एतत् 7. A, B, T तदा॰
8. A, B, T omit महत् 9. A, B, T ॰च्च॰

किञ्च ब्रह्मरसासवार्थिभिः ब्रह्मरसो ब्रह्मानन्दः स एवाऽऽसवो मकरन्दस्तदर्थिभिः ब्रह्मानन्दानुभवमधुलिप्सुभिः महतां मनांस्येवालयो भृङ्गास्तैः यस्य रुद्रस्य पादपद्मं निषेवितं "ईश्वराज्ज्ञानमन्विच्छेत्" (मात्स्य.पु.67-41) इति ज्ञानप्रदत्वादिति भावः। कीदृशं तत्पादपद्मं यन्निषेवितं, तत्राह - यत्पादपद्मम् अर्थिनो लोकस्य याचमानस्य जनस्य आशिषो अभीष्टानि वर्षति ददाति तस्मै विश्वबन्धवे विश्वानुकूलाय भवान् द्रुह्यति अपकरोति। "क्रुधद्रुह" इति चतुर्थी॥ १५॥

**विज.** स्त्रीत्वेपि प्रमाणवद्युक्त्या निनिन्देत्याह - **न यस्येति**। लोके भुवने विद्यमानानां देहभृतां शरीरिणां प्रियात्मनोमनोभीष्ट-रूपस्य यस्य रुद्रस्य योग्यतातिरेकेण अतिशायनः प्रियोऽतिप्रियस्तथाऽप्रियो द्वेष्यश्च नास्ति तस्मिन् रुद्रे भवन्तमृते पुरुषाणां कतमः पुरुषः प्रतीपको न कोऽपीत्यर्थः। प्रतीपाकरणे हेत्वन्तरं चाह - समस्तात्मनीति। विष्ण्वादीन् षट् ऋते इन्द्रादिसमस्तस्वामिनि न हिकश्चित् विरोध्य तिष्ठति। स्वाम्यपि वैरकृच्चेत् तस्मिन् द्वेषः सम्भावित इत्यत उक्तमेव हेतुं स्मारयति - मुक्तवैरक इति। वैरेऽप्युपलक्षणं प्रेमापि विमुक्तप्रिय इत्यर्थः॥ ११॥

तत्त्वतोऽपि भवानपि भवद्वेषं कर्तुं न योग्य इत्याह - **दोषानिति**। केचिदसाधवो दुर्जनाः परेषामुत्तमानां गुणेषु दोषानेव गृह्णन्ति न गुणान्। तदुक्तं - "दोषोप्येको यदि गुणगणे तत्र मुक्त्वा गुणौघान्। दोषग्राही भवति हि खलः **सल्लिकातुल्यधर्मः**" इति। भवादृशाः महत्तमाः द्विजा फल्गून् अल्पान्[1] गुणान् बहुलीकरिष्णवो न दोषान् गृह्णन्ति किन्तु गुणानेव। "दोषान्मुक्त्वा गुणमनुभवन् स्वल्पमप्येति तृप्तिं साधुर्लोके सलिलमिलितक्षीरपायीव हंसः।" इति। तत्रैवं शास्त्रे स्थिते महत्तमेषु गणितो भवान् भवद्वेषाद् अघमविदल्लब्धवान्। हि अहो कष्टमिति शेषः। द्विजा इत्यनेन दक्षस्य शास्त्रविचारयोग्यतातिशयं सूचयति॥ १२॥

असतां योग्यो महत्तमेष्वेकस्य तव शिवद्वेषो ममाश्चर्यबुद्धिं जनयतीति भावेनाह - **नाश्चर्यमिति**। कुणं कर्मफलं पिबतीति कुणपो देहः स एवात्मेति वादिनस्तेषु असत्सु ईर्ष्यया सह वर्तमाना[2] महतां विनिन्दाऽस्तीति यन्नैतदाश्चर्यं किन्तु तदेव महद्विनिन्दनमेव शोभनमित्यन्वयः। कुणपात्मवादित्वं च विद्वज्जननिषेवाया अभावादित्याह - महापूरुषेति। क्वचिद् विद्वज्जनसेवया आप्तशास्त्रज्ञानेन हि तत्त्वज्ञानं स्यात् तद् द्वेषान्नास्ति अतो युक्तं कुणपात्मवादित्वेन महद्विनिन्दनं; भवान्नैतादृशोऽतो ममाश्चर्यबुद्धिरिति॥ १३॥

महद्विनिन्दनं मया न कृतमिति वक्तुं न शक्यत इत्याह - **यद् द्व्यक्षरमिति**। शिव इति द्वे अक्षरे यस्मिंस्तत् द्व्यक्षरं यस्य भगवतो यत् द्व्यक्षरं नाम तत् सकृत्कथाप्रसङ्गात् गिरा वागिन्द्रियेणेरितम् उच्चारितं नृणामघम् अन्येन हन्तुमशक्यं दुःखं वाऽऽशु हन्ति नाशयति भवांस्तं शिवं द्वेष्ट्यहो "लुप्तक्रियाया शुचये मानिने भिन्नसेतवे" (भाग. 4-2-13) इत्यतो भवान् शिवेतरो

1. A, B omit अल्पान् 2. A °नेषु; B नाना

लुप्तक्रियोऽशुचिः। शिवस्त्वशुचीनां पुंसां शुचिहेतुदुःखनाशनान्नित्यं शुचिरिति भावेनाह - पवित्रेति। शिवनामकीर्तनादेकदा नष्टं दुःखं पुनर्न रोहतीति भावेनाह - अलङ्घ्येति। न लङ्घ्यम् अन्यथा कर्तुं शक्यं तन्नामकीर्तनादुत्पन्नं शुभं प्रनष्टमशुभं चेति शासनं शास्त्रं यस्य स तथा तम्॥ १४॥

"प्रेतावासेषु घोरेषु" (भाग. 4-2-14) "चिताभस्मकृतस्नानः" (भाग. 4-2-15) इत्यादेः श्लोकद्वयेनोत्तरं ध्वनयति - **यत्पादपद्ममिति**। ब्रह्मरसः ब्रह्मज्ञानजन्य आनन्दः स एवाऽऽसव इन्द्रियतृप्तिकरं मधु तस्यार्थना शीलं येषां ते, तयोक्ताः तैर्महतां सनकादीनां मनांस्येवाऽलयः भृङ्गास्तैर्यस्य पादपद्मं नितरां सेवितं यद्देवदत्तपादवन्निष्फलं नेत्याह - लोकस्येति। आशिषः अभ्युदयलक्षणाः। अनेन गुरुद्रोहित्वं तव प्राप्तमित्युक्तं भवति। "सनकादयो रुद्रशिष्यास्तेषामन्ये तु योगिनः। ब्रह्मशिष्यस्तथा रुद्रो ब्रह्मा नारायणस्य च॥" (ब्राह्मे) इति विशेषवचनान्महतामित्यनेन सनकादयो गृह्यन्ते॥ १५॥

**किं वा शिवाख्यमशिवं न विदुस्त्वदन्ये ब्रह्मादयस्तमवकीर्य जटाः श्मशाने।**
**तन्माल्यभस्मनृकपाल्यवसत्पिशाचैर्ये मूर्धभिर्दधति तच्चरणावसृष्टम्॥ १६॥**

**कर्णौ पिधाय नि[1]रियाद्यदकल्प[2] ईशे धर्मावितर्यसृ[3]णिभिर्नृभिरस्यमाने।**
**छिन्द्यात्प्रसह्य रुशतीमसतां[4] प्रभुश्चेज्जिह्वामसूनपि ततो विसृजेत्सधर्मः॥ १७॥**

**अतस्तवोत्पन्नमिदं कलेवरं न धारयिष्ये शितिकण्ठगर्हिणः।**
**जग्धस्य मोहाद्धि विशुद्धिमन्धसो जुगुप्सितस्योद्गि[5]रणं प्रचक्षते॥ १८॥**

**न वेदवादाननुवर्तते मतिः स्व एव लोके रमतो महामुनेः।**
**यथा गतिर्देवमनुष्ययोः पृथक् स्व एव धर्मे न परं क्षिपेत् स्थितः॥ १९॥**

**कर्मप्रवृत्तं च निवृत्तमप्यृ[6]तं वेदे विविच्योभयलिङ्गमाश्रितम्।**
**विरोधि तद्यौ[7]गपदैककर्तरि द्वयं तथा ब्रह्मणि कर्म नर्छति॥ २०॥**

**श्रीध.** यदुक्तं "शिवापदेशो ह्यशिव" (भाग. 4-2-15) इति, यच्चोक्तं "प्रेतावासेषु" इत्यादि, तदाक्षिपन्त्याह - **किं**

---

1. A, B, G, I, J, T, V निरया° 2. A, B, G, I, J, M, Ma, T °ल्प 3. M, Ma, Ms °घृ° 4. A, B, G, I, J, T °ती° 5. A, B, G, I, J, T °द्ग° 6. M, Ma, Ms °प्युत 7. M, Ma, Ms °दे°

**वेति**। यो[1] जरा अवकीर्य श्मशानेऽवसद् वसति स्म। तस्य श्मशानस्य माल्यानि भस्मानि नृकपालानि च **भूषणत्वेन सन्ति यस्य तं त्वत्तोऽन्ये न विदुः किम्** ? विदन्त्येवेति चेन्न। तथा सति तेषां तद्दास्यानुपपत्तेरित्याह - **तच्चरणादवसृष्टं** गलितं **निर्माल्यं ये**[2] **मूर्धभिर्धारयन्ति**॥ १६॥

इदानीं देहं त्यक्तुकामा धर्मतत्त्वमाह - **कर्णाविति**। **कर्णौ पिधाय**[3]**आच्छाद्य निर्गच्छेत्** यद्यदि मर्तुं मारयितुं वा **अकल्यः**[4] समर्थो न भवति। कदा **धर्माविति** धर्मरक्षके **ईशे** स्वामिनि **असृणिभिर्निरङ्कुशैः नृभिरस्यमाने**ऽधिक्षिप्यमाणे **प्रभुः** शक्तश्चेत् **रुशतीमकल्याणवादिनीं जिह्वां**[5] **प्रसह्य** बलात् **छिन्द्यात्**। **ततोऽपि**[6] स्वयं **प्राणान् विसृजेदिति** यत् स **धर्मः**॥ १७॥

**अत इति** - तव त्वत्त उत्पन्नं **शरीरं**[7] **शितिकण्ठो** नीलकण्ठः **तन्निन्दकात्** प्रमादादापन्नस्य अपवित्रस्य त्यागं विना न शुद्धिरिति दृष्टान्तेनाह - **जग्धस्य** भक्षितस्यान्नस्योद्गिरणं[8] वमनमेव **पुंसो विशुद्धिं प्रचक्षते**॥ १८॥

यदुक्तं "लुप्तक्रियाया शुचये" (भाग.4-2-13) इति तत्राह - **नेति**। **वेदवादान्** विधिनिषेधरूपान् **स्व एव लोके स्वात्मन्येव रममाणस्य महतो मुनेः** सम्यग् विरक्तस्य **मतिर्नानुवर्तते** निवृत्ताधिकारत्वात्[9][10]। अधिकारभेदे दृष्टान्तः - **यथा देवानां गतिराकाश एव मनुष्याणां** पृथिव्यामेव। अतः **एव धर्मे** प्रवृत्तिलक्षणे निवृत्तिलक्षणे वा **स्थितस्सन् परमन्यं** धर्मं पुरुषं वा **न क्षिपेन्न** निन्देत्। व्यवस्थिताधिकारत्वेनोभयोः सत्यत्वात्। न क्षिपेदेवेति वाऽन्वयः॥ १९॥

एतदेवोपपादयन्त्याह - **कर्मेति**। **यत्**[11] **प्रवृत्त**मग्निहोत्रादि, **निवृत्तं** शमदमादि च **ऋतं** सत्यमेव, **यतो वेदे** आश्रितं विहितं **तच्च** विविच्य व्यवस्थयाऽऽश्रितं न त्वविशेषेण। व्यवस्थामेवाऽऽह - **उभयं** रागवैराग्यलक्षणं **लिङ्ग**चिह्नमधिकारिविशेषणं यस्मिन् तत्। ननु "यावज्जीवमग्निहोत्रं जुहोति" "शान्तो दान्तः" (सुबा.उ. 9-14) इत्यादिषु नैवं व्यवस्था प्रतीयते, सत्यम्। तथाप्युभयोरेकाधिकारविरोधात्[12] तथा पर्यवस्यतीत्याह - **युगपद्भावो** यौगपदं यौगपदेनैकस्मिन् कर्तरि तत्कर्मद्वयं **विरोधि**। ननु तर्हि निवृत्तकर्म शिवेनापि कर्तव्यमेव नेत्याह। **ब्रह्मणि** सदाशिवे **अदः**[13] **उभयलक्षणं** किञ्चिदपि **कर्म न ऋच्छति** न प्राप्नोति, अतो यथा प्रवृत्तिनिवृत्त्योः परस्परधर्माकरणे न दोषः तथेश्वरे एतदुभयधर्माकरणेऽपीति भावः॥ २०॥

**वीर.** नन्वमङ्गलाचारत्वात् तन्नामैव न स्मर्तव्यं तत्राह - **किं वेति**। यो रुद्रः श्मशाने जटाः अवकीर्य विक्षिप्य

1. A omits यो 2. B, J, Va omit ये 3. A, B, J, Va omit पिधाय 4. A, B, J, Va कल्पो न भवति। 5. B, J, V, Va omit जिह्वां 6. V तथा; Va सोऽपि 7. A, B, J, Va omit शरीरं 8. A, B, J, Va 'द्ध' 9. V 'रि' 10. V 'रि' 11. A, B, J, Va omit यत् 12. V कारित्ववि' 13. A, B, J, Va omit अदः उभयलक्षणं

तन्माल्यभस्मनृकपाली श्मशानमाल्यभस्मनरकपालवान् पिशाचैः सह अवसत् तमेवमशिवममङ्गलाचारं रुद्रं, तच्चरणावसृष्टं रज इत्यध्याहारः। ये ब्रह्मादयो मूर्धभिः शिरोभिर्दधति धारयन्ति ते त्वदन्ते त्वत्तोऽन्ये[1] ब्रह्मादयः मरीच्यादिनवब्रह्मप्रभृतयः, यद्वा अतद्गुणसंविज्ञानो बहुव्रीहिः, अन्यथा "अजंलोकगुरुं नत्वा" (भाग. 4-6-7) इत्यादिपूर्वापरविरोधात्। शिवाख्यं शिव इति आख्या नाम यस्य तथाभूतं न विदुः किम् ? विदुरेवेत्यर्थः। अमङ्गलाचारस्त्वनुकरणमात्रमिति भावः। ननु अस्य[2] परस्य ब्रह्मणो विष्णोः सर्वोत्तमत्वजगत्कारणत्वोपास्यत्वमोक्षप्रदत्वादिप्रतिपादकवेदान्तार्थोऽपि बृंहणपरेऽस्मिन् पुराणे मध्ये तत्र तत्र रुद्रादिजीवविशेषस्य कार्यत्वकर्मवश्यत्वादीन् प्रतिपाद्य पुनः (तस्मिन्) "समस्तात्मनि मुक्तवैरके" (भाग. 4-4-11) "ब्रह्मादयो ये मूर्द्धभिदधति तच्चरणावसृष्टं" (भाग. 4-4-16) "नाहं न यज्ञो न च यूयमन्ये। ये देहभाजो मुनयश्च तत्त्वम्। विदुः प्रमाणं बलवीर्ययोर्वा।" (भाग. 4-6-7) "त्वमेव भगवन्नेतच्छिवशक्त्योः स्वरूपयोः। विश्वं सृजसि पास्यत्सि क्रीडन्नूर्णपदो यथा। (भाग. 4-6-43) अहं ब्रह्मा च शर्वश्च जगतः कारणं परम्"। (भाग. 4-7-50) "त्रयाणामेकभावानां यो न पश्यति वै भिदाम्॥ सर्वभूतात्मनां ब्रह्मन् ! स शान्तिमधिगच्छति।" (भाग. 4-7-54) इत्यादिषु भवानी ब्रह्म विष्ण्वादिवचनेषु सर्वोत्तमत्वजगत्कारणत्वोपास्यत्वादीन् विरुद्धान् प्रतिपादयन् भगवान् पाराशर्यः कथं विश्वसनीय इति चेन्न। अत्र पुराणे परस्परविरुद्धार्थकथनं न क्वाप्यस्ति। क्वचित् प्रतीयमानमपि देवतान्तरस्योत्तमत्वकारणत्वोपास्यत्वादिकं प्रतर्दनाधिकरणन्यायेन रुद्रादिशरीरकपरमात्माभिप्रायकं रुद्रादेः भगवदावेशावतारत्वाद्वा भगवद्दृष्ट्योपपन्नमेतत्। अथवा यथावस्थित भूतपूर्ववृत्तान्तस्य वा अस्मिन् पुराणे कथनात् तत्र तत्र कथासु भवानीप्रभृतिभिर्यानि वाक्यान्यभिहितानि तेषामेव अत्र निबद्धत्वात् तत्र भवान्यादिवाक्यानां पतिपारार्थ्यब्रह्मात्मकत्वप्रशंसात्मकत्वादितात्पर्यविशेषप्रवृत्तत्वान्नपाराशर्येण विरुद्धमभिहितम्। नन्वेवमपि ब्रह्मात्मकत्वेनापि रुद्राद्युपासनं[3] कर्तव्यमिति। "यद्द्व्यक्षरं नाम गिरेरितं नृणाम्। सकृत्प्रसङ्गादघमाशु हन्ति।" (भाग. 4-4-14) पवित्रकीर्ति "ये मूर्द्धभिर्दधति तच्चरणावसृष्टम्" (भाग. 4-4-16) इत्यादिवचनेभ्यः प्रतीयते क्वचित् क्वचित्। सात्त्विकतन्त्रे "नान्यं देवं नमस्कुर्यान्नान्यं देवं निरीक्षयेत्। नान्यं प्रासादमारोहेन्नान्यदायतनं[4] विशेत्" इत्यादिभिः देवतान्तरवन्दनादिप्रतिषेधः तथा तद्भक्तैः सहदर्शनसमानासनसंस्पर्शसहसम्भाषण[5] दृष्टिभुक्त्यादयः प्रतिषिद्धाः, प्रत्युत देवतान्तर तद्भक्तादयस्तत्र तत्र निन्द्यन्ते। अतः सात्वतैतत्पुराणयोर्विरोधः, मैवम्। ब्रह्मोपासनं हि द्विविधं सद्वारकमद्वारकं चेति। तत्र सद्वारकोपासनं नाम रजस्तमःप्रकृतिब्रह्मरुद्रादिजीवशरीरकपरमात्मोपासनम्, अद्वारकन्तु शुद्धसत्वमयस्वेच्छोपात्तदिव्यमङ्गलविग्रहविशिष्टस्य

---

1. A, B, T omit त्वत्तोऽन्ये 2. W omits अस्य 3. A, B, T add अपि 4. A, B, T प्र° 5. A, B, T omit सह

निरस्तनिखिलदोषस्यानन्तकल्याणगुणाकरस्य श्रियः पत्युर्नारायणस्योपासकरुच्यनुसारेण वासुदेवसङ्कर्षणरामकृष्णादि व्यूहविभवादिभेदेनोपासनम्। तत्राद्यमुपासनं तत्तत्फललिप्सुभिः कार्यम्। द्वितीयं तु मुमुक्षुभिः कामिभिश्च। एतच्च सर्वं भगवता गीताचार्येणैवाभिहितम् - यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति'' (भगी. 7-21) इत्यादिना। ''अनन्याश्चिन्तयन्तो माम्'' (भगी. 9-22) इत्यादिना, ''देवान् देवयजो यान्ति'' (भगी. 7-23) इत्यादिना च। अत्राप्युपक्रमे प्रथमस्कन्धेऽभिहितं ''रजस्तमःप्रकृतयः समशीलान् भजन्ति वै। पितृभूतप्रजेशादीन् श्रियैश्वर्य प्रजेप्सवः''। (भाग. 1-2-27) ''श्रेयांसि तत्र खलु सत्वतनोर्नृणां स्युः'' (भाग. 1-2-23) इति। तथा द्वितीये ''अकामः सर्वकामो वा मोक्षकाम उदारधीः। तीव्रेण भक्तियोगेन यजेत पुरुषं परम्।'' (भाग. 2-3-10) इति। वक्ष्यते च ''धर्मार्थकाममोक्षाणां(ख्यं) य इच्छेच्छ्रेय आत्मनः। एकमेव हरेस्तस्य कारणं पादसेवनम्'' (भाग. 4-8-41) इति। एवं स्थिते द्विविधयाप्युपासनया अव्यभिचारिण्यैव भवितव्यमिति मुमुक्षया भजतां स्वोपास्यात् देवतान्तरवैभवादिदर्शनेन नमस्कारादिकरणेन च स्वदेवताभक्तिर्व्यभिचरिता स्यादिति सर्वथा मुमुक्षूणां देवतान्तरभजनं निषिध्यते, सर्वदेवतानां ब्रह्मात्मकत्वेनानुसन्धानं त्वविरुद्धमेवेति, न सात्वतैतत्पुराणयोर्विरोधः, देवतान्तर तद्भक्तादिनिन्दा तु ''न हि निन्दा निन्द्यं निन्दितुं प्रवृत्ता, किन्तु निन्द्यादितरत्स्तोतुम्'' इति न्यायेनोपपन्नेत्य[1]वगन्तव्यम्॥ १६॥

भवतु बहुधा भवः मयाऽभिभूतस्तथापि किं भवत्या भवितव्यमित्यत्राह - **कर्णाविति** द्वाभ्याम्। धर्मावितरि धर्मरक्षके ईशे ईश्वरांशभूते महत्तमे असृणिभिर्निरङ्कुशैः अनिवारितैर्नृभिर्दुर्जनैः अस्यमाने अधिक्षिप्यमाणे सति यद्यधिक्षेपं श्रृण्वन् सुजनः अकल्यः[2] विनिन्दकदुर्जनशिक्षायामसमर्थस्तर्हि कर्णौ श्रोत्रे आच्छाद्य ततो निर्यात्[3] निर्गच्छेत्, यदि प्रभुः समर्थश्चेत् रुशतीं दुष्टां जिह्वां प्रसह्य बलात् छिन्द्यात् ततः स्वयमप्यसून् प्राणान्[4] विसृजेदिति यत् स धर्मः॥ १७॥

अतः शितिकण्ठगर्हिणः शङ्करद्वेषिणस्तव - अपादानस्यैव शेषत्वविवक्षया षष्ठी - उत्पन्नं मम मदीयं कलेबरं न धारयिष्ये प्रमादादापन्नस्याऽपवित्रस्य त्यागं विना न शुद्धिरिति दृष्टान्तेनाह - मोहाज्जग्धस्य भक्षितस्य जुगुप्सितस्य दुष्टस्यान्धसोऽन्नस्य उद्गिरणं वमनमेव पुनः विशुद्धिं प्रचक्षते कथयन्ति॥ १८॥

ननु वृधा किमेवमागृह्णासि? यतोऽसावमङ्गलो रुद्रो वैदिकं पन्थानमुल्लङ्घ्य वर्तते, अतो मया वैदिकमार्गानुवर्तिना श्रेष्ठेणाक्षिप्त इत्यत्राह - स्वे स्वात्मनि लोके लोक्यते परिशुद्धमनसा दृश्यत इति लोकः ब्रह्म तस्मिन् रममाणस्य महामुने रुद्रस्य मतिर्वेदवादान् ''अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति अपामसोमममृता अभूम'' (आप.श्रौ.सू. ८-1-1) इत्यादीन्

1. A, B, T °त्येवाव 2. A, B, T °ल्पः 3. A, B, T निरयात् 4. W omits प्राणान्

कर्मप्रोचककानर्थवादान्नानुवर्तते तेषु नासक्ता भवति। निवृत्तिमार्गनिष्ठस्य न प्रवृत्तिमार्गे रुचिरुत्पद्यत इति न तस्य वैदिकपथाऽननुवर्तनमिति भावः। अनयोः प्रवृत्तिनिवृत्तिधर्मनिष्ठयोराचारः पृथगेव दृश्यते, यथा देवमनुष्ययोः गतिः पृथगेव, देवानां गतिराकाश एव। मनुष्याणां गतिः पृथिव्यामेव तद्वत्। अथापि भवानेव श्रेष्ठस्तथाप्युत्कृष्टः स्वकीये धर्मे स्थितो वर्तमानः परं निकृष्टं न क्षिपेन्नाधिक्षिपेदिति यत् स एव धर्मः ॥ १९॥

प्रवृत्तिधर्ममपि वैदिकत्वाविशेषात् किमिति नानुवर्तते भव इत्यत्राह - **कर्मेति**। प्रवृत्तं स्वर्गादिफलोद्देशेन प्रवृत्तं कर्म, तथा निवृत्तं फलकामनातो निवृत्तं च कर्म। उभय[1] लिङ्गं फलाभिसन्धिस[2]हितत्वासहितत्वाभ्यां चिह्नाभ्यां युक्तं यथा भवति तथा वेदे विविच्य आश्रितं "स्वर्गकामो यजेत" "शान्तो दान्त उपरतः" (सुबा.उ.9-14) "तमेतं वेदानुवचनेन ब्रह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" (बृह.उ. 4-4-22), "धर्मेण पापमपनुदति" इत्यादि वेदे असाङ्कर्येण यद्यपि विहितं तथापि तद्द्वयं प्रवृत्तिनिवृत्तिभेदेन द्विविधं कर्मयौगपद्येनैककर्तर्येकस्मिन्नधिकारिणि विरोधि परस्परविरुद्धम्। अतो ब्रह्मणि ब्रह्मज्ञाने कर्म प्रवृत्तं निवृत्तं चोभयं कर्म नर्च्छति न प्राप्नोति साधनतामिति शेषः। केवलं निवृत्तं कर्मैव ज्ञानयो[3]गानुगुणं न तु उभयमित्यर्थः। निवृत्तं कर्म शिवेनापि क्रियत इति भावः॥ २०॥

**विज.** त्वदन्ये ब्रह्मा आदिः पिता येषां ते ब्रह्मादयः ब्रह्मपुत्राः सनकादयः। यो रुद्रस्तन्माल्यभस्मनृकपाली तस्मिन् श्मशाने विद्यमानप्रेतालङ्कारमालायोग्यास्थिभस्मनरकपालवान् जटा अवकीर्य प्रसार्य पिशाचैस्सह श्मशानेऽवसदिति तं शिवाख्यमशिवं विदुः किम्? न विदुरेव, नित्यशुद्ध इत्येव विदुः। कुत इति तत्राह - ये मूर्धभिरिति। ये सनकादयः तच्चरणावसृष्टरज आदिकं मूर्धभिर्दधति। अनेन शिवस्याशिवत्वे ज्ञानपूर्वकं तच्चरणरजोधारणासम्भवस्तत्करणाच्च, अतो नित्यशुद्धं इति तर्कः सूचितः। मूर्धभिर्दधतीत्यनेन पुरुषार्थापे[4]क्षया पादपांसुधारणं न त्वन्यथेति ध्वनयति। तदुक्तं - "सुपर्ण शेषप्राणेश ब्रह्म विष्णून् श्रियं गिरम्। ऋते नमति यो रुद्रं क एव पुरुषार्थभाक्" (गारुडे) इति॥ १६॥

सभायां धर्मसङ्कटे प्राप्ते सभ्यैः कर्तव्यं धर्ममाह - **कर्णाविति**। धर्मस्यावितरि ईशे स्वामिनि अघृणिभिर्दयागुणरहितैः नृभिरस्यमानेऽधिक्षिप्यमाणे सति सभ्यो यद्यकल्पः शिक्षितुमसमर्थस्तर्हि स्वकर्णौ पिधाय निरियात् तस्माद्देशान्निर्गच्छेत् प्रभुश्चेदसतां रुशतीं परुषभाषिणीं जिह्वां प्रसह्य छिन्द्यात्। तथा प्रभुत्वाऽसम्भवेऽसून् वा विसृजेत् स धर्म इत्यन्वयः॥ १७॥

---

1. A, B, T °योर्लिङ्गं 2. A, T रहितत्वसहि° 3. W मार्गा° 4. A °णा

अपिशब्देनेदमेव सम्भावितमिति ध्वनितं स्पष्टयति - **अतस्तवेति**। तव वीर्यादुत्पन्नं शितिकण्ठगर्हिणो नीलकण्ठद्वेषिणः। अस्मिन्नर्थे - जग्धस्येति। जग्धस्य भुक्तस्यान्धसोऽन्नस्योद्धरणं वमनं प्रचक्षते वदन्ति[1] विद्वांस इति शेषः॥ १८॥

ननु ममापराधमेव वदसि मातुलत्वेन गुरुं मां दृष्ट्वाऽभ्युत्थानादिकमकुर्वतस्तस्यापराधं किं न स्मरसीति तत्राह - **न वेदवादानिति**। ज्ञानित्वेन स्वेच्छा वृत्तिविधेर्महामुनेः सर्वज्ञतमस्य शिवस्य स्व एव लोके स्वबिम्बभूते प्रकाशमाने हरौ रमतो रममाणस्य तद्दर्शनसुधापानेन नित्यतृप्तस्य मतिर्वेदवादान् वर्णाश्रमप्रयुक्तानभ्युत्थानादिवेदविधीन् नानुवर्तते नानुसरति लौकिकविलक्षणत्वात्। तत्र दृष्टान्तमाह - यथेति। यथा देवमनुष्ययोर्गतिर्मार्गः पृथक् भिन्नः तस्मात् स्व एव धर्मे स्वविहिते धर्मे स्थितः परमन्यं न क्षिपेत् न दूषयेत्, अतस्तवैवानर्गलोऽपराध इति भावः॥ १९॥

ननु ज्ञानिनः प्रवृत्तिकर्माऽसम्भवेऽपि निवृत्तिकर्मसम्भवतीति तत्राह - **कर्मेति**। वेदे प्रवृत्तं निवृत्तमित्युभयलिङ्गमुभयविधलक्षणं कर्म विविच्याऽऽश्रितं प्रतिपादितम्। "स्वर्गाद्यर्थं प्रवृत्तं स्यान्निवृत्तं मुक्तये तु यत्" (भविष्यत्पुराणे) इति विवेकं कृत्वा कथितमित्यर्थः। ततः किं तत्राह - विरोधीति। तद्द्वयं यौगपद् युगपदेककालमेककर्तरि विरोधि प्रकाशतमसोरेकत्र अवस्थानवद्विरुद्धं स्यादित्यर्थः। ततश्च प्रकृते किं तत्राह - तथेति। द्वयमित्यनुवर्तते। यथा द्वयमेकस्मिन् कर्तरि विरुद्धत्वादुपरतं तथाऽऽब्रह्मणि सम्यक् ज्ञानिनि जीवन्मुक्तेऽपि द्वयं कर्म नर्च्छति न प्राप्नोति "आब्रह्मस्थितधीर्जीवन्मुक्तश्चेत्यभिधीयते। यस्तस्य न निवृत्तं च प्रवृत्तं कर्म चेष्यते।" (भविष्यत्पुराणे) इति वचनात्। ब्रह्मण्यद्वितीये सद्वितीय कर्त्राश्रयं कर्म न घटत इत्यर्थस्य अनुपपत्तेरुक्त एवार्थः। ननु "अबध्नन् पुरुषं पशुम्"। (पु.सू. 1-3) इत्यादि श्रुतेर्देवानामपि कर्मप्रतीतेः रुद्रस्यापि देवान्तर्भावात्तस्य कथं तदनर्हत्वमुच्यत इति चेदुच्यते - नास्माभिर्देवस्य कर्ममात्राभाव उच्यते, किन्तु विष्णोराज्ञया नियताधिकारिकं नियमनामकं कर्मास्त्येव मुक्तौ सुखोद्रेकहेतुत्वात्। तदुक्तं "यत्तु देवाः प्रकुर्वन्ति स महानियमः स्मृतः। स महानियमो नाम कर्मयत्वाधिकारिकम्। महतो नियमाद्विष्णोः प्रीत्या मुक्तौ सुखोन्नतिः। केचिन्निवृत्तमित्याहुर्महानियममप्युत॥" (भविष्यत्पुराणे) इति। एतदपि उत वेदे विविच्येति ध्वनितम्। तस्मान्महानियमाख्यकर्माधिकृतस्य स्थितप्रज्ञस्य त्वन्निन्दया गुणहीनत्वं नाशङ्कनीयम्। "यदि देवश्च ऋष्याद्या निन्द्यन्ते यत्र कुत्रचित्। न तावता गुणैर्हीना स्थितप्रज्ञा हि ते मताः। यथायोग्यं तु तात्पर्यं निन्दया अन्यदेव तु।" (गारुडे) इति वचनात्॥ २०॥

**मा वः पदव्यः पितरस्मदास्थिता या यज्ञशालास्वनुधूमवर्त्मभिः[2]।**
**[3]तदन्नतृप्तैर[4]सुभृद्भिरीडिता अव्यक्तलिङ्गा अवधूतसेविताः॥ २१॥**

---

1. A adds तावत् 2. A, B, G, I, J, T शालासु न धूमवर्त्मभिः; M, Ma, Ms शालाऽऽसनधूमवर्त्मनाम् 3. A, B, G, I, J, t, V, त॰
4. M, Ma, Ms ॰हृ॰

[1]नैतेन देहेन हरे कृतागसो देहोद्भवेनालमलं कुजन्मना।
व्रीडा ममाभूत्कुजनप्रसङ्गतस्तज्जन्म धिग् [2]यो महताम[3]हृद्यकृत्॥ २२॥

गोत्रं त्वदीयं भगवान् वृषध्वजो दाक्षायणीत्याह यदा सुदुर्मनाः।
व्यपेतनर्म[4]स्मितमाशु त[5]द्ध्यहं [6]व्युत्स्रक्ष्य एतत्कुणपं त्वदङ्गजम्॥ २३॥

## मैत्रेय उवाच

इत्यध्वरे दक्षमनूद्य शत्रुहन् क्षितावुदीचीं निषसाद शान्तवाक्।
स्पृष्ट्वा जलं पीतदुकूलसंवृता निमील्य दृग्योगपथं समाविशत्॥ २४॥

**श्रीध.** "चिताभस्मकृतस्नानः" (भाग. 4-2-15) तथा नग्नः इत्यादिना यो भोगाद्यभाव उक्तस्तत्राह - **मेति**। हे पितः! अस्माभिरास्थिताः आश्रिताः पदव्योऽणिमादिसमृद्धयो वः युष्माकं मा न सन्तीत्यर्थः। यतो वः पदव्यो यज्ञशालास्वेव भवति, ताश्च तदन्नेन यज्ञगतेनान्नेन तृप्तैः केवलमीडिता धूमवर्त्मभिश्च भुज्यन्ते। या अस्मत्पदव्यस्तास्तु नैवम्भूताः किन्तु अव्यक्तलिङ्गाः न व्यक्तं लिङ्गं हेतुर्यासां ताः, इच्छामात्रप्रभवत्वात्। अवधूतैर्ब्रह्मविद्भिः सेविताः। अतोऽहमाढ्यो रुद्रो दरिद्र इति गर्वं मा कृथाः इति भावः॥ २१॥

किं बहुनोक्तेन इमं, देहं त्यक्ष्याम्येवेत्याह - **नेति** द्वाभ्याम्। एतेन नाऽलं नपूर्यते किम् अपि त्वलमेव। कथम्भूतेन कुजन्मना, तदेवाह - हरे [7]कृतागसः कृतापराधस्य तव देहादुद्भूतेन [8]उत्पन्नेन। ननु श्लाघ्योऽयं देहः कथं त्याज्यस्तत्राह - कुजनस्य [9]कुत्सितजनकस्य तव प्रसङ्गतः सम्बन्धान्मम लज्जाऽभूत्। अतो यो महताम् [10]अहृद्यकृत् [11]अप्रियकर्ता तस्माद्यज्जन्म तद् धिक् त्वत्सम्बन्धादश्लाघ्यमित्यर्थः॥ २२॥

**गोत्रमिति**। किञ्च परिहासादिषु [12]विनोदेनापि दाक्षायणीति सम्बोधयन् त्वदीयं त्वत्सम्बन्धवाचकं गोत्रं नाम यदा वृषध्वज आह गृह्णाति तदाऽहं व्यपेतनर्मस्मितं यथा भवति, एवं सुदुर्मना अतिदुःखितचित्ता भवामि। तत्तस्मात् हि निश्चितमेतत्कुणपप्रायं व्युत्स्रक्ष्ये त्यक्ष्यामि॥ २३॥

---

1. M, Ma, Ms ए॰ 2. M, Ma, Ms यन्म॰ 3. A, B, G, I, J, M, Ma, T ॰व॰ 4. M, Ma, Ms ॰स्थि॰ 5. I तदाहं; 6. M, Ma, Ms तावत् Ma, Ms उत्स्रक्ष्य 7. A, B, T, J, Va omit कृतागसः 8. V omits उत्पन्नेन 9. B, J, Va omit कुत्सितजनकस्य 10. A, B, J, Va omit अहृद्यकृत् 11. V वि॰ 12. V ॰नोपवाक्यादिषु

**इतीति**। दक्षं प्रत्यनुवादं कृत्वा शत्रुहन्! क्रोधादिरिपुघातिन्! उदीचीमुदीच्यां दिशि (उदीचीति) पाठान्तरे उदङ्मुखी शान्तवाक् गृहीतमौना जलं स्पृष्ट्वाऽऽचम्य दृक् दृशम्॥ २४॥

**वीर.** यत एवोभयविधं कर्माधिकारिभेदेन व्यवस्थितम् अत एव अस्मदनुष्ठितनिवृत्तिधर्मसाध्या अणिमादयः **सिद्धयः** प्रवृत्तिधर्मपरायणानां भवतां न सन्तीत्याह - हे पितः! अस्मदास्थिता[1] अस्माभिराश्रिताः परिगृहीताः इत्यर्थः। पदव्यः **अणिमादयः** सिद्धयः वः युष्माकं मा न सन्तीत्यर्थः। तर्हि अस्माकं सिद्धयो रुद्रस्य न सन्तीति चेत्तत्राह - या भवदीयाः स्वर्गादिपदव्यः ताः अनुधूमवर्त्मभिः धूमादिमार्गप्रदयज्ञादिकर्मानुयायिभिः कदन्नतृप्तैः यज्ञियेन कुत्सितेनान्नेन तृप्तैरसुभृद्भिः प्राणिभिः यज्ञशालास्वेवेडिताः स्तुताः, अस्मदास्थितास्तु पदव्यः अव्यक्तलिङ्गा दुरवगमचिह्ना दुर्विभाव्याः अवधूतैः निरस्तनिखिलजरामरणादिसांसारिकधर्मैः सेविताः परिगृहीताः, अतः फलतोऽनुष्ठानतश्च महदेव वैलक्ष्यण्यं प्रवृत्तिनिवृत्तिधर्मयोरिति न महत्तमानां प्रवृत्तिधर्मे रुचिरुत्पद्यत इति भावः॥ २१॥

किं बहुनोक्तेन, सर्वथा[2] स्वदेहं त्यक्ष्याम्येवेत्याह[3] - **नैति** द्वाभ्याम्। हरे रुद्रे कृतागसः कृतापराधस्य तव देहोद्भवेन देहादुत्पन्नेन आर्षत्वात् सापेक्षस्यापि समासः नित्यसापेक्षत्वाद्वा। एतेन कुजन्मना मदीयेन कुत्सितेन देहेन न न प्रयोजनं किन्तु अलम् अलम्। ननु श्लाघ्यमिमं देहं कथं त्यक्ष्यसि तत्राह - कुजनस्य तव प्रसङ्गात् सम्बन्धात् मम व्रीडा लज्जा अभूत्। अतो महतामहृद्यकृत् विप्रियकर्ता देहः तस्माद्यज्जन्म तद्धिक् निन्दितम्। त्वत्सम्बन्धात् अश्लाघ्यमित्यर्थः॥ २२॥

किञ्च बृषभध्वजो रुद्रः परिहासादिषु नर्मोक्तिषु मां दाक्षायणीति सम्बोधयन् त्वत्सम्बन्धबोधकं गोत्रं नाम यदा आह गृह्णाति तदाहं व्यपेतनर्मस्मितं व्यपेतम् अपगतं नर्म परिहासः स्मितं च यथा भवत्येवं सुदुर्मना अतिदुःखितचित्ता भवामि तत्तस्मात् हि निश्चितम्। एतत्कुणपप्रायं त्वदङ्गाज्जातमिदं कलेवरं व्युत्स्रक्ष्ये त्यक्ष्यामि॥ २३॥

हे शत्रुहन्! विदुर! इति उक्तप्रकारेण अध्वरे यज्ञे दक्षमनूद्य प्रत्युच्य उदीचीमुत्तरदिशं प्रविश्येति शेषः। शान्तवाक् गृहीतमौना निषसाद उपविष्टवती। तत्र जलं स्पृष्ट्वा आचम्येत्यर्थः। पीतदुकूलवस्त्रेण संवृता प्रावृता[4] दृक् दृशम्। आर्षत्वात् द्वितीयाया लुक्। निमील्य योगपथं योगिनां देहत्यागप्रकारं समाविशत् आश्रितवतीत्यर्थः॥ २४॥

**विज.** अनन्तरातीतग्रन्थेन रुद्रदक्षयोः पृथङ्मार्गत्वं ध्वनितं कण्ठोक्तीकरोति - **मा वः** इति। हे पितः! **अस्मदास्थिता** अस्माभिराश्रिताः अवधूतसेविताः सनकादियोगीन्द्रैरभ्यस्ताः। अव्यक्तलिङ्गा अन्यैरज्ञातलक्षणा अर्चिरादिमार्गलक्षणा याः पदव्यस्ता

---

1. T °स्थि° 2. W omits सर्वथा 3. B, T त्यक्ष्यत्ये° 4. A, T omit प्रावृता

वो युष्माकं मा नैव भवति । यज्ञशालायामासनेन दीक्षालक्षणेन धूमवर्त्म धूमादिमार्गो येषां ते तयोक्ताः तेषां युष्माकं कदन्नतृप्तैः पशुमांसलक्षणेनान्नेन अलम्बुद्धिं गतैरसुहृद्भिर्पशुप्राणहारिभिः पुरुषैरीडिता या धूमादिलक्षणपदव्यस्ताः अस्माकं नैवेति यदतः पृथङ्मार्गत्वात् त्वन्निन्दया न रुद्रस्य गुणहीनत्वम् अतो न तस्य दूषणमुचितमिति भावः ॥ २१ ॥

किं बहुनोक्तेनेति स्ववैराग्यमाश्रावयति - **एतेनेति** । हरे रुद्रे कृतागसः कृतापराधस्य तव देहोद्भवेन देहाज्जातेन अत एव कुजन्मना लोके निन्दितोत्पत्तिना कस्मादीदृशं वैराग्यं तवेत्यत आह - व्रीडेति । कुत्सितश्चासौ जनःकुजनो भवादृशः तस्य प्रसङ्गतो जन्यजनकसम्बन्धकथालक्षणः तस्मात् कारणान्तरं चाह - तज्जन्मेति । यन्महताम् अवद्यकृत् मनोविप्रियकारि तज्जन्म धिक् निन्दितमित्यर्थः ॥ २२ ॥

ततः किं फलितम् ? तत्राह - **गोत्रमिति** । वृषध्वजो भगवान् दाक्षायणी दक्षपुत्रीति त्वदीयं गोत्रं त्वन्नाम्नोपेतं नामविशेषं, यदा यावत् सुदुर्मनास्त्वन्नामस्मरणमात्रेण सुतरां विषण्णमना अत एव व्यपेतनर्मस्मितमिति क्रियाविशेषणं, अपगतनर्मवचनयुक्तमन्दहासो यथा भवति तथा मां प्रत्याह वक्ष्यति - हे तात ! तावत्ततः पूर्वमेव त्वदङ्गजं तव शरीरात् उत्पन्नं कुणपं कुत्सितशरीरमुत्स्रक्ष्ये इत्यन्वयः । वृषध्वजः स्नेहवशाद् यदा दाक्षायणीति त्वदीयं गोत्रमाह तावत्तदा आशु त्वदीयद्वेषस्मरणाद् व्यपेतनर्मस्मितं सुदुर्मना भवति । अतः इतःपरं तथा मा भूदिति कुणपमुत्स्रक्ष्ये इति वा । मम देहत्यागस्तृणत्यागतुल्य इति द्योतनाय आत्मनेपदप्रयोगः ॥ २३ ॥

एवं देहत्यागस्यायत्नसाध्यत्वेऽपि इति कर्तव्यतायाः फलाधिक्यं स्यादिति सूचनाय योगिजनशिक्षणाय च देहत्यागः इति कर्तव्यतां दर्शयत्यस्मिन्नध्याये - **इतीति** । उदीचीं दिशमुद्दिश्य क्षितौ निषसादेत्यन्वयः । धूमाद्यध्वनि रमयतीत्यध्वरः, तस्मिन् यज्ञे, स्पृष्ट्वाऽऽचम्य, पीतं च तत् दुकूलं च तेन संवृता छन्ना दृक् दृशौ निमील्य निमीलनयुक्तदृग्वा योगपथं देहोत्क्रमणयोगमार्गम् ॥ २४ ॥

**कृत्वा समानावनिलौ जितासना सोदानमुत्थाप्य च नाभिचक्रतः ।**
**शनैर्हृदि स्थाप्य धियोरसि स्थितं कण्ठाद् भ्रुवोर्मध्यमनिन्दितानयत् ॥ २५ ॥**

**एवं स्वदेहं महतां महीयसा मुहुः समारोपितमङ्कमादरात् ।**
**जिहासती[1] दक्षरुषा मनस्विनी दधार गात्रेष्वनिलाग्निधारणाम्[2] ॥ २६ ॥**

---

1. V, W जहौ सती 2. M, Ma, Ms °णम्

**ततः स्वभर्तुश्चरणाम्बुजासवं जगद्गुरोश्चिन्तयती न चापरम्।**
**ददर्श [1]देहे हतकल्मषा[2] सती सद्यः प्रजज्वाल [3]समाधिनाग्निना॥ २७॥**

**तत्पश्यतां खे भुवि चाद्भुतं महद् हाहेतिवादः सुमहानजायत।**
**हन्त प्रिया [4]दैवतमस्य देवी जहावसून् केन सती प्रकोपिता॥ २८॥**

**अहो [5]अनात्म्यं महदस्य पश्यत प्रजापतेर्यस्य [6]चराचरं प्रजाः।**
**जहावसून् यद्विमताऽऽत्मजा सती मनस्विनी [7]मानमभीक्ष्णमर्हति॥ २९॥**

**श्रीध.** योगमार्गमेवाह - **कृत्वेति**। अनिलौ प्राणापानौ ऊर्ध्वाधोवृत्तिकरौ निरोधेन समानावेकरूपौ नाभिचक्रे कृत्वा तत उदानमुत्थाप्य धिया सह हृदि स्थापयित्वा कण्ठमार्गेण भ्रुवोर्मध्यमनयत्॥ २५॥

**एवमिति**। महतां पूज्यतमेन [8]श्रीरुद्रेण॥ २६॥

**तत[9] इति**। [10]चरणाम्बुजाऽऽसवं चरणारविन्दमकरन्दं भर्तुरपरं न ददर्श। देहश्च सद्यः प्रज्वलितोऽभूत्। **समाधिना**[11] योऽग्निस्तेन॥ २७॥

**तदिति**। खे भुवि च हाहेत्यादिवादः। तमेवाह हन्तेति विषादे। दैवतमस्य पूज्यतमस्य प्रिया केन दक्षेण प्रकोपिता सती॥ २८॥

**अहो इति**। महदनात्म्यं दौर्जन्यम्। अस्य सर्वत्र स्नेह एव न्याय्यः इत्याहुः - यस्येति। येन विमताऽवज्ञाता॥ २९॥

**वीर.** योगपथाश्रयणमेवाह - **कृत्वेति**। जितमासनं यथा सा क्लमरहिता अनिन्दिता निर्दुष्टा सती अनिलौ प्राणापानौ ऊर्ध्वाधोवृत्तिनिरोधेन समानौ समानवृत्ती नाभिचक्रे कृत्वा तत उदानवायुमुत्थाप्य धिया सह शनैर्हृदि स्थास्य स्थापयित्वा उरसि स्थितं तमुदानवायुं कण्ठात् कण्ठमार्गेण भ्रुवोर्मध्यमनयत्॥ २५॥

महतामपि मध्ये महीयसा महत्तमेन रुद्रेण [12]आदरात् मुहुः पुनःपुनः अङ्कमुत्सङ्गं प्रत्यारोपितं स्वदेहमेवं दक्ष क्रोधेन जिहासती

---

1. A, B, G, I, J, T, W देहो  2. G °षः  3. A, B, G, I, M, Ma, Ms, T °जा°  4. Ms, W दे°  5. M, Ma त्व°  6. M, Ma, Ms °राः
7. V °मजस्र°  8. V omits श्रीरुद्रेण  9. V adds ततः  10. A, B, J, Va चरणाम्बुजे आसवं भजनानन्दं  11. A °धिना जातो यो; Va °धिजो यो
12. W omits आदरात्

त्यक्तुमिच्छन्ती मनस्विनी स्वतन्त्रा स्वच्छन्दमरणेत्यर्थः । सती भवानी गात्रेषु अङ्गेषु अनिलाग्निधारिणां दधार अनिलाग्निधारणाभ्या धारणां चकारेत्यर्थः । तया हि धारणया अनिलाग्न्योरुत्पत्तिः ॥ २६ ॥

ततः जगद्गुरोः जगतां जिज्ञासूनां गुरोः स्वभर्तुः रुद्रस्य चरणाम्बुजासवं चरणाम्बुजे आसवमानन्दं चिन्तयन्ती अनुभवन्ती अत एव हतकल्मषा[1] पापरहिता भर्तुरपरं सा न ददर्श न चिन्तितवती । देहश्च सद्यस्समाधिना योऽग्निस्तेन प्रजज्वाल[2] प्रज्वलितोऽभूत् ॥ २७॥

तदद्भुतमाश्चर्यं पश्यतां भुवि खे आकाशे च सुमहान् उच्चैः हाहेति वादः घोषः अभूत् । तदेवाह - देवतमस्य देवश्रेष्ठस्य रुद्रस्य देवी प्रिया सती केन दक्षेण प्रकोपिता प्रकोपं प्रापिता असून् प्राणान् जहौ अत्यजत् ॥ २८ ॥

अहो प्रजापतेः दक्षस्य महदनात्म्यं दौर्जन्यमद्य पश्यत । चराचरं विश्वं यस्य रुद्रस्य प्रजाः[3] प्रजावत् प्रीतिविषयं विश्वसुहृद इत्यर्थः । तस्य रुद्रस्य सती भार्या यद्वा यस्य दक्षस्य चराचरं प्रजाः प्रजावत् स्नेहविषयं सर्वत्र स्नेह एवास्य न्याय्य इति भावः । तेन दक्षेण विमता विमानिता असून् जहौ । न त्वियं विमानयोग्येत्याहुः, आत्मजा तत्रापि मनस्विनी प्रशस्तमनस्का गुणवतीत्यर्थः । अत एवाभीक्ष्णं पुनः पुनः मानं सम्मानं प्रत्यर्हति ॥ २९ ॥

**विज**. तं विवृणोति - **कृत्वेति** । जितासना प्राणादिसञ्चारवेगेन देहसञ्चलनरहिताऽत्र एवानिन्दिताऽकुत्सिता सा सती प्रथमं रेचक पूरके कृत्वाऽनिलौ प्राणापानौ समानौ ऊर्ध्वाधोवृत्तिरहितौ कृत्वा एकविषयगती विधाय मूलाधारादुत्क्रमणकर्तारं सुषुम्ना[4] सञ्चारिणमुदानमुत्थाप्योर्ध्वमुखं कृत्वा नाभिचक्रमानीय ततो नाभिमण्डलाद्धिया निश्चलया बुद्ध्या शनैरुद्वेगं विना हृदि स्थाप्य उरस्स्थितं वायुं कण्ठं नीत्वा कण्ठाद् भ्रुवोर्मध्यमनयदित्यन्वयः । यद्वा सर्वसन्धिसञ्चारिणं वायुं व्यानमूर्ध्वाधोगतिनिमित्तौ प्राणापानौ समानवायुनैकीकृत्य तं समानं वायुं सोदानमुदानगत्या सहितमुदानेनैकीकृत्य उपर्युपरि स्थानं जीवेन सह अनयदिति । अत्र द्रव्यनयनशक्तिमता वायुना जीवसंज्ञद्रव्यनयनं न तु तन्मात्रं तस्ययोगिनो नित्याभ्यस्तत्वात् ॥ २५ ॥

एवं भ्रुवोर्मध्यमनिलमानीय स्वयमपि भ्रुवोर्मध्ये स्थिता किं चकार इति तत्राह - **एवमिति** । एवमुक्तप्रकारेण वायुं भ्रूमध्यं नीत्वा स्वयं च तत्र स्थिता मनस्विनी वशीकृतमना महतामिन्द्रादीनां महीयसा महत्तमेन रुद्रेणाऽऽदरात् मुहुः शश्वदङ्कमारोपितं स्वदेहं जिहासती त्यक्तुमिच्छती सा उमा गात्रेषु करचरणाद्यवयवेषु अनिलाग्निधारणं देहभस्मीकरणाय वाय्वग्न्युत्पत्तिलक्षणं ध्यानं दधार चकार, अनेकार्थत्वाद्धातूनाम् । दक्षरुषेत्यनेनाऽऽत्महत्यादोषं मार्ष्टि ॥ २६ ॥

---

1. W अकल्मषा 2. T omits प्रजज्वाल 3. A, T omit प्रजाः 4. B, M, Ma सुषुम्नी

ननु वाय्वग्निध्यानं देहत्यागानन्तरं चेदुत्क्रान्तस्य वायोरनावृत्तेरग्निसंयोगाभावेनाभीष्टकार्यानुत्पत्तिः, पूर्वं चेदात्मनोऽपि नाशसम्भवात् स चानुपपन्नः, चेतनस्य नित्यत्वेन अनाशादित्याशङ्क्य समः समसमयत्वेन उपपत्तेरिति भावेनाह - **तत इति**। ततो वाय्वग्निधारणानन्तरं सा सती ज्ञानोपदेष्टृत्वेन जगतां गुरोराचार्यस्य स्वभर्तुः शिवस्य चरणयोर्ध्यानेनोत्पन्नानन्दलक्षणमासवं मधु चिन्तयती आस्वादयन्ती[1] अपरं तस्मादन्यं न चिन्तयती। चशब्दात्परं विष्ण्वादिकं चिन्तयती स्वदेहे विष्ण्वादिकं ददर्श देहं च तत्याजेति वाक्यशेषः। देहत्यागस्यान्यथानुपपत्या सिद्धत्वादध्याहृत्याऽन्वीयते इत्यदोषः। "रुद्रं च ब्रह्मवायू च विष्णुं चैव श्रियं गिरिम्। उमा चिन्तयती देहं तत्याजाऽन्यं न चाऽस्मरत्" (तत्त्वनिर्णये) इति वचनाच्चाध्याहारः प्रामाणिक इति प्रतीयते। **तत** इत्यनुवर्तते। ततो देहत्यागानन्तरं सद्यः तत्क्षण[2] एव पादादिक्रमेणैव समाधिजाताग्निना देहः प्रजज्वाल। अनेन मृतदेहसंस्कारोऽपि न पित्रादिना कार्य इति ध्वनयति। हतकल्मषेत्यनेन विष्ण्वादिदर्शनानन्तरं पितृकोपनिमित्तकिल्बिषमपि नष्टमिति सूचयति। यद्वा दर्शनस्य अनन्यथात्वं द्योत्यते। दोषादन्यथाज्ञानं जायते न चास्याः सोऽस्तीत्यर्थः॥ २७॥

एवं जगत्सुन्दरदेहत्यागे कस्याप्यन्तःकरणे भेदो नाभूत् किं तत्राह - **तत्पश्यतामिति**॥ २८॥

किमनेन सिद्धानुवादेन एकत्र दोषानारोपणेनेति तत्राह - **अहो** इति। अनात्म्यं मूर्खकर्म "अहो त्वनार्यमि"**ति पाठे** अन्याय्यमित्यर्थः। चराचराः प्रजाः यस्य वशे यस्य सन्ततिः[3] प्रसूता इति वा॥ २९॥

**सोऽयं दुर्मर्षहृदयो ब्रह्मबन्धुः[4] लोकेऽपकीर्तिं महतीमवाप्स्यति।**
**यदङ्गजां स्वां पुरुषद्विड्डद्यतां न प्रत्यषेधन्मृतयेऽपराधतः॥ ३०॥**

*** दक्षस्तु दृष्ट्वा दुहितुस्स्वनिमित्तं विनाशनम्।**
**बह्वतप्यत घोरेण मयाऽसाधु कृतं बत॥**

**धिङ्मामविजितात्मानं निर्गुणं निरपत्रपम्।**
**योऽहं स्वीकृत्य मृतकं व्यर्थमेनो महीयसि॥**

**वदत्येवञ्जने[5] सत्या दृष्ट्वाऽसुत्यागमद्भुतम्।**
**तं[6] दक्षं पार्षदा हन्तुमुदतिष्ठन्नुदायुधाः॥ ३१॥**

1. M, Ma °ती　2. A, B °णम्　3. B, M °तिप्र°　4. A, B, G, I, J, T ध्रुक् च　* These two additional verses are found in M, Ma, Ms.Editions
5. M, Ma, Ms °मजे　6. A, B, G, I, J, T दक्षं तत्पार्षदाः ; M, Ma दक्षं सुपार्षदाः ; Ms दक्षं तु पार्षदाः

**तेषामापततां वेगं निशाम्य भगवान् भृगुः ।**

**यज्ञघ्नघ्नेन यजुषा दक्षिणाग्नौ जुहाव ह ।। ३२ ।।**

**अध्वर्युणा हूयमाने देवा उत्पेतुरोजसा ।**

**ऋभवो नाम तपसा सोमं प्राप्ताः सहस्रशः ।। ३३ ।।**

**तैरलातायुधैः सर्वे प्रमथाः सहगुह्यकाः ।**

**दह्यमाना[1] दिशो भेजुरुशद्भिर्ब्रह्मतेजसा ।। ३४ ।।**

इति श्रीमद्भागवते महापुराणे अष्टादशसाहस्र्यां

श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां

चतुर्थस्कन्धे चतुर्थोऽध्यायः ।। ४ ।।

**श्रीध. स इति ।** दुर्मर्षमत्यसहनं हृदयं यस्य लोके जनमध्ये च[2] शब्दान्नरकश्च । यद्यतः स्वीयामङ्गजां सुतामपराधत. स्वाऽवज्ञया मृतये मरणायोद्यतां न निवारितवान् । पुरुषद्विट् शिवद्वेषी ।। ३० ।।

**वदतीति ।** अद्भुतं दृष्ट्वा च ।। ३१ ।।

**तेषामिति ।** यज्ञघ्नान् हन्तीति यज्ञघ्नघ्नं, तेन "अपहता असुरा रक्षांसि पिशाचाः" इत्यादिना ।। ३२ ।।

**अध्वर्युणेति ।** अध्वर्युणा भृगुणा ये तपसा सोमं प्राप्तास्ते । ऋभवो नाम देवा उत्थिताः ।। ३३ ।।

**तैरिति ।** ब्रह्मतेजसा उशद्भिः दे[3]दीप्यमानैः ।। ३४ ।।

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्री श्रीधरस्वामिविरचितायां भावार्थदीपिकायां

व्याख्यायां चतुर्थोऽध्यायः ।। ४ ।।

**वीर.** दुर्मर्षमत्यन्तासहमानं हृदयं यस्य सोऽयं ब्रह्मबन्धुः ब्राह्मणापदेशो दक्षः लोके[4] असतीं कीर्तिञ्च अवाप्स्यति । चकारात्

---

1. A, B, g, J, J, M, Ma, Ms, T हन्यमाना 2. W चकारात् 3. V omits दे 4. W adds अपकीर्तिं

नरकं च। यद्यतः स्वीयामङ्गजामपराधतः स्वाऽवज्ञया मृतये मरणाय उद्यतामुद्युक्तां पुरुषद्विट् शिवद्वेषी दक्षः ''तत्पुरुषाय विद्महे महादेवाय'' (मना.उ.1-5) इति प्रयोगात्, यद्वा रुद्रस्य भगवदात्मकत्वात् रुद्रं द्विषन्नपि भगवन्तं द्वेष्टीत्यर्थः। न प्रत्यषेधत् न न्यवारयत्॥ ३०॥

सत्या दाक्षायण्याः अद्भुत मसुत्यागं प्राणत्यागं दृष्ट्वा जने एवं वदति सति रुद्रपरिषदा दक्षं हन्तुमुद्यतान्यायुधानि **यैस्ते,** उदतिष्ठन् उत्थितवन्तः॥ ३१॥

तेषामापतताम् आ समन्तादागच्छतां पारिषदानां वेगं निशाम्य दृष्ट्वा भगवान् भृगुः यज्ञघ्नान् हन्तीति यज्ञघ्नघ्नं तेन **यजुषा** ''अपहता असुरा रक्षांसि पिशाचाः'' इति मन्त्रेण दक्षिणाग्नौ जुहाव। हेति विस्मये॥ ३२॥

अध्वर्युणा भृगुणा हूयमाने सति ये तपसा सोमं प्राप्तास्ते ऋभवो नाम देवाः सहस्रशः उत्पेतुः उत्थिताः॥ ३३॥

ब्रह्मतेजसा उशद्भिः दीप्यमानैः अलातान्येव आयुधानि येषां तैः, ऋभुभिः दह्यमानाः प्रमथाः रुद्रपारिषदाः **दिशो भेजुः** पलायितवन्त इत्यर्थः॥ ३४॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां श्रीभागवतचन्द्रचन्द्रिकायां

चतुर्थस्कन्धे चतुर्थोऽध्यायः॥ ४॥

**विज.** ननु कथमेतदनार्यमभूदित्याशङ्क्य तस्य लोकविद्विष्टफलदर्शनादित्याह - **सौऽयमिति**। य एतादृशमनार्यम् **अकार्षीत्** सोऽयं दुर्मर्षहृदयो दुस्सहहृदयः अत एव ब्रह्मबन्धुः द्विजाधमः ब्राह्मणानां मृदुहृदयत्वात्। अथो अद्य प्रभृति, तस्मादिति हेत्वर्थो वा। **यद्** यस्मादित्यनेन सम्बध्यते। पुरुषं शिवं द्वेष्टीति पुरुषद्विट् ''तत्पुरुषाय'' (मना.उ.1-5) इति श्रुतेः। अनेन विष्णुद्वेषमपि ध्वनयति। ''पुरुषो विष्णुरुच्यते'' इति श्रुतेः। मृतये मरणायोद्यतां प्रयतमानाम्॥ ३०॥

*शिवद्वेषग्रहग्रस्तो दक्षो पुत्रीमरणं दृष्ट्वा किमकृत इति तत्राह - **दक्षस्त्विति**॥

निर्गुणं शमादिगुणहीनं मृतकं देहं महीयसि महादेवे एनोऽपराधम् अकार्षमित्यन्वयः॥

* The commentary of Vijayadhvaja शिवद्वेषग्रहग्रस्तो.....अकार्षमित्यन्वयः is not found in A Edition

सह मरणयोग्याः भूतगणास्तदा किमकार्षुरिति तत्राह - **वदतीति**। अजे दक्षे। सत्या देव्याः असुत्यागं प्राणवियोगलक्षणम्॥३१॥

दक्षादपि भृगोः शिवे द्वेषो महानिति भावेन भूतगणशक्तिह्रासोपायं होमं वक्ति - **तेषामिति**। यज्ञघ्ना ये यज्ञविनाशकास्तान् हन्तीति यज्ञघ्नघ्नस्तेन यजुषा "येनोरसिं दुस्तरितासो हन्मतासो अनृतं वयन्तः तेषां वपूंष्यर्चिषा जातवेद शुष्कं न वृक्षमुत सन्दहस्व" इत्यादि यजुर्मन्त्रेण॥ ३२॥

ततः किमभूदत्राह - **अध्वर्युणेति**। सोमं सोमं भागम्॥ ३३॥

अत्र ब्राह्मणशक्तिरेव बलीयसीति ध्वनयन् ऐतैर्देवै र्भूतगणानां पराभवं वक्ति **तैरिति**। अलातान्युल्मुकान्येवायुधानि येषां ते तथोक्तास्तैः। ब्रह्मतेजसा भृगुमन्त्रप्रभावेन उशद्भिर्भृगोः सङ्कल्पं कर्तुमिच्छद्भिरित्यर्थः॥ ३४॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे

श्रीविजयध्वजतीर्थकृतपदरत्नावल्यां

टीकायां चतुर्थोऽध्यायः॥ ४॥



# पञ्चमोऽध्यायः

## मैत्रेय उवाच

भवो भवान्या निधनं प्रजापते रसत्कृताया [1]अवगम्य नारदात्।
स्वपार्षदसैन्यं च तदध्वर[2]र्भुभि र्विद्रावितं क्रोधमपार मा[3]दधे ॥ १ ॥

क्रुद्धः सुद[4]ष्टोष्ठपुटः स धूर्जटि र्जटां तडिद्वह्नि सटोग्र रोचिषम्।
उत्कृत्य [5]रुद्रः सहसोत्थितो हसन् गम्भीरनादो विससर्ज तां भुवि ॥ २ ॥

ततोऽतिकाय स्तनुवा स्पृश[6]न्दिवं सहस्रबाहु[7]र्घनरुक् त्रिसूर्य दृक्।
कराल दंष्ट्रो ज्वलदग्निमूर्धजः कपालमाली विविधोद्यतायुधः ॥ ३ ॥

तं किं करोमीति गृणन्त माह बद्धाञ्जलिं भगवान् भूतनाथः।
दक्षं सयज्ञं जहि मद्भटानां त्व मग्रणी रुद्र [8]भटांशको मे ॥ ४ ॥

आज्ञप्त एवं कुपितेन मन्युना स देवदेवं परिचक्रमे [9]प्रभुम्।
मेने तदात्मान मस[10]ह्य [11]रंहसा महीयसां तात स[12]हस्सहिष्णुम् ॥ ५ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

पञ्चमे तु सती देह त्याग माकर्ण्य शङ्करः। वीरभद्रं रुषोत्पाद्य तेन दक्ष [13]मजीघनत् ॥

**भव** इति। प्रजापते र्हेतो र्निधनम्। कुतः ? तेनासत्कृतायाः। तस्याध्वरे ये ऋभवो देवा स्तैः ॥ १ ॥

**क्रुद्ध** इति। स धूर्जटिः रुद्रो घोरस्सन्, जटा मुत्कृत्य उत्पाट्य उत्थित स्सन् तां भुवि विससर्ज। सुदष्टः ओष्ठपुटो येन तटितां बह्नीनां च सटा ज्वालाः तद्वदुग्रं रोचिः यस्यास्ताम् ॥ २ ॥

**तत** इति। ततो जटायाः सकाशादतिकायः वीरभद्रः जात इति शेषः। तनुवा [14]तन्वा देहेन दिवं स्पृशन्, अत्युच्च इत्यर्थः।

---

1. M, Ma, Ms ह्यव 2. M, Ma, Ms °रेशैर्वि° 3. Ms °ददे 4. B. I °ष्टौ° 5. M, Ma, Ms रौद्रः 6. M, Ma, Ms, °दिवं 7. M, Ma. Ms रक्तसू°
8. M, Ma जटांशको; Ms जटान्तको 9. A, B, G, I, j. M, Ma, Ms, T वि° 10. A. B, G, I, j, M, Ma, Ms °ज्ञ 11. M, Ma. Ms °सं
12. W म° 13. A, B, J, Va मघातयत् 14. V omits तन्वा

घनरुक् कृष्णवर्णः त्रयः सूर्या इव दृशो यस्य। करालाः उदग्राः[1] तुङ्गाः दंष्ट्राः यस्य। ज्वलदग्निरिव मूर्धजाः केशाः[2] यस्य। कपालमालाः[3] विद्यन्ते यस्य[3]। विविधानि उद्यतानि आयुधानि यस्य॥ ३॥

**तमिति**। हे रुद्र! हे भट! युद्धकुशल! मद्भटानां त्वमग्रणीः सन् सयज्ञं दक्षं जहि, ब्रह्मतेजो दुर्जय मिति मा मंस्थाः यत स्त्वं मेंऽशकः॥ ४॥

**आज्ञप्त** इति। मन्युना रुद्रेण स[4] वीरभद्रः परिचक्रमे प्रदक्षिणं[5] चकार। असह्यं[6] अप्रतिघातं यद्रंहो वेगः तेन भो[7] तात! महीयसां बलीयसा मपि सह स्सहिष्णुं बलं सोढुं क्षमं मेने॥ ५॥

## श्री वीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं सत्याः प्राणत्यागनिमित्तं त्याग प्रकार श्च सप्रपञ्चमुक्तः[8]। अथ तत्प्रसंगा त्प्रसक्तं दक्षाध्वरविनाशं पुनः त त्सन्धानं च सप्रपञ्चमाह त्रिभिरध्यायैः। तत्राऽऽद्येनाध्वरविनाशप्रकार माह मैत्रेयः **भव** इति। प्रजापतेः दक्षस्य कर्तरि षष्ठी, तेनासत्कृतायाः भवान्याः सत्याः निधनं तथा[9] दक्षस्याध्वरे ये ऋभवो देवाः तैर्विद्रावितं पलायितं स्वपार्षदानां सैन्यं च नारदात् मुनेः अवगम्य श्रुत्वा अपारं क्रोध मादधे कृतवानित्यर्थः॥ १॥

ततः स धूर्जटिः रुद्रः घोर स्सन् क्रुद्ध स्सन् सुष्टु दष्टः ओष्ठपुटो येन सः। तडितां वह्नीनां च सटा ज्वालाः तद्वदुग्रं रोचिः यस्या स्तां जटां उत्कृत्य उत्पाट्य उत्थितः गम्भीरो नादो यस्य सः, हसन् तां जटां भुवि विससर्ज अपातयत्॥ २॥

ततो जटायाः सकाशात् अतिकायः वीरभद्रः आविरभूत्[10] इति शेषः। तं विशिनष्टि - तनुवा[11] तन्वा[12] देहेन दिवं स्पृशन् अत्युच्च इत्यर्थः। घनरुक् कृष्णवर्णः तिस्रः सूर्यसदृशः[13] दृशो यस्य। कराला उग्रा दंष्ट्राः यस्य, ज्वलन् अग्नि रिव मूर्धजा यस्य। कपालानां माला अस्य सन्तीति तथा, विविधानि उद्यतानि आयुधानि यस्य सः॥ ३॥

किं करोमि किं करवाणीति गृणन्तं भाषमाणं बद्धाञ्जलिं तं वीरभद्रं भूतनाथो भगवान् रुद्रः आह उवाच - हे रुद्र! हे भट! युद्धकुशल! मद्भटानां त्वमग्रणीः नायकः मे अंशभूतः स यज्ञं दक्षं जहि विनाशय॥ ४॥

कुपितेन मन्युना रुद्रेण एव माज्ञप्तो देवदेवं विभुं[14] रुद्रं परिचक्रमे प्रदक्षिणी चकार। तदा असह्यरंहसा प्रतिघातरहितवेगेन महीयसां बलीयसा मपि महः तेजो बलं तत्सहिष्णुं पारिषदैः सोढुं क्षमम् आत्मानं मेने अमन्यत॥ 5॥

---

1. A, B, J, Va V omit उदग्राः 2. B, J, V, Va omit केशाः 3--3. A, B, J, Va कपाल मालायुक्तः 4. B, J, V, Va omit स वीरभद्रः 5. A, B, J, Va °णी 6. A, B, j, Va °रं 7. A भोः 8. W °क्तम्। 9. W adds तस्य 10. A, B, J, T जातः 11. A, B, j, T omit तनुवा 12. W omits तन्वा 13. A, B, J, T °शाः 14. W omits विभुं

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

विष्णुद्वेषवत् तद्भक्तद्वेषस्याऽप्यनर्थहेतुत्वात् मुमुक्षुणा स न कर्तव्य इति ज्ञाप्यते अस्मिन्नध्याये। तत्रादौ नारदश्रुतभवानीमरणात् भवा द्वीरभद्रोत्पत्तिं वक्तुमाह - **भव** इति। प्रजापते रवमानेन असत्कृताया धिकृतायाः तस्य दक्षस्य अध्वरस्य ईशते इति तदध्वरेशाः भृग्वादयः तैः। तदध्वरं यजन्ते इति तदध्वरे जः तैः। तदध्वरेड्भिरिति वा पाठः, क्विप् सम्प्रसारणं च॥ १॥

क्रोधफल माह - **क्रुद्ध** इति। सुदष्टे ओष्ठपुटे यस्य स तथा। धूताः जटाः अस्य सन्तीति धूर्जटिः, मत्वर्थे क्विप् प्रत्ययः। **तद्विद्व** ह्निसटा वैद्युताग्निज्वाला तद्वदुग्रं रोचिः यस्या स्सा तथा तां रौद्रो मध्याह्नताप इव तीक्ष्णः "आतपः कथ्यते रौद्रः" (इल.को. 1-40) इति हलायुधः॥ २॥

सा जटा किमभूदिति तत्राह - **तत** इति। ततो जटायाः कश्चित्पुरुषोऽभूदिति शेषः, तनुवा तन्वा शरीरेण घनरक्तः सान्द्रारुणः सूर्यः तद्वद्रक्ता दृशो यस्य सः तथा, कपालानां माला समूहोऽस्यास्तीति कपालमाली॥ ३॥

यदर्थ मसा वुत्पन्नः तत्कृत्य माह - **तं किमिति**। हे रुद्र! मद्भटाना मग्रणीत्वे हेतुः मे जटांशक इति। अनेन जटायाः आत्मत्वं सूचयति॥ ४॥

"नमस्ते रुद्रमन्यवे", (तैत्ति.सं. 4-5-1-1) इति श्रुतेः। मन्युना महादेवेन युयुत्सूनां योधानां वीरस्वभावं वक्ति - **मेने इति**। यदा सोऽन्यासाध्य कर्मसाधनार्थ मुपदिष्टः तदात्मानं स्वम् असंगरं हसं काऽप्यसक्तवेगं *सहीयसां, सहनशक्तिमत्तराणां **सहः** सहनशक्तिः तां सहिष्णुं सहनशीलं मेने इत्यन्वयः॥ ५॥

**अन्वीयमानः स तु रुद्रपार्षदैः भृशं नदद्भि र्व्यनदत्सुभैरवम्।**
**उद्यम्य शूलं जगदन्तकान्तकं स[1] प्राद्रव द्घोषण भूषणाङ्घ्रिः॥ ६॥**

**अथर्त्विजो यजमानः सदस्याः ककुभ्युदीच्यां प्रसमीक्ष्य रेणुम्।**
**तमः किमेतत्कुत एतद्रजोऽभूदिति द्विजा द्विजपत्न्यश्च दध्युः॥ ७॥**

**वाता न वान्ति नहि सन्ति दस्यवः प्राचीनबर्हि र्जीवती[2]होग्रदण्डः।**
**गावो न काल्यन्त इदं कुतो रजो लोकोऽधुना किं प्रलयाय कल्पते॥ ८॥**

---

* यहीयसा मिति विजयध्वज व्याख्यानुसारी पाठः।

1. J, M, Ma, V साम्प्रा°  2. A, B, G, I, J, M, Ma, Ms, T °तिहो°

**प्रसूतिमिश्राः स्त्रिय उद्विग्नचित्ता ऊचुर्विपाको वृजिनस्यै[1]व तस्य।**
**प[2]श्यन्ती[3]नां दुहितॄणां प्रजेशः सुतां सती मवदध्यावनाग[4]सम्॥ ९॥**

**यस्त्वन्तकाले व्युप्तजटाकलापः स्वशूलसूच्यर्पित दिग्गजेन्द्रः।**
**वितत्य नृत्य त्युदितास्त्रदो[5]र्ध्वजानुच्चाट्टहास स्तनयित्नुभिन्नदि[6]क्॥ १०॥**

**श्रीध० अन्वीयमान** इति। जगदन्तको मृत्युः तस्याऽप्यन्तकं शूलम्। घोषयन्ति शब्दं कुर्वन्तीति घोषणानि नूपुरादीनि भूषणानि ययोः तावङ्घ्री यस्य सः॥ ६॥

**अथेति**। ककुभि दिशि तमो न भवति किन्तु रज इति ज्ञात्वाऽऽहुः। रज एतत्कुतोऽभूदि[7]ति दध्युः चिन्तयामासुः॥ ७॥

हेत्वन्तरासम्भवेनौत्पातिकं कल्पयन्ति - **वाता** इति। दस्यूनां अभावे हेतुः। प्राचीनबर्हिः तदानीन्तनो राजा जीवतीति। न काल्यन्ते नशीघ्रं नीयन्ते॥ ८॥

**प्रसूतीति**। प्रसूतिः दक्षपत्नी सा मिश्रा मुख्या यासां ताः। विपाकः फलम्। पश्यन्तीना[8]मपीति तस्या दुःखाधिक्ये हेतुः। अवदध्यौ अवज्ञातबान्। अनागाम् अनागसम्॥ ९॥

न चेदं सुतावज्ञामात्रं किन्तु रुद्राव[9]ज्ञा च अतो नास्य भद्रं भविष्यती त्याहुः - **यस्त्विति** द्वाभ्याम्। व्युप्तो विकीर्णो जटाकलापो यस्य, स्वशूलस्य सूच्या मग्रेऽर्पिताः प्रोताः दिग्गजेन्द्रा येन [10]उदितानि उन्नमितानि अस्त्राणि यैस्ते, दोषो बाहवः एव ध्वजाः तान् वितत्य [11]विस्तार्य। हर्षेण नृत्यति उच्चोऽट्टहासः कठोरो हास एव स्तनयित्नुः [12]घनगर्जितं तेन भिन्ना विदीर्णा दिशो येन सः॥ १०॥

**वीर०** स तु वीरभद्रः [13]भृशं नदद्भिः [14]ध्वनद्भिः रुद्रपारिषदैः अन्वीयमानः परिवेष्टितः सुभैरवम् अतिभयङ्करं यथा भवति तथा व्यनदत् ननाद। ततः स वीरभ्रदो जगदन्तको मृत्युः तस्याऽप्यन्तकोपमं शूल मुद्यम्य घोषणानि ध्वनन्ति भूषणानि नूपुरादीनि ययोः ता वङ्घ्री यस्य सः। प्राद्रवत् दक्षाध्वरं प्रत्यतात्॥ ६॥

अथ ततः ऋत्विजो दक्षाध्वरे ऋत्विजः, यजमानः दक्षः तथा सदस्याः सभ्याः द्विजाः तत्पत्न्यश्च उदीच्यां ककुभि दिशि रेणुं परागं समीक्ष्य तमो [15]न भवति किन्तु रज इति ज्ञात्वा आहुः रज एत त्कुतोऽभूदिति दध्युः चिन्तयामासुः॥ ७॥

---

1. A, B, G, J, T °ष 2. A, B, G, I, J, M, Ma, Ms, T यत्प° 3. M, Ma, Ms °तीनां 4. A, B, G, I, J, T, V °गाम्; M, Ma °गसाम्
5. M, Ma, Ms, °जो रूक्षाद् 6. M, Ma, Ms, दृक् 7. B, J, V, Va omit इति 8. A, B, J, Va, °मिति 9. A, B, J, Va ज्ञानं 10. V सूच्या
11. B, J, V omit विस्तार्य 12. B, J, V omit घन 13. W omits भृशं° 14. W omits ध्वनद्भिः 15. A, B, J नु

हेत्वन्तरासम्भवे नौत्पातिकं कल्पयन्त आहुः - **वाता** इति। वाताः चण्डवायवः न वान्ति न प्रसरन्ति, दस्यवः चोरादयः न सन्ति। तत्र हेतुः - हि यस्मात् उग्रः दण्डः दमनं प्रशासनं यस्य सः, प्राचीनबर्हिः तदानीन्तनो राजा जीवति, तस्मिन् जीवति न दस्यवः सन्तीति भावः[1]। हेत्याकस्मिकत्वद्योतकं, गावो न काल्यन्ते न शीघ्रं नीयन्ते अत इदं रजः कुत उत्थितम् अधुना लोकः प्रलयाय नाशाय कल्प्यते सम्भाव्यत इत्यर्थः ॥ ८ ॥

प्रसूतिः दक्षस्य पत्नी तन्मिश्राः तत्सहिताः स्त्रियः उद्विग्नचित्ता उद्विग्नं भीतं चित्तं यासां ता ऊचुः तस्य दक्षस्य यद्वृजिनं[2] पापं तस्यैवायं विपाकः फलं, यत् यस्मात् प्रजेशो दक्षः दुहितॄणां पश्यन्तीनां सतीनाम्, अनेन तस्याः दुःखाधिक्यं सूचितम्, अनागसं निरपराधां सुतां सतीं भवानीम् अवदध्यौ अवज्ञातवान् ॥ ९ ॥

असह्यपराक्रमं रुद्रं कोपयतो दक्षस्य अमङ्गलमवश्यम्भावीत्याहुः - **यस्त्विति** द्वाभ्याम्। यो रुद्रोऽन्तकाले प्रलयकाले व्युप्तो विकीर्णः जटाकलापो यस्य स्वशूलस्य सूच्या अग्रेण अर्पिता प्रोताः दिग्गजेन्द्रा येन उदितानि उन्नमितानि अस्त्राणि यै स्ते। दोषः बाहव एव ध्वजाः तान् वितत्य प्रसार्य, उच्चोऽट्टहासः स एव स्तनयित्नु गर्जितं तेन, भिन्ना विदीर्णा दिशो येन सः। हर्षेण नृत्यति ॥ १० ॥

**विज०** यद्यात्राविक्रम एव लोकस्योद्वेगजनकः किमुत तद्युद्धविक्रम इति भावेन तद्यात्रा प्रभावं वक्ति - **अन्वीयमान** इति। यथा सुष्ठु भैरवं भयङ्करं भवति तथा व्यनदत्। जगदन्तको जगन्मृत्युः तस्याऽप्यन्तकं संहर्तृ घोषणं शब्दनशीलं भूषणं नूपुरलक्षण मङ्घ्रौ यस्य स तथा ॥ ६ ॥

असौ वीरभद्रो यज्ञवाट निकट मायादिति वार्तां पुरोगामिनी तत्सेना[3] धूलिरेव व्यनक्तीति भावेन ऋत्विगादीनां धूलिदर्शनेन जिज्ञासाप्रकारं वक्ति - **अथेति**। उदीच्यां ककुभि दिशि ऋत्विजो यज्ञ प्रवर्तकाः यजमानो यज्ञे दीक्षितः। सभास्थाने स्थित्वा मन्त्रतन्त्रकर्म हवि र्देवताग्निसम्बन्धं विवेचयन्तः सदस्याः ॥ ७ ॥

न केवलं दध्युः अभिदध्युश्चेत्याह - **वाता** इति। चोराणामभावे निमित्तमाह प्राचीनबर्हिरिति। उग्रो दण्डो यस्य। उग्रेषु दण्डो यस्ये ति वा उग्रदण्डः। प्राचीनबर्हि र्नाम तत्कालभवो राजा, जीवति स प्राणो वर्तत इत्यन्वयः। हे त्यनेन तज्जीवनं सर्वेषां सिद्धमिति व्यनक्ति। तत्र केचि द्दक्षभयात् कारणं जानन्तोऽपि तूष्णीमासन् ॥ ८ ॥

तद्भयहीनाः प्रसूतिमुख्याः कारण मूचुश्चेत्याह - **प्रसूति मिश्रा** इति। मिश्रशब्दो मुख्यार्थे वर्तते। प्रजेशो दक्षो दुहितॄणां

1. A. B. T omit सन्तीति भावः। 2. A, B, T add यत् 3. A °नानां

प्रपश्यन्तीनां सतीना मनागसाम्[1] अनपराधां नाम्ना सतीं सुतां अवदध्यौ अवज्ञातवानिति य द्यस्मात् तस्मात् वृजिनस्य पापस्य विपाकः फलमेवेत्यन्वयः ॥ ९ ॥

सत्यवज्ञानोत्पन्न परमेश्वरकोपा दियमनर्थद्योतिनी धूलिरिति भावेन सदाशिवमाहात्म्यं वदन्तीत्याह - **यस्त्विति** । व्युप्तजटाकपालः प्रसारितजटासमूहः वितत्य विस्तृत्य बाहूनिति शेषः । उदितान्यस्त्राणि धनुरादीनि येषुते उदितास्त्राः, दोषो भुजा एव ध्वजा दो र्ध्वजा यस्य स तथोक्तः । रूक्षाट्टहासः[2] कठोर सिंहनादः स एव स्तनयित्नुः प्रलयकालीन मेघनादः तेन भिन्ना विद्राविता दिशो यस्य स तथोक्तः । भिन्नदृगिति पाठे स्तनयित्नुवत् मेघवद्भिन्ना व्यक्ता दृक् यस्य स तथेत्यर्थः ॥ १० ॥

**अमर्षयित्वा तमसह्यतेजसं मन्युप्लुतं दुर्निरीक्ष्यं[3] भ्रुकुट्या ।**
**करालदंष्ट्राभि रुदस्तभागणं स्यात्स्वस्ति किं कोपयतो विधातुः ॥ ११ ॥**

**बह्वेव मुद्विग्न दृशोच्यमाने जनेन दक्षस्य मुहु[4] र्महात्मनः ।**
**उत्पेतु रुत्पाततमाः सहस्रशो भयावहा दिवि भूमौ च पर्यक् ॥ १२ ॥**

**तावत्स रुद्रानुचरै र्मखो महान् नानायुधै[5] र्वामनकै रुदायुधैः ।**
**पिङ्गैः पिशङ्गै र्मकरोदराननैः पर्या[6] प्लवद्भि र्विदुरान्वरुध्यत ॥ १३ ॥**

**केचि द्बभञ्जुः प्राग्वंशं पत्नीशाला[7] मथापरे ।**
**सद आग्नीध्रशालां च तद्विहारं महानसम् ॥ १४ ॥**

**रुरुजु र्यज्ञपात्राणि तथैकेऽग्नी न[8] शामयन् ।**
**कुण्डेष्वमूत्रयन् केचि द्बिभिदु र्वेदि[9] मेखलाः ॥ १५ ॥**

**श्रीध० अमर्षयित्वेति** । अमर्षयित्वा असहनयुक्तं कृत्वा मन्युप्लुतं क्रोधव्याप्तम् । उदस्तो विक्षिप्तो भागणो नक्षत्रसंघो येन सः । पुनश्च तं कोपयतो विधातु रपि किं स्वस्ति स्यात् न स्यादेव तस्य[10] चैवं सति काऽन्यस्य कथा ॥ ११ ॥

---

1. A, B °सम्  2. A रूक्षोऽ⁰  3. A, B, G, I J, M, Ma, Ms, T दुर्विषहं  4. M, Ma, Ms मखे म⁰  5. M, Ma, Ms °वि°
6. A, B, G, I, J, T ⁰द्र⁰; M, Ma, Ms °प्लु⁰  7. A, B, G, I, J, T शालां त⁰  8. A, B, G, I, J, M, Ma, Ms, T °ननाशयन्
9. M, Ma, Ms र्यज्ञ  10. A, B, J, Va omit तस्य चैवं सति

**बह्विति**। उद्विग्ना प्रचलिता दृक् यस्य तेन जनेन बहु यथा भवति, एवमुच्यमाने सति उत्पाततमा महोत्पाता उत्थिताः पर्यक् सर्वतश्च, कथम्भूताः ? महात्मनोऽपि दक्षस्य भयावहाः ॥ १२ ॥

**तावदिति**। नानाविधानि आयुधानि येषाम्। वामनकैः ह्रस्वैः उद्यतायुधैः, पिङ्गैः[1] कपिलैः, पिशङ्गैः[2] पीतैः मकरस्येव उदर माननं च येषां तैः। परितो धावद्भिः अवरुद्धः ॥ १३ ॥

**केचिदिति**। यज्ञशालायाः पूर्वपश्चिमस्तम्भयो रर्पितं पूर्व पश्चिमायतं काष्ठं प्राग्वंश स्तं स्तम्भम्[3]। यज्ञशालायाः पश्चिमतः पत्नीशाला ताम्। यज्ञशालायाः पुरतः स्थितं सदो मण्डपम्। सदसः पुरो[4] हविर्धानं तस्योत्तरत आग्नीध्रशालाम्। तद्विहारं यजमानगृहम्। महानसं पाकभोजनशालाम्॥ १४ ॥

**रुरुजुरिति**। रुरुजुः बभञ्जुः। उत्तरवेद्या मेखलाः सीमासूत्राणि [5-]"आज्ञा गुरूणां ह्यविचारणीया" (रघु) इति हेतोः **न ते** दोषभाजिन इति भावः[-5] ॥ १५ ॥

**वीर॰** तमेवम्भूतम् असह्यमप्रतिघातं तेजो यस्य तं रुद्रममर्षयित्वा असहनयुक्तं कृत्वा मन्युना क्रोधेन प्लुतं व्याप्तं अत एव दुर्निरीक्ष्यं द्रष्टु मशक्यं भ्रुकुट्या उग्रदंष्ट्राभिश्च उदस्तः उत्क्षिप्तः भागणो नक्षत्रसंघो येन तं कोपयतो विधातुरपि किं स्वस्ति स्यात् विधातुरप्येवम्, अन्यस्य का कथे त्यर्थः ॥ ११ ॥

उद्विग्ना प्रचलिता दृक् यस्य तेन जनेन बहु यथा भवति एव मुच्यमाने सति सहस्रशः उत्पाततमा महोत्पाता महात्मानः स्थिरचित्तस्यापि दक्षस्य भयावहा दिवि भूमौ च पर्यक् परितः उत्थिताः ॥ १२ ॥

तावत्ततः[6] आशु रुद्रानुचरै र्महान् मखो यागः हे विदुर ! अन्वरुध्यत प्रत्यबद्ध्यत विनाशित इति यावत्। रुद्रानुचरैः कथम्भूतैः ? नाना विचित्राणि आयुधानि येषां तैः वामनकैः ह्रस्वैः उद्यतायुधैः पिशङ्गैः पीतैः मकरस्येव उदर माननं च येषां तैः, परितो धावद्भिः ॥ १३ ॥

मखानुरोधमेव प्रपञ्चयति - केचित् रुद्रपार्षदाः प्राचीन वंशं बभञ्जुः त्रुटितवन्तः, तथा केचिदपरे पत्नीशालां बभञ्जु रित्यनुषङ्गः। प्राचीन[7] पूर्व पश्चिमस्तम्भार्पित पूर्वपश्चिमायात[8] तिर्य क्काष्ठं प्राग्वंशः। तथैके सदः यज्ञशालायाः पूर्वतः स्थितं मण्डपं सदः सदसः पुरतो हविर्धानं तस्योत्तरत आग्नीध्रशालां तद्विहारं यजमानगृहं महानसं पाकभोजनशालाम्॥ १४ ॥

---

1. V °शै: 2. V पीतवर्णैः 3. A, B, J, Va omit स्तम्भम्। 4. पुरतः 5--5. V omits 6. A, B T °त्तु 7. A, B, T °नं 8. A, B, T °तं

रुरुजुः बभुञ्जुः । अमूत्रयन् मूत्रं कृतवन्तः । तथोत्तरवेद्याः मेखलाः सीमासूत्राणि बिभिदुः ॥ १५॥

**विज०** अनेन प्रकृते किं तत्राह - **अमर्षयित्वेति** । एवं विधं तं शिव ममर्षयित्वा विधातुः दक्षस्य स्वस्ति स्यात् किम् ? न स्यादेवे त्यन्वयः । दंष्ट्रा प्रभाभि रुद्रस्तो निरस्तो भागणो नक्षत्रगणो यस्य स तथोक्त स्तम् ॥ ११ ॥

न केवलं तर्कतो दक्षस्यैष्य दरिष्टं ज्ञायते किन्तु दुर्निमित्तै रपीत्याह-**बह्वेव**मिति । किं बहुना ? पर्यक् सर्वतो दिक्षु ॥ १२ ॥

उत्पातानां क्षिप्रं प्रत्यक्षफल मभूदित्याह - **तावदिति** । यावदुत्पाता उत्पन्नाः तावत्कालक्षेप मन्तरेण स महान्मखो रुद्रानुचरैः अन्वरुध्यत इत्यन्वयः । नानाविधत्व मेव स्पष्टीक्रियते वामनकैरित्यादिना । वामनकैः ह्रस्वैः ह्रस्वशिरोभिश्च पिङ्गैः कपिलैः पिशङ्गैः हरिद्रावर्णैः मकरवत् उदर माननं च येषां ते तथोक्ताः तैः । पर्याप्लुवद्भिः इतस्तत उत्पतद्भिः ॥ १३ ॥

तत्र तत्र स्वस्वानुकूलं रोधं चक्रु रित्युक्तं विशिनष्टि - **केचिदिति** । प्राग्वंशम् अग्निहोत्रस्थानं यज्ञशालायाः पूर्वपश्चिमस्तम्भयोः उपर्यवान्तर वंशावलम्बनं पूर्वपश्चिमायतं दारु वा प्राग्वंशः तं, यज्ञशालायाः पश्चिमतः पत्नीशाला । यज्ञशालायाः पुरतो मण्डपः सदः । मण्डपतः पुरतो हविर्धानी । तस्योत्तरतः शालाग्नीध्रशाला । पशुविशसनस्थानम् । तस्याग्नीध्रस्याग्निस्थानं विहारः । महानसः पचनस्थानम् ॥ १४ ॥

रुरुजुः "रुजो भङ्ग" इति धातुः । वेदिमेखला उत्तरवेदि सीमासूत्राणि ॥ १५ ॥

**अबाधन्त मुनीनन्ये एके पत्नी रतर्जयन् ।**
**अपरे जगृहु र्देवान् प्रत्यासन्नान् पलायितान् ॥ १६ ॥**

**भृगुं बबन्ध मणिमान् वीरभद्रः प्रजापतिम् ।**
**चण्डीशः[1] पूषणं देवं भगं नन्दीश्वरोऽग्रहीत् ॥ १७ ॥**

**सर्व एव र्त्विजो दृष्ट्वा सदस्याः सदिवौकसः ।**
**तैरर्द्यमानाः सुभृशं ग्रावभिर्नैकधाऽद्रवन् ॥ १८ ॥**

**जुह्वतः स्रुवहस्तस्य श्मश्रूणि भगवान् भवः ।**
**भृगो र्लुलुञ्चे[2] सदसि योऽहसत्[3] श्मश्रु दर्शयन्[4] ॥ १९ ॥**

1. I चण्डेशः 2. Ms, V, W °ञ्छवे 3. यो हसन् 4. V श्मश्वदर्शयत्

**भगस्य नेत्रे भगवान् पातितस्य रुषा भुवि।**

**उज्जहार सदस्योऽक्ष्णा यः शपन्त[1]मसूसुचत्॥ २०॥**

**श्रीध०** अबाधन्तेति। [2-]प्रत्यासन्नान् पलायितान् समीपस्थान् पलायितानपि जगृहुः[-2]॥ १६, १७॥

**सर्व** इति। ग्रावभि रर्द्यमानाः नैकधा अनेकधा दुद्रुवुः॥ १८॥

**जुह्वत** इति। स्रुवो[3] हस्ते यस्य। भवो वीरभद्रः लुलुञ्चे उत्पाटितवान्॥ १९॥

**भगस्येति**। उज्जहार उद्धृतवान्। यः[4] सदस्थः सभायां स्थित स्सन् शपन्तं शिवनिन्दां कुर्वन्तं दक्षम् अक्ष्णा अक्षि[5]निकोचेन [6]असूसुचत् प्रेरितवान्[7]॥ २०॥

**वीर०** अतर्जयन् अभर्त्सयन्। अपरे पलायितान् पुन रनुधावनेन प्रत्यासन्नान् देवान् जगृहुः गृहीतवन्तः॥ १६॥

मणिमान् रुद्रानुचाराग्रय भृगुं बबन्ध, वीरभद्रः प्रजापतिं दक्षं चण्डीशः [8]पूषणं पूषणाख्यं देवं भगाख्यं नन्दीश्वरः अग्रहीत्॥१७॥

सर्वे दिवौकोभिः देवै स्सहिताः सदस्याः सभ्याः ऋत्विजः रुद्रानुचरैः वध्यमानान् भृग्वादीन् दृष्ट्वा भृशं ग्रावभिः शिलाभि रर्द्यमानाः ताड्यमानाः अनेकधा दुद्रुवुः॥ १८॥

स्रुवं होमसाधनं हस्ते यस्य तस्य जुह्वतः होमं कुर्वतो भृगोः श्मश्रूणि भगवान् भवो वीरभद्रः लुलुञ्चे[9] उत्पाटितवान्। किं विशेषण श्मश्रूण्येव उत्पाटितवान्? तत्राह - यो भृगुः श्मश्रु दर्शयन् अहसत् रुद्रं परिहसितवान्। अतः श्मश्रूण्येव लुलुञ्चे[10] इत्यर्थः। एव मुत्तरत्राऽपि॥ १९॥

भगवान् वीरभद्रः रुषा क्रोधेन भूमौ पातितस्य भगस्य नेत्रे उज्जहार उद्धृतवान्, यो भगः सदसि सभायां स्थित स्सन् शपन्तं शिवनिन्दां कुर्वन्तं दक्षम् अक्ष्णा नेत्रेणाऽसूसुचत् सूचितवान् प्रेरितवानित्यर्थः॥ २०॥

**विज०** मणिमान् कश्चिद्गणनाथः प्रजापतिं दक्षम्। चण्डीशः चण्डेश्वरः॥ १६, १७॥

सर्वेऽप्येव मेव निगृहीताः किम्? नेत्याह - **सर्व एवेति**॥ १८॥

भवो वीरभद्रः लुलुञ्चे उत्पाटयामास। लुञ्च छेदन इति धातुः। अनेन कोऽपराधः कृतः इति तत्राह - सदसीति। विश्वसृजां सदसि॥ १९॥

---

1. M, Ma, Ms °मसूचयत् 2--2. V omits 3. V °ञ्छे 4. V omits यः 5. Va सङ्को° 6. V adds सूचितवान् 7. V adds इत्यर्थः।
8. A, B, T omit पूषणं 9. W °ञ्छे 10. W °ञ्छे

अत्र वीरभद्रः स्वापराधानुकूलं दण्डं करोति सर्वेषामित्याह भगस्येति ॥ २० ॥

**पूष्णश्चापातयद्दन्तान्[1] कालिङ्गस्य[2] यथा बलः ।**
**शप्यमाने गरिमणि योऽहसद्दर्शयन्दतः ॥ २१ ॥**

**आक्रम्योरसि दक्षस्य शितधारेण हेतिना ।**
**छिन्दन्नपि तदुद्धर्तुं नाशक्नोत् त्र्यम्बकस्तदा ॥ २२ ॥**

**शस्त्रै रस्त्रान्वितै रेन[3] मनिर्भिन्नत्वचं हरः ।**
**विस्मयं परमापन्नो दध्यौ पशुपतिश्चिरम् ॥ २३ ॥**

**दृष्ट्वा संज्ञपनं[4] योगं पशूनां स पति र्मखे ।**
**यजमानपशोः[5] कस्य कायात्तेनाहर च्छिरः ॥ २४ ॥**

**साधुवादस्तदा तेषां कर्म[6] तत्तस्य शंसताम्[7] ।**
**भूतप्रेतपिशाचाना मन्येषां तद्विपर्ययः ॥ २५ ॥**

**जुहावैतच्छिर स्तस्मिन्[8] दक्षिणाग्नावमर्षितः ।**
**तद्देवयजनं दग्ध्वा प्रातिष्ठद् गुह्यकालयम् ॥ २६ ॥**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादशसाहस्त्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
चतुर्थस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥

**श्रीध० पूष्णश्चेति** । कलिङ्ग देशराजस्या निरुद्धोद्वाहे बलभद्रो यथा द्यूते दन्तान् पातितवान् । गरिमणि गुरुतरे रुद्रे[9] निन्द्यमाने दतो दन्तान् दर्शयन् यो जहास । पूष्णो रिति पाठे द्विवचनम् ''ऐन्द्रापौष्णश्चरु र्भवति'' इत्यत्रान्वय[10] सहितस्यापि पूष्णो दन्तपात[11] प्राप्त्यर्थं सूचितवान् । तथा हि ''पूषा प्रपिष्टभागोऽदन्तकोहितं देवा अब्रुवन्'' इति विहितस्य पिष्टभागस्य[12] द्विदैवत्याभावात् तत्र तस्य दन्ताः सन्तीति वक्तव्यं स्यात् । न चै तत्संगच्छत इत्याशङ्क्य तत्राऽपि तस्य दन्तपातोऽवस्थाभेदे प्रवृत्तेन द्विवचनेन प्राप्यते[13] । अत एव पूष्णोऽनुग्रहं द्वेधावक्ष्यति ''पूषातु यजमानस्य दद्भि र्जक्षतु पिष्टभुक्'' (भाग.4-7-4) इति । केवलश्चेत् प्रविष्ट[14] भुग्भविष्यति अन्यसहितश्चेत्, यजमानस्य[15] दद्भिः[16] भक्षयिष्यतीत्यर्थः ॥ २१ ॥

---

1. I पूष्णो ह्यपा° 2. M, Ma, Ms V क° 3. A, B, G, I, J, T °व 4. M, Ma, Ms °ने 5. M, Ma, Ms °शोस्तस्य 6. V तत्तत्प्रशं° 7. I पश्यताम् 8. M, Ma, Ms °स्य 9. Va omits रुद्रे 10. V °त्र तस्य° 11. V °तनप्रा° 12. A, B, J, Va पेषणस्य 13. B, V, ज्ञा° 14. V omits प्र 15. °न्दद्भिः 16. V omits अर्थः।

**आक्रम्येति**। छिन्दन्नपीत्यत्र शिर इत्युपरि व्यक्तीभविष्यति। त्र्यम्बको वीरभद्रः ॥ २२ ॥

**शस्त्रैरिति**। अस्त्रान्वितैः मन्त्रसहितैः शस्त्रैः[1] अनिर्भिन्ना[2] त्वग्यस्य तथाभूतं दृष्ट्वेति शेषः ॥ २३ ॥

**दृष्ट्वेति**। स पशूनां पति र्मखे संज्ञपनं योगं कण्ठनिष्पीडनादिरूपं मारणोपायं दृष्ट्वा तेनोपायेनाहरत् ॥ २४ ॥

**साधुवाद** इति। अन्येषां ब्राह्मणादीनां तद्विपर्ययोऽसाधुवादः अभूदिति शेषः ॥ २५ ॥

**जुहावेति**। गुह्यकालयं कैलासं प्रतस्थे[3] ॥ २६ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे
श्रीश्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां पञ्चमोऽध्यायः ॥ ५ ॥

**वीर०** कालिङ्गस्य कलिङ्गदेशराजस्य बलः बलभद्रः यथा तथा पूष्णः दन्तान् अपातयत् पातितवान्, यः पूषा गरिमणि गुरुतरे रुद्रे शप्यमाने सति दतः दन्तान् दर्शयन् अहसत्। पूष्णो रिति द्विवचनपाठे तु "तदिन्द्रापौष्णश्चरुर्भवति" इत्यत्रान्वयसहितस्यापि पूष्णो दन्तपातन[4] प्राप्त्यर्थम् ॥ २१ ॥

त्र्यम्बको वीरभद्रः दक्षस्योरसि आक्रम्य पादं विन्यस्य शितधारेण हेतिना खड्गेन छिन्दन्नपि तदा तच्छिर इत्यपकृष्यते, उद्धर्तुं तदा नाऽशक्नोत् असमर्थोऽभवत् ॥ २२ ॥

अस्त्रान्वितैः मन्त्रसहितैः शस्त्रैः न निर्भिन्नात्वक् यस्य तथाभूत मेनं दक्षं दृष्ट्वेति शेषः। पशुपतिः हरो वीरभद्रः परं विस्मय मापन्नः प्राप्तः चिरं दध्यौ शिरस उद्धरणोपायं चिन्तितवान्।

पशूनां पतिः स वीरभद्रः मखे अध्वरे संज्ञपनं ॥ २३ ॥

मारणं योग मुपायं दृष्ट्वा यागीयपशुवदयं हन्तव्य इति दृष्ट्वा निश्चित्य तस्य यजमानो दक्षः स एव पशुः तस्य, यद्वा, यजमानस्य यः पशुः देवतोद्देशेन यजमानेन त्यक्ष्यमाणः पशुः तस्य, संज्ञपनं मारणं योग मुपायं निश्चित्य तेनैव योगेन तस्य दक्षस्य कायात् शिर अहरत् उद्धृतवान् ॥ २४ ॥

तच्छिरश्छेदनरूपं कर्म शंसतां स्तुवतां भूतादीनां साधुवादः अभवत्। अन्येषां ब्राह्मणादीनां तद्विपर्ययः असाधुवादः अभवदित्यर्थः ॥ २५ ॥

---

1. B, J, V, Va, omit शस्त्रैः 2. V न 3. B, J, V Va omit प्रतस्थे । 4. T ०ट०

एतस्य दक्षस्य शिरः तस्मिन् तदध्वरसम्बन्धिनि दक्षिणाग्नौ अमर्षितः क्रुद्धः जुहाव तस्य दक्षस्य देवयजनमेवं दग्ध्वा नाशयित्वा गुह्यकालयं कैलासं प्रातिष्ठत् प्रययौ ॥ २६ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां पञ्चमोऽध्यायः ॥ ५ ॥

**विज.** कालिङ्गस्य दन्तवक्त्रस्य द्यूते बलो बलभद्रः भृगुणा गरिमणि ज्ञानोपदेष्टृत्वेन गुरुतमे शिवे शप्यमाने सति यः पूषा दतः दन्तान् दर्शयन् अहसत् तस्य ॥ २१ ॥

वीरभद्रो दक्षं बद्ध्वा किमकरोदिति तत्राह - **आक्रम्येति**। शितधारेण तीक्ष्णाग्रेण त्रीणि अम्बकानि नेत्राणि यस्य ॥ २२, २३ ॥

ज्ञानफल माह - **दृष्ट्वेति**। मखे पशूनां संज्ञपने हिंसने योगं मन्त्रपूर्वकोपायं यजमन एव पशुः तस्य तेन योगेन ॥ २४ ॥

अयं हि विक्रम उभयेषाम् उभयान्तः करणवृत्ति मकार्षीदित्याह - **साधुवाद** इति। अन्येषां दक्षपक्षिणाम् ॥ २५ ॥

मन्त्रादिशक्त्यैतच्छिरस्सन्धान मपि न कार्यमिति भावेन शिरश्छेदोत्तरक्रियां वक्ति - **जुहावेति**। ततः परं किमकारीति तत्राह- तद्देवयजनमिति । देवयजनं यज्ञं दग्ध्वा विनाश्य गुह्यकालयं कैलासं प्रातिष्ठत् प्रायादिति । अत्र त्र्यम्बको हरः पशुपतिरिति विशेषनामनिर्देशात् किञ्चन तात्पर्य मस्तीति ध्वनयति। पूर्वं वीरभद्रेण स्वेन रूपेण गत्वा यज्ञशालादिकं भङ्क्त्वा पश्चात् मूलरूपेण गत्वा दक्षमवधीत् । तत्राप्युपेन्द्रेण हरिणा धर्मपुत्रेण हरिणा च जितः शिवः अन्यान् तत्र स्थितान् जित्वा कैलास मगमदिति। तदुक्तं - "वीरभद्राख्यरूपेण स्वेन पूर्वं ययौ हरः। मूलरूपेण पश्चात्तु गत्वा दक्ष मथावधीत्। तत्रोपेन्द्रेण हरिणा जितो धर्मात्मजेन च। अन्यान् जिगायं प्रययौ कैलासं स्वं निकेतनम्" (ब्राह्मे) इति॥ २६ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीमद्विजयध्वजतीर्थविरचितायां पदरत्नावल्यां

टीकायां पञ्चमोऽध्यायः ॥ ५ ॥

# षष्ठोऽध्यायः

## मैत्रेय उवाच

अथ देवगणास्सर्वे रुद्रानीकैः पराजिताः ।
शूल[1]पट्टिशनिस्त्रिंशगदापरिघमुद्गरैः ॥ १ ॥

सञ्छिन्नभिन्नसर्वाङ्गाः सर्त्विक्सभ्या[2] भयाकुलाः ।
स्वयम्भुवे नमस्कृत्य[3] कात्स्न्येनैतन्न्यवेदयन् ॥ २ ॥

उपलभ्य पुरैवैतद्भगवानब्जसम्भवः ।
नारायणश्च विश्वात्मा न कस्या[4]ध्वरमीयतुः ॥ ३ ॥

तदाकर्ण्य विभुः प्राह तेजीयसि कृतागसाम्[5] ।
[6]क्षेमाय भूयसे [7]भूयान्न प्रायेण बुभूषताम् ॥ ४ ॥

अथापि यूयं कृतकिल्बिषा भवं[8] ये बर्हिषो भागभाजं[9] परादुः ।
प्रसादयध्वं परिशुद्धचेतसा क्षिप्रप्रसादं प्रगृहीताङ्घ्रिपद्मम्[10] ॥ ५ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

षष्ठे तु देवसङ्घेन सह गत्वा भवं विधिः । सान्त्वयामास दक्षादिजीविताद्यर्थमादरात् ॥

अथेति । अथ देवगणाः सर्वे[11] स्वयम्भूवे न्यवेदयन्निति द्वितीयेनान्वयः ॥ १ ॥

सञ्छिन्नेति । शूलादिभिः सञ्छिन्नानि त्रुटितानि भिन्नानि विदीर्णानि अङ्गानि येषाम् । सह ऋत्विग्भिः सभ्यैश्च वर्तमानाः ॥२॥

उपलभ्येति । कस्य दक्षस्य [12-]यज्ञे ब्रह्मा विष्णुश्च [-12]नेयतुः न जग्मतुः, [13-]यत्राऽरुद्रको यज्ञः तत्र नारायणविरिञ्चावपि नागतौ[-13] ॥ ३ ॥

---

1. Ms, V, W पट्टस 2. M, Ma, Ms °स्समा° 3. V °त्वा 4. T तं° 5. A, B, G, I, J, T, V °सि 6. V पुंसि क्षेमाय सा 7. A, B, G, I, J, T तत्र सा 8. M, Ma, Ms भवे 9. V भुजं 10. M, Ma, Ms पद्माः 11. B, J, V Va omit सर्वे 12--12. V omits 13--13. V omtis

**तदिति** । विभुर्ब्रह्मा तेजीयसि अतितेजस्विनि पुरुषे कृतागसि [1]कृतापराधे सत्यपि स्वयं तत्र कृतागसां बुभूतषाम् [2]अपराधं कर्तुमिच्छतां सा तथा [3]बुभूषा तेषां क्षेमाय न भूयात् । प्रायेणेति लोकोक्तिः, न भवेदेवेत्यर्थः । [4-]यूयं तु अकृतागस्यापि तस्मिन् कृतकिल्बिषाः । अतः कथं क्षेमं स्यात्[-4] ॥ ४ ॥

**अथेति** । अथापि [5]तं प्रसादयध्वं [6]क्षमापयत ये भवन्तो बर्हिषो यज्ञस्य [7]भागभाजं परादुः दूरादेव खण्डितवन्तः । [8]प्रगृहीताङ्घ्रिपद्मं पादौ प्रगृह्येत्यर्थः ॥ ५ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं दक्षाध्वरविनाश उक्तः । अथ पुनः तत्सन्धानप्रकारं विवक्षुस्तदुपोद्घातरूपं देवकृतरुद्रप्रसादनं वक्ष्यन् तावत् देवानां रुद्रपारिषदताडितानां स्वयम्भुवे विज्ञापनं वदन् तेन सह रुद्रसन्निधिं गता इत्याह मैत्रेयः - **अथेति** । अथ [9]दक्षयज्ञविनाशानन्तरं सर्त्विक्सभ्या· ऋत्विग्भिः सभ्यैश्च सहिताः सर्वे देवगणाः रुद्रानीकैः रुद्रसैन्यैः कर्तृभिः शूलादिभिः साधनैः [10]सम्यक् छिन्नानि विदीर्णानि सर्वाणि अङ्गानि येषां ते । अत एव पराजिताः भयाकुलाः सन्तः स्वयम्भुवे चतुर्मुखाय नमस्कृत्य एतद्वृतं कात्स्न्र्येन न्यवेदयन् विज्ञापितवन्तः ॥ १, २ ॥

किं स्वयम्भुवे विज्ञापितवन्त इत्युच्यते । ब्रह्मापि दक्षाध्वरे आगतः तद्वृत्तं जानात्येव तत्राह - **उपलभ्येति** । अब्जसम्भवो भगवान् ब्रह्मा सर्वान्तरात्मा नारायणश्च पुरैवैतद्भाविदक्षाध्वरविनाशनमुपलभ्य ज्ञात्वा, भगवान् विश्वात्मेपि विशेषणाभ्यां तयोः सर्वज्ञत्वं सूचितं, तस्य दक्षस्याध्वरं प्रति नेयतुः न गतवन्तौ ॥ ३ ॥

विभुः ब्रह्मा तद्देवैर्विनिवेदितमाकर्ण्य श्रुत्वा आह उवाच, उक्तिमेवाह - **तेजीयसीत्यादिना** । तेजीयसि तेजिष्ठे रुद्रे कृतमागः अपराधो यैस्तेषां बुभूषतां भवितुमिच्छतां श्रेयस्कामानामिति यावत् भूयसे क्षेमाय श्रेयसे प्रायेण प्रायशः न भूयात् । तेजीयानिति विभक्तिविपरिणामेनानुषज्यते, असत्कृतः तेजीयान् पश्चात् प्रसाद्यमानोऽपि क्षेमकृन्न स्यादित्यर्थः । प्रायेणेति लोकोक्तिः ॥ ४ ॥

यद्यप्येवमथापि ये भवन्तो बर्हिषः यज्ञस्य भागभाजो भागं भजन्ति प्राप्नुवन्तीति तथा तान् परादुः बहिष्कृतवन्तः ते यूयं परिशुद्धचेतसा निष्कपटचित्तेन प्रगृहीताङ्घ्रिपद्मं पादावुपसङ्गृह्येत्यर्थः । भवं रुद्रं प्रसादयध्वं, कथं पादोपसङ्ग्रहमात्रेण प्रसन्नो भवेत् तत्राह - क्षिप्रप्रसादं पादग्रहणस्याऽनतिक्रमणीयतामालोच्य आश्वनुग्रहकारिणमिति भावः ॥ ५ ॥

---

1. B, J, V, Va omit कृदतापराधे 2. A भवितुमिच्छता प्रत्यपराधं चिकीर्षतां सा 3. A adds विघा 4--4. B, J, V, Va omit
5. B, J, V, Va omit तं 6. V °यध्वं 7. V भुजं 8. V adds यथा भवति तथा 9. W दक्षाध्वरवि° 10. A, B, T सञ्छिन्नानि

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

भगवदपरोक्षीकरणाय तत्प्रसादवत् स्वोत्तमभक्तयुत्कर्षतारतम्येन तदनुग्रहोप्यापाद्यः इत्यभिप्रायो वर्ण्यते अस्मिन्नध्याये। तत्र सर्वभक्तोत्तममहादेवप्रसादापादनाय देवानां ब्रह्माणं प्राप्य स्वसङ्कटविज्ञापनप्रकारः कथ्यते - अथ देवगणा इत्यादिना। रुद्रस्थानीकैः सैन्यैः पार्षदैरित्यर्थः॥ १॥

एतद्वृत्तम्॥ २॥

ननु विष्णुब्रह्मणोर्यज्ञागतेरावश्यकत्वेन तत्स्थितौ यज्ञविनाशो ब्रह्माणं गत्वा देवविज्ञापनं च कथं युक्तम् - "आग्नावैष्णवपुरोडाशं निर्वपति", "प्रजापते न त्वदेतान्यन्य" (मैत्र.सं.1-14-1) इत्यादि श्रुतेः इत्यत आह - उपलभ्येति। एतद्भाविकार्यं पुरै वोपलभ्य ज्ञात्वा अब्जसम्भवो ब्रह्मा विश्वात्मा विश्वान्तर्यामी त्रिमूर्तिगेन रूपेण नारायणश्च कस्य दक्षस्याध्वरं नेयतुः न जग्मतुरित्यन्वयः। अतो विष्णुब्रह्मणोः तत्रानवस्थानात् यज्ञविनाशो देवानां ब्रह्माणं गत्वा विज्ञापनं च युज्यत इति भावः॥ ३॥

विज्ञापितं सङ्कटं श्रुत्वा ब्रह्मणा शिक्षाकरं वाक्यमवादीदित्याह - **तदेति**। तेजीयसि बलिष्ठे पुंसि। विष्णुवायू विना इत्यतः प्रायेणेत्युक्तम्॥ ४॥

तर्हि तूष्णीम्भावोऽस्माकं किमुपायान्तरं वा ज्ञापयसीति तत्राह - **अथापीति**। बर्हिषो यज्ञस्य भागं स्वविहितांशं भजतीति भागभाक् तं पराकृत्यान्यस्मा अदुरित्यर्थः। अथापि कृतापराधानामपि युष्माकं शिवप्रसादनमेवोपाय इत्युक्तं भवति। प्रसादने किं साधनमित्यत उक्तं-परिशुद्धेति। राहुग्रस्तचन्द्रमण्डलवत् चेतस एकस्मिन्नर्थे विकल्मषत्वं न स्यादिति परीत्युक्तं, न केवलं चेतोनैर्मल्यमलं, किन्तु कर्म चापेक्षितमित्याह - प्रगृहीतेति। प्रगृहीते अङ्घ्रिपद्मे यैस्ते तथोक्ताः॥ ५॥

**आशासाना जीवितमध्वरस्य लोकः सपालः कुपिते न यस्मिन्।**
**तमाशु देवं प्रियया विहीनं क्षमापयध्वं हृदि विद्धं दुरुक्तैः॥ ६॥**

**नाहं न यज्ञो न च यूयमन्ये ये देहभाजो मुनयश्च तत्त्वम्।**
**विदुः प्रमाणं बलवीर्ययोर्वा तस्या[1]त्मतन्त्र[2]स्य क उपायं[3] विधित्सेत्॥ ७॥**

---

1. A, B, G, I, J, T य० 2. W °नः क 3. M, Ma, Ms उद्विधित्सेत्

**स इत्थमादिश्य सुरानज[1]स्तैः समन्वितः पितृभिः सप्रजेशैः ।**

**ययौ स्वधिष्ण्यान्निलयं पुरद्विषः कैलासमद्रिप्रवरं प्रियं प्रभोः ॥ ८ ॥**

**जन्मौ[2]षधितपोमन्त्रयोगसिद्धैर्नरेतरैः ।**

**जुष्टं किन्नरगन्धर्वैरप्सरोभिर्वृतं सदा ॥ ९ ॥**

**नानामणिमयैः श्रृङ्गैर्नानाधातुविचित्रितैः ।**

**नानाद्रुमलतागुल्मैर्नानामृग[3]गणाऽऽवृतैः ॥ १० ॥**

**श्रीध० आशासाना** इति । अध्वरस्य जीवितं पुनस्सन्धानं प्रार्थयमानाः सन्तः यस्मिन् कुपिते सति [4]सलोकपालो लोको न भवेन्नश्येदित्यर्थः ॥ ६ ॥

वयं तु तत्र गन्तुं बिभीमः त्वमेव कश्चिदुपायं विधत्स्वेति चेत् [5]अत आह - **नेति** । यज्ञः तदानीन्तन इन्द्रः । यस्य तत्त्वं [6]स्वरूपं बलवीर्ययोः प्रमाणमियत्तां च न विदुः । [7]तत्र वीर्यं पराक्रमः, [8-]तस्य स्वतन्त्रस्य क उपायं कर्तुमिच्छेत्[-8] । पापमिति पाठेऽपराधम् ॥ ७, ८ ॥

कैलासं वर्णयति - **जन्मौषधीत्यादि** चतुर्दशभिः । नरेतरैः देवैः जुष्टं [9]सेवितम् ॥ ९ ॥

**नानेति** । [10-]श्लोकद्वयस्य एकान्वयः[-10] । शृङ्गैः रमणं रतिप्रदमित्युत्तरेणान्वयः । कथम्भूतैः ? नानाधातुभिः विचित्रितैः नाना द्रुमलता गुल्माश्च येषु ॥ १० ॥

**वीर०** अध्वरस्य यज्ञस्य जीवितं पुनस्सन्धानं आशासानाः प्रार्थयमानाः यूयं यस्मिन् रुद्रे कुपिते सति सपालः दिक्पालसहितो लोको नास्ति नश्येदित्यर्थः, तं दुरुक्तैः दक्षादीनां दुर्वाक्यैः हृदि विद्धं ताडितम् अधुना प्रियया भार्यया च विहीनं देवं भवमाशु क्षमापयध्वं प्रसादयध्वम् ॥ ६ ॥

वयं तत्र गन्तुं बिभीमः, त्वमेव कश्चिदुपायं चिन्तयेत्यत्र रुद्रं प्रस्तौति - **नाहमिति** । यस्य रुद्रस्य तत्त्वं याथात्म्यं बलवीर्ययोः

---

1. M, Ma, Ms °जस्तुतैः 2. M, Ma, Ms °ध° 3. W गणाऽन्वितैः 4. A, B, J, Va सपालः 5. V तत्राह 6. B, J, V, Va omit स्वरूपं
7. B, J, V, Va omit तत्र 8--8. B, J, V, Va omit 9. B, J, V, Va omit सेवितम् 10--10. A, B, J, Va omit

प्रमाणमियत्तां च अहं न विद्याम्, यज्ञः इन्द्रः न च, न विद्यात् यूयं न च न विद्यात। तथा मुनयो येऽन्ये च देहधारिणोऽतीन्द्रियार्थदर्शिनो न विदुः, ब्रह्मदृष्ट्येदमुक्तं तस्यात्मनः परमात्मावेशावतारभूतस्य उपायं क्षमोपायं को विधित्सेत् न कोऽपि विधातुमिष्यादित्यर्थः। भवद्भिः पादोपसङ्ग्रहणमन्तरेणान्यः कः कमुपायं विधित्सेदिति भावः ॥ ७ ॥

सोऽजः ब्रह्मा सुरान् प्रत्येवमादिश्याऽऽज्ञाप्य तैर्देवैः सप्रजापतिभिः पितृभिश्च सह स्वधिष्ण्यात् स्वस्थानात् पुरारेः प्रभो रुद्रस्य प्रियं निलयं स्थानभूतम् अद्रिश्रेष्ठं कैलासं प्रति ययौ ॥ ८ ॥

कैलासं वर्णयति - **जन्मौषधीत्यादि**भिश्चतुर्दशभिः। जन्मना ओषध्यादिभिश्च ये सिद्धाः तैः नरेतरैः देवयोनिभिः तत्र जन्मतः सिद्धा ओषध्याद्यनपेक्षमेव सृष्टिवेलायामेव देवत्वेन सृष्टाः। ओषध्यादिसिद्धास्तु देवत्वसम्पादकौषध्याद्युपायैः देवत्वेन सिद्धाः। योगः रुद्रोपासनारूपयोगः। मन्त्रः यावज्जीवं शिवपञ्चाक्षर्यादिमन्त्रावृत्तिः। जुष्टं सेवितं, तथा च गीतं भगवता - ''देवान् देवयजो यान्ति पितॄन् यान्ति पितृव्रताः'' (भगी.7-23) इति। तथा अप्सरोभिः किन्नरादिभिश्च सदा वृत्तम् ॥ ९ ॥

शृङ्गैः शिखरैः रमणैः प्रियैस्सह विहरन्तीनां सिद्धानां या योषितः तासां रमणं रतिप्रदं, श्रृङ्गैः कथम्भूतैः ? नानाधातुभिर्गैरिकादिभिः विचित्रितैः नाना द्रुमाः लतागुल्मानि च येषु तैः ॥ १० ॥

**विज०** न केवलं कालान्तरभाविनः श्रेयसस्साधनं तत्प्रसादनं किन्तु अद्यतनस्यापीति भावेनाह - **आशासाना** इति। अध्वरस्य जीवितं पुनरनुसन्धानलक्षणं जीवनमाशासाना आकाङ्क्षमाणा यूयं दक्षदुर्वचनमेव न कारणम् ईश्वरस्य कोपस्य कारणान्तरमप्यस्तीति भावेनोक्तं प्रिययेति। न तत्कोपेन परमध्वरस्य विनाशः अपि तु सपालस्य लोकस्यापीत्यतः तदकरणात् भवः प्रसादनेन क्षान्तो भवति क्षिप्रप्रसादमेति तत्स्वभावादिति भावेनोक्तं लोक इति ॥ ६ ॥

बुभूषुणा विष्णुद्वेषवत्तस्य हरेः मनोनुसारितया वर्तमानस्य श्रीकण्ठस्य द्वेषः कर्तुं न योग्य इत्याशयेनाह - **नाहमिति**। अहं ब्रह्मशर्मा यस्य विष्णोस्तत्वं बलवीर्ययोरित्युपलक्षणं ज्ञानादिगुणानां च प्रमाणं[1] परिमाणं न वेद्मि तथा यज्ञ इन्द्रोऽपि न वेत्ति तथा यूयं न वित्थ तथान्ये प्रजापत्यादयो ये च देहभाजः शरीरिणो मुनयः सनकादयश्च न विदुरित्यन्वयः। तस्य विष्णोरात्मनो मनसस्तन्त्रस्य वशस्य रुद्रस्य कः पुमानपराधमुच्चैः विधित्सेत् कर्तु मिच्छेत् न कोऽपि बुभूषुरित्यर्थः। यज्ञो यज्ञपत्यादयश्च न विदुरित्यन्वयः। ''यज्ञो यज्ञपतिस्त्विन्द्रः पुरुहूतः पुरुष्टुतः'' इत्यभिधानात् इन्द्र एवात्र यज्ञशब्दार्थः। ''नाहं नेन्द्रो न चैवान्ये यत्तत्त्वं न विदुः परम्। तस्य

1. A, B, omit परिमाणं

विष्णोर्वशो रुद्रो मम वायोरथापि वा ॥ नान्यस्य कस्यचित् पुंसस्तस्येत्थं वः कुतः कृतम्'' (ब्रह्मवैवर्ते) इति वचनात् स्मृतिसमाख्यानाच्च ''न यज्ञो विष्णुर्मम वायोरथापि वा'' इत्यनेनात्मनो ब्रह्मणो वायोश्च तन्त्रस्येत्ययमर्थोऽपि ध्वनित इति ज्ञायते। उदित्यनेन संसारनदीमुत्तर्तुकामैः शिवद्वेषो न कर्तव्य इति सूचयति, मोक्षस्य शिवाद्युपदिष्टज्ञानापेक्षितत्वात्। तदुक्तं - ''मुमुक्षवो ब्राह्मणाश्च शिव इन्द्रादिभिस्तथा। श्रुत्वा ज्ञानं परं गुह्यं मुच्यन्ते ब्रह्मणा सह'' (कौर्मे) इति ॥ ७ ॥

मया सह गतं चेत् एषां देवानाम् एष शिवः क्षिप्रप्रसादो भविष्यतीति महादयालोः ब्रह्मणः कैलासं प्रति यात्रां वक्ति - **स इत्थमिति**। अजो ब्रह्मा पुरद्विषः प्रियं ''कैलासो गिरिशो मृडः'' इत्यभिधानात्। 'तस्य निवास' इति विग्रहे यथा विहिताण्प्रत्ययेन कैलास इति रूपं सिध्यति ॥ ८ ॥

कण्टकगुल्मखण्डैरप्रवेशस्य गण्डशैलादिपाषाणैः अनारोहस्याचलस्य किम्माहात्म्यात् रुद्रप्रियत्वम् ? इत्यतः तं पर्वतं चतुर्दशभिः श्लोकैर्वर्णयति - **जन्मेत्यादिना**। नरेतरैः नरत्वजातिरहितैः जन्मना विशिष्टकुलोत्पत्त्या, कृष्णचित्रकाद्योषधेन, कृच्छ्रचान्द्रायणादितपसाऽष्टाङ्गलक्षणयोगेन मृत्युञ्जयादिमन्त्रेण एतैः सिद्धैः अमरत्वादि सिद्धिं गतैः जुष्टमित्यनेन सुखसाधनत्वं ध्वनयति। नरेतरैः किन्नरगन्धर्वैः जुष्टमप्सरोभिः वृतमिति वा ॥ ९ ॥

मनश्शिलादिनानाविधधातुभिः विचित्रितैः चित्राकारं गमितैरिति शृङ्गविशेषणम्। नानामृगगणावृतैः नानाद्रुमादिभिश्च वृतम् ॥ १० ॥

**नानाऽमल[1]प्रस्रवणैर्नानाकन्दरसानुभिः।**
**रमणं विहरन्तीनां रमणैः सिद्धयोषिताम् ॥ ११ ॥**

**मयूरकेकाभिरुतं मदान्धालिविमूर्च्छितम्।**
**प्लाविते रक्तकण्ठानां कूजितैश्च पतत्रिणाम् ॥ १२ ॥**

**आह्वयन्तमिवोद्धस्तैर्द्विजान्[2] कामदुघैर्द्रुमैः।**
**व्रजन्तमिव मातङ्गैर्गृणन्तमिव निर्झरैः ॥ १३ ॥**

1. Ms. जल 2. M, Ma, Ms °जैः

**मन्दारैः पारिजातैश्च सरलैश्चोपशोभितम्।**

**तमालैः[1] सालतालैश्च कोविदारासनार्जुनैः ॥ १४॥**

**चूतैः कदम्बैर्नीपैश्च[2] नागपुन्नागचम्पकैः।**

**पाटलाशोककवकुलैः कुन्दैः कुरवकैरपि॥ १५॥**

**श्रीध० नानेति**। नाना अमलानि प्रस्रवणानि येषु, नाना कन्दराः सानवश्च येषु तैः, रमणैस्सह क्रीडन्तीनाम्॥ ११॥

**मयूरेति**। मयूराणां केकाभिः स्वनैः नादितम्। मदान्धैः अलिभिः भृङ्गैः[3] विमूर्च्छितं[4] विशेषेण[5] मूर्च्छितं मूर्छना रागगतिविशेषस्तद्व्याप्तं कृतम्। रक्तकण्ठानां कोकिलानां प्लावितैः प्लुतत्वं नीतैः स्वरैः अन्येषां च पतत्रिणां पक्षिणां[6] कूजितैः॥ १२॥

**आह्वयन्तमिति**। उद्धस्तैरुन्नतशाखैर्द्रुमैः द्विजान् पक्षिण आह्वयन्तमिव आकारयन्तमिव[7]। लोके हि हस्तमुक्षिप्योच्चै-स्स्वरेणाह्वानमर्थिनां[8] कुर्वन्ति अद्रिश्चोत्क्षिप्तहस्ताकारैः द्रुमैः तत्रत्यपक्षिस्वनैश्च तथा लक्ष्यत[9] इत्यर्थः। व्रजद्भिः मातङ्गैः गजैः[10] व्रजन्तमिव निर्झरध्वनिभिर्गृणन्तं भाषमाणमिव॥ १३. १४॥

**चूतैरिति**। चूताम्रयोः [11-]नीपकदम्बयोः[-11] अवान्तरजातिभेदः॥ १५॥

**वीर०** नाना अमलानि स्वच्छानि प्रस्रवणानि स्रोतांसि येषु, नाना कन्दराः सानूनि च येषु तैः॥ ११॥

तथा मयूराणां केकास्वनैः अभितः सर्वतः रुतं नादितम्। मदेन मकरन्दपानजनितमदेन अन्धैरलिभिः भृङ्गैः विमूर्च्छितं मूर्च्छनाख्यरागगीतिविशेषेण व्याप्तं रक्तकण्ठानां कोकिलानां प्लावितैः त्रिमात्रशब्दैः तथान्येषां पतत्रिणां पक्षिणां[12] च कूजितैः॥१२॥

उद्धस्तैः उन्नतशाखैः, कामदुघैः द्रुमैश्च द्विजान् पक्षिण आह्वयन्तमिव स्थितम्। लोके हि हस्तमुत्क्षिप्य उच्चैस्स्वरेणाह्वानमर्थिनाम्। कामधुक् अद्रिश्च उत्क्षिप्तहस्ताकारैर्द्रुमैः पतत्रिणां स्वनैश्च तथा लक्ष्यत इत्यर्थः। व्रजद्भिर्मातङ्गैः गजैः व्रजन्तमिव। निर्झराणां ध्वनिभिः गृणन्तं भाषमाणमिव स्थितम्॥ १३॥

---

1. A, B, G, I, J, T शा० 2. M, Ma, Ms ०म्बनी० 3. B, J, V, Va omit भृङ्गैः 4. A omits विमूर्च्छितं 5. B, J, V, Va omit विशेषेण मूर्च्छितं 6. B, J, V, Va omit पक्षिणां 7. B, J, V, Va omit आकारयन्तमिव 8. A adds द्विजानां 9. V लक्षितः 10. B, J, V, Va omit गजैः 11. V omits नीपकदम्बयोः 12. A, B, T omit V पक्षिणां

मन्दारादिभिर्वृक्षविशेषैः उपशोभितम्॥ १४॥

चूतैराम्रविशेषैः ॥ १५॥

**विज०** "निर्झरः प्रस्रवोऽम्भसाम्" (हला.को.2-11) इति हलः । जलस्य नानात्वं मरकतादिस्थलसम्पर्कात् । कर्दमराहित्येनामलत्वं, न तु शौक्ल्येन। तथात्वे नानात्वं विरुद्धम्। कन्दरा गुहाः। सानूनि तटानि। रमणैस्सह विहरन्तीनां सिद्धयोषितां रमणं रतिप्रदम्॥ ११॥

मयूरकेकाभिरुतं शब्दितं विमूर्च्छितं विविधं गीतं रक्तकण्ठानां कोकिलानां प्लावितैः तारस्वरितैः अन्येषां पतत्रिणां कूजितै रुतैः॥ १२॥

किञ्च पक्षिग्राहकैः पुरुषैरुद्धस्तैः उद्वृत्तैर्द्विजैः करणैः, कामं दुहद्भिः द्रुमैः आह्वयन्तमिव स्थितम्॥ १३॥

पारिजातैः पारिभद्रकैः सरलैः देवदारुभिः, सालतालैः सर्जतृणराजैः, कोविदारैः काञ्चनारकैः असनैः पिशङ्गपुष्पैः, अर्जुनैः ककुभैः॥ १४॥

नागैः नागकेसरैः, पुन्नागैः सुरवल्लभैः कुरबकैः तिलकैः॥ १५॥

**[1]स्वर्णार्णशतपत्रैश्च [2]वरेणुकजातिभिः ।**
**[3]कुटजैर्मल्लिकाभिश्च माधवीभिश्च मण्डितम्॥ १६॥**

**पनसोदुम्बराश्वत्थप्लक्षन्यग्रोधहिङ्गुभिः ।**
**भूर्जैरोषधिभिः पूगै राजपूगैश्च जम्बुभिः॥ १७॥**

**खर्जूरा[4]म्लातकाम्राद्यैः प्रिया[5]लुमधुकेङ्गुदैः ।**
**द्रुमजातिभि[6]रन्याभू राजितं वेणुकीचकैः॥ १८॥**

---

1. M, Ma सुवर्ण; Ms, V स्वर्णार्क 2. M, Ma, Ms वीर 3. A, B, G, I, J, M, Ma, Ms, T कुब्जकै° 4. A, B, G, I, J, M, Ma, Ms T °म्रा° 5. A, B, G, I, J, M, Ma, Ms, T °ल 6. A, B, G, I, J, M, Ma, Ms, T °रन्यैश्च

**कुमुदोत्पलकल्हारशतपत्रसं[1]मृद्धिभिः ।**

**नलिनीषु कलं कूजत्खगबृन्दोपशोभितम् ॥ १९ ॥**

**मृगैः शाखामृगैः क्रोडै मृगेन्द्रैर्ऋक्षशल्यकैः ।**

**गवयैः [2]शरभैर्व्याधै रुरुभिर्महिषादिभिः ॥ २० ॥**

**श्रीध० स्वर्णेति** । [3-]स्वर्णार्णैः स्वर्णवर्णैः [-3][4]शतपत्रैः [5]मण्डितम् । [6]वरेणुकजातिभिरित्यत्र [7]वराः श्रेष्ठाः, [8]रेणुकाः एलाः जातिः मालती ॥ १६ ॥

**पनसेति** । [9-]हिङ्गुभिः गुग्गुलवृक्षैः[-9] ॥ १७ ॥

**खर्जूरेति** । द्रुमजातिभिरित्यत्र जातिस्वरान्तरभेदसामान्यम् । वेणुकीचकयोश्च नीरन्ध्रसरन्ध्रत्वेन भेदः ॥ १८ ॥

**कुमुदेति** । कुमदादि [10]समृद्धिभिः हेतुभिः नलिनीषु सरस्सु कलं मधुरं यथा भवति एवं कूजन्ति यानि पक्षिबृन्दानि तैरुपशोभितम् ॥ १९ ॥

**मृगैरिति** । मृगादिभिः निर्जष्टं निषेवितम् । [11-]तत्र शाखामृगैः वानरैः, क्रोडैः सूकरैः, ऋक्षैः अच्छभल्लै[-11] पूर्वं मृगगणाः श्रृङ्गविशेषणत्वेनोक्ताः, इदानीं तु स्वातन्त्र्येणेत्यपौनरुक्त्यम् ॥ २० ॥

**वीर० स्वर्णशतपत्रैः** सुवर्णवर्णैः कुशेशयैः कुन्दादिभिर्लताविशेषैश्च मण्डितम् । रेणुका एला, जातिर्मालती ॥ १६ ॥

पनसादिभिर्द्रुमैः ॥ १७ ॥

तथान्यैश्च द्रुमजातिभिः द्रमुसामान्यैः । वेणुकीचकैश्च राजितं मण्डितं, नीरन्ध्रसरन्ध्रत्वेन वेणुकीचकयोः [12]भेदः ॥ १८ ॥

कुमुदादिसमृद्धिभिः शतपत्राणां [13]स्वर्णवर्णानां ऋद्धिभिः राजितं, नलिनीषु सरस्सु कलं मधुरं यथा भवति तथा कूजद्भिः खगबृन्दैः पक्षिसङ्घैरुपशोभितम् ॥ १९ ॥

1. A, B, G, I, J, M, Ma, Ms, T वनर्द्धिभिः 2. Ma नाभिभि° 3--3. V omits 4. A adds पुष्पप्रधानगुल्मभेदैः 5. V omits मण्डितम् 6. B, J, V, Va omit वर 7. B, J, V, Va omit वराः श्रेष्ठाः 8. A, B, J, V, Va रेणुका एला 9--9. A, J, V, Va omit 10. A adds वनस्य 11--11. B, J, V, Va omit 12. A, B, T add द्रुमजातिभिरित्यत्र जातिरवान्तरभेदसामान्यम् । 13. A, B, T add वनानां

मृगादिभिर्निर्जुष्टं निषेवितम् ॥ २० ॥

**विज०** सुवर्णः कृतमालः, वीरः करवीरं, रेणुकं केतकी, कुब्जकैः कुङ्कुमतरुभिः, माधवी वासन्ती। अत्र संस्कृताधिकारित्वात् पर्यायान्तरमेव लिख्यते, नानात्वेनापभ्रंशानां तैर्बोधनं न शक्यते ॥ १६ ॥

हिङ्गु. रामठः भूर्जैः भूर्जपत्रैः ओषधिभिः जनवृक्षैः ॥ १७ ॥

(काश्मीरी कृष्णवृत्तिकः) आम्रातको विड्डलः, आम्रो जिह्वारसकरः, प्रियालो लवगः धनुर्वा, मधुको मधुकरसः इङ्गुदः हिङ्गुदकः तापसतरुर्वा ॥ १८, १९ ॥

शाखामृगैः वानरैः क्रोडैर्वराहैः, ऋक्षैः भल्लूकैः शल्यकः कण्टकवराहः, गवया वनगावः, शरभोऽष्टापदः रुरुर्हरिणेषु महान् ॥ २० ॥

**कर्णान्त्रैकपदाश्वास्यैर्निर्जुष्टं मृगनाभिभिः।**[1][2][3]
**कदलीषण्डसंरुद्धनलिनीपुलिनश्रियम् ॥ २१ ॥**[4]

**पर्यस्तं नन्दया सत्याः स्नानपुण्यतरोदया।**[5]
**विलोक्य भूतेशगिरिं विबुधा विस्मयं ययुः ॥ २२ ॥**

**ददृशुस्तत्र ते रम्यामलकां नाम वै पुरीम्।**
**वनं सौगन्धिकं चापि यत्र तन्नाम पङ्कजम् ॥ २३ ॥**[6]

**नन्दा चालकनन्दा च सरितौ बाह्यतः पुरः।**
**तीर्थपादपदाम्भोजरजसातीव पावने ॥ २४ ॥**

**ययोः सुरस्त्रियः क्षत्तरवरुह्य स्वधिष्ण्यतः।**
**क्रीडन्ति पुंम्भिस्सिञ्चन्त्यो विगाह्य रतिकर्शिताः ॥ २५ ॥**[7]

1. A, B, G, I, J, T कर्णान्त्रैक 2. V, W °द्यै° 3. A, B, G, I, J, T वृक 4. A, B, G, I, J, M, Ma, T खण्ड 5. M, Ma तमो°; W करो°
6. M, Ma तत्र 7. A, B, G, I, J, M, Ma, Ms, T पुंस°

**श्रीध० कर्णोंति** । [1]नाभिभिः कस्तूरीमृगैः[2], कदलीषण्डैः[3] [4-]कदलीनां षण्डैः सङ्घातैः[-4] समृद्धान्यावृतानि नलिनीनां [5]नदीनां पुलिनानि तैः श्रीः शोभा यस्मिंस्तम् ॥ २१ ॥

**पर्यस्तमिति** । नन्दया गङ्गया पर्यस्तं परिवेष्टितम् । सत्याः भवान्याः स्नानेन पुण्यतरम् अतिसुगन्धमुदकं[6] यस्यां तया ॥२२॥

**ददृशुरिति** । तत्र गिरौ वनं च ददृशुः । यत्र वने तन्नाम सौगन्धिकं पङ्कजं भवति। जातावेकवचनम् ॥ २३ ॥

पुरीं वर्णयति - **नन्दा च इति** चतुर्भिः । सरितौ[7] पुरः[8] पुरात् बाह्यतो भवतः । तीर्थपादस्य हरेः पदाम्भोजरजसा[9] ॥ २४ ॥

**ययोरिति** । ययोः [10-]नद्योः सुरतश्रम[-10]कर्शिताः विगाह्य प्रविश्य क्रीडन्ति ॥ २५ ॥

**वीर० कर्णोर्णैः** गोकर्णाख्यैः ऊर्णामृगैः एकपदैः अश्वमुख्यैश्च, मृगनाभिभिः कस्तूरीमृगैश्च नितरां जुष्टं कदलीषण्डैः संरुद्धान्यावृतानि नलिनीनां कमलाकराणां पुलिनानि तैः श्रीः शोभा यस्मिन् तम् ॥ २१ ॥

स्नानेन पुण्यकरं पुण्यसम्पादकम्[11] उदकं यस्यां तया, सत्याः निर्मलया नन्दया गङ्गया[12] परिवेष्टितम् । भूतेशस्य रुद्रस्य गिरिं कैलासं विलोक्य देवाः विस्मयं ययुः प्रापुः ॥ २२ ॥

ते देवाः तत्र गिरौ तस्य रुद्रस्य अलकां नाम अलकेति प्रसिद्धां रमणीयां पुरीं सौगन्धिकाख्यं वनं चापि ददृशुः । सौगन्धिकनाम्नोऽन्वर्थतामाह - यत्र वने सौगन्धिकं नाम पङ्कजं भवति । जातावेकवचनम् ॥ २३ ॥

पुरीं वर्णयति - **नन्दा** चेति चतुर्भिः । पुरः पुरात् बाह्यतः[13] बाह्ये नन्दा अलकनन्दा चेति द्वे सरितौ भवतः । सरितौ विशिनष्टि सार्धद्वयेन । तीर्थपादस्य हरेः पदाम्भोजरजसा अतीवात्यन्तं पावने भगवत्पदाम्भोजरजोयुक्तत्वात् अत्यन्तपावित्र्यकरे इत्यर्थः ॥ २४ ॥

हे क्षत्तः ! सुरस्त्रियः स्वधिष्ण्यतः स्वविमानेभ्यः अवरुह्य च रतिकर्शिताः विहारश्रान्ताः सत्यः ययोः सरितोर्विगाह्य स्वपुंसः स्वप्रियान् सिञ्चन्त्यः क्रीडन्ति जलक्रीडां कुर्वन्ति ॥ २५ ॥

**विज० कर्णो** गोकर्णः कर्णविहीनो वा । "कर्णः कर्णविहीनः स्यात्पण्डस्तु छिन्नपुच्छकः" (वैज.की. 3-4-59) इति

1. B, V नाभिः 2. B, V मृगः 3. B. खण्डैः 4--4. B, J, V, Va omit 5. B, J, V, Va omit नदीनां 6. V °न्धि उ° 7. V omits सरितौ 8. B omits पुरः 9. B °जस्य र° 10--10. B, J, V, Va omit 11. A °नम् 12. W adds परीतं 13. A, T, omit बाह्यतः

यादवः। कर्णाश्च और्णाश्च[1] एकपदाश्चाश्वास्याश्च कर्णौर्णैकपदाश्वास्यास्तैः। और्णादयोऽपि मृगविशेषाः। मृगनाभिभिः कस्तूरिकामृगैः, कदलीखण्डेन संरुद्धस्य संवृतस्य नलिनीपुलिनस्य पद्माकरसिकतामयोच्चस्थलस्य श्रीः यस्मिन् स तथा तम्॥२१॥

नन्दया गङ्गाशाखया नद्या पर्यस्तं परिवृतम्। भूतेशगिरिं श्रीकैलासम्॥ २२॥

तत्र कैलासे पुनः किं चित्रमपश्यन् इति तत्राह - **ददृशुरिति**। तन्नाम सौगन्धिकं नाम॥ २३॥

अलकाया बाह्यतो बहिर्भागे तीर्थपादः श्रीनारायणः तत्पादपद्मरजसा मिश्रितत्वात् अतीव पावने शुद्धे॥ २४॥

स्वधिष्ण्यतः स्वविमानात्॥ २५॥

**ययोस्तत्स्नानविभ्रष्टनव[2]कुङ्कुमपिञ्जरम्।**
**वितृषोऽपि पिबन्त्यम्भः पाययन्तो गजा गजीः॥ २६॥**

**तारहेममहारत्नविमानशतसङ्कुलाम्।**
**जुष्टां पुण्यजनस्त्रीभिर्यथा खं सतटि[3]द्घनम्॥ २७॥**

**हित्वा यक्षेश्वरपुरीं वनं सौगन्धिकं च तत्।**
**द्रुमैः कामदुघैर्हृद्यं चित्रमाल्यफलच्छदैः॥ २८॥**

**रक्तकण्ठखगानीकस्वरमण्डितषट्पदम्।**
**कलहंसकुलप्रेष्ठं[4] खरदण्डजलाशयम्॥ २९॥**

**वनकुञ्जर[5]सङ्घृष्टहरिचन्दनवायुना।**
**अधि पुण्यजनस्त्रीणां मुहुरुन्म[6]दयन्मनः॥ ३०॥**

**श्रीध० ययोरिति**। ययोरम्भो विगततृषोऽपि गजाः पिबन्ति। तत्र हेतुः - तासां सुरस्त्रीणां स्नानेन विभ्रष्टं गलितं यन्नवं कुङ्कुमं तेन पिञ्जरं पीतवर्णम्। गजीः करिणीः॥ २६॥

1. A omits और्णाश्च 2. M, Ma कुच 3. A, B, G, I, J, M, Ma, T °डि° 4. V श्रेष्ठं; M, Ma, Ms प्रेष्ठ° 5. M, Ma, Ms, W °कु°
6. A, B, G, I, J, M, Ma, Ms, T °थ°

**तारेति**। तारं रूप्यं तारादिमय विमानानां शतैः सङ्कुलां व्याप्तां[1] तडिद्भिः स्त्रीणां, घनैः विमानानां खेन पुर्याः सादृश्यम्॥२७॥

**हित्वेति**। यक्षेश्वरपुरीं हित्वा अतिक्रम्य तद्वनञ्च दृष्ट्वा ते देवाः[2] आराद् दूरात् वटं ददृशुरिति चतुर्थेनान्वयः। कथम्भूतं वनम्? चित्राणि माल्यानि फलानि छदाश्च पत्राणि[3] येषु तैर्द्रुमैः हृद्यं सुखकरम्॥ २८॥

**रक्तकण्ठेति**। रक्तकण्ठखगानामनीकस्य स्वैरैः मण्डिताः षट्पदाः [4-]षट्पदस्वराः[-4] यस्मिन्, कलहंसानां कुलस्य प्रेष्ठम्[5]। खरदण्डानि पद्मानि तैर्युक्ताः[6] जलाशयाः यस्मिन्॥ २९॥

**वनेति**। वनकुञ्जरैः सङ्घृष्टाः ये हरिचन्दनद्रुमाः तत्सम्बन्धिना वायुना पुण्यजनस्त्रीणां मन अधि अधिकम् उन्मथयत्[7]॥३०॥

**वीर०** ययोः सरितोरम्भः वितृषोऽपि विगततृष्णा अपि गजाः गजीः करिणीः अम्भः पाययन्तः पानं कारयन्तः पिबन्ति। तत्र हेतुः - तासां सुरस्त्रीणां स्नानेन विश्रष्टं गलितं यन्नवं कुङ्कुमं तेन पिञ्जरं पीतवर्णम्॥ २६॥

पुनः पुरीं विशिनष्टि - **तारेति**। तारं रूप्यं तारादिमयविमानानां शतैः सङ्कुलां पुण्यजनैः यातुधानैः तेषां स्त्रीभिश्च जुष्टां, तत्र दृष्टान्तः - तडिद्भिः मेघैः सहितं खमाकाशं यथेति। तत्र विमानानि - खमिव, पुण्यजनाः मेघा इव, तत्स्त्रियः तडित इव॥२७॥

एवम्भूतां यक्षेश्वरस्य कुबेरस्य पुरीमलकां हित्वा अतिक्रम्य तत्सौगन्धिकाख्यं वनं च दृष्ट्वा ते देवाः आरात् वटं ददृशुरिति चतुर्थेनान्वयः। कथम्भूतं वनम्? चित्राणि माल्यानि मालायोग्यानि पुष्पकिसलयादीनि[8] *परिच्छदानि क्रीडोपकरणानि येषु तैः, कामान् वर्षद्भिः द्रुमैः हृद्यं मनोहरम्॥ २८॥

रक्तकण्ठखगानां कोकिलपक्षिणाम् अनीकस्य समूहस्य स्वैर्मण्डिताः षट्पदा यस्मिन्, कलहंसानां कुलस्य प्रेष्ठं खरदण्डानि पद्मानि तैर्युक्ताः जलाशया यस्मिन्॥ २९॥

वनगजैः सङ्घृष्टा[9] हरिचन्दनद्रुमाः तत्सम्बन्धिना वायुना पुण्यजनस्त्रीणां मनः अधि अधिकं मुहुरुन्मदयत् परवशीकुर्वत्॥३०॥

**विज.** तासां स्नानेन विभ्रष्टं सङ्क्रान्तं कुचकुङ्कुमं तेन पिञ्जरं पीतरक्तम्॥ २६॥

**तारै** रजतैर्मौक्तिकैर्वा हेमभिः सुवर्णैः महारत्नैर्माणिक्यादिभिरलङ्कृतानां विमानानां शतैः सङ्कुलां निबिडां, कथमिव स्थिताम्? तडिता घनेन च सह वर्तमानं खमाकाशं यथा तथा॥ २७॥

---

1. A, J, V, Va omit व्याप्तां 2. B omits देवाः 3. V omits पत्राणि 4. B omits षट्पदस्वराः 5. B प्रेष्ठानि; V श्रेष्ठम्। 6. V तद्युक्ताः 7. A, V, Va °थन् 8. A, B, T पुष्पाणि * फलच्छदानि इत्यस्य स्थाने परिच्छदानि इति वीरराघवसम्मतः पाठः 9. W °ङ्कु°

अलकान्तःप्रवेशे तद्वैचित्र्यदर्शनेन तत्स्थजनसंलापेन कालक्षेपेण छिन्नदक्षदेहेन यज्ञानुसन्धानं दुष्करं स्यादिति धिया तां पुरीं तद्वनं च दृष्ट्वा हित्वा बहिरेव गच्छन्तस्ते देवा आराद् वटं ददृशुरित्यन्वयः। यक्षेश्वरपुरीं हित्वा तत्सौगन्धिकं च वनं दृष्ट्वा समीपे वटं ददृशुरिति वा। तद्वनं विशिनष्टि - द्रुमैरित्यादिना। चित्राणि माल्यानि पुष्पाणि फलानि छदाः पत्राणि येषु ते तथा तैः ॥ २८ ॥

खरो दण्डो येषां तानि तथा कलहंसकुलस्य प्रेष्ठानि प्रियतमानि खरदण्डानि पद्मानि येषु ते तथोक्ताः ते च जलाशया जलाधाराः कासारा यस्मिंस्तत्तथोक्तम् ॥ २९ ॥

वनकुञ्जरैः वनगजैः कण्डूतिनिरासार्थं संघृष्टानां निष्पिष्टानां हरिचन्दनानां, रजोगन्धमिश्रवायुनाऽधिकं पुण्यजनस्त्रीणां मनो मुहुरुन्मथयत् विलोलयत् ॥ ३० ॥

**वैदूर्य[1]कृतसोपाना [2]वापीरुत्पलमालिनीः ।**
**[3]व्याप्ताः किम्पुरुषैर्दृष्ट्वा त आराद्ददृशुर्वटम् ॥ ३१ ॥**

**स योजनशतोत्सेधः पादोनविटपायतः ।**
**[4]पर्यक्कृताचलच्छायो निर्नीडस्तापवर्जितः ॥ ३२ ॥**

**तस्मिन् महायोगमये मुमुक्षुशरणे सुराः ।**
**ददृशु[5]र्देवमासीनं त्यक्तामर्षमिवान्तकम् ॥ ३३ ॥**

**[6]सनन्दाद्यैर्महासिद्धैः शान्तैः संशान्तविग्रहम् ।**
**उपास्यमानं सख्या च भर्त्रा गुह्यकरक्षसाम् ॥ ३४ ॥**

**विद्यातपोयोगपथमास्थितं [7]तमधीश्वरम् ।**
**[8]चरन्तं विश्वसुहृदं वात्सल्याल्लोकमङ्गलम् ॥ ३५ ॥**

**श्रीध० वैदूर्येति** । यत्र च उत्पलमालिन्यो वाप्यः [9]तत्र किम्पुरुषैः [10]प्राप्तं [11]वनं दृष्ट्वा । [12]प्राप्ता इति पाठान्तरे किम्पुरुषैः प्राप्ता वापीश्च दृष्ट्वेत्यर्थः ॥ ३१ ॥

1. Ms, T, V °डू° 2. A, B, G, I, J, M, Ma, Ms, T वाप्य उ° 3. A, B, G, I, J, T प्राप्तं ; M, Ma, Ms, V व्याप्तं 4. M, Ma, Ms पर्यग्गतामल
5. A, B, G, I, J, M, Ma, Ms, T °शिव° 6. M, Ma, Ms सनन्दनादिभिस्सिद्धैः 7. M, Ma, Ms, V °द° 8. M, Ma, Ms ध्यायन्त°
9. A, B, J, V, Va तत् 10. V व्याप्तं 11. V वटं 12. A, J, V, Va omit प्राप्ता इति

**स इति**। योजनशतमुत्सेध उच्छ्रायो यस्य, पादोनैः सर्वतः पञ्चसप्ततियोजनप्रमाणैः विटपैः शाखाभिरायतो विस्तृतः पर्यक् सर्वतः कृता अ[1]चला छाया येन। निर्गतं नीडं यस्मात्॥ ३२॥

**तस्मिन्निति**। मुमुक्षूणां शरणे आश्रये [2-]त्यक्तः अमर्षो येन स[-2]ः अन्तकस्तत्तुल्यम्॥ ३३॥

तं विशिनष्टि - **सनन्दाद्यैरिति** पञ्चभिः। सख्या कुबेरेण चोपास्यमानम्॥ ३४॥

विद्येति। विद्या उपासना, तपश्चित्तैकाग्र्यं, योगः समाधिः तेषां पन्थानं प्रवर्तनद्वारा आ[3]स्थितं लोकस्य मङ्गलं हितम्। तपो वात्सल्यात् स्नेहादाचरन्तम्॥ ३५॥

**वीर०** वैदूर्यैर्मणिभिः कृतानि कल्पितानि सोपानानि यासु उत्पलानां माला पङ्क्तयो यासु ताः। आर्षत्वात् व्यत्ययेन द्वितीया। वाप्यः किम्पुरुषैर्व्याप्ताः यस्मिन् वने सन्ति तद्वनं दृष्ट्वा। यद्वा वाप्य इति व्यत्ययात्प्रथमा, वनं वापीश्च दृष्ट्वा आरात् समीपे वटं ते देवाः ददृशुः॥ ३१॥

वटं विशिनष्टि - **स इति**। स वटः योजनशतमुत्सेधः [4]उच्छ्रायो यस्य पादोनैः सर्वतः पञ्चसप्ततियोजनप्रमाणैर्विटपैः शाखाभिश्च आयतो विस्तृतः पर्यक् परितः कृता अचला निश्चला छाया येन। निर्गतं नीडं कुलायं यस्मात् तापेन सूर्याद्यातपेन रहितः॥ ३२॥

महायोगमये महायोगो भगवदुपासनायोगः तत्प्रचुरे महायोगनि[5]ष्ठपुरुषप्राचुर्यात् तत्स्थानस्य महायोगमयत्वम्। मुमुक्षवः अज्ञानान्मोक्तुमिच्छवः, जिज्ञासव इति यावत्। तेषां शरणे आश्रये तस्मिन् वटमूले आसीनमुपविष्टं त्यक्तामर्षो योऽन्तकस्तत्तुल्यं शिवं सुराः ददृशुः॥ ३३॥

शिवं विशिनष्टि - **सनन्दाद्यैरिति** पञ्चभिः। महासिद्धैः शान्तैः सनन्दाद्यैः गुह्यकरक्षसां भर्त्रा प्रभुणा सख्या वैश्रवणेन च उपास्यमानं सेव्यमानं संशान्तविग्रहं निर्वैरं कृतापराधेषु देवेष्वपि कृपालुमित्यर्थः॥ ३४॥

विद्या ज्ञानयोगः, तपः कर्मयोगः ताभ्यां युक्तो [6]यो योगपथः भगवद्भक्तिमार्गः तमास्थितं ज्ञानकर्मानुगृहीतभगवद्भक्तियोग-निष्ठमित्यर्थः। अधीश्वरं जितेन्द्रियम्। विश्वसुहृदं "चराचराणि सर्वाणि भूतानि भगवद्वपुः" अतः तदानुकूल्यं मे स्यात् इत्युक्तरीत्या विश्वानुकूलम्। अत एव वात्सल्यात् लोकानां मङ्गलं क्षेममेव चरन्तं कुर्वन्तम्॥ ३५॥

---

1. V अचलच्छाया 2--2. A, B, Va त्यक्तामर्षः ; J त्यक्तामर्षो योः 3. A adds स्थितं 4. A, B, T उच्छ्र्यो 5. A, B, T °ष्ठा° 6. A, B, T omit यो

**विज०** उत्पलानां माला यासु विद्यन्ते इत्युत्पलमालिनीरुत्पलमालिन्यः, वैदूर्यैः कृतानि सोपानानि कृत्रिमावतारस्थलानि यासु तास्तथा। एवंविधा वाप्यो यत्र सन्तीति शेषः। तत् किम्पुरुषैः विलासार्थं व्याप्तम्॥ ३१॥

वनं विशिनष्टि - **स योजनेति**। स वटो योजनानां शतमुत्सेध उन्नतिः यस्य स तथोक्तः। चतुर्धा विभक्तशतस्य पादः चतुर्थांशः पञ्चविंशतिसङ्ख्या तयोना रहिता सङ्ख्या पञ्चसप्ततिः। तावद्दीर्घैर्विटपैः आयतो विस्तृतः पर्यक् परितो गता कृता पूर्णा अमला छाया यस्य स तथा निर्गतानि नीडानि पक्षिमन्दिराणि यस्मात् स तथा तापवर्जितः शीतोष्णरहितः॥ ३२॥

सुरा महायोगमये अष्टैश्वर्यस्वरूपे मुमुक्षूणां शरणे निवासभूते तस्मिन् वटमूले आसीनं शिवं ददृशुरित्यन्वयः॥ ३३॥

सख्या वैश्रवणेन॥ ३४॥

विद्या च तपश्च योगश्च ते तथा तेषां पन्थाः मार्गः तमास्थितमनुतिष्ठन्तं तदधीश्वरं तेषां विद्यादीनामधीश्वरं विषयमुपदेष्टारं स्वामिनं च लोकं मङ्गलयतीति लोकमङ्गलं विश्वस्य सुहृदमनिमित्तबन्धुं श्रीनारायणं वात्सल्यात् भक्त्युद्रेकाद् ध्यायन्तम्॥ ३५॥

**लिङ्गञ्च तापसाभीष्टं भस्मदण्डजटाजिनम्।**
**अङ्गेन सन्ध्याभ्ररुचा चन्द्र[1]लेखां च बिभ्रतम्॥ ३६॥**

**उपविष्टं दर्भमय्यां बृस्यां ब्रह्म सनातनम्।**
**नारदाय प्रवोचन्तं पृच्छते श्रुण्वतां सताम्॥ ३७॥**

**कृत्वोरौ दक्षिणे सव्यं पादपद्मं च जानुनि।**
**[2]बाहुं प्रकोष्ठेऽक्ष[3]मालामासीनं तर्कमुद्रया॥ ३८॥**

**तं ब्रह्मनिर्वाणसमाधि[4]माश्रितं [5]व्युपाश्रितं गिरिशं [6]योगकक्ष्याम्।**
**सलोकपाला मुनयो [7]मुनीनामाद्यं [8]मुनिं प्राञ्जलयः प्रणेमुः॥ ३९॥**

**स तूपलभ्यागतमात्मयोनिं सुरासुरेशैरभिवन्दिता[9]ङ्घ्रिम्।**
**उत्थाय चक्रे शिरसाभिवन्[10]दनं [11]महत्तमः कस्य यथैव [12]विष्णुः॥ ४०॥**

---

1. M, Ma, Ms, V W °रे° 2. Ms, V W बाहुप्र 3. M, Ma, Ms माल° 4. M, Ma, Ms °मास्थितं 5. M, Ma, Ms, V व्य° 6. A, B, G, I, J कक्षाम्
7. A, B, G, I, J, M, Ma, Ms, T मनूना° 8. A, B, G, I, J, M, Ma, Ms, T मनुं 9. A, B, G, I, J, M, Ma, Ms, T °ङ्घ्रिः 10. V वादनं
11. A, B, G, I, J, T अर्हत्तमः कस्य; M, Ma, Ms महत्तमोऽर्कस्य 12. M, Ma, Ms विष्णोः

**श्रीध० लिङ्गमिति।** सन्ध्याभ्ररुचा रक्तवर्णेनाङ्गेन भस्मादि लिङ्गं चन्द्रलेखां च बिभ्रतम्॥ ३६॥

**उपविष्टमिति।** व्रतिनामासनं बृसी, [1-]तस्याम् उपविष्टं[-1] नारदाय ब्रह्म प्रवोचन्तं ब्रुवन्तम्[2]॥ ३७॥

**कृत्वेति।** सव्यं पादपद्मं दक्षिणे ऊरौ कृत्वा विन्यस्य सव्ये[3] जानुनि च सव्यं[4] बाहुं कृत्वा दक्षिणबाहुप्रकोष्ठे मणिबन्धस्थाने अक्षमालां च कृत्वा दक्षिणहस्तकृतया तर्कमुद्रयोपलक्षितमासीनमित्यर्थः। तदुक्तं योगशास्त्रे - "एकपादमथैकस्मिन्विन्यसेदूरुसंस्थितम्। इतरस्मिंस्तथा बाहुं वीरासनमिदं स्मृतम्॥" (रुद्रमामलम्) इति। तथा[5] तर्कमुद्रा चोक्ता - "तर्जन्यङ्गुष्ठयोरग्रे मिथः संयोज्य चाङ्गुलीः। प्रसार्य बन्धनं प्राहुस्तर्कमुद्रेति मान्त्रिकाः॥" इति॥ ३८॥

**तमिति।** ब्रह्मनिर्वाणं ब्रह्मानन्दः तत्र समाधिरैकाग्र्यं तमाश्रितम्। योगकक्षां योगपट्टं च वामजानुदृढीकरणार्थं विशेषेणोपाश्रितवन्तम्। मननशीला मुनयः[6] तेषामाद्यं मुख्यम्॥ ३९॥

**स इति।** अर्हत्तमो पूज्यतमोऽपि[7] विष्णुर्वामनमूर्तिः यथा। कस्य कश्यपस्य[8]॥ ४०॥

**वीर०** सन्ध्याभ्ररुचा रक्तवर्णेन अङ्गेन तापसानामिष्टं[9] भस्मादि लिङ्गं चन्द्ररेखां च बिभ्रतम्॥ ३६॥

दर्भमय्यां बृस्यां ब्रुवन्तोऽस्यां सीदन्तीति बृसी, पृषोदरादित्वात् साधुः, आस्तरणविशेषः तस्यामुपविष्टं पृच्छते नारदाय सतामन्येषां सनन्दनादीनां श्रृण्वतां सतां सनातनं ब्रह्म परमात्मानं प्रणवं वा प्रवोचन्तम्॥ ३७॥

सव्यं पादं दक्षिणे ऊरौ कृत्वा विन्यस्य जानुनि सव्ये सव्यबाहुं कृत्वा दक्षिणे बाहुप्रकोष्ठे मणिबन्धस्थाने अक्षमालां कृत्वा दक्षिणहस्तकृतया तर्कमुद्रयोपलक्षितमासीनमित्यर्थः। तदुक्तं योगशास्त्रे - "एकं पादमथैकस्मिन् विन्यसेदूरुसंस्थितम्। इतरस्मिन् तथा बाहुं वीरासनमिदं स्मृतम्॥" (रुद्रमामलम्) तर्कमुद्रा चोक्ता - "तर्जन्यङ्गुष्ठयोर्मध्यं[10] मिथः संयोज्यचाङ्गुलीः[11]। प्रसार्य बन्धनं प्राहुस्तर्कमुद्रेति मान्त्रिकाः॥" इति॥ ३८॥

तं ब्रह्मनिर्वाणसमाधिम् आनन्दरूपब्रह्म विषयसमाधिमाश्रितं योगकक्ष्यां योगपथं व्युपाश्रितं विशेषेणोपाश्रितं मुनीनामाद्यं मुख्यं मुनिं गिरिशं लोकपालसहिता मुनयः बद्धाञ्जलयः प्रणेमुः नमस्कृतवन्तः॥ ३९॥

---

1--1. A, B, J, Va omit 2. A, B, J, Va omit ब्रुवन्तम् 3. A omits सव्ये 4. B, J, Va omit सव्यं 5. A, B, J, Va omit तथा
6. A, B, J, Va मनवः 7. B, J, V, Va omit पूज्यतमोऽपि 8. V का° 9. A, B, T तापसाभीष्टं 10. W °ध्ये 11. A, B, T संयुज्य

स तु गिरिशः सुरासुरेशैः अभिवन्दितौ अङ्घ्री यस्य तमागतमात्मयोनिं ब्रह्माणमुपलभ्य ज्ञात्वा तस्मै, ब्रह्मणे उत्थायेति पाठान्तरं, तदा आसनादुत्थाय शिरसा अभिवन्दनं प्रणामं चक्रे, महत्तमो विष्णुः वामनरूपः यथा। कस्य कश्यपप्रजापतेः[1]। यद्वा कस्य चतुर्मुखस्याभिवन्दनं चक्रे। कस्य रुद्राभिवन्द्यत्वं सदृष्टान्तमाह - महत्तम इति। विष्णुर्यथा रुद्रस्य महत्तमः पूज्यः तथा कोऽपीत्यर्थः॥ ४०॥

**विज०** सन्ध्याभ्ररुचा गौर्यालिङ्गनेन सङ्क्रान्ततत्कुचकुङ्कुमेन रक्तत्वात् स्वतो धवलत्वात् सन्ध्याकालभवमेघवर्णेनाङ्गेन तापसाभीष्टं भस्म च दण्डश्च जटा चाऽजिनं च यस्मिंस्तथा तल्लिङ्गं वेषं "लिङ्गं शेफसि वेषे च चिह्ने बुद्ध्यादिसंहतौ॥" इति यादवः। चन्द्रस्य लेखां कलां च बिभ्रतं भस्मोद्वर्तनेन नेत्राद्यवयवानां रक्तत्वाद्वा सन्ध्याभ्ररुचेति॥ ३६॥

बृस्यां यति योग्यासने। "यतिनामासनं बृसी" (अम.को.2-445) इति हलः। सनातनं नित्यं ब्रह्म वेदतत्त्वम्॥ ३७॥

दक्षिणे ऊरौ सव्यं पादपद्मं कृत्वा सव्ये जानुनि च सव्यबाहुं दक्षिणे जानुनि च दक्षिणबाहुं कृत्वा प्रकोष्ठे कराग्रेऽक्षमाला यस्य स तथा तं तर्कमुद्रया ज्ञानमुद्रयाऽऽसीनम्॥ ३८॥

एवंविधं शिवं दृष्ट्वा किं चक्रुः इति तत्राह - **तं ब्रह्मेति**। मनूनां मननशीलानाम् उपासकानामाद्यं मनुं ब्रह्मविषये यो निर्वाणसमाधिः शरीराभिमानत्यागलक्षणा चित्तैकाग्रता तादृशीमवस्थामाश्रितं योगकक्ष्यां योगपट्टिकाम्॥ ३९॥

सर्वेषु प्रणमत्सु सत्सु ब्रह्मा किमकार्षीदित्याशङ्क्य पितृत्वाद् गुणज्येष्ठत्वात् गुरुत्वात् हरेः प्रेष्ठत्वाच्चाभ्येत्य शिवशर्माहमभिवादयामीत्यभिवाद्य शिवो ब्रह्माणमस्तौषीदित्याह - **स तूपलभ्येति**। शिरसेत्यनेनाष्टाङ्गविशिष्टां नतिं ध्वनयति। नतिं विशिनष्टि-यथेति। यथा विष्णोरष्टाङ्गविशिष्टत्वेन नमनं करोति तथेत्यर्थः। सर्ववन्द्यसूर्यादपि तेजिष्ठेन रुद्रेण प्रणतस्य विरिञ्चस्य माहात्म्यातिशयोऽस्तीति किं वक्तव्यमिति भावेन शिवं विशिनष्टि - महत्तम इति। अर्कस्य सकाशादपि महत्तमः तेजस्वितम इत्यर्थः। गुणगुणिनोरभेदाभिप्रायेणायं प्रयोगः। "तेजोऽर्थ उत्तमार्थे च पूज्यार्थे च प्रयुज्यते। महच्छब्दो महश्शब्दो मान्यशब्दस्तथैव च॥" (शब्दनिर्णये) इति वचनात् महच्छब्द इति सिद्धम्॥ ४०॥

**तथाऽपरे सिद्धगणा महर्षिभिर्ये वै समन्तादनु नीललोहितम्।**
**नमस्कृतः प्राह शशाङ्कशेखरं कृतप्रणामं प्रहसन्निवात्मभूः॥ ४१॥**

1. A, B, T °पस्य प्र°

**ब्रह्मोवाच**

**जाने त्वमीश[1] विश्वस्य जगतो योनिबीजयोः।**

**शक्तेः शिवस्य च परं यत्तद्ब्रह्म निरन्तरम्॥ ४२॥**

**त्वमेव भगवन्नेतच्छिवशक्त्योः[2] सरूपयोः।**

**विश्वं सृजसि[3] पास्यत्सि[4] क्रीडन्नूर्णपटो यथा॥ ४३॥**

**त्वमेव धर्मार्थदुघा[5]भिपत्तये दक्षेण सूत्रेण[6] ससर्जिथाध्वरम्।**

**त्वयैव लोकेऽवसिताश्च सेतवो यान्ब्राह्मणाः श्रद्दधते धृतव्रताः॥ ४४॥**

**त्वं कर्मणां मङ्गल मङ्गलानां कर्तुः[7] स्म[8] लोके[9] तनुषे स्वः[10] परं वा।**

**अमङ्गलानां च तमिस्रमुल्बणं विपर्ययः केन[11] तदेव कस्यचित्॥ ४५॥**

**श्रीध० तथेति**। महर्षिभिः सहिता ये[12] समन्तात् नीललोहितमनुवर्तन्ते तेऽपि[13] तस्मै वन्दनं चक्रुः। एवं सर्वैः नमस्कृतः प्राह - कृतः प्रणामो देवैः यस्मै तम्॥ ४१॥

यद्यपि त्वं नीचवत् मां नमस्करोषि तथापि तवैश्वर्यमहं वेद्मीत्याह - **जाने इति**। त्वां[14] विश्वस्येशं जाने। तत्र हेतुः - जगतो योनिः या शक्तिः प्रकृतिः बीजञ्च यः[15] शिवः पुरुषः तयोः परं[16] कारणं तथापि निरन्तरं[17] निर्भेदं यद्ब्रह्म निर्विकारं च तदेव त्वमिति जाने॥ ४२॥

ननु विरुद्धमेतत्तत्राह - **त्वमेवेति**। त्वमेव सरूपयोः अविभक्तयोः शिवशक्त्योः क्रीडन् विश्वसृष्ट्यादि करोषि [18-]ऊर्णपरो यथा[-18] ऊर्णनाभिरिव। स्वरूपयोरिति पाठे स्वांशयोः, अतो न विरोधः॥ ४३॥

**त्वमेवेति**। धर्ममर्थञ्च दोग्धि या त्रयी तस्या अभिपत्तये संरक्षणाय अध्वरं सृष्टवानसि। यद्वा हे धर्मार्थदुघ! धर्माद्यभिपत्तये तत्प्राप्तये दक्षेण सूत्रेण निमित्तेन सेतवो वर्णाश्रमा[19]चारमर्यादाश्चावसिताः निबद्धाः निर्णीता इति वा। श्रद्दधते श्रद्धया अनुतिष्ठन्ति॥४४॥

---

1. A, B, G, I, J, T °श° 2. M, Ma, Ms स्व 3. M, Ma, Ms क्रीडयोर्ण 4. A, B, G. I, J, T पटो 5. W धागाभि 6. M, Ma, Ms विसर्जिताध्वरः 7. M, Ma, Ms, कर्ताऽसिलोके 8. I स्व 9. A, B, I, J, T, V, W लोकं 10. M, Ma, Ms स्वयं फलम्। 11. M, Ma, Ms चि° 12. A, B, J, Va omit समन्तात् 13. V adds अभिवादनं 14. V omtis त्वां 15. A, J, Va omit यः 16. B, J, Va omit परं 17. V omits निरन्तरं 18--18. B, J, V, Va omit 19. A, B, J, Va °ममा°

सर्वकर्मफलदातापि त्वमेवेत्याह - **त्वमिति**। हे मङ्गल ! [1]त्वं मङ्गलानां शुभानां कर्मणां कर्तुः स्वः स्वर्गं परं मोक्षं वा तनुषे[2]। अमङ्गलानामशुभानां [3]निषिद्धानां कर्मणां कर्तुश्च तमिस्रं नरकं तनुषे। तत्र केन हेतुना तदेव तस्मिन्नेव [4]कर्मणि कर्स्यचित् विपर्ययो भवति ॥ ४५ ॥

**वीर०** नीललोहितं रुद्रं येऽपरे सिद्धगणा अनुवर्तन्ते तैर्महर्षिभिः सह नमस्कृतः आत्मभूः ब्रह्मा कृतप्रणामं कृतः चतुर्मुखविषयः प्रणामो येन तं शशाङ्कशेखरम्। कृतप्रणाम इति प्रथमान्तपाठे रुद्रेण कृतप्रणामः प्राह ॥ ४१ ॥

रुद्रस्य भगवदात्मकत्वात् तदावेशावतारत्वाच्च रुद्रं [5]ब्रह्मणा सामानाधिकरण्येन निर्दिशन् [6]यन्निष्कृष्टस्य ब्रह्मणोऽसाधारणं प्रकृतिपुरुषशरीरकत्वजगत्कारणत्वधर्ममर्यादास्थापकत्वानुग्रहीतृत्वनिग्रहीतृत्वादि तत्सर्वं रुद्रप्रशंसायै रुद्ररूपेणाऽवस्थितस्य ब्रह्मण आह - **जाने त्वामित्यादिभिश्चतुर्भिः**। हे ईश ! रुद्र ! विश्वस्य कृत्स्नस्य चिदचिदात्मकस्य जगतः [7]योनिबीजयोः योनिबीजभूतयोः क्षेत्रे बीजवत् प्रकृतौ पुरुषस्य मिलितत्वात् तयोः योनिबीजशब्दाभ्यां निर्देशः शक्तेर्ब्रह्मण अपृथक्सिद्धविशेषणभूतायाः त्रिगुणात्मिकायाः प्रकृतेः तथा शिवस्य "निर्वाणमय एवायमात्मा" इत्यादि श्रुत्या प्रत्यगात्मनः सुखरूपत्वाभिधानात् जीवस्य शिवशब्देन निर्देशः, तस्य च यत्परं विलक्षणं "तस्य परमाम्रेडितम्" (अष्टा.8-1-2) इति निर्देशान्न परशब्देन योगे "अन्यारादितरर्त्तेदिक्शब्द -" (अष्टा. 2-3-29) इत्यादिना पञ्चमी। प्रकृतिपुरुषाभ्यां स्वरूपतः स्वभावतश्च विलक्षणमित्यर्थः। तद्यन्निरन्तरं निर्भेदं तत्प्रकृतिपुरुषान्तरात्मतयाऽवस्थितमपि निरस्तनिखिलहेयत्वेन समस्तकल्याणगुणात्मकत्वेन च एकरूपमित्यर्थः। यद्वा निरन्तरम् अन्तरं विच्छेदः तस्मान्निर्गतं सर्वानुस्यूतं सर्वान्तरात्मतयाऽवस्थितमिति यावत्। अथवा कार्त्स्न्येन ज्ञानस्वरूपं न तु प्रदेशभेदेन जडमित्यर्थः। तद्ब्रह्म त्वां जाने इदञ्च सामानाधिकरण्यं शरीरात्मभावनिबन्धनमावेशावतारत्व निबन्धनं च न तु तादात्म्यनिबन्धनम्। "**एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधसम्भवौ। मया दर्शितपन्थानौ सृष्टिसंहारकारकौ**" (भार. 12-328-17) "**सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते**॥" (विध.पु.68-52) "**नारायणाद्रुद्रो जायते**" (नारा.उ.) "**अनपहतपाप्मा वा अहमस्मि**" इत्यादिभिः कार्यत्वकर्मवश्यत्वाद्यभिधानेन रुद्रादेः जीवत्वनिश्चयात् तादात्म्यासम्भवात्। अत एव "**भवांस्तु पुंसः परमस्य मायया दुरन्तयाऽस्पृष्टमतिः समस्तदृक्**" (भाग.4-6-49) इति व्यतिरेकेण निर्देक्ष्यति ॥ ४२ ॥

एवं ब्रह्मसामानाधिकरण्येन रुद्रं निर्दिश्य ब्रह्मदृष्ट्या तस्य चिदचिच्छरीरकत्वं सृष्ट्यादिकर्तृत्वं चाह - **त्वमिति**। हे भगवन् !

---

1. B, J, V, Va omit त्वं 2. V adds तत्र इह 3. B, J, V, Va omit निषिद्धानां 4. A, J, V, Va omit कर्मणि 5. A, B, T °णः 6. A, B, T यन्निकृ°
7. A, B, T omit योनिबीजयोः

स्वांशयोः स्वस्य तव अंशयोः शिवशक्त्योः प्रकृतिपुरुषयोः । अत्र विशिष्टवस्त्वेकदेशत्वरूपमंशत्वं विवक्षितं, न तु विशेष्यवस्त्वेकदेशत्वम् । प्रकृतिपुरुषयोः विकाररूपमेतज्जगत्त्वमेव "सर्वं खल्विदं ब्रह्म" (छान्दो.उ.3-14-1) इतिवत् सामानाधिकरण्यमिदं शरीरात्मभावनिबन्धनमेव । कथम् ? रुद्राख्यजीवविशेषस्य कृत्स्नं प्रपञ्चं प्रति आत्मत्वं जगतश्च शरीरत्वं, कथञ्चित् शरीरात्मसम्भवेऽपि शरीरवाचिपदस्य शरीरिवाचकेन कथं सामानाधिकरण्यमिति चेदुच्यते । न ह्यत्र रुद्राख्यजीव-विशेषस्यात्मत्वं जगतस्तच्छरीरत्वं चोच्यते, किन्तु ब्रह्मविदामहंत्वमादिशब्दा अहंत्वमादिबुद्धयश्च ब्रह्मपर्यन्ताः । "तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च (बृह.उ. 1-4-10) कक्षीवानृषिश्च विप्रश्चास्मि त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते तद्योऽहं योऽसौ सोऽहम् अहं हरिः सर्वमिदं जनार्दनः" इत्यादि श्रुतिस्मृतिभिः तथा प्रतीतेः । एवं चात्र प्रस्तोतुश्चतुर्मुखस्य ब्रह्मविदग्रेसरत्वेन तत्प्रयुक्ता अहंत्वमादिशब्दाः तद्बुद्धयश्च ब्रह्मपर्यन्ता इति रुद्रस्य भगवदात्मकत्वेन तत्पर्यन्तत्वमवगम्य ब्रह्मसामानाधिकरण्येन स निर्दिष्ट इति, विशेष्यभूतस्य ब्रह्मणः कृत्स्नचिदचिदन्तरात्मत्वं तयोः शरीरत्वं च युक्तमेव एवमपि कथमात्मवाचिना शरीरवाचिशब्दस्य सामानाधिकरण्यमिति चेत् गवादिशब्दानां जातिगुणादिमात्रपरतया व्युत्पन्नानां शुक्लो गौरित्यादिषु व्यक्तिगुण्यादिपर्यन्तत्वमन्तरेणाऽपर्यवसन्नानां यथा व्यक्त्यादिपर्यन्तत्वेन सामानाधिकरण्यम् । एवं जातिगुणादिवत् शरीरस्यापृथक्सिद्धविशेषणत्वात् तद्वाचिमात्रपरतया लोके व्युत्पन्नः सः शरीरिपर्यन्तमभिधत्ते "आत्मा देवो जातः" इतिवत् तस्यात्मवाचिना सामानाधिकरण्यमुपपन्नमेव । न च व्यक्तेराक्षेपाल्लक्षणया वा गौः शुक्लः इत्यादि प्रयोगोपपत्तिः अपृथक्सिद्धविशेषणवाचिशब्दत्वस्य लक्षणादिप्रतिबन्धकत्वाद्, अन्यथा जात्याकृतिगोत्वगुणादिशब्दानामपि लक्षणादिना गोत्वं शुक्लमित्यादि प्रयोगापत्तेः । नन्वेवं जात्यादिशब्दानामप्यपृथक्सिद्धविशेषणवाचिनां व्यक्त्यादिपर्यन्तपर्यवसानेन सामानाधिकरण्यापत्तिरिति चेत् मैवम्[1] । नियतिनिष्कर्षवाचिनां कदाचिदपि विशेषपर्यन्तत्वाभावस्य भाष्यादिषूक्तत्वात् । अत एव शरीरदेहादिशब्दानां कदाचिदपि नात्मवाचिना सामानाधिकरण्यमिति भाष्यादिषु विस्तरः । कृत्स्नचिदचिदात्मकप्रपञ्चशरीरकस्त्वं क्रीडन्नेव विश्वं सृजसि पासि रक्षसि अत्सि संहरसि, क्रीडन्नित्यनेन जगद्व्यापारो भगवतो लीलेत्युक्तम् । ऊर्णपदः[2] ऊर्णनाभिर्यथेति दृष्टान्तः । "यथोर्णनाभिः सृजते गृह्णते च" (मुण्ड.उ.1-1-7) इति श्रुतिप्रसिद्धः ॥ ४३ ॥

एवं परब्रह्मदृष्ट्या चिदचिच्छरीरकत्वं सृष्ट्यादिकारणत्वमभिधाय पुनस्तद्दृष्ट्या प्रकृताध्वरसन्धित्सोत्पादनाय पुरुषार्थावबोधिशास्त्रप्रवर्तकत्वं धर्ममर्यादापालकत्वं चाह - **त्वमेवेति** । धर्मार्थधुक् धर्मार्थौ दोग्धीति धर्मार्थधुक् धर्मादिप्रपूरकस्त्वमेव

---

1. A, B, T न ।  2. A, B, T पटः

अभिपत्तये पुरुषार्थाऽवाप्तये दक्षेण समर्थेन सूत्रेण सूचितेन शास्त्रेण अध्वरं ससर्जिथ सृष्टवानसि । पुरुषार्थसाधनभूतधर्मार्थसम्पादनोपायावबोधिशास्त्रप्रवर्तकस्त्वमेवेत्यर्थः । सेतवो वर्णाश्रमधर्ममर्यादाश्च त्वयैव अवसिता निबद्धाः । के ते सेतवः ? येऽवसिता इत्यत्राह - यान् सेतून् धृतव्रता व्रतनिष्ठाः सन्तो ब्राह्मणाः श्रद्दधते श्रद्धापूर्वकमनुतिष्ठन्ति ॥ ४४ ॥

पुनर्ब्रह्मदृष्ट्यैव सर्वकर्मकारयिता तत्तत्फलप्रदश्च त्वमेवेत्याह - **त्वमिति** । हे मङ्गल ! शिव ! लोके मङ्गलानां कुशलानां कर्मणां कर्तुः कर्त्रे इत्यर्थः । स्वः स्वर्गं परं मोक्षं वा तनुषे प्रददासि, अभिसंहितफलकर्मणां कर्तुः स्वर्गम्, अनभिसंहितफलकर्मणां कर्तुस्तु मोक्षं तनुष इत्यर्थः । अमङ्गलानामकुशलानां कर्मणां कर्तुरुल्बणं तमिस्रं निरयं तनुषे । विपर्ययः अमङ्गलानां कर्मणां कर्तुः कस्यचिदपि स्वर्गमोक्षप्राप्तिरूपः विपर्ययः केन केन हेतुना भवेत् न केनापीत्यर्थः । अतस्तदेव तत्कृतं फलमेव भवति न तद्विपर्यय इत्यर्थः ॥ ४५ ॥

**विज०** तत्र ब्रह्मा स्वगुरुत्वमभिनयन् भवं वक्तीत्याह - **तथेति** । तथा रुद्रस्य समन्तात् स्थिता अपरे ये सिद्धगणास्तैर्महर्षिभिस्सह नीललोहितम् अनु नमस्कृतः प्रहसन्निव आत्मभूः ब्रह्मा आत्मने कृतप्रणामं शशाङ्कशेखरं प्राहेत्यन्वयः ॥ ४१ ॥

भक्तद्वेषमसहमानेन शिवान्तर्यामिणा दक्षयज्ञविनाशनमकारीति ध्वनयन् तद्यज्ञसन्धिकामः तस्मिंस्तुष्टे शिवोऽपि तुष्टस्स्यात् तस्य भक्तलक्षणत्वाच्छिवस्यासम्भाव्यैर्गुणैः शिवान्तर्यामिणं नरसिंहं स्तौति - **जाने त्वामिति** । हे ईश ! अखण्डैश्वर्य ! विश्वस्याखिलस्य जगतो योनिबीजयोः मातृस्थानीयायाः शक्तेः प्रकृतेरुमायाः पितृस्थानीयस्य पुरुषशब्दवाच्यस्य शिवस्य च सकाशात् यत्परमुत्तमं निरन्तरं स्वगतभेदरहितं शिवशक्त्योः स्थित्वा मातृत्वपितृत्वलक्षणशब्दप्रवृत्तिनिमित्तापादकं त्वां जाने इत्यन्वयः ॥ ४२ ॥

शिवशक्त्योर्योनिबीजत्वम् । उपचारिकं[1] मुख्यं तु तदन्तर्यामिणो हरेरेवेत्यभिप्रेत्याह - **त्वमेवेति** । क्रीडयोर्णपदः[2] ऊर्णनाभिः यथा ऊर्णां सृजति तन्मध्ये क्रीडते च तां हरति तथा त्वं प्रतिमावत् स्वरूपयोः साक्षाद्रूपयोः शिवशक्त्योः स्थित्वा ताभ्यां करणभूताभ्यां भगवन् ! त्वमेवैतद्विश्वं सृजसि पासि रक्षसि अत्सि संहरसीत्यन्वयः । प्रसिद्धं परित्याज्याप्रसिद्धान्तर्यामिकल्पनायां किं कारणमित्यत उक्तं शक्तेः शिवस्य च परमिति । न हि शिवशक्त्योः परः शिव इति वक्तुं युक्तं, प्रतीतिविरोधात् । तर्हि त्वमित्यादिप्रयोगप्रतीतेः का गतिरिति चेन्न, अन्तर्याम्यपेक्षया चरितार्थत्वात्[3] । तदुक्तं - "क्रियन्ते स्तुतयोऽन्यत्र तदन्तर्याम्यपेक्षया । न जीवेषु गुणाः पूर्णा यथायोग्या हि तद्गताः ॥" (ब्राह्मे) इति । "तद्वशत्वात्स्वरूपं तु विष्णोः सर्वमुदीर्यते । स्वरूपं स च सर्वस्य बिम्बत्वादेव तूच्यते । सांक्षात्स्वरूपं

---

1. A, B औप॰ 2. A, B पटः 3. A °त्वम्

मत्स्याद्या विष्णोर्नान्ये कथञ्चन। तस्मादन्यगता दोषा न तस्मिन् पुरुषोत्तमे॥'' (तत्त्वनिर्णये) इति वचनात् शिवादीनामस्वरूपत्वं मत्स्यादीनां साक्षात्स्वरूपत्वं च सिद्धं नापलपनीयमिति भावः॥ ४३॥

दक्षयज्ञविनाशनं तदन्तर्यामिणा हरिणा कृतमिति प्रमाणेन ध्वनितं स्फुटयति - **त्वमेवेति**। त्वमेव नान्यो, **धर्मार्थौ** दोग्धीति धर्मार्थधुक् तेन धर्मार्थदुघा सूत्रेण प्रत्युत्थानाद्यकरणनिमित्तदोषसूचकेन दक्षेण हेतुना विसर्जिताध्वरः विनाशितयज्ञो भवतीति शेषः। सोऽपि गुण एवाभूदित्याशयेनाह - अभिपत्तये इति। तस्य दोषस्याभिपत्तये प्रतीकाराय परिहाराय ''पाणिं मर्कटलोचनः'' (भाग. 4-2-12) इत्यादिदोषसूचकेन दक्षेण यो यज्ञ उपक्रान्तस्तं त्वद्भक्तत्वेऽपि त्वद्भक्तद्वेषित्वात् तद्दोषपरिहाराय भक्तवत्सलः त्वमेव नाशितवानित्यर्थः, दक्षोऽपि त्वद्भक्तश्चेत् तद्यागविनाशं किमकार्षीरित्यत आह - त्वयैवेति। तत्तत्कर्मसु यानि यानि व्रतानि त्वया विहितानि तानि तानि धारयन्तो ये ब्राह्मणा वेदशास्त्रपारगास्ते यान् सेतून् श्रद्दधते मद्भक्तोऽपि स्वोत्तममद्भक्तद्वेषादिकं न कुर्यादित्यादिलक्षणधर्मसेतवो लोके वेदे च त्वयैवाऽवसिता निश्चित्य निर्णीता इत्यर्थः॥ ४४॥

एवकारेण मन्वादिषु स्थित्वा वर्णाश्रमादिसंहितां विधत्स इति ध्वनितं स्पष्टयति - **त्वं कर्मणामिति**। ''मङ्गेरलच्'' (उणादि 759) अगिवगिमगिरगिलगि - गत्यर्थाः,मगेरलच्प्रत्ययो भवति। संज्ञाविषये नुमागमः चकारः स्वरार्थः तेन मङ्गलमिति रूपं, **तस्य सम्बुद्धिः** हे मङ्गलेति। हे मङ्गल! विष्णो! त्वं जीवलोके स्थित्वा मङ्गलानां पुण्यानाम् अमङ्गलानामशुभानां च कर्मणां कर्तासि। स्वयमन्यानपेक्षितस्तेषामुभयेषां कर्मणां फलं स्वर्गादिकमुल्बणं तमिस्रं नरकादिकं च तनुषे स्वस्वयोग्यतानुसारेण विस्तृत्य ददासीत्यन्वयः। ननु नायं नियमो द्रढीयान् विपर्ययदर्शनादित्यत आह - विपर्यय इति। केनचित् भक्तद्वेषादिहेतुना कस्यचिदेव धर्मादेः फलविपर्ययः। न तु सर्वस्येत्यज्ञानां धर्मसूक्ष्मज्ञानं दुर्लभमिति भावः॥ ४५॥

**न वै सतां त्वच्चरणार्पितात्मनां भूतेषु सर्वेष्वभिपश्यतां तव।**
**भूतानि चात्मन्यपृथग्दिदृक्षतां प्रायेण रोषोऽभिभवेद्यथा पशुम्[1]॥ ४६॥**

**पृथग्धियः[2] कर्मदृशो दुराशयाः परोदयेनार्पितहृद्रुजोऽनिशम्।**
**परान् दुरुक्तैर्वितुदन्त्यरुन्तुदास्तान्मा वधीद्दैव[3]वधान् भवद्विधः॥ ४७॥**

**यस्मिन् यदा पुष्करनाभमायया दुरन्तया[4] मुष्ट[5]धियः पृथग्दृशः।**
**कुर्वन्ति तत्र ह्यनुकम्पया कृपां न साधवो दैवबलात्कृतेऽक्रमम्[6]॥ ४८॥**

---

1. M, Ma, Ms पशोः 2. M, Ma पृथग्दृशः 3. M, Ma °द्देव भवान् पृथग्विधान् 4. M, Ma, Ms दुर्लङ्घ्यया 5. A, B, G, I, J. M, Ma, Ms, T, V स्पृष्ट 6. M, Ma, Ms °ताः कथम्; V °ते क्रमम्

**[1]भवांस्तु पुंसः परमस्य मायया दुरन्तयाऽस्पृष्टमतिः समस्तदृक् ।**
**तया हतात्मस्वनुकर्मचेतस्स्वनुग्रहं कर्तुमिहार्हसि[2] प्रभो ।। ४९ ।।**

**कुर्वध्वरस्योद्धरणं हतस्य [3]भो त्वयाऽसमाप्तस्य [4]मनो प्रजापतेः ।**
**न यत्र भागं तव भागिनो ददुः [5]कुयज्विनो येन [6]मखो निनीयते ।। ५० ।।**

**जीवताद्यजमानोऽयं प्रपद्येताक्षिणी भगः ।**
**भृगोः श्मश्रूणि रोहन्तु पूष्णो दन्ताश्च पूर्ववत् ।। ५१ ।।**

**देवानां भग्नगात्राणामृत्विजां चायुधाश्मभिः ।**
**भवतानुगृहीतानामाशु [7]मन्योऽस्त्वनातुरम् ।। ५२ ।।**

**एष ते रुद्रभागोऽस्तु यदुच्छिष्टोऽध्वरस्य वै ।**
**यज्ञस्ते रुद्रभागेन [8]कल्प्यतामद्य यज्ञहन् ।। ५३ ।।**

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्यां अष्टादश साहस्र्यां
श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां
चतुर्थस्कन्धे षष्ठोऽध्यायः ।। ६ ।।

**श्रीध०** [9]त्वत्कोपोऽत्र हेतुरित्यसम्भावि[10]तमिदमिति कैमु[11]त्यन्यायेनाह - **न वा** इति । न [12]वै सतां सतः रोषोऽभिभवेत् । तव त्वां, द्वितीयार्थे षष्ठ्यौ । पशुमज्ञं यथाऽभिभवति [13-]न तद्वत्[-13] वैधर्म्ये दृष्टान्तः ।। ४६ ।।

**पृथगिति** । [14]यतः ये पृथग्धियो भेददृशोऽतः कर्मण्येव दृष्टिः येषाम् । दुष्ट आशयो येषां परेषामुदयेन सम्पदा अर्पिता हृदि रुक् येषाम् अरुन्तुदा मर्मभेत्तारः दैवेन [15]एव वधो येषां तान् [16]मृतप्रायान् भवद्विधो निरुपमः साधुः मा वधीत् न हन्यात् ।। ४७ ।।

प्रत्युत साधूनां वृत्तमालोक्यानुग्रहमेव कर्तुमर्हसीत्याह - **यस्मिन्निति** द्वाभ्याम् । यस्मिन् देशे यदा काले [17]भगवन्मायया स्पृष्टधियो

1. M, Ma, Ms **भवान्हि** 2. M, Ma, Ms °ति 3. A, B, G, I, J, T भोः 4. A, M, Ma, Ms, T मनोः 5. M, Ma, Ms कुस्पर्धिनो 6. V मघो 7. M, Ma, Ms, मन्ये त्वं 8. A, B, G, I, J, M, Ma कल्पता° 9. V omits त्वत् 10. A, B, J, Va °तमिति 11. V °तिक 12. V omits वै 13--13. A, J, V, Va तद्वत् 14. A, B, J, Va अतः 15. V omits एव 16. B, J, V, Va omit मृतप्रायान् 17. B, J, V, Va omit भगवन्मायया

मोहितचित्ताः पृथग्दृशो [1]भेदबुद्धयो भवन्ति तत्रापराधे[2]ऽपि साधवो ह्यनुकम्पया अनन्तरमेव परदुःखासहिष्णुतया चित्तप्र[3]कम्पेन कृपां कुर्वन्ति न तु क्रमं पराक्रमम्। कुतः ? दैवबलात् [4]कृतेऽनर्थे [5]सति ममैव दैवम् एवम्भूतं कोऽत्रापराधः तेषामिति मत्वा तद्धननं न [6]कुर्वन्ति इत्यर्थः ॥ ४८ ॥

**भवानिति**। भवांस्तु [7]मायया अस्पृष्टमतिः अत [8]एव समस्तदृक् सर्वज्ञः तया मायया हत आत्मा येषां तेष्वत एव कर्मानुगतचित्तेषु इहापराधेऽनुग्रहं कर्तुमर्हसि ॥ ४९ ॥

एवं सामान्येनोक्त्वा प्रस्तुतमाह - **कुर्विति** त्रिभिः। त्वया हतस्य अत एव असमाप्तस्य प्रजापतेरध्वरस्य। हे मनो ! यत्र अध्वरे कुयाज्ञिका भागिनोऽपि तव भागं न ददुः। भागार्हत्वमाह - येन त्वया मखो निनीयते फलं प्राप्यते ॥ ५०, ५१ ॥

**देवानामिति**। हे मन्यो ! [9-]आयुधैरश्मभिश्च भग्नगात्राणाम्[-9] अनातुरमारोग्यमस्तु ॥ ५२ ॥

भागश्च तवास्त्वित्याह - **एष** इति। हे रुद्र ! यावदित्यर्थे यदित्यव्ययम्। यज्ञे कृते यावान् उच्छिष्टोऽवशिष्टोऽर्थः तावान् [10]एष [11]ते तव भागोऽस्तु। हे रुद्र ! [12]तेन भागेनाद्य यज्ञः [13]कल्पतां [14-]सम्पद्यताम्[-14]। सिद्धो भवत्वित्यर्थः ॥ ५३ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीधरस्वामिविरचितायां भावार्थ दीपिकायां

व्याख्यायां षष्ठोऽध्यायः ॥ ६ ॥

**वीर०** एवं ब्रह्मदृष्ट्या रुद्रं प्रस्तूय तस्य प्रसादोत्पिपादयिषया सतां रोषो न युक्त इति कैमुत्य[15]नयेनाह - **न वा** इति। त्वच्चरणे [16]समर्पितः आत्मा चित्तं येषां सर्वेषु भूतेषु तव द्वितीयार्थे षष्ठी त्वामित्यर्थः। अत्र त्वां त्वमिति पदद्वयं ब्रह्मपर्यन्तं भगवच्चरणारविन्दसमर्पितचित्तानां सर्वाणि भूतानि भगवदात्मकतया पश्यतामित्यर्थः। भूतानि चात्मनि परमात्मनि [17]अपृथक् अपृभक्सिद्धानि दिदृक्षतां द्रष्टुमिच्छतां पश्यतामित्यर्थः। सर्वभूतानां भगवच्छरीरतया तदपृथक्सिद्धत्वेन पश्यतामित्यर्थः। एवम्भूतानां सताम्, अत्रापि द्वितीयार्थे षष्ठी। सतः वै अनर्थकारित्वेन प्रसिद्धः, रोषः नाभिभवेत् अभिभूतान्न कुर्यात् यथा पशुं मूर्खमभिभवेत्, अतस्तव रोषो न युक्त इति किमु वक्तव्यमिति भावः ॥ ४६ ॥

---

1. B, J, V, Va omit भेदबुद्धयो 2. B, J, V, Va omit अपि 3. B कम्पनेन 4. A, B, J, Va अर्थे 5. A, B, J, Va omit सति 6. A, B, J, Va कुर्वते 7. B, J, Va omit मायया 8. B, V, omit एव 9--9. B, J, V, Va omit 10. Va omits एष 11. A, J, V, Va omit ते 12. A, B, J, Va तै 13. V कल्प्यतां 14--14. B, J, Va omit 15. A, T न्या० 16. A, B, T अर्पितम् 17. A, B, T omit अपृथक्

कृतापराधेष्वपि महान्तः कृपावन्तो भवन्ति । अतः कृतापराधमपि दक्षम् अनुग्रहीतुमर्हसीत्याह त्रिभिः । पृथग्दृशः अब्रह्मात्मकस्वतन्त्रवस्तुदर्शिनः देवमनुष्यदेहात्माभिमानभिन्नधियो वा कर्मण्येव दृष्टिः येषां, दुष्ट आशयोऽन्तःकरणं येषाम्, अनिशं परेषामुदयेन सम्पदा अर्पिता हृदि रुक् व्यथा येषाम् । अरुन्तुदा मर्मच्छेत्तारः दुरुक्तैः परान् तुदन्ति व्यथयन्ति तान् एवम्भूतान् दैवेनैव वधो येषां तान्, भवद्विधो निरुपमकरुणः मा वधीत् मा हन्यात् ॥ ४७ ॥

प्रत्युत साधूनां वृत्तमालोच्यानुग्रहमेव कर्तुमर्हसीत्याह - यस्मिन् देशे यदा काले दुर्लङ्घ्यया दुरत्ययया[1] पुष्करनाभस्य पद्मनाभस्य भगवतः[2] मायया मुष्टधियः मोहितचित्ताः पृथग्दृशो भवन्ति ज्ञानैकाकारतया एकरूपेप्यात्मनि देवमनुष्यादिभेददर्शिनः, तथाऽब्रह्मात्मकत्वदर्शिनश्च भवन्तीत्यर्थः । तत्रापराधिषु साधवो ह्यनुकम्पया अनन्तरमेव परदुःखासहिष्णुतया चित्तप्रकम्पेन कृपां कुर्वन्ति, न त्वक्रमम् अप्रियं, कुतः ? दैवबलात् कृतेऽर्थे मम दैवम् एवम्भूतं कोऽत्रापराधः तेषामिति मत्वा कृपामेव कुर्वन्तीत्यर्थः ॥ ४८ ॥

अतो भवान् परमस्य पुंसः परमपुरुषस्य दुरन्तया मायया अस्पृष्टमतिः भगवत्प्रपन्नत्वेन अमोहितबुद्धिः, अत एव समस्तदृक् सर्वार्थदर्शी तथा मायया हतात्मसु मोहितचित्तेषु अत एव अनुकर्मचेतस्सु कर्मानुगुणचित्तवृत्तिषु सापराधजनेषु अनुग्रहं कर्तुमर्हसि हे प्रभो ! समर्थ ! ॥ ४९ ॥

एवं सामान्येनोक्त्वा प्रस्तुतमाह - **कुर्विति** त्रिभिः । हे मनो ! रुद्र ! त्वया हतस्य अत एव असमाप्तस्य प्रजापतेः दक्षस्य अध्वरस्योद्धरणं पुनरुद्धारं कुरु कुर्याः[3] कुयाज्ञिकस्य दक्षस्य यत्राध्वरे भागिनः भागार्हस्य तव भागं न ददुः, येन त्वया हेतुना मखो न नीयते न समाप्यते । निनीयते इति पाठान्तरम् । तदा किमर्थमध्वरोद्धरणाय मां प्रार्थयसे इत्यत्राह - मखो येन त्वया हेतुना निनीयते समाप्यते, यदपचारात् मखो विनष्टः पुनस्तस्यैव भवतोऽनुग्रहात् मखः समापनीय इति भावः ॥ ५० ॥

अयं यजमानो दक्षः जीवतात् जीवतु, भगः अक्षिणी प्रपद्येत प्राप्नुयात् ॥ ५१ ॥

आयुधैः अश्मभिश्च भग्नग्रात्राणाम् ऋत्विजां देवानां च पुनर्भवता अनुगृहीतानां हे मन्यो ! अनातुरम् आरोग्यमाशु अस्तु ॥ ५२ ॥

भागश्च तवास्त्वित्याह - **एष** इति । हे रुद्र ! यावदित्यर्थे यदित्यव्ययम् । अध्वरस्य यदुच्छिष्टः यज्ञे कृते यावानवशिष्टोऽर्थः[4] तावानेष तव भागोऽस्तु । हे रुद्र ! यज्ञहन् ! अद्य अधुना ते[5] तव भागेन यज्ञः कल्प्यतां सङ्कल्प्यताम् ॥ ५३ ॥

---

1. A, B, T omit दुरत्ययया 2. A, B, T omit भगवतः 3. A, B, T add कस्य 4. A, B, T °ष्टार्थः 5. A, B, T तनैव भा°

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवत चन्द्रचन्द्रिकायां

व्याख्यायां षष्ठोऽध्यायः ॥ ६ ॥

**विज०** नन्वेवं तर्हि ब्रह्मणा हरौ रोषलक्षणदोषारोषः कृतः इत्यागतमित्याशङ्क्य त्वद्भक्तानामप्यनुचितो रोषो नास्ति किमु तवेति भावेनाह - **न वा** इति । त्वच्चरणार्पितात्मनां सर्वेषु भूतेष्वपि स्थितं तव त्वां पश्यताम् आत्मन्याधारतया भूतानि च पश्यतामेवापृथक् दिदृक्षतां यथार्थज्ञानेच्छूनां सतां प्रायेण तथा रोषो नाभिभवेत् यथा पशोः अज्ञानिनोऽभिभवेदित्यन्वयः । अनेन रोषविषयेषु रोषः कर्तव्यो, नान्यत्र, अतो न हरौ दोषारोपो ब्रह्मणा कृत इत्युक्तं भवति । "चतुर्षु षष्ठी" इति सूत्रात् द्वितीयादिचतुर्षु षष्ठी वर्तत इति विधानात् तवेत्यस्य *द्वितीयार्थेषु युज्यते "विष्ण्वधीना जगत्सत्ता प्रतीतिश्चेष्टितं गतिः । इति यन्निश्चितं ज्ञानमपृथग्दर्शनं स्मृतम् । मिथ्याज्ञानं पृथग्ज्ञानमिति वेदविदो विदुः । यथैवार्थस्तथा ज्ञानमपृथग्दृष्टिरुच्यते ।" (गारुडे) इति वचनात् अपृथग्दर्शनं नाभेदज्ञानं किन्तु यथावस्तुविज्ञानमिति ज्ञायते ॥ ४६ ॥

हननयोग्यापराधपुरुषविषये यो रोषः स कथं महतोऽपि नाभिभवेदित्याशङ्क्य सत्यं, स्वदोषेण हन्यमानान्माऽवधीरिति प्रार्थयामहे इति ज्ञापयति - **पृथग्दृश** इति । ये पृथग्दृक्त्वादिदोषाकराः दुरुक्तैः परान् वितुदन्ति हे देव ! भवान् तान् मा वधीदित्यन्वयः । पृथग्विधान् भिन्नप्रकारान् ज्ञानिलोकविलक्षणानित्यर्थः ॥ ४७ ॥

यद्यपि ब्रह्मविज्ञापनेन प्रसन्नस्य रुद्रान्तर्यामिणो हरेः क्षान्त्या रुद्रोऽपि क्षान्तो भवति, तथापि रुद्रोऽपि पृथग्वाच्य इति धिया अधुना दक्षाय कोपो न कर्तव्य इति रुद्रं वक्ति - **योऽस्मिन्निति** । अस्मिन् लोके ये दक्षविधा जना दुर्लङ्घ्यया पुष्करनाभस्य मायया बन्धकशक्त्या **स्पृष्टधियो** यथैव पृथग्दृशोऽस्मिन् जने द्वेषादिकं कुर्वन्तीति यदा यस्मात् तस्मात् तत्र तेषु जनेषु **भवादृशाः** साधवोऽनुकम्पया हृदयद्रवीभावेन कृपां क्षमालक्षणोपकारं कर्तुमिच्छां कथं न कुर्वन्तीत्यन्वयः । "हृदयस्य द्रवीभावस्त्वनुकम्पेति कथ्यते । उपकारं कर्तुमिच्छा कृपेत्याहुर्मनीषिणः ।।" (शब्दानिर्णये) तेऽपि साधुष्वेव केचित् कुत एवं कुर्वन्तीति तत्राह - **दैवेति** । तादृग्विधपूर्वकर्मप्रबोधकस्य देवस्य हरेर्बन्धकशक्तिबलात् तथाकृता इति हेतुगर्भविशेषणं, हिशब्देन योग्यताविशेषं कथयति ॥४८॥

"विष्णुमाया हरेरिच्छा बन्धशक्तिश्च तद्वशा । सर्वत्रगा हरेरिच्छा बन्धशक्तिर्ज्ञवर्जिता ।" (शब्दनिर्णये) इति वचनात् भवान्

* द्वितीयार्थेषु इत्यस्य स्थाने द्वितीयार्थे षष्ठी इत्युचितः पाठः ।

**सर्वज्ञत्वेन बन्धशक्तिस्पर्शाभावात्तेष्वेको न स्यात्।** अतोऽस्मिन्नज्ञानिजनेऽनुग्रहं कर्तुमर्हतीत्याह - **भवान्हीति।** हिशब्दो हेत्वर्थः। ता बन्धकशक्त्या हतात्मसु नष्टबुद्धिगुणेषु अत एव अनुकर्मचेतस्सु हिंसालक्षणकर्मानुविष्टचित्तेषु दक्षादिष्विति शेषः, अस्पृष्टमतिः ॥ ४९ ॥

स्वबोधनेनान्तर्यामिहरिप्रसादेन च प्रसादाभिमुखं रुद्रं प्रति एतादृशोऽनुग्रहः कार्य इति वक्ति - **कुर्वध्वरस्येति।** हतस्य त्वया कृतान्तरायेणेति शेषः। अत एवासमाप्तस्याकृताऽवभृथस्नानादिनेति शेषः। मनोर्दक्षस्य कोऽयमध्वर इति तत्राह - **न यत्रेति।** येन त्वया मखो नि न्यग्भावेन नीचत्वेन नीयेत तस्य भागिनो यज्ञभागार्हस्य तव कुत्सिता स्पर्धा एषामस्तीति कुस्पर्धिन ऋत्विजो देवा यत्र यज्ञे भागं विहितहविर्भागं न ददुः तस्याध्वरस्य। यद्वा येन यज्ञभागयोग्येन त्वया मखो निकामं नीयते तस्य भागिनो देवा भागं यत्र न ददुः तस्येति "नि न्यग्भावनिकामयोः" (वैज०को.8-7-5) इति यादवः ॥ ५० ॥

यजमानसद्भावे यागोद्धारः सम्भवति। तस्य मया हतत्वात् कथं नष्टाक्षा (क्ष्या) द्यवयवादीनां स्वभागनिरीक्षणं कथं चायुधाश्मभिः भग्नगात्राणाम् ऋत्विजां होमाङ्गत्वमित्याशङ्क्य त्वदनुग्रहसुधासमुद्रमग्नाः सर्वसम्पन्ना भवन्त्वित्याह - **जीवतादित्यादिना॥** ५१ ॥

अनातुरमारोग्यम् ॥ ५२ ॥

**सर्वं निरवद्यं स्यात् यदि मम भागोऽस्ति चेदित्याशङ्क्य तवायमनुशोको मा भूदित्याह - एष त इति।** उच्छिष्टः स्विष्टकृद्भागः "यदग्नये स्विष्टकृते समवद्यति भागधेयेनैव तद्रुद्रं समर्द्धयति सकृत्सकृदवद्यति सकृदिव हि रुद्र उत्तरार्धादवद्यत्येषां वै रुद्रस्य दिक् स्वायामेव दिशि रुद्रं निरवद्यते॥" इति श्रुतेः ॥ ५३ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीविजयध्वजतीर्थ विरचितायां पदरत्नावल्यां

टीकायां षष्ठोऽध्यायः ॥ ६ ॥

# सप्तमोऽध्यायः

## मैत्रेय उवाच

इत्यजेनानुनीतेन भवेन परितुष्यता।
अभ्यधायि महाबाहो प्रहस्य श्रूयतामिति॥ १॥

## श्री[1] महादेव उवाच

नाघं प्रजेश बालानां वर्णये नानुचिन्तये।
देव मायाभिभूतानां दण्डस्तत्र धृतो[2] मया॥ २॥

प्रजापतेर्दग्धशीर्ष्णो भवत्वजमुखं शिरः।
मित्रस्य चक्षुषे[3]क्षेत भागं स्वं बर्हिषो भगः॥ ३॥

पूषा तु यजमानस्य दद्भि र्जक्षतु पिष्टभुक्।
देवाः प्रकृत[4]सर्वाङ्गा ये म उच्छेषणं ददुः॥ ४॥

बाहुभ्या मश्विनोः पूष्णोः हस्ताभ्यां कृतबाहवः।
भवन्त्वध्वर्यवश्चान्ये बस्तश्मश्रु र्भृगुर्भवेत्॥ ५॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

सप्तमे विष्णु रुद्भूतः स्तुतो दक्ष भवादिभिः। यज्ञं प्रवर्तयामास दक्षेणेति निरूप्यते॥

इतीति। अजेन योऽनुनीतः प्रार्थितो भवः तेनाभिहितम्। हे महाबाहो! विदुर!॥ १॥

नेति। अघ मपराधम्॥ २॥

प्रजापतेरिति। स्वापराधमपहृत्य[5] अनुगृह्णाति। दग्धं शीर्षं यस्य तस्य प्रजापतेः [6-]दक्षस्य अजमुखम्[-6] अजस्य मुखं यस्मिन् तत्तथाभूतं शिरोऽस्तु। बर्हिषः [7]यज्ञस्य सम्बन्धिनः [8]स्वं भागम्। मित्रनाम्नो देवस्य॥ ३॥

---

1. M, Ma, Ms रुद्र; V, W भव 2. W कृतो 3. A, B, G, I, J, M, Ma, Ms, V °षे° 4. V क्लृप्त 5. V °हृत्य 6--6. A. B, J, V, Va omit
7. B, J, V, Va omit यज्ञस्य 8. A, B, J, Va omit स्वं

**पूषेति**। प्रकर्षेण [1]कृतानि [2]लग्नानि [3]सर्वाणि अङ्गानि येषां ते भवन्तु। उच्छेषणं यज्ञावशिष्टम्॥ ४॥

**बाहुभ्यामिति**। येषां त्वङ्गानि [4]नष्टानि ते तु अश्विनोः बाहुभ्यां कृतबाहवः पूष्णो हस्ताभ्यां कृतहस्ताश्च भवन्तु। अध्वर्यवः अन्ये च ऋत्विजः बस्तस्य [5-]अजस्य श्मश्रूणी[-5] व श्मश्रूणि यस्य॥ ५॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं ब्रह्मणा प्रसादितो [6]भवो देवाननुगृह्णन् तद्विज्ञापित मङ्गीचकारेत्याह मैत्रेयः **इतीति**। अजेन ब्रह्मणा अनुनीतेन प्रार्थितेन अत एव परितुष्यता भवेन हे महाबाहो! विदुर! प्रहस्य श्रूयता मित्यामन्त्र्य अभ्यधायि अभ्यभाषि॥ १॥

तदेवाह - **नाघमिति**। हे परेश! परेषा मस्मदादीना मीश! प्रभो! भगवन्मायामोहितानां बालानां मूर्खाणाम् [7]अघं अपराधं अधुना न वर्णये एवमेवमेवमपचरितमिति न कथयामीत्यर्थः। नानुचिन्तये न स्मरामि च, किन्तु अपराधाचरणदशायां मया दण्डः कृतः शिक्षामात्रं कृतमित्यर्थः॥ २॥

तदनुग्रहप्रकार मेवाह- **प्रजापते** रित्यादिभि स्त्रिभिः। दग्धशीर्ष्णः दक्षिणाग्नौ दग्धं शिरो यस्य तस्य प्रजापते र्दक्षस्य अजमुखं कण्ठादुपरि एव अजस्य मुखं यस्मिन् तच्छिरो भवतु। मित्रस्य [8]मित्रनाम्नो देवस्य चक्षुषी [9]नेत्रे भवेतां, चक्षुषीक्षेते त्यत्रार्षत्वात् "ईदूदेद् द्विवचनं" (अष्टा. 1-1-11) इति प्रगृह्यत्वाभावः। मित्रस्य चक्षुर्भङ्गः पूर्वं कृत इत्यर्थ सिद्धम्। चक्षुषेति तृतीयान्तश्च पठ्यते। तदा मित्रस्य चाजमुखं शिरो भवतु। अस्मिन् पक्षे मित्रस्य शिरोभङ्गः पूर्व मर्थसिद्धो [10]वेदितव्यः। भगो भगाख्यो देवः बर्हिषो यज्ञस्य स्वीयं भागं चक्षुषा ईक्षेत पश्यतु। भगस्य नेत्रे उत्पद्येयाता मित्यर्थः अय मेवार्थः साधुः। "भगस्य नेत्रे भगवान् पातितस्य रुषा" (भाग.4-5-20) इति पूर्वं भगस्यैव नेत्रभङ्गाभिधानात्॥ ३॥

पूषा देवः यजमानसम्बन्धि पिष्टं भुङ्क्ते इति। तथा दद्भिः दन्तैः जक्षतु अद्यात्। पूष्णो दन्ता उत्पद्येरन्नित्यर्थः। ये देवा मे मह्यं उच्छेषणं यज्ञावशिष्टं ददुः दत्तवन्तः ते सर्वे प्रकर्षेण कृतानि सम्यक्कृतानि सर्वाण्यङ्गानि येषां ते भवेयुरित्यर्थः। [11]निकृत्तसर्वाङ्गा इति [12-]पाठान्तरं तदा[-12] [13-]ये देवा प्रकृत्तसर्वाङ्गाः[-13] नितरां भिन्नसर्वावयवा ये च मह्यं उच्छेषणं ददुः दातुं मतिं कृतवन्त इत्यर्थः। अनुग्रहा त्पूर्वं उच्छेषणदानाभावात्। ते सर्वे॥ ४॥

---

1. V क्लृप्तानि 2. V omits लग्नानि 3 B, J, Va omit सर्वाणि 4. V विनष्टानि 5–5. B, J, V, Va omit 6. W रुद्रो * प्रजेश इत्यस्य स्थाने परेश इति पाठः वीरराघवादृतः। 7. T omits अद्यम् 8. A, B, J तन्नाम्नो 9. T omits नेत्रे 10. A, B, T ज्ञेयः 11. W प्र 12–12. A, B, T पाठे 13–13. A, B, T omit प्रकृत्तसर्वाङ्गाः

अध्वर्यव ऋत्विजश्च अश्विनोः बाहुभ्यां कृतबाहवः उत्पादितबाहवः पूष्णो हस्ताभ्यां कृतहस्ताश्च भवन्त्वित्यन्वयः। भृगुः बस्तश्मश्रुः बस्तस्य मेषस्य श्मश्रूणीव श्मश्रूणि यस्य॥ ५॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अत्र भगवज्ज्ञानोपचितं कर्म हरेः साक्षात्कार साधनं भवतीति तात्पर्यतो निरूप्यते। तत्र ब्रह्मोक्त माकर्ण्य तुष्टेन रुद्रेणोच्यमानं[1] प्रतिवचनप्रकारं वक्ति - **इतीति**। धर्मपरिपन्थिनो बाधत इति बाहुः, महां श्चाऽसौ बाहु र्यस्य स तथा तस्य सम्बोधनं महाबाहो ! "अर्जि दृशि कम्यमि पशिबाधा मृजि पसि तुक्धुक् दीर्घहकाराश्च" (उणादि-27) अर्ज अर्जने, दृशिर्-प्रेक्षणे, कमु-कान्तौ, अम-रोगे, पशि-नाशने (गत्यादौ वा) बाधृ-लोडने, एभ्यो धातुभ्यः कुप्रत्ययो भवति। एषां धातूनां यथासंख्यं ऋजि-पशि-तुक्-धुक्-दीर्घहकारश्चेत्येते आगमादेशाश्च भवन्ति। ऋजु रवक्रः अव्युत्पन्नो वा, पशु र्मन्त्रहीन श्चतुष्पाच्च, कमे स्तुगागमः कन्तुः कन्दर्पः अमेर्बुगागमः अम्बुजलं, पंसि पंसे र्दीर्घः पांशू रजः, बाधे र्हकारादेशः बाहुः प्राण्यङ्गम्॥ १॥

किमभ्यधायीति तत्राह - **नाघ** मिति। हे प्रजेश ! सर्वजीवराश्युत्तम ! अघ मपराधं न वर्णये अनेकत्वा दप्राप्तकालत्वादिति शेषः। तर्हि पश्चात्तापोऽस्ति किम् ? नेत्याह - नानुचिन्तय इति। पश्चात्तापं न करोमीत्यर्थः। पश्चात्तापाकरणे कारण माह दण्ड इति। अपराधानुसारि दण्डाकरणे अनुतापः[2] स्यात्। तदनुसारिणी शिक्षा मया कृतेत्यर्थः॥ २॥

पुत्रच्छात्रादिभि र्गुरुवाक्यं सबहुमानं ग्राह्यमिति भावं दर्शयन् वक्ति - **प्रजापते** रिति। अजस्य छागस्य मुखं यस्य तत्तथोक्तं पूर्वशिरोऽनुसन्धानाकरणे कारणं दग्धशीर्ष्ण इति। स्वपौरुषजयस्तम्भस्थापनाय अज्ञजनशिक्षणाय च भगादीना मप्यन्या वयवै रेव स्वनिर्वाहः स्यादिति भावेनाह - मित्रस्येत्यादिना। बर्हिषो यज्ञस्य॥ ३॥

दद्भिः दन्तैः तत्र देवानां विशेषानुग्रहं करोति देवा इति। प्रकृतसर्वाङ्गाः पूर्वावस्थाप्राप्तसर्वावयवाः "उच्छेषण भागो वै रुद्रः" इति श्रुतेः। ये म उच्छेषणं ददुरिति विशेषानुग्रहे हेतुः॥ ४॥

ऋत्विजां नैव मित्याह - बाहुभ्या मित्यादि। अध्वर्यव ऋत्विज स्तेषां मध्ये केचित् छिन्नबाहवः केचि च्छिन्नहस्ताः तेषु छिन्नबाहवोऽश्विनो र्बाहुभ्यां कृतबाहवः, पूर्वबाहुप्रयोजना भवन्तु। अन्ये च पूष्णो हस्ताभ्यां कृतहस्ता भवन्तु। कूर्परस्योपरिदेशो बाहुः तदधो हस्तः "देवस्य त्वा सवितुः प्रसवेऽश्विनो र्बाहुभ्यां पूष्णो हस्ताभ्यां" (तैत्ति.सं.1-1-6-1) इति श्रुतेः। हसदानादानयोः इति धातुः। **बस्तस्य श्मश्रूणि** यस्य स बस्तश्मश्रुः॥ ५॥

---

1. A° नं 2. Ma शयः

## मैत्रेय उवाच

तदा सर्वाणि भूतानि श्रुत्वा मीढुष्टमोदितम् ।
परितुष्टात्मभि स्तात[1] साधु साध्वि त्यथाऽब्रुवन् ।। ६ ।।

ततो मीढ्वांस मामन्त्र्य शुनासीराः सहर्षिभिः[2] ।
भूय स्तद्देवयजनं समीढ्वद्वेधसो ययुः ।। ७ ।।

विधाय कार्त्स्न्येन च तद्यथाऽऽह[3] भगवान् भवः ।
सन्दधुः कस्य कायेन सवनीयपशोः शिरः ।। ८ ।।

सन्धीयमाने[4] शिरसि दक्षो रुद्राभिवीक्षितः ।
सद्यः सुप्त इवोत्तस्थौ ददृशे चाग्रतो मृडम् ।। ९ ।।

तदा वृषध्वजद्वेष कलिलात्मा प्रजापतिः ।
शिवावलोका दभव च्छरद्ध्रद[5] इवामलः ।। १० ।।

**श्रीध० तदेति** । मीढुष्टमः शिवः तेनोक्तम् । परितुष्टै[6] श्चित्तैः[7] ।। ६ ।।

**तत** इति । मीढ्वांसं शिवं त्वयागत्य सर्वं कार्य मित्यामन्त्र्य सम्प्रार्थ्य शुनासीरा देवाः, सह मीढुषा वेधसा च वर्तमानाः समीढ्वद्वेधसः ।। ७ ।।

**विधायेति** । कार्त्स्न्येन वक्त्र हस्त बाह्वादिना[8] साधारण्यं विधाय ।। ८, ९ ।।

**तदेति** । पूर्वं वृषध्वजद्वेषेण कलिलः कलुषीकृतः आत्मा यस्य सः तदा शरत्कालीनो ह्रद इवामलोऽभवत् ।। १० ।।

**वीर० एवं** रुद्रेणानुगृहीता देवाः किमकुर्वतेत्यत्राह मैत्रेयः **तदेति** । मीढुष्टमोदितं मीढुष्टमः शिवतमो रुद्रः तेनोदितं गदितं श्रुत्वा सर्वाणि भूतानिं परितुष्टात्मभिः परितुष्टचित्तैः हे तात ! विदुर ! साधु साध्विति ऊचुः ।। ६ ।।

1. M, Ma, Ms °स्तत्र; V, W °स्तं तु 2. Ma, सहर्भुभिः 3. A, B, G, I, J, M, Ma, Ms, T °दा° 4. M, Ma, Ms शीर्षणि 5 M, Ma °दभ्र; Ms °च्चन्द्र
6. A °पु° 7 V °ष्टचित्तैः 8. A, B, J, Va °दिसा°

ततः मीढ्वांसं रुद्रं त्वया आगत्य सर्वं कार्य मित्यामन्त्र्य सम्प्रार्थ्य शुनासीरा[1] इन्द्रोपलक्षिता देवा ऋभुभिः भृगुणाऽऽहूयमान-दक्षिणाग्नि प्रभवैः ऋभ्वाख्यै र्देवैः सह समीढ्वद्वेधसः मीढुषा रुद्रेण वेधसा ब्रह्मणा च सहिताः भूयः पुनः तद्देवयजनं देवा इज्यन्तेऽस्मिन्निति देवयजनं यागदेशं ययुः जग्मुः ॥ ७॥

भगवान् भवो रुद्रः यथाऽऽह "प्रजापते र्दग्धशीर्ष्णो भवत्वजमुखं शिरः" (भाग.4-7-3) इत्यादिना तथा कार्त्स्न्येन विधाय हस्तबाह्वादिकं विधाय सवनीयपशो रजस्य सम्बन्धि शिरः कस्य दक्षस्य कायेन शरीरेण सन्दधुः ॥ ८॥

सवनीयपशोः शिरसि सन्धीयमाने सति रुद्रेणाभिवीक्षितो दक्षः सुप्त इवोत्तस्थौ उदतिष्ठत्। अग्रतः पुरतः अवस्थितं मृडं रुद्रं ददृशे च॥ ९॥

पूर्वं वृषध्वजे रुद्रे द्वेषेण कलिलः कलुषीकृतः आत्मा यस्य स प्रजापतिः दक्षः शिवावलोकात् शरत्कालीनह्रद इवामलोऽभवत्॥ १०॥

**विज०** कोऽसावुत्तरकथाप्रसङ्ग इति तत्राह - **तदेति**। "मिह सेचन" इति धातोः प्रणतजनस्याभीष्टं वर्षन्तो मीढ्वांसः तेषा मतिशयेन मीढ्वान् मीढुष्टमः तेन कथितम्। अनेन तदानी मेतन्नामोपलब्ध मिति रहस्यं ज्ञायते॥ ६॥

शुनासीरा देवाः सहिता मीढ्वद्वेधोभ्यां रुद्रब्रह्मभ्यां ये तथोक्ताः॥ ७॥

कस्य दक्षस्य सवनीयपशोः यज्ञियपशोः[2]॥ ८॥

शीर्षणि शिरसि॥ ९॥

शिवस्यावनतपुंस्यनुग्रहसामर्थ्यं व्यनक्ति - **तदेति**। "अभ्रं सलिलदे व्योम्नि शस्त्रं कोदण्ड आयुधे" (वैज० को.6-2-1) इति यादवः। शरन्मेघवत्॥ १०॥

**भवस्तवाय कृतधी र्नाशक्नोदनुरागतः।**
**औत्कण्ठ्याद्बाष्पकलया[3] सम्परेतां सुतां स्मरन्॥ ११॥**
**कृच्छ्रात्संस्तभ्य च मनः प्रेमविह्वलितः सुधीः।**
**शशंस निर्व्यलीकेन भावेनेशं प्रजापतिः॥ १२॥**

---

1 T सु॰ 2 Ma या॰ 3. M, Ma औत्कण्ठ्य बा॰

## दक्ष उवाच

**भूया ननुग्रह अहो भवता कृतो मे दण्ड स्त्वया मयि भृतो यदपि प्रलब्धः[1]।**
**न ब्रह्मबन्धुषु च वां भगवन्नवज्ञा तुभ्यं हरेश्च कुत एव धृतव्रतेषु ॥ १३ ॥**

**विद्यातपोव्रत[2]भृतो मुख[3]त स्तु विप्रान् ब्रह्माऽऽत्म[4]तत्त्व मवितुं प्रथमं त्व म[5]स्राक् ॥**
**तद्ब्राह्मणान् परम सर्वविपत्सु पासि पालः पशूनिव विभो प्रगृहीतदण्डः ॥ १४ ॥**

**योऽसौ मयाऽविदिततत्त्वदृशा सभायां क्षिप्तो दुरुक्तिविशिखै रगणय्य तन्माम् ।**
**अर्वाक् पतन्त मर्हत्तम निन्द[6]याऽपात् दृष्ट्याऽऽर्द्रया स भगवान् स्वकृतेन तुष्येत् ॥ १५ ॥**

**श्रीध० भूयानिति** । यदपि यद्यपि प्रलब्धः पराभूतो मया भवान् तथाऽपि त्वया दण्डो भृतः धृतः[7] शिक्षा कृता न तु उपेक्षितोऽस्मि । युक्त मेवैत दित्याह-नेति । बह्मबन्धुषु च ब्राह्मणाभासेष्वपि तुभ्यं तव हरेश्चेति वां युवयो रवज्ञा उपेक्षा नास्ति ॥ ११ - १३ ॥

तत्र हेतु माह - **विद्येति** । ब्रह्मा भूत्वा त्वमस्राक् अस्राक्षीः । किमर्थम् ? आत्मतत्त्व मवितुम् । यद्वा ब्रह्मवेदमात्मतत्त्वं च अवितुं सम्प्रदायप्रवर्तनेन ज्ञापयितु मित्यर्थः । तत् तस्मात् हे परम ! उत्कृष्ट ! ॥ १४ ॥

अत्र च प्रत्युपकारो नास्तीत्याह - **योऽसाविति** । अविदिततत्त्वदृशा अप्राप्ततत्त्वज्ञानेन तदगणय्य विस्मृत्य अर्हत्तमस्य[8] तव निन्दया अर्वाक् अधः पतन्तं माम् अपात् रक्षितवान् । स्वकृतेनैव परानुग्रहेणैव तुष्येत्, न मया तत्प्रतिकर्तुं शक्य मित्यर्थः ॥ १५ ॥

**वीर०** भवस्तवाय रुद्रस्तुतये कृतधीः कृतमनाः सम्परेतां परलोकं मतां सुतां[9] सतीम् अनुरागतः स्मरन् तस्या मौत्कण्ठ्यात् वाष्पकला नेत्रजललेशः तेन नाऽशक्नोत्, स्तोतुं न समर्थोऽभूत् ॥ ११ ॥

प्रेम्णा विह्वलितः विह्वलचित्तत्वात् कृच्छ्रात् प्रयासेन मनः संस्तभ्य स्ववशं कृत्वा सुधीः स्तुतिसमर्थबुद्धिमान् प्रजापतिः दक्षः ईशं रुद्रं निर्व्यलीकेन प्रीतियुक्तेन भावेन अभिप्रायविशेषेण शशंस तुष्टाव ॥ १२ ॥

यदपि यद्यपि प्रलब्धो मया परिभूतो भवान् तथाऽपि त्वया दण्डो धृतः शिक्षा कृता न तु उपेक्षितोऽस्मि । युक्त मेवैत दित्याह-

---

1. M, Ma, Ms प्रसह्य 2. A, B, G, I, J, M, Ma, Ms T घरान् 3. A, B, G, I, J, M, Ma, T °तः स्म, Ms °तश्च 4 M, Ma, Ms °तां प्रथयितुं
5. M, Ma, Ms °स्राः 6. M, Ma, Ms °यैक्षत् 7. A, B, J, Va omit धृतः 8. B, J, Va °म निन्दया; V °मस्य निन्दया 9. A, B, T omit सुतां

ब्रह्मबन्धुषु ब्राह्मणाभासेष्वपि तुभ्यं तव हरे र्विष्णोश्चेति वां युवयोः अवज्ञा उपेक्षा नास्ति, धृतव्रतेषु स्ववर्णाश्रमोचितधर्मनिष्ठेषु[1] ब्राह्मणेषु कुत एवाऽवज्ञा स्यात्। न कुतः स्या दित्यर्थः। हे भगवन्!॥ १३॥

तत्र हेतुं वदन् "शास्त्रदृष्ट्या तूपदेशो वामदेववत्" (ब्र.सू.1-1-30) इति न्यायेन परमात्मदृष्ट्या स्तौति - **विद्येति**। ब्रह्मा त्वं चतुर्मुखरूपी त्वं प्रथमं कल्पादौ आत्मतत्त्वं जीवपरयाथात्म्यं स्वानुभवोपदेशाभ्यामवितुं रक्षितुं विद्या शास्त्रजन्यं ज्ञानं, तपश्शमदमादिकृच्छ्रचान्द्रायणादि च व्रतं स्ववर्णाश्रमोचित धर्मः एतानि[2] बिभ्रतीति तान् विप्रान् मुखतः अम्राक् सृष्टवानसि। तत् तस्मात् हे परम! सर्वविपत्सु सर्वास्वापत्सु[3] ब्राह्मणान् पशून् पालः पशुपालक इव प्रगृहीतदण्डः सापराधेषु कृतशिक्षः पासि रक्षसि॥ १४॥

स्वस्याऽऽकिञ्चन्यं निवेदयन् क्षमापयति - **योऽसाविति**। अविदिततत्त्वदृशा अप्राप्ततत्त्वज्ञानेन मया अगणय्य तृणीकृत्य सभायां दुरुक्तय एव विशिखाः बाणाः तैः क्षिप्त स्ताडितो योऽसौ भवान् अर्हत्तमस्य पूज्यस्य तव निन्दया अर्वाक्पतन्तम् अधोलोकान् गच्छन्तं मां दयार्द्रया दृष्ट्या अपात् अगणय्य विस्मृत्य मत्कृतापराधमपात् अरक्षदिति वाऽन्वयः, स भगवान् भवान् स्वकृतेनोपकारेण तुष्येत्, न मया तत्प्रतिकर्तुं शक्य मित्यर्थः। अनेन स्वस्याऽऽकिञ्चन्यं निवेदितम्॥ १५॥

**विज०** बाह्यस्वच्छत्व मेव तस्य न त्वान्तरं तल्लक्षणा भावादिति तत्राह - भवस्तवायेति। औत्कण्ठ्यात् उत्पन्नबाष्पकलया आन्तरनैर्मल्याभावे रुद्रस्तव एव न युक्तः, स चानेन कर्तुं प्रयत्यते। तस्मा दान्तरी शुद्धिरप्यनुमीयत इति॥ ११॥

कायिक एव प्रयत्नो न तु वाचिक इति शङ्का माभूदित्याह - **कृच्छ्रादिति**। भावेन स्नेहेन॥ १२॥

दक्षस्य शिवे त्वान्तरो द्वेषो नास्तीति ज्ञापयितुं तदनुगुणगुणैः स्तुतिं करोति - **भूयानिति**। त्वया प्रसह्यापि मदपराधानुगुणो दण्डो धृत इति यद्यस्मात् तस्मा द्भूयाननुग्रहः कृतः। अहो मे महतां पुंसामनुकम्पा शिरश्छेदादिलक्षणोऽनुग्रहो न स्यात् किन्तु अत्यन्तापकार एवाय मामरणमेव लोके कोपदर्शना दतो न युक्त इत्याशङ्कयाऽपराधाधिक्ये नाऽयं नियम इति भावेनाह न ब्रह्मेति। ब्रह्मबन्धुषु ब्राह्मणजातिमात्रेषु तुभ्यं तव हरेश्च वां युवयो रवज्ञा नास्ति। धृतव्रतेषु दीक्षितेषु कुत एवाऽवज्ञा। अतः कृतावज्ञत्वात् मयि दण्डकरणं युक्तमन्यथा युष्मदवज्ञानेनाऽनुत्थान तमः प्राप्तिः स्यादिति॥ १३॥

अवज्ञाभावे निमित्त माह - **विद्यातप** इति। ब्रह्मात्मतां वेदरक्षकतां ब्रह्मणः पूर्णगुणस्य हरे रात्मतां विशेष सन्निधानदेहतां वा प्रथयितुं प्रख्यापयितु मस्राः अस्राक्षीः स्म। यस्मात्तत्तस्मात् त्वत्सन्निधान पात्रभूतान् ब्राह्मणान् विपत्सु पासी त्यन्वयः॥ १४॥

---

1 A, B, T °मधर्मविशिष्टेषु   2. A, B, T एतान्   3. A, B, T सर्वापत्सु

भवान् कृपासमुद्रः अहं निर्घृणो दुष्ट इत्यत्र विवेकयुक्तिमाह - **योऽसाविति**। न विदिता तत्त्वदृग्यस्य स तथा तेन अलब्ध तत्त्वज्ञाने नैक्षत् अद्राक्षीत् नास्माकं पुरुषायुषा शतेन त्वत्कृत प्रतिनिधिकरणं शक्यते। अतः स्वकर्मणा स्वयमेव च तुष्टो भवे त्याह- स भगवानिति॥ १५॥

## मैत्रेय उवाच

**क्षमाप्यैवं स मीढ्वांसं ब्रह्मणा चानुमन्त्रितः।**
**कर्मा[1]नुवर्तयामास सोपाध्यायर्त्वि[2]गादिभिः॥ १६॥**

**वैष्णवं यज्ञसन्तत्यै त्रिकपालं द्विजोत्तमाः।**
**पुरोडाशं निरवपन् वीरसंसर्गशुद्धये॥ १७॥**

**अध्वर्युणाऽऽत्त हविषा य[3]जमानो विशाम्पते।**
**धि[4]या विशुद्धया दध्यौ त[5]दा प्रादुरभूद्धरिः॥ १८॥**

**तदा स्वप्रभया तेषां द्योतयन्त्या दिशो दश।**
**मुष्णंस्तेज उपानीत स्तार्क्ष्येण स्तोत्रवा[6]जिना॥ १९॥**

**श्यामो हिरण्यरशनोऽर्ककिरीटजुष्टो नीलालकभ्रमर म[7]ण्डित कुण्डलास्यः।**
**कम्ब्वब्जचक्र शरचाप गदासिचर्म व्यग्रै र्हिरण्मयभुजैरिव कर्णिकारः॥ २०॥**

**श्रीध० क्षमाप्येति**। अनुमन्त्रितः अनुज्ञातः उपाध्यायसहितैः ऋत्विगादिभिः क[8]र्म अनुवर्तयामास॥ १६॥

**वैष्णवमिति**। वीराणां प्रमथादीनां संसर्ग कृतदोषस्य शुद्धये निवृत्यर्थम्॥ १७॥

**अध्वर्युणेति**। उपात्तहविषा अध्वर्युणा सह विशुद्धया बुद्ध्या दध्यौ। हे विशाम्पते! विदुर!॥ १८॥

**तदेति**। स्वया प्रभया तेषां तेजो मुष्णन् तिरस्कुर्वन् उपानीतः समीपं प्रापितः स्तोत्रे बृहद्रथन्तरे वा[9]जौ पक्षौ तद्वता। "बृहद्रथन्तरे पक्षौ" (शत. ब्रा. 6-7-2-6) इति श्रुतेः॥ १९॥

1. A, B, G, I, J, M, Ma, Ms, T कर्म सन्तानया॰ 2. B, M, Ma, Ms ॰गग्निभिः 3. M, Ma, Ms हूयमाने यजुष्पतौ 4. M, Ma, Ms यथा
5. A, B, G, I, J, M, Ma, Ms, T तथा 6. M, Ma, Ms निर्जितः 7. M, Ma, Ms कुण्डलमण्डितास्यः 8. A, B, J, Va omit कर्म 9. V adds एव

तमेवानुवर्णयति - **श्याम** इति द्वाभ्याम्। हिरण्यवद्रशना यस्येति वस्त्रं लक्ष्यते। अर्कतुल्येन किरीटेन जुष्टः नीलालका एव भ्रमराः तै र्मण्डितं कुण्डलयुक्तमास्यं यस्य कम्ब्वादिभिः आयुधैः भृत्यरक्षार्थं व्यग्रैः हिरण्मयैः स्वर्णभूषितैः[1] भुजैः पुष्पितः कर्णिकार इव शोभमानः। भुजानां हिरण्मयत्वं[2] केयूर कङ्कण मुद्रिकाद्यलङ्कारैः[3] लक्षितम्॥ २०॥

**वीर॰** स दक्षः मीढ्वांसं रुद्रं एवं क्षमाप्य प्रसाद्य ब्रह्मणा चतुर्मुखेन चकारा द्रुद्रेण चानुमन्त्रितः अनुज्ञातः उपाध्याय सहितैः ऋत्विगादिभिः कर्म अध्वर मनुवर्तयामास प्रवर्तयामास[4]। सन्तारयामासेति पाठे[5] सन्तारयामास समापयामास॥ १६॥

कथङ्कृत्वा सन्तारित इत्यत्राह - **वैष्णवमिति**। यज्ञसन्तत्यै यज्ञविच्छेदपरिहाराय वीरसंसर्ग शुद्धये च वीराणां प्रमथानां संसर्गकृत दोषशुद्धये वीरभद्रसंसर्गशुद्धये वा वैष्णवं विष्णुदेवताकं त्रिकपालं त्रिषु कपालेषु संस्कृतं पुरोडाशं द्विजोत्तमाः ऋत्विजः निरवपन्॥ १७॥

हे विशाम्पते! विदुर! आत्तहविषा उपात्तहविषा अध्वर्युणा सह यजमानो दक्षः विशुद्धया निर्मलया बुद्ध्या दध्यौ ध्यातवान् तदा तदैव हरिः प्रादुरभूत् आविर्बभूव। तथेति पाठे यथा येन प्रकारेण दध्यौ तथा तं प्रकार मनतिक्रम्य प्रादुरभूदित्यर्थः[6]॥ १८॥

दश दिशः द्योतयन्त्या आत्मनः प्रभया तेषां सदस्यानां तेजः मुष्णन् तिरस्कुर्वन् हरिः स्तोत्रे बृहद्रथन्तरे वाजौ पक्षौ यस्य तेन। "बृहद्रथन्तरे पक्षौ" (शत.ब्रा. 6-7-2-6) इति श्रुतेः। स्तोत्रदक्षेण वा तार्क्ष्येण गरुडेन उपानीतः समीपं प्रापितः॥ १९॥

आविर्भूतं भगवन्तं वर्णयति - **श्याम** इति द्वाभ्याम्। हिरण्यवद्रशना यस्येति वस्त्रं लक्ष्यते। अर्कतुल्येन किरीटेन जुष्टंनीलालका एव भ्रमरा स्तै र्मण्डितकुण्डल मास्यं यस्य। कम्बुः शङ्खः अब्जं कमलं चापः शार्ङ्गम् असिः खड्ग : चर्म खेटः कम्बुप्रभृतिभि रायुधैः भृत्यरक्षणार्थं व्यग्रैः सत्वरैः हिरण्मयैः भुजैः केयूरादिभूषितैः भुजानां हिरण्मयत्वं केयूरादिभिर्भूषितत्वात् अवगन्तव्यं, पुष्पितैः शाखाविशेषैः कर्णिकार इव शोभमानः॥ २०॥

**विज॰** प्रकृत मनुसरति - **क्षमाप्येति**। सन्तानयामास अनुसंहितं चकार॥ १६॥

दुष्टस्य यज्ञस्य प्रायश्चित्तमन्तरेण कथ मनुसन्धानं घटत इति तत्राह - **वैष्णव** मिति। वैष्णवं विष्णुदैवत्यं त्रीणि कपालानि आसनानि यस्य स त्रिकपालः तं वीरो वीरभद्रस्तस्य संसर्ग उपद्रवः तस्य शुद्धये परिहाराय निर्वापणं समन्त्रपचनम्॥ १७॥

---

1. B, J, V, Va omit स्वर्णभूषितैः 2 V adds हिरण्यकृत 3. B, J, V, Va omit लक्षितम् 4. A, B, T सम्प्र° 5. W पाठान्तरम् 6 A,B,T °र्बभूवेत्यर्थः

अध्वर्योः प्रतिपत्तिफलमाह - **अध्वर्युणेति**। यजुःपति र्मन्त्रदेवता॥ १८॥

तदा प्रत्यक्षस्य हरेः कर्मविशेषं स्वरूपविशेषं चाह - **तदेति**। ताक्ष्र्येण गरुडेन स्तोत्रेण सामरूपेण निर्जितो वशीकृतः॥ १९॥

हिरण्मयी रशना काञ्ची यस्य स तथा हिरण्यवत्पीतमम्बरं यस्य स तथेति वा। अर्कवत् ज्वलता किरीटेन जुष्टः नीलाश्च ते अलकाश्च नीलालकाः त एव भ्रमरा श्च कुण्डले च नीलालकभ्रमर कुण्डलानि एतैर्मण्डितमास्यं यस्य स तथा। कम्बादिभि र्व्यग्रैः विवशैः शिक्षाभ्यासदर्शकै रिवाङ्गदादि भूषणायितत्वात् हिरण्मयै रिव स्थितै र्भुजैः लक्षितः पुष्पितः कर्णिकारो वृक्षविशेषः॥ २०॥

**वक्षस्यधिश्रितवधू र्वनमाल्युदारहासावलोककलया रमयंश्च विश्वम्।**
**पार्श्वभ्रमद्व्यजनचामरराजहंसः शुभ्रा[1]तपत्रशशिनोपरि र[2]ज्यमानः॥ २१॥**

**तमुपागत मालक्ष्य सर्वे सुरगणादयः।**
**प्रणेमुः सहसोत्थाय ब्रह्मेन्द्र त्र्यक्षनायकाः॥ २२॥**

**तत्तेजसा हतरुचः सन्नजिह्वाः ससाध्वसाः।**
**मू[3]र्ध्ना धृ[4]ताञ्जलिपुटा उपतस्थु रधोक्षजम्॥ २३॥**

**अप्यर्वाग्वृत्तयो यस्य महि त्वा[5]त्मभुवादयः।**
**यथामति गृणन्ति स्म कृतानुग्रह विग्रहम्॥ २४॥**

**दक्षो गृहीता[6]र्हण सा[7]धनो[8]त्तमं यज्ञेश्वरं विश्वसृजां[9] परं गुरुम्।**
**सुनन्दनन्दाद्यनुगै र्वृतं मुदा गृणन् प्रपेदे प्रयतः कृताञ्जलिः॥ २५॥**

**श्रीध० वक्षसीति**। वक्षस्यधिश्रिता वधूर्लक्ष्मीः यस्य सः उदारो यो[10] हासोऽवलोकश्च तयोः कलया लेशेन पार्श्वे उभयतो भ्रमती व्यजनचामरे एव राजहंसौ यस्मिन् सः रज्यमानः शोभातिशयं नीयमानः॥ २१॥

**तमिति**। ब्रह्मेन्द्रत्र्यक्षा नायका मुख्या येषां ते॥ २२॥

---

1. A. B, G, I, J, M. Ma, T श्वेतात° 2. M, Ma, Ms लक्ष्यमाणः 3. M, Ma मूर्ध्नि 4. B, M, Ma कृ° 5. M, Ma, Ms °त्वे स्वभु° 6. B. V °त्वा° 7. A. B, G. I. J °सादनो; Ms °सादरो° 8. M, Ma °न्नमन् 9. M, Ma °जं 10. A, B, J, Va omit यो

**तदिति** । हतरुचः तिरस्कृतप्रभाः सन्नजिह्वाः [1-]सन्ना स्खलिताक्षरा जिह्वा येषां[-1] ते गद्गदवाच [2]इत्यर्थः । ससाध्वसाः तन्महिम्ना क्षुभितचित्ताः उपतस्थुः तुष्टुवुः ॥ २३ ॥

**अपीति** । यस्य महि [3]महिमानं प्रति तु अर्वागेव वृत्तिर्येषां तेऽपि यथामति गृणन्ति स्म अस्तुवन् । कृतः प्रकटीकृतोऽनुग्रहार्थं विग्रहो येन तम् । यद्वा तेषा मर्वाग्वृत्तित्वेहेतुः । ते तु यस्य महि महिमा विभूतिमात्ररूपा इत्यर्थः ॥ २४ ॥

तत्र तावत् दक्षस्तुतिप्रकार माह - **दक्ष** इति । गृहीत मर्हण सादनोत्तमं येन तम् । उत्तमे पात्रे आसाद्य अर्हणेषु समर्पितेषु प्रीत्या सार्हणं[4] पात्रं [5]स्वय मेव येन गृहीत मित्यर्थः । यद्वा कथं प्रपेदे ? **गृहीत मर्हणसादनोत्तमं** यथा भवति [6]तथा तद्गृहीत्वा प्रपेदे इत्यर्थः । गृहीत्वेति पाठस्तु सुगमः । गृणन् स्तुवन् प्रपेदे शरणं जगाम । "***दक्ष ऋत्विक्सदस्येश** भृगुब्रह्मेन्द्रयोषितः । ऋषयश्च तथा सिद्धा यजमानी च लोकपाः । योगिब्रह्माग्निदेवाश्च स्तुवन्ति जगदीश्वरम् । तथा गन्धर्वविद्याध्रब्राह्मणाश्च पृथङ्मतैः" ॥ २५ ॥

**वीर०** वक्षस्यधिश्रिता वधूः [7]लक्ष्मीः यस्य, वनमाला अस्यास्तीति वनमाली, उदारहासयुक्तो योऽवलोकः तस्य कलया अपाङ्गेन विश्वं रमयन् पार्श्वयो रुभयोःभ्रमती व्यजनचामरे एव राजहंसौ यस्य सः, शुभ्रातपत्रमेव शशी तेनोपरि रज्यमानः शोभातिशयं नीयमानः ॥ २१ ॥

उपागतं समीपे प्राप्तं तं भगवन्त मालक्ष्य दृष्ट्वा ब्रह्मेन्द्र त्र्यक्षनायका मुख्या येषां ते, सर्वे सुरगणादयः सहसा त्वरया उत्थाय प्रणेमुः नमश्चक्रुः ॥ २२ ॥

तस्य भगवत स्तेजसा हतरुचः तिरुस्कृतप्रभाः सन्नजिह्वाः गद्गदवाचः ससाध्वसाः तन्महिम्ना क्षोभितचित्ताः मूर्ध्ना धृतानि अञ्जलिपुटानि येषां ते मूर्धसु धृताञ्जलिपुटा इत्यर्थः । अधोक्षज मुपतस्थुः तुष्टुवुः ॥ २३ ॥

यस्य भगवतो महिमानं प्रति अर्वाग्वृत्तयः अधस्ता देव वृत्तयो येषां ते कात्स्न्र्येन तन्महिमानम् अवगन्तु मनर्हमनोवृत्तयोऽपि भवादयः शर्वादयः कृतानुग्रहविग्रहं कृतः प्रकटीकृतः अनुग्रहार्थं विग्रहो येन तं, यद्वा कृतोऽनुग्रह एव विग्रहो येन तं भक्तानुग्रहैक प्रधानमूर्ति मित्यर्थः, यथामति गृणन्ति स्म । स्मेति विस्मये, वाङ्मनसागोचर महिमानं वाङ्मनसवृत्तिभिः तुष्टुवु रित्याश्चर्यम् ॥ २४ ॥

तत्र तावत् दक्षस्तुतिप्रकार माह - **दक्ष** इति । गृहीतार्हणसाधनोत्तमम् अर्ह्यते पूज्यतेऽनेनेति अर्हणम् अर्हणसाधनं गन्धपुष्पादिकं

---

1--1. B, J, V, Va omit 2. B, J, V, Va omit इत्यर्थः 3. B, J, V, Va omit महि 4. A, B, J, Va °णपा° 5. V omits स्वयम् 6. B, J, Va, omit तथा
* V श्रीधरीयश्लोकावेतौ । 7. W omits लक्ष्मीः

गृहीत मर्हणं येन स चाऽसौ साधनोत्तमस्तं साधनेषूत्तमः साधनोत्तमः[1] तम्, पुरुषार्थप्रापकाणामध्ये उत्तम मित्यर्थः। तथा च वक्ष्यति "धर्मार्थकाम मोक्षाख्यं य इच्छेत्, (भाग. 4-8-41) इत्यादि। अनेन समीहितफलसाधनप्रक्रान्ताध्वरापेक्षया सुखेन पुरुषार्थप्रापकत्वा दुत्तमोपायभूत मित्युक्तं भवति। यद्वा प्रगृहीतं कर्तव्यत्वेनोपात्तं प्रक्रान्तमिति यावत्। अर्हणं भगवदाराधनभूत यागरूपं पूजनं तस्य यानि साधनानि निर्वर्तकानि प्रयाजादीनि तेभ्य उत्तमं यागनिर्वर्तक मित्यर्थः। "इष्टापूर्तं बहुधाजातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः" (म.ना.उ. 1-6) इत्यादि श्रुतेः। बिभर्ति पोषयति निर्वर्तयतीति यावत्। अत एव हि पूर्वं तदागमनाभावा द्यागानिर्वृत्तिः। न केवलं यागनिर्वर्तक[2] एव, अपि तु तत्फलप्रदो भोक्ता चेत्याह - यज्ञेश्वरं यज्ञानां भोक्तारं तत्फलदं चेत्यर्थः तथा च गीतम् - "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च" (भ.गी. 9-24) इति। अत्र ईश्वरत्वाक्षिप्तं भोक्तृत्वं रक्षकत्वं च ईश्वरो हि स्वयं[3] भुङ्क्ते रक्षति च। न केवलं यज्ञस्यैव रक्षकः अपि तु यज्ञकर्तु र्यजमानस्य दक्षस्यापीत्याह - विश्वसृजां मरीच्यादीनां पतिं पालयितारं स्रष्टृत्वस्याऽप्युपलक्षण मिदं पतित्व मपि हितोपदेशेनत्याह - गुरुं हितोपदेष्टारं सुनन्दनन्द[4]प्रभृतिभिः भृत्यै रनुगैः सुरै र्वृतं परिवेष्टितम्। अनेन नित्य विभूत्यधिपतित्व मुक्तम्। एवम्भूतं भगवन्तं कृताञ्जलिः बद्धाञ्जलिः दक्षो गृणन् स्तुवन् प्रयतः समाहितचित्तः प्रपेदे शरणं गतः॥ २५॥

**विज०** वक्षस्यधिश्रिता वधूः भार्या यस्य स तथा पुत्रभार्यावत्प्रेमास्पदत्वद्योतनायाधिश्रितरम इति वक्तव्ये वधूरित्युक्तं, "वहेर्धश्च" (उणादि 1-83) वहेः धातो रुप्रत्ययो भवति। पुत्रभार्यायां गम्यमानायां चकारात् कनीयोभ्रातृभार्यायां धकारश्चान्तादेशः स्वभार्या च वधूः, साऽपि सेवार्थ मत्र वसति न त्वालिङ्गनादिसुखावाप्त्यर्थम्। अतः श्रितेति। उदार हासावलोकयोः कलया चन्द्रकलावदाह्लादिकया पार्श्वे भ्रमत् व्यजनचामराख्य राजहंसाभ्यामुपरि शुभ्रातपत्रशशिना लक्ष्यमाणो दृश्यमानः एवं विधः तार्क्ष्येणोपानीत इति पूर्वेणान्वयः॥ २१॥

ब्रह्मरुद्रौ विष्णुसमानाविति लोकप्रवादं परिहरन् तत्पूर्वं देवतानां श्रीनारायण प्रणामं वक्ति - **तमुपागत** मिति। ब्रह्मा चतुर्मुखः इन्द्रो वायुः त्र्यक्षो रुद्रः एते नायकाः येषां ते तथोक्ताः॥ २२॥

ननु न प्रणाममात्र मुत्तमत्वादिनिश्चयात्मकं समानानामपि मिथो दर्शनादिति तत्राह - **तत्तेजसेति**। सन्नजिह्वाः जिह्वाशक्तिरहिता गद्गदवाच इत्यर्थः। अत्र निमित्तं ससाध्वसा इति। ननु सन्नजिह्वत्वेन किम्? पश्चाज्जग्मु रिति तत्राह - मूर्ध्नीति॥ २३॥

स्तुतिलक्षण वागिन्द्रियादि व्यापाराभावेन केवलोपस्थाने किं प्रयोजन मत्राह - अप्यर्वागिति। यस्य महित्वे माहात्म्यविषये

1. A, T omit साधनोत्तमः 2. A, B, T यागादि 3. A, B, V स्वं 4. A, B,T omit नन्द

अनन्तत्वादवाग्वृत्तयोऽपि अप्राप्तवाङ्मनसव्यापारा अपि स्वभूर्ब्रह्मा तदादयः कृतानुग्रहविग्रहं भक्तानुग्रहार्थं कृतो विग्रहो येन स तथा तं श्रीनारायणं यथामति गृणन्ति स्मे त्यन्वयः ॥ २४ ॥

स्तुति प्रबन्धकथने ग्रन्थाधिक्यं स्यादिति मत्वा यदर्थं हरे राविर्भावः तस्य दक्षस्य भगवत्प्रतिपत्तिप्रकारं वक्ति - दक्ष इति ॥ २५ ॥

## दक्ष उवाच

**शुद्धं स्वधाम्न्युपरताखिलबुद्ध्यवस्थं चिन्मात्र मेक मभयं प्रतिषिद्ध्य मायाम् ।**
**तिष्ठं स्तयैव पुरुषत्व मुपेत्य तस्या मास्ते भवानपरिशुद्ध इवा[1]ऽऽत्मतन्त्रः ॥ २६ ॥**

## ऋत्विज ऊचुः

**तत्त्वं न ते वय मनञ्जन रुद्रशापात् कर्मण्यवग्रहधियो भगवन्विदामः ।**
**धर्मोपलक्षण मिदं त्रिवृदध्वराख्यं ज्ञातं यदर्थ मधिदैव मदो[2] व्यवस्थाः ॥ २७ ॥**

## सदस्या ऊचुः

**उत्पत्त्यध्वन्यशरण उरुक्लेशदुर्गे[3]ऽन्तकोग्रव्यालान्विष्टे[4] विषय मृग तृष्णात्म[5]गेहोरु भारे[6] ।**
**द्वन्द्वश्वभ्रे खलमृगभये शोकदावेऽज्ञसार्थः पादौकस्ते[7] शरणद कदा याति कामोपसृष्टः ॥ २८ ॥**

## रुद्र उवाच

**तव वरद वराङ्घ्रावाशिषे[8]हाखिला[9]र्च्ये ह्यपि मुनिभिरसक्तै रादरेणार्हणीये ।**
**यदि रचितधियं मा[10]विद्यलोकोऽपविद्धं जप[11]ति न गणये त[12]त्त्वत्परानुग्रहेण ॥ २९ ॥**

## भृगु रुवाच

**यन्मायया गहनयाप[13]हतात्म बोधा ब्रह्मादय स्तनुभृत स्तमसि स्वपन्तः ।**
**[14]नात्मन् श्रि[15]तं तव विदन्त्यधुनाऽपि तत्त्वं । सोऽयं प्रसीदतु भवान् प्रणतात्मबन्धुः ॥ ३० ॥**

---

1. M, Ma, Mss °मिवामनन्ति 2. M, Ma, Ms °दस्त्वमास्थाः 3. M. Ma. Mss °र्गान्त° 4. M, M, Ms °ऽऽ कृष्टे 5. J, Va तृष्यात्म 6. A, B, G, I, J, M, Ma, Ms, T भारः 7. M, Ma, Ms शस्तौ 8. M, Ma, Ms °षा चानभिद्ये 9. A, B, G, I, J, T °लार्थे 10. M, Ma, Ms मां विद्धि लोकाप° 11. M, Ma, Ms ग° 12. M, Ma °यं त्व°; Ms °ऽन्यं त्व° 13. A, B, G, I, J, M, Ma, Ms, T °ह° 14. M, Ma, Ms नात्माश्रितं 15. V सृतं

**श्रीध०** ननु साक्षात्परमेश्वर एव रुद्रः तस्य ब्रह्मपुत्रत्वेन जीवत्व मनुकार[1]मात्रं हन्त[2]! किमिति त्वया भेददृष्ट्याऽसाववज्ञात इति मां भगवानाक्षेप्स्यसीत्याशङ्क्य अप्रच्युतस्वरूपस्य जीवधर्मनाट्यं तवैव संगच्छते नाऽन्यस्येत्याह - **शुद्धमिति**। स्वधाम्नि स्वस्वरूपे तिष्ठन् भवान् शुद्धं चिन्मात्रं चैतन्यघनः। शुद्धत्वे हेतुः। उपरता नित्यनिवृत्ताऽखिला बुद्ध्यवस्था यस्मात्। अतः एकं भेदशून्यं अत एव अभयम्। "द्वितीया द्वै भयं भवति" (बृह.उ. 1-4-2) इति श्रुतेः। जीवस्यापि वस्तुत एवम्भूतत्वात् तद्वैलक्षण्यार्थ मुक्तम्। मायां प्रतिषिद्ध्याभिभूय स्वतन्त्र एव सन् तया मायया पुरुषत्वं मनुष्यनाट्य मुपेत्य तस्यां मायायां तिष्ठन् अपरिशुद्ध इव रागादिमानिव आस्ते। रामकृष्णाद्यवतारे[3]षु तथा प्रतीयते भवानित्यर्थः। अन्ये त्वविद्योपाधयो मायाऽभिभूताः संसरन्ति। अतः त्वमेवेश्वरो न रुद्रादयः इति भावः। अत एव इमां भे[4]ददृष्टिं भगवान् वारयिष्यति। "अहं ब्रह्मा च शर्वश्च जगतः कारणं परम्" (भाग. 4-7-50) इत्यादिना॥ २६॥

**तत्त्वमिति**। ऋत्विजोऽपि स्व[5]स्यापराधं परिहरन्तः स्तुवन्ति। भो अनञ्जन! उपाधिमूलशून्य! यद्यपि त्वमेव रुद्रादिदेवतारूपः तथाऽपि नन्दीश्वरशापात् कर्मण्येव दुराग्रहधियः सन्तः तव तत्त्वं न विद्मः। किन्तु धर्म[6]स्यापूर्वस्योपलक्षणभूतं त्रिवृत् त्रयीप्रतिपाद्य मध्वराख्यं तव रूप मस्माभि र्ज्ञातम्। कीदृशम्? यदर्थं यस्य सिद्ध्येऽधिदैवं दे[7]वताधि कारेण अदोव्यवस्थाः अमू र्व्यवस्थाः। अत्रेय मेव देवता नान्य इत्येवम्भूता नियमाः प्र[8]वृत्ताः इत्यर्थः। यद्वा व्यवस्था इ[9]त्याख्यातम्। अडागमाद्यभाव आर्षः। यदर्थमद इद मिन्द्राद्यधि दैवं रूपं विशेषेणास्थित वानसीत्यर्थः॥ २७॥

**उत्पत्त्यध्वनीति**। सदस्यास्तु निरीश्वरेऽपि दक्षाध्वरे धनलोभेन स्वप्रवृत्ति मनुचिन्त्यानुतप्ता विरक्ति माशासानाः स्तुवन्ति। हे शरणद! आश्रयप्रद! उत्पत्यध्वनि संसारमार्गे वर्तमानोऽज्ञानां सार्थः समूहस्ते पादौकः त्वत्पादरूपं[10]निवासं कदा या[11]ति यास्यति। कथम्भूते संसारमार्गे? अशरणे वि[12]श्रामस्थानशून्ये उरुक्लेशा एव दुर्गमस्थानानि यस्मिन् अन्तक एवोग्रो व्यालः तेनान्विष्टे लक्ष्यीकृते विषयरूपा मृगतृ[13]ट् मृगतृष्णिका यस्मिन् आत्माहङ्कारास्पदं शरीरं ममत्वास्पदं गेहं च स एवोरु र्भारो यस्य सः। द्वन्द्वानि सुखदुःखादीन्येव श्वभ्राणि गर्ता यस्मिन्, खला एव मृगा व्याघ्रादय स्तेभ्यो भयं यस्मिन् शोक एव दावाग्निः यस्मिन्। कामेनोपसृष्टः पीडितः॥ २८॥

श्रीरुद्रस्तु पूर्वं मम निन्दा दुस्सहाऽऽसीदिदानीं तु तां न गणयामीत्याह - **तवेति**। आशिषा कामेन असक्तैः निष्कामैः रचितधिय

---

1 V करण 2. V अतः 3. A, B, J, Va °रे 4. A, B, J, Va omit भेद 5. V स्वाप° 6. B °स्योप° 7. V वाऽधि° 8. B, J, V, Va omit प्रवृत्ताः 9. इति क्रियापदत्वेन व्याख्यातम् 10. A adds ओकः 11. A, B, J, Va omit याति 12. V अविश्रमस्थाने 13. V omits मृगतृट्

मभिनिवेशितचित्तं मा माम् अविद्यो विद्याहीनो लोको यद्यपविद्धं जपति आचारभ्रष्टं जल्पति तज्जल्पनम्[1-] अहं न गणये[-1]। तत्र हेतुः तव [2]यः परोऽनुग्रहः [3]तेन। त्वत्पराणां वा योऽनुग्रहः तेन[4]॥ २९॥

भृगुस्तु स्वभावतः तत्त्वज्ञानहीना जीवा अतोऽज्ञान कृतं मम दुश्चेष्टितं क्षमस्वेत्याह - **यन्मायये ति**। आत्मन् आत्मनि [5]सृत मनुगतं तव तत्त्वं न विदन्ति प्रणताना मात्मा बन्धुश्च [6]भवान्॥ ३०॥

**वीर०** तत्र प्रकृतिपुरुषविलक्षणं परमात्मस्वरूपं सर्वशक्तिम द्विशोध्य तमनुसन्दधानः प्रपद्यते दक्षः - **शुद्ध** मिति। शुद्ध मपापविद्धं कर्मरूपेणोपाधिरहित मकर्मवश्य मिति यावत्। अत एव स्वधाम्नि स्वस्वरूपे मायां प्रतिषिद्धय निरस्य स्वेन रूपेण अस्पृष्ट प्रकृति जन्य दोष मित्यर्थः। शुद्धत्वे हेतुः - उपरताखिलबुद्ध्यवस्थं उपरताः शश्वन्निवृत्ता अखिलाः सर्वा बुद्ध्यवस्था मनोवृत्तयो यस्य तत् नित्यनिवृत्तप्रकृतिपरिणामरूपान्तर्बाह्येन्द्रियसर्ववृत्तित्वादपापविद्धमिति भावः। यद्वा स्वधाम्नि उपरता प्रशान्ता अखिला बुद्ध्यवस्था मनोवृत्तयो यस्य तत् नित्यनिवृत्त प्रकृतिपरिणामरूपान्तर्बाह्येन्द्रिय सर्ववृत्तित्वादपापविद्धमिति भावः। यद्वा स्वधाम्नि उपरता प्रशान्ता अखिला बुद्ध्यवस्था यस्य तत् स्वस्वरूपानुभवेनैव नित्यनिवृत्त सर्वमनोवृत्ति रित्यर्थः। तत्कुतः ? एकं समाभ्यधिकरहितं स्वस्वरूपस्य निस्समाभ्यधिकानन्दरूपत्वात् तदेकानुभवेन नित्यनिवृत्तसर्वेन्द्रियवृत्तित्वाच्छुद्ध मित्यर्थः। किमेवंविधस्वरूपं जडं, नेत्याह - चिन्मात्रं ज्ञानैकरसं क्वचिदप्यजडं न केवलं स्वयमेव शुद्धमपि तु अन्येषामपि शुद्धत्वा पादक मित्याह। अभयं न विद्यते भयं यस्मात्तदभयम्। यदुपासनादशुद्धत्वापादकभयाख्यसंसारनिवृत्तिः तदभय मित्युच्यते। तथा च श्रुतिः "यदा ह्येवैष एतस्मिन्न दृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति" (तैति.उ. 2-7) इति। एवं रूपं स्वरूपं प्रति तिष्ठन् अजहदित्यर्थः। तथैव माययैव पुरुषत्वं पुरुषाकारतामुपेत्य मायां देवादिशरीररूपेण परिणमय्य तस्मिन् जीवान्तरात्मतया अवस्थायेत्यर्थः। स्वयमात्मतन्त्रः स्वतन्त्रो भवान् तस्यां मायायां अपरिशुद्धः कर्मवश्य इवास्ते। अहो मह दिदं सर्वशक्तित्व मिति भावः॥ २६॥

अथ ऋत्विजः परमात्मतत्त्वानभिज्ञतामात्मीया मावेदयन्तः तं सर्वयज्ञाराध्यत्वेन स्तुवन्ति - **तत्त्वमिति**। हे अनञ्जन! निरञ्जन! पुण्यापुण्यरूपमलरहितेत्यर्थः। वयं नन्दिकेश्वरस्य शापात् कर्मण्येव अवग्रहधियः दुराग्रहचित्तास्ते तव तत्त्वं याथात्म्यं न विदामः [7]जानीमः। किन्तु हे भगवन्! पूर्णषाड्गुण्यमूर्ते! त्रिवृत् त्रयाणां सत्वादीनां गुणानां वृत् भावे क्विप् वर्तनं यस्मिन् तत् त्रिभि र्गुणैः वर्तत

1–1. V omits 2. V adds ते 3. V omits तेन 4. V adds तव चाज्ञौ रचितधियं कृतबुद्धिं भक्तंमां यदि जानीषे तर्हिस्वानपि लोकान् कैलासादीन् न गणये न बहुमन्ये। त्वत्परानुग्रहेण परिपूर्ण इति शेषः। त्वत्पराणां योऽनुग्रहः तेन वा॥ २९॥ 5. A, B, J, Va श्रित° 6. B, J, V, Va omit भवान् 7. A, B, T विजा°

इति वा। "त्रैगुण्यविषया वेदाः" (भगी. 2-45) इत्युक्तरीत्या तत्तद्गुणानुसारेण ह्यध्वरादिकर्म विहितं धर्मोपलक्षणं धर्मस्य क्रियाजन्यस्य अपूर्वस्य देवताप्रसादस्यवा उपलक्षणम्। उपलक्ष्यतेऽनेनेति उपलक्षणं ज्ञापकम् उत्पादक मित्यर्थः। "तृप्त एव एनम् इन्द्रः प्रजया पशुभिः तर्पयति" इति देवताप्रसादादेः ज्ञापकत्वे हि चोदितम्। इदमध्वराख्यं कर्म ज्ञातम्। अस्माभिरिति शेषः। कीदृशं तत्कर्म ? तत्राह - यदर्थं यत्प्रयोजनाय यत्कर्मफलप्रदानाय यत्कर्माराध्यत्वाय चेत्यर्थः। अदः एतद्दैवम् इन्द्रादिदैवतम् अधिव्यवस्थाः विशेषेण अधिष्ठाय स्थितवानित्यर्थः। व्यवस्था इत्यत्राडागमाभावः आर्षः। अनेन इन्द्रादिरूपेण सर्वयज्ञाराध्यः तत्फलदश्च त्वमेवेत्युक्तं भवति॥ २७॥

अथ सदस्याः तापत्रयाभिघातार्ताः जननपदव्या हेयता माविष्कुर्वन्तो भगवच्चरणारविन्दशरणागतिं प्रार्थयन्त आहुः - **उत्पत्त्यध्वनीति**। हे शरणद ! उपायनिर्वर्तक शरणप्रद ! शरण्येति यावत्। उत्पत्त्यध्वनि संसार मार्गे वर्तमानः अज्ञानां सार्थः समूहः कामेनो पसृष्टः पीडितः ते तव पादौकः पादावेव ओकः विश्रान्तिस्थानं कल्पतरुमूलवद्विश्रान्ति जनकस्थान मित्यर्थः। कदा याति शरणं गच्छति। कथम्भूते उत्पत्त्यध्वनि ? अशरणे विश्रामस्थानशून्ये उरुक्लेशा एव दुर्गमस्थानानि यस्मिन्, अन्तक एवोग्रो व्याधः तेनान्विष्टे लक्ष्यीकृते विषयमृगतृष्णात्मगेहोरुभारो विषयरूपा मृगतृष्णिका आत्माभिमानास्पदं च शरीरं गेहं ममता[1]स्पदं गृहं तान्येवोरुभारो यस्मिन्। प्रथमान्तपाठे अज्ञसार्थस्य विशेषणं विषयमृगतृष्णादेव एव उरुभारो यस्य स इति। द्वन्द्वानि सुखदुःखादीनि एव श्वभ्राणि गर्ता यस्मिन्, खला दुर्जना एव मृगा व्याघ्रादयः तेभ्यो भयं यस्मिन् शोक एव दावाग्निः यस्मिन्॥ २८॥

रुद्रस्तु मम निन्दा दुस्सहाऽऽसीत् पूर्व मिदानीं तु तां न गणायामी त्याह - **तवेति**। हे वरद ! इहाऽस्मिन् लोके आशिषा कामेन अखिलै रर्च्ये आराधनीये तथाऽसक्तै र्मुमुक्षुभिश्च आदरेणार्हणीये तव वराङ्घ्रौ निरतिशय सुकुमारत्व सुगन्धत्वादियुक्ते चरणारविन्दे रचितधियं न्यस्त चित्तं माम् अविद्यलोकोऽज्ञलोकः यदि यद्यपि अपविद्धम् आचारहीनं जपति जल्पति तथापि तज्जल्पनं न गणये न गणयामि, निन्दकान्न निगृह्णामीत्यर्थः। कुतः ? त्वत्परानुग्रहेण तव यः परानुग्रहः परेषु अनुग्रहः तेन हेतुना तव परानुग्रहैकनिरतत्वात् त्वच्चरणारविन्दासक्तचित्तानामस्माकमपि परानुग्रह एवोचित इति भावः॥ २९॥

भृगुस्त्वविद्यातिरोहितस्वरूपत्वेन देहपरवशत्वात् सर्वे ब्रह्मादयो जीवा अपराधैकपराः त्वं तु अपराधसहनैकशीलोऽसि, अतः प्रकृतोऽपराधः त्वया क्षन्तव्य इत्याह - **यन्माययेति**। ब्रह्मादयः सर्वे तनुभृतो देहिनः जीवा इति यावत्, गहनया दुरत्ययया यस्य तव मायया अपहृतः तिरोहितः आत्मनो बोधः धर्मभूतं ज्ञानं येषां ते, अत एव तमसि तमश्शब्दवाच्यसूक्ष्मप्रकृति परिणामरूपे

1. W 'त्वा'

शरीरे स्वपन्तः शयाना वर्तमानाः यद्वा, तमःकार्ये जन्मजरामरणादिरूपे संसारे शयानाः आत्मन् आत्मनि श्रितं आश्रितं जीवान्तरात्मतयाऽधिष्ठितं तव तत्त्वं स्वरूपयाथात्म्य मधुनाऽपिन विदन्ति न जानन्ति। सोऽयं प्रणतानां शरणगतानां आत्मबन्धुः आत्मवन्निरतिशय प्रीतिविषयः प्रीतिर्मांश्च बन्धुः, यद्वा प्रणताना मात्मनां बन्धुः प्रसीदतु अस्माननुगृह्णातु॥ ३०॥

**विज०** प्रतिपत्तिर्नाम निर्गुणत्वेन निराकारत्वेन चेत् प्रतिपद्यमानविषयानुसारिणी[1] स्यात् ''केवलो निर्गुणश्चाकाशं ब्रह्मा अनादिर्वाऽयमाकाशः शून्यो लौकिकः'' इति श्रुतेः। अन्यथाप्रतिपत्तिदोषेणाऽनर्थापत्तिः स्यादिति तत्राह - **शुद्धमिति**। यद्रूपं शुद्धं निर्दोषत्वेन शोधितम्। कथं शोधितम् ? अत्राह - स्वधाम्नीति। स्वधाम्नि स्वस्वरूपे उपरता नित्यनिवृत्ता अखिला बुद्धे रवस्था जाग्रदादि जीवावस्था यस्य तत्तथा तर्हि तन्निराकारं किं नेत्याह चिन्मात्रमिति। केवलं ज्ञानात्मकं जीवस्या प्येतादृक्त्वात् किं विशिष्योच्यत इति तत्राह - एकमिति। एकं प्रधानं सर्वोत्तमम्। न हि ईदृश मन्यदस्तीत्याह - अभयमिति। ''द्वितीया द्वै भयं भवति'' (बृह.उ. 1-4-2) इति श्रुतेः। एतादृशस्य अन्यस्याभावात् कालत्रयेऽपि निरस्तभयम्, कुत एतत् सर्व मित्यत्र आह - प्रतिषिध्येति। मायां जडात्मिकां प्रतिषिद्ध्य दूरीकृत्य तिष्ठन् तादृग्रूपो भवान् तया मायया उपादानत्वेन महदादि सृष्ट्वा महदाद्युपादानत्वेनाण्डं सृष्ट्वा तदन्त स्त्रिवृदहङ्कारविकृताकाशाद्युपादानत्वेन पुरुषशब्दवाच्य - शरीराणि सृष्ट्वा तदन्तःस्थितिमत्तया पुरुषत्वं पुरुषशब्दवाच्यत्व मुपेत्य तदन्तर्यामिरूपेण व्यक्तो भूत्वा तस्यां कार्यकारणलक्षणायां प्रकृतावास्ते। ''तुच्छ्ययेनाभ्वपिहितम्'' (ऋक्सं. 10-129-3) इति श्रुतेः। तत्राज्ञा मायावादिनोऽपरिशुद्ध मुपहितं जीव मिवामनन्ति। तस्मै तुभ्यं नम इति वाक्यशेषः। व्यक्तिलक्षणमेव पुरुषत्वं न तु जीवलक्षण मित्यस्मिन्नर्थे इवशब्दः। ''उत्पत्ति र्हरिरूपाणां व्यक्तिरेव न संशयः। उत्पत्तिरेव जीवानां देहोत्पत्ति रुदीर्यते। (तत्त्वनिर्णये) इति वचनात्। ''जडमाया न तस्याऽस्ति शरीरत्वेन कुत्रचित्। सृष्ट्वा तथा शरीराणि तत्स्थितेः पुरुषः स्मृतः''॥ मायायामशरीराया मपि विष्णुः स्वयं स्थितः। तस्मात्प्राकृत इत्येवाजीववत्तं वदन्ति हि॥ अस्पृष्टत्वेऽपि तद्धर्मै स्तद्गत्वादेव कारणात्'' (तत्त्वविवेके) इति वचनात् नेन्द्रजाल लक्षणा मायाऽत्रोच्यते। किन्तु जडा जगदुपादानभूता प्रकृतिरेव॥ २६॥

ऋत्विगादिवैदिकैः श्रीनारायण एव स्तुत्यो वन्द्यश्चेति भावेन तत्प्रतिपत्तिप्रकारं वक्ति - **तत्त्वं न ते** इति। अनञ्जन ! पुण्यपापलेपरहित ! ऋत्विजो वयं ते तव तत्त्वं न विदामः। कस्मात् ? अज्ञानम्, अत्राहुः - रुद्रशापादिति। यज्ञादिकर्मण्यवग्रहधियो दुराग्रहबुद्धित्वादित्यर्थः। नन्वेवं तर्हि एतस्मिन् कर्मणि भवत आविर्भावः कथं घटत इति शङ्का मा भूदित्याह - धर्मेति। सदाशिवस्य प्रसन्नदृष्ट्यवलोकनोत्फुल्लतत्त्वज्ञानैरस्माभिः क्रियमाणमिदमध्वराख्यं कर्म ज्ञातं त्वत्पूजात्वेनेति शेषः। कथमेतदवगतमित्यत उक्तं -

1 A पा°

धर्मेति। भक्त्यादिधर्माणामुपलक्षकत्वादित्यर्थः। किमत्र प्रमाणमित्यतः तद्ध्वनयति - त्रिवृदिति। त्रीन् प्रत्यक्षानुमानागमानावृणोतीति तदानीन्तनैः पुरुषैः दृश्यमानत्वात् प्रत्यक्षं प्रथमप्रमाणं, द्वितीयं हरेराविर्भावलिङ्गं, तृतीयम् "एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः। यद्भक्त्या पुण्डरीकाक्षं स्तवै रर्चेन्नरः सदा।" (भारते) इत्यागमम्। प्रत्यक्षस्य तु लोकविडम्बनार्थत्वोपपत्तेः लिङ्गस्य च विनोददर्शनाय सम्भवादागमस्य च स्तुतिरूपत्वेनार्थवादत्वोपपत्तेः। अतो निर्णायकाभावात् सिकतावनिगृहनिर्माणवत्सर्वं शिथिलमभूदिति तत्राह- यथार्थमिति। त्वं यस्याध्वरस्य भागस्वीकारार्थमदोऽधिदैवमुत्तमदैवं ब्रह्मादिदेवताशरीरे आस्था इति यदत इदं निर्णायकं प्रमाणमित्यर्थः। "भुङ्क्ते यज्ञभुजो देवानाविश्य पुरुषोत्तमः" (तत्त्व विवेके) इति वचनं चास्मिन्नर्थे मानम्। यद्वा कुतो न विदाम इति तत्राह - धर्मेति। धर्ममदृष्टमुपलक्षयतीति तथोक्तं ज्ञानिभिरिदमध्वराख्यं कर्म यदर्थं यस्त्वमर्थो विषयो यस्य तत्तथा ज्ञातं, कुतः ? कर्मणः त्वद्विषयत्वमत्राह- अधिदैवमिति। सत्त्वमधिदैवमास्था "अहं हि सर्वयज्ञानां भोक्ता" (भ.गी. 9-24) इति यदतस्त्वद्विषयो यज्ञ इति तद्यजनमस्माभिरिन्द्रादिविषयत्वेन ज्ञातम्, अतो न विदाम इति॥ २७॥

हे शरणद! मोक्षलक्षणगृहप्रद! अशरणे रक्षितृपुरुषरहिते उरवो बाहवः "अविद्यास्मितारागद्वेषाऽभिनिवेशाः पञ्चक्लेशाः" (पातञ्जलयोगसूत्रम्) तैर्दुर्गैरन्तकाख्येनोग्रेण व्यालेनाऽजगरेण सर्पेणाऽऽकृष्टे द्वन्द्वानि सुखदुःखान्येव श्वभ्राणि गर्तानि यस्मिन् सः तथा तस्मिन्। खलाः पिशुनाः त एव मृगाः तैः भयं यस्मिंस्तथा तस्मिन्। शोको मनःपीडा स एव वनवह्निः यस्मिन्नेवंविधे। उत्पत्त्यध्वनि जननमरणादिमार्गे। अज्ञसार्थः अज्ञानिपरिषत् तव शस्तौ पादौ कदा याति न कदापीति मन्यामहे। कुत इति तत्राह - कामेति। कामेनोपहतत्वात्, कामोपहतत्वं स्फुटयति विषयेति। विषयमृगतृष्णा शब्दादिविषयाख्यमरीचिकाजालम् उद्दिश्यात्मा यत्नः येहं गृहम् एतद्द्वयमुरुभारो यस्य स तथा। "आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि। यत्नेऽर्केऽग्नौ मतौ वाते" (वैज.को. 6-1-,7) इति यादवः। यद्वा विषयमृगतृष्णैवाऽऽत्मगेहं स्वनिवासस्थानं तदेवोरुभारो यस्य स तथा॥ २८॥ 2

रुद्रस्तुत्या सर्वलोकस्य हरेः सर्वोत्तमत्वे संशयमुन्मूलयति - तवेति। हे वरद! तवाशिषा कारणेनानभिध्ये अभिध्यानाऽविषये आशीरर्थं ध्यातुमयोग्ये। असक्तैर्निस्सङ्गैर्मुनिभिः ब्रह्मादिज्ञानिभिरप्यादरेणार्हणीये पूज्ये वराङ्घ्रौ वरणीयगुणे श्रीपादे यदि रचितधियं कृतबुद्धिं मां विद्धि मां जानासि, लडर्थे लोट्, कथम्भूतं मां लोकापविद्धं लोकबाह्यम्। अनेन रुद्रस्य ज्ञान्युत्तमत्वं द्योतयति। तर्हि जगति त्वत्परानुग्रहेण न गणये यं कञ्चन पुरुषं न प्रार्थय इत्यर्थः। फलेच्छया ध्यानाभावेऽपि निष्कामत्वेन ध्यानादन्याशिषोऽपि भवन्तीत्यस्मिन्नर्थे चशब्दः। हिशब्देन 'गतिमण्वीं प्रयुङ्क्ष्व' इति वाक्यं सूचयति॥ २९॥

ब्रह्मादीनामपि श्रीनारायणतत्त्वज्ञानं दुर्लभं किमुतास्माकं ततो रुद्रे द्वेषस्तत्तत्त्वाज्ञानहेतुक इति भावं ध्वनयन् भृगुस्तं भगवन्तं

स्तौति - **यन्मायये‌ति** श्लोकद्वयेन। गहनया गम्भीरया यस्य तव माययाऽपहृत आत्मबोधः स्वरूपज्ञानं येषां ते तथा, अत एव तमसि अविद्यायां स्वपन्तः शयानाः, ब्रह्मा आदिर्येषां देवानां ते ब्रह्मादयः तनुभृतः शरीरिणः। अनेन देहवत एव ज्ञानग्रहणयोग्यतां सूचयति। आत्मसु जीवेषु प्रेरकत्वेनाश्रितं स्थितं तव तत्त्वमधुनापीत्यनेनोत्पाद्य दीर्घकालगतिं सूचयति न विदन्ति सोऽयं प्रणतानामात्मनां जीवानां बन्धुर्भवान् प्रसीदत्वित्यन्वयः। यद्वा ब्रह्मा आदिः कारणं येषां ते ब्रह्मादयस्तनुभृतो जीवा आत्मानं हृदयमाश्रितम् अन्यत्समम्॥ ३०॥

**ब्रह्मोवाच**[1]

**नैतत्स्वरूपं भवतोऽसौ पदार्थभेदग्रहैः[2] पुरुषो यावदीक्षेत्।**
**ज्ञानस्य चार्थस्य गुणस्य चाश्रयो[3] मायामया द्व्यतिरिक्तोऽसतस्त्वम्[4]॥ ३१॥**

**इन्द्र उवाच**

**इदमप्[5]य्च्युत विश्वभावनं वपुरानन्दकरं मनोदृशाम्।**
**सुरविद्विट्क्षपणै रुदायुधै र्भुजदण्डै रुपपन्न मष्टभिः॥ ३२॥**

**ऋत्विक्पत्न्य[6] ऊचुः**

**यज्ञोऽयं तव यजनाय केन सृष्टो विध्वस्तः पशुपतिनाऽद्य दक्षकोपात्।**
**तं न स्त्वं शवशयनाभशान्तमेधं यज्ञात्म न्[7]लिनरुचा दृशा पुनीहि॥ ३३॥**

**ऋषयः ऊचुः**

**अनन्वितं[8] तव भगवन् विचेष्टितं यदात्मना चरसि हि कर्म नाऽज्यसे।**
**विभूतये[9] यत उपसेदु[10] रीश्वरीं न मन्यते स्वय मनुवर्तिनीं[11] भवान्॥ ३४॥**

**सिद्धा ऊचुः**

**अयं ते[12] कथामृष्टपीयूषनद्यां मनोवारणः क्लेशदावाग्निदग्धः।**
**तृषार्तोऽवगाढो न सस्मार दावं न निष्क्रामति ब्रह्मसम्पन्नवन्नः[13]॥ ३५॥**

---

1 M, Ma, Ms omit ब्रह्मोवाच 2. M, Ma, Ms °हः 3. M, Ma, Ms °यात् 4. A, B, G, J, M, Ma, Ms, T यत°; I मत° 5. M, Ma, Ms °मच्युत 6. A, B, G, I, J, T, V, W omit ऋत्विक्; M, Ma, Ms यज्ञ° 7. M, Ma, °न्नखिल° 8. A, B, G, I, J, M, Ma, T ते 9. M, Ma, Ms °यो 10. M, Ma, Ms °रान् 11. A, B, G, I, J, T वर्तनीं 12. A, B, G, I, J, T त्वत् 13. M, Ma, Ms °वान्नः

**श्रीध.** *ब्रह्मादयो न विदन्तीति भृगुणोक्ते तदसहमानो ब्रह्मा तत्वज्ञान माविष्कुर्वन्निवाह - **नैतदिति**। पदार्थभेदग्राहकै रिन्द्रियैः गुणस्येन्द्रियस्य, यद्वा ज्ञानार्थयोः कारणस्य सत्त्वादेः [1-]अंत एवासतो मायामयाद्व्यतिरिक्तो भवान्[-1]॥ ३१ ॥

इन्द्रस्त्विन्द्रियविषयः सर्वोऽपि मिथ्येति। ब्रह्मणोक्त मसहमान आह - **इदमिति**। इदं तव वपुरप्युपपन्नमेव न तु प्रपञ्चवद-निर्वचनीयतया अनुपपन्नम्। सुराणां विद्विषः क्षपयन्तीति तथा तै र्भुजदण्डै रुपलक्षितम्॥ ३२ ॥

ऋत्विजां पत्न्यः स्तुवन्ति - **यज्ञ** इति। यज्ञोऽयं तव यजनाय त्वां यष्टुं केन ब्रह्मणा पूर्वं सृष्टः। हे यज्ञात्मन्! [2]त्वं [3]तं नः [4]अस्माकं यज्ञं नलिनकान्त्या दृशा नेत्रेण पुनीहि पवित्रं कुरु। कथम्भूतं यज्ञं? शवाः शेरते यस्मिन्निति शवशयनं [5]श्मशानं तद्वदाभा प्रतीतिः यस्य स चाऽसौ शान्तमेधश्च उपरतोत्सवः। मेधशब्देन पशुहिंसाद्युत्सवो लक्ष्यते। शव मुदकं तत्र शेते इति तथा। पद्मं तन्नाभेरिति सम्बोधनं वा॥ ३३ ॥

ऋषयस्तु कर्माण्यनुतिष्ठन्तः तत्पुण्येन तत्फलेन च युज्यन्ते, भगवति तु तदभाव मालक्ष्य विस्मिताः स्तुवन्ति - **अनन्वित मिति**। अनन्वित मघटमानं यद्यस्मात् आत्मना स्वयं कर्माचरसि अनुतिष्ठसि न त्वज्यसे [6]न लिप्यसे यत श्चान्ये विभूतये सम्पदे ईश्वरीं लक्ष्मीम् उपसेदु र्भेजुः। यद्वा यत इति सार्वविभक्तिक स्तसिः यामित्यर्थः। भवांस्तुस्वयमेवानुवर्तमानां तां न मन्यते नाऽद्रियते॥ ३४ ॥

सिद्धास्तु तत्कथासुख ऽभिनन्दन्तः स्तुवन्ति **अयमिति**। अयं नो मनोवारणः [7]मनोगजः त्वत्कथैव मृष्टं शुद्धं पीयूषं तन्मयी या नदी तस्या मवगाढः प्रविष्टः दावाग्नितुल्यं संसारतापं न [8]स्मरति स्म न च ततो निर्गच्छति ब्रह्मसम्पन्नवत् ब्रह्मैक्यं प्राप्त इव॥ ३५ ॥

**वीर०** अथ ब्रह्मा "नात्मन् श्रितं तव विदन्त्यधुनाऽपि तत्त्वम्" (भाग. 4-7-30) इति भगवत्तत्त्वस्यावेद्यत्वं यद्भृगुणोक्तं तदेव प्रपञ्चयन्नाह - **नैतदिति**। भवत एतद्वाङ्मनसागोचर स्वरूपं पुरुषो जीवः पदार्थानां भेदं स्वासाधारणं धर्मं गृह्णन्तीति पदार्थभेदग्रहाः पदार्थभेदो गृह्यत एभिरिति वा पदार्थभेदग्रहाः रूपस्पर्शादिग्राहकैः चक्षुरादिभि रिन्द्रियैरित्यर्थः। नेक्षेत् न साक्षात्कुर्यात्, कुतः? यावत् यावता यत इत्यर्थः। असौ पुरुषः ज्ञानस्य ज्ञायतेऽनेनेति ज्ञानं करणे ल्युट् तस्य इन्द्रियवर्गस्य अर्थस्य शब्दादे र्विषयस्य गुणस्य च ज्ञानार्थयोः कारणस्य सत्त्वादिगुणस्य च आश्रयः त्वन्तु मायामयात् मायापरिणामरूपात् असतो देहादेः तत्संसृष्टाच्च जीवात् व्यतिरिक्तोऽत्यन्तविलक्षणः प्राकृतं हि चक्षुरादीन्द्रियं [9]प्राकृतमेव गृह्णीयात् न त्वप्राकृतं त्वत्स्वरूपमिति भावः॥ ३१ ॥

---

* V omits the commentary onverse 31 1–1. B omits 2. J, V, Va omit त्वं 3. B omits तं 4. B, J, V, Va omit अस्माकं 5. Va omit श्मशानं 6. A,J. V, Va omit न 7. A. B,J. V, Va omit मनोवायाः 8. A, B,J, V. Va add सं 9. A.T" यादेर्विषयस्यं प्रां

इन्द्रस्तु भगवदवतारस्य धर्मसंस्थापनार्थत्व मनुसन्दधदाह - **इदमिति**। हे अच्युत! इदं तव वपुः शरीरं विश्वभावनं विश्वं भावयति सुखिनं[1] करोतीति विश्वभावनम्। अत एव मनोदृशां मनसां दृशाञ्च आनन्दं करोतीत्यानन्दकरम्। अस्य रूपस्य धर्मसंस्थापनार्थत्वात् तस्य चाधर्मविरतिपूर्वकत्वा दधार्मिकविरत्युपयुक्तत्वं विग्रहस्या ह। सुरविद्विषः सुराणां विद्विषः असुराः तान् क्षपयन्तीति तैः उद्धृतान्यायुधानि यैस्तै रष्टभि र्भुजदण्डैः दण्डवद्दीर्घैः भुजै रुपपन्नं युक्तम्॥ ३२॥

ऋत्विक्पत्न्यस्तु[2] भवदाराधनत्वेनोपक्रान्तं विच्छिन्न मध्वरं कृपादृष्ट्या पवित्रीकुर्वित्याहुः - **यज्ञ** इति। अयं यज्ञः तव यजनाय आराधनाय केन ब्रह्मणा पूर्वं सृष्टः दक्षेण वा आरब्धः स चेदानीं पशुपतिना रुद्रेण दक्षे कोपात् विध्वस्तः, हे यज्ञात्मन्! यज्ञः आत्मा मूर्ति र्यस्य तस्य सम्बुद्धिः। नोऽस्माकं यज्ञं नलिनकान्त्या दृशा नेत्रेण पुनीहि पवित्रं कुरु। कथम्भूतं यज्ञं? शवाः शेरते यस्मिन्निति शवशयनं श्मशानं तद्वदाभा प्रतीति र्यस्य सः, मेधशब्देन पशुहिंसाद्युत्सवो लक्ष्यते शान्तः मेधः यस्य सः उपरतोत्सवः शवशयनाभश्चाऽसौ शान्तमेधश्चेति कर्मधारयः॥ ३३॥

ऋषयस्तु यत्परमात्मनोऽसाधारण मपहतपाप्मत्वं देवमनुष्यादिपुण्यापुण्य सजातीय चेष्टितत्वेऽपि तत्फलाननुभवितृत्वरूपं तदनुसन्दधानाः परिपूर्णत्वेन स्तुवन्ति - **अनन्वितमिति**। हे भगवन्! ते तव चेष्टित मिद मनन्वित मघटमानं विस्मयनीय मित्यर्थः। किं तत्राह - आत्मना स्वयं कर्म पुण्यापुण्य सजातीयं कर्म चरसि अनुतिष्ठसि नाऽज्यसे[3] तत्कृतेन[4] तत्फलेन न लिप्यसे इत्यर्थः। इद मप्यन्य दनन्वितमित्याह[5] - यत इति। चतुर्थ्यर्थे तसिः, तस्य सार्वविभक्तिकत्वात् यस्यै विभूतये यद्विभूत्यर्थम् ईश्वरीं लक्ष्मीम् उपसेदुः भेजुः ब्रह्मादय इति शेषः। द्वितीयार्थे वा तसिः, विभूतये सम्पदे या मीश्वरीं भेजुः तां स्वय मनुवर्तिनीं स्वय मेवानुवर्तमानां भवान्न मन्यते नाऽद्रियते उपेक्षत इत्यर्थः। अनेन परिपूर्णत्व मुक्तम्॥ ३४॥

सिद्धास्तु तत्कथासुखमभिनन्दन्तः स्तुवन्ति - **अयमिति**। अयं नोऽस्माकं मनो वारणः मनोगजः क्लेशा आध्यात्मिकादय स्तापाः त एव दावाग्नयः तै र्दग्धः अत एव तृषा शब्दादिविषययाऽऽसक्त्या आर्तः पीडितः ते तव त्वत्कथैव मृष्टं शुद्धं पीयूषं तन्मयी या नदी तस्या मवगाढः प्रविष्टो दानं दावग्नितुल्यसांसारिकाध्यात्मिकादितापं न सस्मार न स्मरति। न च ततो निर्गच्छति। ब्रह्मसम्पन्नवत् मुक्तवत् सुखित एवाऽवतिष्ठत इत्यर्थः॥ ३५॥

**विज०** सर्वस्य हरेः तत्त्वविषयाज्ञानमुक्त्वेदानीं तत्सत्त्व प्रमाणाभावेन शून्यप्रायं तत्स्या दित्यतोऽव्यक्तादिविशेषज्ञानि प्रत्यक्षं

---

1. W° तं  2. T. भगवं  3. W omits तत्कृतेन  4. A.B,J omits तत्  5. A,B,J° हुः

प्रमाणमिति भावेनाह - **नैतदिति**। एतदव्यक्तादि भवतः स्वरूपं सच्चिदानन्दात्मकं न भवति इह जगति यो वैराग्यभक्त्यादिसाधन सामग्रीमान् असौ पदार्थभेदग्रहोऽव्यक्तादिपदार्थविशेषज्ञानी ब्रह्माद्यन्यतमः पुरुषो यावत्पदार्थजातं तावत् पृथगीक्षेत् पश्यतीति यस्मात्तस्मादित्यर्थः। ''भेदोऽन्तरं विशेषश्च सूक्ष्मेक्ष्यं चाऽभिधीयते'' (तत्वनिर्णये) इति वचनात् अत्र भेदो विशेषः। नन्वव्यक्तादे र्व्यतिरिक्तं चेत् तत्तद्दर्शनं प्रमाणं स्यात् तदेव कुत इति तत्राह - ज्ञानस्येति। ज्ञानस्येत्युपलक्षणं जातावेकवचनम्। ज्ञानेन्द्रियाणां कर्मेन्द्रियाणा मर्थस्य शब्दादितन्मात्राणां च आकाशादिभूतानां च गुणस्य सत्त्वादेश्च चशब्दात्तत्कार्ययोर्महदङ्कारयोश्चाश्रयान्मायामयात् प्रकृतिविकारात् प्रपञ्चा द्व्यतिरिक्तोऽत्यन्तविलक्षणः केवलचिदानन्दात्मकनित्यदेह स्त्वमिति यतोऽत इति तदुक्तं ''अव्यक्तादिपदार्थानां विशेषज्ञानिनाऽपि तु। न देहो वैष्णवो ज्ञेय आनन्दः प्राकृतो न हि'' (तन्त्रसारे) इति। अव्यक्तादिपदार्थानां विशेषज्ञानिना वैष्णवो देहो व्यक्तादिपदार्थानां सम्बन्धेन निर्मितो न ज्ञेयः। तत्र हेतुमाह - आनन्द इति। यद्वाऽसौ पदार्थभेदग्रहः पुरुषो यावदीक्षेत् तावदेत दव्यक्तादि भवतः स्वरूपं न भवतीति प्रत्येति ज्ञानिदर्शनस्य यथार्थत्वनियमात्। अनेनाज्ञानिपक्ष एवाव्यक्तादिस्वरूपं न ज्ञानिपक्ष इत्युक्तम्, अन्यत्समम्। असत इति पाठे अमाङ्गल्यादित्यर्थः॥ ३१॥

अनन्तरातीते श्लोके प्रत्यक्ष मतत् भवतः स्वरूपं न भवती त्यन्यथाप्रतीतिमिन्द्रस्तुतिव्याजेन निरस्याति - **इदमिति**। अच्युत! हेयोपादेयरहित! हरे! इदं दृश्यमानं तव वपु र्विश्वभावनं जगदुत्पादकं ब्रह्मैवेत्यन्वयः। वपुश्शब्द स्यार्थान्तर माह आनन्दकर मिति। ''शुभाकारे तनौ वपुः'' (वैज. को. 6-3-30) इत्यभिधानम्। यावद्गुणानुपसंहृत्योपास्ते तदनुसारिफलं च स्वस्याऽपि स्या दित्याशयेनाह - सुरविद्विडिति। सुरविद्विषोऽसुरा स्तान् क्षपयन्तीति सुरविद्विट्क्षपणास्तैः॥ ३२॥

अन्तरायितस्य कर्मणः पूर्वफलत्वसिद्धिः श्रीनारायणकटाक्षेणैवेत्यभिप्रायेण पत्न्यः स्तुवन्तीत्याह - **यज्ञोऽयमिति**। शवं जलं तस्मिन् शेत इति शवशयः ''अधिकरणे शेतेः'' (अष्टा. 3-2-15) इति कर्तर्यच् प्रत्ययः, कमलं नाभौ यस्य स तथोक्तः तस्य सम्बुद्धिः शवशयनाभ! कमल नाभ! शान्तमेध मुपरतयज्ञं एकपदपक्षे शवाः प्रेताः शेरतेऽस्मिन्निति शवशयः ''पुंसि संज्ञायां घः प्रायेण'' (अष्टा. 3-3-118) इत्यधिकरणे घः प्रत्ययः, श्मशानं तस्य आभेव आभा यस्य सः श्मशानकान्तिश्चासौ उपरतश्चासौ अध्वरश्चेति स तथोक्त स्तं, पुनीहि शुद्धं कृत्वा पूर्णफलं कुर्वित्यर्थः॥ ३३॥

इतोऽपीदं रूप मुपनिषदेकवेद्यं न मायामय मिति भावेन ऋषयः स्तुवन्तीत्याह - **अनन्वितमिति**। भगवन्! तव विचेष्टित मनन्वितं लोककर्मविलक्षणं कुतः? त्वमात्मनाऽन्यसहाय मन्तरेण यत्कर्म चरसि करोषि तेन कर्मणा नाऽज्यसे न लिप्यसे हि यस्मात्तस्मात् ''स यत्तत्र किञ्चित्पश्यत्यनन्वागत स्तेन भवत्यसङ्गो ह्ययं पुरुषः'' (बृह.उ. 4-3-16) इति श्रुतेः। असङ्गित्वं तवैवोचित

मित्याहुः - विभूतय इति। यतो यस्याः श्रियः प्रसादाद्विभूतयः ईश्वरान् ब्रह्मादी नुपसेदुः प्रापुः। तां श्रियं स्वय मनुवर्तिनीं स्वत एव निषेवमाणां भवान्न मन्यते। "मन ज्ञान" इति धातोः अप्राप्तफलार्थं सेवत इति न जानाति, किन्तु ऋतुधर्मवज्जलस्यन्दनवत् भक्तिकरण मस्याः स्वभाव इत्येव जानातीत्यर्थः॥ ३४॥

ते तव कथामृष्टपीयूषनद्या मवगाढो मग्नोऽयं मनोवारणः संसाराख्यं दावं न सस्मार। स्मरणाभावे निमित्त माह - ब्रह्मेति। ब्रह्मसम्पन्नस्याऽपि निर्गमने स्मृतिः सम्भवतीत्यत उक्तं - निष्क्रामतीति। कथानद्यवगाहे हेतु माह - क्लेशेत्यादिना। अनेनाऽप्यस्य रूपस्य ब्रह्मत्वं निरणायीति ज्ञायते॥ ३५॥

**यजमान्युवाच**[1]

**स्वागतं ते प्रसीदेश तुभ्यं नमः श्रीनिवास[2] श्रिया कान्तया त्राहि नः।**
**त्वामृतेऽधीश नाङ्गैर्मखः शोभते शीर्षहीनः कबन्धो यथा पूरुषः॥ ३६॥**

**लोकपाला ऊचुः**

**दृष्टः किं नो दृग्भि रसद्ग्रहै स्त्वं प्रत्यग्[3]दृष्ट्या दृश्यते येन दृश्यम्[4]।**
**माया ह्येषा भवदीया हि भूमन् यस्त्वं षष्ठः पञ्चभिर्भासि भूतैः॥ ३७॥**

**योगेश्वरा ऊचुः**

**प्रेयान्न[5] तेऽन्योऽस्त्यमुत स्त्वयि प्रभो विश्वात्मनीक्षेन्न पृथग्य आत्मनः।**
**अथा[6]ऽपि भृत्ये[7]शतयोपधावता मनन्यवृत्त्याऽनुगृहाण वत्सल॥ ३८॥**

**जगदुद्भवस्थितिलयेषु[8] दैवतो बहु[9]भिद्यमानगुणयाऽऽत्ममायया।**
**रचितात्मभेदमतये स्वसंस्थया विनिवर्तित[10] भ्रमगुणात्मने नमः॥ ३९॥**

**शब्दब्रह्मोवाच**[11]

**नमस्ते[12] श्रितसत्त्वाय धर्मादीनां[13] प्रसूतये।**
**निर्गुणाय च यत्काष्ठां नाऽहं[14] वेदाऽपरे[15]ऽपि वा॥ ४०॥**

1. Ms प्रसूतिः 2. M,Ma सः 3. A,B,G,I,J,T द्रष्टा 4. M, Ma, Ms विश्वम् 5. M, Ma, Ms मृतप्रिय प्र° 6. W त० 7. A,B,G,I,J,T,V भक्त्ये 8. M, Ma, Ms लीलया 9. M, Ma, Ms प्रविभज्य० 10. M, Ma, Ms ह्यति 11. A,B,G,I,J,T, M, Ma, Ms शब्द 12. M, Ma, Ms °ऽमिततत्त्वाय 13. A,B,G,I,J,T, M, Ma, Ms च 14. V वेदपरे 15. A,B,G,I,J,T °ऽपि च, कुतः

**श्रीध०** यजमानी दक्षपत्नी स्तौति - **स्वागत** मिति। ते स्वागतं भद्र मागमनं जातम्। हे अधीश ! यथा शिरसा हीनः कबन्धमात्रः पुरुषोऽङ्गैः करचरणाद्यवयवैः शोभमानै रपि न शोभते, तथा त्वां विना केवलं प्रयाजादि[1] यागाङ्गैः मखो न शोभतेऽतो नः[2] अस्मान्[3] श्रिया सह त्रायस्व त्वद्भक्तान् कुर्वित्यर्थः॥ ३६॥

लोकपाला स्त्वीश्वरत्वाभिमाना[4]रूढा भगवत स्तत्त्व मपश्यन्त ऊचुः - **दृष्ट** इति। दृष्टः किं न दृष्ट इत्यर्थः। कुतः ? असद्गहैः, पुंस्त्व माविष्टलिङ्गत्वात्। असत्प्रकाश रूपाभिः दृग्भिः इन्द्रियैः। अयं भावः - शुद्धचित्तानां त्वं शुद्धसत्त्वमूर्ति र्भासि। अस्माकं तु बहिर्मुखेन्द्रियाणां पञ्चभूतोपलक्षितो जीवविशेष इवावभासि[5]। अत स्त्व मस्मदिन्द्रियगोचरो न भवसि। धिगस्मज्जीवित मिति॥ ३७॥

योगेश्वरा स्तु[6] तदभेदेन भजता मनुग्रहभाक्त्वं मन्यमानाः स्वामिभृत्यभावेन भजता मप्यनुग्रहं प्रार्थयमानाः स्तुवन्ति - **प्रेयानिति** द्वाभ्याम्। विश्वात्मनि परब्रह्मणि त्वयि य आत्मनः पृथक्त्वं नेक्षेत्[7] अमुतोऽमुष्मा दन्यस्ते प्रेष्ठो नाऽस्ति। आत्मनो जीवान् पृथङ्नेक्षेतेति वा। हे वत्सल ! भक्तजन[8]प्रिय ! अनन्यवृत्त्याऽव्यभिचारिण्या भक्त्या भजतोऽनुगृहाणेत्यर्थः॥ ३८॥

अव्यभिचारिणी भक्तिः कथं स्यात् भजनीयानां बहुत्वा दित्याशङ्क्याहुः - **जगदिति**। जगत उद्भवादिषु निमित्तेषु दैवतो जीवादृष्टात् बहुधा भिद्यमानागुणा यस्या स्तया स्वमायया आत्मनि स्वरूपे रचिता ब्रह्मादिभेदमतिः येन तस्मै स्वसंस्थया केवलस्वरूपावस्थानेन च विनिवर्तिनो भेदभ्रमो गुणाश्च तद्धेतव आत्मनि येन तस्मै॥ ३९॥

शब्दब्रह्म स्तौति - **नमस्ते** इति। श्रितं स्वीकृतं सत्त्वं येनाऽतो भक्तानां[9] धर्मादिफल प्रसवित्रे। ननु सत्त्वगुणत्वं निर्गुणत्वं[10] च एकस्य[11] कथम् ? इत्याशङ्क्याह। यस्य काष्ठां तत्त्वं नाऽहं वेद्मि अपरे रुद्रादयश्च[12] न विदु स्तस्मै नमः[13]॥ ४०॥

**वीर०** दक्षपत्नी यजमानी स्तौति - **स्वागत** मिति। हे ईश ! ते तव स्वागतं भद्रमागमनं जातं हे श्रीनिवास ! प्रसीद ! प्रसन्नो भव ! अस्माक मिति शेषः। ते तुभ्यं नमः। हे अधीश ! यथा शिरसा हीनः कबन्धमात्रः पुरुषः अङ्गैः करचरणाद्यवयवैः शोभनै रपि न शोभते तथा त्वां विना केवलं प्रयाजाद्यङ्गै र्मखो न शोभते। अतो नः श्रिया कान्तया सह त्रायस्व पालयेत्यर्थः॥ ३६॥

लोकपालास्तु भगवतः सौलभ्यं तन्मायावैभवम् अनुसन्दधानाः स्तुवन्ति - **दृष्ट** इति। त्वं वाङ्मनसा गोचरस्वरूपस्वभाव

1. B.J.Va घङ्गैः मः, V° दिभिरङ्गैः म° 2. A omits नः 3. B,J,V, Va omits अस्मान् 4. V°राभि 5. V इवाभासि 6. A.B.J.Va omit तु
7. A.B.J.Va नेक्षेत 8. V omits जन, 9. A,B,J,V, Va omits भक्तानां 10. A omits निर्गुणत्वं 11. V omits एकस्य 12. A,J,V, Va ब्रह्मादयश्च
13. A.B.J.Va omits नमः

स्त्वं नः अस्माकं दृग्भिः मांसचक्षुर्भिः किं दृष्टः कथं दृष्ट इत्यर्थः। स्वयं वाङ्मनसाऽवेद्य स्वरूपस्वभावत्वे सति अखिलजननयनाविषय-तागतत्वरूपसौलभ्येनैव दृष्ट इत्यर्थः। नो इति निपातो वा नञ्पर्यायः दृग्भिः नो दृष्टः किं दृष्ट एवेत्यर्थः। सौलभ्य मेवाऽत्र कारणमिति भावः। यद्वा एष दृगविषयो[1]ऽपि दृग्विषयो जात इति एषा भवदीया माया भवदीयो विचित्रः सङ्कल्प इत्यर्थः। माया शब्दस्य विचित्रसर्गकारिशक्तिविशेषपरत्वे पूर्वोक्त एवान्वयः साधुः। इदमपि तव मायाकार्य मेवेत्याह असद्ग्रहैः। असति देहे तदनुबन्धिनि च ग्रहः आग्रहः अहम्ममताऽभिमानः येषां तै र्देहात्माभिमानिभि रित्यर्थः। दृश्यं शरीरं येन कारणेन प्रत्यग्दृष्ट्या दृश्यते प्रत्यक्त्वेन दृश्यते आत्मत्वेना[2]ऽभिमन्यत इत्यर्थः। एषा दृश्यस्य प्रत्यक्त्वेन दृष्टिः भवदीया माया विचित्रा शक्ति रित्यर्थः। तत्कारणभूता भवदीया माये ति भावः। हि शब्दः श्रौतीं स्मार्तीं च प्रसिद्धिं द्योतयति। ''अस्मान् मायी सृजते विश्वमेत त्तस्मिं श्चान्यो मायया सन्निरुद्धः। (श्वेता.उ. 4-9) नाऽसदासी न्नो सदासीत्तदानीन्तम आसीत्, तमसा गूढ मग्रे प्रकेतम्'' (ऋक्सं. 10-129-1) (तैत्ति. ब्रा. 2-8-9) ''दैवी ह्येषा गुणमयी मम माया दुरत्यया (भ.गी. 7-14) इत्यादि श्रुतिः स्मृतिश्चाऽत्रानुसन्धेया। एतेन देहात्मभ्रमो भगवन्मायामूल एवे त्युक्तं भवति। एवं जीवेशैक्यभ्रमोऽपि त्वन्मायामूल एवेत्याहुः। हे भूमन्! अनेन जीववैलक्षण्यं सूचितं जीवस्याणुस्वरूपत्वात् यस्त्वं प्रकृतिपुरुषविलक्षण स्त्वं पञ्चभि भूतैः पृथिव्यादिभिः सहित इति शेषः। अत्र पञ्चभिः भूतै रित्यनेन तत्परिणामरूपं शरीरं लक्ष्यते, तद्विशिष्टः षष्ठोऽचिद्विलक्षणो जीवः, पञ्चभूतप्रस्तावात् षष्ठ इत्युक्तिः। भासि जीवत्वेन प्रतीयसे, एषाऽपि प्रतीतिः त्वन्मायैव मायाकार्यभूतैवेत्यर्थः। हि शब्दः स्वतन्त्रात्मभ्रमवत् पुरुषेषु प्रसिद्धिद्योतकः॥ ३७॥

लोकपालै भगवतो रूपसौलभ्याद्य[3]नुसन्धानपूर्वकं मायावैभवरूप जीवेशैक्य प्रतीते भ्रमत्वे चोक्ते योगीश्वराः परमपुरुषा त्स्वतन्त्रभेदं वारयन्तः तद्भेदस्य पारतन्त्र्यं तस्य च शरीरशरीरिभाव - शेषशेषिभावादिनिबन्धनत्वञ्च आविष्कुर्वन्तो वात्सल्यगुणविशिष्टत्वेन स्तुवन्ति - **प्रेयानिति**। हे प्रभो! विश्वात्मनि विश्वस्य चिदचिदात्मक प्रपञ्चस्यान्तःप्रविश्य स्वय मपरित्यक्तस्वरूप स्वभावत्वेन प्रशासनेन धारके, अनेन विश्वस्य शरीरत्व मुक्तमिति जीवानां परतन्त्रभेदोऽभ्युपगत इति वेदितव्यम्। विश्वात्मनि त्वयि विश्वस्मा द्विलक्षणे त्वयि यः पुमान् आत्मनः स्वस्य पृथक्त्वं पृथक्सिद्धत्वं स्वस्य अब्रह्मात्मकत्वमित्यर्थः। नेक्षेत् न पश्येत् स्वात्मानं परमात्मशरीरत्वे[4]न तदपृथक्सिद्धत्वेन ब्रह्मात्मकत्वेन अनुपश्येदित्यर्थः। अमुतः अमुष्मात् तत्त्वदर्शिनः अन्य स्ते तव प्रेयान् प्रीतिविषयो नाऽस्ति। तथैव हि भगवता ''प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः'' (भ.गी. 7-17) इति गीत मिति भावः। अत्र पृथक्त्वं नेक्षे दित्यनेन तादात्म्येन दर्शनं विहित मित्यर्थवर्णनं त्वयुक्तम्। विश्वात्मनि भृत्येशतयेति

1. A.B.T अदृग्वि° 2. A.B.T तत्त्वत्वेन 3. A.B.T °भ्यानु 4. A.B.T °नाऽपृ°

पूर्वोत्तरव्याघातात्। विश्वतादात्म्यं तु सर्वसमयविरुद्धं जडाजडयो रप्यैक्यप्रसङ्गात्। अतो विश्वात्मनीति व्यतिरेकनिर्देश एव। अत आत्मनः पृथक्सिद्धत्वेनैव दर्शनं प्रतिषिध्यते। अनेन परतन्त्र भेद उक्तः। शरीरात्मभाववचनेन तदन्तर्भूताः शेषशेषिभावादयोऽप्यर्था दुक्ताः। एवं शरीरत्वेन शेषत्वेन चात्मान मनुसन्दधानो मत्प्रिय इति त्वयैवोक्तमिति सः त्वयाऽनुगृह्यत इति सिद्धमेव। किन्तु, योऽसौ शास्त्रसिद्धशरीरात्मभावादिज्ञानशून्यः[1] केवल स्वस्वामिभावज्ञानवान् सोऽपि वात्सल्यवता त्वयाऽनुग्राह्य एवेत्याहुः - तथाऽपीति। यद्यप्यात्मनोऽपृथक्त्वं न पश्यति लोकसिद्धं स्वामिभृत्यभाव मेव पश्यति तथाऽपि भृत्येशतया भृत्यस्वामिभावेन उपधावतां समीपगतिं प्रक्रान्ताना मनिष्पन्न ज्ञानाना मित्यर्थः। अनन्यवृत्त्या अनुग्रहैकदृष्ट्या अनुगृहाण प्रसीद। हे वत्सल! दोषेऽपि गुणबुद्धिर्वात्सल्यं यथा मातुः पुत्रे वत्सलस्य तव आज्ञाऽनुग्रह उचित इति भावः। यद्वा अनन्यवृत्त्या अव्यभिचारिण्या भक्त्या उपधावताम् अनुगृहाणेत्यन्वयः॥ ३८॥

ननु भगवतो विश्वात्मकत्वे विश्वगतदोषाणां परमात्मन्यापत्ति स्ततः सुखदुःखाद्यनुभवश्च जीववत् तत्राहुः - **जगदिति**। जगत उत्पत्तिस्थितिलयेषु निमित्तभूतेषु जगदुद्भवाद्यर्थमित्यर्थः, दैवतो दैवात् देवो भगवान् तत्सम्बन्धिसङ्कल्पो दैवः तस्मात् बहुभिद्यमानगुणया बहुधा भिद्यमानागुणाः ब्रह्मरुद्रादिदेहरूपेण परिणम्यमानाः सत्त्वदिगुणाः यस्याः तयाऽत्ममायया रचितात्मभेदमतये रचितः आत्मनि यो भेदः देवत्वमनुष्यादिरूपः तद्विषया मतिः बुद्धिः यस्य तस्मै देहात्माभिमानान्वित क्षेत्रज्ञ शरीरायेत्यर्थः। यद्वा बहुभिद्यमान गुणया बहुभिद्यमानाः देवमनुष्य पशुपादपादिरूपेण परिणम्यमानाः सत्त्वादिगुणा यस्याः तया आत्मनः परमात्मनो मायया तच्छरीरभूतया माययेत्यर्थः। "अजा मेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः जनयन्तीं सरूपाः"। (म.ना.उ. ८-4) "गुणैर्विचित्राः सृजतीं सरूपाः प्रकृतिं प्रजाः" इत्यादिक मन्त्रानुसन्धेयम्[2]। एवम्भूतया मायया दैवात् भगवत्सङ्कल्पात् जगदुद्भवस्थितिलयेषु सत्सु अत्र आत्ममाययेत्यनेन आत्मसम्बन्धित्वावगमात् सम्बन्धसामान्यस्य विशेषपर्यवसानजिज्ञासायां "यस्याऽक्षरं शरीरं यस्याऽव्यक्तं शरीरम्" (सुबा.उ. 7-1) इति श्रुति व्यवस्थापित शरीरशरीरिभावरूपसम्बन्धविशेषे पर्यवसानात् ब्रह्मात्मिकायाः मायायाः जगदुपादानत्व मवगन्तव्यम्। जगदुपादानभूतया मायया जगदुत्पत्त्यादिषु सत्सु स्वसंस्थया स्वस्य संस्था सम्यगवस्थितिः तया रचितात्मभेदमतये रचिता आत्मभेदाः आत्मगता देवत्वमनुष्यत्वादयो भेदा स्तद्विषया मतिर्यस्य तस्मै। "तत्सृष्ट्वा तदेवाऽनुप्राविशत्, तदनुप्रविश्य सच्च त्यच्चाऽभवत्" (तैत्ति.उ. 2-6) "अनेन जीवेनाऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि, नामरूपे व्याकरोत्" (छन्दो.उ. 6-3-2) इत्यादिश्रुत्युक्तरीत्या स्वस्य चिदचिदन्तरात्मतयाऽनुप्रवेशेन

1. T भावादिज्ञा° 2. T °मनु

चिदचिद्गतनामरूपभेदस्य स्वपर्यन्तत्वव्याचिकीर्षवे इत्यर्थः। चिदचिद्गत नामरूपभेदस्य चिदचिद्द्वारा स्वपर्यन्तत्वानुद्रष्ट्रे इत्यर्थः। एवम्भूतायाऽपि विनिवर्तित भ्रमगुणात्मने विशेषेण निवर्तिता विनिवर्तिता नित्यनिवर्तितभ्रमः अन्यथाज्ञान विपरीतज्ञानादिरूपाः, गुणः तद्धेतवो रजस्तमआदिगुणाः आत्मनि येन तस्मै। स्वेनैव प्रकाशेन नित्यनिवर्तित हेयायेत्यर्थः। अनेन विश्वगतदोषापत्तिः परिहृता। एवम्भूताय ते नमः केवलं नमस्कुर्मो न तु त्वद्गुणान् वर्णयितुं शक्नुम इति भावः॥ ३९॥

योगीश्वरैः निरस्तनिखिलहेयत्वेन स्तुते भगवति स भगवान् किं निर्गुण इत्याशङ्कायां निरस्तनिखिलहेयः समस्तकल्याणगुणश्चेति स्तुवन् नमस्करोति शब्दब्रह्म **नम** इति। अत्र शब्दब्रह्मशब्देन वेदा विवक्षिताः। निर्गुणाय निर्गताः सत्त्वरजस्तमआदयो हेयगुणा यस्मात् तस्मै निरस्तनिखिलदोषायेत्यर्थः। कल्याणगुणवत्त्वमाह - धर्मादीनां धर्मार्थादीनां प्रसूतये प्रकृष्टा सूति र्यस्मात् स प्रसूतिः तस्मै प्रसवित इत्यर्थः। धर्मप्रसवितृत्वं धर्मादि प्रकाशकवेदोत्सर्जनद्वारा। तथा च श्रुतिः ''तस्य ह वा एतस्य महतो भूतस्य निश्वसित मैतद्यदृग्वेदः'' (सुबा.उ. 2-1) इति। ''यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै'' (श्वेता.उ. 6-18) इति च। स्मृतिश्च ''अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतयः'' (भार.शान्ति.मोक्ष. 231-56) इति। अनेन सर्व[1]कारणत्व तदुपयुक्तसर्वज्ञत्व सर्वशक्तित्व सहितोपदेष्टृत्व वात्सल्यादिकल्याणगुणजातं विवक्षितं, तर्हि कति कल्याणगुणा इत्यत्र तेषा मानन्त्य माह तत्काष्ठां तेषां तत्स्वरूपगुणविभूतीनां काष्ठाम् अवधि महं शब्दब्रह्म न वेद न जानामि। अपरे ब्रह्मादयो न विदुः। अह मेव न जानामि कुतोऽपरे मदायत्तसूक्ष्मदर्शिनो जानीयुरिति कैमुत्यनयोऽत्र विवक्षितः। अत्र ज्ञेयत्वनिषेधो न स्वरूपगुणादिविषयः। किन्तु तदियत्ताविषयः। तथा च श्रूयते ''यस्याऽमतं तस्य मतं मतं यस्य न वेद सः'' (केन.उ. 2-3) ''यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्''। (तैत्ति. 3-2-4, 2-9) ''अविज्ञातं विजानतां विज्ञात मविजानताम्'' (केन.उ. 2-3) इति परिच्छिन्नत्वेन जानतोऽमतम्। अपरिच्छिन्नत्वेन जानतस्तु मत मित्यर्थः॥ ४०॥

**विज०** पूर्वत्र यजमानेन यथातत्त्वं स्तुतम्। अत्र लोकसंस्कारपूर्वक मौत्सुक्याच्च स्वाभीष्टसिद्धये यजमान्या प्रसूत्या स्तूयते - **स्वागत** मित्यादिना। श्रिया कान्तया सह त्राहि रक्ष। कबन्ध इत्यनेन शिरोराहित्ये सिद्धेऽपि स्पष्टत्वाच्च शीर्षहीन इत्युक्तम्। अङ्गैः ऋत्विगादिभि रन्यत्र करचरणादिभि स्सहितोऽप्यनेन सर्वोत्तमत्वं हरे र्द्योतितम्॥ ३६॥

लोकपालस्तुत्याऽपि हरे रिदं रूप मनारोपित मिति ज्ञाप्यत इति आह - **दृष्टः किमिति**। येन त्वया विश्वं सर्वं दृश्यते ज्ञातं भवति स प्रत्यग्दृष्ट्या ज्ञानदृष्ट्या च दृश्य स्त्वम्। नोऽस्माकं असद्ग्रहैः शब्दाद्यमङ्गलविषयग्राहिभि र्दृग्भिः किं प्रयोजन मुद्दिश्य

1. A,B,T add मन्त्रेण

दृष्टोऽनुग्रहमन्तरेणेति शेषः। षष्ठः पञ्चभूतव्यतिरिक्तशरीर स्त्वं पञ्चभि र्भूतैः निर्मितशरीरवद्भि र्दृष्टो भासीति यदेषा भवदीया माया हि भवत्सामर्थ्यमेव। न ह्यमांसदृष्टिगोचरस्वभावस्य तद्गोचरत्वं सामर्थ्यं विना युज्यते। भगवन्महिमैवाऽसौ यत् दृश्यो भगवान् स्वयमिति वाक्यं हिशब्दगृहीतम्। भूमन्नित्यनेन पूर्णस्याऽयं स्वभाव इति दर्शयति; यद्वा प्रत्यग्दृष्ट्या दृष्ट स्त्वम् अस्माकं दृग्भि र्दृष्टः किमहो! अस्मद्भाग्यैः दिव्यदृष्टिगोचरस्य अन्यदृष्टिगोचरत्व मिति यत्पञ्चभि र्भूतैः सह षष्ठो भासीति यच्च सेयं भवदीया माया हीति॥ ३७॥

योगेश्वरस्तुत्या प्रतीतं पञ्चभूतात्मकत्वं निवारयति - **प्रेयानिति**। अमृतप्रिय! मुक्तप्रिय! प्रभो! समर्थ! विष्णो! यो जीवो विश्वात्मनि जगदन्तर्यामिनि त्वयि पृथक्त्व मन्यथात्वं नेक्षेत् न पश्येत् सुरनरतिर्यगादिषु जीवराशिषु प्रेरकत्वेन स्थितानां तव रूपाणां गुणादीनां चाऽणुमात्रं भेदं न पश्यतीत्यर्थः। तस्मा दात्मनो जीवादन्यः प्रेयान् तव नास्ति। हे भृत्येश! भृत्यानां दासानां अस्माक मीश! भक्तवत्सलतया "भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन!" (भगी. 11-54) इति प्रसिद्धा, तयाऽनन्यवृत्त्या उपधावतां सेवमानानां अस्माक मनुग्रहोऽस्त्येव, अथाऽपि पुनरनुगृहाणेत्यन्वयः "यथार्थज्ञानिनो नाऽन्यः प्रियो विष्णोस्तु कश्चन। तथाऽप्यधिकसन्तुष्ट्यै प्रसीदेत्यर्थनं पुनः।" (गारुडे) इति वचनात् उपपन्ना प्रार्थनेति। अत्राभेदज्ञानिनो हरे रधिकप्रियत्व मुच्यत इत्यय मर्थः, "पृथक् ज्ञानं तदित्याहु र्यत्किञ्चि द्वीक्ष्यतेऽन्यथा। ज्ञानं ज्ञेयाविरोधेन त्वपृथग्वस्तुनो दृशिः। केचिद्भेदं विनिन्दन्ति ह्यासुरज्ञानवृत्तयः। निराकुर्वन्त्यथो मन्दा भेदस्य परमार्थताम्। येतु तत्त्वविदो मुख्या भेदं ब्रह्मान्यवस्तुनोः। परमार्थमिति ज्ञात्वा नित्यं विष्णु मुपासते" (गारुडे) इत्यादिप्रमाणविरुद्ध इति ज्ञातव्यम्। आचार्येणाऽपि न पृथग्य आत्मनः अन्यथा यो न पश्यति इति पृथगित्येतदन्यथेति व्याख्यातं न भेद मिति॥ ३८॥

विश्वान्तर्यामित्वं तत्स्वामित्वञ्च हरेरेव मुख्य मित्याशयेनाहुः - **जगदिति**। जगदुद्भवस्थितिलयेषु जगदुत्पत्तिस्थिति संहारेषु लीलया प्रविभज्यमानगुणया सृष्टौ रजः स्थितौ सत्त्वं, संहारे तम इति प्रकारेण विभज्यमानाः पृथक्क्रियमाणाः सत्त्वादिगुणा यस्या स्सा तयाऽत्माधीनया मायया "प्रकृत्या जडया मिथ्याज्ञानं जनयतीश्वरः तस्य भ्रमश्च सत्त्वाद्या न सन्ति परमेशितुः" (गारुडे) इति वचनात्। प्रकृत्या रचिता कृताऽऽत्मनां जीवानां भेदमति र्मिथ्याज्ञानं येन स तथा तस्मै स्वसंस्थया। एवार्थे हि शब्दः। स्वरूपस्थित्यैव महिमलक्षणया अतिवर्तिता निरस्ता भ्रमो गुणाश्च सत्त्वाद्या यस्मात् स तथा स चाऽसौ आत्मा चेत्यतिवर्तितभ्रमगुणात्मा तस्मै। हे अतिवर्तित भ्रम! ज्ञानानन्दादिगुणात्मने इति भिन्नं वा पदं, हिशब्दो ज्ञानानन्दात्मनो हरे रुपाधिना भ्रमयोग्यत्वं निवारयति॥ ३९॥

हे अमित! अनन्त! ते तुभ्यं नमः। तत्त्वायाऽद्वय ज्ञानाय अमितानाऽऽरोपितरूपाये[1]ति वा। धर्मादीना मस्माकं च सूतय

1. A.B °या

उत्पत्तिकारणाय, चशब्देनाऽस्मत्कारणत्वं निवारयति। कारणस्य रज आदिगुणसंसर्गो नास्तीत्याह - निर्गुणायेति। सृष्टौ प्रवर्तमानस्य तद्गुणास्पर्शो माहात्म्यातिशया द्युज्यत इतीम मर्थं च शब्देन वक्ति। अत्र प्रणतिः सम्यक् स्वरूपज्ञानाभावेऽपि सामान्यज्ञानेन घटत इति भावेनाह - यत्काष्ठामिति। ''काष्ठोत्कर्षे सीम्नि दिशि'' (वैज.को. 6-2-8) इति यादवः। अपरे मदर्वाचीनाः कुतो विदु. न कुतोऽपीत्यर्थः। अनेनाऽस्य परमात्मत्वे न कोऽपि सन्देह इति दर्शितम्॥ ४०॥

## अग्निरुवाच

**यत्तेजसाहं सुसमिद्धतेजा हव्यं वहे[1] स्वध्वर आज्यसिक्तम्।**
**तं यज्ञियं पञ्चविधं च पञ्चभिः स्विष्टं यजुर्भिः प्रणतोऽस्मि यज्ञम्॥ ४१॥**

## देवा ऊचुः

**पुरा कल्पापाये स्वकृतमुदरीकृत्य विकृतं त्वमेवाद्यस्तस्मिन् सलिल उरगेन्द्राधिशयने।**
**पुमान् शेषे सिद्धैर्हृदि विमृशिताध्यात्मपदविः स एवाद्याक्ष्णोर्यः[2] पथि चरसि भृत्यानवसि नः[3]॥ ४२॥**

## गन्धर्वा ऊचुः

**अंशांशास्ते[4] देव मरीच्यादय एते ब्रह्मेन्द्राद्या देवगणा रुद्रपुरोगाः।**
**क्रीडाभाण्डं विश्वमिदं यस्य विभूमन्[5] तस्मै नित्यं नाथ नमस्ते करवाम[6]॥ ४३॥**

## विद्याधरा ऊचुः

**त्वन्माययार्थमभिपद्य कलेवरेऽस्मिन् कृत्वा ममाहमिति दुर्मतिरुत्पथैः[7] स्वैः[8]।**
**क्षिप्तोऽप्यसद्विषयलालस आत्ममोहं युष्मत्कथामृतनिषेवक उद्व्युदस्येत्॥ ४४॥**

## ब्राह्मणा ऊचुः

**त्वं क्रतुस्त्वं हविस्त्वं हुताशः[9] स्वयं त्वं हि मन्त्रः[10] समिद्दर्भपात्राणि वै[11]।**
**त्वं सदस्यर्त्विजो दम्पती देवता ह्यग्निहोत्रं[12] स्वधा सोम आज्यं पशुः॥ ४५॥**

---

1. M, Ma, Ms वहाम्यध्वर 2. M, Ma, Ms ०र्न: 3. M, Ma, Ms च 4. M, Ma, Ms आशासानाः 5. M, Ma, Ms ०म्नः 6. M, Ma. Ms ०मः 7. W ०मु० 8. Ms खै 9. Ms ०शो यजुः 10. M, Ma, Ms मन्त्राः 11. A,B,G,I,J,M, Ma, Ms च 12. A.B.G.I.J. Ma. Ms,T अ०

**श्रीध०** अग्निस्तु यज्ञमूर्तिं प्रणमति - **यदिति**। यस्य तेजसा सुष्ठु समिद्धं प्रदीप्तं तेजो यस्य सोऽहं प्रशस्तेऽध्वरे हविर्वहामि। तं यज्ञियं यज्ञाय हितं पालकम्। यज्ञं यज्ञमूर्तिम्। पञ्चविधत्वमैतरेयके उक्तम् - "स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुस्सोमः" (ऐत.उ. 3-4-4) इति। पञ्चभिर्यजुभिः यज्ञमन्त्रैः स्विष्टं सुपूजितम्। तथा च श्रुतिः - "आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं, यजेति द्व्यक्षरं, ये यजामह इति पञ्चाक्षरं, द्व्यक्षरो वषट्कारः" इति। स्मृतिश्च "चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च। हूयते च पुनर्द्वाभ्यां स मे (नो) विष्णुः प्रसीदतु।" (शरभ.उ.26) इति॥ ४१॥

देवास्तु सत्यं वयमपि देवाः तथापि जगदाद्यन्तयोस्त्वमेव नान्यः कश्चिदित्याहुः[1] - **पुरेति**। कल्पापाये प्रलये विकृतं कार्यजातमुदरीकृत्य संहृत्य त्वमेवाद्यः पुमान् उरगेन्द्रः शेषः[2] एवाधिकं शयनं शय्या यस्मिन्[3] तस्मिन् शेषे शयनं करोषि। सिद्धैर्जनलोकादिवासिभि हृदि[4] विमृशिता विचिन्तिताऽध्यात्मपदवी ज्ञानमार्गो[5] यस्य स एव त्वं य इदानीमक्ष्णोः पथि चरसि प्रत्यक्षोऽसि अवसि रक्षसि॥ ४२॥

गन्धर्वाप्सरसस्तु वयं भिया केवलं सर्वानपि परमेश्वरत्वेनोपश्लोकयामः त्वमेव तु परमेश्वरः अन्ये तु त्वदंशा एवेत्याहुः - **अंशांशा** इति। हे विभूमन्! महत्तम! क्रीडाभाण्डं क्रीडोपकरणं विश्वं ब्रह्माण्डं यस्य तस्मै ते [6-]नमः करवाम नमस्कुर्मः[-6]॥ ४३॥

विद्याधरास्तु केवलं विद्याभिः सम्पदः प्राप्यन्ते, अहङ्कारादिव्यामोहनिवृत्तिस्तु त्वत्कथाश्रवणं विना नास्तीत्याहुः - **त्वन्माययेति**। अर्थं पुरुषार्थसाधनं कलेवरमभिपद्य प्राप्य त्वन्माययाऽस्मिन् कलेवरे[7] ममेति अहमिति चाभिमानं कृत्वा इममात्ममोहं युष्मत्कथामृतनिषेवक उदुच्चैः व्युदस्येत् परित्यजेन्नान्यः। ननु स्वैः पुत्रादिभिः अधिक्षिप्तो दुःखितस्सन् परित्यजेदेव, नेत्याहुः। क्षिप्तोऽपि दुर्मतिः असत्सु विषयेष्वेव लालसा तृष्णा यस्य सः॥ ४४॥

ब्राह्मणाः स्तुवन्ति - **त्वमिति** त्रिभिः। [8-]सदस्याश्च ऋत्विजश्च[-8]॥ ४५॥

**वीर०** एवं शब्दब्रह्मणि निरस्तनिखिलहेयत्वेन समस्तकल्याणगुणविशिष्टत्वेन च भगवन्तं स्तुतवति तदभिनन्द्याग्निः सर्वतेजसामाच्छादकत्वसर्वतेजः प्रकाशाऽऽपादकत्वादिकल्याणगुणान्तरविशिष्टत्वेन स्तुवन् नमस्करोति **यत्तेजसेति**। यस्य भगवतः तेजसा प्रकाशेन सुष्ठु समिद्धं प्रदीप्तं तेजो यस्य सोऽहम्, अनेन स्वस्य तत्प्रकाशेन सुसमिद्धतैजस्त्वकथनेन तत्तेजसा विना

---

1. V °दस्तीत्याहुः 2. A,B,J,Va omt दोष 3. A,B,J, Va omit यस्मिन् 4. A,B,J, Va omit हृदि 5. V आत्मतत्त्वमार्गो
6--6. A,B,J. Va नमनं कुर्मः 7. A,B,J. Va omit कलेबरे 8--8. V omits

स्वस्यासुसमिद्धतेजस्त्वमुक्तम् । एतदेव हि सर्वतेजसामाच्छादकत्वं यत्स्वायत्तं सर्वतेजसां प्रकाशनमिति, अहमिति सूर्यादीनामुपलक्षणं, तथा च श्रूयते - ''न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥'' (कठ.उ. 5-15) इति त्वदाहितशक्तीनामेवास्माकं स्वस्वकार्यक्षमत्वमित्याह - यत्तेजसा सुसमिद्धतेजाः, अहमध्वरे आज्यसिक्तं हविर्वहामि उद्देश्यामिन्द्रादिदेवतां प्रति नयामीत्यर्थः, तं यज्ञियं हितं यज्ञोद्देश्येन्द्रादिदेवतामूर्तिमित्यर्थः । पञ्चविधं त्रेता सभ्यावसभ्यरूपेण पञ्चविधाग्निशरीरिणं पञ्चभिर्यजुर्भिः ''आश्रवयेति चतुरक्षरम्'' ''अस्तु श्रोषडिति चतुरक्षरं, यजेति द्व्यक्षरं, ये यजामह इति पञ्चाक्षरम्'', ''द्व्यक्षरो वषट्कारः'' इति श्रुत्युक्तैः पञ्चभिर्यजुर्भिः स्विष्टं सुष्ठु पूजितं, तथा चोक्तं ''चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु'' (शरभ.उ. 26) इति नित्यं प्रणतोऽस्मि नमस्कृतवानस्मि ॥ ४१ ॥

अग्नाविन्द्रादिदेवतात्मकत्वेन सर्वयज्ञमूर्तित्वेन च भगवन्तं स्तुतवति जगत्कारणस्य तवेदं सर्वमुपपन्नमिति मन्वाना देवाः सौलभ्यादिकल्याणगुणान्तरविशिष्टत्वेन स्तुवन्ति - **पुरेति** । आद्यः सर्वोपादानभूतः पुमान् पुराः अग्रे सृष्टेः प्रागित्यर्थः । कल्पापाये प्राक्तनकल्पान्ते स्वकृतं स्वसृष्टं विकृतं कार्यवर्गम् उदरीकृत्य उदरे निक्षिप्य संहृत्येति यावत् । उरगेन्द्रः शेषः स एवाधिशयनं शय्या यस्मिन् तस्मिन् सलिले शेषे शयितवानसि । सिद्धैर्जनो[1]लोकवासिभिः हृदि विमृशिता अध्यात्मपदवी स्वात्मतत्त्वज्ञानमार्गो यस्य स योगपरिशुद्धमनोग्राह्य इत्यर्थः, एवम्भूतोऽपि त्वमेव अद्य अधुना अक्ष्णोः पथि चरसि प्रत्यक्षोऽसि वाङ्मनसागोचरस्त्वं सौलभ्यातिरेकात् प्रत्यक्षोऽसीत्यर्थः । भृत्यान्नः अस्मान् अवसि पालयसि, अनेन भृत्यानुग्रह[2]कातरत्वमुक्तम् ॥ ४२ ॥

देवेषु सर्वकारणत्वसौलभ्यादिगुणविशिष्टत्वेन स्तुतवत्सु गन्धर्वाप्सरसः त्वत्कार्यभूतमिदं कृत्स्नं जगत् त्वल्लीलोपकरणमिति स्तुवन्तो नमस्कुर्वन्ति - **अंशांशा** इति । हे विभूमन् ! कृत्स्नं जगदन्तर्बहिश्च व्याप्य वर्तमान ! हे देव ! द्योतमान ! मरीचिरादिर्मुख्यो येषां, तथा ब्रह्मेन्द्रौ आद्यौ मुख्यौ येषां, रुद्रः पुरोगो मुख्यो येषाम्, एते देवगणास्ते तव अंशांशाः । अत्र देवगणानां मरीचिब्रह्मेन्द्ररुद्रमुख्यत्वकथनं सृष्टिस्थित्याद्यधिकाराधिकृतदेवताबहुत्वाभिप्रायेण । तत्र व्यष्टिस्रष्टॄणां मध्ये चतुर्मुखस्य मरीच्यादीनां च प्रधानत्वात् ब्रह्मादयो मरीच्यादय इति चोक्तम् । तत्रापि प्राधान्याप्राधान्याभिप्रायेण ब्रह्मादयो मरीच्यादय इति च कोटिद्वयेनोक्तिः । इन्द्रपुरोगत्वकथनं पालनाधिकारिदिगीशान्तराभिप्रायेण, रुद्रपुरोगत्वकथनं तु संहाराधिकार्यभिप्रायेण, एवं सर्वेषां भगवदंशांशत्वं ज्ञानशक्तिबलादिभगवद्गुणलेशाऽभिव्यक्तिकृतमिति वेदितव्यम् । विशिष्टवस्त्वेकदेशरूपांशत्वं तु सर्वजीवसाधारणमिति तद्विशिष्य

1. A,B,T °न° 2. T कारकत्वं

न वक्तव्यम्। क्रीडाभाण्डं क्रीडापरिकरः इदं विश्वं ब्रह्माण्डं यस्य तस्मै ते तुभ्यं नमः। हे नाथ! ते करवाम कैङ्कर्यमिति शेषः॥ ४३॥

एवं दक्षादिषु गन्धर्वाप्सरोऽन्तेषु तत्तत्कल्याणगुणविशिष्टं भगवन्तं स्तुतवत्सु तावदास्तां कल्याणगुणवर्णनमसङ्ख्येयत्वात्तेषाम्। इदन्त्वद्भुतमाहात्म्यं त्वत्कथामृतमित्याहुः विद्याधराः - **त्वन्माययेति**। त्वन्मायया त्वत्सङ्कल्पेन अर्थं सर्वपुरुषार्थसाधनं नृदेहमभिपद्य अस्मिन् कलेवरे तदनुबन्धिनि च ममाहमिति दुर्मतिं दुर्बुद्धिं कृत्वापि। दुर्मतिरिति प्रथमान्तपाठेऽहमिति शेषः। अहम्ममाभिमानं कृत्वेत्यर्थः। अत एव दुर्मतिः वैषयिकसुखलाभे दुःखितचित्तोऽपि उत्पथैः लोकवेदमर्यादोल्लङ्घिभिः स्वैः पुत्रादिभिः क्षिप्तोऽपि तिरस्कृतोऽपि असद्विषयेषु प्रकृतिपरिणामरूपशब्दादिविषयेष्वासक्तोऽपि यदि युष्मत्कथामृतनिषेवकः युष्मत्कथैवामृतं तन्नितरां[1] सेवत इति युष्मत्कथामृतनिषेवकः। सेवनमत्र श्रवणश्रावणादिरूपं विवक्षितं, तर्हि आत्ममोहम् [2-]आत्मनो मोहम्[-2] अहङ्कारममकाररूपं मोहम् उद्व्युदस्येत् उच्चैर्व्युदस्येत् परित्यजेत् मुक्तो भवेदिति भावः। अहम्ममाभिमानग्रस्तस्य असद्विषयप्रवणस्याऽऽत्ममोहनिवर्तनद्वारा मुक्तिसाधनं त्वत्कथामृतमेव नान्य उपायोऽस्तीति इदं त्वत्कथामृतमाहात्म्यमत्यद्भुतमिति भावः॥ ४४॥

ब्राह्मणास्तु तावदास्तां कथामृतमाहात्म्यम् इदं तु अद्भुततमं त्वन्नाममाहात्म्यमिति कथयिष्यन्तः प्रकृतयज्ञनिर्वृत्यभिकाङ्क्षया यज्ञयज्ञसाधनमूर्तित्वेन स्तुवन्तस्तत्प्रसादं प्रार्थयन्ते - **त्वमिति** त्रिभिः। त्वं क्रतुर्यज्ञः हविः पुरोडाशादिः सदस्याश्च ऋत्विजश्च ते त्वमेव हुताशस्त्रेतारूपः देवता इन्द्रादयः [3]अग्निहोत्रम् अग्निहोत्राख्यकर्मविशेषः। क्रतुरित्यनेन युगात्मकत्वमुक्तम्। अग्निहोत्रमिति होमात्मकत्वम्, देवतोद्देशेन द्रव्य त्यागात्मको यागः, स एव प्रक्षेपादिको होमः। सर्वत्र सामानाधिकरण्यं शरीरात्म भाव निबन्धनम्॥ ४५॥

**विज०** अनेनापि मदाशङ्कामुन्मूलयति - **यत्तेजसेति**। यस्य हरेस्तेजसा "यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" (भ.गी. 15-12) इति वचनात् सुसमिद्धतेजाः पूज्यत्वेन सम्यक् प्रवृद्धं तेजो बलं यस्य स तथा। अहं जातवेदा अध्वरे यज्ञे आज्यसिक्तमाज्येन [4]श्रृतं हव्यं वहामि देवान् प्राप्य विभज्यार्पयामीत्यर्थः। "ओश्रावय अस्तु श्रौषट् यज ये यजामहे। वौषट्" इति यजुर्वेदगतैर्यजुर्भिः पञ्चमन्त्रैः स्विष्टं सुष्ठु पूजितं तं पञ्चविधं पञ्चधा विभक्तविग्रहं यज्ञं यज्ञपुरुषं यज्ञेशं यज्ञभावनं यज्ञभुजमित्येवंविधं भगवन्तं प्रणतोऽस्मीत्यन्वयः। यज्ञं यज्ञेशमित्यादिपञ्चविधमिति वा योज्यम्। उक्तं च "यज्ञो यज्ञपुमांश्चैव यज्ञेशो यज्ञभावनः। यज्ञभुक् चेति पञ्चात्मा यज्ञेष्विज्यो हरिः स्वयम्।" (तन्त्रसारे) इति, "ओश्रावयास्तु श्रौषड्यजाभो ये यजामहे। वषट्कारान्तकैर्नित्यं यजुर्भिः पञ्चभिर्विभुः" (तन्त्रसारे) इति॥ ४१॥

---

1. W. omits नितरां 2--2. A,B,T omit 3. A,B,T omit अग्निहोत्रम् 4. A,B युतं

कल्पापाये प्रलये स्वेन विकृतं कार्यरूपं जगदुदरीकृत्य उदरे निधाय यज्जलं सृष्टिकाले त्वया पीतं तस्मिन् सलिले उरगेन्द्र एवाधिकं शयनम् उरगेन्द्राधिशयनं तस्मिन्नाद्यः पुमांस्त्वं शेषे। अत्र प्रमाणं चाहुः - सिद्धैर्मुक्तैर्वेदैर्वा विमृशिता विचारिता अध्यात्मनः परमात्मनः पदवी यस्य स विमृशिताध्यात्मपदविः। य एवंविधः श्रीनारायणः स एव नान्यः। अद्य नोऽक्ष्णोः पथि चक्षुर्विषये चरसि भृत्यानस्मानवसि। च शब्देन भृत्यरक्षणमेव प्रयोजनं नान्यदित्यर्थं निर्धारयति। "नैतत्स्वरूपं भवतः" (भाग. 4-7-31) इत्यादिना यदुक्तं तन्निर्धारितमनेनेति॥ ४२॥

हे देव! आशासानाः फलमाकाङ्क्षमाणा य एते मरीच्यादयो य एते ब्रह्मेन्द्राद्या देवगणा यएते रुद्रपुरोगा भूतगणा इतीदं विश्वं विभूम्नो यस्य तव क्रीडाभाण्डं क्रीडोपकरणं वर्तत इत्यन्वयः। हे नाथ! तस्मै ते तुभ्यं नित्यं नमः करवाम इत्यनेनापि सर्वशङ्कोन्मूलिता॥ ४३॥

अव्यक्तादेस्त्वद्रूपकल्पनायाः त्वदिच्छाधीनत्वात् त्वत्प्रसादेनैव निरासः स्यादित्याशयेन विद्याधराः स्तुवन्तीत्याह - **त्वन्माययेति**। त्वन्मायया त्वदिच्छया त्वदधीनया प्रकृत्या च रचितमर्थं देहकलत्रादिलक्षणमभिपद्य दुर्मतिः दुःखितमतिः अस्मिन् कलेवरे ममाहमिति मतिं कृत्वाऽत एव उत्पथैः दुर्मार्गवर्तिभिः स्वैरिन्द्रियैः क्षिप्तोऽसत्स्वमङ्गलेषु विषयेषु लालस उत्कण्ठावानपि पुमान् युष्मत्कथारसनिषेवकः, आत्मा मुह्यत्यनेनेत्यात्ममोहः संसारः तमुद्व्युदस्येन्निरस्यतीत्यन्वयः॥ ४४॥

ब्राह्मणस्तुतिव्याजेन[1] हरेः सर्वस्वातन्त्र्यं द्रढयति[2] - **त्वं क्रतुरिति**। त्वं क्रतुरित्याद्यभेदेनोक्तिरन्तर्यामिविषयेति ज्ञातव्यम्। तदुक्तम् - "सर्वशब्दाभिधेयत्वं सर्वान्तर्यामिकत्वतः। न तु सर्वस्वरूपत्वात्सर्वभिन्नो यतो हरिः" (मात्स्ये) इति। अपभ्रष्टचेतनैक्याभावेऽपि ब्रह्मरुद्रादिविशिष्टचेतनैक्यं किं न स्यादिति चेत्तन्न प्रमाणविरुद्धत्वात्। तदुक्तम् - "अन्तर्यामिस्वरूपेण ब्रह्मरुद्राद्यभिन्नता। न तु जीवस्वरूपेण जीवा भिन्ना यतो हरेः॥ विशेषाभेदवचनं सन्निधानविशेषतः। सन्निधानं तु तत्प्रोक्तं सामर्थ्यव्यञ्जनं हरेः॥" (भविष्यत्पुराणे) इति॥ ४५॥

**त्वं पुरा गां रसाया महासूकरो[3] दंष्ट्रया पद्मिनीं वारणेन्द्रो यथा।**
**स्तूयमानो नदँल्लीलया[4] योगिभिर्व्युज्जहर्थ[5] त्रयीगात्र यज्ञक्रतुः॥ ४६॥**

---

1. A,B °णा  2. A,B °न्ति  3. M. Ma, Ms, महान्सू°  4. W नु°  5. V °हाथ

## सामगा ऊचुः[1]

[2]स प्रसीद त्वमस्माकमाकाङ्क्षतां दर्शनं ते परिभ्रष्टसत्कर्मणाम् ।
कीर्त्यमाने[3] नृभिर्नाम्नि[4] यज्ञेश ते यज्ञविघ्नाः क्षयं यान्ति तस्मै नमः ॥ ४७ ॥

## मैत्रेय उवाच

इति दक्षः कविर्यज्ञं भद्रं[5] रुद्राभिमर्शितम् ।
कीर्त्यमाने हृषीकेशे सन्निन्ये[6] यज्ञभावने ॥ ४८ ॥
भगवान् स्वेन भागेन सर्वात्मा सर्वभागभुक् ।
दक्षं बभाष आभाष्य प्रीयमाण इवानघ ॥ ४९ ॥

## श्रीभगवानुवाच

अहं ब्रह्मा च शर्वश्च जगतः कारणं परम् ।
आत्मेश्वर उपद्रष्टा स्वयं दृगविशेषणः ॥ ५० ॥

**श्रीध० त्वमिति** । गां पृथ्वीं रसायाः रसातलद्दंष्ट्रया व्युज्जहर्थ[7] विशेषेणोद्धृतवानसि । योगिभिः स्तूयमानः । हे त्रयीगात्र ! वेद मूर्ते ! यज्ञो यागः सयूपस्तद्विशेषः क्रतुः तद्रूपी यज्ञसङ्कल्परूप इति वा, यज्ञः क्रतुः कर्म यस्येति वा ॥ ४६ ॥

**स इति** । स त्वमस्माकं त्वद्दर्शनमाकाङ्क्षतां प्रसीद अस्मद्यज्ञमप्युद्धरेत्यर्थः । न चाशक्यं तवैतत् । यतस्तव नाम्नि कीर्त्यमान एव यज्ञविघ्नाः क्षयं यान्ति एवंप्रभावो यः तस्मै नमः ॥ ४७ ॥

**इतीति** । इत्यनेन प्रकारेण सर्वैः कीर्त्यमाने[8] हे भद्र ! विदुर ! सन्निन्ये प्रवर्तयामास ॥ ४८ ॥

**भगवानिति** । सर्वात्मतया सर्वभागभोक्ताऽपि [9-]भगवान्निजानन्दतृप्तोऽपि[-9] स्वेन भागेन त्रिकपालपुरोडाशेन प्रीयमाण इव दक्षमाभाष्य सम्बोध्य बभाषे ॥ ४९ ॥

---

1. A,B,G,I,J, Ms,T,V,W, omit सामगा ऊचुः 2. M, Ma, Ms, V सम्प्रं 3. M, Ma ना 4. M, Ma °स्सामगीरीश 5. A,B,G,I,J, Ms,T °व° 6. M, Ma, Ms उ° 7. V °हाथ 8. B- omit कीर्त्यमाने 9. B- omit

**अहमिति**। योऽहं जगतः कारणम् आत्मा चेश्वरश्च उपद्रष्टा साक्षी च स्वयंदृक्[1] स्वयंप्रकाशश्च निरुपाधिश्च[2] स एव ब्रह्मा च शर्वश्चेत्यन्वयः ॥ ५० ॥

**वीर०** यज्ञानुष्ठानोपयुक्तपृथिव्युद्धर्ता यज्ञाऽवबोधिविध्यर्थवादादिरूपेणावस्थितवेदमूर्तिश्च त्वमेवेत्याहुः - **त्वमिति**। पुरा कल्पादौ महासूकरः श्वेत वराहरूपस्त्वं[3] वारणेन्द्रो गजश्रेष्ठः पद्मिनीं यथा सरसीमिव, अभूतोपमेयं, न हि वारणेन्द्रेण पद्मिन्युद्धरणं क्वचिद्दृष्टं, रसाया रसातलात् गां पृथिवीं दंष्ट्रया नुदन्[4] उत्पाटयन् योगिभिः स्तूयमानः व्युज्जहर्थ विशेषेणोद्धृतवानसि। हे त्रयीगात्र! वेदमूर्ते! अतस्त्वमेव यज्ञक्रतुः यज्ञो यागः क्रतुराराधनरूपकर्म[5] यस्य सः। यद्वा हे यज्ञ! विष्णो! "यज्ञो वै विष्णुः" (तैत्ति.ब्रा. 1-2-5) "यज्ञायाचरतः कर्म" (भगी. 4-23) इति श्रुतिस्मृतिभ्यां क्रतुः क्रतुमूर्तिरित्यर्थः ॥ ४६ ॥

स एवम्भूतस्त्वं परिभ्रष्टं सत्कर्मवैदिकं त्वदाराधनरूपं यागाख्यं कर्म येषाम्। अत एव तद्भ्रंशपरिहाराय तव[6] दर्शनमाकाङ्क्षतां कामयमानानाम् अस्माकं प्रसीद प्रसन्नो भव। हे यज्ञेश! यस्य ते तव नाम्नि नृभिः नरैः कीर्त्यमाने सति यज्ञस्य विघ्नाः क्षयं नाशं यान्ति तस्मै ते नमः ॥ ४७ ॥

दक्षादीनां स्तुतिमुपसंहरन् तैः स्तुतो भगवान्ताननुगृह्णन् आबभाष इत्याह मैत्रेयः - **इतीति** द्वाभ्याम्। हे भद्र! विदुर! इति अनेन प्रकारेण सर्वैर्विश्वभावने विश्वकारणे हृषीकेशे कीर्त्यमाने सति कविः कर्मसु कुशलो दक्षः रुद्राऽभिमर्शितं रुद्रेण विहतं यज्ञं सन्निन्ये प्रवर्तयामास। रुद्रेण संस्पृष्टमिति वा पूर्वं रौद्रभागाभावात् रुद्रानभिमर्शितमिदानीं तु तद्भागप्रदानात् तदभिमर्शितमित्य-वगन्तव्यम् ॥ ४८ ॥

सर्वात्मा सर्वस्यात्मा सर्वात्मतया सर्वभागभोक्ताऽपि भगवान् स्वेन भागेन त्रिकपालपुरोडाशेन प्रीयमाण एव दक्षमाभाष्या-भिमुखीकृत्य बभाषे ॥ ४९ ॥

तत्र हितोपदेष्टा भगवान् कार्यकारणरूपेणावस्थितः प्रकृतिपुरुषशरीरकोऽहमेक एव मच्छरीरभूतब्रह्मरुद्राख्यजीवाऽनुप्रवेशेन जगत् सृजामि[7] संहरामि स्वावताररूपेण पालयामि। अतो मत्तः मच्छरीरभूताच्च न व्यतिरिक्तं वस्त्वस्तीति अब्रह्मात्मकस्वतन्त्रवस्तु-दृष्टिः देहात्मभ्रान्तिस्वतन्त्रात्मभ्रान्तिमूला न तु तात्त्विकी, सर्वस्य ब्रह्मात्मकत्वदृष्टिस्तु तात्त्विकी मुक्त्युपायभूतेत्याह - **अहमिति** पञ्चभिः। अहं निरस्तनिखिलहेयत्वेन समस्तकल्याणगुणात्मकत्वेन च भवद्भिः स्तुतः समाभ्यधिकरहितोऽहं ब्रह्मा च सर्वश्च

---

1. B, J, V, Va, omit स्वयदृक् 2. V omits निरुपाधिश्च 3. A,B,T वा० 4. A,B,T omit नुदन् 5. A,B,T रूपं 6. A,B,T त्वत्सन्दं 7. W प्रक्ष्यामि

मदनुप्रविष्टत्वेन मत्सृज्यत्वेन मदायत्तसृष्ट्याद्युपयुक्तज्ञानवत्त्वेन च प्रसिद्धौ मत्प्रयोज्यौ ब्रह्मरुद्रौ च जगतः परं कारणं स्थित्युद्भव लयकारणं[1] "अनेन जीवेनात्मानुप्रविश्य नामरूपे व्याकरवाणि" (छान्दो.उ. 6-3-2), "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" (श्वेता.उ. 6-18), "एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधसम्भवौ। मदादर्शितपन्थानौ सृष्टिसंहारकारकौ।" (भार. 12-328-17), "सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते" (वि.ध.पु. 68-52) इत्यादि श्रुतिस्मृत्यनुरोधादयमर्थो लभ्यते। ननु प्रतिनियतसृष्ट्याद्यधिकारभेदेन पृथक्त्रयाणां कारणत्वेऽभिहिते कथं कृत्स्नस्य जगतः ब्रह्मैककारणत्वमुच्यते। अत एव हि तत्र तत्र "ब्रह्मणो वै सर्वा देवता नकिरिन्द्रत्वदुत्तरः अग्निः सर्वा देवता एक एव रुद्रः सोमः पवते जनिता मतीनां जनिता पृथिव्या जनिताऽग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितेति विष्णोः आपो वा इदं सर्वम्" इत्यादिभिः ब्रह्मणाग्नीन्द्रादीनामपि समाभ्यधिकराहित्यप्रतीतेरर्थवत्वमव्याकुलम्। अत्रोच्यते, सर्वेषां पृथक्कारणत्वे समाभ्यधिकराहित्ये च प्रतीतेऽपि तद्व्याहतम् अन्यपरतयाधिगतं[2] चेत्यनादरणीयम्। अत एव तत्त्वप्रधानेषु सृष्टिप्रलयप्रकरणेषु यदेव स्वरूपेण गुणैश्च निरतिशयबृहदुक्तं तदेकमेव ब्रह्म जन्मस्थितिप्रलयसमुदायरूपेण जिज्ञास्यलक्षणेन लक्षितं सूत्रकारेण "जन्माद्यस्य यतः" (ब्र.सू. 1-1-2) इति। तत्र हि कारणभूतवस्तुपरामर्शिना 'यत' इत्यनेन कारणवाक्येषु "छागो वा मन्त्रवर्णात्" इति सौत्रन्यायात् सद्ब्रह्मादिशब्दानां सामान्यानां नारायणादिविशेषपर्यवसायित्वावश्यम्भावात् सर्वश्रुतीनां नारायण एव पर्यवसानभूमिरिति "यतो वा इमानि" (तैत्ति.उ. 3-1) इत्यादि श्रुतेः हृदयमिति सूत्राकाराभिप्रायो ज्ञायते। अतः सृष्ट्यादिभिर्लक्ष्यं कारणमेकमेव न तु नानाभूतम्। "अहं ब्रह्मा च शर्वश्च" इत्यादिभिः प्रतिनियतस्थित्यादिकारणत्वकीर्तनं तु प्रयोज्यप्रयोजकभावेन। नन्वेवमपि सृष्ट्यादीनां प्रत्येकं लक्षणत्वात् तल्लक्ष्यमपि[3] कारणं वस्तु नानाभूतमिति चेन्न, समुदायस्यैव लक्षणत्वात् सृष्टिस्थितिप्रलयानां समुदायो हि लक्षणं न त्वेकैकम्। समुदायस्य लक्षणत्वं हि श्रुतिस्वारस्यादवसीयते "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति" (तैत्ति.उ. 3-1) इत्यत्र न प्रतिवाक्यं तद्ब्रह्मेत्युक्तम् अन्यथैकतरलक्षणवैयर्थ्यञ्च स्यात्। ननु समुदितं न लक्षणं व्यावर्त्याऽभावात्, न हि जगदुत्पत्तौ निमित्तोपादानभूतं स्थित्यादिकारणत्वव्यवच्छेद्यं किमपि वस्त्वस्तीति चेत् सत्यम्। व्यवच्छेद्यं नेष्यते, तथापि श्रुत्यनुरोधात् सूत्रकारेण जन्मादीत्येकवचनान्तेन समुदायवाचिना समुदायस्य लक्षणत्वमुक्तं, श्रुतिश्च "तद्विजिज्ञासस्व" (तैत्ति.उ. 3-1) इति विधित्सितोपासनोपयोगिनिरतिशयबृहत्त्वविपरीतबृहत्त्वशङ्काव्यवच्छेदार्थं समुदायमाह। शङ्कितव्यवच्छेदेनापि हि सप्रयोजनत्वं स्यात्, लक्ष्याकारविपरीताकारशङ्कानिराकरणेन विना लक्ष्याकारनिश्चयाऽयोगात्। न च जन्मादिष्वेकैककारणत्वं

1. W प्रलय 2. W °व° 3. T omits तत्

लक्ष्याकारविपरीतशङ्कानिराकरणक्षमं, तथा हि उत्पत्तिकारणत्वेऽभिहितेऽपि स्थित्यादिकारणत्वं न चेत् तदनुगुणज्ञानशक्तिविरहात् स्थितिप्रलयकारणभूतवस्त्वन्तरसद्भावाच्च जन्ममात्रकारणस्य निरतिशयबृहत्त्वं न स्यात्। मुक्तेर्लयान्तर्भावात् मोक्षप्रदतयोपास्यस्यैव प्राप्यत्वाच्च मोक्षप्रदत्वप्राप्यत्वानुगुणैश्च बृहत्त्वं न सिध्यति। अतो जन्मकारणत्वमात्रस्य समस्तवस्तुव्यवच्छेदक्षमत्वेऽपि जन्मादिसमुदायकारणत्वस्यैव निरतिशयबृहत्त्वौपयिकत्वात् सृष्टिस्थिति प्रलयसमुदायकारणत्वं लक्षणमिति ज्ञापितम्। अतः समुदायस्यैव लक्षणत्वादपि तल्लक्षणं वस्त्वेकमेव साक्षाद्ब्रह्मादीन् प्रति प्रयोजकत्वेन च कारणमिति सुस्थम्। नन्वेकस्यैव तव सद्वारकतयाऽद्वारकतया च कारणत्वेऽपि सृष्टेः प्राक् कथमवस्थितः कथं स्रक्ष्यसि कथन्तरां ब्रह्मरुद्रादीनां संज्ञानां त्वयि पर्यवसानमित्यत्राह सार्धेन आत्मेश्वर इति। आत्मनः स्वस्य ईश्वरः आत्मेश्वरः। "पतिं विश्वस्यात्मेश्वरम्" (म.ना.उ. 9-3) इति श्रुतेः। अनेन स्वस्य प्रयोजकान्तराप्रयोज्यत्वमुक्तम्। आत्मनां स्वस्मिन् लीनानां जीवानामीश्वरः अन्तः प्रविश्य नियन्तृत्वेनावस्थित इति वा उपद्रष्टा उपदृश्यदेवमनुष्यादिनामरूपाभावात् केवलं द्रष्टृत्वेनावस्थित इत्यर्थः। अनेन पदद्वयेन नामरूपविभागानर्हातिसूक्ष्मप्रकृति-[1] पुरुषशरीरकत्वं फलितम्। "यस्याक्षरं शरीरं यस्याव्यक्तं शरीरम्"। (सुबा.उ. 7-1), "असद्वा इदमग्र आसीत्। तद्धेदन्तर्ह्यव्याकृतमासीत्" (तैत्ति.उ. 2-7) इति च श्रवणात्। एवञ्च नामरूपविभागानर्हसूक्ष्मचिदचिद्वैशिष्ट्येनैव कारणवस्तुस्थितिरित्युक्तं भवति। कारणत्वोपयुक्तकल्याणगुणत्वमाह - स्वयंदृगिति। नित्याविर्भूतासङ्कुचितज्ञान इत्यर्थः। स्वयम् आत्मना पश्यतीति स्वयंदृगिति व्युत्पत्तेः। अनेन निमित्तत्वोपयुक्तनिरुपाधिकसर्वज्ञत्वमुक्तम्। स्वयंदृगिति उपादानत्वोपयुक्त-सर्वशक्तित्वादेरप्युपलक्षणम्। हेयगुणराहित्यमाह - अविशेषणः विशेषणानि प्रकृतिपुरुषगतजडत्वपरिणामित्वाऽसर्वज्ञत्वदुःखि-त्वादयो व्यावर्तकाकाराः तद्रहित इत्यर्थः। अविशेषेण इति न सर्वगुणनिषेधः, स्वयंदृगिति कल्याणगुणविधानात् कारणत्वोपयुक्तगुणकथनसापेक्षितत्वान्निषेधस्य विहितेतरविषयत्वाच्च॥ ५०॥

**विज०** रसाया रसातलात् योगिभिः सनकादिभिः यज्ञक्रतुर्यज्ञसङ्कल्पः॥ ४६॥

सामगीः सामगायनध्वनिः तया परिभ्रष्टानि विस्रस्तानि सत्कर्माणि येषां ते तथोक्ताः तेषां, यज्ञविघ्ना राक्षसाः॥ ४७॥

भद्ररुद्रो वीरभद्रः। उन्निन्ये ऊर्ध्वं नीतवान् समासं कृतवानित्यर्थः॥ ४८॥

सर्वात्मेति हेतुगर्भविशेषणम्। सर्वभूतान्तर्यामित्वेन सर्वभागभुक् स्वेन भागेन हेतुना सर्वभागं भुङ्क्ते इति सर्वभागभुक् पूर्वं प्रीयमाण इदानीं प्रीयमाण इत्युभयार्थाभिप्रायेणेवशब्दः "इवोभये च सादृश्ये" इत्यभिधानात् यथा प्रीयमाणः प्रियं वक्ति तथेति वा॥ ४९॥

1. A,B,T °र्हसू°

ननु भगवान् स्वागतं बभाष इति न युक्तं, दक्षस्य प्रागेव तत्र स्थितत्वात् अन्यद्वक्तव्यं न प्रतीयत इत्याशङ्क्य स्वात्मानं दक्षायोपदिशतीत्याह - **अहमिति**। आत्मेश्वरः आत्मनां जीवानामीश्वर ईशनशीलः उपद्रष्टा सर्वस्मादधिको द्रष्टा स्वयंदृक् स्वयंप्रकाशः अविशेषणः सर्वोत्तमोऽहं विष्णुर्जगतः परं पॄ-पालनपूरणयोरिति धातुः, पालकं कारणं ब्रह्मा ब्रह्मसंज्ञोऽहं जगतः परमुत्कृष्टं कारणं, विक्षेपकं संहारकं 'कॄ विक्षेप' इति धातुः[1]। मामेवंविधं जानीहीति शेषः ॥ ५० ॥

**आत्ममायां[2] समाविश्य सोऽहं[3] गुणमयीं द्विज।**
**सृजन् रक्षन् हरन् विश्वं दध्रे संज्ञां[4] क्रियोचिताम्[5] ॥ ५१ ॥**

**तस्मिन् ब्रह्मण्यद्वितीये केवले परमात्मनि।**
**ब्रह्मरुद्रौ च भूतानि[6] भेदेनाज्ञोऽनुपश्यति[7] ॥ ५२ ॥**

**यथा पुमान्न स्वाङ्गेषु शिरः पाण्यादिषु क्वचित्।**
**पारक्यबुद्धिं कुरुते एवं भूतेषु मत्परः ॥ ५३ ॥**

**त्रयाणामेकभावानां यो न पश्यति वै भिदाम्।**
**सर्वभूतात्मनां[8] ब्रह्मन् स शान्तिमधिगच्छति ॥ ५४ ॥**

**मैत्रेय उवाच**

**एवं भगवताऽऽदिष्टः प्रजापतिपतिर्हरिम्।**
**अर्चित्वा क्रतुना स्वेन देवानुभयतो[9]ऽयजत् ॥ ५५ ॥**

**श्रीध०** कुत इत्यत आह - **आत्मेति**। अहमेवाऽऽत्ममायामधिष्ठाय जगत्सृष्ट्यादि कुर्वन् स च स च सन् सर्वशक्तिः क्रियोचितां [10-]कर्मशक्तियोजितां[-10] संज्ञां धारयामि ॥ ५१ ॥

**तस्मिन्निति**। तस्मिन् केवलेऽद्वितीये समानासमानजातीयभेदरहिते ब्रह्मणि मयि ब्रह्मरुद्रौ भूतानि च भेदेनाज्ञः पश्यतीत्यर्थः ॥ ५२ ॥

1. A,B, omit धातुः 2. M, Ma, Ms स आत्ममायामाविश्य 3. M, Ma, Ms योऽहं 4. M, Ma, Ms संज्ञाः 5. M, Ma, Ms °ताः 6. M, Ma, Ms देहात्मबुद्धिर्भूतानि 7. W °ज्ञो विप° 8. M, Ms °ना 9. M, Ma देवान्भगवतो° 10. B,J,V,Va omit

विद्वांस्तु भेदं न पश्यतीति सदृष्टान्तमाह - **यथेति** ॥ ५३ ॥

तस्मादेवमैक्यं पश्यन् कृतार्थो भवतीत्याह - **त्रयाणामिति**। त्रयाणां [1-]ब्रह्मविष्णुरुद्राणाम्[-1] एको भावः स्वरूपं येषाम् ॥ ५४ ॥

**एवमिति**। स्वेन क्रतुना त्रिकपालेष्ट्या उभयतः अङ्गैः प्रधानेन च ॥ ५५ ॥

**वीर०** सोऽहं सूक्ष्मप्रकृतिपुरुषशरीरको निरस्तनिखिलहेयः समस्तकल्याणगुणात्मकोऽहं हे द्विज ! दक्ष ! गुणमयीं त्रिगुणात्मिकाम् आत्ममायाम् आत्मीयां प्रकृतिं समाविश्य जीवद्वारा सङ्कल्परूपज्ञानेनानुप्रविश्य जगत् सृजन् ब्रह्मद्वारा सृजन् रक्षन् अद्वारा पालयन्, हरन् रुद्ररूपेण संहरन्, क्रियोचितां सद्वारकाद्वारकसर्गादिक्रियोचितां संज्ञां ब्रह्मविष्णुशिवात्मिकां संज्ञां दध्रे बिभर्मि। अतः कृत्स्नचिदचिदात्मकप्रपञ्चरूपकार्यरूपेण सूक्ष्मावस्थ[2]प्रकृतिपुरुषशरीरकत्वेन कारणरूपेणावस्थितोऽहमेक एवेति न मद्व्यतिरिक्तं वस्त्वस्तीति भावः। तथा च श्रूयते ''नामरूपे व्याकरवाणि'' (छान्दो.उ. 6-3-2) ''तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्।'' (तैत्ति.उ. 2-6) इति। 'नन्वनुप्रविश्य नामरूपे व्याकरवाणीत्यनुप्रवेशपूर्वकत्वं सृष्टेः प्रतीयते 'तत्सृष्ट्वा तदेवानुप्राविशत्' इत्यनुप्रवेशस्य सृष्टिपूर्वकत्वं प्रतीयते, कथमेतद्विप्रतिषिद्धमुपपद्यते ? उच्यते, अत्र ह्यनुप्रवेशसृष्ट्योः समानकर्तृत्वमात्रमेव विवक्षितं, न तु पौर्वापर्यमपीति ज्ञापनाय विप्रतिषिद्धनिर्देशः, अत एव हि ''तस्य त्वष्टा विदधद्रूपमेति'' (पु.सू. 2-7) इत्यनुप्रवेशसृष्ट्योः यौगपद्यमन्यत्र श्रुतम्[3]। ''तत्सृष्ट्वा तदेवानुप्राविशत्'' इति (तैत्ति.उ. 2-6) स्थित्यर्थानुप्रवेशो वा वेदितव्यः ॥ ५१ ॥

एवं हि सर्वस्य मदात्मकत्वात् मद्व्यतिरिक्तस्वतन्त्रवस्त्वभावात् अमदात्मकस्वतन्त्रवस्तुदृष्टिर्देहात्मभ्रान्तिमूलेत्याह - **तस्मिन्निति**। तस्मिन् कार्यावस्थकारणावस्थप्रकृतिपुरुषेश्वरे किं नियन्तृत्वं राजादिवन्नेत्याह परमात्मनि प्रकृतिपुरुषयोरन्तःप्रविश्य तद्गतैर्दोषैरस्पृष्टे प्रशासनेन भर्तरि। एवमेव हि परमात्मशब्दार्थो गीताचार्येणोक्तः - ''उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः'' (भगी. 15-17) इति। अत्र लोकत्रयमित्यनेन प्रकृतिपुरुषावुक्तौ तदात्मकत्वाल्लोकत्रयस्य। आविश्येत्यत्र ''अन्तः प्रविष्टः शास्ता जनानाम्'' ( तैत्ति.आ. 3-11) इति श्रुत्यन्तरानुरोधेन[4] अन्तः प्रविश्येत्यर्थः। अव्यय इत्यनेनाविकारित्ववाचिना प्रकृतिपुरुषगतदोषास्पर्शित्वमुक्तम्। ईश्वर इत्यनेन नियन्तृत्वमभिहितम्। बिभर्तीत्यनेन धारकत्वं फलितम्। किमेवम्भूतस्त्वदन्यः कश्चिदस्ति ? नेत्याह। अद्वितीये स्वसमानद्वितीयवस्त्वन्तररहित इत्यर्थः। ''यथा चोलनृपः सम्राडद्वितीयोऽस्ति भूतले''इतिवत्। केवले स्वाधिकवस्त्वन्तररहिते। तथा च श्रूयते ''न तत्समश्चाभ्यधिकश्च दृश्यते'' (श्वेता.उ. 6-8) स्मर्यते च

---

1. W. omit अवस्थ 2. A,B,T स्फुटम् 3. A,B,T श्रुत्यनुरोधात् 4. A,B,T विसद्धचर्ह°

"न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यः" (भगी. 11-43) इति। यदि ब्रूयादद्वितीय इति स्वसमानवस्तुनिषेधादेव तदधिकवस्तुनिषेधः कैमुत्यन्यायसिद्ध इति। तर्हि केवले निरस्तनिखिलहेये ब्रह्मणि स्वरूपेण गुणैश्च निरतिशयबृहति अनन्तकल्याणगुणात्मकस्वरूप इत्यर्थः। एवम्भूते मयि भूतानि मदन्तरात्मकतया मदायत्तसत्तास्थितीनि मच्छरीरतया मदपृथक्सिद्धत्वेन स्थितानि ब्रह्मरुद्रादिभूतानि भेदेन पृथक्स्थित्यर्हत्वेन[1] स्वतन्त्राणि अज्ञो ब्रह्मात्मकत्वज्ञानरहितः देहे[2] एव आत्मबुद्धिश्च विपश्यति। अनेन देहात्मभ्रान्तिः स्वतन्त्रात्मभ्रान्तिश्च भेददर्शनमूलमित्युक्तम्॥ ५२॥

सर्वस्य मदात्मकत्वज्ञानिनस्तु न भूतानि भेदेन पश्यन्तीति सदृष्टान्तमाह - **यथेति**। पुमान् देहात्मभ्रान्तिमानपि पुरुषः स्वाङ्गेषु स्वपृथक्स्थित्यनर्हेषु शिरःपाण्याद्यवयवेषु मध्ये क्वचित् कस्मिंश्चिदप्यवयवे पारक्यबुद्धिं परस्येदं परकीयं तस्य भावः पारक्यं तेन पृथक्सिध्यनर्हत्वं लक्ष्यते, परकीयं ह्यङ्गं स्वस्मात् पृथक्स्थित्यर्हं तद्बुद्धिं न कुरुते, एवं मत्परः मदासक्तचित्तः सर्वस्य ब्रह्मात्मकत्वज्ञान-सम्पन्न इत्यर्थः। भूतेषु मत्पृथक्स्थित्यनर्हत्वबुद्धिं कुरुत इत्यर्थः॥ ५३॥

एवं कृत्स्नस्य जगतः स्वात्मकत्वेन स्वपृथक्स्थित्यनर्हविशेषणत्वेन[3] स्वप्रकारतामुपपाद्य पृथगीश्वरत्वेन शङ्कितयोर्ब्रह्मरुद्रयोरपि मदायत्तसत्तादिमत्वेन मत्प्रकारत्वज्ञानं मनः प्रशान्तिद्वारा मुक्तिसाधनमित्याह - **त्रयाणामिति**। हे ब्रह्मन्! दक्ष! एकभावानाम् एको भावः सत्ता येषां तेषां, भाव इति स्थित्यादीनामप्युपलक्षणम्, एकविधसत्तादिमतां मदायत्तसत्तादिमतामित्यर्थः। एकस्मिन् भावो येषामिति व्यधिकरणबहुव्रीहिर्वा, त्रयाणां ब्रह्मविष्णुरुद्राणां, तत्र ब्रह्मरुद्रयोः परमात्मायत्तसत्तादिमत्त्व[4]कथनेन तयोः परमात्मानं प्रति अपृथक्सिद्धप्रकारतोक्ता। विष्णोस्तु विष्ण्वायत्तसत्तादिमत्वकथनेनानन्याधीनसत्तादिमत्त्वं फलितम्। तथा च श्रूयते "स्वे महिम्नि प्रतिष्ठितः" (छान्दो.उ. 7-24-1) "पतिं विश्वस्यात्मेश्वरम्" (म.ना.उ. 9-3) इति। एकशब्देन मूर्तित्रयातिरिक्तं परं वस्तूपलक्ष्य त्रयाणां तदायत्तभावादिमत्त्वकथनं त्वसङ्गतं, परत्वस्य जगत्कारणनिष्ठत्वात्, कारणत्वस्यात्मेश्वर उपद्रष्टेत्यादिना विष्णोरेव प्रतिपादितत्वात् तदतिरिक्तोत्कृष्टवस्त्वन्तराभावात् तस्मिन् ब्रह्मण्यद्वितीये केवले परमात्मनीति विष्णोः परत्वस्यात्रैवोक्तत्वाच्च एकभावानाम् एकस्वरूपाणामिति त्रयाणां तादात्म्यवर्णन[5]ञ्चायुक्तम्। ब्रह्मरुद्रयोः कर्मवश्यत्वसृज्यत्वपाल्य-त्वनियाम्यत्वादेः "अनपहतपाप्मा वा अहमस्मि", "नारायणाद्रुद्रो जायते" (नारा.उ.) इत्यादिषु श्रुतत्वाज्जीवत्वनिश्चयात्। यद्यपि "ब्रह्मा नारायणः शिवश्च नारायणः" (त्रिपाम.ना.उ. 2-8) "ब्रह्मा नारायणाख्योऽसौ कल्पादौ भगवान् यथा। प्रजाः ससर्ज भगवान् ब्रह्मा नारायणात्मकः" (वि.पु. 1-4-1, 2) "ततः स भगवान् विष्णुः रुद्ररूपधरोऽव्ययः" (वि.पु. 6-3-16) "ततः कालाग्निरुद्रोऽसौ

---

1. A,B,T देहात्मबु॰ 2. A,B,T ॰णस्व॰ 3. A,B,T ॰दिक॰ 4. A,B,T ॰स्यैवो॰ 5. A,B,T ॰नन्त्वयु॰

भूत्वा सर्वहरो हरिः'' (वि.पु. 6-3-24) सर्गस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम्॥ ससंज्ञां याति भगवानेक एव जनार्दनः।'' (वि.पु. 1-2-66) इत्यादिप्रमाणात् त्रिमूर्त्यैक्यमङ्गीकार्यं, तथापि, ''[1-]नारायणाद्ब्रह्मा जायते[-1], नारायणाद्रुद्रो जायते नारायणात् द्वादशादित्या रुद्रा वसवः सर्वाणि छन्दांसि नारायणादेव समुत्पद्यन्ते, (नारा.उ. 1) एको ह वै नारायण आसीत्.'' (महा.उ. 1-1) ''न ब्रह्मा नेशान एको ह वै नारायण आसीन्न ब्रह्मा न च शङ्करः स मुनिर्भूत्वा समचिन्तयत् तत एते व्यजायन्त विश्वे हिरण्यगर्भोऽग्निर्यमवरुणरुद्रेन्द्राः यन्नाभिपद्मादभवत् स महात्मा प्रजापतिः तत्र ब्रह्मा चतुर्मुखोऽजायत सोऽग्रे भूतानां मृत्युमत्यसृजत् त्र्यक्षं त्रिशिरस्कं त्रिपादं खण्डपरशुं ब्रह्मणः पुत्राय ज्येष्ठाय'' (नारा.उ. 1) ''ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः। विभूतयो हरेरेता जगतः सृष्टिहेतवः।'' (वि.पु. 1-22-31) ''रुद्रः कालान्तकाद्याश्च समस्ताश्चैव जन्तवः'' (वि.पु. 1-22-33) इत्यादिषु भगवतस्तयोश्च परस्परभेदावगमात् सामानाधिकरण्यस्य ''सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते। हरो हरति तद्वशः'' (वि.ध.पु. 68-52) इत्याद्यानुगुण्येनान्तर्यामित्वेनाप्युपपत्तेः, भेदनिर्देशस्य स्वाभाविकभेदाभ्युपगमेन विना अनुपपत्तेश्च न त्रिमूर्त्यैक्यमुपपन्नम् तस्माद्यथोक्त एवार्थः। सर्वभूतात्मनां तत्र विष्णोः सर्वभूतात्मत्वम् ''एष सर्वभूतान्तरात्मापहतपप्मा दिव्यो देव एको नारायणः'' (सुबा.उ. 7) ''अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा'' (तैत्ति.आ. 3-11) ''ममान्तरात्मा तव ये चान्ये देहिसंज्ञिताः'' इत्यादिश्रुतिस्मृत्युक्तसर्वभूतान्तरात्मत्व[2]रूपमितरयोस्त्वणोश्चेतनस्य चेतनानन्तरव्याप्यत्वासम्भवेन सर्वभूतानां ब्रह्मरुद्राख्यजीवव्याप्यत्वासम्भवात् नान्तरात्मत्वरूपं सत्वभूतात्मत्वम्, अपि तु ''तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च (बृह.उ. 1-4-10) (अहं) ''कक्षीवानृषि (रस्मि) र्विप्रः'' (ऋक्सं. 4-26-1) ''त्वं वाहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते तद्योहं योऽसौ सोऽहम्'' (जाबा.उ. ) ''अहं हरिः सर्वमिदं जनार्दनः'' ''आत्मेति तूपगच्छन्ति ग्राहयन्ति च'' (ब्र.सू. 4-1-3) इत्यादि श्रुतिस्मृतिसूत्रोक्तविधया सर्वभून्तरात्मत्वेन प्रत्यक्षितपरमात्म[3]त्वरूपं कथमेकस्य सकृदुपात्तस्य सर्वभूतात्मशब्दस्यार्थद्वयपरत्वम्? उच्यते - एकस्यापि सर्वभूतात्मशब्दस्य कृतैकशेषस्य बहुवचनान्तस्य निर्देशात् भिन्नार्थकानामपि शब्दानां सरूपाणामेकशेषविधानात् यथोक्तार्थपरत्वोपपत्तिः। अनेन ब्रह्मरुद्रयोः सर्वभूतान्तरात्मत्वेन प्रत्यक्षितमत्स्वरूपत्वेन ''प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः'' (भगी. 7-17) ''ज्ञानी त्वात्मैव मे मतम्'' (भ.गी. 7-18) इति मदुक्तरीत्या निरतिशयमत्प्रीतिविषयत्वात् मच्छरीरत्वाच्च तद्विषये कृतोऽपराधो मय्येव पर्यवस्यतीत्यभिप्रेतम्। एवं च ब्रह्मरुद्रपरौ सर्वभूतात्मशब्दौ सर्वभूतेष्वात्मा परमात्मा ययोस्ताविति व्यधिकरणबहुव्रीही वेदितव्यौ। एवम्भूतानां त्रयाणां यः पुमान् भिदां न पश्यति ईश्वरास्त्रय इति

---

1--1. A,B,T omit 2. A,T स्व 3. A,B,T स्व

न पश्यति अपि त्वेक एव ब्रह्मरुद्ररूपेण स्वावताररूपेण च स्थित इति पश्यतीत्यर्थः। पूर्वापरानुगुण्यात् प्रमाणान्तरानुरोधाच्च। हे ब्रह्मन्! स सर्वात्मकब्रह्मदर्शी शान्तिं मनःप्रशान्तिम् अधिगच्छति। शान्त्यधिगमद्वारा मुक्तो भवेदित्यर्थः ॥ ५४ ॥

दक्षाध्वरप्रसङ्गमुपसंहरति मैत्रेयः - **एवमिति**। भगवतैवमादिष्टः प्रजापतीनां पतिः, प्रजापतिः ब्रह्मा पतिर्यस्य इति वा दक्षः। स्वेन स्वकर्तृकेन क्रतुना हरिमर्चयित्वा[1] स्वेन त्रिकपालवैष्णवयागेन हरिमर्चित्वेति वा उभयतो देवान् दिविष्ठान् भूमिष्ठाश्च अयजत्। स्वस्वभागादिभिर्यथायोग्यमाराधितवानित्यर्थः ॥ ५५ ॥

**विज०** एतदेव स्पष्टयति - **स** इति। हे द्विज! दक्ष! योऽहमेवं त्रिरूपः स एवाहं सत्त्वादिगुणमयीम् आत्ममायां मदधीनजडप्रकृतिमाविश्य रजोगुणोपादनत्वेन ब्रह्माणं सृष्ट्वा ब्रह्माख्यमद्रूपेण तं प्रविश्य जगत् सृजन्, सत्त्वगुणप्रवर्तकत्वेन विष्णुरूपेण विश्वं रक्षन्, तमोगुणोपादनत्वेन शिवं सृष्ट्वा शिवाख्यमद्रूपेण तं प्रविश्य विश्वं, हरन्, संहरन् तत्तत्क्रियोचिताः संज्ञाः अभिवृद्धिहेतुत्वात् ब्रह्मनाम। सविलासव्याप्तिहेतुत्वाद्विष्णुनाम। संहारहेतुत्वाद्धरनामेति दध्र इत्यन्वयः। अनेन ब्रह्मरुद्रस्यमद्रूपाभ्यां विष्णुरूपेण चाहमेव जगत्सृष्ट्यादित्रयकृदित्यतो ब्रह्मशिवयोः प्रसिद्धयोः सृष्टिसंहारकर्तृत्ववचनं भ्रान्तिमूलमित्युक्तं भवति॥ ५१ ॥

एतदेव स्पष्टयति - **तस्मिन्निति**। योऽहं विश्वस्य मुख्यकारणं तस्मिन् मयिकेवले प्रकृतिसम्बन्धरहिते। ब्रह्मणि गुणपूर्णेऽद्वितीये समाधिकरहिते परमात्मनि स्थिते सति देहात्मबुद्धिर्देहोऽहमिति बुद्धिः यस्य स तथा। जीवो भूतानि ब्रह्मादीनि भेदेन स्वातन्त्र्येण स्वत एव सृष्ट्यादिप्रवृत्तिमन्ति न केनचिन्नियतानीत्यनुपश्यतीत्यन्वयः। अज्ञ इति हेतुगर्भविशेषणम्। यद्वा भेदेन स्थितानि ब्रह्मादिभूतानि परमात्मन्यनुपश्यतीत्यभेदेनेति शेषः ॥ ५२ ॥

अज्ञानिदर्शनमुक्त्वा ज्ञानिदर्शनप्रकारमाह - **यथेति**। पुमान् जीवः शिरःपाण्यादिषु स्वाङ्गेषु क्वचिदपि पारक्यबुद्धिं यथा न कुरुते किन्तु स्वकीयबुद्धिमेव करोति, एवं मत्परो ब्रह्मादिभूतेषु मामकत्वबुद्धिं करोति न स्वातन्त्र्यबुद्धिम् ॥ ५३ ॥

अतः फलितमाह - **त्रयाणामिति**। हे ब्रह्मन्! एवमुक्तप्रकारेण ममैव स्वातन्त्र्यादन्येषामस्वातन्त्र्यात् ब्रह्मशिवस्थत्वेन ब्रह्मशिवाख्ययोर्मद्रूपयोः पृथक्स्थितस्य विष्ण्वाख्यस्य मद्रूपस्य चेति त्रयाणां त्रित्वसङ्ख्योपेतानामेकभावनामेकरूपाणामेकैश्वर्याणां सर्वभूतात्मनां सर्वभूतान्तर्यामित्वेन यो जीवो भिदां न पश्यति, स शान्तिं मोक्षं गच्छतीत्यन्वयः। यद्वा त्रयाणां ब्रह्मविष्णुशिवाख्यानां सर्वभूतस्वामिनामेकचित्तानां भिदां मिथो विरोधबुद्धिविषयत्वं न पश्यति स शान्तिं स्वस्थबुद्धितया भगवन्निष्ठामाप्नोति। ब्रह्मादिजीवानां

---
1. A,B,T मर्चित्वा

हरिणा भेदवचनस्य का गतिरिति चेन्न, तद्वशत्वतत्प्रियत्वदृष्टि[1] विषयत्वात् । तदुक्तम् -. ''हरेर्वशत्वदृष्टिस्तु भूतानामपृथग्दृशिः । प्रियत्वदृष्टिरथवा ब्रह्मादीनां विशेषतः ।'' (गारुडे) इति ॥ ५४ ॥

शान्तिमधिगच्छतीत्यनेन हरेः स्वात्मोपदेशश्चेत्समाप्तः, परं दक्षेण किमकारीति तत्राह - **एवमिति** । आदिष्ट उपदिष्टः प्रजापतिः दक्षः स्वेन क्रतुना स्वयज्ञेन स्वेच्छया वा भगवतः भगवद्भक्तः स्वांशवतो वा देवानयजत् पूजयामास । उभयत इति पाठे कथमुभयतः सोमतो विष्टरादिभिश्च कथमुभयतः सोमतो हविषश्चेति वा ॥ ५५ ॥

**रुद्रं च स्वेन भागेन ह्युपाधावत्समाहितः ।**
**कर्मणोदवसानेन सोमपानितरानपि ।**
**उदवस्य सहर्त्विग्भिः सस्नाववभृथं ततः ॥ ५६ ॥**

**तस्मा अप्यनुभावेन स्वेनैवावाप्तराधसे ।**
**धर्म एव मतिं दत्त्वा त्रिदशास्त्रिदिवं[2] ययुः ॥ ५७ ॥**

**एवं दाक्षायणी देवी[3] त्यक्त्वा पूर्वकलेवरम् ।**
**जज्ञे हिमवतः क्षेत्रे मेनायामिति शुश्रुम ॥ ५८ ॥**

**तमेव दयितं भूय आवृङ्क्ते[4] पतिमम्बिका ।**
**अनन्यभावैकगतिं[5] शक्तिः सुप्तेव पूरुषम् ॥ ५९ ॥**

**एतद्भगवतः शम्भोः कर्म दक्षाध्वरद्रुहः[6] ।**
**श्रुतं भागवताच्छिष्यादुद्धवान्मे बृहस्पतेः ॥ ६० ॥**

**इदं पवित्रं परमीशचेष्टितं[7] यशस्यमायुष्यमघौघमर्षणम् ।**
**यो नित्यदाऽऽकर्ण्य नरोऽनुकीर्तयेत्[8] धुनोत्यघं कौरव भक्तिभावतः[9] ॥ ६१ ॥**

***सतीं मेनात्मजान्तात ! प्राप्य जायाम्भवः पुनः ।**
**तया मैथुनमारभ्य रेमे देवः समाः शतम् ॥**

---

1. A.adds स्तुति 2. A,B,G,I,J,M,Ma,Ms,T. °स्ते 3. A,B,G,I,J,M,Ma,Ms,T. हित्वा सती 4. M,Ma,Ms °स्त्ववाप 5. M,Ma,Ms °ति 6. M,Ma,Ms रहस्यं 7. M,Ma,Ms °मे° 8. M,Ma,Ms तु कीर्तयेद्बुधो 9. M,Ma,Ms भावितः W. भावनः * These four additional verses are found in vijaya only along with their commentaries.

स्ववीर्यधारणोऽकल्यां ज्ञात्वा जायां स धूर्जटिः ।
उत्ससर्जाम्बरे रेतो गङ्गा जग्राह तन्नदी ॥

पीत्वाम्तरजरं वह्निश्चच्छर्द शरकानने ।
कुमारोऽभूत्ततस्तस्मै स्तन्यं षट्कृत्तिका ददुः ॥

षड्भिर्मुखैस्स्तनं पीत्वा स बालः षण्मुखोऽभवत् ।
ततश्चक्रुः सैन्यपालं सर्वासुरभयङ्करम् ॥

इति श्रीमद्भागवते महापुराणे अष्टादशसाहस्र्यां
श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां
चतुर्थस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥

**श्रीध० रुद्रमिति** । स्वेन भागेन यज्ञावशिष्टेन उदवस्यते समाप्यतेऽनेनेत्युदवसानं तेन कर्मणा सोमपानितरानप्युपाधावत्[1] इत्यनुषङ्गः । ततश्चोदवस्य कर्म समाप्यावभृथरूपं यथा भवति तथा स्नातवान् ॥ ५६ ॥

**तस्मै इति** । स्वेनैवानुभावेन आप्तराधसे प्राप्तसिद्धये [2-]तस्मा अपि[-2] ॥ ५७, ५८ ॥

**तमिति** । आवृक्तः भजते स्म । अनन्यभावानां [3-]स्वतमन्येकनिष्ठानाम्[-3] एकैव गतिः यस्य तम् । [4]केवलप्रलयकाले सुप्ता शक्तिरीश्वरमिव ॥ ५९ ॥

**एतदिति** । बृहस्पतेः शिष्यात् [5]मे मया श्रुतम् ॥ ६० ॥

**इदमिति** । [6-]परं पवित्रं य आकर्ण्य तथाऽनुकीर्तयेत्[-6] । हे कौरव ! विदुर ! स आत्मनः परस्याप्यघं संसारव्यसनं सर्वदा धुनोति ॥ ६१ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे
श्री श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां सप्तमोऽध्यायः ॥ ७ ॥

---

1. A adds अयजत् 2. V omit 3. B,J,V,Va omit 4. B,J,V,Va omit केवल 5. A,J,Va omit मे 6–6. B,J,V,Va omit

**वीर०** तथा समाहितचित्तः रुद्रं च स्वेन भागेन उच्छेषणरूपेण भागेन उपाधावत् अन्ववर्तत अयजदित्यर्थः। उदवस्यते समाप्यते अनेनेत्युदवसानं तेन [1]समाप्तिकर्मणा सोमपान् इतरानसोमपांश्च देवान् उपाधावदित्यनुषङ्गः॥ ५६॥

ऋत्विग्भिः सहोदवस्य कर्मसमाप्य अवभृथरूपं यथा भवति तथा सस्नौ स्नातवान् स्वेनैवानुभावेन [2]प्रभावेन अवाप्तराधसे प्राप्तसिद्धये तस्मै दक्षायापि धर्मविषये एव बुद्धिं दत्त्वा अस्य मतिर्धर्मासक्ता स्यादित्यनुगृह्येत्यर्थः। ते त्रिदशा देवा दिवं ययुः॥ ५७॥

प्रकृतं परमप्रकृतेन सङ्गमयति - **एवमिति**। एवमुक्तरीत्या दाक्षायणी सती पूर्वशरीरं हित्वा हिमवतः क्षेत्रभूतायां मेनायां जज्ञे उद्बभूवेति शुश्रुम पराशरादिभ्य इति शेषः। अनेन स्वोक्तेः प्रामाण्यं सूचितम्॥ ५८॥

भूयो द्वितीये जन्मनि अम्बिका पार्वती अनन्यभावा पतिपारार्थ्यज्ञानवती एकगतिम् एका अम्बिकैव गतिः प्रवृत्युपायो यस्य तं तामेव चिन्तयन्तमत एव दयितं प्रीतिविषयं तमेव [3]रुद्रं पतिमावृङ्क्ते भजति स्म। यथा प्रलयकाले पूरुषं [4]परमपूरुषं [5]सुप्ता लीना शक्तिः [6-]चिदचिदात्मिका शक्तिः[-6] [7]चिदचिच्छक्ती प्रलये लीने पुनः सृष्टिदशायां तत्प्रकारैकस्वभावे तदधीने तथा आवृङ्क्ते स्मेति भावः॥ ५९॥

उक्तायाः कथायाः साम्प्रदायिकतामाह - **एतदिति**। दक्षाध्वरद्रुहः दक्षाध्वरविनाशिनः भगवतः शम्भोरेतच्चरितं बृहस्पतेः शिष्यात् भागवतात् उद्धवात् मे मया श्रुतम्॥ ६०॥

उक्तायाः कथायाः श्रवण[8]श्रावणादिफलमाह - **इदमिति**। परमेशचेष्टितं परो मा न यस्मात् स परमो भगवान् स एवेशो यस्य तस्य रुद्रस्य चेष्टितं परमेशयोश्चेष्टितमिति वा। यशस्यं यशस्करमायुष्यम् [9]आयुष्करं पवित्रमत एव अघौघमर्षणं पापनिचयनिवर्तकं यः पुमानाकर्ण्य तथा यथाश्रुतमनुकीर्तयेत् श्रावयेत् सर्वदा भक्तिभावनः भक्तिं भावयतीति भक्तिभावनः भगवद्भक्तिनिष्ठः। द्वितीयान्तपाठे चेष्टितविशेषणम्। हे कौरव! अघं धुनोति क्षिपति नाशयतीत्यर्थः॥ ६१॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां सप्तमोऽध्यायः॥ ७॥

---

1. A,T omit समाप्ति 2. A,B,T omit प्रभावेन 3. A,B,T omit रुद्रं 4. A,B,T omit परमपुरुषं 5. W. omit सुप्ता 6--6. A,B,T omit 7. A,B,T चिच्छक्तिः 8. A,B,T omit श्रावण 9. A,B,T omit आयुष्करं

**वीज०** उपाधावदुपास्त ततो निरपराधत्वेन शुद्धश्चाभूत्, ''धावु[1] गतिशुद्ध्यो''रिति धातुः। उदवसानेन समाप्तीष्टिलक्षणेन कर्मणा ''आग्नेयं पञ्चकपालमुदवसानीयं निर्वपेत्'' इति श्रुतेः। सोमपानिति पाणिनेरपि सर्वज्ञेन व्यासेन प्रयुक्तत्वात् विच्प्रत्ययः प्रायिक इति ज्ञातव्यम्। इतरानसोमपानित्यर्थः। उदवस्य समाप्तीष्टिं कृत्वा स्वेनानुभावेन भगवन्महिम्नैवावाप्तराधसे प्राप्तयज्ञसिद्धये॥ ५६, ५७॥

ननु दक्षकोपेन योगमुक्तदेहया दक्षपुत्र्या सत्या देव्या निवृत्तिलक्षणा मुक्तिरवापीति न युज्यते, भर्तुः शिवस्यामुक्तदेहत्वात् सतीनामङ्गनानां भर्तृभिस्सह मुक्तिश्रवणात्, अतोऽनया किमकारीत्याशङ्कां हृद्गतां परिहरति - **एवमिति**। क्षेत्रे भार्यायाम्॥ ५८॥

अत्र निमित्तमाह - **अनन्यभावेति**। एकः शङ्करो गतिः यस्यास्सा तथा। अनन्यभावत्वात् अन्यभक्तिरहितत्वात्। अस्मिन्नर्थे दृष्टान्तमाहशक्तिरिति। प्रलये सुप्ता हरावेव रता। सृष्टिव्यापारं विना स्थिता। शक्तिर्भार्या लक्ष्मीः पूरूषं विष्णुमिव[2] यथा भजति तथेत्यर्थः। तदुक्तम् - ''शक्तित्वाद्विष्णुशक्तिस्तु शक्तिशब्देन चोच्यते। शक्यत्वात्प्रकृतिश्चापि स्वापः सृष्टिं विना हरौ। रतिस्तस्यास्तु कथितो न ह्यन्यः स्वाप इष्यते।'' (तन्त्रसारे) इति॥ ५९॥

भवतेदं कस्मात् श्रुतमिति तत्राह - **एतदिति**। बृहस्पतेः शिष्यादवताराच्च दक्षस्याध्वरं यज्ञं द्रोहितवान् हिंसितवान् नाशितवानिति। दक्षाध्वरध्रुक् तस्य॥ ६०॥

सम्प्रदायवचनमुक्त्वा तच्छ्रवणादिफलमाह - **इदमिति**॥ ६१॥

शङ्करः स्वां सतीमवाप्य किमकार्षीदिति तत्राह - **सतीमिति**। शतमित्युपलक्षणं, वह्वीः समा इत्यर्थः।

अनेन रेत उत्सर्जनावधिस्सूचितः। तत्र कुत्रेदमुत्ससर्ज ? तस्यां देव्यामुतान्यत्र। न प्रथमः, प्राप्तपरित्यागे कारणाभावात्। न द्वितीयः, अनुपपत्तेरिति तत्राह - **स्ववीर्येति**। अकल्पामसमर्थाम् अनेन असामर्थ्यकारणमुक्तं भवति इयमेव वोपपत्तिः - आकाशस्य नीरूपत्वेन तद्धारणायोगात् अधः पतत्तद्रेत आकाशनदी गङ्गा जग्राहेत्याह - गङ्गेति॥

गङ्गाया अप्यशक्तिं निरीक्ष्य वह्निः, तत्पीत्वा स्वान्तरजीर्णं स्वाहाद्वारेण नदीतीरे शरकानने चच्छर्देत्याह - **पीत्वेति**।

---

1. M,Ma धव 2. A,B omit विष्णुम्

स्वाहाद्वारेणेति कस्मात् कल्प्यत इत्यत आचार्यैर्भारतोक्तेरित्युक्तेः भारतस्य निर्णायकग्रन्थत्वात्। अमोघरेतसो हरस्य वीर्यं निष्फलं भवितुं नार्हति। अत्र तु उपगमादि निष्फलमिव प्रतीयते इति तत्राह - कुमार इति। ततो रेतसः मातृरहितस्य कुमारस्य स्तनपानं कथमत्राह - तस्मादिति॥

एकेन मुखेन षट्कृत्तिकास्तनपानं कथं घटत इति तत्राह - षड्भिरिति। किमधिकारः कुमारे इति तत्राह - तत इति। सुरा इति शेषः। सर्वासुराणां भयं भीतिं स्वस्थानच्युतिं च करोतीति॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां

टीकायां सप्तमोऽध्यायः ॥ ७ ॥



# अष्टमोऽध्यायः

## मैत्रेय उवाच

**सनकाद्या नारदश्च ऋभुर्हंसोऽरुणिर्यतिः।**

**नैते गृहान् ब्रह्मसुता [1]ह्यवसन्नूर्ध्वरेतसः ॥ १ ॥**

**मृषाऽधर्मस्य भार्याऽऽसीद्दम्भं मायां च शत्रुहन्।**

**असूत मिथुनं [2]तच्च निर्ऋतिर्जगृहे[3]ऽप्रजः ॥ २ ॥**

**तयोः समभवल्लोभो निकृतिश्च महामते।**

**ताभ्यां क्रोधश्च हिंसा च [4]यद्दुरुक्तिः स्वसा [5]कलेः ॥ ३ ॥**

**दुरुक्तौ कलिराधत्त भयं मृत्युं च सत्तम!**

**तयोश्च मिथुनं जज्ञे यातना निरयस्तथा ॥ ४ ॥**

## श्रीधरस्वामिविरचिता भावार्थदीपिका

[6]मनुकन्यान्वये प्राप्ता दक्षयज्ञकथोदिता। मनुपुत्रान्वये प्राप्ता ध्रुवचर्याऽथ पञ्चभिः॥

अष्टमे गुरुदारोक्तिरोषमत्सरतः पुराद्। निर्गतेन ध्रुवेणाह तपसा तोषणं हरेः॥

एवं तावत् मनुकन्याऽन्वयो तत्रैव मरीच्यादीनां ब्रह्मपुत्राणां वंशा वर्णिताः। तत्रावशिष्टं किञ्चिदाह - **सनकाद्या** इति। नावसन् [7]नाश्रिताः ऊर्ध्वरेतसो नैष्ठिकाः [8]अतः तेषां वंशो नास्ति॥ १ ॥

अधर्मोऽपि ब्रह्मपुत्रः, तस्य वंशमाह - **मृषेति** चतुर्भिः। दम्भः परप्रतारणं, माया तदुचिता चेष्टा, तयोः सोदरयोरपि दाम्पत्यमधर्मांशतया। एवमुपर्यपि। अप्रजोऽपुत्रः॥ २ ॥

---

1. A, B, G, I, J ह्या° 2. A, B, G, I, J, M, Ma, Ms, T तत्तु 3. Ms °जाः 4. M, Ma दुरुक्तिश्च तयोः; Ms या दुरुक्तिः स्वसा 5. A, G. I, M, Ma, Ms कलि· 6. A, B, J, Va दक्ष 7. A adds किन्तु 8. A adds आसन्

**तयोरिति**। निकृतिः शठता यत् याभ्यां कलिश्च तस्य स्वसा दुरुक्तिश्चेत्यर्थः ॥ ३ ॥

**दुरुक्ताविति**। यातना तीव्रवेदना ॥ ४ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं[1] "प्रसूतिं मानवीं दक्ष उपयेमे ह्यजात्मजः। तस्यां ससर्ज दुहितॄः षोडशामललोचनाः ॥" (भाग.4-1-47)

इत्यादिना प्रसूतिवंशमुपक्रम्य तत्प्रसक्तानुप्रसक्तमभिहितम्। एवं तावन्मनु कन्यान्वयो वर्णितः। अथ मनुपुत्रान्वयं विवक्षुरनुसर्गकथनेऽवशिष्टं किञ्चिदाह - **सनकाद्या** इति। यतिरिति प्रत्येकं सनकादिविशेषणम्। तन्त्रेणोपात्तं प्रत्येकाभिप्रायेणैक-वचनान्तनिर्देशः, अरुणिविशेषणं वा प्रत्यासत्तेः। एते ब्रह्मपुत्राः गृहान् गृहाश्रमान् नाऽवसन् नाऽऽश्रिताः। तत्र हेतुः - ऊर्ध्वरेतसः नैष्ठिकाः अतस्तेषां वंशो नास्तीति ॥ १ ॥

अधर्मोऽपि ब्रह्मपुत्रः तस्य वंशमाह - **मृषेति** चतुर्भिः। अधर्मस्य भार्या मृषा, दम्भः परप्रतारणं माया तदुचिता चेष्टा एतदुभयात्मकं मिथुनम् असूत प्रसूतवती। हे शत्रुहन्! सोदरयोरपि मायादम्भयोः दाम्पत्यमधर्मांशतया, एवमुपर्यपि द्रष्टव्यम्। तच्च दम्भमायात्मकं मिथुनं अप्रजोऽपुत्रो निर्ऋतिः जगृहे गृहीतवान्। दम्भे पुत्राभिमानं मायायां स्नुषाभिमानं च कृतवानित्यर्थः ॥ २ ॥

हे महामते! तयोः माया दम्भयोः लोभः निकृतिः शठता च समभवत्[2]। ताभ्यां निकृतिलोभाभ्यां क्रोधोऽमर्षो हिंसा च समभवदित्यनुषङ्गः। यत् याभ्यां क्रोधहिंसाभ्यां कलिश्च तस्य स्वसा भगिनी दुरुक्तिश्च समभवत् ॥ ३ ॥

दुरुक्तौ कलिः भयं भीतिं मृत्युं च आधत्त उत्पादयामास। हे सत्तम! ताभ्यां भीतिमृत्युभ्यां यातना स्त्री निरयः पुमान् एतदुभयात्मकं मिथुनं जज्ञे ॥ ४ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

संसारविरक्तस्य पुंसः श्रीनारायणश्रीपादपद्मामूलमेव शरणमिति निरूपयति अस्मिन्नध्याये। तत्र परमभागवतस्य ध्रुवस्य चरित्रमनुवर्णयितुं हेयत्वेनाधर्मवंशानुचरितमाह - **सनकाद्या** इति। गृहान्नावसन् गृहस्थाश्रमं नाभजन्नित्यर्थः। ऊर्ध्वरेतस इत्यनेन सन्यासाश्रमं सूचयति ॥ १ ॥

---

1. A, T omit एवं 2. A, B, T omit समभवत्

अप्रजः सन्ततिरहितः ॥ २,३,४ ॥

*एते ह्यधर्मवृक्षस्य वंश्यास्संसृतिहेतवः[1] ।
श्रेयस्कामो न सेवेत नितरामाश्रमोत्तमी[2]॥ ५ ॥

सङ्ग्रहेण मयाऽऽख्यातः प्रतिसर्गस्तवानघ[3] !
त्रिः श्रुत्वैतं[4] पुमान् पुण्यं विधुनोत्यात्मनो मलम् ॥ ६ ॥

अथातः कीर्तये वंशं पुण्यकीर्तेः कुरूद्वह !
स्वायम्भुवस्यापि मनोर्हरेरंशांशजन्मनः ॥ ७ ॥

प्रियव्रतोत्तानपादौ* शतरूपापतेः सुतौ ।
वासुदेवस्य कलया रक्षायां जगतः स्थितौ ॥ ८ ॥

जाये उत्तानपादस्य सुनीतिः सुरुचिस्तयोः ।
सुरुचिः प्रेयसी पत्युर्नेतरा यत्सुतो ध्रुवः ॥ ९ ॥

श्रीध० **सङ्ग्रहेणेति** । प्रतिसर्गोऽनुसर्ग एव । यद्वा प्रतिसर्गः प्रलयः, अधर्मस्य प्रलयहेतुत्वात् प्रतिसर्गत्वम्[5] । [6-]एतदन्तम्[-6] अधर्मवंशम् । पुण्यमिति वर्जनद्वारा पुण्यहेतुत्वात् ॥ ५, ६ ॥

**अथेति** । मनोः पुत्रवंशं हरेरंशो[7] ब्रह्मा तस्यांशाद्देहार्धाज्जन्म । यस्य ॥ ७ ॥

**प्रियव्रतेति** । जगतो रक्षायां स्थितौ ॥ ८ ॥

**जाये इति** । सुनीतिः सुरुचिश्च जाये । तयोर्मध्ये इतरा सुनीतिः ॥ ९ ॥

वीर० अधर्मवंशमुपसंहरन् तस्य संसृतिहेतुत्वात् बुभूषुभिः असेव्यतामाह - **एत इति** । अधर्म एव वृक्षस्तस्य वंश्याः वंशे

* It is not found in G, I, but the same verse is printed in Edition A, B, J under foot-note. The verse in question is commented upon by both Veeraraghava and Vijaya waja. Hence the verse is taken into the text giving serial number.

1. M, Ma वंशा; Ms, V शाखा° 2. Ms, T, V °मः 3. M, Ma, अनु 4. A, B, G, I, J, M, Ma, Ms, T, V °तत्पु°

*उत्तानपदौ इति वीरराघवव्याख्यानपाठः । 5. V adds हेतुरेतत् 6--6. V एतं 7. V °शः

भवाः शाखारूपा इति भावः । हि यस्मात् संसृतिहेतवः अतः श्रेयस्कामः स्वर्गापवर्गकामः न सेवेत अधर्मवंश्यानिति शेषः । विभक्तिविपरिणामेन अनुषङ्गो वा । आश्रमोत्तमः उत्तमः आश्रमो यस्य सः चतुर्थाश्रमनिष्ठ इत्यर्थः । आहिताग्न्यादित्वादाश्रम-शब्दस्य पूर्वनिपातः । नितरां न सेवेत ॥ ५ ॥

अथाऽधर्मवंश्यस्य प्रतिसर्गान्तर्भावं वदन् तमुपसंहरन् तच्छ्रवणफलमाह - **सङ्ग्रहेणेति** । हे अनघ ! तव तुभ्यं मया प्रतिसर्गः सङ्ग्रहेणाख्यातः, प्रलयहेतुत्वात् अधर्मवंशस्य प्रतिसर्गत्वम् । एतं धर्मवंशं पुण्यं वर्जनद्वारा पुण्यहेतुत्वात् पुण्यं श्रुत्वा पुमानात्मनः स्वस्य मलं पापं विधुनोति ॥ ६ ॥

एवं कन्यान्वयमभिधायाऽथ मनुपुत्रान्वयं वक्तुमुपक्रमते - **अथात** इति । हे कुरूद्वह ! अथ ''मनोस्तु शतरूपायां तिस्रः कन्याः प्रजज्ञिरे'' (भाग. 4-1-1) इत्युपक्रान्तमनुकन्यान्वयकथनानन्तरम् अत उपक्रान्तस्य वृत्तत्वाद्धेतोः स्वायम्भुवस्य मनोर्वंशं पुत्रान्वयं कीर्तये कथयामीति सम्बन्धः । अत्र मनुकन्यामनुपुत्रवंशकथनयोः पौर्वापर्ये हेतुहेतुमद्भावे च समासव्यासत्वहेतुकस्वेच्छायत्तोपक्रान्तत्वोपक्रमिष्यमाणत्वमेव निबन्धनम् । काकदन्तश्रवणवदश्राव्यत्वशङ्कामपनुदन् मनुं विशिनष्टि । पुण्यकीर्तेः पुण्या शुश्रूषतां पुण्यापादिका[1] कीर्तिर्यस्य । तत्र हेतुः - हरेः अंशांशजन्मनः स्मरणमात्रेण आश्रितदुरितहारिणो भगवतः अंशो ब्रह्मा तस्य अंशाच्छरीराज्जन्म यस्य तस्य हर्यंशांशसम्भूतत्वात् हरिभक्तत्वाच्च हरिचरित्रवन्मनुपुत्रान्वयकथनश्रवणादिकमपि दुरितविनाशनद्वारा पुण्यसम्पादकमित्यर्थः ॥ ७ ॥

प्रतिज्ञातमनुवंशं वर्णयन्ति - **प्रियव्रतोत्तानपादावि**त्यादिना आभूगोलवर्णनात् । प्रियव्रतश्च उत्तानपादश्च तौ, इमे अन्वर्थनामनी[2] । प्रियं भगवत्प्रीतिकरं व्रतं यस्य स प्रियव्रतः । उत्ताने उन्नते पदे[3-3] यस्येति उत्तानपदः[4] । शतरूपापतेर्मनोः सुतौ वासुदेवस्य कलया सर्वान्तरात्मभगवद्गुणविशेषाविर्भावेन जगतो रक्षायां स्थितौ ॥ ८ ॥

तयोर्मध्ये[5] य उत्तानपादः तस्य सुनीतिः सुरुचिश्चेति जाये भार्ये । तयोः सुनीतिसुरुच्योः मध्ये सुरुचिः पत्युरुत्तानपादस्य प्रेयसी नितरां प्रीतिविषया । इतरा सुनीतिस्तु न प्रेयसी । यत्सुतः यस्याः अप्रेयस्याः सुनीतेः सुतः पुत्रः ध्रुवः ॥ ९ ॥

**विज०** अत्र मायादयः स्त्रियोऽन्ये पुमांसः संसारहेतवो हि यस्मात् तस्मात् श्रेयस्कामः एतान् न सेवेतेत्यन्वयः । आश्रमोत्तमी सन्न्यासी ॥ ५ ॥

---

1. A, B, T पवित्रा  2. A, B, T नामानौ  3--3. A, B, T उत्तानौ उन्नतौ पादौ  4. A, B, T पादः ।  5. A, B, T add अग्रजः

मयाऽऽख्यात अनुसर्ग इत्यत्र सन्ध्यभावः। सङ्ग्रहोक्त्याल्पत्वं न ज्ञातव्यम्। महानयं ग्रन्थबहुलत्वाल्लोके दृश्यमानत्वाच्चेति प्रदर्शनार्थ इति ज्ञातव्यम्। अस्यानुसर्गस्य श्रवणफलमाह - त्रिः श्रुत्वेति। आत्मनो मनसो मलं विधुनोति निरस्यति॥ ६॥

वक्तव्यायाः कथायाः समाप्तत्वादतः परं किं वक्तव्यमिति तत्राह - **अथात** इति। अथेत्यनेन पूर्वस्माद्वक्ष्यमाणस्यार्थस्य मङ्गलत्वं वक्ति। यतोऽधर्मादिकं हेयमत उपादेयं कथयामीत्यत इति। अपिशब्देन वंशस्यानल्पत्वं श्रुतिस्मृतिभ्यां सम्भावितत्वमाह - हरेरिति। हरेरंशांशेन विशेषावेशेन संहितं जन्म यस्य स तथा तस्य। "आविष्टा हरिणा जीवा ब्रह्मा दक्षो मनुः पृथुः। शक्राद्या ऋषयश्चैव मात्स्यव्यासादयो हरिः" (ब्रह्मवैवर्ते) इति॥ ७॥

प्रियव्रतोत्तानपदोर्मनुपुत्रत्वेन पूर्वमुक्तयोः पुनरत्रोक्तिर्वंशस्यादित्वज्ञापनाय अनुवदति - **प्रियव्रतेति**। वासुदेवस्य राजराजाख्यस्य कलया सन्निहितौ तदुक्तम् - "प्रियव्रतोत्तानपादप्रमुखेषु हरिः स्वयम्। आविष्टसर्वभूतेषु ऋषभाद्याः स्वयं हरिः॥" (हरिवंशे) इति॥ ८॥

प्रियव्रतोत्तानपदोर्मध्ये प्रियव्रत[1]विक्रमस्य प्रथमं वक्तव्यत्वे सति उत्तानपादपुत्रस्य ध्रुवस्यातिरमणीयत्वेन विरक्तिभक्ति-जनकत्वेन श्रोतुः श्रद्धाजनकत्वेन भगवदुपास्तौ क्षिप्रप्रवृत्तिजनकत्वेनाऽऽश्चर्यबुद्धिजनकत्वेन च प्रथमं तच्चरितं वक्तुमुपक्रमते - **जाये** इति। यस्याः सुनीतेः सुतः॥ ९॥

**एकदा सुरुचेः पुत्रमङ्कमारोप्य लालयन्।**
**उत्तमं नारुरुक्षन्तं ध्रुवं राजाऽभ्यनन्दत॥ १०॥**

**तथा चिकीर्षमाणं तं सपत्न्यास्तनयं ध्रुवम्।**
**सुरुचिः शृण्वतो राज्ञः सेर्ष्यमाहातिगर्विता॥ ११॥**

**न वत्स नृपतेर्धिष्ण्यं भवानारोढुमर्हति।**
**न गृहीतो मया यत्त्वं कुक्षावपि नृपात्मजः[2]॥ १२॥**

**बालोऽपि[3] बत नात्मानमन्यस्त्रीगर्भसम्भृतम्।**
**नूनं वेद भवान् यस्य दुर्लभेऽर्थे मनोरथः॥ १३॥**

---

1. Ma व्रतस्य 2. M, Ma, Ms °ज! 3. A, B, G, I, J, M, Ma, Ms, T °ऽसि

**तपसाऽऽराध्य पुरुषं तस्यैवानुग्रहेण मे।**
**गर्भे त्वं साधयात्मानं यदीच्छसि नृपासनम्॥ १४॥**

**मैत्रेय उवाच**

**मातुः सपत्न्याः स[1] दुरुक्तिविद्धः श्वसन् रुषा दण्डहतो यथाऽहिः।**
**हित्वा मिषन्तं पितरं सन्नवाचं जगाम मातुः प्ररुदन्[2] सकाशम्॥ १५॥**

**तं निश्वसन्तं स्फुरिताधरोष्ठं सुनीतिरुत्सङ्ग उदूह्य[3] बालम्।**
**निशम्य तत्पौरमुखान्नितान्तं सा विव्यथे यद्गदितं सपत्न्या[4]॥ १६॥**

**श्रीध०** तयोः प्रियाप्रियत्वे प्रपञ्चयन् ध्रुवचरित्रमाह पञ्चभिरध्यायैः - **एकदेति**। सुरुचेः पुत्रमुत्तमसंज्ञं लालयन्[5]॥ १०॥

**तथेति**। तथा अङ्कारोहणं चिकीर्षमाणम्॥ ११॥

गर्वोक्तिमेवाह[6] त्रिभिः - **नेति**। नृपतेर्धिष्ण्यमासनं नृपात्मजोऽपि भवान्नारोढुमर्हति॥ १२, १३॥

**तपसेति**। पुरुषमीश्वरम्॥ १४॥

**मातुरिति**। मिषन्तं पश्यन्तम्। सन्नवाचं कुण्ठितवाचम्॥ १५॥

**तमिति**। उदूह्य[7]ऽऽरोप्य अन्तःपुरजनमुखाच्छ्रुत्वा॥ १६॥

**वीर०** तत्र सुनीत्या अप्रेयस्त्वमेव प्रपञ्चयन् तत्सुतध्रुवचरित्रमाह - **एकदेत्यादिना पञ्चभिरध्यायैः**। एकदा कदाचित् राजा उत्तानपादः सुरुचेः पुत्रमुत्तमसंज्ञमारुरुक्षन्तम् अङ्कमारोढुमिच्छन्तम् अङ्कमारोप्य उत्सङ्गे निपाद्य[8] लालयन् तथा चिकीर्षमाणम् अङ्कारोहादिकर्तुमिच्छन्तं[9] सपत्न्याः सुनीतेः तनयं तं ध्रुवं नाभ्यनन्दत्। यद्वा उत्तममङ्कमारोप्य लालयन् अङ्कमारुरुक्षन्तं ध्रुवं नाभ्यनन्दतेति सम्बन्धः। सुरुचिः राज्ञोऽभिप्रायज्ञा तथा चिकीर्षमाणं तं ध्रुवं प्रति राज्ञः शृण्वतः सतः अतिगर्विता सती अत एव सेर्ष्यं क्षमारहितं यथा भवति तथा आह उवाच॥ १०, ११॥

---

1. B, J, M, Ma सु॰　2. M, Ma स; Ms सु॰　3. J, Ma उदुह्य　4. J सपत्न्याः　5. Va पा॰　6. V °माह　7. J, Va °दु॰　8. A, B, T निधाय　9. A, T °त

गर्वोक्तिमेवाह - **न वत्सेति** त्रिभिः। हे वत्स ! नृपतेर्धिष्ण्यमासनमारोढुं भवान्नार्हति। नृपात्मजोऽहमारोढुमर्ह एव, तत्राह - त्वं नृपात्मजोऽपि यद्यस्मात् मया कुक्षौ न गृहीतः न धृतः मद्गर्भज एव नृपासनार्ह इत्यभिप्रायः ॥ १२॥

त्वं मया कुक्षौ न गृहीत इत्यहमेव न वेद्मि अपि तु भवानपि वेदेत्याह - **बालोऽपीति**। भवान् बालोऽप्यात्मानमन्यस्त्रीगर्भसम्भृतं मत्सपत्नीगर्भधृतं न वेद बत न वेद किम् ? अपितु वेदैवेत्यर्थः। नूनमिति निश्चये। यद्वा बालो भवान्न जानाति अहं तु वेद्मीत्याह - बाल इति। अपिस्त्वर्थकः भवानित्यनेन सम्बध्यते बाल इति हेतुगर्भं, भवांस्तु बालत्वादात्मानमन्यस्त्रीगर्भसम्भृतं न वेद अहं तु वेद्मीत्यभिप्रायः। अतो यस्य तव दुर्लभे लब्धुमयोग्ये, अर्थे नृपासनारोहणरूपेप्यर्थे मनोरथ आसीदित्यर्थः। बतेत्याश्चर्ये॥ १३॥

यदि दुर्लभोऽर्थो मया साध्य इति तवाऽऽग्रहः तर्ह्येवं साधयेत्याह - **तपसेति**। यदि त्वं नृपासनमिच्छसि तर्हि तपसा पुरुषं परमपुरुषमाराध्य तस्याराधितस्य परमपुरुषस्यानुग्रहेणैव न तु उपायान्तरेणेत्यर्थः। मे मम गर्भे आत्मानं साधय आत्मनो मद्गर्भे उत्पत्तिं साधयेत्यर्थः॥ १४॥

एवमुक्तो ध्रुवः किमकरोदित्यत्राह मैत्रेयः - **मातुरिति**। सपत्न्या मातुः दुरुक्तेन दुर्वचसा भावे क्तः। विद्धः ताडितो ध्रुवः दण्डेन हतः सर्पो यथा तथा रुषा श्वसन् श्वासं मुञ्चन् मिषन्तं पश्यन्तं सन्नवाचं [1]कुण्ठितवाचं पितरं हित्वा प्ररुदन् नितरामश्रूणि विमुञ्चन् मातुर्जनन्याः सुनीतेः समी[2]पं जगाम॥ १५॥

तं सकाशमागतं निश्वसन्तं स्फुरितः कम्पितः अधरोष्ठो येन तं बालं ध्रुवं सपत्न्या [3]यत् गदितं सा सुनीतिः उत्स[4]ङ्गम् उदूह्य [5]अङ्कम् आरोप्य पौरमुखादन्तःपुरजनमुखात् निशम्य श्रुत्वा नितान्तं नितरां विव्यथे व्यथितवती॥ १६॥

**विज०** सुनीतिः कथं पत्युः **प्रेष्ठा** नाभूदिति ज्ञायत इति तं प्रकारं वक्ति - **एकदेति**। नाम्नोत्तमम् आरुरुक्षन्तमङ्कमारोढुकामम्॥ १०॥

तथा चिकीर्षमाणमङ्कमारोढुमिच्छन्तं सपत्न्याः सुनीतेः सेर्ष्यमिति क्रियाविशेषणम्॥ ११॥

धिष्ण्यं सिंहासनम् अनर्हत्वे निमित्तमाह - **न गृहीत** इति॥ १२॥

नेदमाश्चार्यमित्याह - **बाल** इति। ततः किमिति तत्राह - नात्मानमिति। स्वायोग्यमिच्छन् यतिष्यतीति भावेनाह - यस्येति। यस्य तव॥ १३॥

1. A, B, T सङ्कुचितवाचं 2. A, B, T °पे 3. A, B, T omit यत् 4. A, B, T °ङ्के 5. A, B, T °ङ्के

तर्हि त्वत्पुत्रभावित्वे किङ्कर्तव्यमत्राह - **तपसेति**। पुरुषं विष्णुम्॥ १४॥

ध्रुवः सपत्न्याः सुरुच्याः वाक्यं श्रुत्वा किमकार्षीदिति तत्राह - **मातुरिति**। मिषन्तं पश्यन्तं सन्नवाचं तूष्णीम्भूतम्, आमिषं हित्वा मातुरिव स्थितस्य बिलस्य सकाशमहिरिवेति वा॥ १५॥

अस्यामवस्थायां सुनीत्या किमकारीति तत्राह - **तं निःश्वसन्तमिति**॥ १६॥

**सोत्सृज्य धैर्यं विललाप शोकदावाग्निना[1] दग्धलतेव[2] बाला।**
**वाक्यं सपत्न्याः स्मरती सरोजश्रिया दृशा बाष्पकलामुवाह॥ १७॥**

**दीर्घं श्वसन्ती वृजिनस्य पारमपश्यती बालकमाह बाला।**
**माऽमङ्गलं तात[3]! परेषु[4] मंस्था भुङ्क्ते जनो यत्परदुःखदस्तत्॥ १८॥**

**सत्यं सुरुच्याभिहितं भवान् मे यद्दुर्भगाया उदरे गृहीतः।**
**स्तन्येन वृद्धश्च विलज्जते यां भार्येति वा वोढुमिडस्पतिर्माम्॥ १९॥**

**आतिष्ठ तत्तात विमत्सरस्त्वमुक्तं समात्राऽपि[5] यदव्यलीकम्।**
**आराधयाऽधोक्षजपादपद्मं यदीच्छसेऽध्यासनमुत्तमो यथा॥ २०॥**

**[6]यस्याङ्घ्रिपद्मं परिचर्य विश्व विभावनायात्तगुणाभिपत्तेः।**
**अजोऽध्यतिष्ठत्खलु पारमेष्ठ्यं पदं जितात्म[7]श्वसनाभिवन्द्यम्॥ २१॥**

**श्रीध० स इति**। शोक एव दावाग्निस्तेन। दावाग्निग[8]तलतेव स्थिता सा बाला विलापं चकार॥ १७॥

**दीर्घमिति**। वृजिनस्य दुःखस्य अमङ्गलमपराधं परेषु मा मंस्थाः। यद्यतः परेभ्यो दुःखं ददाति यः सः[9] स्वदत्तमेव दुःखं भुङ्क्ते॥ १८॥

**सत्यमिति**। [10-]दुर्भगाया उदरे[-10] गृहीतः तस्या[11] एव स्तन्येन वृद्धश्च। दुर्भगत्वमेवाह - यां मामिडस्पतिर्भूपतिर्भार्येति वोढुं स्वीकर्तुं विलज्जते, वाशब्दात् दासीत्यपि॥ १९॥

1. A, B, G, I, J, M, Ma, Ms T दाव° 2. M, Ma दग्धा 3. T बाल! 4. A, G, I, M, Ma, Ms, T °षु मं° 5. M, Ma सु°; Ms, V स्व° 6. M, Ma, Ms यत्पाद° 7. M, Ma, Ms °त्मा 8. Va गता 9. V omits स. 10--10. A, B, J, Va दुर्भगया मया उदरे 11. Va तया

**आतिष्ठेति**। पितृभार्यात्वेन मात्रा समा मातुः सपत्नी तयापि यदुक्तं "तपसाऽऽराध्य पुरुषम्" (भाग. 4-8-14) इत्यादि तदातिष्ठ कुरु। अध्यासनम् [1-] अधिकं सर्वोत्कृष्टमासनम् [-1]। यदीच्छसि॥ २०॥

**यस्येति**। परिचर्य निषेव्य विश्वस्य विभावनाय पालनायाऽऽत्ता स्वीकृता गुणाभिपत्तिः सत्त्वगुणाधिष्ठानं येन तस्य, जित आत्मा मनः श्वसनः[2] प्राणश्च यैस्तैरभिवन्द्यम्॥ २१॥

**वीर०** व्यथामेवाह - **सेति**। सा सुनीतिर्धैर्यमुत्सृज्य हित्वा विललाप। शोक एव दावाग्निस्तेन दावाग्निना दग्धा लतेव स्थिता सा बाला सुनीतिः सपत्न्याः वाक्यं स्मरन्ती सरोजश्रिया सरोजस्य श्रीरिव श्रीः शोभा यस्यास्तया दृशा बाष्पकलाम् अश्रुकणिकामुवाह दधार॥ १७॥

सपत्नीगदितव्यथया दीर्घं यथा तथा श्वासं मुञ्चन्ती वृजिनस्य दुःखस्य पारमवधिमपश्यन्ती अपारदुःखाक्रान्तेत्यर्थः, बाला सुनीतिः बालकं ध्रुवमाह - हे तात! अमङ्गलमपराधं परेषु मा मंस्थाः मा स्मार्षीः[3] यत् यस्मात् यो जनः परदुःखदः परेभ्यो दुःखं ददातीति परदुःखदः सः तद्दुःखमेव भुङ्क्ते अनुभवति॥ १८॥

सुरुच्याभिहितं सोपालम्भमनुवदन्त्यात्मजं तपसे चोदयति - **सत्यमिति**। सुरुच्या यदभिहितं तत्सत्यमिति सम्बन्धः। किमभिहितम्? तत्राह - दुर्भगायाः भाग्यहीनायाः मे मया उदरे भवान् गृहीतः मदुदरे जात इत्यर्थः, **न** केवलं जात एव मद्गर्भे, अपि तु तस्या एव मम स्तन्येन स्तनयोर्भवं स्तन्यं तेन वृद्धश्च। दुर्भगत्वमेवाह - इडा भूमिः डलयोरभेदात्। पारस्करादित्वात् सुट्ह्रस्वौ। इडस्पतिः भूपतिः मां भार्येत्यावोढुं स्वीकर्तुं वाचा वक्तुं वा विलज्जते॥ १९॥

हे तात! तस्मात्त्वं विमत्सरः विगतमत्सरः समात्रा समाता मातुः सपत्नी तयापि यदुक्तं - "तपसाऽऽराध्य पुरुषम्" (भाग. 4-8-14) इत्यादि, तदव्यलीकं निर्दोषं यथा भवति तथा आतिष्ठ कुरु। समात्रा यदुक्तमिति सामान्येनोक्तं विशेषनिष्ठं करोति उत्तमो यथा तथा त्वमपि[4] अध्यासनं नृपासनमिच्छसि यदि[5] तर्हि अधोक्षजपादपद्ममाराधय॥ २०॥

किं कश्चिददोक्षजपादपद्ममाराध्य अध्यासनादि[6]स्वाभिलषितमवापेत्यत्र ब्रह्माणं मनुं च निदर्शयति - **यस्येति** द्वाभ्याम्। विश्वविभावनाय विश्वस्य पालनाय आत्तगुणाभिपत्तेः आत्ता स्वीकृता गुणाभिपत्तिः कल्याणगुणाश्रयदिव्यमङ्गलमूर्तिर्येन तस्य,

---

1--1. A. B. J. Va omit 2. V adds वायु° 3. A. B, T का° 4. W omits अपि 5. A, B, T omit यदि 6. A, B. T नृपास°

यस्याधोक्षजस्य जितः आत्मा मनः श्वसनः प्राणवायुर्यैस्तैरभिवन्द्यम् अङ्घ्रिपद्मं परिचर्य आराध्य अजो ब्रह्मा पारमेष्ठ्यं पदं चतुर्दशभुवनानां मध्ये उत्कृष्टं सर्वोपरि वर्तमानं सत्यलोकरूपं स्थानमध्यतिष्ठदधिष्ठितवान् खलु ॥ २१ ॥

**विज०** धातोरनेकार्थत्वात् कीदृशी व्यथा तयाऽकारीति तत्राह - **सोत्सृज्येति** । विलापस्योदरताडनाविनाभूतत्वेन तत्पूर्वकं तया परिदेवितमित्यर्थः । शोकदावाग्निना शोकाख्यवनवह्निना दह्यमानेति शेषः । दावलता वनवल्ली बाष्पकलां नेत्रजलधाराम् ॥ १७ ॥

वृत्या सस्यभक्षणवद्राज्ञा कृतावज्ञानस्यापरिहार्यत्वात् सम्प्राप्तदुःखस्यावसानमाचक्षाणा आत्मनो निर्दुष्टमनस्कत्वं दर्शयन्ती बालं शिक्षयतीत्याह - **दीर्घं श्वसन्तीति** । परदुःखदो जनस्तद्दुःखं स्वयं भुङ्क्ते इति यद्यस्मात्तस्मात् परेष्वमङ्गलं मा मंस्थाः न निरूपयेत्यन्वयः ॥ १८ ॥

परेण द्वेषादुक्तमपि गुणग्राहिणः स्वात्मनः पथ्यमेव भवतीति भावेनाह - **सत्यमिति** । चार्थो वाशब्दः । इडस्पतिः राजा यां मां भार्येति च वोढुं वक्तुं विलज्जते भवान् तस्याः दुर्भगायाः दुःखहेत्वदृष्टाया मे उदरे गृहीतोऽत एव स्तन्येनैव वृद्धो न तु पितृदत्तरसायनेनेति यस्मात्तस्मात् सुरुच्या "तपसाऽऽराध्य" (भाग. 4-8-14) इति यदभिहितं तत्सत्यमित्यन्वयः ॥ १९ ॥

एतदेव विवृणोति - **आतिष्ठेति** । मत्पुत्र उत्तमो यथा तथा यदि अध्यासनमिच्छसे आत्मनो हितमाकांक्षसि तर्ह्यधोक्षजपादपद्ममारधयेति यत्सुमात्रा[1] सुरुच्या कथितं तदव्यलीकं कर्तुमातिष्ठ । तप इति शेषः ॥ २० ॥

केनचित् श्रीनारायणश्रीचरणपरिचर्याफलं निरुपममवाप्तं चेत्तर्हि श्रोतुस्तत्र क्षिप्रं प्रवृत्तिर्भवतीति तत्राह - **यत्पादेति** । परिचर्य परिपूज्य विश्वविभावनाय विश्वस्य विविधसृष्ट्यर्थम् आत्तगुणाभिपत्तेः अङ्गीकृतसार्वत्र्यादिगुणप्राप्तिहेतोः अजो ब्रह्मा जितात्मा वशीकृतमनाः श्वसनस्य वायोरपि विभागराहित्येन गन्तुं योग्यं वन्द्यम् ॥ २१ ॥

**तथा मनुर्वो भगवान् पितामहो यमेकमत्या[2] पुरुदक्षिणैर्मखैः ।**
**इष्ट्वाऽभिपेदे दुरवापमन्यतो भौमं सुखं दिव्यमथापवर्ग्यम् ॥ २२ ॥**

**तमेव वत्साश्रय भक्तवत्सलं[3] मुमुक्षुभिर्मृग्यपदाब्जपद्धतिम् ।**
**अनन्यभावे निजधर्मभाविते मनस्यवस्थाप्य भजस्व पूरुषम् ॥ २३ ॥**

1. A, B स° 2. M, Ma, Ms भक्त्या 3. A, B, G, I, J, M, Ma, Ms, T भृत्य

**नान्यं ततः पद्मपलाशलोचनाद्दुःखच्छिदं ते मृगयामि कञ्चन।**
**यो मृग्यते हस्तगृहीतपद्मया श्रियेतरैरङ्ग! विमृग्यमाणया॥ २४॥**

**मैत्रेय उवाच**

**एवं सञ्जल्पितं मातुराकर्ण्यार्थागमं वचः।**
**सन्नियम्यात्मनाऽऽत्मानं निश्चक्राम पितुः पुरात्॥ २५॥**

**नारदस्तदुपाकर्ण्य ज्ञात्वा चास्य[1] चिकीर्षितम्।**
**स्पृष्ट्वा मूर्धन्यघघ्नेन पाणिना प्राह विस्मितः॥ २६॥**

**श्रीध० तथेति**। एकमत्या सर्वान्तर्यामिदृष्ट्या॥ २२॥

**तमेवेति**। मृग्या पदाब्जयोः पद्धतिर्मार्गो यस्य तमेवाश्रय शरणं व्रज ततो[2] भजस्व। नान्यस्मिन् भावो यस्य तस्मिन्, निजधर्मैर्भाविते शोधिते॥ २३॥

तमेवेत्यनेन सूचितं सर्वोत्तमत्त्वं प्रपञ्चयति - **नान्यमिति**। हस्तेन गृहीतं दीपवत्पद्मं यया [3]तया श्रिया[3] इतरैः ब्रह्मादिभिः॥ २४॥

**एवमिति**। सञ्जल्पितं [4]विलापितं ततोऽर्थस्यागमो यस्मात्तथाभूतं वचः आकर्ण्य॥ २५, २६॥

**वीर.** तथा वः युष्माकं पितामहः पितुः पिता भगवान् मनुरपि एकमत्या अव्यभिचरितभक्त्या पुरुदक्षिणैः बहुदक्षिणैः मखैः क्रतुभिः यं भगवन्तमिष्ट्वा आराध्य अन्यतः अन्यैः [5]दुरवापं दिव्यं दिवि भवं दिव्यं सुखं स्वर्गं भौमं सुखं सार्वभौमत्वम् आपवर्ग्यं मोक्षसुखं चाभिपेदे अनेनाधोक्षजस्य कुलदैवतत्वमुक्तम्। अन्यतः एकमतिव्यतिरिक्तोपायान्तरेण दुरवापं यमिति [6]वा सम्बन्धः। अन्यतः अन्यस्माद्ब्रह्मरुद्रादेः दुरवापं सुखत्रयमिति वा सम्बन्धः॥ २२॥

भजन्तमपि मां राजद्वेषाद्यसद्गुणदृष्ट्योपेक्षेत तत्राह - **तमिति**। हे वत्स! भक्तवत्सलं भक्तेषु वत्सलस्तं, सत्स्वपि दोषेषुताननादृत्य भोग्यताबुद्धिमत्त्वं वात्सल्यं तमेवाश्रय अनेनाश्रयणसौकर्यापादकगुणसम्पत्तिरुक्ता। आश्रितकार्यापादकगुणसम्पत्तिमाह- मुमुक्षभिः संसार[7]बन्धनात् मोक्षमिच्छद्भिर्मृग्या अन्वेषणीया चिन्तनीयेति यावत्। पादाब्जयोः पद्धतिर्मार्गो यस्य तं मुक्तिप्रदमिति

---

1. A. B. G. I. J. T तस्य 2. V तथा 3--3. B, J, V. Va omit 4. A. B. J. Va विलापं 5. A. B. T दुरापं 6. W omis वा 7. W बन्धात्

भावः । अनेन नित्यसंसारिणां नित्यसूरिपरिषत्संघटनोपयोगित्वरूपाघटितघटनासामर्थ्यरूपाश्रितकार्यापादकसम्पत्तिरुक्ता । कथमाश्रयाणीत्यत्र स्ववर्णाश्रमधर्मानुगृहीतभक्तियोगेनाश्रयेत्याह - अनन्यभावे न विद्यतेऽन्यस्मिन् भावो यस्मिन् । विजातीयप्रत्ययान्तराव्यवहित इत्यर्थः । [1-]निजधर्मभाविते[-1] निजधर्मैः स्ववर्णाश्रमोचितधर्मैः भाविते निष्पादिते मनसि तैलधारावदविच्छिन्नस्मृतिसन्तानरूपे मनोव्यापारे विजातीयप्रत्ययान्तराव्यवहिततैलधारावदविच्छिन्नस्मृतिसन्तानरूपाहि भक्तिः । अवस्थाप्य विषयीकृत्य पूरुषं पूस्संज्ञक[2]स्वशरीरान्तः स्थितदहरकुहरे वसन्तं परमपुरुषं भजस्व ॥ २३ ॥

तमेवेत्यनेन सूचितं सर्वोत्तमत्त्वं सुखत्रयप्रदत्वं च [3-]प्रतिपादयति[-3] - **नान्यमिति** । ततः [4-]तस्मात्[-4] पद्मपलाशलोचनात् पुण्डरीकाक्षादन्यं पुरुषं तव दुःखच्छिदं दुःख[5]निरासकं न मृगयामि अन्विष्यापि न पश्यामीति भावः । अनेन तापत्रयनिरसनद्वारा सुखत्रयप्रदो भगवानेवेत्युक्तं भवति । सर्वोत्तमत्त्वमाह - यो भगवानितरैर्ब्रह्मादिभिः स्वाभिलषितसिद्धये विमृग्यमाणया मनः प्रणिधानेन चिन्त्यमानया, हस्तेन गृहीतं पद्मं यया तया श्रिया महालक्ष्म्या अङ्ग ! हे ध्रुव ! मृग्यते । अनेन लक्ष्मीपतित्वमुक्तं, तेन च सर्वेश्वरत्वं जगत्कारणत्वं च सामर्थ्यादुक्तं भवति ॥ २४ ॥

सुनीत्युक्तमुपसंहरन् ध्रुवस्य चेष्टामाह मुनिः - **एवमिति** । मातुः सञ्जल्पितं विलापनं ततः अर्थागमम् अर्थस्य स्वाभिलषितस्यार्थस्यागमो यस्मात्तथाभूतं वचश्च आकर्ण्य आत्मना स्वेनैवात्मानं मनः सन्नियम्य समाधाय पितुरुत्तानपादस्य पुरान्निश्चक्राम निर्गतः ॥ २५ ॥

तन्निष्क्रमणमुपाकर्ण्य आश्रुत्य त्रैकाल्यज्ञो नारदः अस्य ध्रुवस्य चिकीर्षितं ज्ञात्वा चागत्येति शेषः । अघघ्नेन दुरितहारिणा पाणिना शिरसि संस्पृश्य विस्मितः प्राह ॥ २६ ॥

**विज०** चतुर्मुखस्य भगवत्पुत्रत्वेन तत्प्रसादयोग्यतया तस्य तादृशैश्वर्यावाप्तिर्युक्ता अस्मत्पूर्वजेन केनाप्तं येन श्रद्धया अस्माकमपि तत्र झटिति प्रवृत्तिस्स्यात् अतस्तदनुभावयेति तत्राह - **तथेति** । अन्यतो भक्त्यादिव्यतिरिक्त साधनेन अन्याभ्यो देवताभ्यो वा भौमं मन्वन्तराधिपत्यं दिव्यं स्वर्गसम्बन्धि आपवर्ग्यं कैवल्यसम्बन्धि, अथेत्यनेन देहत्यागानन्तरमेवापवर्गसुखावाप्तिर्न जन्मान्तरं प्राप्येत्याह ॥ २२ ॥

किं बहुनोक्तेन ? सारं वक्ष्यामीत्याह - **तमेवेति** । यत्किञ्चिद्दोषदृष्ट्या विमुखो न स्यादित्यत उक्तं - भृत्येति । न केवलं

---

1--1. W omits 2. A, B, T omit स्व 3--3. A, B, T कथयति 4--4. A, T omit 5. A, B, T निवारकं

विषयलोलैरेवाराध्यं किन्तु संसारमोक्षेच्छुभिरपीति भावेनोक्तं - मुमुक्षुभिरिति । अत्र प्रधानसाधनमिदमिति ध्वनयति - अनन्यभाव इति । [1-]अनन्यो भावो विषयो यस्य[-1] स तथा तस्मिन्, तस्य भक्तिसाधनत्वं ध्वनयति - निजधर्मेति । यमनियमादयो निजधर्माः तैर्भाविते [2]कृततत्स्वभावे ॥ २३ ॥

कुतोऽयमेवापेक्षिताशेषपुरुषार्थावाप्ताविति नियमः अन्यः किं, न स्यादिति तत्राह - **नान्यं तत** इति । वो युष्माकं कुलदेवता लक्ष्मीकान्तः ततः तस्मात् पद्मपलाशलोचनात् [3]अनेन आकाशवत् नीरूपस्योपासनं न सङ्गच्छत इति चोद्यं परिहृतम् । त्वया नान्विष्योक्तं विचारिते कश्चित्स्यादित्यत उक्तं मृगयामीति । [4]लक्ष्मीतत्त्वं स्यादिति तत्राह - य इति । श्रीत्वं भारत्यादावप्यस्तीत्यत उक्तम् - इतरैरिति । इतरैर्ब्रह्मादिभिः सेव्यापि सम्पल्लक्षणा श्रीः किं न स्यादित्यत उक्तं - हस्तेति । अनेन श्रीः प्रिया मूर्तिमती साक्षाल्लक्ष्मीरिति ज्ञायते । मृग्यत इत्यनेन हरेर्गुणतः स्वरूपतश्चोत्तमत्त्वं ध्वनयति । विमृग्यमाणयेत्यनेन श्रीकटाक्षमोक्षस्य दुस्साधनत्वमाह ॥ २४ ॥

बालत्वाद्रोषतोषयोः क्षणकालीनत्वेनासमत्वान्मातृवचः श्रुत्वापि गृह एवावस्थानं, हृदि सन्निधाय तत्समर्थनाय ततो निर्गमनं वा युक्तमिति ध्रुवेण द्वयोर्मध्ये किमकारीत्यान्तरीं शङ्कां परिहर्तुमाह - **एवमिति** । अर्थस्याभिप्रेतस्याऽऽगम· प्राप्तिर्यस्मात्तथा तदा आत्मानं मनः आत्मना धैर्यगुणेन ॥ २५ ॥

ध्रुवो नाम महात्मेति द्योतयन् तस्य स्वाभीष्टसिद्धिलक्षणं नारदसंवादं वक्ति - **नारद** इति । उपाकर्ण्येत्यनेन नारदस्य दूरश्रवणशक्तिर्योगीन्द्रत्वात् स्वाभाविकीति सूचयति । सर्वप्राणिचित्तविषयं ज्ञानं वा योगसिद्धमिति । स्पृष्ट्वेत्यादिना गुरुप्रसादं ध्वनयति । अघघ्नेन सर्वदुरितविनाशकेनेति पित्रादिद्वेषनिमित्तदोषनाशं सूचयति ॥ २६ ॥

नारद उवाच

**अहो तेजः क्षत्रियाणां मानभङ्गममृष्यताम् ।**
**बालोऽप्ययं हृदा धत्ते यत्समातुरसद्वचः ॥ २७ ॥**

***क्व यात्येको भवान् वत्स ! हित्वा स्वगृहमृद्धिमत् ।**
**लक्षये त्वाऽवमत्याऽङ्ग ! सन्तप्तं स्वजनोत्थया ॥ २८ ॥**

---

1--1. A अन्यो भावो विषयो न यस्य 2. A, B स्वात्मभावे 3. M, Ma नि॰ 4. Ma लक्ष्मीत्वं * Though this verse is not found in the text A, B, G, I, J, the commentary of Veera Raghava & Vijayadwaja is the same as found in A & B. Edns

**ध्रुव उवाच**

**[1]किमेतद्भगवन्ध्यानात्[2] दृष्टं किं योगराधसा।
नोत्सहे सुरुचेर्वाचा समाधातुं मनःक्षतम्॥ २९॥**

नारद उवाच

**नाधुनाप्यवमानं ते [3]सम्मानं [4]वापि पुत्रक।
लक्षयामि [5]कुमारस्य [6]सक्तस्य क्रीडनादिषु॥ ३०॥**

**विकल्पे विद्यमानेऽपि न ह्यसन्तोषहेतवः।
[7]पुंसां मोहमृते भिन्ना यल्लो[8]के निजकर्मभिः॥ ३१॥**

**परितुष्येत्ततस्तात तावन्मात्रेण पूरुषः।
दैवोपसादितं यावद्वीक्ष्येश्वरगतिं बुधः॥ ३२॥**

**अथ मात्रोपदिष्टेन योगेनावरुरुत्ससि।
[9]यत्प्रसा[10]दं स वै पुंसां दुराराध्यो मतो [11]मम॥ ३३॥**

**श्रीध०** विंस्मित इत्युक्तं तदेवाह - **अहो इति।** अहो! तेजः प्रभावः॥ २७, २८, २९, ३०॥

विकल्पे मानापमानविवेके सत्यपि [12-]मोहं[-12] विना भिन्नाः [13-]व्यतिरिक्ताः[-13] न सन्ति। किन्तु मोहकल्पिता एव [14]ते इत्यर्थः। यत्सुखं दुःखं [15]लोके तन्निजकर्मभिरेव भवति यतः॥ ३१॥

[16]एतदेव उपशमोपदेशेन निवर्तयति - **परितुष्येदिति** षड्भिः। ईश्वरगतिं वीक्ष्य ईश्वरानुकूल्यं विना नोद्यमाः फलहेतव इति ज्ञात्वा परितुष्येत् सन्तोषमेव कुर्यात्॥ ३२॥

---

** Also this verse is not found in A, B, G, I, J. But in the commentary of Veera Raghava & Vijayadhwaja on the same. this verse in found in A & B. Edns.

1. M, Ma, Ms किं न ते ध्यानजातेन 2. M, Ma, Ms, V वा; T तद् 3. M, Ma, V W सन्मानं 4. M, Ma चापि 5. A, B, G, I, J, M, Ma, Ms, T °मः 6. V °स्य रक्तस्य; W °स्याऽऽसक्तस्य 7. A, B, G, I, J, M, Ma, Ms, T पुंसो 8. M, Ma, Ms °का 9. Ms यं प्र° 10. M, Ma, Ms °दात् 11. W हि मे 12--12. A, B, J, Va omit 13--13. A, B, J, Va omit 14. A, B, J, V, Va omit ते 15 A. B, J, Va omit लोके 16. A, B, J, Va omit एतदेव

दुष्करश्च तवायमुद्यम इत्याह - **अथेति** द्वाभ्याम्। यस्य प्रसादं [1]अवरुरुत्ससि[1] अवरोद्धुं (द्धुं) प्राप्तुमिच्छसि॥ ३३॥

**वीर०** विस्मित इत्युक्तं तदेवाह - **अहो** इति। मानभङ्गम् अभिमानविहतिम् अमृष्यताम् असहमानानां क्षत्रियाणां तेजः प्रभावः अहो विस्मयनीयः। यत् यस्मात् अयं ध्रुवः बालोऽपि समातुः मातुः सपत्न्या असद्वचः दुष्टवाक्यं यत् हृदा हृदयेन धत्ते मनसि स्थापयतीत्यर्थः॥ २७॥

नारदोक्तिमेवाह - **क्केति**। हे वत्स! भवान् ऋद्धिमत् समृद्धिमत् स्वगृहं हित्वा एकः असहायः क्व याति गच्छति। अङ्ग! हे ध्रुव! त्वां स्वजनादुत्थया उत्पन्नया अवमत्या पराभूत्या सन्तप्तं नितरां तप्तं लक्षये उत्प्रेक्षये॥ २८॥

अत्र क्वचित्पुस्तकेषु "किमेतद्भगवन् ध्यानात् दृष्टं[2] किं योगराधसा। नोत्सहे सुरुचेर्वाचा समाधातुं मनःक्षतम्॥" इत्यधिकः श्लोकः पठ्यते। तत्रायं ध्रुवोत्तरत्वेन व्याख्येयः। हे भगवन्! नारद! एतन्मम स्वजनोत्थपराभवसन्तापादिकं योगराधसा योगप्रभावेण यद्ध्यानं सर्ववस्तुसाक्षात्कारापादकं तस्मात् दृष्टं किम्? त्वयेति शेषः। अहन्तु सुरुचेर्वाचा क्षतं व्यथितं मनः समाधातुं नोत्सहे न शक्नोमि॥ २९॥

एवमुक्तो नारदः पुनराह - **नाधुनाप्यवमानमिति**। एतच्छ्लोकाभावे सर्वोऽपि ग्रन्थो नारदोक्तिपरत्वेन व्याख्येयः। हे पुत्रक! कुमारस्य अत एव क्रीडनादिष्वासक्तस्य तव अधुना बाल्य दशायामपि अवमानं सन्मानं वा न पश्यामि। बालो हि मानावमानावनादृत्य परं क्रीडासक्तः अतस्तवापि मानावमानौ न स्त इति पश्यामीत्यभिप्रायः॥ ३०॥

यदि ब्रूयाः अहं वयसा बालो न बुद्ध्येति तत्राह - **विकल्प** इति। विकल्पे मानावमानविवेके [4]विद्यमानेऽपि[4] सत्यपि मोहं विना भिन्ना व्यतिरिक्ताः असन्तोषहेतवो न सन्ति किन्तु मोह एवासन्तोषे हेतुरित्यर्थः। कुतः? यत्सुखं दुःखं वा लोके तन्निजकर्मभिरेव भवति, यद्वा अहं बालोऽपि मानावमानबुद्धिमानिति ब्रूयात् तर्हीयम् असन्तोषमूला बुद्धिर्देहात्मभ्रममूला न तात्त्विकीत्याह - विकल्प इति। सर्वत्र ज्ञानैकाकारतया एकरूपे आत्मनि विकल्पे देवमनुष्यादिभेदे अविद्यमाने इति च्छेदः। असत्यपि देवमनुष्यादिभेदानामात्माकारत्वाभावेऽपीत्यर्थः। पुंसां जीवानां मोहमृते देवादिशरीरेष्वात्माभिमानं विना असन्तोषहेतवो न सन्ति, देहात्मभ्रम एवासन्तोषहेतुरित्यर्थः। विद्यमान इति वाच्छेदः। अपिशब्दः उक्तसमुच्चयार्थः विकल्प इत्यनेन सम्बध्यते। विकल्पे देवमनुष्यादिभेदे अपिशब्दात् तत्प्रयुक्तमानावमानादिके च सति मोहं देहात्माभिमानमृते असन्तोषहेतुरन्यो नास्तीत्यर्थः। असन्तोषस्य

1. A, B, J, Va omit 2. A, B, T तत् 3. A, B, T omit अपि 4--4. A, B, T omit

देहात्माभिमानाधीनत्वे हेतुमाह - भिन्ना यदिति। अत्र लोका इति प्रथमान्तपाठस्सुगमः। लोकाश्चेतनवर्गाः निजकर्मभिरेव भिन्नाः कर्मकृतदेवादिदेहभिन्ना इति यत् अतो देहे सति तत्रात्मभ्रम एवावमानद्वारा असन्तोषहेतुः। असन्तुष्टस्य चेतनस्य देहात्माभिमानित्वादित्यर्थः। यद्वा सप्तम्यन्तपाठः। भिन्नेति भावे, स्त्रीत्वमार्षं भिदेत्यर्थः। देवादिदेहभेदे को हेतुस्तत्राह। लोके ज्ञानैकाकारे चेतनवर्गे भिन्ना देवमनुष्यादिभिदा यत् यतः कर्मभिर्भवति अनेन कर्मकृतो देवादिदेहभेदस्तत्कृतो मानावमानमूलो देहात्मभ्रमस्ततोऽसन्तोषरूपं दुःखमित्यभिप्रेतम्॥ ३१॥

एतदेव उपशमोपदेशेन निवर्तयति - **परितुष्येदिति** षड्भिः। ततो देहात्मभ्रमस्यैवासन्तोषहेतुत्वाद् बुधः देहविलक्षणात्मज्ञानी पुरुषः ईश्वरगतिं वीक्ष्य ईश्वरानुकूल्यं विना नोद्यमाः फलहेतवः इति ज्ञात्वा यावत्सुखं दैवेनोपसाधितं[1] प्रापितं तावन्मात्रेण परितुष्येत् नाधिकं लिप्सेत्। अतोऽधिकसुखार्थं नोद्यमः कार्य इति भावः॥ ३२॥

दुष्करश्च तवायम् उद्यम इत्याह - **अथेति** द्वाभ्याम्। अथ ननु मात्रोपदिष्टेन भक्तियोगेन यस्य भगवतः प्रसादम् अवरोद्धुं प्राप्तुमिच्छसि स वै भगवान् पुंसां दुःखेनाप्याराधयितुमशक्य इति मे मया ज्ञातो मतः॥ ३३॥

**विज०** विस्मित इत्युक्तमभिनयति - **अहो** इति। तेजो धैर्यलक्षणम्। अमृष्यतामसहमानानां समातुः समानमातुः सुरुच्याः॥ २७॥

किं प्राहेति तत्राह - **क्व यातीति**। लक्षये लक्षणवृत्त्या जानामि॥ २८॥

अत्र ध्रुवेन किमुत्तरं दत्तमिति तत्राह - **किं न ते** इति। ध्यानेन ज्ञानं लक्षयति कार्यकारणसम्बन्धात् ते त्वया ध्यानजातेन योगराधसा अष्टाङ्गयोगजनितदूरदर्शनशक्तिलक्षणसामर्थ्येन वा किं न दृष्टं सर्वं दृष्टमेव, तथापि वक्ष्यामीति शेषः। किं तदिति तत्राह- नोत्सहे इति॥ २९॥

नारदेन किं प्रत्युत्तरमुक्तमत्राह - **नाधुनेति**॥ ३०॥

ननु क्रीडनादिषु सक्तस्य बालस्य न युक्तमन्यस्य विवेकिनः कथमित्याशङ्क्य नितरामीदृशस्य सन्तोषहेतुत्वमिति बोधयति - **विकल्प** इति। विकल्पे शत्रुमित्रादिविविधकल्पने विद्यमानेऽपि पुंसो मोहमृते भ्रममन्तरेणाऽसन्तोषहेतवो मनःखेदजनकाः न सन्ति। कुतः लोकाः जनाः भिन्नाः स्वानुष्ठितैः निजकर्मभिः उत्तमाधममध्यमभेदेन नानाविधा इति यस्मात्॥ ३१॥

---

1. A, B, T °दितं

तत ईश्वरगतिं बुधो विद्वान् यावत्[1] दैवोपसादितं वीक्ष्य तावन्मात्रेण परितुष्येदित्यन्वयः । ईश्वरगतिं वीक्ष्य यावद्दैवोपसादितं तावन्मात्रेणेति वा । अनेन सुरुच्या दुर्वचस्तव सन्तापकारणं न भवतीत्युक्तं भवति ॥ ३२ ॥

हरेः प्रसादजनके तपसि स्थितां बुद्धिं दृढां विधातुं बाधकमभिधत्ते - **अथेति** । अथ यदि मात्रोपदिष्टेन योगेनोपायेन हरेः प्रसादात् यं हरिम्[2] अवरुरुत्ससि अनुग्रहोन्मुखीकर्तुमिच्छसि तर्ह्यपि स हरिर्मम पुंसां दुराराध्यो मतः [3-]कुतस्तत्प्रसादावाप्तिः[-3] कुतस्तरां फलाप्तिरित्यर्थः । वा इत्यनेन स्वानुभवसिद्धमिति दर्शयति ॥ ३३ ॥

**मुनयः पदवीं यस्य निस्सङ्गेनोरुजन्मभिः ।**

**न विदुर्मृगयन्तोऽपि तीव्रयोगसमाधिना ॥ ३४ ॥**

**ततो[4] निवर्ततामेष निर्बन्धस्तव निष्फलः ।**

**यतिष्यति भवान् काले श्रेयसां समुपस्थिते ॥ ३५ ॥**

**यस्य यद् दैवविहितं स तेन सुखदुःखयोः ।**

**आत्मानं तोषयन् देही तमसः पारमृच्छति ॥ ३६ ॥**

**गुणाधिकान्मुदं लिप्सेदनुक्रोशं गुणाधमात् ।**

**मैत्रीं समानादन्विच्छेन्न तापैरनुभूयते ॥ ३७ ॥**

**ध्रुव उवाच**

**सोऽयं शमो भगवता सुखदुःखहतात्मनाम् ।**

**दर्शितः कृपया पुंसां दुर्दर्शोऽस्मद्विधैस्तु यः ॥ ३८ ॥**

**श्रीध० मुनय इति** । निस्सङ्गेन तीव्रयोगेन युक्तेन समाधिना मृगयन्तोऽपि यस्य पदवीं मार्गं न विदुः स देवो दुराराध्यः - ॥३४॥

**तत इति** । श्रेयसां काले वृद्धत्वे ॥ ३५ ॥

**यस्येति** । सुखदुःखयोर्मध्ये सुखे सति पुण्यं क्षीयत इति । दुःखे सति पापं क्षीयत इत्यात्मानं तोषयन् तमसः पारं मोक्षं प्राप्नोति ॥ ३६ ॥

1. A, B यत्  2. A, B adds अत्र  3--3. A, B omit  4. A, B, G, I, J, M, Ma, Ms, T अतो

**गुणाधिकादिति**। किञ्च गुणैरधिकात् पुंसः इति ल्यब्लोपे पञ्चमी। तं दृष्ट्वा प्रीतिं कुर्यात् न त्वसूयामित्यर्थः[1]। अनुक्रोशं कृपां लिप्सेत् न तु तिरस्कारं, समानात् मैत्रीं न तु स्पर्धाम्॥ ३७, ३८॥

**वीर०** निस्सङ्गेन देहतदनुबन्धिसङ्गान्निर्गतेन तीव्रयोगः विघ्नानुपहतो ज्ञानयोगः कर्मयोगश्च तद्युक्तेन समाधिना यस्य भगवतः पदवीं मार्गं मृगयन्तोऽपि मुनयो बहुजन्मभिरपि न विदुः स देवो भगवान् दुराराध्यो मम मत इति पूर्वेण सम्बन्धः॥ ३४॥

अतो देवस्यापि दुराराध्यत्वाद्धेतोः निवर्ततां गृहान् प्रतियातु भवान् तवैष निर्बन्धः [2-]उद्यमरूपो निर्बन्धः[-2] निष्फलः अनर्थकः[3]। अयतमानस्य मम कथं श्रेयःप्राप्तिरित्याशङ्कमानं प्रत्याह - यतिष्यतीति। दैवात् श्रेयसां काले समुपस्थिते भवान् यतिष्यति यत्नं करिष्यतीति[4] अधुना तु उद्यमो निष्फल इति भावः॥ ३५॥

किञ्च यस्य पुंसः यत् सुखं दुःखं वा दैवेनेश्वरेण विहितं स पुमान् दैवविहितयोः सुखदुःखयोर्मध्ये तेन दैवविहितेन सुखेन दुःखेन वा आत्मानं तोषयन् सुखे सति पुण्यं क्षीयते असुखे त्वपुण्यम्। अतः पुण्यापुण्यक्षयेन संस्कृतेर्मोक्षः इत्यात्मानं तोषयन्नित्यर्थः। देही देहवान् तमसः पारं प्रकृतिमण्डलातीतं विष्णोः पदमृच्छति याति॥ ३६॥

अपि च यः पुमान् गुणैरधिकः स्वापेक्षयाधिकस्तस्मात्। इयं ल्यब्लोपे पञ्चमी, गुणाधिकं दृष्ट्वेत्यर्थः। मुदं लिप्सेत् लब्धुमिच्छेत् प्रीतिं कुर्यात् न त्वसूयामित्यर्थः। गुणाधमात् गुणाधमं वीक्ष्य अनुक्रोशं कृपां लिप्सेन्न तु तिरस्कारं, समान्मैत्रीं न तु स्पर्धां, सः तापैराध्यात्मिकादितापैः नाभिभूयते तापत्रयाभिहतो न भवतीत्यर्थः॥ ३७॥

एवं नारदेनोपदिष्टक्रमो ध्रुवः स्वमनीषितेऽविचाल्यमतिः तद्दर्शनं तदुक्तिं चाभिनन्दन् तं[5] प्रत्याह - **सोऽयमिति** चतुर्भिः। भगवता त्वया[6] सुखदुःखाभ्यां हतः पराभूतः आत्मा मनो येषां तेषां पुंसामस्माकं सोऽयं शमः मनःप्रशान्त्युपायः कृपया दर्शितः ज्ञापितः यो भगवान् त्वमस्मद्विधैः मादृशैः दुर्दर्शः द्रष्टुमशक्यः, यद्वा यः शमः अस्मद्विधैर्दुर्दर्शः ज्ञातुमशक्य इति शमप्रशंसा[7]॥३८॥

**विज०** मुनयोऽपि यन्मार्गं समाराध्य न जानन्ति बालकस्त्वं किमुतेत्याह - **मुनय** इति॥ ३४॥

ततः किं तत्राह - **अत** इति। तर्हि निःश्रेयसाय प्रयतमानस्य पुंसो जन्मनो निरर्थकत्वमित्याशङ्क्य नायं कालः किन्तु कालान्तर इत्याह - यतिष्यतीति। काले वार्धके॥ ३५॥

---

1. V °दि° 2--2. A, B, T omit 3. A, B, T अनर्थः 4. W omits इति 5. A, B, T omit तं 6. A, B, T omit त्वया 7. W adds वा

सुखदुःखयोर्मध्ये यत्सुखं दुःखं वा यस्य दैवेन विहितं स देही तयोरेकेन तेनात्मानं तोषयन् तमसः पारम् अज्ञानस्यान्तं मोक्षमृच्छति गच्छतीत्यन्वयः ॥ ३६ ॥

मनोदुःखाभावे उपायान्तरमाह - **गुणाधिकादिति**। शमदमादिगुणाधिकात् पुरुषादिति प्रत्येकं सम्बध्यते। अनुक्रोशं दयां मैत्रीं सौहार्दं तापैर्मनःखेदकरैर्भावैः ॥ ३७ ॥

नारदेनैवं बोधितोऽपि ध्रुवस्तं मार्गं प्रशस्य स्वहार्दं विज्ञापयति - **सोऽयमिति**। योऽस्मद्विधैर्दुर्दर्शः शास्त्रदृष्ट्या ज्ञातुमशक्यः सोऽयं शमो भगवन्निष्ठालक्षणो भगवता सुखदुःखाभ्यां हतात्मनां पीडितमनसां पुंसां कृपया दर्शितो यद्यपि ॥ ३८ ॥

**अथापि मेऽविनीतस्य क्षात्र[1]धर्ममुपेयुषः।**
**सुरुच्या दुर्वचोबाणैर्न भिन्ने श्रयते हृदि॥ ३९ ॥**

**पदं त्रिभुवनोत्कृष्टं जिगीषोस्साधु वर्त्म मे।**
**ब्रूह्यस्मत्पितृभिर्ब्रह्मन्[2]न्यैरप्यनधिष्ठितम्॥ ४० ॥**

**नूनं भवान् भगवतो योऽङ्गजः परमेष्ठिनः।**
**वितु[3]दन्नटते वीणां हिता[4]य जगतोऽर्कवत्॥ ४१ ॥**

**मैत्रेय उवाच**

***इत्यु[5]दीरितमाकर्ण्य भगवान्नारदस्तदा।**
**प्रीतः प्रत्याह तं बालं स[6]द्वाक्यमनुकम्पया॥ ४२ ॥**

**नारद उवाच**

**जनन्याभिहितः पन्थाः स वै निःश्रेयसस्य ते।**
**भगवान् वासुदेवस्तं[7] भज तत्प्रवणात्मना॥ ४३ ॥**

---

1. A, B, G, I, J, M, Ma, Ms, T क्षात्रं घोरं° 2. M, Ma न्नान्यै° 3. M, Ma, Ms °नु° 4. A, B, G, J, M, Ma, T °र्थं * This verse is not found in Editor V. 5. A, B, G, I, J, M, Ma, Ms, T °दाहृत° 6. M, Ma, Ms त° 7. Ms °स्त्वं

**श्रीध० अथेति**। क्षात्रं स्वभावं प्राप्तवतोऽत एवाऽविनीतस्य दुर्वाक्यबाणैर्भिन्ने हृदि न श्रयते न तिष्ठति॥ ३९॥

**पदमिति**। अन्यैरनधिष्ठितं त्रिभुवने उत्कृष्टं पदं जेतुमिच्छोः मे साधु वर्त्म मार्गं ब्रूहि॥ ४०॥

**नूनमिति**। अङ्कज इति पाठे उत्सङ्गाज्जातो यो नारदः स भवान्[1]। तत्र लिङ्गं वीणां वितुदन् वादयन् [2]जगतो हिताय अटति॥ ४१, ४२॥

**जनन्येति**। निःश्रेयसस्याभिप्रेतार्थस्य पन्थाः कोऽसावित्यत्र आह - भगवान् वासुदेवः [3-]अत एव[-3] तं भज॥ ४३॥

**वीर०** अथापि त्वयोपदिष्टशमस्यापि मम घोरं क्षात्रं स्वभावम् उपेयुषः प्राप्तवतोऽत एवाविनीतस्य सुरुच्याः दुर्वचांस्येव बाणास्तैर्भिन्ने हृदि न श्रयते शम इत्यनुषङ्गः, शमो न तिष्ठतीत्यर्थः॥ ३९॥

अतो मन्मनीषानुसारेणैव मामनुगृह्य मनीषितोपायप्रकारं ब्रूहीत्याह - **पदमिति**। अस्मत्पितृभिस्तेभ्योऽन्यैरप्यनधिष्ठितं त्रिभुवनोत्कृष्टं पदं जेतुमिच्छोर्मे साधु वर्त्म मार्गं ब्रूहि॥ ४०॥

स्वोपदेशोल्लङ्घनान्मां निगृह्यादित्याशङ्क्य तं प्रसादयति - **नूनमिति**। भवान् परमेष्ठिनो ब्रह्मणः जगद्धितकारिणोऽङ्गजः देहजः। अङ्कज इति पाठे उत्सङ्गाज्जातः, वीणां वितुदन् ध्वनयन् जगतो हिताय सूर्यवदटति चरति, अतो मन्मनीषापादनमेव जगद्धितकारिणस्तवोचितमिति भावः॥ ४१॥

एवं दृढसङ्कल्पस्य ध्रुवस्य वच आश्रुत्य तमनुगृह्णन् आह नारदः इत्याह मैत्रेयः। इति उक्तप्रकारेण उदीरितं गदितमाकर्ण्य भगवान्नारदः दृढसङ्कल्पदर्शनेन नितरां प्रीतः तं बालकं प्रति कृपया सद्वाक्यं हितवाक्यमाह॥ ४२॥

उक्तमेवाह - **जनन्या** इत्यादिना विरक्तश्चेदिन्द्रियरतावित्यन्तेन। तत्र तावद्भगवानेव भक्त्या प्रसन्नो धर्मादिपुरुषार्थचतुष्टयप्रदः ततः तद्भक्तिरेव कार्येति वदन्नुपासनोपयुक्तं देशमाचारं [4]ध्येयस्य भगवतो ध्यानप्रकारं जप्यं मन्त्रं भगवत्सपर्याप्रकारमाहारनियमं च कथयन्नेवमाराधितो भगवानेव त्वत्समीहितमभिनिवर्तयतीत्याह। जनन्या सुनीत्या उक्तः यः पन्था उपायः स वै स एव ते तव निःश्रेयसाय निश्चितं श्रेयः निःश्रेयसं तस्मै भवति। [5]जनन्यभिहितोपाय एव त्वदभिप्रेतार्थसाधनमित्यर्थः। कोऽसौ जनन्याऽभिहितः पन्थाः तत्राह - भगवान् वासुदेव एव। अतस्तत्प्रवणात्मना भगवत्प्रवणचित्तेन तं भगवन्तं भज॥ ४३॥

---

1. A adds खलु 2. A, B, J, Va omit जगतो 3--3. V एव अतः 4. W तस्य 5. A, B, T °न्याऽभि°

**विज०** अथापि तथापि अविनीतस्य कुतः क्षात्रं घोरं धर्ममुपेयुषो गच्छतो मे सुरुच्या दुर्वचोबाणैर्भिन्ने हृदि स शमो न श्रयते स्थितिं न लभत इत्यन्वयः ॥ ३९ ॥

तर्हि तवाऽऽकाङ्क्षायाः कियानवधिरिति तत्राह - **पदमिति**। अनेन राजसिंहासनस्यानित्यत्वेन न तपःसाध्यत्वेनाकाङ्क्ष्यत्वमिति सूचितम्। अस्मत्पितृभिरित्यादिनोत्तमस्य मनोरथेनाप्यनवाप्यमित्यसूचि ॥ ४० ॥

भवान् लोकहितार्थाटनत्वात् मदभीष्टमुपदिशतीत्याशयेनाह - **नूनमिति** ॥ ४१ ॥

यादृच्छिकगतित्वात् तदुक्तमाकर्ण्य स्मित्वा योगित्वेनादृश्यशक्तिमत्त्वात् तूष्णीं गतमुत किमप्युक्तमिति तत्राह - **इतीति**। तद्वाक्यं प्रति प्रीतः ॥ ४२ ॥

प्राक् स्वोक्तमेव दृढीकर्तुमुक्तमन्यद्वा[1] सम्भवादुभयोरिति तत्राह - **जनन्येति**। वा इत्येवार्थः, यो जनन्याऽभिहितः पन्था स एव ते निःश्रेयसस्य स्यान्नान्य इत्यन्वयः। कोऽसाविति तत्राह - भगवानिति। यो हरेर्विग्रहेषु वासुदेवनामा भगवांस्तं प्रवणात्मना भजेत्यन्वयः ॥ ४३ ॥

**धर्मार्थकाममोक्षाख्यं य इच्छेच्छ्रेय आत्मनः।**
**[2]एकं ह्येव हरेस्तत्र कारणं पादसेवनम् ॥ ४४ ॥**

**तत्तात गच्छ भद्रं ते यमुनायास्तटं शुचि।**
**पुण्यं मधुवनं यत्र सान्निध्यं नित्यदा हरेः ॥ ४५ ॥**

**स्नात्वानुसवनं तस्मिन् कालिन्द्याः सलिले शिवे।**
**कृत्वोचितानि निविश[3]न्नात्मनः कल्पितासनः[4] ॥ ४६ ॥**

**प्राणायामेन त्रिवृता प्राणेन्द्रियमनोमलम्।**
**शनैर्व्युदस्याभिध्यायेन्मनसा गुरुणा[5] गुरुम् ॥ ४७ ॥**

1. B, M, Ma द्रढी° 2. A, B, G, I, J, M, Ma, Ms, T एकमेव 3. A, B, G, I, J, M, Ma, Ms, T, V निवस° 4. M, Ma °ने
5. M, Ma, Ms गुरूणां

**प्रसादाभिमुखं शश्वत्प्रसन्नवदनेक्षणम्।**

**सुनासं सुभ्रुवं चारुकपोलं [1]सुरसुन्दरम्॥ ४८॥**

**श्रीध० तदिति**। [2-]मधुवनाख्यं यमुनायास्तटं[-2] गच्छ। यत्र मधुवने॥ ४४, ४५॥

**स्नात्वेति**। अध्ययनाद्यभावेऽप्यात्मन उचितानि योग्यानि देवतानमस्कारादीनि कृत्वेति [3]यमनियमाः उक्ताः। आसनकल्पनं च कुशादिभिः स्वस्तिकादिभिश्च॥ ४६॥

**प्राणायामेनेति**। प्राणेन्द्रियमनसां मलं चाञ्चल्यं व्युदस्येति प्राणायामप्रत्याहारौ। धारणामाह- अभिध्याये[4]दित्यादि षड्भिः। गुरुणा धीरेण मनसा गुरुं श्रीहरिम्॥ ४७॥

**प्रसादेति**। सुरेषु सुन्दरम्॥ ४८॥

**वीर० भगवान् वासुदेव एव इत्येतदेव प्रपञ्चयति - धर्मे[5]त्यादिना**। यः पुमान् धर्माद्यन्यतमं श्रेयः आत्मनः स्वस्य इच्छेत् तत्र हरेः पादसेवनमेकमेव कारणमुपायः॥ ४४॥

तत्तस्माद्भगवत्पादसेवनस्यैव धर्मादिसाधनत्वात् हे तात! यमुनायाः शुचि शुद्धं तटं तीरं गच्छ, ते तव भद्रं मङ्गलमस्तु। तटं विशिनष्टि - यत्र तटे पुण्यं पुण्यावहं मधुवनमस्ति। कथम्भूतं मधुवनम्? सर्वदा हरेर्भगवतः सान्निध्यं सान्निध्यवत्। तटशब्दस्य तटस्थितमधुवने लक्षणा वा। तत्कथम्भूतं मधुवनम्? यत्र मधुवने हरेः सान्निध्यमस्ति॥ ४५॥

कालिन्द्याः यमुनायाः शिवे मङ्गले सलिले त्रिषवणं स्नात्वा तत्र वने आत्मनः स्वस्य उचितानि योग्यानि देवतानमस्कारादीनि कृत्वा कुशादिभिः स्वस्तिकादिभिश्च कल्पितमासनं यस्य सः [6]निविशन् उपाविशन्॥ ४६॥

त्रिवृता त्रयाणां रेचकपूरककुम्भकानां वृत् वर्तनं यस्मिन् तेन प्राणायामेन, त्रिवृता प्रणवेन प्रणवानुसन्धानपूर्वकमिति वाऽर्थः। प्राणानामिन्द्रियाणां मनसश्च मलं चाञ्चल्यं शनैर्व्युदस्य अपोह्य गुरुणा श्रेष्ठेन प्राणायामैर्निर्मलेनेत्यर्थः, मनसा गुरुं भगवन्तं ध्यायेत्। अत्र उचितानि कृत्वेति यमनियमा उक्ताः। कल्पितासन इत्यासनम्। मलं व्युदस्येति प्राणायामप्रत्याहारौ ध्यायेत् [7]गुरुम् इति ध्यानम्। धारणाप्यनेनैवोक्ता धारणापूर्वकत्वाद्ध्यानस्य, एवमष्टाङ्गयुक्तो योग उपदिष्टः॥ ४७॥

---

1. M, Ma, Ms सुन्दरं हरिम् 2--2. V मधुवनं तदेवाख्यं तटं 3. V omits यम 4. V °दिति 5. W °त्यादि 6. A, B, T निवसन्
7. A, B, T omit गुरुम्

ध्येयं गुरुं विशिनष्टि - **प्रसादेति**। शश्वत् सदा प्रसादे अनुग्रहे अभिमुखं प्रसन्नं वदनमीक्षणे च यस्य तं, शोभना नासिका यस्य, शोभने भ्रुवौ यस्य, चारू सुन्दरौ कपोलौ यस्य, सुरसुन्दरं देववत्सुन्दरं सुरेभ्योऽपि सुन्दरमिति वा ॥ ४८ ॥

**विज०** अस्मिन्नर्थेऽन्यः किं न स्यादिति तत्राह - **धर्मार्थेति**। कारणमितरव्यावर्तकं साधनम् ॥ ४४ ॥

अभीष्टसिद्धिसाधनं क्षेत्रं चोपदिशति - **तत्तातेति**। यस्माद्धरेरेव प्रधानसाधनत्वं तत्तस्मान्मधोः पूर्णानन्दस्य हरेर्वनं भजनं यस्माद्भवति तन्मधुवनं नाम्ना सूचितमर्थं प्रकाशयति यत्रेति ॥ ४५ ॥

तत्र किं कर्तव्यमिति तत्राह - **स्नात्वेति**। उचितानि तर्पणादीनि ॥ ४६ ॥

त्रिवृता रेचकादित्रित्वसंख्योपेतेन यद्वा य-र-व इति त्र्यक्षरयुक्तेन यद्वा प्रणवयुक्तेन प्राणानामवशत्वमिन्द्रियाणां विषयाभिमुखत्वं मनसोऽनवस्थितित्वमिति[1] मलत्रयं, गुरूणां गुरुमुपदेष्टारम् ॥ ४७ ॥

पुरुषायुषशतेनाऽप्रसन्नतादिगुणवांश्चेत् किमनेनेत्यतोऽश्रद्धा न कर्तव्येति ध्येयस्वरूपमुपदिशति - **प्रसादाभिमुख-**मित्यादिना ॥ ४८ ॥

**तरुणं रमणीयाङ्गमरुणोष्ठेक्षणाधरम्[2]।**
**प्रणताश्रयणं नृम्णं[3] शरण्यं करुणार्णवम् ॥ ४९ ॥**

**श्रीवत्साङ्कं घनश्यामं पुरुषं वनमालिनम्।**
**शङ्खचक्रगदापद्मैरभिव्यक्तचतुर्भुजम् ॥ ५० ॥**

**किरीटिनं कुण्डलिनं केयूरवलयान्वितम्।**
**कौस्तुभाभरणग्रीवं पीतकौशेयवाससम् ॥ ५१ ॥**

**काञ्चीकलापपर्यस्तं लसत्काञ्चननूपुरम्।**
**दर्शनीयतमं शान्तं मनोनयनवर्धनम् ॥ ५२ ॥**

**पद्भ्यां नखमणिश्रेण्या विलसद्भ्यां समर्चताम्[4]।**
**हृत्पद्मकर्णिकाधिष्ण्यमाक्रम्यात्मन्यवस्थितम् ॥ ५३ ॥**

1. A °त° 2. M, Ma, Ms °णाब्जेक्ष° 3. M, Ma, Ms कृष्णं 4. Ms °र्चितम्

**श्रीध० तरुणमिति** । रमणीयान्यङ्गानि यस्य, [1-]ओष्ठश्च ईक्षणे च ओष्ठेक्षणम्, अरुणम् ओष्ठेक्षणमाधारयतीति[-1] तथा तम् । अरुणमोष्ठमीक्षणं चाधारयतीति वा । नृम्णं सुखरूपम्[2] । यद्वा नृम्णं, धनं, सर्वपुरुषार्थनिधिमित्यर्थः[3] । [4-]शरण्यं रक्षितारम्[-4] ।। ४९ ।।

**श्रीवत्सेति** । पुरुषं पुरुषलक्षणयुक्तम् ।। ५० ।।

**किरीटिनमिति** । [5-]कौस्तुभस्याभरणं ग्रीवा यस्य[-5] ।। ५१ ।।

**काञ्चीति** । काञ्चीकलापेन पर्यस्तं परिवेष्टितम् । मनोनयनयोर्वर्धनं[6] हर्षकरम् ।। ५२ ।।

**पद्भ्यामिति** । हृत्पद्मकर्णिकाया[7] धिष्ण्यं मध्यस्थानं तदाक्रम्य समर्चतां भक्तानाम्[8] आत्मनि मनसि स्थितम् ।। ५३ ।।

**वीर०** तरुणं बालं रमणीयान्यङ्गानि यस्य तम् । अधरोष्ठेक्षणारुणम् अधरोष्ठौ ईक्षणे चारुणे यस्य तम् अरुणोष्ठेक्षणाधरमिति पाठान्तरम् । तदा अरुणमोष्ठमीक्षणे चाधारयतीति तं प्रणतैर्भक्तैराश्रयणमाश्रयणीयं नृम्णं सुखरूपं [9-]यद्वा नृम्णं[-9] धनं सर्वपुरुषार्थनिधिमित्यर्थः । शरण्यं समीहितोपायत्वेनाध्यवसनीयं करुणानिधिम् ।। ४९ ।।

श्रीवत्समङ्कं चिह्नं यस्य, घनश्यामं नीलाम्बुदश्यामं पुरुषं पुरुषलक्षणयुक्तं, वनमालाऽस्याऽस्तीति वनमाली तं, शङ्खादिभिरभिव्यक्ताः शोभमानाश्चत्वारो भुजा यस्य तम् ।। ५० ।।

किरीटमस्यास्तीति तं कुण्डले अस्य स्तः इति तं, केयूराभ्यां वलयाभ्यां च युक्तं कौस्तुभाख्यमाभरणं ग्रीवायां यस्य तं, पीतं कौशेयं वासो वस्त्रं यस्य तम् ।। ५१ ।।

काञ्चीकलापेन पर्यस्तं परिवेष्टितं लसत्काञ्चने नूपुरे यस्य तम् । अतिशयेन द्रष्टुं योग्यं शान्तम् अनुग्रं ध्यातॄणां मनसो नयनयोश्च वर्धनं हर्षकरम् ।। ५२ ।।

नखा एव मणयस्तेषां श्रेण्या पङ्क्त्या विलसद्भ्यां पद्भ्यां[10] युक्तं समर्चतां हृत्पद्मकर्णिकायाः[11] धिष्ण्यं मध्यस्थानं तदाक्रम्य अर्चताम् आत्मनि स्थितम् ।। ५३ ।।

---

1--1. A, B, J, Va ओष्ठश्च ईक्षणा ईक्षणं च ओष्ठेक्षणे, अरुणे ओष्ठेक्षणे धारयतीति 2. A, B, J, Va °करम् । 3. Va °र्थः ।। ४१
4--4. B, J, V omit 5--5. V कौस्तुभाभरणं ग्रीवायां 6. V मनसो न° 7. V °यां 8. B, J, V, Va omit भक्तानाम् 9--9. T omit
10. A, B, T omit पद्भ्यां 11. A, B, T °काधि°

विज० अरुणत्वलक्षणज्ञापनाय पुनरीक्षणं क्वचिद्धरिं पीतवर्णं क्वचित् कृष्णम् ॥ ४९ ॥

क्वचिद्धनवत् श्यामं नीलं पुरुषलक्षणसामग्रीसूचनाय पुरुषग्रहणम् ॥ ५०, ५१ ॥

"कलापो भूषणे बर्हे" (अम.को. 3-3-129) इति वचनात् काञ्चीकलापेन पर्यस्तं संवेष्टितम् ॥ ५२ ॥

नखमणिश्रेण्या विलसद्भ्यां पादाभ्यां[1] समर्चतां भक्तानामात्मनि मध्यदेहे हृदयपद्मकर्णिकाधिष्ण्यमाक्रम्यावस्थितम् ॥५३॥

**स्मयमानमभिध्यायेत्सानुरागावलोकनम् ।**
**नियतेनै[2]कभूतेन मनसा वरदर्षभम्[3] ॥ ५४ ॥**

**एवं भगवतो रूपं सुभद्रं ध्यायतो मनः ।**
**निर्वृत्त्या परया तूर्णं[4] सम्पन्नं न निवर्तते ॥ ५५ ॥**

**[5]जप्यश्च परमो गुह्यः श्रूयतां मे नृपात्मज !**
**यं सप्तरात्रं प्रपठन् पुमान् पश्यति खेचरान् ॥ ५६ ॥**

**ॐ नमो भगवते वासुदेवाय**

**मन्त्रेणानेन देवस्य कुर्यात् दण्डमयीं बुधः ।**
**सपर्यां विविधैर्द्रव्यैः देशकालविभागवित् ॥ ५७ ॥**

**सलिलैः शुचिभिर्माल्यैः वन्यैर्मूलफलादिभिः ।**
**शस्ता[6]ङ्कुरां[7]शुकैश्चा[8]र्चेत् तुलस्या प्रियया प्रभुम् ॥ ५८ ॥**

**श्रीध०** ध्यानमाह - **स्मयमानमिति** । नियतेन प्रागुक्तया धारणया सुस्थिरेणात एवैकभूतेन एकाग्रेण । धारणोक्तानि विशेषणानि ध्यानेऽपि द्रष्टव्यानि । यद्वा यथोक्तमात्रमेव । तदुक्तमेकादशस्कन्धे "नान्यानि चिन्तयेद् भूयः सुस्मितं भावयेन्मुखम् (भाग. 11-14-43) इति ॥ ५४ ॥

1. A omits पादाभ्यां 2. M, Ma ०मे० 3. W पुरुषोत्तमम् 4. M, Ma, Ms पू० 5. I जपश्च; M, Ma जप्यस्तु 6. V शस्तैर्दूर्वाङ्कुरैश्चान्यैः 7. M, Ma, Ms ०रैः कुशैः० 8. W ०श्चान्यैः

समाधिमाह - **एवमिति**। [1-]परया निर्वृत्या आनन्देन[-1] तूर्णं शीघ्रं सम्पन्नं सत्॥ ५५॥

**जप्य** इति। जप्यो मन्त्रः॥ ५६, ५७॥

द्रव्याण्येवाह - **सलिलैरिति**। शस्तैः दूर्वाङ्कुरैः वन्यैरेवांशुकैः भूर्जत्वगादिभिः॥ ५८॥

**वीर०** स्मयमानमीषद्धसन्तम् अनुरागयुक्तोऽवलोको यस्य, पुरुषोत्तमं नियतेन विजातीयप्रत्ययरहितेन एकभूतेन एकाग्रेण मनसा [2-]अभिद्यायेत्[-2] अभितः पादादिशिरःप्रभृति ध्यायेत्[3]॥ ५४॥

एवं ध्येयमाकारमभिधायेदृशशुभाश्रयध्यानसुखितं मनः ततः तूर्णं न निवर्तयेदित्याह - **एवमिति**। सुभद्रं निरतिशयमङ्गलगुणाकरं ध्यानविषयं भगवतो रूपमभिध्यायेदिति शेषः। परया निर्वृत्या निरतिशयेन सुखेन सम्पन्नं युक्तं मन इति शेषः, तूर्णं न निवर्तते। यद्वा परया निर्वृत्या सम्पन्नं मनस्तूर्णं यथा न निवर्तते तथा भगवतो रूपं ध्यायेदिति क्रियाविशेषणत्वानुषङ्गाभ्यां योजनीयम्॥ ५५॥

एवमष्टाङ्गयुक्तं भक्तियोगमभिधाय तदनुग्राहिकां द्रव्यमयीं सपर्यामभिधास्यन्, तदुपयुक्तं जप्यं मन्त्रं सप्रभावमाह - **जप्यश्चेति**। हे नृपात्मज! परमो निरतिशयः अत एव गुह्यो गोपनीयः मन्त्रः मे मत्तः श्रूयतां यं मन्त्रं पुमान् सप्तरात्रं प्रपठन्[4] प्रजपन् खेचरान् पश्यति॥ ५६॥

कोऽसौ मनुरित्यत्र[5] आह - **ओमिति**। अयं वासुदेवद्वादशाक्षरो मन्त्रः, अस्यार्थस्तु सम्प्रदायतोऽवगन्तव्यः। एतन्मन्त्रपूर्वकद्रव्यमयीमर्चामाह - **मन्त्रेणेति**। देवस्य अनेन मन्त्रेण नानाविधैर्द्रव्यैः द्रव्यमयीं द्रव्यप्रचुरां सपर्यां देशकालयोः सपर्योपयुक्तानुपयुक्तदेशकालयोः विभागं वेत्तीति देशकालविभागवित् कुर्यात् सपर्योपयुक्तो देशः चण्डालपतितयवनाद्यसेवितः, कालस्तु प्रातर्मध्यन्दिनसायाह्नादिरूपः, तदितरावनुपयुक्तौ देशकालौ॥ ५७॥

द्रव्याण्याह - **सलिलैरिति**। शुचिभिरिति सलिलादिभिः सर्वैरन्वेति। वन्यैः वनेषु भवैः शस्ताङ्कुरांशकैः प्रशस्तैर्दूर्वाद्यङ्कुरैर्वन्यैरेवांशुकैः भूर्जत्वगादिभिश्च प्रियया भगवतः प्रीतिविषयया तुलस्या हरिमर्चयेत् आराधयेत्॥५८॥

**विज०** मनसैवंविधं भगवतो रूपं ध्यायेदित्यन्वयः। किं विशिष्टेन मनसा नियमेन[6] परिणततयाऽभ्यस्ततया प्राप्तपरिपाकत्वेन एकस्मिन्ध्येये वस्तुनि भूतेन बाह्यविषयाभिनिवेशरहितेन॥ ५४॥

निर्वृत्योद्रिक्तानन्देन सम्पन्नं पूर्णं ध्येयादितरत्र न निवर्तते न गच्छति॥ ५५॥

---

1--1. B, J, V, Va omit 2--2. A, B, T omit 3. W adds वा 4. A, T omit प्रजपन् 5. A, B, T °त 6. A, B °तेन

**विज०** अरुणत्वलक्षणज्ञापनाय पुनरीक्षणं क्वचिद्धरिं पीतवर्णं क्वचित् कृष्णम् ॥ ४९ ॥

क्वचिद्घनवत् श्यामं नीलं पुरुषलक्षणसामग्रीसूचनाय पुरुषग्रहणम् ॥ ५०, ५१ ॥

"कलापो भूषणे बर्हे" (अम.को. 3-3-129) इति वचनात् काञ्चीकलापेन पर्यस्तं संवेष्टितम् ॥ ५२ ॥

नखमणिश्रेण्या विलसद्भ्यां पादाभ्यां[1] समर्चतां भक्तानामात्मनि मध्यदेहे हृदयपद्मकर्णिकाधिष्ण्यमाक्रम्यावस्थितम् ॥५३॥

**स्मयमानमभिध्यायेत्सानुरागावलोकनम् ।**
**नियतेनैकभूतेन[2] मनसा वरदर्षभम्[3] ॥ ५४ ॥**

**एवं भगवतो रूपं सुभद्रं ध्यायतो मनः ।**
**निर्वृत्त्या परया तूर्णं[4] सम्पन्नं न निवर्तते ॥ ५५ ॥**

**जप्यश्च[5] परमो गुह्यः श्रूयतां मे नृपात्मज !**
**यं सप्तरात्रं प्रपठन् पुमान् पश्यति खेचरान् ॥ ५६ ॥**

**ॐ नमो भगवते वासुदेवाय**

**मन्त्रेणानेन देवस्य कुर्यात् दण्डमयीं बुधः ।**
**सपर्यां विविधैर्द्रव्यैः देशकालविभागवित् ॥ ५७ ॥**

**सलिलैः शुचिभिर्माल्यैः वन्यैर्मूलफलादिभिः ।**
**शस्ताङ्कुरांशुकैश्चार्चेत्[6][7][8] तुलस्या प्रियया प्रभुम् ॥ ५८ ॥**

**श्रीध०** ध्यानमाह - **स्मयमानमिति** । नियतेन प्रागुक्तया धारणया सुस्थिरेणात एवैकभूतेन एकाग्रेण । धारणोक्तानि विशेषणानि ध्यानेऽपि द्रष्टव्यानि । यद्वा यथोक्तमात्रमेव । तदुक्तमेकादशस्कन्धे "नान्यानि चिन्तयेद् भूयः सुस्मितं भावयेन्मुखम् (भाग. 11-14-43) इति ॥ ५४ ॥

1. A omits पादाभ्यां 2. M. Ma °मे° 3. W पुरुषोत्तमम् 4. M, Ma, Ms पू° 5. I जपश्च; M, Ma जप्यस्तु 6. V शस्तैर्दूर्वाङ्कुरैश्चान्यैः 7. M, Ma, Ms °रैः कुशैः° 8. W °श्चान्यैः

समाधिमाह - **एवमिति**। [1-]परया निर्वृत्या आनन्देन[-1] तूर्णं शीघ्रं सम्पन्नं सत् ॥ ५५ ॥

**जप्य** इति। जप्यो मन्त्रः ॥ ५६, ५७ ॥

द्रव्याण्येवाह - **सलिलैरिति**। शस्तैः दूर्वाङ्कुरैः वन्यैरेवांशुकैः भूर्जत्वगादिभिः ॥ ५८ ॥

**वीर०** स्मयमानमीषद्धसन्तम् अनुरागयुक्तोऽवलोको यस्य, पुरुषोत्तमं नियतेन विजातीयप्रत्ययरहितेन एकभूतेन एकाग्रेण मनसा [2-]अभिद्यायेत्[-2] अभितः पादादिशिरःप्रभृति ध्यायेत्[3] ॥ ५४ ॥

एवं ध्येयमाकारमभिधायेदृशशुभाश्रयध्यानसुखितं मनः ततः तूर्णं न निवर्तयेदित्याह - **एवमिति**। सुभद्रं निरतिशयमङ्गल-गुणाकरं ध्यानविषयं भगवतो रूपमभिध्यायेदिति शेषः। परया निर्वृत्या निरतिशयेन सुखेन सम्पन्नं युक्तं मन इति शेषः, तूर्णं न निवर्तते। यद्वा परया निर्वृत्त्या सम्पन्नं मनस्तूर्णं यथा न निवर्तते तथा भगवतो रूपं ध्यायेदिति क्रियाविशेषणत्वानुषङ्गाभ्यां योजनीयम् ॥ ५५ ॥

एवमष्टाङ्गयुक्तं भक्तियोगमभिधाय तदनुग्राहिकां द्रव्यमयीं सपर्यामभिधास्यन्, तदुपयुक्तं जप्यं मन्त्रं सप्रभावमाह - **जप्यश्चेति**। हे नृपात्मज! परमो निरतिशयः अत एव गुह्यो गोपनीयः मन्त्रः मे मत्तः श्रूयतां यं मन्त्रं पुमान् सप्तरात्रं प्रपठन् [4]प्रजपन् खेचरान् पश्यति ॥ ५६ ॥

कोऽसौ मनुरित्यत्र[5] आह - **ओमिति**। अयं वासुदेवद्वादशाक्षरो मन्त्रः, अस्यार्थस्तु सम्प्रदायतोऽवगन्तव्यः। एतन्मन्त्रपूर्वकद्रव्यमयीमर्चामाह - **मन्त्रेणेति**। देवस्य अनेन मन्त्रेण नानाविधैर्द्रव्यैः द्रव्यमयीं द्रव्यप्रचुरां सपर्यां देशकालयोः सपर्योपयुक्तानुपयुक्तदेशकालयोः विभागं वेत्तीति देशकालविभागवित् कुर्यात् सपर्योपयुक्तो देशः चण्डालपतितयवनाद्यसेवितः, कालस्तु प्रातर्मध्यन्दिनसायाह्नादिरूपः, तदितरावनुपयुक्तौ देशकालौ ॥ ५७ ॥

द्रव्याण्याह - **सलिलैरिति**। शुचिभिरिति सलिलादिभिः सर्वैरन्वेति। वन्यैः वनेषु भवैः शस्ताङ्कुरांशकैः प्रशस्तैर्दूर्वाद्यङ्कुरैर्वन्यैरेवांशुकैः भूर्जत्वगादिभिश्च प्रियया भगवतः प्रीतिविषयया तुलस्या हरिमर्चयेत् आराधयेत् ॥५८॥

**विज०** मनसैवंविधं भगवतो रूपं ध्यायेदित्यन्वयः। किं विशिष्टेन मनसा नियमेन[6] परिणततयाऽभ्यस्ततया प्राप्तपरिपाकत्वेन एकस्मिन्ध्येये वस्तुनि भूतेन बाह्यविषयाभिनिवेशरहितेन ॥ ५४ ॥

निर्वृत्योद्रिक्तानन्देन सम्पन्नं पूर्णं ध्येयादितरत्र न निवर्तते न गच्छति ॥ ५५ ॥

---

1--1. B, J, V, Va omit 2--2. A, B, T omit 3. W adds वा 4. A, T omit प्रजपन् 5. A, B, T °त 6. A, B °तेन

जप्यो: मन्त्रः ॥ ५६ ॥

द्रव्यमयीं द्रव्यप्रधानाम्। "अर्चा पूजा सपर्या स्यात्" (वैज.को. 3-6-39) इत्यभिधानम् ॥ ५७ ॥

द्रव्याण्यांह - **सलिलैरिति**। वन्यैः वनभवैः ॥ ५८ ॥

**लब्ध्वा द्रव्यमयीमर्चां क्षित्यम्ब्वादिषु [1]चार्चयेत्।**
**[2]आहृतात्मा मुनिः शान्तो यतवाङ्मितवन्यभुक् ॥ ५९ ॥**

**स्वेच्छावतार[3]चरितैः [4]अचिन्त्यं निजमायया।**
**करिष्यत्युत्तमश्लोकः [5]तं ध्यायेद्धृदयङ्[6]गमम् ॥ ६० ॥**

**परिचर्या भगवतो याव[7]त्यः पूर्वसेविताः।**
**ता मन्त्रहृदयेनैव प्र[8]युञ्ज्यान्मन्त्रमूर्तये ॥ ६१ ॥**

**एवं कायेन मनसा वचसा च मनो[9]गतम्।**
**परिचर्यमाणो भगवान् भक्तिमत्परिचर्यया ॥ ६२ ॥**

**पुंसाममायिनां सम्यग्भजतां भाववर्धनः।**
**श्रेयो दिशत्यभिमतं यद्धर्मादिषु देहिनाम् ॥ ६३ ॥**

श्रीध० पूजाया अधिष्ठानमाह - **लब्ध्वेति**। लब्ध्वा सम्पाद्य। द्रव्यमयीं शिला[10]दिभिर्निर्मिताम् [11-]अर्चां प्रतिमाम्[-11], पूजासाद्[12]गुण्यहेतूनाह सार्धद्वाभ्याम्। [13]आहृतात्मा धृतचित्तः [14-]मितं वन्यं[-14] फलमूलादि [15]भुङ्क्ते इति तथा ॥ ५९ ॥

**स्वेच्छेति**। यत्करिष्यतीति तदानीमवतारप्राचुर्य[16]भावात् ॥ ६० ॥

**परिचर्या इति**। पूर्वसेविताः [17]पूर्वं सेवनं कारिताः कार्यत्वेन विहिता इत्यर्थः। मन्त्रहृदयेन द्वादशाक्षरेण ॥ ६१ ॥

1. A, B, G, I, J, T वा° 2. A, B, G, I, J, T भृ° 3. M, Ma, Ms चरितं 4. T न्त्यगुण° 5. A, B, G, I, J, T तद्; M, Ma, Ms तान् 6. M, Ma, Ms °मान् 7. M, Ma, Ms °तीः 8. M, Ma, Ms °युज्या° 9. M, Ma गतः 10. A, J, Va °दिनि° 11--11. V omits 12. A, B, J, Va सार्धाभ्याम् 13. A, B, J, Va °भृ° 14--14. B, J, V, Va omit 15. V adds सन् 16. A adds लृट् 17. B, J, V, Va omit पूर्वं

**एवमिति**। एवमुक्तरीत्या मनोगतं यथा भवति तथा कायादिभिर्भक्तिमत्त्या परिचर्यया सेवया[1] परिचर्यमाणो भगवान्[2] अमायिनां[3-] निष्कपटानां[-3] पुंसां धर्मार्थकामेषु यदभिमतं तच्छ्रेयो दिशतीति द्वयोरन्वयः ॥ ६२, ६३ ॥

**वीर०** एवं द्रव्यमयीमर्चां लब्ध्वा सम्पाद्य क्षित्यम्ब्वादिषु चक्राब्जमण्डलादिभिरलङ्कृतायां क्षितौ गङ्गाजलादिषु आदिशब्दाद्विप्रादित्यमण्डलादिषु च अर्चयेत्। पूजासाद्गुण्यहेतूनाह सार्धाभ्याम्। *आदृतात्मा आदृतचित्तः मुनिः ध्यानानुपयुक्तदशासु शुभाश्चर्यसंशीलनपरः शान्तः जितेन्द्रियः, यतवाक् मितभाषणः मितं यथा भवति तथा वन्यं भुङ्क्त इति तथा ॥ ५९ ॥

स्वेच्छावतारचरितैः स्वेच्छयैवोपात्ताः न तु कर्मणा ये अवताराः[4] वराहादयः अवताराः तेषां चरितैः व्यापारैः निजमायया आत्मीयसङ्कल्पेन उत्तमश्लोको भगवान् यत् अचिन्त्यं कर्मवश्यदेवमनुष्यादिसजातीयत्वेन चिन्तयितुमशक्यं करोति[5] साधुपरित्राण-दुष्कृद्विनाशनादिकं करोति तं हृदयङ्गमं मनोहरं ध्यायेत्। तदानीमवतारप्राचुर्याभावात् करिष्यतीति भविष्यन्निर्देशः ॥ ६० ॥

यावत्यो भगवतः परिचर्याः पूर्वं सेविताः सेवनं कारिताः कार्यत्वेन विवक्षितास्ताः सर्वा मन्त्रहृदयेनैव द्वादशाक्षरमन्त्रानु-सन्धानयुक्तमनसैव मन्त्रः मूर्तिर्विग्रहो यस्य तस्मै भगवते प्रयुञ्ज्यात् युक्ताः कुर्यात् ॥ ६१ ॥

एवमाराधितो भगवान् आराधकानां समीहितधर्मादिश्रेयो दिशतीत्याह - **एवमिति** द्वाभ्याम्। अमायिनामवञ्चकानाम् अत एव सम्यक् भजतां कर्मायत्तदेहभृतां पुंसां मानवर्धनः सम्मानकारी भगवान् भक्तिमती या परिचर्या तया परिचर्यमाणः धर्मादिषु यदाराधकाभिमतं तच्छ्रेयो दिशतीत्युभयोरन्वयः ॥ ६२, ६३ ॥

**विज०** द्रव्यमयीमर्चां शिलादिप्रतिमां, "अर्चा तु प्रतिमा प्रोक्ता" (हला.को. 1-131) इत्यभिधानम्। **क्षितौ स्थण्डिले** आदिशब्दादादित्यमण्डलेऽग्नौ वा। आहृतात्मा विषयेभ्य आकृष्य वशीकृतमनाः मितं नियतादर्धं फलमूलादिवन्यं भुङ्क्ते इति मितवन्यभुक् ॥ ५९ ॥

निजमायया स्वरूपभूतमहिम्ना स्वेच्छया कृतावतारस्तस्य चरितैः कंसवधादिलक्षणैश्चरितं गुणसमूहं हृदयङ्गमान् यान् विभुविक्रमान् करिष्यति तान् ध्यायेदित्यन्वयः ॥ ६० ॥

---

1. B, J, V, Va omit सेवया 2. B, J, V, Va omit भगवान् 3--3. B, J, V, Va omit * आहृतात्मा इत्यस्य स्थाने अदृतात्मेति वीरराघवादृतः पाठः।
4. A, B, T omit अवताराः 5. A, B, T omit करोति

परिचर्यादि सङ्क्षिप्य तत्करणप्रकारं वक्ति - **परिचर्या** इति। यावतीः यावत्यः पूर्वाचार्यैः कल्पितास्ता मन्त्रहृदयेन मन्त्रेण नमश्शब्देन च "ॐ नमो भगवते वासुदेवाय" (भाग. 4-8-54) इत्यनेन मन्त्रमूर्तये मन्त्राक्षरप्रतिपाद्यवासुदेवाय प्रयुञ्ज्यात् कल्पयेत् इत्यन्वयः ॥ ६१ ॥

एवंविधोपासनाफलमाह - **एवमिति**। भक्तिमन्तः सन्तस्तेषां परिचर्यया शुश्रूषया देहिनां धर्मादिषु यदभिमतं श्रेयः तद्दिशतीत्यन्वयः ॥ ६२, ६३ ॥

**विरक्तश्चेन्द्रियरतौ भक्तियोगेन भूयसा।**
**तं निरन्तरभावेन भजेताद्धा विमुक्तये ॥ ६४ ॥**

**[1-] मैत्रेय उवाच [-1]**

**इत्युक्तस्तं परिक्रम्य प्रणम्य च नृपार्भकः।**
**ययौ मधुवनं पुण्यं हरेश्चरणचर्चितम् ॥ ६५ ॥**

**तपोवनं गते तस्मिन् प्रविष्टोऽन्तःपुरं मुनिः।**
**[2] अभ्यर्हितार्हणो राज्ञा सुखासीन उवाच ह [3] ॥ ६६ ॥**

**नारद उवाच**

**राजन् किं ध्यायसे दीर्घं मुखेन परिशुष्यता।**
**किं वा न रिष्यते कामो धर्मो वाऽर्थेन संयुतः ॥ ६७ ॥**

**[4] राजोवाच**

**सुतो मे बालको ब्रह्मन् स्त्रैणेनाकरुणात्मना।**
**निर्वासितः पञ्चवर्षः सह मात्रा महान् कविः ॥ ६८ ॥**

1--1. A, B, G, I, J, T, V, W omit 2. A, B, G, I, J, T, अर्हितार्हणको; M, Ma, Ms अर्हितोऽर्हणया 3. A, B, G, I, J, M, Ma, Ms, T तम्
4. Ms उत्तानपादः

**श्रीध० विरक्त इति ।** [1-] इन्द्रियरतो विषयभोगे [-1] विरक्तस्[2]सन् भजेत्[3] । किमर्थं विमुक्तये ॥ ६४ ॥

**इतीति ।** हरेश्चरणाभ्यां चर्चितं मण्डितम् ॥ ६५ ॥

**तपोवनमिति ।** अर्हितं सत्कृत्य समर्पितमर्हणम्, अर्घ्या[4]दि यस्मै ॥ ६६ ॥

**राजन्निति ।** किं वा न रिष्यते न नश्यतीति सवितर्कः प्रश्नः ॥ ६७ ॥

**सुत इति ।** मात्रा सह निर्वासितः [5-] निष्कासितः [-5] इति[6] तस्या अप्यनादृतत्वात् ॥ ६८ ॥

**वीर०** एवं धर्मादिसाधारण्येन तत्साधनभूता भक्तिरभिहिता । तत्र मुक्तिसाधनभूतायां भक्त्यां विशेषं वदन् उपसंहरति - **विरक्त** इति । इन्द्रियरतौ इन्द्रियसाध्यक्रीडायां विरक्तः निरन्तरभावेन विजातीयप्रत्ययान्तराव्यवहितप्रत्ययेन भूयसा बह्वङ्गोपकृतेनाऽऽप्रयाणादनुवर्तमानेन भक्तियोगेन प्रेमात्मकानुध्यानरूपेण ''प्रीतिपूर्वमनुध्यानं भक्तिरित्यभिधीयते'' इति हि स्मृतिः । अत्र हि[7] विरक्त इति । विमोकोक्त्या साधनसप्तकं विवक्षितम् । भूयसेत्यनेन ज्ञानयोगशमदमबाल्यपाण्डित्यमौनादयो विवक्षिताः । एवम्भूतेन भक्तियोगेन विमुक्तये तं भगवन्तम् अद्धा साक्षात् भजेत् । अद्धेत्यनेन सद्वारकोपासनं व्यावर्तितम् ॥ ६४ ॥

एवमुपदिष्टभगवदाराधनप्रकारो ध्रुवो मधुवनं गतवानिति वदन् अन्तरा नारदोत्तानपादयोः संवादमाह - **इतीत्यादिना** । इत्युक्तरीत्या उक्तः नृपार्भको ध्रुवः तं नारदं परिक्रम्य प्रदक्षिणीकृत्य प्रणम्य च हरेः भगवतश्चरणाभ्यां चर्चितं सञ्चारितम् अत एव पुण्यं मधुवनं ययौ ॥ ६५ ॥

तस्मिन् ध्रुवे तपोवनं गते सति मुनिर्नारदः अन्तःपुरं प्रविष्टः राज्ञा उत्तानपादेन अभ्यर्हितं सत्कृत्य समर्पितमर्हणमर्घ्यादिकं यस्य सः । सुखासीनः सुखावहे आसने यथासुखमासीनो नारद उवाच ॥ ६६ ॥

हे राजन् ! परितः शुष्यता मुखेन दीर्घं किं ध्यायसे ? अर्थेन संयुतः सहितः कामो धर्मश्च । चशब्दो वाशब्दार्थः । धर्मो वा किं वा[8] न रिष्यते[9] ? न नश्यतीति सवितर्कः प्रश्नः ॥ ६७ ॥

एवमुक्तो राजाऽऽह - **सुत इति** । हे ब्रह्मन् ! स्त्रैणेन स्त्रीषु भवः स्त्रैणः स्त्रीणामयमिति वा, स्त्र्यधीनेन स्त्रीभिर्जितेनेति[10] यावत्,

---

1--1. B, J, V, Va omit 2. V °श्च 3. V °त 4. A, B अर्घ्यादिकं; J, Va अर्घादिकं 5--5. B, J, V, Va omit 6. A मात्रेत्युक्तिः
7. W omits हि 8. A, B, T omit वा 9. A, B, T °प ति 10. A, B, T °नि°

अत एव अकरुणात्मना करुणारहितचित्तेन मया मे मम सुतः, सुतः[1] इत्यनेन अपरित्याज्यता गम्यते, पञ्चवर्ष इत्यनेन नितरां, मात्रा सह निर्वासितः। तस्या अप्यनादृतत्वेन निर्वासितप्रायत्वात् मात्रा सह इत्युक्तिः। तथा च भार्यापुत्रयोरपरित्याज्यता स्मृता "वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः। अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्" (मनु.स्मृ. अधिक पाठ. 11-1) इति। ननु "त्यजेदेकं कुलस्यार्थे" (चाणक्यनीतिः 2-10) इत्युक्तरीत्या उत्पथश्चेत् सुतोऽपि त्याज्य एव। तत्राह महान्कविः। महान् विनयादिगुणसम्पन्नः कविर्बुद्धिमान्॥ ६८॥

**विज०** सर्वस्मात् साधनात् विरक्तिभक्ती मुक्तिसाधने इत्याशयेनाह - **विरक्तश्चेति**। तयोः अवश्यकर्तव्यत्वे च शब्दः, इन्द्रियरतौ विषयभोगे विरक्तः॥ ६४॥

उत्तरकथाप्रसङ्गमाह - **इत्युक्त इति**॥ ६५॥

नन्वस्त्वियं कथा पुनर्नारदः कुत्राऽयासीदत्राह - **तपोवनमिति**। अर्हणया पूजासाधनेन अर्हितः पूजितः॥ ६६॥

न रिष्यते न हिंस्यते॥ ६७॥

नारदेन पृष्टो राजा उत्तरमाह - **सुतो म इति**। निर्वासितः निष्कासितः। कविरित्यनेन ज्ञानित्वं द्योतयति॥ ६८॥

**अप्यनाथं वने ब्रह्मन्मास्मादन्त्यर्भकं[2] वृकाः।**
**श्रान्तं[3] शयानं क्षुधितं परिम्लानमुखाम्बुजम्॥ ६९॥**

**अहो मे बत दौरात्म्यं स्त्रीजितस्योपधारय।**
**योऽङ्कं प्रेम्णाऽऽरुरुक्षन्तं नाभ्यनन्दमसत्तमः॥ ७०॥**

**नारद उवाच**

**मा मा शुचस्व[4] तनयं देवगुप्तं विशाम्पते।**
**तत्प्रभावमविज्ञाय प्रावृङ्क्ते यद्यशो जगत्॥ ७१॥**

**सुदुष्करं कर्म कृत्वा लोकपालैरपि प्रभुः।**
**एष्यत्यचिरतो[5] राजन् यशो विपुलयंस्तव॥ ७२॥**

1. A, B, T omit सुतः 2. M, Ma, Ms खादन्त्व° 3. V, W शान्तं 4. A, B, G, I, J, M, Ma, Ms, T शुचः स्वतनयं
5. G, I ऐ°; M, Ma एष एष्यत्यचिरतो य°

**मैत्रेय उवाच**

**इति देवर्षिणा प्रोक्तं [1]विस्रभ्य जगतीपतिः ।**
**[2]राज्यलक्ष्मीमनादृत्य पुत्रमेवान्वचिन्तयत् ॥ ७३ ॥**

**श्रीध० अपीति** । मा स्म अदन्ति किंस्वित्, न खादन्तीत्यर्थः ॥ ६९, ७० ॥

**मेति** । [3-]दैवेन श्रीहरिणा गुप्तमात्मसात्कृत्वा रक्षितम्[-3] । यस्य यशो जगत् प्रावृङ्क्ते व्याप्नोति ॥ ७१ ॥

**सुदुष्करमिति** । विपुलयन् विस्तारयन् ॥ ७२, ७३ ॥

**वीर०** हे ब्रह्मन् ! वने क्षुधितं श्रान्तम् अत [4]एव परितः परिम्लानं मुखाम्बुजं यस्य अत एव शयानमर्भकमनाथं रक्षकहीनं [5]वृकाः मा स्मादन्त्यपि मा स्म खादन्ति किंस्विदित्यर्थः ॥ ६९ ॥

आत्मानं निन्दति - **अहो इति** । स्त्रिया जितस्य मे मम दौरात्म्यम् *अवधारय निश्चिनु । अहो बतेति खेदे । दौरात्म्यं दर्शयति - योऽहमसत्तमः अङ्कमारुरुक्षन्तम् आरोढुमिच्छन्तं सुतं प्रेम्णा नाभ्यनन्दं नाभिनन्दितवानस्मि ॥ ७० ॥

एवमुक्तो नारदः तमाश्वासयन्नाह - **मेति** । हे विशाम्पते ! मनुजपते ! दैवगुप्तमिति हेतुगर्भम् । दैवेन ईश्वरेण गुप्तत्वात् रक्षितत्वात् तनयं प्रति तस्य तनयस्य प्रभावमविज्ञाय अज्ञात्वा, अविज्ञायेत्यत्र क्त्वान्तस्य वीत्युपसर्गेण समासे क्त्वो ल्यबादेशे च पश्चात् नञा समासः अतः "अनञ्पूर्वे" इति न ल्यब्निषेधः । मा मा [6-]शुचस्व मा शुचस्व[-6] इत्यर्थः वीप्सातात्पर्येण माङो द्विरुक्तस्य प्रयोगः । प्रभावमेव विवृणोति । प्रावृङ्क्ते इति सपादेन श्लोकेन [7]यत् यस्य तव पुत्रस्य यशः जगत् प्रावृङ्क्ते व्याप्नोति ॥ ७१ ॥

प्रभुर्जितेन्द्रियो ध्रुवः लोकपालैः इन्द्रादिभिरपि सुदुष्करं कर्तुमशक्यं कर्म तपसा भगवत्तोषणपूर्वकसर्वोत्कृष्टपदसम्पादनरूपं कर्म कृत्वा अत एव च यशो विपुलयन् विस्तारयन् हे राजन् ! अचिरतः आशु एष्यति आगमिष्यति ॥ ७२ ॥

एवं नारदेनाऽऽभाषितो राजा पुत्रमेवानुचिन्तयन्नासीदित्याह मैत्रेयः - **इतीति** । इति एवं देवर्षिणा नारदेन प्रोक्तं विमृश्य सविमर्शमाश्रुत्य जगतीपतिरुत्तानपादः राज्यलक्ष्मीमनादृत्य ध्रुवमेवान्वचिन्तयत् ॥ ७३ ॥

1. A, B, G, I, J, T विश्रुत्य; W विमृश्य  2. A, B, G, I, J, Ms, T राज०  3--3. V omits  4. A, B, T omit एव  5. W omits वृकाः  * उपधारय इत्यस्य स्थाने अवधारय इति वीरराघवस्वीकृतः पाठः इति ज्ञायते ।  5--5. A, B शुचः मा शुचः  6. W omits यत्

**विज०** यतोऽसौ सिंहासनपदादत्युत्तमपदं[1] साधयामीति निरूप्य मात्रादीन् विहाय पुरान्निरगमदित्येवं मुनिना[2] बोध्यमानोऽपि[2] राजा तद्गतं दुःखमुद्गलयति[3] - **अप्यनाथमिति** ॥ ६९ ॥

एवमनुतप्य स्वदौरात्म्यं, मुनिमपि सम्बोधयति - **अहो इति**। त्वया किमकारीति तत्राह - योऽङ्कमिति ॥ ७० ॥

प्रवक्ता नारदस्तु मदाज्ञाभिमानस्य गतत्वात् अस्य हरिरेव रक्षक इति कृत्वा पुत्रं तं मानुतपेत्याह - **मामेति**। ततोऽप्यनुतापो न गच्छतीति अतः अज्ञानमूलोऽसावित्याह-तत्प्रभावमिति। प्रावृङ्क्ते व्याप्नोति ॥ ७१ ॥

अस्मन्निमित्तवैराग्येण गतः पुत्रो न पुनरेष्यतीति खेदो मा भूदित्याह - **सुदुष्करमिति**। तत्कर्म तस्य ध्रुवस्यैव योग्यत्वात् लोकपालानां दुष्करं न तु तेषामशक्यत्वात् "नाशक्यं देवतानां तु यदन्यैश्शङ्कितं क्वचित्। शक्ता अपि न कुर्वन्ति यदन्यविहितं बुधाः" (ब्राह्मे) इति वचनात्, अपिपदेन सूचनात्[4] ॥ ७२ ॥

एवं विप्रब्धस्यापि राज्ञोऽनुतापपरम्परामाह - **इतीति**। अनेन संसारस्य[5] दुस्तरत्वमसूचि ॥ ७३ ॥

**तत्राभिषिक्तः प्रयतस्तामुपोष्य विभावरीम्।**
**समाहितः पर्यचरद्दिष्टादेशेन[6] पूरुषम् ॥ ७४ ॥**

**त्रिरात्रान्ते त्रिरात्रान्ते कपित्थबदराशनः।**
**आत्मवृत्त्यनुसारेण मासं निन्येऽर्चयन्हरिम् ॥ ७५ ॥**

**द्वितीयं च तथा मासं षष्ठे षष्ठेऽर्भको दिने।**
**तृणपर्णादिभिः जीर्णैः[7] कृतान्नो[8]ऽभ्यर्चयद्विभुम्[9] ॥ ७६ ॥**

**तृतीयं[10] च[11] नयन्मासं नवमे नवमेऽहनि।**
**अब्भक्ष उत्तमश्लोकमुपाधावत्समाधिना ॥ ७७ ॥**

---

1. A °दप्यु 2--2. A, B, M अनुमिमानोऽपि 3. A, B °द्र° 4. M, Ma सूचितात् 5. A, B, add दुस्तरस्य
6. A, B, G, I, J, Ms, T °दृष्या°; M, Ma दृष्ट्या° 7. A, B, G, I, J, M, Ma, Ms, T शीर्णैः 8. V ऽऽशो° 9. V °द्धरिम्; I, W °न्विभूम्
10. A, B, G, I, J, T, V चान° 11. M, Ma °ये°

**चतुर्थमपि वै मासं द्वादशे द्वादशेऽहनि।**

**वायुभक्षो जितश्वासो ध्यायन्देव मधारयत्[1]॥ ७८॥**

**पञ्चमे मास्यनुप्राप्ते जितश्वासो नृपात्मजः।**

**ध्यायन् ब्रह्म पदैकेन तस्थौ स्थाणुरिवाचलः॥ ७९॥**

**श्रीध०** ध्रुवो मधुवने किमकरोदित्यपेक्षायामाह - **तत्रेत्यादिना[2]**। अभिषिक्तः स्नातः यस्यां प्राप्तस्तां रात्रिम्[3]॥ ७४॥

**त्रीति**। कपित्थानि बदराणि चाशनं यस्य। आत्मवृत्तिः[4] देहस्थितिः तदनुसारेण॥ ७५, ७६॥

**तृतीयमिति**। तृतीयं मासं[5] च आनयन्नीषदिव नयन् उपाधावदित्यन्वयः। प्रतिमासमाहारसङ्कोचं[6] तपोऽतिरेकं च कृतवानित्यर्थः॥ ७७, ७८, ७९॥

**वीर०** ध्रुवो मधुवने किमकरोदित्याह[7] - **तत्रेत्यादिना**। अभिषिक्तः स्नातः यमुनायामिति शेषः। यस्यां प्रयतः तपसे प्रयतितवान् तां प्रथमां रात्रिं तत्र मधुवने उपोष्य विभावरीमित्यत्यन्तसंयोगे द्वितीया। उपवसतेर्[8]भुक्त्यर्थस्य आधारस्तु वनमिति। तत्रेति सप्तमी बोध्या। समाहितचित्तः दिष्टादेशेन उपदिष्टमार्गेण पूरुषं परमपुरुषं[9] पर्यचरत् परिपूजितवान्॥ ७४॥

त्रिसृणां रात्रीणां समाहारः त्रिरात्रं तस्यान्ते कपित्थानि बदराणि च फलानि अशनं यस्य सः। आत्मनो देहस्य वृत्तिः स्थितिः तदनुसारेण देहधारणमात्रोपयुक्ताहारेणेत्यर्थः। हरिमर्चयन् मासं निन्ये अतिचक्रमे॥ ७५॥

अर्भको ध्रुवः षष्ठे षष्ठे दिने जीर्णैः तृणादिभिः कृतमन्नं यस्य जीर्णतृणाद्यशनः विभुमभ्यर्चयन् द्वितीयं मासं निन्य इत्यनुषङ्गः॥ ७६॥

नवमे नवमेऽहनि अब्भक्षः अप एव भक्षयन् तृतीयं च मासं नयन् उत्तमश्लोकं भगवन्तं समाधिना उपाधावत् आराधित-वान्॥ ७७॥

वायुभक्षः वायुमेव भक्षयन् चतुर्थमपि मासं नयन् जितश्वासः जितप्राणः देवं भगवन्तं ध्यायन् अधारयत् धारणं कृतवान्। प्रतिमासमाहारसङ्कोचं तपोतिरेकं च कृतवानित्यर्थः॥ ७८॥

---

1. M, Ma °पा° 2. V °ति। 3. B, J, V, Va omit रात्रिम् 4. B वृत्तिः 5. A, B, J, Va omit मासं 6. V नियमं 7. W °त्यपेक्षायामाह 8. T °सेर° 9. A, B पू°

पञ्चमे मासि त्वनुप्राप्ते जितप्राणो राजसुतः ब्रह्म भगवन्तं ध्यायन् एकेन पदा चरणेन स्थाणुरिव निश्चलो भूत्वा तस्थौ स्थितवान् ॥ ७९ ॥

**विज०** ध्रुवो मधुवनं प्राप्य किमकार्षीदत्राह - **तत्रेति** । आदेशेन उपदेशेन नारदोक्तमार्गेण कृतया सदृष्ट्या निरूपणया पूरुषं वासुदेवं पर्यचरदित्यन्वयः ॥ ७४ ॥

तस्य तप आतिष्ठमानस्याऽशनप्रकारमाह - **त्रिरात्रान्ते** इति । कपित्थबदरयोः फलमशनं यस्य स तथोक्तः फलभुक्, अशननियतिं कथयति - आत्मवृत्तीति । यावता आत्मनः शरीरस्य वृत्तिः तदनुसारेण ॥ ७५, ७६ ॥

उपाधावत् उपास्त ॥ ७७ ॥

अपारयत् अतिक्रान्तवान् ॥ ७८ ॥

अचलः स्थिरः ॥ ७९ ॥

***देवाश्चक्रुस्तपोविघ्नं त्रासयन्तः स्वमायया ।**
**सर्पेभसिंहकूष्माण्डैस्तान्नापश्यत्परं गतः ॥**

**सर्वतो मन आकृष्य हृदि भूतेन्द्रियाशयम्[1] ।**
**ध्यायन् भगवतो रूपं नाद्राक्षीत्किञ्चनापरम् ॥ ८० ॥**

**आधारं महदादीनां प्रधानपुरुषेश्वरम् ।**
**ब्रह्म धारयमाणस्य[2] त्रयो लोकाश्चकम्पिरे ॥ ८१ ॥**

**यदैकपादेन स पार्थिवार्भकस्तस्थौ तदङ्गुष्ठनिपीडिता मही ।**
**ननाम तत्रार्धमिभेन्द्रधिष्ठिता तरीव सव्येतरतः पदे पदे ॥ ८२ ॥**

**तस्मिन्नभिध्यायति विश्वमात्मनो द्वारं निरुध्यासुमनन्यया धिया ।**
**लोका निरुच्छ्वासनिपीडिता भृशं सलोकपालाः शरणं ययुर्हरिम् ॥ ८३ ॥**

---

* It is found in M, Ma, Ms-Edn. only and the commentary of Vijayadhraja on the same can be found in its proper place

1. M, Ma, Ms °श्र° 2. M, Ma, Ms °णे तु

देवा[1] ऊचुः

नैवं विदामो भगवन् प्राणरोधं चराचरस्याखिलसत्त्वधाम्नः ।
विधेहि तन्नो वृजिनाद्विमोक्षं[2] प्राप्ता वयं त्वां शरणं शरण्यम् ॥ ८४ ॥

[3-]श्री भगवानुवाच[-3]

मा भैष्ट बालं तपसो[4] दुरत्ययात्[5] निवर्तयिष्ये[6] प्रतियात स्वधाम ।
यतो हि वः प्राणनिरोध आसीदौत्तानपादिर्मयि सङ्गतात्मा ॥ ८५ ॥

इति श्रीमद्भागवते महापुराणे अष्टादश साहस्र्यां
श्री हयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां
चतुर्थस्कन्धे अष्टमोऽध्यायः ॥ ८ ॥

**श्रीध० सर्वत** इति । भूतानि शब्दादीनि इन्द्रियाणि च आशेरते यस्मिन् तन्मनः आकृष्य [7-]भगवतो रूपं[-7] ब्रह्म ध्यायन् ॥ ८० ॥

**आधारमिति** । धारयमाणस्य सतः तस्य तेजः सोढुमशक्नुवन्तः सन्तः[8] कम्पिताः ॥ ८१ ॥

**यदेति** । तस्याङ्गुष्ठेन निपीडिता आक्रान्ता सती मही तत्र तदा अर्धं ननाम । समेंऽशके अर्धशब्दस्य नपुंसकत्वात् अंशांशिनोरभेदाच्च एवं सामानाधिकरण्यम् । इभेन्द्रेणाधिष्ठिता । [9-]अत्र दीर्घाभावः आर्षः[-9] । तरी नौः यथा पदे पदे सव्यतो दक्षिणतश्च नमति तद्वत् ॥ ८२ ॥

अन्यदप्याश्चर्यमाह - **तस्मिन्निति** । तस्मिन् ध्रुवे विश्वं विश्वात्मकं विष्णुम् आत्मनः सकाशादनन्यया धिया आत्माभेददृष्ट्याऽभिध्यायति[10] सति, किं कृत्वा, असुं प्राणं तद्द्वारं च निरुध्य [11-]लोका निरच्छ्वासनिपीडिता[-11] विश्वरूपं[12] विष्णुम्[13] आत्मन्येकीकृत्य स्वप्राणनिरोधे कृते[14] विश्वस्य प्राणनिरोधो जात इति भावः ॥ ८३ ॥

**नेति** । एवं विधं[15] प्राणनिरोधं कदाचिदपि न विद्मः, अखिलसत्त्वधाम्नः सर्वप्राणिशरीरस्य तत्[16] तस्मात् वृजिनात् क्लेशात् ॥ ८४ ॥

---

1. Ms लोकपालाः 2. Ms °क्षणं 3--3. वैकुण्ठः 4. W तपसा 5. W °यं 6. W निर्वर्तं 7--7. B, J, V, Va omit 8. B, J, V, Va omit सन्तः 9--9. A, B, J, Va omit 10. V स्वात्मा° 11--11. B, J, V, Va omit 12. B, J, V, Va विश्वं 13. B, J, V, Va omit विष्णुम् 14. V adds सति 15. A, B, J, Va omit विधं 16. A, B, J, Va omit तत्

**मेति**। यतो बालात्, कोऽसौ बालः ? कथं च तस्मात्प्राणनिरोध इत्यत आह। उत्तानपादस्य पुत्रो मयि विश्वरूपे सङ्गतात्मा ऐक्यं प्राप्तो वर्तत इति॥ ८५॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीधरस्वामि विरचितायां भावार्थदीपिकायां

व्याख्यायां अष्टमोऽध्यायः॥ ८॥

**वीर०** भूतेन्द्रियाशयं भूतानि भूतसूक्ष्माणि शब्दादीनि तद्ग्राहकाणीन्द्रियाणि श्रोत्रादीनि शब्दादिविषयप्रवणानीन्द्रियाणी-त्यर्थः, तानि आशेरते यस्मिन्। शयनमत्र निर्व्यापारः, अव्यापारि[1]श्रोत्रादीन्द्रियवन्मनः सर्वतः सङ्कल्पविकल्पादेः आकृष्य निवर्त्य हृदि हृदयपुण्डरीके भगवतो रूपं दिव्यविग्रहं ध्यायन् भगवतो रूपात् अपरमन्यं नाद्राक्षीत् नापश्यत्। अन्यं नाद्राक्षीदित्यनेन ध्यानस्य विजातीयप्रत्ययान्तराव्यवहितत्वकथनेन ध्यानस्य परिनिष्पत्तिः फलिता, साधनस्य निष्पत्तिर्नाम फलाव्यवहित-पूर्वदशोक्ता॥ ८०॥

तामेव प्रपञ्चयिष्यन् तावत् तत्प्रभावमाह - **आधारमिति** त्रिभिः। महदादीनां [2-]महदादिपृथिव्यन्तानां[-2] भूतानां तत्संसृष्टानां चेतनानां च आधारं धारकम् अनेन स्थूलचिदचिच्छरीरकत्वमुक्तम्। सूक्ष्मचिदचिच्छरीरकत्वमाह प्रधानपुरुषेश्वरं प्रधानं सूक्ष्ममचिन्त्यत्वं पुरुषाः तत्[3]संसृष्टाश्चेतनाः तेषामीश्वरं अन्तःप्रविश्य नियन्तारं "अन्तः प्रविष्टः शास्ता" (तैत्ति. 3-11) इति श्रुतेः। अनेन यन्महदादीनां धारकत्वमुक्तं तदप्यन्तःप्रविश्य नियमनेनैवेति विशेषनिष्ठं बोध्यम्। एवम्भूतं भगवन्तं ब्रह्म धारयमाणस्य सतः तस्य तेजः सोढुमशक्नुवन्तः त्रयो लोकाः चकम्पिरे कम्पिताः॥ ८१॥

सः पार्थिवार्भको ध्रुवः एकेन पादेन यदा तस्थौ तत्र [4]तदा तस्याङ्गुष्ठेन निपीडिता नितरां पीडिता [5]आक्रान्ता सती मही भूमिः अर्धं ननाम प्रह्वीबभूव। अर्धशब्दस्यात्र समांशवाचित्वाऽभावेऽपि विधेयनमनक्रियाविशेषणत्वाभिप्रायेण क्लीबत्वनिर्देशः। इभेन्द्रेण गजश्रेष्ठेन धिष्ठिता अधिष्ठिता तरी[6]व नौर्यथा पदे पदे प्रतिपदं सव्येतरतः सव्यतो वामतः [7]दक्षिणतश्च नमति तद्वत्॥ ८२॥

किञ्च तस्मिन् ध्रुवे आत्मनः स्वस्य विश्वं द्वारं सर्वाणीन्द्रियाणि द्वारशब्दः श्रोत्रादीन्द्रियपरः असुं प्राणं च निरुध्य अनन्यया विषयान्तररहितया धिया ध्यायति सति भगवन्तमिति शेषः। यद्वा विश्वशब्दो भगवत्परः। विष्णोर्नामसहस्रमित्युपक्रम्य "विश्वं

---

1. A. B. T °रित° 2--2. A. T omit 3. A. B. T °ष्टचेतनाः 4. W omits तदा 5. A. B. T omit आक्रान्ता 6. W omits इव
7. A.B. T omit दक्षिणतः

विष्णुः'' (विष्णु सहस्र. 1) इत्युक्तत्वात् विश्वात्मकत्वात् वा[1] ''विश्वो विष्णुः'' लोकाः इन्द्रादिभिस्सहिताः भृशं नितरां निरुच्छ्वासेन उच्छ्वाश्वासाभावेन निपीडिताः हरिं शरणं ययुः प्रापुः ॥ ८३ ॥

शरणप्राप्तिमेव प्रपञ्चयति - **नैवमिति** । हे भगवन् ! चराचरस्य एवंविधं प्राणनिरोधं न विदामः कदाचिदपि न जानीमः । अचरग्रहणं दृष्टान्तार्थम् । तेषामुच्छ्वासनिःश्वासयोरभावात् यथा अचरस्य उच्छ्वासादिर्नास्ति तथा चरस्यापि प्राप्त इति । तत्तस्मात् अखिलसत्वधाम्नः [2] कृत्स्नचिदचिच्छरीरकस्य तव नः सम्बन्धिनामस्माकं वृजिनात् प्राणनिरोधरूपात् दुःखात् विमोक्षं विधेहि कुरु । वयं शरण्यं समीहितसाधनत्वेनाध्यवसनीयं त्वां शरणमुपायं प्राप्ताः । उपायत्वेनाध्यवस्यामः इत्यर्थः ॥ ८४ ॥

एवं शरणं गतानाह शरण्यो भगवान् - **मा भैष्टेति** । मा भैष्ट भयं मा कुरुत । तपसा दुरत्ययम् अनुल्लङ्घ्यं बालं निर्वर्तयिष्ये निष्पादयिष्यामि समीहितेन संयोजयामीत्यर्थः । अतो यूयं स्वधाम स्वस्थानं प्रति यात गच्छत । कोऽसौ बालः ? कथञ्चैकस्य प्राणनिरोधात् विश्वस्य प्राणनिरोध इत्यत आह - यतो यदीयप्राणनिरोधाद्धेतोः वः युष्माकं प्राणनिरोधः आसीत् स औत्तानपादिः उत्तानपादस्य पुत्रो बालो ध्रुवो मयि विश्वप्राणिप्राणनहेतुभूते मयि '' को ह्येवान्यात्कः प्राण्यात् (सत्) एष आकाश आनन्दो न स्यात्'' (तैत्ति.आ. 2-7) यस्य क्षादपरीक्षाद्ब्रह्मा य आत्मा सर्वान्तरः । तन्मे व्याचक्ष्वेति यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः योऽपानेन अपानति स त आत्मा सर्वान्तरः'' (बृह.उ. 3-4-1) इति श्रुतेः । सङ्गतः आत्मा अन्तःकरणं यस्य सोऽभूत् स्वप्राणनिरोधेन उच्छ्वासनिःश्वासयोरप्यक्षममाणेन विश्वप्राणि प्राणनहेतुभूतस्य मम तेन निरुद्धत्वात् सर्वप्राणिप्राणनिरोधोऽभूदिति भावः ॥ ७५ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां अष्टमोऽध्यायः ॥ ८ ॥

**विज०** देवा ध्रुवस्य यशोविस्तृत्यर्थं तत्तपोविघ्नं चक्रुरित्याह - **देवा इति** । स्वस्वसिद्धमाययेन्द्रजालेन कूष्माण्डाः पिशाचविशेषाः तान्नापश्यदित्यनेन ध्रुवस्य देवेभ्योऽत्यधिकशक्तिमत्त्वं नाभिप्रेतं, किन्तु परमभागवतत्वेन यशोविस्तृत्यै विघ्नकरणं न तु तत्तपःखण्डनाय । तदुक्तम् ''यत्र देवैः कृते विघ्ने खण्डितो न पुमान् भवेत् । तत्र तद्यशसे विघ्नं कुर्युर्न तु विघातने ॥ यत्र खण्डितता तत्र खण्डनायैव केवलम् । सत्यकामा यतो देवास्ते चित्ताद्यभिमानिनः । अतो विमोहनायैव प्राप्नुयुस्ते पराजयम् । तेषामतिशक्तितोक्तिश्च विमोहाय सुरद्विषाम्'' (ब्रह्माण्डे) इति ॥

1. A, B, T omit वा   2. A, B, T omit कृत्स्न

नापश्यदित्येतद्विवृणोति - **सर्वत** इति। आकाशादिभूतानां तदुत्पन्नानां प्राणिनां चेन्द्रियाणाम् आश्रयं भगवतो रूपं ध्यायन् अपरं जगत्किञ्चन अल्पम् अस्वतन्त्रम् अद्राक्षीत् स्वतन्त्रं नाद्राक्षीदित्यन्वयः ॥ ८० ॥

एकाग्रमनसा तस्य वासुदेवं ध्यायतः सत इदमेकमाश्चर्यमभूदित्याह - **आधारमिति** ॥ ८१ ॥

सर्वाधारं ब्रह्म धारयमाणे ध्रुवे स्थिरत्वेन भाव्यं तत्र लोकानां कम्पनं कथमित्याशङ्क्योपपत्तिमाह - **यदैकपादेनेति**। तत्र तस्मिन् भागे तयोर्मध्ये इभेन्द्रेण गजेन गरिम्णाऽधिष्ठिता तरीव यथा नौर्नता भवति तथा। तदेव विशिनष्टि - सव्येतरत इति। सव्येतरयोः वामदक्षिणयोः पादयोः पदे पदे नुन्ना नता भवतीति[1] ॥ ८२ ॥

न केवलं चलनमेव लोकानामभूत्, किन्तु श्वासोच्छ्वासयोः प्रवृत्तिस्तम्भेन मरणाधिकक्लेशोऽभूदित्याह - **तस्मिन्निति**। तस्मिन् ध्रुवे अनन्यया ध्येयैकविषयतां गतया धिया श्वासप्रवृत्तिकारणमसुं प्राणं निरुध्य कुम्भकीकृत्य आत्मनो जीवराशेः उत्पत्त्यादेः द्वारं कारणं विश्वं विष्णुम् अभितः परितः इन्द्रियाभिमानिदेवैस्सह ध्यायति सति[2] निरुच्छ्वासेन निरुद्धप्राणवृत्त्या निपीडिताः सलोकपालाः लोकाः हरिं शरणं ययुरित्यन्वयः। अत्र भृशमित्यनेन क्षिप्रवाचिना लोकानामेव निरुच्छ्वासो न लोकपालानां देवतानामन्यप्रवृत्तिहेतूनां स्वोत्तमानुग्रहेण स्वावरानधीनप्रवृत्तिना तास्तु लोकश्वासार्थं कृपालवो हरिं शरणं ययुरिति ध्वनयति। उक्तं च "ध्यातुर्ध्रुवस्य कीर्त्यर्थं हरिणा सह देवताः। लोकोच्छ्वासान्निरुध्याऽथ श्वासार्थं च हरिं ययुः। अन्यप्रवृत्तयस्तेभ्यो न तेषामन्यतः क्वचित्। स्वोत्तमेभ्यस्तु देवेभ्यः तेषां स्युश्च प्रवृत्तयः" (तत्त्वनिर्णये) इति ॥ ८३ ॥

किमर्थं शरणं गता इति तत्राह - **नैवमिति**। अखिलानां सत्त्वानां प्राणिनां धाम समूहो यत्र तत्तथोक्तं तस्य "तेजश्शक्तिः समूहश्च गृहं धामेति कथ्यते" (शब्दनिर्णये) इत्यभिधानात्। वृजिनात् दुःखात् ॥ ८४ ॥

**हरेश्शरणं** गतानां देवानां भयव्यावर्तक[3]प्रतिवचनप्रकारमाह - **मा भैष्टेति**। यतो यस्मात् वो युष्माकं सकाशात् प्राप्तप्रवृत्तीनां लोकानां प्राणनिरोध आसीत्। तं तपसो निवर्तयिष्ये इत्यन्वयः। कोऽसौ इति तत्राह - औत्तानपादिरिति। मयि सम्यक् गतः आत्मा मनः यस्य सः **तथा ध्रुव** इत्युक्ते कस्य पुत्रः ? किं जातिरयम् इति शङ्का स्यादित्यत - औत्तानपादिरिति ॥ ८५ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे
श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां
टीकायां अष्टमोऽध्यायः ॥ ८ ॥

---

1. A, B, omit इति  2. A, B, omit सति  3. A °नि°

# नवमोऽध्यायः

## मैत्रेय उवाच

त एव मुत्सन्नभया ऊरुक्रमे [1]कृतप्रणामाः प्रययु स्त्रिविष्टपम्।
सहस्रशीर्षाऽपि ततो गरुत्मता मधो र्वनं भृत्यदिदृक्षया गतः ॥ १ ॥

स वै धिया योगविपाकतीव्रया हृत्पद्मकोशे स्फुरितं त[2] टित्प्रभम्।
तिरोहितं सहसैवोपलक्ष्य बहिस्स्थितं तदवस्थं ददर्श ॥ २ ॥

तद्दर्शनेनागत साध्वसः क्षिता ववन्दताङ्गं विनमय्य दण्डवत्।
दृग्भ्यां प्रपश्यन् प्रपिबन्निवार्भकश्चुम्बन्निवास्येन [3]भुजै रिवाश्लिषन् ॥ ३ ॥

स तं विवक्षन्त मतद्विदं हरिर्ज्ञात्वाऽस्य सर्वस्य च हृद्यवस्थितः।
कृताञ्जलिं ब्रह्ममयेन कम्बुना पस्पर्श बालं कृपया कपोले ॥ ४ ॥

स वै तदेव [4]प्रतिपद्य तां गिरं दैवीं परिज्ञात परात्मनिर्णयः।
[5]तं भक्तिभावोऽभ्यगृणा [6]दसत्वरः [7]परिश्रुतोरुश्रवसं [8]ध्रुवक्षितिः ॥ ५ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

नवमे तु हरिं स्तुत्वा लब्ध्वा तस्मा द्वरान्ध्रुवः। प्रत्यागत्याकरो द्राज्यं पित्रा दत्त मितीर्यते ॥

त इति एवं भगवद्वाक्येन गतभयाः ॥ १ ॥

स इति। स वै ध्रुवो योगस्य विपाकेन दार्ढ्येन तीव्रया निश्चलया गरुडाधिरूढं पुरतः स्थितमपि यदाऽन्तर्दृष्टित्वा दसौ नाऽपश्यत् तदा भगवतैवान्त[9]स्थं रूप माकृष्ट मत स्तिरोहित मुपलक्ष्य व्युत्थितस्सन् तदवस्थं यादृगन्तस्स्फुरितः तादृशम् ॥ २ ॥

---

1. A, B, G, I, J, T, V कृतावनामाः 2. A, B, G, I, J, T °डि° 3. M, Ma, Ms भुजेन चा° 4. A, B, G, I, J, T, V पादितां 5. M, Ma, Ms ताद्ध° 6. A, B, G, I, J, M, Ma, Ms, T °त्वरं 7. M, Ma, Ms श्रि° 8. M, Ma, Ms क्षितिम् ॥ 9. V °स्सव°

**तदिति** । आगतसाध्वसो जातसम्भ्रमः विनमय्य आनतं कृत्वा । सम्भ्रम मेवाऽह । दृग्भ्यां प्रपिबन्निव प्रपश्यन् अवन्दत आस्येन चुम्बन्निव अवन्दत । भुजाभ्यां मा[1]श्लिषन्निवावन्दतेत्यर्थः ॥ ३ ॥

**स** इति । विवक्षन्तं तद्गुणान् वक्तुं मिच्छन्तं, अतद्विदं स्तुत्यादि कर्तु मजानन्तम् । अस्य ध्रुवस्य सर्वस्य[2] च हृद्यवस्थित त्वात् ज्ञात्वा ब्रह्ममयेन वेदात्मकेन शङ्खेन ॥ ४ ॥

**स वै** इति । भगवता प्रतिपादितां गिरं प्रतिपद्येति शेषः । प्रतिपद्य ता मिति पाठे तां वेदात्मिकाम् । परिज्ञातः परात्मनो रीश्वरजीवयोः निर्णयो येन सः । अत एव भक्त्या भावः प्रेम यस्य, [3-]असत्वरः त्वरारहितः[-3] परितः श्रुतं विख्यात मुरुश्रुवः कीर्ति र्यस्य तम् । ध्रुवा क्षितिः स्थानं यस्येति भाविनिर्देशः ॥ ५ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं भगवतोक्तेषु देवेषु स्वधामगतेषु भगवान् भक्तानुजिघृक्षया ध्रुवेण प्रत्यक्षितः तेन स्तुत स्तं समीहितेन संयोज्य स्वधामाऽगात् तथा ध्रुवोऽपि संसाधितसमीहितः स्वधाम जगामेत्याह नवमेन मुनिः । एवं भगवद्वाक्येन उत्सन्नभया गतभया देवा उरुक्रमे भगवति विषये कृतः प्रणामो यै स्ते त्रिविष्टपं सुरलोकं ययुः जग्मुः । [4]ततः सहस्रशीर्षा भगवानपि भृत्यदिदृक्षया भृत्यदर्शनेच्छया मधोर्वनं गरुत्मता वाहनभूतेन सह गतः जगाम ॥ १ ॥

स वै ध्रुवः योगविपाकतीव्रया योगस्य ध्यानयोगस्य विपाकः [5]आपरोक्ष्य प्रीतिरूपत्वादिविशेषणविशिष्टत्वं तेन तीव्रया विजातीय प्रत्ययान्तराव्यवहितया धिया प्रथमं हृत्पद्मकोशे स्फुरितं साक्षात्कृतं ततः सहसैव [6]आश्वेव तिरोहितं ततः पुनः बहिस्स्थितं तडित्प्रभं अन्तराविर्भूतस्य सहसा तिरोधानेन तडित्साम्य मभिप्रेत्य तडित्प्रभ मित्युक्तं तदवस्थं यादृगन्तरस्फुरत्तादृश मुपलक्ष्य प्रत्यभिज्ञाय ददर्श साक्षात्कृतवान् ॥ २ ॥

तस्य भगवतो दर्शनेन आगतसाध्वसः जातसम्भ्रमः अर्भकः ध्रुवः अङ्गं शरीरं क्षितौ भूमौ दण्डवद्विनमय्य नतं कृत्वा अवन्दत नमस्कृतवान् । सम्भ्रममेवाह - दृग्भ्यां प्रपश्यन्[7]निव पिबन्निव अवन्दत आस्येन चुम्बन्निव अवन्दत, भुजाभ्यामाश्लिषन्नालिङ्गन्निवाऽवन्दत । भुजै रिति बहुवचन मार्षम् ॥ ३ ॥

---

1. V मालिङ्गन्नि° 2. V adds लोकस्य 3--3. A, B, J, V, A असत्वरं स्थैर्येण 4. A, B, J, omit ततः 5. W अपरोक्षप्री° 6. W omits आश्वेव 7. W omits इव

तं ध्रुवं विवक्षन्तं गुणान् वक्तु मिच्छन्तं तुष्टूषन्त मित्यर्थः। पुन रतद्विदं स्तोतु मजानन्तम् अस्य ध्रुवस्य सर्वस्य लोकस्य च हृदि हृदये अवस्थितः हेतुगर्भ मिदं हृदि अवस्थितत्वात् ज्ञात्वा स हरिः ब्रह्ममयेन ब्रह्म प्रणवः वेदो वा तत्प्रचुरेण ध्वनेः प्रणवाद्यनुकारित्वात् ब्रह्ममयेनेत्युक्तम्। कम्बुना शङ्खेन कपोले गण्डे बालं ध्रुवं कृपया पस्पर्श ममार्ज ॥ ४ ॥

स वै ध्रुवः दैवीं देवस्य सम्बन्धिनीं देवेन भगवता आविर्भावितामित्यर्थः। तां वेदार्थप्रचुरां गिरं वाचं तदैव स्पर्शोत्तरकालमेव प्रतिपद्य लब्ध्वा परितः ज्ञातः कात्स्न्येन विदितः परात्मनोः परमात्मजीवात्मनोः निर्णयो याथात्म्यं येन अत एव भक्तिभावः भक्त्यात्मको भावोऽभिप्रायो यस्य ध्रुवा स्थिरा शाश्वती क्षितिः स्थानं यस्य अयं भाविनिर्देशः, असत्वरः त्वरारहितः परिश्रुतं सर्वतो विख्यात मुरु निरवधिकं श्रवः कीर्तिर्यस्य तं भगवन्तम् अभ्यगृणात् अस्तौषीत्[1] ॥ ५ ॥

**विज.** हरेः केवलं मोक्षाख्यपुरुषार्थस्य प्राप्तिरेव न किन्तु ऐहिकस्यापीतीममर्थं प्रतिपादयति अस्मिन्नध्याये। तत्रादौ देवानां स्वलोकगमनं हरेः मधुवनयात्रां च वक्ति त एव मिति। सहस्रशीर्षा श्रीवासुदेवः "गरुत्मान् गरुड स्तार्क्ष्यः" (अम.को.1-29) इत्यभिधानम्॥ १ ॥

ध्रुवस्य हरिदर्शनप्रकारं वक्ति - **स वा** इति। योगपरिपाकेन ध्यानपरिणत्या तीव्रया स्वत एव भगवदुन्मुख्या। तदवस्थं हृत् पद्मकोशे याऽवस्था तया विशिष्टम्॥ २ ॥

गुरूक्तगुणानुपसंहृत्य भगवदुपास्तौ सक्तस्य ध्रुवस्य किं पुनर्वन्दनादाविति भावेन तत्प्रावण्यप्रकार माह - तद्दर्शनेति। आगतसाध्वसः प्राप्तसम्भ्रमः बालस्वभावं दर्शयन्निव भक्त्यतिशय माह - दृग्भ्या मिति॥ ३ ॥

भक्तानुकम्पित्वं प्रकटयतो हरेः तदनुग्रहविशेष माह - स तमिति। विवक्षन्तं स्तुतिरूपां वाचं वक्तुकामं न तद्ब्रह्मतत्त्वं वेत्ती त्यतत्त्ववित् तं, ब्रह्ममयेन वेदमयेन "पाञ्चजन्यो वा एष आम्नाय उत्" इति श्रुतेः कम्बुना पाञ्चजन्याख्यशङ्खेन॥ ४ ॥

तत्फल माह - **स वा** इति। स वै सोऽपि। या गीः पूर्व मज्ञाता तां गिरं दैवीं देवः सर्वेषु देवेषु गुणै र्द्योतमानः तद्विषयां गिरम् उपलब्धिफल माह - परिज्ञातेति। यावत्स्वयोग्यं परितो ज्ञातः परमात्मन स्तत्त्वनिर्णयो येन स तथोक्तः तद्भक्त्या भावो रोमाञ्चादिक्रियाविशेषो यस्य स तथोक्तः। "भावो लीला क्रिया चेष्टा" (वैज.को. 6-1-43) इति यादवः। असत्वर मिति क्रियाविशेषणं यथा स्खलितं न भवति अनेन संग्रस्तलुप्तादिबालवचनस्वभावं व्यावर्तयति। त्वरया सह वर्तत इति सत्वरः, स न

1. W अस्तावीत्

भवतीति असत्वरः इति भाव्यम्। अत्वरया सह वर्तत इति असत्वरस्तमिति भगवद्विशेषणं वा, परिश्रुतं व्याप्त मुरु बृहत् श्रवणमङ्गलं श्रवो यशो यस्य स तथा तं ध्रुवा नित्या क्षितिः वैकुण्ठादिस्थानं यस्य स तथा तम्। ध्रुवः क्षिति मिति वा पाठः। क्षि निवासगत्यो रिति धातोः क्षितिं गति मित्यर्थः ॥ ५ ॥

**ध्रुव उवाच**

**योऽन्तः प्रविश्य मम वाच मिमां प्रसुप्ताम् सञ्जीवयत्यखिलशक्तिधरः स्वधाम्ना[1]।**
**अन्यांश्च हस्तचरण श्रवण त्वगादीन् प्राणान्नमो भगवते पुरुषाय तुभ्यम् ॥ ६ ॥**

**एकस्त्वमेव भगवन्निद मात्मशक्त्या मायाख्ययोरुगुणया महदाद्यशेषम्।**
**सृष्ट्वानुविश्य पुरुषस्तदसद्गुणेषु[2] नानेव दारुषु विभावसुवद्विभासि ॥ ७ ॥**

**त्वद्दत्तया वयुनयेद मचष्ट विश्वं सुप्तप्रबुद्ध इव नाथ भवत्प्रपन्नः।**
**तस्यापवर्ग्य[3][4]शरणं तव पादमूलं विस्मर्यते कृतविदा[5] कथ मार्तबन्धो ॥ ८ ॥**

**नूनं विमुष्टमतय स्तव मायया ते ये त्वां[6] भवाप्ययविमोक्षण मन्यहेतोः।**
**अर्चन्ति कल्पकतरुं कुणपोपभोग्य मिच्छन्ति यत्स्पर्शजं नरकेऽपि[7] नृणाम् ॥ ९ ॥**

**या निर्वृति स्तनुभृतां तव पादपद्म ध्यानाद्भवज्जनकथाश्रवणेन वा स्यात्।**
**सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत् किन्त्वन्तकासिलुलुतात्पततां[8] विमानात् ॥ १० ॥**

**श्रीध०** ईशानुग्रहसम्प्राप्त वागाद्यद्भुतवृत्तिभिः। द्वादशादित्य सङ्काशैः श्लोकै रस्तौद्धरिं ध्रुवः ॥

**य** इति। यो मे[9] प्रसुप्तां लीनां वाच मन्यांश्च प्राणा निन्द्रियाणि स्वधाम्ना चिच्छक्त्या सञ्जीवयति यतः अखिला श्चक्षुरादिज्ञान क्रियाशक्तीः धारयतीति तथा पुरुषायाऽन्तर्यामिणे ॥ ६ ॥

ननु वागादीन्द्रियशक्तिधरा वह्न्यादयः प्रसिद्धा ना मित्यत आह - **एक** इति। अनुविश्य पुरुषोऽन्तर्यामी त्व मेक एव तस्या

1. W धाम्नः 2. W °स्सदस° 3. Ms ब्रह्माप° 4. W वर्ग 5. M, Ma, Ms धिया 6. V W त्वा 7. A, B, G, I, J, M, Ma, Ms, T निरये
8. A, B, G, I, J, T किन्त्व°; M, Ma, Ms किम्व° 9. A मम

मायाया असत्सु गुणेष्विन्द्रियादिषु स्थित स्सन् तत्तद्देवतारूपो नानेव भासि न[1] तु त्वद्व्यतिरेकेण ज्ञानक्रियाशक्तिधरः[2] कश्चि दस्तीत्यर्थः ॥ ७ ॥

अपि च किं वक्तव्यं वह्न्यादयो ज्ञानादिशक्तिधरा न भवन्तीति यस्मात् ब्रह्मणोऽपि ज्ञानं त्वदधीन मेवेत्याह - त्वदिति। त्वद्दत्तया वयुनया ज्ञानेन भवन्तं शरणं प्रपन्नो ब्रह्मा इदं विश्व मचष्ट अपश्यत्। कथम् ? सुप्तः पुरुषः प्रबुद्धस्सन् यथा पश्यति तद्वत्। अत आपवर्ग्या मुक्ता स्तेषा मपि शरणम्। कृतविदा सर्वेन्द्रयजीवनेन त्वत्कृत मुपकारं जानता कथं विस्मर्यते एवम्भूतं त्वा मभजन्तः कृतघ्ना इत्यर्थः ॥ ८ ॥

ये च मादृशाः कामाद्यर्थं भजन्ति तेऽतिमूढा इत्याह - **नून** मिति द्वाभ्याम्[3]। भवाप्ययौ जन्ममरणे तद्विमोक्षे हेतुं त्वा मन्यहेतोः कामाद्यर्थं ये भजन्ति ते नूनं विमुष्टमतयो वञ्चितचित्ताः यत स्ते कल्पतरुं त्वा मर्चन्ति ततः कुणपतुल्येन [4-]शवतुल्येन[-4] देहेनोपभोग्यं सुखमिच्छन्ति न चेच्छाभोग्यं तदित्याह। यत् यतः[5] स्पर्शजं विषयसम्बन्धजन्यं सुखं तन्नरकेऽपि भवति ॥ ९ ॥

ननु स्वर्गादिसुखं सकामैः प्राप्यते निष्कामभजने[6] तु तन्न स्यादित्यत आह - **येति**। स्वमहिमनि निजानन्दरूपेऽपि माभूत् न भवतीत्यर्थः। अन्तकस्यासिना [7-]शस्त्ररूपेण[-7] कालेन लुलितात् खण्डितात् विमानात्पततां सा नाऽस्तीति किमु वक्तव्यम् ॥ १० ॥

**वीर०** तत्र स्वकीयवागादीन्द्रिय[8] सञ्जीवयितृत्वेन स्वानुभवसिद्धेन ज्ञानप्रदं चिदचिच्छरीरं निखिलजगदेककारणं निरस्तनिखिलहेयगन्धं मुक्त्युपायत्व मुक्तिप्रदत्वाश्रित दुरितौघनिवर्तकत्व निरतिशय यशस्सम्पन्नत्व निरतिशयानन्दत्वा द्यपरिमितोदारगुणसागरत्वेन भगवन्तं पञ्चभिः प्रस्तुत्य तस्मिन् स्वमनःप्रावण्यमेकेन सम्प्रार्थ्य तत्पदारविन्दध्यानासक्तचित्तस्य देह तदनुबन्धिहेतुक सुखदुःखाननुभूतिमेकेनाभिधाय ततः साधुपरित्राणाय स्वेच्छोपात्ताप्राकृत दिव्यमङ्गलविग्रहं परत्वेन शङ्कितब्रह्मादिदेवताना मपि कारणभूतं स्वावतारेण साक्षाज्जगदवितारं त्रिभिः प्रस्तुत्यैकेन तं शरण मागत्य पुरुषार्थमूर्ते स्तस्य भजनादाशिषां सत्यतां वदन् निरतिशयवात्सल्य मेकेन स्तौति - **य** इति द्वादशभिः। तत्र तावद्वागादीन्द्रियसञ्जीवयितृत्वेन स्वस्मै निदर्शितेन ज्ञानप्रदत्वं निश्चिन्वन्नमस्करोति - य इति। यो भगवान् प्रसुप्तां स्वकार्याक्षमां इमां स्तोतुं प्रवृत्तां मे स्तोतुकामस्य मम वाचं वागिन्द्रियमन्तःप्रविश्य सङ्कल्परूपज्ञानेनात्रानुप्रवेश उच्यते, पूर्वमेव प्रविष्टत्वात् सञ्जीवयति तत्र हेतुः अखिलशक्तिधरः अघटित घटनादि सर्वशक्तेस्तवेद मुपपन्न मिति भावः। तथा स्वधाम्नः स्वधामभूतान् स्वशरीरभूतानिति यावत्। तृतीयान्त पाठे स्वधाम्ना

1. A यतः त्व॰ 2. A adds न 3. A, B, J, Va omit द्वाभ्याम्। 4--4. B, J, V, Va omit 5. A, B, J, Va omit यतः 6. V °तेन
7--7. B, J, V, Va omit 8. A, B, J वागिन्द्रि॰

स्वकीयसङ्कल्परूप[1]ज्ञानेनान्तः प्रविश्येत्यन्वयः। हस्त चरणश्रवणत्वगादीन् हस्तचरणग्रहणं पायूपस्थयोः कर्मेन्द्रिययो रुपलक्षणं, श्रवणत्वग्ग्रहण मवशिष्टज्ञानेन्द्रियाणां, आदिशब्देनान्तः करण चतुष्टयाधिष्ठातृदेवतासङ्ग्रहः अन्यान्प्राणान् इन्द्रियाणि सञ्जीवयति तस्मै भगवते पूर्णषाड्गुण्यमूर्तये पुरुषाय पुरुषान्तर्यामिणे अनेन जीवान्तर्यामित्व मुक्तम्; पूर्व मचिदन्तर्यामित्वकथनात् तुभ्यं नमः कृत्स्न चिदचिदन्तरात्मत्वेन सत्सञ्जीवयितृत्वेन ज्ञानप्रदत्वं त्वय्येवोपपन्न मिति भावः ॥ ६ ॥

ननु "तत्सृष्ट्वा तदेवानुप्राविशत्, (तैत्ति.उ. 2-6) अनेन जीवेनाऽत्मनानुप्रविश्य नामरूपे व्याकरवाणि" (छान्दो.उ. 6-3-2) इति जगत्स्रष्टुरेवानुप्रवेशश्रवणात् नाऽहं चिदचिदन्तरात्मेत्यत्र जगत्स्रष्टाऽपि त्वमेवेत्याह - **एक** इति। हे भगवन् ! इदं परिदृश्यमानं महदादिसमष्टि व्यष्ट्यात्मक मशेषं सर्वं जगत् उरुगुणया विविधपरिणामक्षम सत्त्वादिगुणया आत्मशक्त्याऽऽत्मनः स्वस्य सम्बन्धिन्या शक्त्या कार्योपयोग्यपृथक्सिद्धविशेषणभूतया मायाख्यया प्रकृत्या सृष्ट्वा सदसद्गुणेषु कार्यकारणभूतेषु सत्त्वादिगुणमय पदार्थेषु पुरुषो जीवकारकः अनुप्रविश्य त्व मेक एव सन् दारुषु ह्रस्वदीर्घ- ऋजु वक्रादिभेदभिन्नेषु दारुषु विभावसुवदग्निवन्नानेव बहुधेव विभासि। अत्र विभावसुदृष्टान्तेन स्वशरीरभूत चिदचिद्गतगुणास्पर्शो विवक्षितः। इवशब्देन वस्तुन एकत्वं देवमनुष्यादिशरीरसंसृष्ट जीवान्तरात्मकत्वकृतं बहुत्व मपि विवक्षितम् ॥ ७ ॥

एवं निखिलजगदेककारणत्वेन कृत्स्नचिदचिदन्तरात्मत्वेन निरस्तनिखिलदोषत्वेन च वागादीन्द्रिय सञ्जीवयितृत्वा त्तस्यैव ज्ञानप्रदत्व मुक्तम्। तदेव निदर्शयन् तस्यैव निरतिशयपुरुषार्थसाधनत्वेन भजनीयता माह - **त्वद्दत्तयेति**। त्वदीयया "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तम्" (भ.गी. 10--10) इति वदता त्वया दत्तया वयुनया ज्ञानेन स्त्रीत्व मार्षम्। हे नाथ! भवन्तं प्रपन्नः शरणं गतो ब्रह्मा चतुर्मुखः सुप्तप्रबुद्ध इव पूर्वं सुप्तः पश्चात्प्रबुद्ध इव विश्व मचष्ट अपश्यत्। विश्वरचनोपयोगिज्ञानविधुर स्त्वत्प्रपत्त्या त्वद्दत्तज्ञानेना सृजदित्यर्थः। नाऽत्र भूतार्थविवक्षा पश्यतीत्यर्थः। हे आर्तबन्धो! आर्तानां तापत्रयातुराणां बन्धो अपवर्गशरणं मुक्त्युपायं आपवर्ग्य मिति पाठे स्वार्थे ष्यञ्। अपवर्गे भव मापवर्ग्यं सुखं तत्साधनमिति वा। तव पादमूलं कृतविदा सर्वेन्द्रियोपजीवनेन ज्ञानप्रदत्वाद्युपकारज्ञेन कथं विस्मर्यते। एवं महोपकारिणं त्वा मभजन्तः कृतघ्ना एवेत्यर्थः ॥ ८ ॥

तथा त्वां भजन्तोऽपि मादृशाः सकामा मन्दभाग्या एवेत्याह - **नून** मिति। कल्पकतरुं कल्पकतरुतुल्यम् आश्रिता[2]भीष्टार्थ प्रदत्वेन कल्पतरुतौल्यं विवक्षितम्। ततो निरतिशयगुणवत्ता माह। भवाप्ययविमोक्षणं भवो जन्म अप्ययो मरणं तयो र्मोक्षणं मोचनं यस्मात्तं, यद्वा भवाप्ययौ विमो[3]चयतीति ण्यन्तात्कर्तरिल्युट् बाहुल[4]कत्वात्। मुक्तिप्रद मित्यर्थः। एवम्भूतं त्वां ये मादृशा लोका

1. A, B, J रूपेण 2. W °तार्था° 3. A,B, T °क्ष° 4. A, B, T °कात्

अन्यहेतोः अन्यस्य त्रिवर्गस्य हेतोः कारणात् भजन्ति ते जना स्तव मायया "मम मया दुरत्यया" (भ.गी. 7-14) इत्युक्तविधया विमुष्टमतयः अपहृतज्ञानाः, नून मिति निश्चये। कुत स्ते विमुष्टमतय इत्यत्राह। य द्यस्मात्स्पर्शजं विषयेन्द्रियसम्बन्धजम् अत एव "एते वै निरया स्तात ! स्थानस्य परमात्मनः" (भार. 12-191-6) [1-]इत्युक्तविधया[-1] नरकप्रायेऽपि संसारे नृणां कुणपोपभोग्यं कुणपेन शवतुल्येन शरीरेणोपभोग्यं सुख मिति शेषः, इच्छन्ति ॥ ९ ॥

ननु स्वर्गस्याऽपि सुखत्वप्रतिपत्तेः किं तदर्थं भजमानान् निन्दित्वा निष्कामान् प्रशंससीत्याकाङ्क्षायां स्पर्शजस्याल्पास्थिर-त्वान्निन्दामीत्यभिप्रेत्य किं वक्तव्यं निष्कामभक्तिसाध्यस्यापवर्गिकसुखस्य निरवधिकत्वात् न तेन स्पर्शजस्य साम्य मिति यत स्त्वच्चरणध्यान त्वद्भक्तजनकथाश्रवणजन्यसुखेनाऽपि न कैवल्यमपि समान मिति कैमुत्यनयेनाह - **येति**। तनुभृतां देहिनां तव चरणकमलध्यानात् भवज्जना भागवतास्तेषां कथाश्रवणेन वा या निर्वृतिः सुखं स्यात् सा निर्वृतिः हे नाथ ! स्वमहिमन्यपि स्वाभाविकगुणाष्टकरूप महिम्नि ब्रह्मणि शुद्धात्मन्यनुभूयमानेऽपि मा भून्नास्तीत्यर्थः। अन्तकासिलुलितात् अन्तकाख्य शस्त्रक्षतात् विमानात् पततां स्वर्गिणां निर्वृतिः स्यात्किम् ? नास्त्येवेत्यर्थः ॥ १० ॥

**विज०** यदि इयं स्तुति र्वेदसिद्धगुणानुरूपा तर्हि ब्रह्ममयेत्युक्तिः सफला स्या दित्यतः तत्सिद्धै र्गुणैः अभिष्टौति - **योऽन्तरिति**। प्रसुप्तां निद्रिता मिमां वैखरीं नाम वाचं सञ्जीवयति संस्कारात्मना बोधयति अन्यान् हस्तादीन् प्राणा निन्द्रियाणि स्व[2]स्वविषयाणि करोति तस्मै तुभ्यं नम इत्यन्वयः। "असुप्तः सुप्तानभिचाकशीति" (बृह.उ. 4-3-11) इति श्रुतिः। ब्रह्मणो वा एतानि कारणानीति च ॥ ६ ॥

पुरिशयनात्पुरुष श्चेत् पुराणां नानात्वात् हरे रपि नानात्वेनाद्वितीयत्वभङ्ग इति तत्राह - **एकस्त्व**मिति। एकस्याऽपि विभावसुवदग्निवन्नानात्व मविरुद्ध मित्यर्थः। "तत्सृष्ट्वा तदेवानुप्राविशत्, तदनुप्रविश्य सच्च त्यच्चाऽभवत्" (तैत्ति.उ. 2-6) इति श्रुतिः। तस्या असन्तोऽमङ्गला गुणाः सत्त्वादयो येषु महदादिषु ते तथा तेषु अनेन स्वगतभेदराहित्यं पुरुषशब्देन प्रवृत्तिनिमित्तं चोक्तं भवति। पुरि शयनात् पुरुष इति एक मेवाऽद्वितीय मिति च ॥ ७ ॥

अस्मिन्नर्थे किं प्रमाण मत्राह - **त्वद्दत्तयेति**। वयुनया ज्ञानेन [3]कृतधिया कृतज्ञेन अनेन दतृदेययो र्हि भेदं दातुरेकत्वं विश्वस्य हर्यधीनत्वं च पश्यतो ज्ञानिनः प्रत्यक्षं प्रमाण मित्युक्तं भवति। अचष्टापश्यत्। "सोऽज्ञाना द्विमुक्तो ज्ञानी भवति" इति श्रुतिं सूचयति। सुप्तः प्रबुद्ध इवेत्यनेनेति ॥ ८ ॥

---

1--1. W इति  2. Ma adds विषय  3. A, B, omit कृतधिया

भगवत्प्रसादादेव भगवद्विषयं ज्ञानं स्यात् तदेव विपक्षे बाधकप्रदर्शनेन द्रढयति - **नूनमिति**। ये अन्यस्य हेयत्वेनानित्यस्य सुखस्य हेतोः भवाप्ययविमोक्षणं जननमरणात्मकसंसारमुक्तिदं कल्पकतरु मिव भक्ताभीष्टदं त्वामर्चन्ति ते तव मायया बन्धकशक्त्या विमुष्टमतय इत्यन्वयः। विषयसुखं दुर्लभं चेत् कथं निन्द्यं स्यादित्यत उक्तं कुणपेति, निरयेऽपि सुलभ मित्यर्थः। यच्छब्दो हेत्वर्थः ॥ ९ ॥

भवता भगवत्प्रसाद एव प्रार्थनीय इति रोचयति तस्मात् किं फलं दृष्ट्वेति तत्राह - **या निर्वृतिरि**ति। सा निर्वृतिः स्वमहिमनि अनन्याधारलक्षणमाहात्म्ये ब्रह्मणि परब्रह्मणि स्थितस्य जीवस्याऽपि मा भूत् ध्यानादिक मन्तरेण न स्यात् कुतः ? "त द्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानाति एष आत्मेति होवाचैत दमृतं मे तदभय मेतत् ब्रह्मेति" (छान्दो.उ. 8-11-1) सह - शान्तहृदयः प्रवव्राज सह प्राप्यैव देवा नेतद्भयं ददर्श नाहंखल्वय मेवैनं सम्प्रत्यात्मानं जानात्यय महमस्मीति *"नो एवेमानि भूतानि विनाश मेवापीतो भवति नाह मत्र भोग्यं पश्यामि" (छान्दो.उ. 8-11-1,2) इति श्रुतौ सुप्तौ तस्थत्वेऽपि ध्यानाभावात् सुखानुभवाभावस्य दृष्टत्वात् इतीममर्थम् अपिपदेन ध्वनयति। स्वमहिमनि ब्रह्मणि सुखं नास्तीति योजना। अथ कस्मा दुच्यते ब्रह्मेति - बृहन्ते ह्यस्मिन् गुणाः "एष ह्येवानन्दयाति" (तैत्ति.उ. 2-7) इत्यादि श्रुतिविरुद्धत्वेन उपेक्षणीयो यतः स्थितस्ये त्यध्याहारो युक्तिसिद्धत्वा दङ्गीक्रियते। ननु तर्हि स्वर्गाद्यैश्वर्यं तत्फलं किं न स्यात् ? ज्ञानादेव "सर्वे कामा स्सम्पद्यन्ते" () इति श्रुते रिति तत्राह - किम्विति। अन्तकस्य हरेः भ्रूविभ्रमलक्षणेनासिना - विलुलिता त्पर्यस्ता द्विमानात् पततां पुंसां सानिर्वृतिः न स्यादिति किमु। एतदुक्तं भवति कर्मसाध्यज्ञानात् स्वर्गादिलक्षणविमानं प्राप्य इत स्ततो नन्दनादिषु विहारार्थं पततां गच्छतां पुंसां सा निर्वृति र्नास्तीति किमु वक्तव्य मिति। विमानात् भ्रश्यता मित्यर्थाङ्गीकारे तत्र दुःखप्राचुर्यात् सा निर्वृति र्न स्यादिति वक्तु मयुक्तत्वा दुक्त एवार्थः। अन्तकासिलुलितत्व मनित्यत्वद्योतनायोक्त मिति ज्ञातव्यम्। अत्र ध्यानं ज्ञानोत्पत्तावन्तरङ्गसाधनं कथाश्रवणं तत्साधनं श्रुतगुणानां पश्चादुपसंहारोपपत्ते रिति ज्ञातव्यम्। अधिकारिणा मनन्तत्वात् तत्तद्योग्यताविशेषा देव मुक्तमिति वा ॥ १० ॥

**भक्तिं मुहुः प्रवहतां त्वयि मे प्रसङ्गो भूयादनन्त महता ममलाशयानाम्।**
**येनाऽञ्जसोल्बण मुरुव्यसनं भवाब्धिं नेष्ये भवद्गुणकथामृतपान मत्तः ॥ ११ ॥**

**ते न स्मरन्त्यतितरां प्रिय मीश[1] मर्त्यं[2] ये चान्वदः सुतसुहृद्गृहवित्तदाराः[3]।**
**ये त्वब्जनाभ भवदीय पदारविन्दसौगन्ध्य लुब्धहृदयेषु कृतप्रसङ्गाः ॥ १२ ॥**

* This part being from नो एवेमानि ending with लक्षणेनासि° is missing in A & B Editions.

1. M, Ma Ms °माद्य° 2. M, Ma, Ms स्वान् सम्पदः; W ये चानुगः 3. M, Ma, Ms दारान्

तिर्यङ्[1]नरद्विज सरीसृप देव दैत्यमर्त्यादिभिः [2]परिचितं सदसद्विशेषम्।
रूपं स्थविष्ठ मज ते महदाद्य[3]नेकं नाऽतः परं परम वेद्मि न यत्र [4]वादः ॥ १३ ॥

कल्पान्त एतदखिलं जठरेण गृह्णन् शेते पुमान् स्वदृगनन्तसख स्तदङ्के।
यन्नाभिसिन्धुरुह काञ्चनलोकपद्मगर्भे द्युमान् भगवते प्रणतोऽस्मि तस्मै ॥ १४ ॥

त्वं नित्यमुक्त परि[5]शुद्ध विबुद्ध आत्मा कूटस्थ आदिपुरुषो भगवां स्त्र्यधीशः।
यद्बुद्ध्यवस्थि[6]त मखण्डितया स्व[7]दृष्ट्या [8]द्रष्टा स्थिता [9]वधिमखो व्यतिरिक्त आस्से ॥ १५ ॥

**श्रीध०** [10]अतः ते कथाश्रवणाय सत्सङ्गतिं देहीत्याह - **भक्तिमिति**। भक्तिं त्वयि प्रवहतां सातत्येन कुर्वताम्। ननु मोक्षं किं न याचसे अत आह। येन महत्प्रसङ्गेनाञ्जसा अयत्नत ऐवोरूणि व्यसनानि यस्मिं स्तम्। नेष्ये पारं गमिष्यामि। भवद्गुणकथैवामृतं तस्य पानेन मत्तस्सन् ॥ ११ ॥

कथामृतपानस्य मादकत्व माह - **त** इति। तेऽतितरां प्रिय मपि मर्त्यं देहं न स्मरन्ति नाऽनुसन्दधते ये च सुतादयः अदः मर्त्य मनुसम्बद्धा स्तानपि। [11]के ते न स्मरन्ति ये कृतप्रसङ्गाः। केषु भवदीयपदारविन्दसौगन्ध्ये लुब्धं हृदयं येषां तेषु। तुशब्देनान्येषां केवलयोगादिनिष्ठानां [12]देहाद्यभिमानानिवृत्तिं दर्शयति ॥ १२ ॥

नन्वेवं विद्वानपि त्वं किमि[13]त्यात्माऽभिमानं वह[14]सीत्यत आह - **तिर्यगिति**। [15-]तिर्यङ्नर पक्षिसर्पादिभिः[-15] परिचितं व्याप्तं सन्तोऽसन्तश्च विशेषा यस्य, महदादीन्यनेकानि कारणानि यस्य। हे परम ! हे अज ! ते इदं [16]रूपं स्थविष्ठं विराड्रूपं केवलं वेद्मि। अतः पर मीश्वरस्वरूपं न वेद्मि। यत्र वादः शब्दव्यापारो नाऽस्ति तद्ब्रह्म[17]स्वरूपं च न वेद्मि। अतोऽभिमानो न निवर्तत इति भावः ॥ १३ ॥

तदेवं भगवदनुकम्पया तद्रूपद्वयं ज्ञात्वा ईश्वररूप मनुवर्णयन्नमस्करोति - **कल्पान्त** इति। एतत् त्रैलोक्यं यः पुमान् शेते स्वस्मिन्नेव दृक् न बहिर्यस्य योगनिद्रारूढत्वात्। अनन्तसखः शेषसहायः तदङ्के शेषोत्सङ्गे। यस्य नाभि रेव सिन्धुः समुद्र स्तस्मिन् रोहतीति [18]तथा तस्य काञ्चनलोकपद्मस्य [19-]हिरण्मयलोकरूप[-19] कमलस्य गर्भे कर्णिकायां द्युमान् तेजस्वी ब्रह्मा भवति तं प्रणतोऽस्मी त्यर्थः ॥ १४ ॥

---

1. A, B, G, I, J, M, Ma, T नग; Ms मृग 2. M, Ma, Ms विरचितं 3. M, Ma, Ms °शेषं 4. M, Ma, Ms वाचः 5. W बुद्धविशुद्ध
6. A, B, G, I, J, T, V °ति° 7. M, Ma, Ms बुद्ध्या 8. M, Ma, Ms दृष्ट्वा 9. M, Ma, Ms °तो 10. V त्वत्क°
11. V omits के 12. V °भिमानिनां निवृत्ति° 13. A, B, J, Va °त्यभि° 14. A, B, J, Va °स्यत 15--15. B, J, Va तिर्यङ्नगादिभिः; V निर्यगादिभिः
16. A, B, J, Va omit रूपं 17. A, B, J, Va omit स्व 18. A, B, J, Va तस्मिन् 19--19. B, J, V, Va omit

ननु ममापि स्वापाद्यवस्थावत्त्वे को जीवा द्विशेष इत्यत आह - **त्वमिति**। त्वं तु व्यतिरिक्तो जीवविलक्षण आस्से तिष्ठसि। वैलक्षण्य मेवाह - त्वं तु नित्यमुक्तो जीवस्तु त्वत्प्रसादान्मुच्यते। त्वं परिशुद्धः स तु मलिनः। त्वं तु विबुद्धः सर्वज्ञः[1], स तु अज्ञः[2]। त्व मात्मा स तु जडः। त्वं कूटस्थः, स तु विकारी। त्व मादिपुरुषः स त्वादिमान्। त्वं तु भगवान्, स भगहीनः। त्वं त्रयाणां गुणाना मधीशः स तु परतन्त्रः। कुत एत द्वैलक्षण्यं यद्यतो बुद्ध्यवस्थितिं बुद्धे स्तां ता मवस्था मखण्डितया स्वदृष्ट्या चिच्छक्त्या द्रष्टा पश्यति। द्रष्टेति तृन्प्रत्ययान्तः शब्दः। अतो बुद्ध्यवस्थिति मित्यत्र षष्ठ्यभावः। तथाभूत एव त्वं स्थितौ पालनेऽधिमखो यज्ञाधिष्ठाता श्रीविष्णुः॥ १५॥

**वीर०** एवं नित्यनिरतिशयानन्द साधनभूतं त्वां क्षयिष्णु सातिशयाल्पसुखसाधनत्वेन भजन्तो मादृशा मन्दभाग्या एवेत्युक्ता स्वस्य सत्सङ्गति कथाश्रवणादि प्रणाड्या भक्ति महैतुकीं प्रार्थयते[3] - **भक्तिमिति**। हे अनन्त! देशकालवस्तुपरिच्छेदरहित! त्वयि निरस्तनिखिलदोषे[4] सार्वज्ञ्य निरतिशयानन्दत्वाद्यपरिमितोदारगुणसागरे त्वयि मुहुः पुनः पुनः निरन्तर मित्यर्थः। भक्तिं प्रवहतां कुर्वतां अत एवाऽमलः आशयोऽन्तःकरणं येषां, महता मक्रोधाद्यात्मगुणयुक्तानां प्रसङ्गः प्रकृष्टः सङ्गः महता मिति सम्बन्धमात्रे षष्ठी, महत्सम्बन्धी[5] सङ्गमः महत्सु सङ्गम इत्यर्थः। मे स्यात् येन महत्सङ्गेन हेतुना प्रवृत्ता या भवतो[6] गुणकथा सैव मधु तस्य पानेन मत्तः तृप्तः निरस्ततापत्रय इत्यर्थः। उरुव्यसनम् अधिकदुःखगर्भम् अत एव उल्बणं दुस्सहं भवाब्धिं[7] नेष्ये तरामि॥ ११॥

न केवलं सत्सङ्गतेः कथाश्रवणादि प्रणाड्याऽऽपवर्गिकसुखसाधनत्व मेव किन्तु जीवद्दशाया मपि देह तदनुबन्धि निमित्त सुखदुःखाद्यहेतुत्व मपीत्याह - **त** इति। हे ईश! मर्त्यं मरणशीलमपि अतितरां नितरां[8] प्रियं शरीरं ये च अनु मर्त्य मनुसृत्य गच्छन्ति वर्तन्ते इत्यनुगाः सुतादयः तां श्च[9] ते जना न स्मरति नाऽभिमन्यन्ते इत्यर्थः। के त इत्यत्राह - हे अब्जनाभ! ये जना भवदीय पदारविन्दयोः य त्सौगन्ध्यं तेन तस्मिन् वा लुब्धं हृदयं येषां तेषु भागवतेषु कृतः प्रसङ्गो यै स्ते इत्यर्थः॥ १२॥

अब्जनाभेत्यनेन निरतिशय सौन्दर्यवद्दिव्यमङ्गलविग्रह[10] वैशिष्ट्य मुक्तं महदाद्यशेषं सृष्ट्वानुप्रविश्य पुरुष इत्यनेन प्रकृति प्राकृत पुरुषशरीरकत्वं च। एवं स्थूलसूक्ष्मशरीरद्वय मुक्तम्। अनन्ते त्यनेन सत्यज्ञानानन्तलक्षणं[11] दिव्यात्मस्वरूपं च एत त्त्रितय मेव यथाव द्विवेचयन् शरणं व्रजति**तिर्यगित्या**दिभि श्चतुर्भिः। तत्राऽऽद्येन स्थूलरूपं प्रपञ्चयति **तिर्यगिति**। हे परम! **स्थूलसूक्ष्मरूपाभ्यां** विलक्षण! निस्समाभ्यधिक! अत एव अज! स्थूलरूपगतोत्पत्तिविनाशरहित! नगाः स्थावराणि एतच्चराणामप्युपलक्षणम्।

---

1. A, J, Va omit सर्वज्ञः 2. V किञ्चिज्ञः। 3. A, B, T °ति 4. A, B, T °पसा° 5. A, B, T °न्धिस° 6. W भगवतो 7. A, B, T omit भवाब्धिं
8. A, B, T omit नितरां 9. A, B, T °स्तु 10. A, B, T सौगन्ध्य 11. A,B, T °नाऽऽनन्द°

तिर्यञ्चः पशुमृगादयः द्विजा अण्डजाः एषां तिर्यक्त्वादेव संग्रहे सिद्धे गोबलीवर्दन्यायेन पृथग्ग्रहणम्। एवं सरीसृप ग्रहणं च। आदि शब्देन स्वेदजोद्भिज्यसङ्ग्रहः, तिर्यगादिभिः परिचितं परितो व्याप्तं सदसत् चिदचिदात्मकं विशेषं, विशेषः पृथिवी सोऽस्यास्तीति विशेषम्। अर्श आदे राकृतिगणत्वात् अच् विशेषपर्यन्त मित्यर्थः। महदादि महान् आदिर्यस्य तत् अनेकं विविधविचित्रसन्निवेशं स्थविष्ठं स्थूलं ब्रह्माण्डात्मकं ते तव रूपं वेद्मि त्वच्छरीरत्वेन वेद्मीत्यर्थः। अतः स्थूलरूपात्परं विलक्षणं यद्दिव्य मङ्गलविग्रहात्मकं सूक्ष्मं रूपं तदपि न वेद्मीति न, किन्तु त्वत्प्रसादाद्वेद्म्येवेत्यर्थः। परं रूपं विशिनष्टि। यत्र यद्विषये वादः प्राकृतत्वाप्राकृतत्ववादः प्रवर्तत इत्यर्थः। यद्वा अवेद्मीतिच्छेदः अवेद्मीत्यकारो निपातो नञ्पर्यायः। ततश्च अतः स्थविष्ठा द्रूपात्परं विलक्षणं "न भूतसंघसंख्यानो देहोऽस्य परमात्मनः" (भार. 12-206-60) इत्युक्ताप्राकृतदिव्य विग्रहात्मकं रूपं ततः परं दिव्यात्मस्वरूपं "सत्यं ज्ञान मनन्तम्" (तैत्ति.उ. 2-1-1) इत्युक्तविधं च अवेद्मीति न, [1-] न वेद्मीति न, [-1] किन्तु त्वत्प्रसादात् जानाम्येवेत्यर्थः। रूपं स्वरूपं चोभयं विशिनष्टि यत्र वाद इति। यत्रस्वरूपे [2] रूपे च [3] विषये वादः देवतिर्यङ्मनुष्यादि जातीयवादः निर्विशेषत्ववादश्च [4] न प्रवर्तत इत्यर्थः। यत्र वादः शब्दव्यापारो नाऽस्ति तद्ब्रह्मस्वरूपं च न वेद्मीति व्याख्यानं त्वयुक्तम्। "सर्वे वेदा यत्पद मामनन्ति" (कठ.उ. 1-2-15) "शास्त्रयोनित्वात्" (ब.सू. 1-1-3) "वचसां वाच्य मुत्तमम्" (जितन्ता) "नतास्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती" (वि.पु. 1-14-23) "वेदैश्च सर्वै रह मेव वेद्यः" (भागी. 15-15) इत्यादि श्रुति सूत्र स्मृतिभिः शास्त्रैकवेद्यत्वाभिधानात्॥ १३॥

किञ्च यः पुमा नेतच्चिदचिदात्मकं जगत् कल्पान्ते प्रलये जठरेण गृह्णन् कुक्षौ निवेश्येत्यर्थः। स्वस्मिन् दृक् यस्य स्वानुभवैकशील इत्यर्थः। अनन्तसखः शेषसहायः तदन्ते अनन्तभोगे शेते योगनिद्रारूढो भवति। यस्य पुंसो नाभिरेव सिन्धुः तस्मिन् [5] रुहं उद्भूतं काञ्चनमयं लोकात्मकं पद्मं तस्य गर्भे कर्णिकायां द्युमान् तेजस्वी ब्रह्मा भवति तस्मै भगवते तुभ्यं प्रणतोऽस्मि॥१४॥

एवं रूपं विशिष्य पुनः स्वरूपं विशिनष्टि - **त्वमिति** द्वाभ्याम्। ननु जीववत् ममाऽपि स्थूलसूक्ष्मशरीरवत्त्वे ततः कोविशेष इत्यत्राह - **त्वमिति**। त्वमकर्मायत्त स्वच्छोपात्ताप्राकृतदिव्यमङ्गलगुणास्पदविशिष्ट स्त्वं स्थितौ निमित्तभूतायां जगत्पालनार्थ मित्यर्थः, अधिमखः यज्ञाराध्यो यज्ञ फलप्रदश्च व्यतिरिक्तः प्रकृतिपुरुषविलक्षणः आस्से तिष्ठसि। अत्र अधिमख इत्यनेन स्थितावित्यनेन च "परित्राणाय साधूनाम्" (भ गी. 4-8) इत्युक्तरीत्या सर्वयज्ञाराध्यत्वाय साधुपरित्राणाय च त्वज्जन्म, न तु जीववत्कर्मायत्त मित्यवगम्यते। अव्यतिरिक्त इति च्छेदे प्रकृतिपुरुषविलक्षण एव ताभ्या मपृथक्त्वेनावस्थित इत्यर्थः। नन्वनन्त विचित्र स्थिरचरात्मकस्य जगतो धारणपोषण भोगाद्यात्मकं पालनं कथ मेकेन मया युगपत्कर्तुं शक्य मित्यत्राह। बुद्ध्यवस्थितं

1--1. A,B, T omit 2. A, B, T omit रूपे 3. A, B, T omit विषये 4. A, B, T omit न 5. A, B, T omit रुहं

बुद्धाववस्थितं विषयीभूतं सङ्कल्परूपज्ञानविषय मिति यावत्, अखण्डितया असङ्कुचितया स्वदृष्ट्या सङ्कल्परूपज्ञानेन द्रष्टा साक्षात्कर्तासि कृत्स्नस्य जगतः सर्वदेशकालावस्थास्वनिष्टनिरसनेष्टप्रापणात्मकपरिपालनोपयोग्यसङ्कुचित स्वकीय[1] सङ्कल्परूपज्ञानाश्रयोऽसीत्यर्थः । स्थिता वधिमजो व्यतिरिक्त इत्यपि पाठः । तत्र अजः प्रकृतिपुरुषगतस्वरूपान्यथाभाव [2-]स्वभावान्यथाभाव[-2] रूपोत्पत्त्यादिरहितः, अत एव व्यतिरिक्तः प्रकृतिपुरुषाभ्यां विलक्षणः, स्थितावधिं व्यवस्थितावधिमत् स्थावरपर्यन्तं वा यत्तत् जगत्सर्व मखण्डितज्ञानेन साक्षात्कुर्वन् आस्से इत्यर्थः । एवं त्वं नित्यमुक्तः व्याप्यवस्तुगतदोषास्पृष्टः अनेना चिद्व्यावृत्तिः । अचिद्द्रव्यं हि अव्यक्तमहदादिकं स्वकार्येषु पृथिव्यादिषु व्याप्तं तद्गतदोषैः स्पृष्टम् । एवं जीवव्यावृत्तिश्च, जीवोऽपि देवादिशरीरेषु व्याप्तः परमार्थतस्तद्गतदोषै रस्पृष्टोऽपि अहम्ममाभिमानाभ्यां क्लिश्यतीति अनित्य[3] मुक्तः । त्वं तु नित्यमुक्त इति भावः । तत्र हेतुः विशुद्धः अकर्मवश्यः, नित्यमुक्तशब्दा त्परस्य सुपो लोप आर्षः कर्मधारयो वा, विशुद्धत्वेहेतुः परिबुद्धः असङ्कुचितज्ञानः, जीवो हि कर्मायत्तसङ्कोचविकास[4] रूपावस्थावज्ज्ञानाश्रयो न परिबुद्ध इति भावः । तत्र हेतुः कूटस्थः निर्विकारः स्वरूपतः स्वभावतोऽपि निर्विकार स्त्वं, जीवस्तु स्वभावतो विकारी । ननु नित्यमुक्तत्व परिबुद्धत्व विशुद्धत्वानि मुक्तेषु नित्यसिद्धेषु चातिव्याप्तानि तत्राह । आत्मा तेष्वन्तः प्रविश्य धारकः । न चात्मत्व मपि अतिप्रसक्तम् अत उक्तम् आदिपुरुषो भगवान् त्र्यधीश इति । आदिपुरुष इति कर्मधारयः । आदिशब्दस्य कारणवाची कारणं हि कार्यस्यादिः, जगत्कारणभूतः पुरुष इत्यर्थः । जगत्कारणत्वञ्च न मुक्तेषूपपन्नं, "जगद्व्यापारवर्जं प्रकरणा दसन्निहितत्वाच्च, भोगमात्रसाम्यलिङ्गाच्च (ब्र.सू.4-4-17) इति मुक्तेषु जगद्व्यापाराभावस्य सूत्रितत्वात् । भगवच्छब्देन समग्रषाड्गुण्य परिपूर्णत्व मुच्यते, तदप्यनतिप्रसक्तमेव । त्र्यधीशः त्रयाणां सत्त्वरजस्तमसां तत्परिणामरूपाणां त्रयाणां लोकानां वा अधीशः, इद मप्यनतिप्रसक्तमेवेति त्रिविधचेतनव्यावृत्तिः ॥ १५ ॥

**विज०** भवजना भगवद्भक्ताः तेषां मुखनिस्सृताया भगवत्कथायाः श्रवणलक्षणोपासनयेत्युक्तं तत्र भवजनस्य चरित लक्षण कथाश्रवणेनेतीममर्थ मभिप्रेत्य भवज्जनसङ्गतौ भवत्कथासु श्रवणं सुलभं स्यादिति मत्वा तत्सङ्गतिं प्रार्थयते - **भक्तिं मुहुरिति** । येन प्रसङ्गेन भवाब्धिं नेष्ये तरिष्यामि न प्राप्स्यामीति वा । "इषु-गतौ इति धातुः" ॥ ११ ॥

भक्तानां लक्षण माह - **तेनेति** । ये स्वान् सुतसुहृद्गृह वित्तदारान् सम्पदः स्मरन्ति ते अतितरां प्रिय माद्य मीशं[5] त्वां न स्मरन्ति, हे अब्जनाभ ! ये भवदीय पदारविन्दसौगन्ध्यलुब्धहृदयेषु भवद्भक्तेषु कृतप्रसङ्गा भवद्भक्तभक्ताः ते स्वान् सुतादीन् सम्पदो[6] न स्मरन्तीत्यन्वयः । अनेन श्रीहरिभक्तिरेव न भवाब्धिसन्तारिणी किन्तु तद्भक्तभक्तिरपि इति सूचितम् ॥ १२ ॥

---

1. B स्वस॰ 2--2. A, T omit 3. A, B, T न निं 4. A, B, T ॰भाक् भावरूपज्ञा॰ 5. A ॰श 6. A, B ॰दं

ब्रह्मादीना मपि त्वत्प्रसादात् ऋते त्वद्रूपदर्शन मसुकरं किमुत मादृशाना मिति भावेनाह - **तिर्यङ्नगेति**। हे अज ! अशेषं सर्वावयवोपपन्नं महदादि महत्तत्त्व मादि र्यस्य तत्तथोक्तं सता पृथिव्यादि भूतत्रयेणासता वाय्वादिभूतद्वयेन विशेषो यस्य तत्तथोक्तं स्थविष्ठं स्थूलतमं तिर्यगादिभिः विरचितं ब्रह्माण्डाख्यं रूपं वेद्मि, हे परम ! अतः स्थूलात्परं सूक्ष्मं रूपं न वेद्मि। अत्र हेतुगर्भविशेषण माहयत्रेति। वाच इत्युपलक्षणं वेदाभिमानिनो लक्ष्म्यादयो यत्र यद्विषयज्ञानवन्तो न भवन्ति, किमुक्तं भवति लक्ष्मीब्रह्माद्या अनुदिनं पश्यन्तोऽपि किञ्चिदनन्तत्वेन जानन्ति, किम्वहं[1] तदुक्तम् - ''पश्यमानोऽपि तु हरिं न तु वेत्ति कथञ्चन। वेत्ति किञ्चित्प्रसादेन हरे रथ गुरो स्तथा॥ (ब्रह्मतर्के) ''द्वे वा व ब्रह्मणो रूपे मूर्तं चैवामूर्तं च (बृह.उ. 2-3-1) ''यतोवाचो निवर्तन्ते अप्राप्य मनसा सह'' (तैत्ति.उ. 2,4, 2-9) इत्यादिश्रुतेः॥ १३॥

सृष्टिसंहारकर्त्रो र्ब्रह्मरुद्रयोः लोकहृद्गतां विष्णुसमत्वशङ्कां निवर्तयितु माह - **कल्पान्ते** इति। अनन्तः सखा यस्य स तथोक्तः स्वदृक् स्वयं प्रकाशः पुमान् कल्पान्ते एतदखिलं जगत् जठरेणोदरेण गृह्णन् संहरन् तस्यानन्तस्याङ्के शेते, यस्य नाभिसिन्धुरुहं नाभिसरसो जातं तदेव काञ्चनं सुवर्णवर्णं लोकात्मकं पद्मं तस्य गर्भे द्युमान् अति द्युतिमान्[2] ब्रह्मा जात इति शेषः। अनेन रुद्रस्य संहर्तृत्वं ब्रह्मणः स्रष्टृत्वं च द्वारमात्र मिति ज्ञातव्यम्। एवं विधमाहात्म्यस्य हेर स्त्वया कि मुपक्रियत इति तत्राह भगवत इति॥ १४॥

पङ्के प्रवर्तमानस्य पङ्कलेप इव सृष्ट्यादौ प्रयतमानस्य हरे रनित्यत्वं दोषबद्धत्व मशुद्धत्वं च स्यादित्याशङ्क्य योगिनोऽपि दुर्भगशरीरस्थस्य तद्गतदुःखाद्यनुभवो नाऽस्ति किमुत नित्यस्य[3] नित्यमुक्तस्य नित्यशुद्धस्य अत एवाप्रतिहतबोधस्येति भावेनाह - **त्वं नित्येति**। किमेवम्भूतः परिच्छिन्न इति नेत्याह - आत्मेति। आततत्वा दात्मा, तर्हि तत्तत्पदार्थसम्बन्धेन तत्तद्धर्माः सङ्क्रम्यन्ते इत्यत उक्तं कूटस्थ इति। षड्विकारशून्यः एवंविधः कोऽय मत्राह - आदिपुरुष इति। आदीत्युपलक्षणं जगत आदा वन्ते च वर्तमानः पुरुषः पूर्णषड्गुणः श्रीनारायणः। पूर्णषड्गुणत्वं स्पष्ट माह भगवानिति। ''ऐश्वर्यस्य समग्रस्य'' (वि.पु. 3-74) इति स्मृतेः। कुतोऽस्य समग्रैश्वर्य मवगम्यत इत्यत उक्तं त्र्यधीश इति। त्रयाणां लोकानां मुक्तामुक्तसंसारिणां वर्तमानादिकालानां वा जाग्रदाद्यवस्थानाम् ऋगादिवेदानां वा इत्यादि त्रित्वसंख्यावता मधीशः इन्द्रादि व्यावृत्त्यर्थ मधीश इत्युक्तम्। [4-]त्व मेवं विशिष्टः[-4] इति। यद्यस्मा त्तस्मात् अखण्डितया स्वबुद्ध्या स्वरूपज्ञानेनवधिं संसारस्यवधिभूतं बुद्ध्यवस्थितं बुद्धौ स्थितं त्वां दृष्ट्वा अवस्थिता ये पुरुषा स्तै स्सह अतोऽस्मात्प्रपञ्चाद्व्यतिरिक्त स्त्वमास्से इत्यन्वयः। ''वष्टिभागुरि रल्लोप मवाप्यो रुपसर्गयोः'' (सि.को.अष्टा. 2-4-82) इति वचना दल्लोपः प्रामाणिकः॥ १५॥

---

1. A, B, किन्व॰  2. M, Ma द्युमन्  3. A omits नित्यस्य  4--4. A, B, तमेव विशिनष्टि

यस्मिन्[1] वि[2]रुद्धगतयो[3]ऽप्यनिशं पतन्ति विद्यादयो विविधशक्तय आनुपू[4]र्व्यात्।

तद्ब्रह्म विश्वभव मेक [5]मनन्तमाद्य मानन्दमात्र मविकार महं प्रपद्ये ॥ १६ ॥

सत्याशिषो हि भगवं स्तव पादपद्म[6]माशी[7] स्तथाऽनुभजतः पुरुषार्थमूर्तेः

अप्येव मार्य भगवान् परिपाति दीनान् वा[8]श्रेव वत्सक मनुग्रहकातरोऽस्मान् ॥ १७ ॥

### मैत्रेय उवाच

अथाऽभिष्टुत एवं वै सत्संकल्पेन धीमता।

भृत्यानुरक्तो भगवान् प्रतिनन्द्येद मब्रवीत् ॥ १८ ॥

### [9] श्रीभगवानुवाच

वेदाऽहं ते व्यवसितं हृदि राजन्यबालक।

तत्प्रयच्छामि भद्रं ते दुराप म[10]पि सुव्रत ॥ १९ ॥

नाऽन्यै रधिष्ठितं भद्र यद्भ्राजिष्णु ध्रुवक्षिति।

यत्र ग्रहर्क्षताराणां ज्योतिषां चक्र माहितम् ॥ २० ॥

**श्रीध०** तमेव ब्रह्मरूपेण ज्ञातं नमस्करोति - **यस्मि न्निति**। पतन्त्यकस्मात् उद्भवन्ति विश्वस्य भवो [11]जन्म यस्मात्। एक मखण्डं आद्य मनादि ॥ १६ ॥

सकामभजना दपि मोक्ष माशासान आह - **सत्येति**। हे भगवन् ! पुरुषार्थः परमानन्दः स एव मूर्ति र्यस्य तस्य तव पादपद्म माशिषो राज्यादेः सकाशात् सत्या आशीः परमार्थफलं हि निश्चितं [12-]यस्य तस्य[-12] तथा तेन प्रकारेण त्वमेव पुरुषार्थ इत्येवं निष्कामतया [13]अनुभजतः, यद्यप्येवं तथाऽपि हे आर्य ! स्वामिन् ! दीनान् सकामानप्यस्मान् भगवान् [14]भवान् परिपाति संसारभया द्रक्षत्येव। यतः अनुग्रहे हिताचरणे कातरः परवशः [15]यथा [16]वाश्रा नव[17]प्रसूता धेनुः वत्सं क्षीरं पाययति वृकादिभ्यो रक्षति च तद्वत् ॥ १७, १८ ॥

---

1. J नि॰ 2. W म॰ 3. A, B, G, I, J, T ह्य॰ 4. M, Ma, Ms ॰र्व्या 5. M, Ma ॰मविश्व॰ 6. M, Ma, Ms मूल॰ 7. M, Ma, Ms ॰मशिष्टयोऽनु 8. A, G, I, J, T वाश्रेव; V उस्रेव 9. Ms श्री वैकुण्ठः 10. M, Ma, Ms भूयसाम् 11. B, J, V, Va omit जन्म 12--12. A, B, J, V कस्य 13. A, J, V, Va अन्वनु 14. Va omits भवान् 15. B omits यथा 16. A, J, Va वाश्रा V उश्रा 17. B omits प्र

वेदेति। व्यवसितं सङ्कल्पितम्॥ १९॥

तत्प्रयच्छामीत्युक्तं किं तत् ? इत्यपेक्षाया माह - **नान्यैरिति** सार्धद्वाभ्याम्। हे भद्र ! ध्रुवा क्षितिः निवासो यस्मिन्। यत्र यस्मिन् आहित मर्पितम्॥ २०॥

**वीर०** ननुकथ मचेतनेषु चेतनेषु[1] च अवस्थितस्यापि तद्गतदोषास्पर्शः, न चाकर्मवश्यत्वा दुपपत्तिः पुण्यापुण्यसजातीय चेष्टितानि कुर्वतः तदवश्यत्वानुपपत्ते रित्यत्राह - **यस्मिन्निति**। विरुद्धमतयः विरुद्धा मति र्यासु ता आश्रयान्तरेषु सामानाधिकरण्यानर्हा विद्यादयो ज्ञानादयः विविधाः शक्तयः आनुपूर्व्यात्क्रमेण यस्मिन्पतन्ति आविर्भवन्ति, शक्तिर्हि कार्योपयोग्यपृथक्सिद्धविशेषणं तत्र सृष्टिस्थित्यन्तः प्रवेश नियमनसंहारादीनां क्रमिकत्वेन पौर्वापर्यात् तदुपयुक्तशक्तीना मपि तद्द्वारा पौर्वापर्य मत्र विवक्षितं, सर्वदा सर्वशक्ते स्तस्य क्रमेण शक्त्याश्रयत्वायोगात्। एवं च सर्वशक्ते स्तस्य सर्वमुक्त मुपपन्न मिति भावः। उक्ताकारं ब्रह्म जगत्कारणत्वेन लक्षणेन लक्षयन् सङ्ग्रहेण तत्स्वरूपमपि शोधयन् शरणं व्रजति तदिति। तद्ब्रह्म विश्वभव मेक मित्यनेन ''यतो वा इमानि भूतानि'' (तैत्ति.उ. 3-1) इति वाक्यं स्मारितम्। अविकार मानन्दमात्र मनन्तमिति पदत्रयेण ''सत्यं ज्ञान मनन्तं ब्रह्म'' (तैत्ति.उ. 2-1-1) इति वाक्यं स्मारितम्। तत्र हि जन्मादिवाक्ये जगत्कारणत्वेनोपलक्षितस्य ब्रह्मणः स्वरूपं सत्यादिवाक्ये शोधितम्, एव मत्राऽपि। तथा हि विद्यादयो विविधशक्तय इत्यनेन सृष्ट्याद्युपयुक्ताः ''परास्य शक्ति र्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च (श्वेता.उ. 6-8) इत्युक्तशक्तीना मभिधानेन जगज्जन्मा दयोऽप्युपस्थापिताः। सर्वशक्तिमत्त्वेन प्रसिद्धं ब्रह्म यस्मिन्निति यच्छब्देनानूद्योपस्थितानां जन्मादीनां लक्षणत्व मुच्यते विश्वभव मिति। भवत्यस्मादिति भवं विश्वस्य भवं विश्वभवं विश्वोत्पत्तिकारण मित्यर्थः। एकशब्देनोपादानत्वे[2] निमित्तत्वे[3] स्थितिसंहारकारणत्वे[4] चैकस्यैवेति विवक्षितम्। तद्ब्रह्मेत्यनेन ''अधीहि भगवो ब्रह्म'' (तैत्ति.उ. 1 to 5) इत्युपक्रमे पृष्टस्य प्रतिवचनत्वसमर्थकं ''तद्विजिज्ञासस्व तद्ब्रह्म'' (तैत्ति.उ. 3-1) इति वाक्यं स्मारितम्। एवं जगत्कारणत्वेनोपलक्षितं ब्रह्म स्वरूपतो लक्षयति अविकारमिति। अनेन सत्यपदं स्मारितम्। तेन हि सततपरिणामिनोऽचेतना त्तत्संसृष्टा च्चेतनाच्च वैलक्षण्य मुक्तम्। एव मत्राऽप्यविकारपदेन आनन्दमात्रं [5-]दुःखासंभिन्नज्ञानमात्रं[-5] मात्रचा क्वाऽपि जडत्वव्यावृत्तिः। अनेन ज्ञानपदं स्मारितम्। अनुकूलज्ञान मेव हि आनन्दः श्रौतस्यापि ज्ञानपदस्यानन्दरूपज्ञानपर्यवसानत्व द्योतनायानन्दशब्दः प्रयुक्तः। अनेनानन्दपदेन नित्यासङ्कुचितानुकूलज्ञानाश्रयत्वं विवक्षितम्। तेन मुक्तचेतन व्यावृत्तिः, ते हि बद्धदशायां सङ्कुचितज्ञानत्वेन न नित्यासङ्कुचितज्ञानाः; अनन्तपदेन देशकालवस्तुपरिच्छेदराहित्यं विवक्षितम्, अनेन नित्यसिद्धव्यावृत्तिः। तेषां स्वरूपस्याणुपरिमाणत्वेन अनन्तत्वाभावात्।

1. A, T omit चेननेषु 2. A, B, T °त्वं 3. A, B, T °त्वं 4. A, B, T °त्वं 5--5. A, B, T omit

तत्र देशपरिच्छेदो नाम इद मत्र न भवतीति, कालपरिच्छेदो नाम इद मिदानीं न भवतीति एवंरूपः एतद्द्वयरहितम्। वस्तु[1] परिच्छेदो नाम सर्ववस्तुसामानाधिकरण्यानर्हत्वम्[2], एवम्भूतं ब्रह्माऽहं प्रपद्ये शरणं गतोऽस्मि॥ १६॥

एवं ब्रह्मस्वरूपगुणान् विशोध्य तं प्रपद्य एतद्भजनस्य फलाविनाभाव[3] माविष्कुर्वन् वात्सल्यनिधे स्तस्याभिमतार्था दप्यति शयितपुरुषार्थप्रदत्व माह - **सत्याशिष** इति। हे भगवन् सत्याशिषः आशिषः सत्याः क्रियन्ते येन स सत्याशीः तस्य पुरुषार्थमूर्तेः स्वयं पुरुषार्थभूतस्वरूपस्य[4] तव पादपद्मं यथा आशीः तथा इच्छानुरूप मित्यर्थः। अनुभजतोऽत एव दीनान् त्रिवर्गनिष्ठा न प्येवम्भूतान् अस्मात् अनुग्रहकातरः अनुग्रहैकविवशः भगवान् षाडगुण्यपरिपूर्णः भवान् वत्सकं स्वार्थे कः वाम्रेव नवप्रसूता धेनु रिव, हे आर्य! स्वामिन् परिपाति अभिमतप्रदानेन परिपाति। परीत्युपसर्गेण सर्वतः पाति संसारभयाच्च पातीत्यय मर्थो विवक्षितः॥ १७॥

स्तुति मुपसंहरति - **अथेति**। सत्संकल्पेन दृढसङ्कल्पेन धीमता ध्रुवेणैव मभिष्टुतः स्तुतः अनन्तरं भक्तेष्वनुरक्तो निरतिशय-प्रीतिमान् भगवान् प्रतिनन्द्य स्तुति मिति शेषः इदं वक्ष्यमाण मब्रवीत्॥ १८॥.

उक्ति[5] मेवाह - **वेदेति**। हे राजन्यबालक! ते त्वया हृदि व्यवसितम् अभिमतविषयत्वेन निश्चितम् अहं वेद जानामि, तत् त्वया व्यवसित मितरै र्दुरापं दुर्लभ मपि हे सुव्रत! ते तुभ्यं प्रयच्छामि ददामि॥ १९॥

व्यवसित मेव प्रपञ्चयति - **नाऽन्यैरि**ति सार्धद्वयेन। हे भद्र! ध्रुव! ध्रुवा[6] शाश्वती क्षिति र्वासो यस्मिन् भ्राजिष्णु दीप्तिमत् अन्यैः अनधिष्ठितं यत्र स्थाने ज्योतिषां ज्योतीरूपाणां ग्रहादीनां चक्र माहित मर्पितम्॥ २०॥

**विज०** अघटित घटनाशक्तिमत्त्वा दय मेवा भीष्टसिद्धये प्रार्थनीय इत्याह - **यस्मिन्निति**। विरुद्धगतयो लोके विरुद्धविषया विद्यादयो विविधशक्तयः स्थूलत्वमणुत्वं ह्रस्वत्व मित्यादयो यस्मिन् हरा वनिशं पतन्ति वर्तन्ते। तत्र प्रमाण माह - आनुपूर्व्येति। "आनुपूर्वी श्रुतिश्चैव त्रयी चाम्नाय उच्यते" इत्यभिधानात्। "विचित्रशक्तिः पुरुषः पुराणः, अस्थूल मनण्वह्रस्वम्" इत्यादिकया श्रुत्या सिद्ध मित्यर्थः। अहं तद्ब्रह्म शरणं प्रपद्य इत्यन्वयः। जगत्कारणम् एव[7] ब्रह्माऽत्र विवक्षितं न जीव इति भावेनाह विश्वभवमिति। विश्वस्य भव उत्पत्ति र्यस्मात् तत्तथा। नैतल्लक्षणं परमाणुष्वतिव्याप्त मित्याह - एक मिति। परमाणूना मनेकत्वा दिदमेव मुख्यं कारण मित्यर्थः। कारणत्वं मृद्वन्नेत्याह - अविश्वमिति। जगतोऽन्यत् अनन्तमिति पाठे जीवाश्रितं कर्म कारण मस्ती त्याशङ्क्य कर्मणः क्षणभङ्गुरत्वेनाऽनित्यत्वात् अचेतनत्वाच्च कारणत्वानुपपत्तिरित्यर्थः। विश्वस्याद्यन्तवत्त्वेनानित्यत्वादस्य तदभावा त्कारणत्वं युक्त

1. A, B, T वस्त्व॰ 2. A, B, T ॰ण्यार्ह 3. A, B, T भूतत्व॰ 4. W omits स्व 5. A, B, T उक्त॰ 6. W omits ध्रुवा 7. A omits एव

मित्याह - आद्यमिति। आद्यमित्यु पलक्षणं विश्वस्यादावन्ते च भवतीति अनाद्यनन्तत्वं प्रधानस्यास्तीत्यत उक्तम् - आनन्दमात्रमिति। इतोऽपि प्रधानस्य कारणत्व मनुपपन्न मित्याह - अविकार मिति ॥ १६ ॥

इतरदेवतानुग्रहा त्वदनुग्रह एवाभीष्ट फलप्राप्ति हेतु रित्याह - **सत्याशिष** इति। पुरुषार्थमूर्तेः आनन्दानुभवरूपस्य तव पादमूल मनुभजतः पुरुषस्याऽऽशिष्टयः आचार्यशिष्टाः सत्याशिषो यथार्थशुभफलप्रदा ह्येव, एवमपि तथाऽपि आर्य! पूज्य[1]! अनुग्रहकातरो भवान् दीनानस्मान् शिष्यान् विशिष्ट फलप्राप्तये पुनः वाश्रेव नवप्रसूता गौरिव वत्सं परिपातीत्यन्वयः। ''वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति'' (ऋक्सं. 1-38-8) इति श्रुतिः ॥ १७ ॥

सत्सङ्कल्पेन ''सत्सत्येऽभ्यर्हिते श्रेष्ठे साधीयसि भवत्यपि'' (वैज.को. 8-4-16) इति यादवः ॥ १८ ॥

भूयसां महतां योगिना मपि दुराप मित्यनेनायोग्यानामेव दुष्प्रापं न तु योग्यानां, तेषां साधनसामग्र्या सुलभत्वादित्यर्थः ॥ १९ ॥

सूच्यत इत्युत्तरग्रन्थेन ज्ञायत इति भावेन विशिनष्टि - नाऽन्यैरिति। ध्रुवा नित्या क्षिति र्निवासो यस्मिं स्तत्तथोक्तम् ॥ २० ॥

**मेध्यां[2] गोचक्रवत्स्थास्नु परस्ता[3] त्कल्पवासिनाम्।**
**धर्मोऽग्निः कश्यपः शक्रो[4] मुनयो ये वनौकसः।**
**चरन्ति दक्षिणीकृत्य भ्रमन्तो यत्सतारकाः[5] ॥ २१ ॥**

**प्रस्थिते तु वनं पित्रा दत्वा[6] गां धर्मसंश्रयः।**
**षड्विंशद्वर्षसाहस्रं[7] रक्षिताऽव्याहतेन्द्रियः ॥ २२ ॥**

**त्वद्भ्रातर्युत्तमे नष्टे मृगयायां तु तन्मनाः।**
**अन्वेषन्ती[8] वनं माता दावाग्निं[9] सा प्रवेक्ष्यति ॥ २३ ॥**

**इष्ट्वा मां यज्ञहृदयं यज्ञैः पुष्कलदक्षिणैः।**
**भुक्त्वा चेहाशिषः सत्या अन्ते माऽनुस्मरिष्यसि[10] ॥ २४ ॥**

**ततो गन्तासि मत्स्थानं सर्वलोकनमस्कृतम्।**
**उपरिष्टा दृषिभ्य स्त्वं यतो नाऽवर्तते यतिः[11] ॥ २५ ॥**

---

1. B, M मूज्यः 2. A, B, G, I, J, M, Ma, Ms, T मेढ्यां 3. M, Ma पु° 4. A, B, G, I, J, T शु° 5. M वत्स 6. M, Ma दत्तां
7. A, B, G, I, J, T षट्त्रिंश 8. M, Ma °षती; Ms, V °ष्यन्ती 9. W द° 10. A, B, G, I, J, T मां सं° 11. A,B, G, I, J, V गतः; T ततः

**श्रीध० मेढ्या**मिति। धान्याक्रमणाय भ्राम्यमाणानां पशूनां बन्धनस्तम्भो मेढी, तस्यां बलीवर्दसमूहवत्, अवान्तरकल्प वासिनां परस्तादपि स्थास्नु लोकत्रयनाशेऽप्यनश्वरम्। धर्माग्न्यादयो नक्षत्ररूपाः वनौकसः सप्तर्षयो यत्प्रदक्षिणीकृत्य भ्रमन्तश्चरन्ति॥ २१॥

एतच्च राज्यानन्तरं भविष्यतीत्याह - **प्रस्थित** इति। तुभ्यं पृथ्वीं दत्वा वनं प्रस्थिते। भावे क्तः। वनं प्रति दीर्घगमने कृते सति [1-]धर्मसंश्रयः राजधर्मं समाश्रयन्नित्यर्थः। अव्याहतानि अविरुद्धार्थसेवीनि इन्द्रियाणि यस्य गां पृथ्वीं[-1] रक्षिता रक्षिष्यसि॥ २२॥

त्वया असङ्कल्पितमपि मद्भक्तस्य तव द्रोहा देवं भविष्यतीत्याह - त्वद्भ्रातरीति। सा सुरुचिः [2]दावाग्निं [3]वनवह्निं प्रवेक्ष्यति॥ २३॥

**इष्ट्वेति**। किञ्च [4]त्वमिष्ट्वा माम्। यज्ञो हृदयं प्रिया मूर्तिर्यस्य तम्॥ २४॥

**तत** इति। यतः स्थानात्॥ २५॥

**वीर०** धान्याक्रमणाय भ्राम्यमाणानां पशूनां बन्धनस्तम्भो मेढिः। तस्यां गोचक्रवद्बलीवर्दसमूहवन्निहितमित्यर्थः। कल्पवासिनामवान्तरकल्पवासिनां परस्ता दपि स्थास्नु लोकत्रयनाशेऽप्यनश्वरं धर्माग्न्यादयो नक्षत्ररूपाः वनौकसो मुनयः सप्तर्षयः यत्प्रदक्षिणीकृत्य भ्रमन्त श्चरन्ति॥ २१॥

तत्स्थानं राज्या दनन्तरं प्राप्स्यसीत्याह - **प्रस्थित** इति। तुभ्यं गां पृथिवीं दत्वा पित्रा उत्तानपादेन वनं प्रस्थिते इति भावे क्तः। वनं प्रति गमने सति धर्मसंश्रयः वर्णाश्रमधर्मपरिपालकः भवान् [5]षट्विंशद्वर्षसाहस्रं वर्षाणां सहस्राणि ततः समाहारे द्विगुः, अव्याहतेन्द्रियः अविहतेन्द्रियः रक्षिता रक्षिष्यति गामित्यनुषङ्गः॥ २२॥

त्वयाऽसङ्कल्पित मपि मद्भक्ते त्वयि द्रोहादेवं भविष्यतीत्याहैकेन **त्वद्भ्रातरीति**। उत्तमाख्ये त्वद्भ्रातरि मृगयायां नष्टे सति, तस्मिन् उत्तमे मनो यस्याः सा माता सुरुचिः वनं [6-]प्रत्यन्वेषन्ती[-6] [7]दवाग्निं प्रवेक्ष्यति॥ २३॥

किञ्च यज्ञहृदयं यज्ञस्य हृदयं तात्पर्यभूमिं यज्ञाराध्यमित्यर्थः। मां यज्ञानां प्रभुं पुष्कलदक्षिणैः [8-]समग्रदक्षिणैः[-8] यज्ञैः इह राज्ये सत्याः दृढसंकल्पजाः आशिषः इच्छाविषयान् भुक्त्वा अनुभूय अन्ते भोगानन्तरं [9]मा [10]माम् अनुस्मरिष्यसि॥ २४॥

ततः सर्वैर्लोकैः सप्तर्षिपर्यन्तैः नमस्कृतं [11]मत्स्थानं मदनुग्रहाल्लब्धं [12]स्थानं गन्तासि प्राप्स्यसि। स्थानं विशिनष्टि - [13]सप्तर्षिभ्य

1--1. B, J, V, Va omit 2. V omits दावाग्नि० 3. B, J, V, Va omit वनवह्निं 4. B, J, V, Va omit त्वम् 5. A, B, T षट्त्रिंश० 6--6. A, B, T प्रविश्य 7. A, B, T दा० 8--8. A, B, T omit 9. W omits मा 10. A, B, T omit माम् 11. A, T omit मत्स्थानं 12. W omits स्थानं 13. W omits सप्त

उपरिष्टात् स्थितं यतिः मनः प्रयतनशीलः गत्वा यतः स्थानात् पुनः नाऽवर्तते नाऽर्वागवरोहति, अपि तु ततो वैकुण्ठ मेव यातीत्यर्थः ॥ २५ ॥

**विज० मेढीति**। तिलपीडोलूखलं कल्पलयेऽपि लयो नास्ती त्याशयेनाऽऽह - स्थास्न्विति। अनेन ध्रुवक्षिती त्यस्य अर्थविशेषो दर्शितः, पुरस्ता दग्रे धर्मादयो यत्स्थानं प्रदक्षिणीकृत्य चरन्ति त तुभ्यं दास्यामीत्यन्वयः। वनौकसो वानप्रस्थाः ॥ २१ ॥

सिंहासनाधिपति रपि भूयादिति भावेनाह - **प्रस्थित** इति। गां भूमिम् ॥ २२ ॥

उत्तमे भ्रातरि सति कथं सिंहासनाप्तिरिति तत्राह - **त्वद्भ्रातरीति**। तस्मिन्नेव मनो यस्याः सा तन्मनाः वन मन्वेषती मार्गमाणा, अनेन तन्मातृभय मपि प्रत्युक्त मिति ज्ञायते ॥ २३ ॥

पुष्कलदक्षिणैः "पुरुषं पुष्कलं पूर्णम्" इति हलायुधः। अनेन यज्ञाना मुत्तमकल्पत्वं ध्वनयति। मा[1]ऽनुस्मरिष्यसी त्यनेन सर्वदा स्मरन्नपि मरणकाले विशेषतो मत्स्मरणं कुर्विति विधत्ते एष्यदर्थत्वा दुभयो रिति ॥ २४ ॥

ततः कि मत्राह - **तत** इति। यतो नाऽवर्तते यतिरित्यनेन ध्रुवस्य मुक्ते र्नियतत्वं ध्वनयति ॥ २५ ॥

**मैत्रेय उवाच**

**इत्यर्चितः स भगवानतिदि[2]श्याऽऽत्मनः पदम्।**
**बालस्य पश्यतो धाम स्व[3] मगा द्गरुडध्वजः ॥ २६ ॥**

**सोऽपि सङ्कल्पजं विष्णोः पादसेवोपसा[4]दितम्।**
**प्राप्य सङ्कल्पनिर्वाणं नाऽतिप्रीतोऽभ्यगात्पुरम् ॥ २७ ॥**

**विदुर उवाच**

**सुदुर्लभं यत्परमं पदं हरे र्मायाविन स्तच्चरणार्चनार्जितम्।**
**लब्ध्वाऽप्यसिद्धार्थ मिवैकजन्मना कथं स्वमात्मान ममन्यता[5]ऽऽत्मवित् ॥ २८ ॥**

1. A, B मामनु॰ 2. M, Ma, Ms सृज्याऽऽ॰ 3. M, Ma जगाम ग॰, V स्वमयाद्ग॰ 4. Ms ॰पा॰ 5. A, B, G, I, J, M, Ma, Ms, T, V ॰ताऽर्थवित्

**मैत्रेय उवाच**

**मातु स्सपत्न्या वाग्बाणै र्हृदि विद्धस्तु तान् स्मरन् ।**
**नैच्छन्मुक्तिपते[1] र्मुक्तिं पश्चात्ताप[2] मुपेयिवान् ॥ २९ ॥**

**ध्रुव उवाच**

**समाधिना[3] नैकभवेन यत्पदं विदुः सनन्दादय[4] ऊर्ध्वरेतसः ।**
**मासै रहं षड्भि रमुष्य पादयो श्छाया मुपेत्यापगतः[5] पृथङ्मतिः ॥ ३० ॥**

**श्रीध० इतीति** । अतिदिश्य दत्वा ॥ २६ ॥

**स** इति । सङ्कल्पजं मनोरथम् । पादसेवया प्रापितं प्राप्य[6] । सङ्कल्पस्य निर्वाणं समाप्तिः यस्मात् ॥ २७ ॥

**सुदुर्लभ** मिति । मायाविनः सकामस्य यत्सुदुर्लभं हरेः पदं तदेकेनैव जन्मना लब्ध्वाऽपि स्वमात्मानं मनोऽसिद्धार्थमप्राप्तमनोरथ मिव कथ ममन्यत ? पुरुषार्थविदपि ॥ २८, २९ ॥

ताप मेवाह - **समाधिनेति** सार्धैः षड्भिः । नैके अनेके भवा यस्मिन् [7-]तेन अनेकभवेन[-7] बहुजन्माभ्यस्तेन समाधिना[8] इत्यर्थः । प्रणाम स्तुत्यादिसमये गुरुडाधिरूढस्य हरेः पादच्छायायां स्थित मात्मानं स्मरन्नाह छाया मुपेत्येति । पृथङ्मतिः भेददृष्टि स्सन् । हा कष्टमिति भावः ॥ ३० ॥

**वीर०** भगवदुक्ति मुपसंहरन् भगवान् तिरोदधे[9] - इत्याह मैत्रेयः[10] । इति उक्तप्रकारेण अर्चितः आराधितो भगवान् आत्मनः पदं स्थानं अतिदिश्य दत्वा बालस्य ध्रुवस्य पश्यतः सतः गरुडध्वजो गरुडवाहनः तदङ्कितध्वजश्च भगवान् स्वं धाम वैकुण्ठस्थान मगात् प्रत्यपद्यत[11] ॥ २६ ॥

सोऽपि ध्रुवोऽपि विष्णोः पादसेवया उपसादितं प्रापितं सङ्कल्पजं तपश्चर्यारम्भे फलसङ्कल्पाज्जातं[12] सङ्कल्पनिर्वाणं सङ्कल्पस्य निर्वाणंसमाप्ति र्यस्मिन् । कृतकसुखं न तु स्वाभविकानन्दाविर्भावरूपमिति[13] भावः । प्राप्याऽपि नाऽतिप्रीतः नितरा महृष्टचित्तः पुर मगात् ॥ २७ ॥

---

1. W °प्रदान्मु° 2. A, B, G, I, J, M, Ma, T, V तस्मात्ता° 3. M, Ma, Ms °नाऽनेक 4. J, W सु° 5. M, Ma, Ms हतः 6. B, J, V, Va omit प्राप्य 7--7. A, B, J, Va omit 8. A, B, J, Va omit समाधिना 9. A, T तिरोऽदधात् 10. A, B, T मुनिः 11. A, B, T प्रापद्यत 12. A, B, T omit सङ्कल्पा ज्जातं 13. A, B, T °वं प्रा°

अनतिप्रीतिकारणं पृच्छति विदुरः - **सुदुर्लभमिति**। मायाविनः[1] मायाधिपतेः सम्बन्धि तेन दत्त मित्यर्थः। इतरैः सुदुर्लभम् अतिदुःखेनाप्यलभ्यं यत्पदं स्थानं तस्य[2] भगवतः चरणार्चनेनाऽऽर्जितं सम्पादितं तत्स्थानम्, एकजन्मना लब्ध्वाऽपि द्वितीये शरीरे असत्येव लब्ध्वे त्यर्थः। [3-]आत्मवित् ध्रुवः[-3] स्व मात्मान मसिद्धार्थ मिव अपरिपूर्णार्थमिव कथ ममन्यत॥ २८॥

मुक्त्यर्थं भगवदनाराधन मेवाप्रीतिकारणमिति वदन् तस्य परिताप माह ऋषिः मातुरिति। सपत्न्या मातुः सुरुचे र्वाच एव बाणाः ते हृदि विद्धः जातव्यथः तान् वाग्बाणान् स्मरन् मुक्तिप्रदान् भगवतः मुक्तिं नैच्छत्। तत्प्रयुक्तं पश्चात्ताप मुपेयिवान् प्राप्तः॥ २९॥

पश्चात्तापविषयां ध्रुवोक्ति माह - **समाधिनेति** सार्धैः षड्भिः। ऊर्ध्वरेतसो जितेन्द्रियाः सुनन्दादयः नैकभवेन नैके अनेके भवा यस्मिन् बहुजन्मना अभ्यस्तेने त्यर्थः। समाधिना यस्य भगवतः पदं स्वरूपं विदुः साक्षात्कृतवन्तः अमुष्य भगवतः पादयोः छाया महं षड्भि रेव मासै रुपेत्याऽपि प्रणामस्तुत्यादिसमये गरुडारूढस्य हरेः पादच्छायायां स्थित्वाऽपीत्यर्थः। पृथङ्मतिः देहात्माभिमानस्वतन्त्राभिमानग्रस्तः अपगतः भगवत्पादच्छायायाः सकाशात् दूरीकृतः॥ ३०॥

**विज०** अतिसृज्य दत्वा॥ २६॥

सोऽपि ध्रुवोऽपि सङ्कल्पजं सङ्कल्पा ज्जातं विष्णोः पादसेवयोपसीदित्तं प्राप्तं सङ्कल्पनिर्वाणं प्रतिज्ञाफलं प्राप्य॥ २७॥

विदुरो मुक्ते रितरेषु पुरुषार्थेषु विरक्तेन भाव्यमिति जानन्नपि तत्प्रकटनाय पृच्छति - **सुदुर्लभ** मिति। मायाविनो भक्ताभीष्ट फलप्रदानसामर्थ्यवतः असिद्धार्थ मसाधितप्रयोजनं अर्थवित् तत्तत्कालोचितप्रयोजनं वेत्तीति॥ २८॥

विदुषोऽपि[4] सांसारिको निर्बन्धो दुस्त्यज इति भावेन त च्चोद्यं परिहरति - **मातुरिति**॥ २९॥

अनेकभवेनेति भवपद मावृत्य व्याख्येयं, तथा हि अनेकेषु भवेषु जन्मसु भवति समुत्पद्यते इति तेनाऽमुष्य हरेः पादयो श्छायां प्राप्य पृथङ्मतिः विषयबुद्धित्वादपहतः तिर्यक्ताडित इवाऽभूवम्॥ ३०॥

***अहो बत ममानात्म्यं मन्दभाग्यस्य पश्यत।**
**भवच्छिदः पादमूलं गत्वा[5] याचे यदन्तवत्[6]॥ ३१॥**

---

1. A, B, T omit मायाविनः 2. A, B, T omit तस्य 3--3. A, B, T omit 4. A, B °षा°

* W Reads - तत्पश्यत ममानात्म्य महो शोच्यं वतेति यत्।
गत्वा भवच्छिदः पादमूलं याचेऽन्तवत्फलम्॥ ३१॥ 5. J नत्वा 6. M, Ma त°

**मति र्विदूषिता देवैः [1]पतद्भि रसहिष्णुभिः ।**

**यो नारदवच स्तथ्यं नाऽग्रहीष मसत्तमः ॥ ३२ ॥**

***दैवीं माया मुपाश्रित्य प्रसुप्त इव भिन्नदृक् ।**

**तप्ये द्वितीयेऽप्यसति भ्रातृ-भ्रातृव्यहृद्रुजा ॥ ३३ ॥**

**मयैतत्प्रार्थितं व्यर्थं चिकित्सेव गतायुषि ।**

**प्रसाद्य जगदात्मानं तपसा दुष्प्रसादनम् ।**

**भवच्छिद मयाचेऽहं भवं भाग्यविवर्जितः ॥ ३४ ॥**

**[2]स्वाराज्यं यच्छतो [3]मौढ्यान्मानो मे [4]भिक्षितो बत ।**

**ईश्वरात् क्षीणपुण्येन [5]फलीकारा निवाधनः ॥ ३५ ॥**

**श्रीध०** **अहो** इति । अनात्म्यम् आत्मशून्यत्व मज्ञत्व [6-]मिति यावत्[-6] । भवच्छेत्तुः [7]भवत्तः यदन्तवत् [8]अनित्यं तदयाचे याचितवानस्मि ॥ ३१ ॥

अज्ञत्वे कारणं सम्भावयति - **मतिरिति** । पतद्भिः मदपेक्षयाऽधः [9]स्थानं प्राप्नुवद्भिः अत एव [10-]असहिष्णुभिः[-10] असहनशीलैः "नाऽधुनाऽप्यवमानं ते" (भाग. 4-8-27) इत्यादि सत्यमपि नारदस्य् वचो यो न गृहीतवानस्मि तस्य मे मतिः विदूषिता ॥ ३२ ॥

किञ्च **दैवी मिति** । प्रसुप्तः स्वप्नानिव पश्यन् द्वितीयेऽसत्यपि भ्रातैव भ्रातृव्यः शत्रुरिति दृष्ट्या हृद्रुजा हृदय [11]गत शोकेन तप्ये ताप मनुभवामि ॥ ३३ ॥

**मयेति** । किञ्च मया प्रसाद्य यत्प्रार्थित तद्व्यर्थम् ॥ ३४ ॥

---

1. M, Ma, Ms य॰ * दैवीं गुणमयीं माया मुपाश्रित्य दुरत्ययाम् । असत्यपि द्वितीयेऽत्र प्रसुप्त इव भिन्नदृक् । भ्रातृ भ्रातृव्येऽतिरुजा तप्येऽहमपि हृद्रुजा ॥ मया प्रसाद्य तपसा दुष्प्रसादं भवच्छिदम् । याचेऽहं जगदात्मानं भावं भाग्यविवर्जितः ॥ स्वाराज्यं यच्छतो मानः केवलं मेऽभिभिक्षितः ॥ निर्धन क्षीणपुण्येन पुलीकारा निवेश्वरात् ॥

2. M, Ma, Ms तादात्म्यं 2. M, Ma, Ms मनो 4. M, Ma, Ms ॰तं 5. M, Ma, Ms पुलकानिव चा धनः 6--6. A, B, J, Va omit

7. A, B, J, Va omit भवत्तः 8. A, B, J, Va omit अनित्यं 9. B, J, V, Va omit स्थानं 10--10. A, B, J, Va omit 11. A, B, J, Va omit गत

एतदेव सदृष्टान्त माह - **स्वाराज्य** मिति । स्वाराज्यं निजानन्दं प्रयच्छतः सकाशात् [1]मानः अभिमानः क्षीणपुण्येन मया भिक्षितो याचितः । क्षीणेन पुण्येनेति वा दृष्टान्त एव सम्बन्धः । यथाऽधनः [2-]क्षीणपुण्यतया[-2] ईश्वरात् चक्रवर्तिनः फलीकारान् सतुषतण्डुलकणान् याचते तद्वत् ॥ ३५ ॥

**वीर०** अनात्मा देहः तस्य कर्म अनात्म्यं दौर्जन्य मित्यर्थः । तत् पश्यत तच्छोच्य मिति । अहो बतेति आ कष्ट मिति भावः । शोककारणं व्यनक्ति यत् यस्मात् भवच्छिदः गर्भजन्मजरामरणा[3] द्यात्मक संसार भयनिवर्तकस्य भगवतः पादमूलं गत्वा साक्षात्कृत्य अन्तवत् फलं याचे याचितवान्, न तु [4]नित्यनिरतिशयानन्दापहतपाप्मत्वादि गुणाष्टकाविर्भाव पूर्वक ब्रह्मानुभवात्मकानन्द मिति भावः ॥ ३१ ॥

स्वस्याऽल्पास्थिर सांसारिकभोगयाञ्चाकारणं निश्चिनोति - **मतिरिति** । पतद्भिः स्वस्य भोगान्ते स्वर्गात्पतद्भिः पतनशीलैः अत एवासहिष्णुभिः मदपेक्षयाऽधः पदप्राप्तत्वात् परसमृद्धि मसहिष्णुभिः देवैः मम मतिः बुद्धिः विदूषिता सांसारिकभोगलौल्यसम्पादनेन दोषं प्रापिता । स्वदौर्जन्य मेव व्यञ्जयन् परितपति योऽह मसत्तमः दुर्जनः अत एव नारदवचः ''विकल्पे विद्यमानेऽपि न ह्यसन्तोषहेतवः'' (भाग. 4-8-28) इत्यादिनोक्तं वचः तथ्यं नाऽग्रहीषं न गृहीतवान् ॥ ३२ ॥

प्रसुप्त [5]इव अह मपि दैवीं गुणमयीं दुरत्ययां माया मुपश्रित्य[6] अत एव भिन्नदृक् देहात्माभिमानस्वतन्त्रात्माभिमानी द्वितीये अब्रह्मात्मकस्वतन्त्रवस्तुन्यसत्यपि भ्रातैव भ्रातृव्यः शत्रुरिति या रुक् रोगः तया तप्ये ताप मनुभवामि ॥ ३३ ॥

किञ्च, मया यत्प्रार्थितं तद्व्यर्थमित्याह - **मयेति** । दुःखेनाऽपि प्रसादयितु मशक्यं भवच्छिदं जगदन्तरात्मानं तपसा प्रसाद्य भवं संसार मेव याचे याचितवानस्मि । हेति खेदे, यतोऽहं भाग्यविवर्जितः दुर्भगः ॥ ३४ ॥

[7]दौर्भाग्य मेव सदृष्टान्तं व्यनक्ति । स्वाराज्यं स्वराट् अकर्मवश्य स्तस्य भावः स्वाराज्यं ''स स्वराड् भवति तस्य सर्वेषु लोकेषु कामचारो भवति'' (छान्दो.उ. 7-25-2) इत्युक्तम् । मुक्तैश्वर्यं यच्छतो ददतो भगवतः सकाशात् केवलं मे मया मानः अभिमानः अभिभिक्षितः याचितः, निर्धनः क्षीणं च तत्पुण्यं तेन ईश्वरात् सार्वभौमात् फलीकारानिव सतुष तण्डुलकणानिवेति दृष्टान्तः ॥ ३५ ॥

**विज०** राजभटादिना ताडितस्येव तस्य पश्चात्तापोद्रेकं वक्ति - **अहो बतेति** । अनात्म्यं जाड्यम् । अन्तवदित्यनेन

---

1. A, B, J, Va omit 2--2. A, B, J, Va omit न 3. A, T °णात्मक 4. A, B, T omit नित्य 5. A, B, T °वत् 6. A, B, T add तथा
7. A, T दु°

स्वस्यानित्याधिपत्यं सूचयति। तदुक्तम् "आधिपत्य मनित्यं तु ध्रुवलोकस्य यद्ध्रुवे" (भविष्यपर्वणि)। यतो नाऽवर्तते यति रित्युक्ति रपि युज्यत इत्याह, न तु तत्स्थानगन्तॄणां यतीनां स्थिति रुत्तमेति, आधिपत्य मनित्यं चेत् ततो निवृत्त्या न कदाऽपि तस्य मुक्ति रित्यत आह तस्याऽपि मुक्ति र्नियतेति। तर्हि जानता विष्णुनेदं पदं किमिति दत्तम् इति[1] तत्राह नियतं चाऽपि तत्पदं तस्य क्लृप्तत्वा द्दत्त मित्यर्थः। तर्हि ध्रुवेण किमित्यनिन्दीति तत्राह तथाऽपि कामनानिन्दा ध्रुवेण सुकृता बतेति मुमुक्षुणा विषयाभिलाषो न कर्तव्य इति शिक्षाणार्थ मित्यर्थः॥ कामना विषयाभिलाषः। तस्य निन्दा धिक्कारः॥ ३१॥

शास्त्रशिक्षितबुद्धे स्तव कथं बुद्धिव्यामोहः प्राप्त इति तत्राह - **मतिर्विदूषिनेति**। "नाऽधुनाऽप्यवमानं ते" (भाग. 4-8-27) इत्यादिनारदवचनम्॥ ३२॥

एतदेव विशदयति - **दैवीमिति**। सर्वत्र निर्मलत्वेन द्योतमानस्य देवस्य हरे र्विद्यमानां मायां बन्धकशक्तिमुपाश्रित्य स्पृष्ट्वा प्रसुप्तोऽज्ञाने शयितो यथा भिन्नदृक् यथावस्तु न पश्यति विपरीतं पश्यति च तथाऽहमपि भ्राताऽय मुत्तमो भ्रातृव्यः शत्रुरिति हृद्रुजा हृदयभेदिरोगेण तप्ये स्वतन्त्रस्य अन्यस्य हरेः द्वितीयसद्भावे सन्तापः सम्भावित इति नेत्याह - द्वितीय इति। द्वितीये स्वतन्त्रेऽन्यस्मिन्नसत्यविद्यमानेऽपि सर्वस्वातन्त्र्येण सर्वैश्वर्येणा द्वितीयत्व मीश्वरत्वं च ब्रह्मादीशितव्यस्य भावा त्परमेश्वरत्वं हरे रेव युक्त मिति इम मर्थ मपिपदेन ध्वनयति। तदुक्तम् - द्वितीयस्य स्वतन्त्रस्य त्वभावा दूद्वयवर्जितः। ईश्वरस्येशितव्यैस्य भावात्स परमेश्वरः" (हरिवंशे) इति॥ ३३॥

ध्रुवलोकस्याधिपत्यस्या नित्यत्वात् सुतरां सिंहासना धिष्ठानस्य सम्प्रार्थ्य भिक्षणं व्यर्थ मित्याह - **मयैतदिति**। जगता मिति बहुवचनेन अन्येषा माधिपत्यं श्लथयति, तेन द्वितीयस्वातन्त्र्याभावो निश्चीयत इति ज्ञातव्यम्। अभीष्ट पुरुषार्थदानसामर्थ्या-भावात् न भिक्षित मिति न मन्तव्य मित्याह - *भवच्छिद मिति॥ ३४॥

ञिभी - भयसञ्चलनयो रिति धातोः भयमात्राहित्यं चेत् विवक्षितं लोकेऽप्यस्तीति किमित्यनुशोक इत्यत उक्तं विशिनष्टि - तादात्म्य मिति। तादात्म्यं हरिं नियतचित्ततया गृहवद्धरिप्रवेशलक्षणो मोक्षः। तदुक्तम् - "हरौ नियतचित्तत्वात् गृहवत्तत्प्रवेशनात्। मोक्षं तादात्म्य मित्याहु र्नतु तद्रूपतः क्वचित्" (भविष्यत्पर्वणि) इति। "नैकात्मनां मे स्पृहयन्ति केचित्" (भाग. 3-25-34) इत्यत्र

1. A omits इति

* भवच्छिद मिति प्रतीकानन्तरस्थितं ञि भी-भयसञ्चलनयोः इत्यादिरूपे व्याख्याने परिशील्यमाने भवच्छिद मित्यस्य स्थाने 'भयच्छिद, मिति विजयध्वजादृतः पाठः इति ऊह्यते।

हरिणा कांक्षिताकांक्षितत्व मेवैकात्म्यं न तु तत्स्वरूपत्वम्। "हरिच्छितैच्छुतैकात्मता न तु नैकस्वरूपता। (भविष्यत्पर्वणि) इति वचनात्। "कामेन मे काम आगा दित्युपास्तिसमये प्रार्थनोक्तिश्च मे मनो बत दुःखानुभवयोग्यं वस्तु भिक्षितं क्षीणपुण्येन कारणेन। अत्र दृष्टान्तमाह - पुलकानिति। पुलकाः तुच्छधान्यानि कुलित्थादीनि भक्तसिक्थानीव "स्यात्पुलाक स्तुच्छधान्ये संक्षेपे भक्तसिक्थके" (अम.को. 3-161) इति यादवः ॥ ३५ ॥

### [1-] मैत्रेय उवाच [-1]

**न वै मुकुन्दस्य पदारविन्दयो रजोजुष स्तात भवादृशा जनाः।**
**वाञ्छन्ति तद्दास्य मृतेऽर्थ मात्मनो यदृच्छया लब्धमनस्समृद्धयः ॥ ३६ ॥**

**आकर्ण्यात्मज मायान्तं सम्परेत्य[2] यथाऽऽगतम्।**
**राजा न श्रद्धये भद्र मभद्रस्य कुतो मम ॥ ३७ ॥**

**श्रद्धाय वाक्यं देवर्षे र्हर्षवेगेन धर्षितः।**
**वार्ताहर्तु[3] रतिप्रीतो हारं प्रादा न्महाधनम् ॥ ३८ ॥**

**सदश्वं रथ मारुह्य कार्तस्वरपरिष्कृतम्[4]।**
**ब्राह्मणैः कुलवृद्धैश्च पर्यस्तोऽमात्यबन्धुभिः[5] ॥ ३९ ॥**

**शङ्ख[6]दुन्दुभिनादेन ब्रह्मघोषेण वेणुभिः[7]।**
**निश्चक्राम पुरा[8] तूर्ण मात्मजावेक्षणोत्सुकः[9] ॥ ४० ॥**

**श्रीध०** एवं निस्पृहत्वं तस्य युक्त मित्याह[10] - **नेति**। [11-] रजोजुषः पराग मप्राप्ताः [-11] तस्य दास्यं विना अन्य मर्थ मात्मनो नैव[12] वाञ्छन्ति। यदृच्छयैव लब्धेन मनसः समृद्धि [13-] र्येषां ते प्राप्तमनोरथा [-13] इत्यर्थः ॥ ३६ ॥

[14] प्रस्तुत माह - **आकर्ण्येति**। सम्परेत्य मृत्वाऽऽगत माकर्ण्य यथा तथा[15] न श्रद्दधे विश्वासं न चकार। अभद्रस्य मम भद्रं कुत इति मत्वा ॥ ३७ ॥

---

1--1. W omits 2. W °तमिवाऽऽ° 3. V °त्या 4. W °च्छदम् 5. W बान्धवैः 6. Ms तूर्यनि° 7. W भूयसा 8. W पुरस्तू° 9. A, B, G, I, J, M, Ma T °भी° 10. V °मेवेत्याह 11--11. A, B, J, Va omit 12. V न वै 13--13. A, B, J, Va omit 14. Va omits प्रस्तुत माह 15. V omits तथा

**श्रद्धायेति**। "एष्यत्यचिरत" (भाग. 4-8-69) इति देवर्षे[1] र्वाक्यं श्रद्धाय ॥ ३८ ॥

**सदश्व** मिति। ब्राह्मणादिभिः पर्यस्तः परिवृतः ॥ ३९-४० ॥

**वीर०** दुर्लभ मर्थं प्राप्याऽपि कथ मेवं तप्यते[2] इति त्वया न शङ्क्य मित्याह मुनिः - **न वा** इति। मुकुन्दस्य मुक्तिप्रदस्य भगवतः पदारविन्दयोः यद्रजः परागः तज्जुषः सेवमानाः भवादृशा जनाः अस्य भगवतो दास्यं शेषत्व मृते विना अन्य मर्थ मात्मनः स्वस्य नैव[3] वाञ्छन्ति नैवेच्छन्ति[4] यत स्ते जनाः यदृच्छया दैवात् लब्धा मनसः समृद्धि र्येषां ते ॥ ३६ ॥

प्रस्तुत माह - **आकर्ण्येति**। राजा उत्तानपादः आत्मजं ध्रुवं आयान्तम् आगच्छन्तम्[5] आकर्ण्याऽपि सम्परेत्य मृत्वा यथाऽऽगतं पुनरागत मिव न श्रद्दधे न विश्वस्तवान्। 'सम्परेत्य यथाऽऽगत, मित्या गमनदौर्लभ्य मुच्यते। तच्च भाग्यहीनत्वाभिप्रायेण तदेव[6] व्यनक्ति। अभद्रस्य भाग्यहीनस्य मम भद्रं पुत्र[7] प्रत्यागमनरूपं मङ्गलं कुतो हेतोः स्या दित्याभिप्रायेण न श्रद्दधे इत्यन्वयः ॥ ३७ ॥

ततो देवर्षे र्नारदस्य वाक्यं "एष्यत्यचिरतो राजन्! यशो विपुलयंस्तव" (भाग. 4-8-69) इति वाक्यं तात्कालिकं वा श्रद्धाय विश्वस्य हर्षयोगेन पुत्रागमन[8]निमित्तसन्तोषयोगेन धर्षितः प्रगल्भितः उद्रिक्तानन्द इति यावत्, वार्ताहर्तुः[9] पुत्रागमनवार्ता[10] कथयितुः महाधन मनर्घं[11] हारं मुक्तामणिमयं प्रीत्या प्रादात्[12] ॥ ३८ ॥

अमात्यबान्धवै रिति द्वन्द्वः ब्राह्मणादिभिः पर्यस्तः परिवृतः ॥ ३९ ॥

ब्रह्मघोषेण स्वस्तिवाचनात्मकेन आत्मजावेक्षणोत्सुकः[13] निश्चक्राम निष्क्रान्तवान् ॥ ४० ॥

**विज०** मैत्रेयो ध्रुवस्यानुशोके तात्पर्य माह - न वा इति। तद्दास्यमित्यनेन तादात्म्य मित्येतद्विवृत मर्थतः। अन्यपुरुषार्थं कुतो न वाञ्छन्तीति तत्राह - यदृच्छयेति। यदृच्छया भगवदिच्छया आकाङ्क्षामन्तरेणाऽपि मनोभीष्टानां प्राप्तत्वा दित्यर्थः ॥ ३६ ॥

एव मस्तु उत्तरकथाप्रसङ्गः क इति वैदुरीं शङ्कां परिहरन्निवाह - **आकर्ण्येति** ॥ ३७ ॥

नन्वश्रद्धया राज्ञः प्राक्तनो द्वेषोऽनुमीयते। अभद्रवचनं चौपचारिकं निश्चायकप्रमाणाभावादिति शङ्का माभूदित्याह[14] - **श्रद्धायेति**। हर्षोवेगेन हर्षोद्रेकेण धर्षितो विवशीकृतः महान्ति धनानि यस्य स तथा ॥ ३८ ॥

---

1. V °र्षिवा° 2. A, B, T तपति 3. A, T न वा° 4. A, T omit नैवेच्छन्ति; B नेच्छ° 5. A, B, T omit आगच्छन्तं 6. A, B, T तमेवा 7. W पुत्राग° 8. A, B, T प्रत्याग° 9. A, B, T add पुत्रागमनवार्ताहर्तुः 10. A, B, T °र्ता 11. A, B अनर्घ्यं 12. A, B, T अदात् 13. W °जाभीक्ष° 14. Ma °दिति तत्राह

सन्तोऽभ्यर्हिता अश्वा यस्य स तथा त, पर्यस्त परिवृत ॥ ३९ ॥

इद मपि राज्ञ स्नेहोद्रेकलक्षणमिति भावेनाह - शङ्खेति ॥ ४० ॥

**सुनीतिः सुरुचिश्चाऽस्य[1] महिष्यौ रुक्मभूषिते ।**
**आरुह्य शिबिकां[2] सार्धं मुत्तमेनाभिजग्मतुः ॥ ४१ ॥**

**तं दृष्ट्वोपवनाभ्याश आयान्तं तरसा रथात् ।**
**अवरुह्य नृप स्तूर्ण मासाद्य प्रेमविह्वलः ॥ ४२ ॥**

**परिरेभेऽङ्गजं दोर्भ्यां दीर्घोत्कण्ठमनाः[3] श्वसन् ।**
**विष्वक्सेनाङ्घ्रिसंस्पर्श हताशेषाघबन्धनम् ॥ ४३ ॥**

**अथाऽजिघ्रन्मुहु[4] र्मूर्ध्नि शान्तै[5] र्नयनवारिभिः ।**
**स्नापयामास तनयं[6] जातोद्दाममनोरथः[7] ॥ ४४ ॥**

**अभिवन्द्य पितुः पादा वाशीर्भिश्चाभिमन्त्रितः ॥**
**ननाम मातरौ शीर्ष्णा सत्कृतः सज्जनाग्रणीः ॥ ४५ ॥**

**श्रीध०** **सुनीतिरिति** । अस्य राज्ञो महिष्यौ मध्ये[8] उत्तम निधाय एकामेव शिबिकां नरविमानमारुह्य ॥ ४१ ॥

**तमिति** । उपवनस्याभ्याशे समीपे ॥ ४२ ॥

**परिरेभ इति** । [9-]विष्वक्सेनस्य विष्णोरङ्घ्रि[-9] सस्पर्शेन हतमशेष मघं बन्धन च यस्य तम् ॥ ४३ ॥

**अथेति** । [10]जात उद्दामो महान् मनोरथो यस्य ॥ ४४ ॥

**अभिवन्द्येति** । अभिमन्त्रित पितुराशीर्भि सत्कृत[11] तेन सह कृतसम्भाषण ॥ ४५ ॥

**वीर०** अस्य राज्ञो महिष्यौ भार्ये सुनीति सुरुचिश्च उत्तमेन सार्ध शिबिका नरवाहन मारुह्याभिजग्मतु ॥ ४१ ॥

---

1 A, T °थ 2 M, Ma °के 3 W दीर्घोत्कण्ठय° 4 V अवजि° 5 A, B, G, I, J, T शीतै° 6 M, Ma, Ms आप्तो°
7 M, Ma, Ms °थम् 8 V omits मध्ये 9--9. B, J, V, Va विष्वक्सेनाङ्घ्रि 10 A आप्त 11 A, B, J, Va omit सत्कृत

[1-]उपवनस्य अभ्याशे समीपे[-1] आयान्तं तं ध्रुवं दृष्ट्वा तरसा आशु रथा दवरुह्य तूर्णं पुत्र मासाद्य प्रेम्णा विह्वलः परवशः नृपः उत्तानपादः ॥ ४२ ॥

[2]दीर्घौत्कण्ठ्यमनाः अत एव श्वसन् श्वासं मुञ्चन् दोर्भ्याम् [3]अङ्गजं पुत्रं परिरेभे । अङ्गजं विशिनष्टि विष्वक्सेनस्य भगवतः अङ्घ्रिसंस्पर्शेन हत मशेष [4]मघात्मकं बन्धनं संसृतिकारणं यस्य तम् ॥ ४३ ॥

जात उद्दामो महान्मनोरथो यस्य सः राजा । द्वितीयान्तपाठे तनयविशेषणं मूर्ध्नि आजिघ्रन् आघ्राणं कुर्वन् [5]शान्तैः [6]शीतलैः नयनवारिभिः [7]अश्रुभिः स्नापयामास ॥ ४४ ॥

पितुरुत्तानपादस्य पादावभिवन्द्य नमस्कृत्य पितुराशीर्भिः अभिमन्त्रितः कृतसम्भाषणः सत्कृतः सम्मानितः [8-]सज्जनाग्रणीः[-8] सज्जनश्रेष्ठः ध्रुवः शिरसा मातरौ सुरुचिसुनीती ननाम ॥ ४५ ॥

**विज०** हरेः शक्ति रचिन्त्येति ध्वनयन् सुनीतिसुरुच्योः यात्रां चाह - **सुनीति रिति** । रुक्मं हेम, शिबिके आन्दोलिके ॥ ४१ ॥

दूरप्रदेशे दर्शनं सार्वजनीनं न स्या दिति हरिणा पुरनिकट एव घटित मिति भावेन पुरोपवनसमीपे कुमारदर्शनं तदनन्तरं राज्ञो माननक्रियाविशेषं चाह - **तं दृष्ट्वेति** ॥ ४२ ॥

अङ्गजं पुत्रं, विष्वक्सेनांघ्रीतिविशेषणेन आलिंगनव्याजेन तत्स्प्रष्टुरपि पापपरिहारः स्यादिति ध्वनयति ॥ ४३ ॥

किमनेनालिङ्गनमात्रेण आनन्दातिरेक क्षण ज्ञापकेनेत्यतः तद्विशिनष्टि - **अथेति** । शान्तैः सुशीतलैः सुखलक्षणतयाऽवसितै र्वा ''अन्तोऽस्त्र्यवसिते मृत्यौ स्वभावे परमात्मनि'' (स्वरूपे निश्चये अन्तिके) (वैज.को. 6-5-5) इति यादवः । ''शर्मजोषं च शं सुखम्'' (हल.को. 1-123) इति हलायुधः । **अनेन राज्याभिषेक मदूरे सूचयति एत मर्थं च ध्वनयन् तं विशिनष्टि - आप्तेति** । आप्तः [9]प्राप्तः उद्दामः उत्कृष्टो मनोरथो वीरासनादिलक्षणो येन स तथा तम् ॥ ४४ ॥

भगवद्भक्तस्याऽपि रागद्वेषादिदोषो नाऽस्ति, किमुत हरेः इतीम मर्थं ध्वनयन् ध्रुवोऽपि पित्राद्युचितक्रिया माचरती त्याह - **अभिवन्द्येति** । मातरावित्युक्त्या पूर्वान्तःकरणकालुष्यं दूरीकृतमिति व्यनक्ति । शीर्ष्णा ननामे त्यनेन, पितु र्मातुर्गुरुत्वाधिक्यं सूचयति ।

---

1--1. A, B, T उपवनाभ्याशे उपवनसमीपे 2. A, T दीर्घोत्कण्ठ० 3. W omits अङ्गजं पुत्रं 4. A, B, T माध्यात्मिकं 5. A, B, T शीतैः 6. A, B. T omit शीतलैः 7. W omits अश्रुभिः 8-8. W omits 9. A omits प्राप्तः

तदुक्तम् - ''दशाचार्यसमो भ्राता शतभ्रातृसमः पिता। पितु र्दशशतं माता गौरवेणाऽतिरिच्यते'' इति। सुरुच्या मुख्यमातृत्वाभावेऽपि सत्स्वभावत्वेन भेदबुद्धिः न कृतेति द्योतनाय सज्जनाग्रणीरिति विशेषितम्॥ ४५॥

**सुरुचि स्तं समुत्थाप्य पादावनत मर्भकम्।**
**परिष्वज्याह जीवेति बाष्पगद्गदया गिरा॥ ४६॥**

**यस्य प्रसन्नो भगवान् गुणै मैंत्र्यादिभि र्हरिः।**
**तस्मै नमन्ति भूतानि निम्न माप इव स्वयम्॥ ४७॥**

**उत्तमश्च ध्रुवश्चोभा वन्योन्यं प्रेमविह्वलौ।**
**अङ्गसङ्गा दुत्पलका वस्रोघं मुहु रूहतुः॥ ४८॥**

**सुनीति [1]रस्य जननी प्राणेभ्योऽपि प्रियं सुतम्।**
**उपगु[2]ह्य जहावाधिं [3]तदङ्गस्पर्शनिवृता॥ ४९॥**

**पयः स्तानाभ्यां सुस्राव नेत्रजैः सलिलैः शिवैः।**
**[4]तदाभिषिच्यमाना[5]भ्यां [6]वीर वीरसुवो मुहुः॥ ५०॥**

**श्रीध०** सुरुच्याः प्रीतिः नासम्भावितेत्याह - **यस्येति**। [7-]मैत्र्यादिभिः आत्मगुणैः यस्य हरिः प्रसन्नः तस्मिन् सर्वभूता[-7]नि नमन्ति [8]प्रह्वीभवन्ति। आपो यथा स्वयमेव निम्नं देशं [9]अवतरन्ति॥ ४६, ४७॥

**उत्तमेति**। ऊहतुः दधतुः॥ ४८-४९॥

**पय इति**। हे [10]वीर! [11]वीरसुवो वीरजनन्याः ध्रुवमातुः अभिषिच्यमानाभ्यां [12]स्तनाभ्यां पयः तदा सुस्राव॥ ५०॥

**वीर०** सुरुचिः पादयो रवनत मर्भकं [13]तं ध्रुव मुत्थाप्य परिष्वज्यालिंग्य बाष्पैः गद्गदस्वरयुक्तया गिरा वाचा चिरं जीवेत्याह॥ ४६॥

सुरुच्याः प्रीतिः न सम्भावितेत्या[14]त्राह - यस्येति। मैत्र्यादिभि रात्मगुणैः यस्य हरिः प्रसन्नः [15]तस्मै सर्वभूतानि नमन्ति प्रह्वीभवन्ति। आपो यथा स्वयमेव निम्नं देशं प्रति प्रवहन्ति॥ ४७॥

---

1. V ॰र्य॰ 2. A, B, G, I, J, M, Ma, T, V ॰गू॰ 3. M, Ma य॰ 4. V तथा॰ 5. M, Ma, Ms ॰या: 6. M, Ma, Ms वीरे 7--7. A, J, V, Va omit 8. A, J, V, Va अनुसरन्ति 9. B प्रतिप्रवहन्ति॥ ४६॥ 10. V adds विदुर 11. A, B, J, Va omit वीरजनन्याः 12. B, J, Va omit 13. A, B, T omit तं 14. A, B, T ॰त्याह 15. A, B, T तस्मिन्

उत्तमः ध्रुव श्चोभौ भ्रातरौ प्रेमविह्वलौ अंगसंगा दालिङ्गनादुत्पलकौ [1-]उदञ्चत्पुलकौ[-1] अस्रोघं आनन्दाश्रुकणसमूहं मुहुः पुनः पुनः ऊहतुः मुमुचतुः ॥ ४८ ॥

अस्य ध्रुवस्य जननी सुनीतिः [2]उपगुह्यालिङ्ग्य तस्य तनयस्याङ्गस्पर्शेन निर्वृता सुखिता आधिं मनःपीडां जहौ तत्याज ॥ ४९ ॥

हे वीर ! [3]वीरसुवः ध्रुवस्य जनन्याः सुनीत्याः शिवैः शान्तैर्नेत्रजैः सलिलैः अभिषिच्यमानाभ्यां स्तनाभ्यां पयः सुस्राव ॥ ५० ॥

**विज०** ध्रवप्रणामे सुरुच्या द्वेषं विहाय किमभ्यधायीति तत्राह - **सुरुचिरिति** । अर्भकमिति लुप्तोपमा अर्भकं प्रेङ्खच्छिशु मिवेत्यनेन स्नेहविशेषात् ज्ञानगुरुत्व [4]मविगणय्य समुत्थाप्येति ज्ञायते ॥ ४६ ॥

ध्रुवस्य मरण माकांक्षमाणा सुरुचिः कथं जीवेति [5]वाण्युदस्थापीति तत्राह - **यस्येति** । मैत्र्यादिभिः मैत्रीकरुणादिभिः नमन्ति प्रह्वीभवन्ति ॥ ४८ ॥

उत्तमस्य भूतेष्वेकत्वेन ध्रुवद्वेषाशङ्का दूरोत्सादितेति तयोः प्रणयोद्रेकनिमित्तक्रिया माह - **उत्तमश्चेति** । अस्रौघं बाष्पप्रवाहं "ओघः परम्परायां स्या ज्जलस्रोतसि सञ्चये" (वैज.को. 6-1-10) इति यादवः ॥ ४८ ॥

सूचीकटाहन्यायेन ध्रुवे सुरुच्यादि प्रणयक्रियां प्रोच्य अधुना सुनीतिविषय माह - **सुनीति** रस्येति ॥ ४९ ॥

अस्य जननीति [6]विशेषणं विशिनष्टि - **पय** इति । औरसपुत्रस्मरणादिना मातृस्तनयो- स्तन्यप्रस्रवणेन तज्जनकत्वानुमानं सुलभ मित्यर्थः । वीरं पुत्रं सुवतीति वीरसूः, तस्याः वीरे पुत्रे । "यशसं वीरवत्तमम्" इति श्रुतिः ॥ ५० ॥

**तां शशंसु र्जना [7]राज्ञीं दिष्ट्या ते पुत्र आर्तिहा ।**
**प्रतिलब्ध श्चिरं नष्टो रक्षिता मण्डलं भुवः ॥ ५१ ॥**

**अभ्यर्चित स्त्वया नूनं भगवान् प्रणतार्तिहा ।**
**यदनुध्यायिनो [8]धीरा मृत्युं जिग्युः सुदुर्जयम् ॥ ५२ ॥**

**[9]लाल्यमानं जनै रेवं ध्रुवं सभ्रातरं नृपः ।**
**आरोप्य [10]करिणीं हृष्टः स्तूयमानोऽविशत्पुरम् ॥ ५३ ॥**

1--1. W omits 2. W °गूह्या° 3. A, B, T add वीरस्य 4. B, M, Ma °गणय्य 5. A °यीति 6. A, B °षेण 7. W राजन् 8. W वीराः 9. W °नो 10. T, V °णं

**तत्र तत्रोपसंक्लृप्तै र्लसन्मकरतोरणैः ।**
**[1]सवृन्तैः कदलीस्तम्भैः पूगपोतैश्च तद्विधैः ॥ ५४ ॥**

**चूतपल्लववासः स्रङ्मुक्तादामविलम्बि[2]भिः ।**
**उपस्कृतं प्रतिद्वार मपां कुम्भैः स दीपकैः ॥ ५५ ॥**

**श्रीध० तामिति** । चिरं नष्टो दर्शन मप्राप्तः रक्षिता रक्षिष्यति ॥ ५१-५२ ॥

**लाल्यमान**मिति । एव मिति व्यवहितं पित्राद्युपलालनं परामृश्यते ॥ ५३ ॥

पुरं वर्णयति - **तत्र तत्र** इति चतुर्भिः । [3]सवृन्दैः फलमञ्जरीयुक्तैः पूगानां पोतैः बालवृक्षैः तद्विधैः [4]सवृन्दैरुपस्कृतं प्रतिद्वार मित्युत्तरेणान्वयः ॥ ५४ ॥

**चूतेति** । चूत[5]पल्लवाश्च वासांसि च स्रजश्च मुक्तादामानि च तेषां विशिष्टं लम्बन मस्ति येषु कुम्भेषु ॥ ५५ ॥

**वीर०** उत्तानपादं [6]जनाः प्रशशंसुः । प्रशंसा मेवाह - हे राजन् ! आर्तिहा दुःखापहर्ता पुत्रः चिरं नष्टो दर्शन मप्राप्तः इदानीं दिष्ट्या भाग्येन [7]ते त्वया प्रतिलब्धः प्राप्तः । अयं भुवो मण्डलं रक्षिता रक्षिष्यति ॥ ५१ ॥

प्रणतार्तिहा भक्तानां दुःखापहर्ता भगवान् त्वया नूनं जन्मान्तरेऽभ्यर्चितः, यस्य भगवतोऽनुध्यायिनो ध्यातारः सुदुर्जयं मृत्युं संसारं जिग्युः जितवन्तः ॥ ५२ ॥

एवं जनै र्लाल्यमा[8]नो राजा सभ्रातरं सोत्तमं ध्रुवं हृष्टः करिणं हस्तिन मारोप्य जनैः स्तूयमानः पुर मविशत् ॥ ५३ ॥

[9]अतः पुरं वर्णयति - **तत्र तत्रेति** चतुर्भिः । उप समीपे सम्यक् कल्पितैः मकरतोरणैः [10]सवृन्तैः फलमञ्जरीयुक्तैः कदलीस्तम्भैः तद्विधैः [11]सवृन्तैः पूगानां पोतै र्बालवृक्षैः ॥ ५४ ॥

चूतपल्लवाश्च वासांसि च स्रजश्च मुक्तादामानि च तेषां विशिष्टं लम्बन मस्ति येषु [12]कुम्भेषु तैः सदीपकैः अपां कुम्भैः प्रतिद्वार मुपस्कृतम् अलङ्कृतम् ॥ ५५ ॥

---

1. A, B, G, I, J, T सवृन्दैः; M, Ma, Ms, V संवृत्तैः 2. W °म्बनैः 3. V संवृत्तैः 4. V संवृतै° 5. V प्रवालश्च 6. T प्रजाः
7. A, B, T omit ते 8. A, B, T °नं 9. W omits अतः 10. A, B, T °न्दैः 11. A, B, T °न्दैः 12. A, B, T omit कुम्भेषु

**विज०** सुनीति कथाऽपि श्रोतॄणां पापप्रणाशिन्यपि भवतीति भावेन तां विशिनष्टि - **तां शशंसु**रिति। ''दिष्ट्या स्यान्मङ्गला दिषु'' (वैज.को. 8-7-21) इत्यभिधानात् दिष्ट्या पुण्येन॥ ५१।

पुण्यमपि विशिंषन्तीत्याह[1] - **अभ्यर्चित** इति। यदि प्रणतार्तिहरो हरिः त्वया नाभ्यर्चितः तर्हि चिरं नष्टः पुत्रो न प्रतिलब्धः स्यान्न तथा। तस्मा दभ्यर्चित इति तर्कः। किं विशिष्टो भगवानिति तत्राह - यदनुध्यायिन इति। अनेन तर्कस्याप्रतिपक्षतां दर्शयति॥ ५२॥

ध्रुवस्य जनलालनप्रक्रियां[2] संक्षिप्नु रिव मैत्रेयो राज्ञः पुरप्रवेश माह - **लाल्यमान**मिति। ''कलभश्चैव कन्यानां करिणी बालमङ्गले[3]'' (राजनीतौ) इति वचनात् करिणी मित्युक्तम्॥ ५३॥

संवृतैः[4] पुष्पबन्धनसहितैः तद्विधैः पुष्पबन्धनसहितैः॥ ५४॥

विलम्बीनि चूतपल्लवादीनि येषु ते तथा तैः प्रतिद्वार मुपस्कृतम् अलङ्कृतम्॥ ५५॥

**प्राकारै र्गोपुराट्टालैः[5] शातकुम्भपरिच्छदैः[6]।**
**सर्वतोऽलङ्कृतं श्रीमद्विमान शिखरद्युभिः[7]॥ ५६॥**

**मृष्टचत्वररथ्याट्टमार्गं[8] चन्दनचर्चितम्।**
**लाजाक्षतैः पुष्पफलै स्तण्डुलै[9] र्वलिभिर्युतम्॥ ५७॥**

**ध्रुवाय पथि दृष्टाय तत्र तत्र पुरस्त्रियः।**
**सिद्धार्थाक्षत-दध्यम्बु-दूर्वापुष्पफलानि च॥ ५८॥**

**उपजह्रुः प्रयुञ्जाना वात्सल्या दाशिषः सतीः।**
**शृण्वं स्तद्वल्गुगीतानि[10] प्राविशद्भवनं पितुः॥ ५९॥**

**महामणिव्रातमये स तस्मिन् भवनोत्तमे[11]।**
**लालितो[12] नितरां पित्रा न्यवसद्दिवि देववत्॥ ६०॥**

---

1. Ma विशिष्य शंसन्ती° 2. A, B पा° 3. Ma राजमण्डने 4. A, B सवृन्दैः 5. A, B, G, I, J, T, V °गारैः 6. W कौ° 7. W °ति
8. M, Ma, Ms °दि 9. M, Ma, °न्दु° 10. M, Ma °स्तु वल्गु 11. M, Ma, Ms कशिपूत्तमे 12. V °तोऽति°

**श्रीध० प्राकारै**रिति। गोपुरैः [1]बहिर्द्वारैः अगारैः [2]गृहैश्च शातकुम्भाः परिच्छदाः परिकरा येषु विमानानामि[3]व शिख[4]रै र्द्युतिः येषां तैः॥ ५६॥

**मृष्टेति**। चत्वर मङ्गणम्। रथ्या [5]महामार्गः। अट्टः [6]उच्चगृहस्योपरि निर्मिता भूमिका। मार्ग अवान्तरः। मृष्टाः सम्मार्जिता श्चत्वरादयो यस्मिन्॥ ५७॥

**ध्रुवायेति**। सिद्धार्थः श्वेतसर्षपः। अक्षता यवाः॥ ५८॥

**उपजह्रु**रिति। उपजह्रुः व्यकिरन्। सतीः सत्यः॥ ५९-६०॥

**वीर०** गोपुरै रट्टालैश्च कथम्भूतैः ? शातकौम्भाः स्वर्णमयाः परिच्छदाः परिकरा येषु तैः सर्वतः परितः अलंकृतं श्रीमत् सर्वसमृद्धिमत् विमानानामिव शिखरैर्द्युतिः यस्मिन्॥ ५६॥

रथ्या राजमार्गः अट्टः उच्चस्य प्राकारस्योपरि निर्मिता भूमिका, मार्गोऽवान्तरः, मृष्टाः सम्मार्जिता श्चत्वरादयो यस्मिन् चन्दनचर्चितं चन्दनाम्बुभिः [7]संसिक्तम्॥ ५७॥

सिद्धार्थाः श्वेतसर्षपाः उपजह्रुः व्यकिरन्। सतीः सत्यः विभक्तिव्यत्यय आर्षः। तासां सतीनां वल्गूनि श्राव्याणि गीतानि शृण्वन् पितु र्भवनं गृहं प्राविशत्॥ ५८-५९॥

अनर्घमणिसमूहमये भवनश्रेष्ठे पित्रा नितरां लालितः दिवि देववत् न्यवसत्॥ ६०॥

**विज०** शातकुम्भपरिच्छदैः सुवर्णालङ्कारैः श्रीमतां विमानानां शिखराणां द्युभिः द्युतिभिः अलङ्कृतम्, अनेन देवादीनां विमानानां आगमनं सूचयति॥ ५६॥

[8]चत्वरं चतुष्पथः, रथ्या रथमार्गः, आदिशब्देन तिर्यगाद्यवान्तरमार्गो गृह्यते॥ ५७॥

[9]सिद्धार्थाः [10]सितसर्षपाः॥ ५८॥

तासां पुरस्त्रीणां वल्गूनि चारूणि गीतानि॥ ५९॥

---

1. B, J, V, Va omit बहिर्द्वारैः 2. B, J, V, Va omits गृहैश्च 3. V omits इव 4. A °रैर्द्यु° 5. V राजमार्गः 6. B, J, Va उच्चस्य; V उच्चस्य प्राकारस्य उपरि वि° 7. W omits सं° 8. M, Ma °रः 9. A, B °र्थः 10. A, B °पः

कशिपूत्तमे मञ्चोत्तमे भोजनाच्छादनादिना प्रेष्ठे वा ॥ ६० ॥

पयः फेननिभाः शय्या दान्ता रुक्मपरिच्छदाः ।
आसनानि महार्हाणि यत्र रौक्मा[1] उपस्कराः ॥ ६१ ॥

यत्र स्फटिककुड्येषु महामारकतेषु[2] च ।
मणिप्रदीपा आभान्ति ललनारत्नसंयुताः ॥ ६२ ॥

उद्यानानि च रम्याणि विचित्रै रमरद्रुमैः ।
कूजद्विहङ्गमिथुनै र्गायन्मत्तमधुव्रतैः ॥ ६३ ॥

वाप्यो वैदूर्य[3]सोपानाः पद्मोत्पलकुमुद्वतीः ।
हंसकारण्डवकुलै र्जुष्टा[4] श्चक्राह्वसारसैः ॥ ६४ ॥

*उत्तानपादो राजर्षिः प्रभावं तनयस्य तम् ।
श्रुत्वा दृष्ट्वाद्भुततमं प्रपेदे विस्मयं परम् ॥ ६५ ॥

वीक्ष्योढवयसं पुत्रं[5] प्रकृतीनां च सम्मतम् ॥
अनुरक्तप्रजं राजा ध्रुवं चक्रे भुवः पतिम् ॥ ६६ ॥

आत्मानं च प्रवयस माकलय्य विशाम्पतिः ।
वनं विरक्तः प्रातिष्ठद्विमृशन्नात्मनो गतिम् ॥ ६७ ॥

इति श्रीमद्भागवते महापुराणेअष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
चतुर्थस्कन्धे नवमोऽध्यायः ॥ ९ ॥

---

1. T, W °प्या 2. Ms, T, V, W °म° 3. J, Ms, V, W °दूर्य 4. W °र्घुष्टा°

* This verse is not found in W and the same was not commented either by Sridhara or Veeraraghava. 5. A, B, G, I, J, T तं च

**श्रीध० यत्रेति** । यत्र भवनोत्तमे ॥ ६१-६३ ॥

**वाप्य** इति । कुमुद्वतीः कुमुत् कुमुदम् । पद्मादिमत्यो वाप्यः ॥ ६४,६५ ॥

**वीक्ष्येति** । ऊढवयसं प्राप्तयौवनम् । अनुरक्ताः प्रजा यस्मिन् तम् ॥ ६६ ॥

**आत्मान** मिति । [1-]प्रवयसं वृद्धम्[-1] ॥ ६७ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्री श्रीधरस्वामिविरचितायां भावार्थदीपिकायां

व्याख्यायां नवमोऽध्यायः ॥ ९ ॥

**वीर०** भवनं वर्णयति । यत्र भवने शय्याः दान्ताः[2] क्षीरफेनवत्[3]मृदुलाः शुभ्राश्च रुक्मपरिच्छदाः सुवर्णमयाः परिकराः अनर्घाणि आसनानि रौप्या राजता उपस्कराश्च सन्ति ॥ ६१ ॥

यत्र भवने स्फटिकमयकुड्येषु इन्द्रनीलमणिखचितेषु प्रतिफलिता ललनाः स्त्रियः [4]एव रत्नानि तैः संयुताः । मणिप्रदीपाः उपमितसमासः, [5]आभान्ति ॥ ६२ ॥

[6]रम्याण्युद्यानानि च यत्र सन्ती त्यनुषङ्गः । तानि विशिनष्टि विचित्रै रमरद्रुमैः सन्तानपारिजातादिभिः द्रुमैः, कथम्भूतैः ? कूजति विहङ्गानां मिथुनानि येषु गायन्तो मत्ताः मधुपान [7]मत्ता मधुव्रता भृङ्गा येषु तै र्द्रुमैः युक्तानीति शेषः ॥ ६३ ॥

वाप्यश्च यत्र सन्तीत्यन्वयः । वापीं विशिनष्टि । [8]वैदूर्य मणिमयानि सोपानानि यासु । पद्मानि उत्पलानि कुमुदानि च आसु सन्ति ताः विभक्तिव्यत्यय आर्षः, हंसानां कारण्डवानां च कुलैः सङ्घैः चक्रवाकैः सारसैश्च घुष्टाः शब्दिता *विस्मय माश्चर्यं प्रपेदे ॥ ६४-६५ ॥

अथ कतिपयवर्षानन्तर मूढवयसं प्राप्तयौवनं प्रकृतीनां मन्त्रिणां सम्मत मनुरक्ताः अनुरागयुक्ताः प्रजा यस्मिन् तं पुत्रं ध्रुवं वीक्ष्य भुवः पतिं चक्रे राज्याभिषिक्त मकरोत् ॥ ६६ ॥

---

1--1. V omits　2. W adds धौताः　3. A, B, T °वन्निर्मलाः　4. A, B, T omit एव　5. A, B. T omit आभान्ति ॥ ६३ ॥
6. A, B. T add अथ अति°　7. A, B, T omit मत्ताः　8. A, B, T °डू°　* विस्मयम् आश्चर्यं प्रपेदे This line is not found in W end. The verse to be the above lines pertained to sloka उत्तानपादो etc is also not found in W.

तत आत्मानं प्रवयसं वृद्ध माकलय्य आलोच्य विशाम्पतिः राजा आत्मनः स्वस्व गतिं मुक्त्युपायं विमृशन् अत एव विरक्तः वनं प्रातिष्ठत् प्रविशत् ॥ ६७ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां नवमोऽध्यायः ॥ ९ ॥

**विज०** कशिपूत्तम इत्युक्तं प्रपञ्चयति - पयःफेन निभा इति । दान्ता दन्तनिर्मिताः रुक्मपरिच्छदाः सुवर्णपरिच्छदाः उपर्याच्छादनपटा यासां ता स्तथा, उपस्कराः पात्राणि रौक्माणि सुवर्णनिर्मितानि ॥ ६२ ॥

"रत्नं श्रेष्ठे च निर्दिष्टम्" (मणावपि) (वैज.को. 6-3-26) इति हलायुधः । ललनारत्नैः [1] स्त्रीरत्नैः संयुताः शय्यादय आभान्ति तस्मिन्निति ॥ ६२-६३-६४ ॥

ध्रुवप्रभावो देवादीना माश्चर्यबुद्धिजनकः [2] किन्त्वितरेषामिति भावेन उत्तानपादान्तःकरण प्रवृत्तिविशेषं वक्ति - उत्तानपाद इति ॥ ६५ ॥

विस्मयफल माह - **वीक्ष्येति** । ऊढवयसमित्यनेन राज्यपालनशक्तिं व्यनक्ति ॥ ६६ ॥

तत्र स्वयं किमकारीति तत्राह - **आत्मानं** चेति । आकलय्य ज्ञात्वा आत्मनः स्वस्य हरेश्च गतिं स्थितिं विमृशन् विचारयन्निति ॥ ६७ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीविजयध्वजतीर्थ कृतायां पदरत्नावल्यां

टीकायां नवमोध्यायः ॥ ९ ॥



1. A, B omit स्त्रीरत्नैः   2. M, Ma किम्बि०

# दशमोऽध्यायः

## मैत्रेय उवाच

प्रजापतेर्दुहितरं[1] शिंशुमारस्य वै ध्रुवः।
उपयेमे भ्रमिं नाम तत्सुतौ कल्पवत्सरौ॥ १॥

इलायामपि[2] भार्यायां वायोः पुत्र्यां महाबलः।
पुत्रमुत्कलनामानं योषिद्रत्नमजीजनत्[3]॥ २॥

उत्तमस्त्वकृतोद्वाहो मृगयायां बलीयसा[4]।
हतः पुण्यजनेनाद्रौ[5] तन्माताऽस्य[6] गतिं गता॥ ३॥

ध्रुवो भ्रातृवधं श्रुत्वा कोपामर्षशुचार्पितः।
जैत्रं स्यन्दनमास्थाय गतः पुण्यजनालयम्॥ ४॥

गत्वोदीचीं दिशं राजा रुद्रानुचरसेविताम्।
ददर्श हिमवद्द्रोण्यां पुरीं गुह्यकसङ्कुलाम्॥ ५॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

दशमे भ्रातृहन्तॄणां यक्षाणामकरोद्वधम्। एक एवालकां गत्वेत्यस्य विक्रम उच्यते[7]॥

**इलायामिति**। योषितां रत्नमिवातिमनोहरम्। कन्यारत्नं च अजीजनदिति[8] वा॥ १, २॥

**उत्तमस्त्विति**। यक्षेणाद्रौ हिमवति हतः, आजाविति पाठे युद्धे। अस्य गतिं गता मृतेत्यर्थः[9][10]॥ ३॥

**ध्रुव इति**। कोपामर्षशुचां द्वन्द्वैक्यम्। तेनार्पितो व्याप्तः। जैत्रं जयहेतुम्। पुण्यजनालयमलकाम्॥ ४॥

**गत्वेति**। रुद्रानुचरा भूतादयः॥ ५॥

---

1. A, B, G, I, J, T शिशु° 2. W इडा° 3. M, Ma, Ms योगेश्वर° 4. W °सः 5. W जनादद्रौ 6. M, Ma, Ms °ता तद्गतिं 7. V ईर्यते
8. B, J, V, Va omit अजीजनत् 9. V adds इत्यर्थः 10. V मृतेति भावः।

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथ दशमेन ध्रुवः कृतोद्वाहः उत्पादितपुत्रो जितभ्रातृहन्तृपुण्यजन आसेत्याह मुनिः **प्रजापतेरिति**। शिंशुमाराख्यस्य[1] प्रजापतेः दुहितरं भ्रमिमुपयेमे उदवोढ। तयोः ध्रुवभ्रम्योः सुतौ कल्पवत्सराख्यौ॥ १॥

पुनरूढायां वायोर्दुहितरि इडाख्यायां भार्यायां महाबलो ध्रुवः उत्कलनामानं पुत्रं कथम्भूतम्? योषितां रत्नमिवातिमनोहरं कन्यारत्नमिति वा पुर्याम्[2] अजीजनत् उत्पादयामास॥ २॥

उत्तमस्त्वकृतोद्वाह एव कदाचित् मृगयायां बलीयसः[3] पुण्यजनात्[4] यक्षात्[5] अद्रौ हिमवति हतः। तस्योत्तमस्य माता सुरुचिः तस्य पुत्रस्य गतिं गता। मरणं प्राप्तेत्यर्थः॥ ३॥

ध्रुवः भ्रातुरुत्तमस्य वधमाकर्ण्य कोपामर्षशुगिति समाहारद्वन्द्वः, तेन। अमर्षः अक्षमा अर्पितः व्याप्तः जैत्रं जयशीलं स्यन्दनं रथमास्थायाऽधिरुह्य पुण्यजनालयम् अलकां पुरीं गतः गतवान्॥ ४॥

रुद्रानुचरा भूतादयस्तैः सेवितां गुह्यकैर्यक्षैः सङ्कुलां व्याप्तां, पुरीमलकां, हिमवतो द्रोण्यां ददर्श॥ ५॥

### श्रीविजयध्वजतीर्थकृता पदरत्नावली

**विज०** अत्र न केवलं मोक्ष एव भगवत्प्रसादायत्तः किन्तु बाह्याभ्यन्तरशत्रुजयोऽपीत्यतस्तन्माहात्म्यं वर्ण्यते। तत्रादौ ध्रुवविवाहादिप्रकारः कथ्यते - **प्रजापते**रित्यादिना। तत्सुतौ तस्याः भ्रमेः सुतौ कल्पो वत्सरश्च॥ १॥

योगेश्वरमणिमाद्यष्टाङ्गयोगानामीश्वरम्। अनेन राज्यानिच्छत्वात् पश्चादुक्तिरिति ज्ञायते॥ २॥

राजपुत्र उत्तमः किमभूत्? ध्रुवभ्रातृत्वेन तत्कथाया अपि श्रवणार्हत्वात् सापि वक्तव्येति तत्राह - **उत्तमस्त्विति**। तन्माता तस्योत्तमस्य माता सुरुचिः तस्योत्तमस्य गतिं मरणलक्षणां[6] गतिं गता॥ ३॥

अत्र प्राकृतस्वभावेन ध्रुवेण किमकारीति तत्राह - **ध्रुव** इति। कोपामर्षशुचार्पितः भागुरिन्यायेनास्य शब्दस्य टाबन्तत्वं साधु। पुण्यजनालयमलकां पुरीम्॥ ४॥

पुररक्षकानाह - **रुद्रेति**। हिमवतो गिरेर्द्रोण्यां निम्नतटे गुह्यका यक्षाः तैस्सङ्कुलां निबिडां स्तिमिताम्॥ ५॥

---

1. A. B, T शिशु॰ 2. A, B, T पुत्रम् 3. A, B, T ॰सा 4. A, B, T जनेन 5. A, B, T यक्षेण 6. B, M, Ma ॰णत्वल॰

दध्मौ शङ्खं बृहद्बाहुः[1] खं दिशश्चानुनादयन्।
येनोद्विग्नदृशः क्षत्तरुपदेव्योऽत्रसन्भृशम्॥ ६॥

ततो निष्क्रम्य बलिन उपदेवमहाभटाः।
असहन्तस्तन्निनादमभिपेतुरुदायुधाः[2]॥ ७॥

स तानापततो वीर उग्रधन्वा महारथः।
एकैकं युगपत्सर्वानहन् बाणैस्त्रिभिस्त्रिभिः॥ ८॥

ते वै ललाटलग्नैस्तैरिषुभिः[3] सर्व एव हि।
मत्वा निरस्तमात्मानमाशंसन्[4] कर्म तस्य तत्॥ ९॥

तेऽपि चामुममृष्यन्तः पादस्पर्शमिवोरगाः।
शरैरविध्यन् युगपद् द्विगुणं प्रचिकीर्षवः॥ १०॥

**श्रीध० दध्मौ** इति। दध्मौ वादितवान्[5]। येन शङ्खवादनेन[6] हे क्षत्तः! उपदेव्यो यक्षस्त्रियः॥ ६, ७॥

**स इति**। [7-]एकैकं त्रिभिस्त्रिभिः[-7] इत्येवं सर्वान् त्रयोदशायुतानि यक्षान्युगपदहन् जघान॥ ८॥

**त इति**। निरस्तं पराजितम्। तस्य ध्रुवस्य तत्कर्म आशंसन् तुष्टुवुः॥ ९॥

**तेऽपि** इति। तेऽपि तत्कर्मासहमाना अमुमविध्यन् [8-]ध्रुवकृतविक्रमात्[-8] द्विगुणं यथा भवति एवं[9] षड्भिःषड्भिः[10] इषुभिः[11] प्रतिकर्तुमिच्छन्तः॥ १०॥

**वीर०** बृहद्बाहुः ध्रुवः[12] खमन्तरिक्षं दिशः दश दिशश्चानुनादयन् प्रतिध्वनयन् शङ्खं दध्मौ नादितवान्। येन शङ्खनिनादेन [13-]उद्विग्नाः चलिताः दृशः[-13] यासां ताः, उपदेव्यो यक्षस्त्रियः। हे क्षत्तः! भृशं नितरामत्रसन् भीतवत्यः॥ ६॥

1. M, Ma महाबाहुः ; Ms महारावं 2. W °न्तो निनादं त° 3. W °म° 4. Ms °नं शशंसुः ; W °नमशंसन् 5. V ना° 6. V नादेन 7--7. V omits 8--8. B, J, V, Va omit 9. V तथा 10. V omits षड्भिः 11. B, J, V, Va omit इषुभिः 12. A, B, T omit ध्रुवः 13--13. A, B, T उद्विग्ना चलिता दृक्

उपदेवाश्च ते महाभटास्ते बलिनः[1] बलिष्ठाः[2] ततः अलकाया निष्क्रम्य तस्य ध्रुवस्य शङ्खनिनादमसहन्तः उदायुधाः उद्यतास्त्रशस्त्राः अभितः पेतुः उपर्यागतवन्तः ॥ ७ ॥

उग्रं भीमं धनुर्यस्य सः, महारथो ध्रुवः आपततः सर्वान् वीरान् युगपदेव प्रत्येकं त्रिभिस्त्रिभिर्बाणैः अहन्, प्रत्येकं त्रिभिस्त्रिभिः बाणैः सर्वान् त्रयोदशायुतानि युगपत् निजघान ॥ ८ ॥

ते वै उपदेवाः सर्वे ललाटमग्रैस्तैस्त्रिभिः[3] त्रिभिः[4] इषुभिरात्मानं निरस्तं पराजितं मत्वा तस्य ध्रुवस्य[5] तत्कर्म आशंसन्[6] प्रशशंसुः ॥ ९ ॥

तेऽपि च यक्षा उरगा सर्पाः पादस्पर्शं पादासक्तिमिव अमुं ध्रुवममृष्यन्तः असहमानाः द्विगुणं यथा भवति तथा षड्भिः[7] प्रतिकर्तुमिच्छन्तः शरैः युगपदेव[8] अविध्यन् निजघ्नुः ॥ १० ॥

**विज०** उपदेव्यो यक्षस्त्रियः ॥ ६ ॥

उदतिष्ठन्निति वा पाठः ॥ ७ ॥

अहन् हतवान् ॥ ८ ॥

"पत्री रोप इषुर्द्वयोः" (अम.को. 2-8-87) इत्यमरः । ध्रुववीरकर्मस्तवनेन गुह्यकानां रणवीरत्वमसूचि ॥ ९ ॥

तत्कर्म प्रशस्य गुह्यकैः किं पृष्ठतः[9] प्रसुप्तमिति तत्राह - **तेऽपि चेति** । युगपत् सम्भूय ध्रुवकृतविक्रमात् द्विगुणं प्रकर्षेण कर्तुमिच्छन्त एव न तु कर्तुं समर्थाः ॥ १० ॥

**ततः परिघनिस्त्रिंशैः प्रासशूलपरश्वधैः ।**
**शक्त्यृष्टिभिर्भुशुण्डीभिश्चित्रवाजैः[10] शरैरपि ॥ ११ ॥**

**अभ्यवर्षन् प्रकुपिताः सरथं[11] सहसारथिम् ।**
**इच्छन्तस्तत्प्रतीकर्तुमयुतानां[12] त्रयोदश ॥ १२ ॥**

**औत्तानपादिः स तदा शस्त्रवर्षेण[13] भूरिणा[14] ।**
**नोपादृश्यत[15] तच्छन्न आसारेण यथा गिरिः ॥ १३ ॥**

---

1. W omits बलिनः 2. A, B. T omit बलिष्ठाः 3. A, B, T ल° 4. A, B, T omit त्रिभिः 5. A, B, T omit ध्रुवस्य 6. A, B, T आ° 7. A, B, T omit षड्भिः 8. W omits एव 9. Ma वृत्तः 10. M भृशृण्डी; Ms, V भुसुण्ठी; T °भर्शुण्डी° W भुसुण्ठी° 11. V सहयं 12. A, B, G, J, T °नि 13. Ms शर 14. M, Ma भूयसा 15. I न एवादृश्यताच्छन्न; A, B, G, J, T न उपादृश्यत च्छन्न; M, Ma नोपादृश्यत सञ्छन्न; V न चैवादृश्यत च्छन्न

**हाहाकारस्तदैवासीत्सिद्धानां दिवि पश्यताम् ।**
**[1]हतोऽयं मानवः सूर्यो मग्नः पुण्यजनार्णवे ॥ १४ ॥**

**नदत्सु यातुधानेषु जयकाशिष्वथो मृधे ।**
**उदतिष्ठद्रथ[2]स्तस्य नीहारादिव भास्करः ॥ १५ ॥**

**श्रीध० तत इति ।** चित्रवाजैः विचित्रपक्षैः ॥ ११, १२ ॥

**औत्तानपादिरिति ।** [3]आसारेण धारासम्पातेन छन्नो गिरिरिव नैवादृश्यत ॥ १३ ॥

**हाहाकार** इति । सूर्यतुल्यः ॥ १४ ॥

**नदत्स्विति ।** यातुधानेषु [4]राक्षसेषु जयकाशिषु [5]जितं जितमिति जयप्रकाशकेषु सत्सु ॥ १५ ॥

**वीर०** ततः परिघादिभिः शस्त्रविशेषैः अविध्यन् तथा चित्रवाजैश्चित्रपक्षैः शरैरपि नितरां कुपिताः अयुतानां त्रयोदश यक्षाः तत्प्रतीकर्तुं तत्प्रतिक्रियां कर्तुमिच्छन्तः सरथं ससारथिञ्चाभ्यवर्षन् ॥ ११, १२ ॥

तथा स च औत्तानपादिः ध्रुवः भूरिणा शस्त्रवर्षेण छन्न आवृतः आसारेण धारावर्षेण यथा गिरिः पर्वत इव नोपादृश्यत [6-]नैवादृश्यत[-6] ॥ १३ ॥

तदैव दिवि पश्यतां सिद्धानां महान् हाहाकार आसीत् । [7]मानवः मनोर्गोत्रापत्यं पुमानयं ध्रुव एव सूर्यः, पुण्यजना एव अर्णवः [8]समुद्रः तस्मिन् मग्नः, [9]हन्त हा कष्टमित्येवं[10]रूपो हाहाकार आसीत् ॥ १४ ॥

ततो मृधे युद्धे यातुधानेषु राक्षसेषु जयकाशिषु जितं जितं मयेति जयप्रकाशकेषु सत्सु जयशालिष्विति पाठे जयशीलेषु सत्सु नीहाराद्भास्करः सूर्यः इव तस्मात् शरवर्षात् रथात् ल्यब्लोपे पञ्चमी, रथे आस्थाय उदतिष्ठत् उत्थितः ॥ १५ ॥

**विज०** चित्रा नानावर्णा वाजाः पक्षा येषां ते चित्रवाजास्तैः ॥ ११ ॥

अयुतानां त्रयोदश लक्षादुपरि त्रिंशत्सहस्राणि प्राधान्यविवक्षयैतत् ॥ १२ ॥

---

1. Ms, W हन्ताऽयं 2. M, Ma, Ms °थस्तस्मात्; W °थात्तस्मात् 3. A, B, J, Va omit आसारेण 4. W omis राक्षसेषु 5. Va omits जितं 6--6. W omits 7. A, B, T omit मानवः 8. A, T omit समुद्रः 9. A हतः 10. B, W °पहा°

तदा ध्रुवः किमभूदत्राह - **औत्तानपादिरिति**। आसारेण वेगवता वर्षेण सन्ततनिबिडवर्षधारयेत्यर्थः ॥ १३ ॥

मानवः मनोः पौत्रः सूर्यः ज्ञानप्रियः सूर्य इव सूर्यो वा ॥ १४ ॥

नन्वत्र मग्नस्य श्वासनिरोधेन मरणम्। जलं संस्थभ्यावस्थानमधोगमनमन्यत उन्मज्जनमिति पक्षेष्वेकः सम्भवति। अन्यत्र उन्मज्जने पलायमानापरपर्याये जैत्रं स्यन्दनमित्येतदनुपपन्नं स्यात्। अतः किमभूदिति तत्राह - **नदत्स्विति**। अथ मज्जनानन्तरमेव ध्रुवरथः तस्मात् युद्धात् उदतिष्ठदित्यन्वयः । जलमग्नस्य सूर्यस्यान्यत उन्मज्जनं भवतीति मत्वा यत्र निमज्जनं [1-]तत्र उन्मज्जनं[-1] तद्दृष्टान्तत्वेन नीहारादिति ॥ १५ ॥

**धनुर्वि[2]स्फूर्जय[3]न्नुग्रं द्विषतां खेदमुद्वहन्।**

**अस्त्रौघं व्यधमद्बाणैर्घनानीकमिवानिलः ॥ १६ ॥**

**तस्य ते चापनिर्मुक्ता भित्त्वा वर्माणि रक्षसाम्।**

**कायानाविविशुस्तिग्मा गिरीनशनयो यथा ॥ १७ ॥**

**भल्लैः सञ्छिद्यमानानां शिरोभिश्चारुकुण्डलैः।**

**ऊरुभिर्हेमतालाभैर्दोर्भिर्वलयवल्गुभिः ॥ १८ ॥**

**हारकेयूर[4]मुकुटैरुष्णीषैश्च महाधनैः।**

**आस्तृतास्ता रणभुवो रेजुर्वीरमनोहराः ॥ १९ ॥**

**हतावशिष्टा इतरे रणाजिराद् रक्षोगणाः क्षत्रियवर्यसायकैः।**

**प्रायो वि[5]वृक्णावयवा विदुद्रुवुर्मृगेन्द्रविक्रीडितयूथपा इव ॥ २० ॥**

**श्रीध० धनुरिति**। व्यधमत् सञ्चूर्णयामास ॥ १६ ॥

**तस्येति**। वर्माणि कवचानि ॥ १७ ॥

**भल्लैरिति**। शिरःप्रमुखैः [6]अङ्गैः आस्तृताः प्रकीर्णा [7]रणभुवो रेजुरिति द्वयोरन्वयः ॥ १८, १९ ॥

1--1. A, B, omit 2. W °ष्फू° 3. A, G, I, J, T न्दिव्यं 4. Ms, V, W म° 5. M, Ma निकृत्ता° 6. A, B, J, Va omit अङ्गैः 7. B, J, V, Va omit रणभुवो

**हतेति**। प्रायो बाहुल्येन विवृक्णाः सञ्छिन्ना अवयवा येषां ते॥ २०॥

**वीर०** तत उग्रं धनुः विष्फूर्जयन्[1] ज्याघोषं[2] कुर्वन् द्विषतां पुण्यजनानां खेदमुद्वहन् प्रापयन् बाणैः अस्त्रौघं द्विषत्प्रयुक्तमस्त्रसमूहम् अनिलो वायुरिव मेघपङ्क्तिं व्यधमत् चूर्णयामास॥ १६॥

तस्य ध्रुवस्य चापात् धनुषो विनिर्मुक्ताः तिग्मास्तीक्ष्णाः बाणाः गिरीन् पर्वतान् अशनयो यथा [3-]अशनय इव[-3] रक्षसां वर्माणि कवचानि छित्वा कायान् देहान् आसमन्ताद्विविशुः॥ १७॥

भल्लैः बाणैः सञ्छिद्यमानानां रक्षसां चारूणि सुन्दराणि कुण्डलानि येषु तैः, शिरोभिः स्वर्णमयतालवृक्षसदृशैः ऊरुभिः वलयैः सुन्दरैर्बाहुभिः महाधनैः अनर्घैः हारादिभिश्चाऽऽस्तृताः छन्नाः ताः रणभूमयः वीराणां मनोहराः विरेजुः बभुः॥ १८, १९॥

हतेभ्योऽवशिष्टा इतरे रक्षोगणाः क्षत्रियवर्यस्य ध्रुवस्य सायकैः बाणैः प्रायः बाहुल्येन विवृक्णाः सञ्छिन्नाः अवयवा येषां ते, रणाजिरात् रणभूमेः सिंहेन विक्रीडितगजा इव विदुद्रुवुः पलायितवन्तः॥ २०॥

**विज०** द्विषतामस्त्रौघं व्यधमत् नष्टमकरोत्॥ १६॥

एकत्र प्रयोगेण यक्षाणां गात्रधमनं तेषां चर्मभेदनं शरीरच्छेदनं चेति कार्यत्रयमभूदित्याह - **तस्य त** इति। ''पविरशनिः शतधारं वज्रं कुलिशं (च भवति) दम्भोलिः'' (हल.को. 1-56) इति हलायुधः। ''दम्भोलिरशनिर्द्वयोः'' (अम.को. 1-47) इत्यमरः॥ १७॥

वीररसमाह - **भल्लैरिति**। भल्लैरर्धचन्द्राकारैः वराहशरैर्वाहिमतालाभैः सुवर्णतालसमानैः ऊरुभिः उत्सङ्गैः॥ १८, १९॥

क्वापि सर्वनाशो न दृष्टश्रुतपूर्व इति किं वदन्तीमनुसरन्नाह - **हतेति**। मृगेन्द्रेण सिंहेन विगतक्रीडोपक्रमा यूथपा गजाः॥ २०॥

**अपश्यमानः स तदाऽऽततायिनं महामृधे कञ्चन मानवोत्तमः।**
**पुरीं दिदृक्षन्नपि नाविशद् द्विषां न मायिनां वेद चिकीर्षितं जनः॥ २१॥**

**इति ब्रुवंश्चित्ररथः स्वासारथिं यत्तः[4] परेषां प्रतियोगशङ्कितः[5]।**
**शुश्राव शब्दं जलधेरिवेरितं[6] नभस्वतो[7] दिक्षु रजोऽन्वदृश्यत॥ २२॥**

---

1. A, B, T ०स्फू० 2. A, B, T घातं 3--3. A, B, T omit 4. M, Ma यतः 5. W शङ्कया 6. W ०दै० 7. M, Ma, Ms ०ता

क्षणेन[1] च्छुरितं व्योम[2] घनानीकेन सर्वतः ।
विस्फुरत्[3]तटिता[4] दिक्षु त्रासयत्[5]स्तनयित्नुना ॥ २३ ॥

ववृषूरुधिरौघासृक्[6]पूयविण्मूत्रमेदसः ।
निपेतुर्गगनादस्य कबन्धान्यग्रतोऽनघ ॥ २४ ॥

ततः खेऽदृश्यत गिरिः[7] निपेतुः सर्वतो दिशम्[8] ।
गदापरिघनिस्त्रिंश[9]मुसला[10]स्साश्मवर्षिणः ॥ २५ ॥

**श्रीध०** **अपश्यमान** इति । आततायिनं शस्त्रपाणिम् ॥ २१ ॥

**इतीति** । इति ब्रुवन् इत्यत्रापि न मायिनामित्यादेरनुषङ्गः । चित्ररथो ध्रुवः । यत्तो यत्नवान् । प्रतियोगः पुनरुद्योगः[11] तस्माच्छङ्कितः । नभस्वतो वायोर्हेतोः ॥ २२ ॥

**क्षणेनेति** । विस्फुरन्त्यः तडितो यस्मिंस्तेन, त्रासयन्तः स्तनयित्नवोऽशनयो यस्मिंस्तेन ॥ २३ ॥

**ववृषुरिति** । ववृषुः निपेतुरित्यर्थः । न सृजति शरीरमित्यसृक् इह श्लेष्मादि । मेदसः पुंस्त्वमार्षम् । मेदांसि अस्याग्रतो निपेतुः ॥ २४ ॥

**तत इति** । साश्मवर्षिणः अश्मसहितं यद्वर्षं तद्वन्तः ॥ २५ ॥

**वीर०** तदा मानवश्रेष्ठः स ध्रुवः महामृधे महति युद्धे आततायिनं शस्त्रपाणिमपश्यमानः पुरीं दिदृक्षन्नपि द्रष्टुकामोऽपि मायिनां द्विषां पुण्यजनानां जनो न वेदेत्येवं बुद्ध्वा नाविशत् न प्रविष्टवान् ॥ २१ ॥

स चित्ररथो ध्रुवः सारथिं प्रति इति "न मायिनां वेद चिकीर्षितं जनः" (भाग. 4-10-21) इत्येवं वदन् परेषां विद्विषां प्रतियोगं प्रतिक्रियां प्रति शङ्कितः शङ्कमानः अत एव यत्तः यत्नवान् । जलदैर्मेघैरिवेरितं शब्दितं गर्जितमिवेत्यर्थः । शब्दं शुश्राव ततः समनन्तरमेव नभस्वता वायुना सह दिक्षु रजः धूलिः अन्वदृश्यत दृष्टम् ॥ २२ ॥

व्योम अम्बरं विस्फुरन्त्यः तडितो यस्मिन् त्रासयन्तः स्तनयित्नवोऽशनयो यस्मिन् तेन मेघसमूहेन सर्वतः छुरितं व्याप्तम् ॥ २३ ॥

---

1. A, B, G, I, J, M, Ma, T ⁰नाच्छादितं; Ms ⁰न च्छादितं 2. W मेघा⁰ 3. W ⁰ष्फु⁰ 4. A, B, G, I, J, M, Ma, T ⁰डि⁰ 5. M, Ma, V ⁰यं स्त⁰ 6. M, Ma, Ms ⁰स्थिपू⁰ 7. M, Ma गिरेः 8. V भुवम् 9. M, Ma ⁰शा⁰ 10. M, Ma, Ms अश्म 11. V पुनर्योगः

रुधिरौघादयः ववृषुः निपेतुरित्यर्थः । न सृजति [1-]न त्यजति[-1] शरीरमिति असृगिह श्लेष्मादिः रुधिरस्य पृथगुपादानात् । मेदसः पुंस्त्वमार्षं मेदांसि । कबन्धानि शिरोहीनशरीराणि च गगनात् तस्य ध्रुवस्याग्रतः निपेतुः ॥ २४ ॥

ततः खे आकाशे गिरिरदृश्यत सर्वतो दिशं सर्वासु दिक्षु साश्मवर्षिणः अश्मसहितं यद्वर्षं तद्वन्तः गदादयः निपेतुः ॥ २५ ॥

**विज०** अस्यामवस्थायां पुरीं प्रविश्य तत्सर्वमपहृत्य गमनं तत्रावस्थानं वा इत्युभयस्मादेकं प्राप्तं तत्र ध्रुवेण किमकारीत्या-शङ्क्य उभयमपि न कृतं मायिजनकुचेष्टाशङ्कयेति भयेनाह - **अपश्यमान** इति । तथाहि जनो मायिनां चिकीर्षितं न वेद न जानाति यदत इति ॥ २१ ॥

इदं चिन्तनमुत वाचिकमिति न ज्ञायते इति अतो विविनक्ति - **इति ब्रुवन्निति** । प्रतियोगेन पुनरुद्यमेन शङ्कितः जलधेरुत्पन्नमिव नभस्वता वायुनेरितम् ॥ २२ ॥

पुनः किं किं शङ्काकरमभूदिति प्रपञ्चयति - **क्षणेनेत्यादिना** । छादितं छन्नं विस्फुरन्त्यस्तडितो यस्मिंस्तथा तेन स्तनयित्नुना गर्जितेन ॥ २३ ॥

ववृषुर्मेघा इति शेषः । कबन्धानि शिरोरहितशरीराणि ॥ २४ ॥

अश्मवर्षिणो गिरेर्गदादीनि सर्वतोदिशं निपेतुः ॥ २५ ॥

**अहयोऽशनिनिश्श्वासा वमन्तोऽग्निं रुषाक्षिभिः ।**
**अभ्यधावन् गजा मत्ताः सिंहा[2] व्याघ्राश्च यूथशः ॥ २६ ॥**

**समुद्र ऊर्मिभिर्भीमः प्लावयन् सर्वतो भुवम् ।**
**आससाद महाह्लादः कल्पान्त इव भीषणः ॥ २७ ॥**

**एवंविधान्यनेकानि त्रासनान्यमनस्विनाम् ।**
**ससृजुस्तिग्मगतय आसुर्या माययाऽसुराः ॥ २८ ॥**

**ध्रुवे प्रयुक्तामसुरैस्तां मायामतिदुस्तराम् ।**
**निशा[3]म्य तस्य मुनयः शमा[4]शंसन् समागताः ॥ २९ ॥**

1--1. A, B, T omit 2. A, B, G, I, J, M, Ma, Ms, T °हव्या° 3. B, M, Ma, Ms, W °शा° 4. M, Ma, Ms °म°

तस्यास्त्रस्य माहात्म्यमचिन्त्यमिति भावेनाह - **सन्धीयमान** इति। अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशा[1]ः ॥ २॥

आर्षास्त्रम् ऋषिच्छन्दोदेवतासहितास्त्रं ज्ञानास्त्रं वा। ''ऋषि-ज्ञान'' इति धातोः। सुवर्णालङ्कृताः पुङ्खा ज्यानुसन्धानप्रदेशा येषां ते सुवर्णपुङ्खाः। 'वस - आच्छादन' इति धातोः वासश्शब्देन पक्षा लक्ष्यन्ते। कलहंसानां वासांसि पक्षा इव पक्षा येषां ते। कलहंसवाससः शिखण्डिनो मयूराः। भीमो भयङ्करो रवो नादो येषां ते तथा॥ ३॥

पुण्यजनानां वीररसमाह - **तैरिति**। तिग्मधारैरुग्राग्रैः शिलीमुखैः शरैः सुपर्णं गरुडं उन्नद्धफणा उद्धृतफणाः ॥ ४॥

अर्कमण्डलं निर्भिद्य यं लोकं व्रजन्ति तं परं लोकं निनायेत्यन्वयः ॥ ५॥

**तान् हन्यमानानभिवीक्ष्य गुह्यका ननागसश्चित्ररथेन भूरि[2]शः।**

**औत्तानपादिं कृपया पितामहो मनुर्जगादोपगतस्सहर्षिभिः ॥ ६॥**

### स्वायम्भुवमनुररुवाच

**अलं वत्सातिरोषेण तमोद्वारेण पाप्मना।**

**येन पुण्यजनानेतानवधीस्त्वमनागसः ॥ ७॥**

**नास्मत्कुलोचितं तात कर्मैतत्सद्विगर्हितम्।**

**[3]वधो यदुपदेवानामारब्धस्तेऽकृतैनसाम् ॥ ८॥**

**नन्वेकस्यापराधेन [4]तत्सङ्गाद् बहवो हताः।**

**भ्रातुर्वधाभितप्तेन त्वयाङ्ग भ्रातृवत्सल ॥ ९॥**

**नायं मार्गो हि साधूनां हृषीकेशानुवर्तिनाम्।**

**यदा[5]त्मानमसङ्गृह्य पशुवत् भूतवैशसम् ॥ १०॥**

**श्रीध. तानिति**।ताननागसो निरपराधान् ॥ ६॥

**अलमिति**। तमसो नरकस्य द्वारेण येन रोषेण ॥ ७, ८॥

---

1. A, B, T क्लेशाः   2. W भूयसा   3. M, Ma, Ms वदोद्यमु°   4. A, B, G, I, J, T प्रस°   5. A, B, G, I, J, T °न पराग्गृह्य

ननु मद्भ्रातृहन्तारः कथमकृतैनसः तत्राह[1] - **नन्विति** ॥ ९ ॥

[2-]नन्वेकस्य दोषः सर्वेषां संसर्गिणां भवतीत्याशङ्क्य[-2] सत्यप्यपराधे तवैतदुचितं न भवतीत्याह - **नायमिति** । परागृह्य पराग्भूतं देहमात्मानं आत्मत्वेन[3] गृहीत्वा पशवो यथा देहाभिमानादन्योन्यं घ्नन्ति तथा भूतानां वैशसं हिंसेति यत् ॥ १० ॥

**वीर.** एवमनागसो निरपराधिनः चित्ररथेन ध्रुवेन बहुशः हन्यमानान् पीड्यमानान् गुह्यकान् यक्षान् वीक्ष्य ध्रुवस्य पितामहो मनुः स्वायम्भुवः कृपया महर्षिभिः सहोपगतः समीपं प्राप्तः औत्तानपादिं जगाद उवाच ॥ ६ ॥

[4]उक्तिमेवाह - **अलमित्यादिना** । हे वत्स ! तमोद्वारेण सम्मोहात्मकाज्ञानहेतुना[5] "क्रोधाद्भवति सम्मोहः" (भ.गी. 2-63) इति स्मरणात् पाप्मना निरयहेतुना रोषेणालं येन रोषेणानागसः एतान् पुण्यजनान् त्वमवधीः हतवानसि ॥ ७ ॥

हे तात ! सद्भिर्विगर्हितमत एव एतत्कर्मास्मत्कुलोचितं न भवति अकृतागसां यक्षाणामयं वधः ते त्वया आरब्धः ॥ ८ ॥

ननु मद्भ्रातृहन्तार एते उपदेवाः कथमनागसस्तत्राह - **नन्विति** । अङ्ग ! हे भ्रातृवत्सल ! भ्रातुः उत्तमस्य यो वधः तेनाभितप्तेन त्वया एकस्य यक्षस्यापराधेन हेतुना तस्यापराधिनः सङ्गात् सम्बन्धात् बहवो हताः घातिताः ॥ ९ ॥

आत्मानं मनः असङ्गृह्य अनियम्य । परागृह्येति पाठे पराभवविषयं देहमात्मत्वेन गृहीत्वा पशवो यथा देहात्माभिमानेना-न्योऽन्यं घ्नन्ति तथा भूतनां वैशसं हिंसेति यदयं भगवद्भक्तानां साधूनां मार्गो न भवति ॥ १० ॥

**विज.** किमेवं ध्रुवः सर्वाननवशिष्टानकरोदित्यस्योपयोगिकथान्तरमाह - तान् **हन्यमानानिति** । अनागसो वधयोग्यापराधरहितान् । चित्ररथेन ध्रुवेण ॥ ६ ॥

आगत्य निश्शेषं हनेत्युक्तं किम् ? नेत्याह - **अलमिति** । तमोद्वारेण यथार्थज्ञानप्रतिबन्धकत्वेन नरकद्वारेण पाप्मना पापहेतुना ॥ ७ ॥

किञ्च धर्मशास्त्रानुवर्तिनामस्माकं कुलधर्मो न भवत्ययमित्याह - **नास्मदिति** । अकृतैनसामिति पदम् ॥ ८ ॥

अकृतापराधत्वं कथं, भ्रातृवधलक्षणापराधकरणादिति तत्राह - **नन्विति** । ननु एवार्थे वर्तते, अपराधेनेति सम्बध्यते ॥ ९ ॥

---

1. A, B, J, Va अत आह 2--2. B, J, V, Va omit 3. B, J, V, Va omit आत्मत्वेन 4. A, B, T उक्तं 5. A, B, T °हना°

# एकादशोऽध्यायः

## मैत्रेय उवाच

निशम्य [1]वदतामेवमृषीणां धनुषि ध्रुवः।
सन्दधेऽस्त्रमुपस्पृश्य यन्नारायणनिर्मितम्॥ १॥

सन्धीयमान एतस्मिन्माया गुह्यकनिर्मिताः।
क्षिप्रं विनेशुर्विदुर क्लेशा ज्ञानोदये यथा॥ २॥

तस्यार्षास्त्रं धनुषि प्रयुञ्जतः सुवर्णपुङ्खाः कलहंसवाससः।
विनिस्सृता आविविशुर्द्विषद्बलं वनं यथा भीमरवाः शिखण्डिनः॥ ३॥

तैस्तिग्मधारैः प्रधने शिलीमुखै रितस्ततः पुण्यजना उपद्रुताः।
तमभ्यधावन् कुपिता उदायुधाः सुपर्णमुन्नद्धफणा इवाहयः॥ ४॥

स तान् पृषत्कैरभिधावतो मृधे निकृत्तबाहूरुशिरोधरोदरान्।
निनाय लोकं परमर्कमण्डलं व्रजन्ति निर्भिद्य यमूर्ध्वरेतसः॥ ५॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

एकादशे तु यक्षाणां क्षयं दृष्ट्वा मनुः स्वयम्। आगत्य वारयामास ध्रुवं तत्त्वोपदेशतः॥

**निशम्येति**। एवं गदतां वचनम् उपदेशमिव निशम्य उपस्पृश्याऽऽचम्य यन्नारायणनिर्मितं नारायणास्त्रं तत्सन्दधे॥ १॥

**सन्धीयमान इति**। *क्लेशा [2-]अविद्यास्मितारागद्वेषाभिनिवेशा[-2] यथा॥ २॥

किञ्च **तस्येति**। तस्य [3]ध्रुवस्य [4-]आर्षास्त्रम्[-4] ऋषेर्नारायणादुद्भूतमस्त्रं प्रयुञ्जतः सन्दधतः सतः सुवर्णमयाः पुङ्खाः मूलप्रान्ता येषाम्। कलहंसानां वासांसि पक्षा येषां ते, शरा विनिस्सृता इति द्रष्टव्यम्। उपरिष्टाच्छिलीमुखग्रहणात्॥ ३॥

---

1. A, B, G, I, J, T, V ग° * This commentary is not found in V. 2--2. J, Va रागादयो 3. B, J, V, Va omit ध्रुवस्य 4--4. V आर्षम्

**तैरिति** । प्रधने युद्धे उन्नद्धा उच्छ्रिता फणा येषां ते, अहयः[1] सर्पाः ॥ ४ ॥

**स इति** । पृषत्कैर्बाणैः निकृत्ता बाह्वादयो येषां तान् । परं लोकं निनाय । कथम्भूतं लोकम्[2] ? ऊर्ध्वरेतसः सन्न्यासिनोऽर्कमण्डलं निर्भिद्य यं व्रजन्ति तम् ॥ ५ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

मुनिभिरेवमाशंसितो ध्रुवः स्वधनुःप्रयुक्तनारायणास्त्रो विनाशितप्रतिपक्षः स्वपितामहानुनीतहृदयः स्वपुरं गत इत्याहैकादशेन मुनिः **निशम्येति** । एवं वदतामृषीणां[3] निशम्य श्रुत्वा वच इति शेषः । उपस्पृश्य अप इति शेषः । आचम्येत्यर्थः । यन्नारायणेन[4] निर्मितं तन्नारायणास्त्रं सन्दधे ॥ १ ॥

एतस्मिन्नारायणास्त्रे सन्धीयमाने प्रयुज्यमाने सति गुह्यकैर्यक्षैर्निर्मिता मायाः हे विदुर ! ज्ञानोदये सति यथा क्लेशा रागद्वेषादय इव क्षिप्रमाशु विनेशुः नाशं प्राप्ताः ॥ २ ॥

आर्षम् ऋषेर्नारायणादुद्भूतमस्त्रं धनुषि तस्य ध्रुवस्य प्रयुञ्जतः सन्दधतस्सतः स्वर्णमया पुङ्खा मूलप्रान्ता येषां ते । [5-]कलहंसानां वासांसि पक्षाः[-5] येषां ते शरा विनिस्सृताः धनुषो विनिर्गताः, द्विषतां बलमाविविशुः आविष्टवन्तः, भीमः भयङ्करो रवो ध्वनिः येषां ते । शिखण्डिनः मयूरा यथा वनं विशन्ति तद्वत् । भीमरवा इति दार्ष्टान्तिकेऽप्यन्वेतव्यम् ॥ ३ ॥

तैः तिग्मधारैस्तीक्ष्णधारैः शिलीमुखैर्बाणैः प्रधने युद्धे उपद्रुताः ताड्यमानाः पुण्यजनाः इतस्ततः तं ध्रुवं प्रकुपिताश्च ते ऊर्ध्वमुद्धृतायुधास्सन्तः उन्नद्धा उच्छ्रिता[6] फणा येषां ते, अहयः सर्पा इव सुवर्णं गरुडम् अभ्यधावन् ॥ ४ ॥

मृधे युद्धे अभिमुखं धावतः पृषत्कैर्बाणैर्निकृत्ताः सञ्छिन्ना बाह्वादयो येषां तान्, पुण्यजनान् परं लोकं निनाय, कथम्भूतम् ? ऊर्ध्व रेतसः सन्न्यासिनः अर्कमण्डलं निर्भिद्य यं व्रजन्ति ॥ ५ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

असुरमायाविनाशे समर्थं नारायणास्त्रमिति जानन् ध्रुवो मुनिभिरपि तदेवोपदिष्टमिति निरूप्य तदस्त्रं धनुषि सन्दध इत्याह - **निशम्येति** ॥ १ ॥

---

1. B, J, V, Va omit अहयः 2. B, J, V, Va omit लोकम् ? 3. W ग० 4. A, B, T °णनि° 5--5. A, B, T omit 6. A, B, T °ताः

मुनय ऊचुः[1]

औत्तानपादे[2] भगवांस्तव शार्ङ्गधन्वा देव· क्षिणोत्ववनतार्तिहरो विपक्षान्।
यन्नामधेयमभिधाय निशम्य चाद्धा लोकोऽञ्जसा तरति दुस्तरमङ्ग मृत्युम्॥ ३०॥

इति श्रीमद्भागवते महापुराणे श्रीवैयासिक्या अष्टादशसाहस्र्या
श्रीहयग्रीवब्रह्मविद्याया पारमहस्या सहिताया
चतुर्थस्कन्धे दशमोऽध्याय ॥ १०॥

**श्रीध०** **अहय** इति। अशनिवन्निश्शवासो येषाम्॥ २६, २७॥

**एवंविधानीति**। त्रासनानि भयङ्कराणि। तिग्मा क्रूरा गति प्रवृत्ति[3] येषाम्। असुरराक्षसादिशब्दैरदूरान्तरत्वेन यक्षा एव उच्यन्ते॥ २८॥

**ध्रुव इति**। तस्य श कल्याणमाशसन् प्रार्थितवन्त ॥ २९॥

**औत्तानपाद** इति। तव विपक्षान् शत्रून् नाशयतु। अद्धा साक्षात्। अञ्जसा सुखेनैव मृत्यु तरति॥ ३०॥

इति श्रीमद्भागवते चतुर्थस्कन्धे
श्रीधरस्वामिविरचिताया भावार्थदीपिकाया
व्याख्याया दशमोऽध्याय ॥ १०॥

**वीर०** अशनिवन्निश्शवासो येषा ते, अहय सर्पा अक्षिभिरग्नि वमन्त उद्गिरन्त क्रुद्धा गजा सिहा व्याघ्राश्च यूथश सङ्घश अभ्यधावन् अभिमुख तूर्णमागतवन्त ॥ २६॥

ऊर्मिभि तरङ्गै भीमो भयङ्कर समुद्र सर्वत[4] समन्तात् ध्रुव प्लावयन् प्रलय इव महान् ह्राद[5] ध्वनि यस्य अत एवातिभीषण आससाद प्राप्त ॥ २७॥

उक्तविधान्यन्यानि च अमनस्विनामज्ञाना त्रासकानि भयङ्काराणि। तिग्मा क्रूरा गति प्रवृत्तिर्येषां तेऽसुरा मायया ससृजु ॥ २८॥

---

1--1 V W omit 2 I W °द 3 V omits प्रवृत्ति 4 A, B, T, omit सर्वत 5 A, B, T omit ह्राद

असुरैः ध्रुवे प्रयुक्तामतिदुस्तरां तां मायां निशाम्य[1] दृष्ट्वा आगताः सर्वे मुनयः तस्य ध्रुवस्य शं सुखं मङ्गलमाशंसन् प्रार्थितवन्तः ॥ २९ ॥

आंशसामेव विवृणोति - **औत्तानपादेति**[2] । अङ्ग ! हे औत्तानपाद[3] ! ध्रुव ! अवनतार्तिहरः भृत्यदुखापहर्ता [4-]शार्ङ्गधन्वा[-4] भगवान् देवः तव विपक्षान् शत्रून् क्षिणोतु नाशयतु । भगवन्तं विशिनष्टि यस्य भगवतो नामधेयं निशम्य श्रुत्वा अभिधाय उक्त्वा वा[5] लोकः अद्धा साक्षात् अञ्जसा सुखेनैव दुस्तरं मृत्युं[6] तरति ॥ ३० ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

[व्याख्यायां दशमोऽध्यायः ॥ १० ॥]

**विज०** ''दृषद्गरलयोरश्म वेश्म धामप्रवेशयोः'' इत्यभिधानात् अश्मवर्षिण इति अहिविशेषणं वा, अहयश्च निपेतुः अशनिः मेघवह्निज्वाला तद्वन्निश्वासो येषां ते तथा ॥ २६ ॥

ह्रादो नादः ॥ २७ ॥

अमनस्विनां मनोबलरहितानां तिग्मगतयः तीक्ष्णप्रवृत्तयः, आसुर्या असुरजनप्रियया ॥ २८ ॥

स्वकर्तव्यतया मुनयो भगवत्प्रसादेन सर्वत्राजिताय ध्रुवाय हितमुपदिशन्तीत्याह - **ध्रुव** इथि । सं[7] सुखं ''समभेदे[8] समीचीने सुष्ठु पूजा सुखेषु च'' (वैज.को. 8-7-8) इति यादवः । ''पवौ शसाविति प्राच्याः'' इति सूत्राद्वा सं सुखमिति ज्ञायते ॥ २९ ॥

यन्नामधेयमभिधायेत्यनेन भगवन्नाम स्मृत्वाऽऽभिधाय युध्यतस्तव शत्रुजयः स्यादित्युपदिष्टमिति ज्ञातव्यम् ॥ ३० ॥

इति श्रीमद्भागवते महापुराणेपारमहंस्यां संहितायां

श्रीविजयध्वजतीर्थविरचितायां पदरत्नावल्यां

टीकायां दशमोऽध्यायः ॥ १० ॥



1. A, B, T निशम्य 2. A, B, T °द इति । 3. A, B, T पादे ! 4--4. T omits 5. A, T omit वा 6. A, T omit मृत्युं 7. A, B, Ma शं 8. A, Ma शं

तस्यापराधिनः सङ्गात् तदपरित्यागात् तेऽप्यपराधिन इति सूक्ष्मदर्शनं भागवतानां नोपपन्नमित्याह - **नायमिति**। आत्मानं मनः असङ्गृह्य अनियम्य पशुवत् मूढवत् ॥ १० ॥

**सर्वभूतात्मभावेन भूतावासं हरिं भवान्।**

**आराध्याऽऽप दुराराध्यं विष्णोस्तत्परमं पदम् ॥ ११ ॥**

**स त्वं हरेरनुध्यातः[1] तत्पुंसामपि सम्मतः।**

**कथं त्ववद्यं कृतवाननुशिक्षन् सतां व्रतम् ॥ १२ ॥**

**तितिक्षया करुणया मैत्र्या चाखिलजन्तुषु।**

**समत्वेन च सर्वात्मा भगवान् सम्प्रसीदति ॥ १३ ॥**

**[2]सम्प्रसन्ने भगवति पुरुषः प्राकृतैर्गुणैः।**

**विमुक्तो[3] जीवनिर्मुक्तो ब्रह्मनिर्वाणमृच्छति ॥ १४ ॥**

**भूतैः पञ्चभिरारब्धो[4] योषित्पुरुष एव[5] हि।**

**तयोर्व्यवायात्सम्भूतिर्योषित्पुरुषयोरिह ॥ १५ ॥**

**श्रीध.** त्वं[6] च बाल्ये साधुः सन्[7] इदानीं कथमन्यथा कृतवानित्याह - **सर्वभूतात्मभावेनेति** द्वाभ्याम् ॥ १२ ॥

**स इति**। अनुध्यातो हरेः[8] हृदि स्थितो विज्ञातो[9] वा[10] तत्पुंसां हरिदासानामपि साधुत्वेन सम्मतः[11] ॥ १२ ॥

सतां व्रतमेवाह - **तितिक्षयेति**। महत्सु तितिक्षया, नीचेषु करुणया, समेषु मैत्र्या अखिलेषु जन्तुषु समत्वेन च ॥ १३ ॥

ततः कृतार्थो भवतीत्याह - **सम्प्रसन्ने** इति। सम्प्रसन्ने सति गुणैर्विमुक्तोऽत एव तत्कार्येण जीवेन लिङ्गशरीरेण निर्मुक्तस्सन् निर्वाणं सुखात्मकं ब्रह्म प्राप्नोति ॥ १४ ॥

भ्रातृहन्तृत्वमङ्गीकृत्योक्तम् - इदानीं तु नात्मनो भ्रातृपुत्रादिसम्बन्धो न चान्योन्यं हन्तृत्वादिकमपीत्याह - **भूतैरिति**

---

1. M, Ma, Ms ध्याता; W ध्यानात् 2. W सुप्र॰ 3. W ॰क्तोऽजीव 4. A, B, G, I, J, T ॰ब्धैः 5. V च 6. V adds यः 7. V स
8. V omits हरेः 9. J, V, omit विज्ञातो 10. V omits वा 11. A, B, J, Va मतः

[1]दशभिः । भूतैः पञ्चभिरारब्धैर्देहाद्याकारेण परिणतैः योषित्पुरुषश्चेति प्रसिद्धिः[2] । तयोर्व्यवायात् मैथुनात् सम्भूतिः अन्ययोर्योषित्पुरुषयोरिह संसारे भवति ॥ १५ ॥

**वीर.** सत्यं भगवद्भक्तानामयं मार्गो न भवतीति मम तु उचितमित्यत्राह - **सर्वभूतात्मभावेनेति** । आवसन्त्यस्मिन्नित्यावासः आवसतीति वा आवासः भूतानामावासं धारकमन्तरात्मानं इतरैरब्रह्मात्मकस्वतन्त्रवस्तुदर्शिभिः दुराराध्यं हरिं सर्वभूतात्मभावेन सर्वभूतान्तरात्मत्वेनाऽऽकारेणाराध्यं परमं सर्वोत्कृष्टं तत् प्रसिद्धं विष्णोः पदं लोकम् आप प्राप्तवानसि । इतः पूर्वमप्राप्तमपि भगवता दत्तत्वात्प्राप्तप्रायमिति मत्वा आपेत्युक्तम् ॥ ११ ॥

हरेरनुध्यानात् भजनात् सः हरिभक्तस्त्वं तत्पुंसां हरिभक्तानामपि सम्मतः भागवतोत्तमत्वेन सम्मतः सतां साधूनां व्रतम् [3-]अनुशिक्षन्[-3] अनुशिक्षयन् लोकस्येति शेषः । कथम् अवद्यं वक्तुमप्यनर्हं पापं कृतवान् भगवद्भक्तस्य नितरामेतदनुचितमित्यर्थः ॥ १२ ॥

भूतद्रोहेण भगवद्भक्तेः को विरोध इत्यत्राह - **तितिक्षयेति** । तितिक्षया अपराधिषु सहनेन करुणया परदुःखासहिष्णुत्वेन अखिलजन्तुषु तरतमभावेन व्यवस्थित[4]जन्तुषु मैत्र्या स्वसाम्यबुद्धिकृतहिताचरणेन समत्वेन देहाकारान् प्रकृतिपरिणामत्वेन जीवान् ज्ञानैकाकारत्वेन, परमात्मानं तु सर्वान्तरात्मत्वेनेत्येवंरूपसमत्वेन वा सर्वात्मा भगवान् सम्प्रसीदति । सर्वात्मेति हेतुगर्भं, भगवतः सर्वात्मकत्वात् [5]सर्वान्तरात्मतया देवमनुष्यादिरूपेणावस्थितत्वात् सर्वेषां शरीराणामीश्वरशरीरत्वेन शरीरकृतो द्रोहः शरीरिण्यात्मन्येव भगवति पर्यवस्यतीति [6]भूतद्रोहे भगवान् न प्रसीदतीत्यर्थः ॥ १३ ॥

भगवत्प्रसादफलमाह - **सुप्रसन्न** इति । पुरुषः सर्वात्मब्रह्मोपासनपरः पुमान् तितिक्षादिभिः भगवति प्रसन्ने सति प्राकृतैः [7]कामक्रोधादिभिर्जीवद्दशायां विमुक्तः अन्ते अजीवात् प्रकृतेः नितरां मुक्तः निर्वाणं निरतिशयानन्दरूपं ब्रह्म ऋच्छति प्राप्नोति ॥ १४ ॥

एवं सर्वभूतसुहृत्त्वादीन् भगवत्प्रसादहेतून् प्रसादफलभूतां ब्रह्मप्राप्तिं चाभिधाय तत्त्वोपदेशमन्तरेण भ्रातृमरणदुःखितस्यास्य न मनः प्रशाम्यतीत्यभिप्रेत्य न भ्रातृहननकर्मत्वं नापि यक्षाणां कर्तृत्वं, किन्तु दैवमेव कारणमिति वक्तुं भ्रात्रादिशरीराणामुत्पत्ति-मरणादिकं यथावद्विवेचयन् तदुपयुक्तमीश्वरस्यानन्तविविधशक्तिमत्त्वमाह - **भूतैरिति** । पञ्चभिर्भूतैः पृथिव्यादिभिः आरब्धः देवमनुष्यादिशरीररूपेण परिणतः योषित् पुरुषश्चेत्ययं द्विविधो जनः प्रसिद्धः । तयोः योषित्पुरुषयोरन्योऽन्यव्यवायान्मैथुनात् सम्भूतिरिह

---

1. V omits दशभिः 2. V °द्धम् । 3--3. W omits 4. A, B, T °तेषु 5. A, B, T add एतत् 6. A, B, T द्रुहे 7. A, B, T omit काम

भवति तस्मादुद्भूतं प्राणिजातमित्यर्थः। पञ्चभूतपरिणामरूपस्त्रीपुंसात्मक[1] शरीरद्वयसम्बन्धादुद्भूतमपि प्राणिजातं पञ्चभूतात्मकमेवेति भावः॥ १५॥

**विज.** इतोऽप्येकापराधेन बहूनां वधो न युक्तः, सर्वप्राणिनामन्तर्यामित्वेन हरिमुपास्य प्राप्ततत्प्रसादत्वादित्याह - **सर्वभूतेति**। सर्वभूतानामात्मभावेनान्तर्यामित्वेन भूतेषु प्राणिष्वावासो यस्य स तथा, भूतान्यावसन्त्यस्मिन्निति वा तम्॥ ११॥

प्राप्तपदत्वादद्य हरिणा किमिति भावो न तवास्तीत्याह - **सत्वमिति**। तस्य हरेः पुंसां भक्तानां सम्मतः ततः किं तत्राह - कथमिति॥ १२॥

किं तत्सतां व्रतम्? तेन किं फलम्? तत्राह - **तितिक्षयेति**। शत्रुषु शत्रुत्वदर्शनं सुहृत्सु सुहृत्त्वदर्शनं समत्वम्॥ १३॥

तत्प्रसादफलमाह - **सम्प्रसन्न** इति। ततः किं तत्राह - जीवेति। जीवत्वाभिमानात् नितरां मुक्तो भवति, तत्फलमाह - ब्रह्मेति। नित्यनिर्मुक्तशरीरं परमानन्दं वा ब्रह्म ऋच्छति आप्नोतीत्यन्वयः। ब्रह्मनिर्वाणं ब्रह्मणि नाशमृच्छतीत्यङ्गीकारे मुक्तेः शून्यभावत्वेन न केनाप्या[2]श्रितं स्यात्॥ १४॥

सृष्टिप्रकारज्ञाने ततो विरक्त्या प्रकृतिबन्धहानेच्छा स्यादतः तामाह - **भूतैरिति**। पुरुषो योषिच्चेति भावः। पञ्चभिः पृथिव्यादिभूतैरारब्धः सृष्टः। अतः परं कथं प्रारम्भ इत्यत आह - तयोरिति। इह जीवराशौ तयोर्योषित्पुरुषयोः व्यवायेन मैथुनधर्मेण सम्भूतिः करचरणादिविभागलक्षणं जन्म भवति। समित्यनेन पृथिव्यादिसंयोगेन जन्म सूचयति॥ १५॥

**एवं प्रवर्तते[3] सर्गः स्थितिः संयम[4] एव च।**
**गुणव्यतिकराद्राजन् मायया[5] परमात्मनः[6]॥ १६॥**
**निमित्तमात्रं तत्राऽऽसीत्[7] निर्गुणः पुरुषर्षभः।**
**व्यक्ताव्यक्तमिदं विश्वं यत्र भ्रमति लोहवत्॥ १७॥**
**स खल्विदं भगवान् कालशक्त्या[8] गुणप्रवाहेण[9] विभक्तवीर्यः।**
**करोत्यकर्तैव[10] निहन्त्यहन्ता चेष्टा विभूम्नः खलु दुर्विभाव्या॥ १८॥**

1. A, B, T पुरुषात्मक 2. B, M, Ma °प्यर्थित्वं (तं?) 3. W वर्तितस्सर्गः 4. M, Ma, Ms प्रलय 5. W मायायाः 6. A, T °ना
7. M, Ma, Ms °त्मा 8. M, Ma, Ms योग 9. M, Ma, Ms °षु 10. M, Ms, T, V °र्तेव

**सोऽनन्तोऽन्तकरः कालोऽनादिरादिकृदव्ययः ।**

**जनं जनेन जनयन्मारयन्मृत्युना[1]ऽन्तकम्[2] ॥ १९ ॥**

**न वै[3] स्वपक्षोऽस्य विपक्ष एव वा परस्य मृत्योर्विशतः समं प्रजाः ।**

**तं धावमानमनुधावन्त्यनीशा यथा रजांस्यनिलं भूतसङ्घाः ॥ २० ॥**

**श्रीध. एवमिति** । एवं तावत् सर्गः प्रवर्तते । एवं पालकाकारे[4]ण परिणतैः भूतैरेव स्थितिर्हन्तृदेहाकारेण परिणतैः संयमः संहारः । स च परमात्मनो [5-]मायया गुणानां[-5] व्यतिकरात्[6] न तु स्वतः ॥ १६ ॥

ननु जडानां देहानां गुणानां[7] वा कथं सर्गादिहेतुत्वं, तत्राह - **निमित्तमात्रमिति** । निमित्तमात्रं पुरुषर्षभः ईश्वरः यत्र यस्मिन्निमित्ते सति कार्यकारणात्मकं विश्वं भ्रमति परिवर्तते यथाऽयस्कान्ते निमित्ते सति लोहं प्रवर्तते तद्वत् ॥ १७ ॥

ननु स चेन्निमित्तं तर्हि तस्याविशेषाद्युगपदेव सर्गादित्रयं भवेदत आह - **स खल्विति** । कालशक्त्या क्रमेण गुणानां प्रवाहः क्षोभस्तेन विभक्तं सृष्ट्यादिविषयं वीर्यं शक्तिः यस्य सः । ननु कालोऽपि गुणान्युगपदेव क्षोभयतु तत्राह । चेष्टा कालशक्तिः दुर्विभाव्याऽचिन्त्या ॥ १८ ॥

ननु पित्रादिः सृजति, पालयति, राजादिः, निहन्ति च चोरादिः न तु ईश्वरस्तत्राह - **स इति** । जनेन पित्रादिना जनं पुत्रादिं जनयन् आदिकृत् अन्तकं चोरादिकं तन्मृत्युहेतुना [8-]राजादिना[-8] मारयन्नन्तकरः स्वयं त्वनन्तोऽनादिश्च अव्ययः अक्षीणशक्तिश्च । अयं भावः - पित्रादयोऽन्यत उत्पत्यादिमन्तो न स्वातन्त्र्येण कारणं किन्तु ईश्वर एव तन्नियन्ता सर्वकारणमिति ॥ १९ ॥

न चैवं कुर्वतोऽपि वैषम्यप्रसक्तिः पक्षपाताभावादित्याह - **न वा** इति द्वाभ्याम् । मृत्युरूपस्य समं यथा भवति तथा[9] प्रजाः कर्मभूता विशतः तस्य साम्येऽपि भूतेषु फलवैषम्यं तत्कर्मवशादिति सदृष्टान्तमाह । तं धावन्तम् अनु धावन्ति[10] अनीशाः कर्माधीनाः भूतसङ्घा धावन्ति अनिलं धावन्तमनु रजांसीव तत्र यथा रजसां तमःप्रकाशजलाग्न्यादि प्रवेशे[11]ऽपि न अनिलस्य वैषम्यम्, एवमीश्वरस्याऽपीति भावः ॥ २० ॥

---

1. M, Ma, Ms ॰नात्मनः  2. W ॰गम्  3. W नैव  4. B, J, V, Va ॰रप॰  5--5. V मायागुणात्मनां  6. V adds सम्बन्धात् भवति
7. Va omits गुणानां  8--8. B, J, V, Va omit  9. Va omits तथा  10. A, B, J, Va omit धावन्ति  11. V ॰शादपि

**वीर.** एव व्यष्टिसर्ग उक्त । अथ सर्वशरीराणा पञ्चभूतारब्धत्वेऽपि कदा [1]सर्वभूतात्मक[1] भूतसृष्टि तै शरीरारम्भस्थितिकारण सहारकारण च कि, तच्च द्वय कदा ? कदा वा ईश्वरकृत्य च, कि [2]तद्रूपमित्यत्राह - **एवमिति** । एव यथा स्त्रीपुसात्मको जन तद्व्यवायसम्भव, एव परमात्मन मायाया परमात्माधिष्ठिताया तच्छरीरभूताया मायाया गुणाना सत्त्वादीना व्यतिकरात् तारतम्येन सम्बन्धात् हे राजन् ! ध्रुव ! सर्ग सृष्टि स्थिति सहारश्च प्रवर्तते । तत्र रजसो वृद्धावितरयोर्ह्रासे सर्ग , सत्त्वस्य वृद्धौ इतरयो ह्रासे स्थिति , तमसो वृद्धौ तु सयम , त्रयाणा साम्ये त्रितयाभाव ॥ १६ ॥

ननु स्त्रीपुसात्मकशरीराणा वैषम्येण सम्बद्धाना गुणाना वा जडत्वेन प्रवृत्तिशून्याना व्यष्टिसमष्ट्यात्मना कथ परिणाम सामर्थ्यम् ? सामर्थ्येऽपि कथ देवमनुष्यादिवैचित्र्य, सुखदु खतारतम्य चेत्यत्राह - **निमित्तमात्रमिति** । निमित्तमेव निमित्तमात्र न त्वनिमित्तमित्यर्थ । तत्र गुणाना महदाद्याकारेण परिणाम, [3]महदादीना देहाद्याकारेण परिणामे [3]च देवादिवैचित्र्ये सुखदु खयोश्च निर्गुण सत्त्वादिगुणरहित पुरुषर्षभ ईश्वर निमित्तमात्र गुणाना परिणामस्य तेषा तत्स्वाभाव्यनिबन्धनत्वाद् देवादिवैचित्र्यस्य सुखदु खतारतम्यस्य च कर्मनिबन्धनत्वादीश्वर साधारणकारण कालाकाशादिवदित्यर्थ । निमित्तत्वमेव दृष्टान्तत्वेन विशदयति । यत्र परमात्मनि निमित्ते अयस्कान्तसन्निधौ लोहवत् इद व्यक्ताव्यक्तम् अव्यक्त प्रधान तत्कार्य महदादि व्यक्त कार्यकारणात्मक विश्व भ्रमति प्रवर्तते । अत्र लोके मृत्युकालयो विभिन्नयोरेव निमित्तत्वोपादनत्वदर्शनादुपादानस्य परमात्मनो जगत्सृष्ट्यादिनिमित्तत्वानुपपत्तिरितीमा [4]शङ्का निराचिकीर्षुणा मात्रपद प्रयुक्त, न तु उपादाननिराचिकीर्षया परमात्मनो मायाया गुणव्यतिकरादित्युपादानत्वाभिधानात् सम्बन्धसामान्याभिधायिन्या अपि षष्ठ्या "यस्याव्यक्त शरीरम्" (सुबा उ 2-7) इत्यादिश्रुत्यनुसारेण शरीरात्मभाव रुपसम्बन्धविशेषे पर्यवसानात् शरीरस्य कार्योपयोग्यपृथक्सिद्धाकारत्वात् श्लक्ष्णतादिविशिष्टमृदादिकार्यभूतघटादीनामिव महदादिकार्याणा प्रकृत्यादिशरीरकपरमात्मकार्यत्वात् । अत्र निर्गुण इत्यनेन सत्त्वादिगुणवश्यत्वायत्तकर्तृत्वसुखदु खादि-[5]भागजीववैलक्षण्यमभिप्रेतम् ॥ १७ ॥

तदेव विशदयति - **स इति** । भगवान् हेयप्रतिभटपूर्णषाड्गुण्य कालशक्त्या कालात्मिकया स्वापृथक्सिद्धकार्योपयो-गिविशेषणभूतया शक्त्या गुणक्षोभहेतुभूतया यो गुणाना सत्त्वादीना प्रवाह [6]सर्ग तेन विभक्तवीर्य विभक्त कर्मायत्तदेवमनुष्या-दिवैचित्र्येण सुखदु खतारतम्येन च व्यवस्थापित वीर्य शक्ति जगदिति यावत् । "एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा । परस्य

---

1--1 A, B T omit 2 A, B T omit तत् 3--3 A, B T omit 4 A, B T आशङ्का 5 A T भोगजीव 6 A B T omit सर्ग

ब्रह्मण शक्तिस्तथेदमखिल जगत् ॥'' (विष्णु 1-22-56) इत्युक्तत्वात्। अत्र स्यामित्यध्याह्रियते, विभक्तवीर्य स्यामिति। इद करोति सृजतीत्यन्वय । गुणक्षोभनिमित्तकालप्रकृतिपुरुषशरीरकोऽह जगत्सृष्ट्वाऽनन्तविविधविचित्रस्थिरत्रासरूप स्यामिति सङ्कल्पेनेद जगत्सृजतीत्यर्थ । यद्वा गुणप्रवाहेणेति हेत्वर्थे तृतीया। हेतुश्चात्र फलम्, अध्ययनेन वसतीतिवत्। ततश्च गुणप्रवाहेण गुणप्रवाहार्थ, प्रवाहशब्देन गुणकार्यसृष्ट्यादित्रय विवक्षित, सृष्ट्याद्यर्थ विभक्त वीर्य सृष्ट्याद्युपयुक्तसामर्थ्य येन स , ब्रह्म विष्णुरुद्ररूपो भूत्वेत्यर्थ । अकर्तैव देवादिवैचित्र्ये सुखदु खादौ चाकर्तैव देवादिवैचित्र्यादे तत्तज्जीवादृष्टायत्तत्वात्, इद जगत् करोति उत्पादयति तथा अहन्तैव स्वय हननाद्यनाश्रय एव हन्ति, ''चातुर्वर्ण्य मया सृष्ट गुणकर्मविभागश । तस्य कर्तारमपि मा विद्ध्यकर्तारमव्ययम्'' (भ गी 4-13) ''प्रधानकारणीभूता यतो वै सृज्यशक्तय '' (विष्णु पु 1-4-51) इति स्मृते , ''हन्ता चेन्मन्यते हन्तु हतश्चेन्मन्यते हतम्। उभौ तौ न विजानीत नाय हन्ति न हन्यते'' (कठ उ 2-19) इति श्रुतेश्च। अत्र कर्तृत्व, हन्तृत्व च प्रयोजकत्वरूपेण, अकर्तृत्व तु प्रयोज्यत्वरूपेणेति विवेक । नन्विदमघटमान कर्तृत्वमकर्तृत्व चैकस्मिन् कथमुपपद्यते तत्राह। विभूम्न भगवत ''भूमा त्वेव विजिज्ञासितव्य '' (छान्दो उ 7-23-1) इति श्रुते । चेष्टा दुर्विभाव्या अप्रतर्क्या खलु ॥ १८ ॥

प्रयोजयितृत्वमेव विशदयति - **स इति**। स काल कालशरीरक परमात्मा जनेन पित्रादिना प्रयोज्यकर्त्रा जनमुत्पत्त्युन्मुख[1] पुत्रादि[2] जनयन् आदिकृत् अन्तग[3] विनाशोन्मुख मृत्युना प्रयोज्यकर्त्रा मारयन् स्वय त्वनादि उत्पत्तिरहित अव्यय नाशरहित अनन्त , अन्तकर । पित्रादिद्वारा जनक मृत्व्यादिद्वारा अन्तकर , न तु साक्षात्। अत साक्षादकर्तृत्व सद्वारक कर्तृत्व चैकस्मिन् विविधविचित्रानन्तशक्तिमतीश्वर उपपन्नमिति भाव ॥ १९ ॥

ननु प्रयोजयितृत्वमपि कथमीश्वरस्य उपपन्न वैषम्यनैर्घृण्यादिप्रसङ्गादित्यशङ्काया तत्कर्मानुरूप[4] प्रयोजयितु पक्षपाता-भावादुपपन्नमेव प्रयोजयितृत्वमित्याह - **न वा इति**। मृत्यो ससारात् परस्यास्पृष्टससारस्येत्यर्थ । यद्वा मृत्युशरीरकस्य ''यो मृत्युमन्तरे सञ्चरन् यस्य मृत्यु शरीरम्'' (सु ब उ 2-7) इति श्रुतेश्च परस्य परमात्मन सम यथा भवति तथा प्रजा कर्मभूता विशत तत्तत्कर्मानुरूपनियमनार्थमन्तरात्मतया प्रविशत न स्वपक्ष नापि विपक्षो वास्ति। पक्षपाताभाव दृष्टान्तेनोपपादयति - तमिति। यथा रजासि धावमानमनिलम् अनुसृत्य धावन्ति तथा अनीशा अनियन्तार कर्मानुरूपनियम्या इत्यर्थ । भूतसङ्घा तत्तत्कर्मानुसार धावमान नियन्तार परमात्मानमनुसृत्य धावन्ति प्रवर्तन्ते यथा हर्म्यतलश्वभ्रादिषु रजास्यनुनेतु न[5] वायो वैषम्यमस्तु इत्येव परमात्मन्यपीत्यर्थ ॥ २० ॥

1 A, B T °खान् 2 A, B T °दीन् 3 A, B T °क 4 T गुण 5 W omits न

**विज.** न केवलमादिसर्गः किन्तु उत्तरात्राप्येवमेवेत्याह - **एवमिति**। स्थितिसंहारयोः सर्गविपरीतत्वात् कथं सर्गवदित्युच्यत इत्यत्राह - गुणव्यतिकरादिति। रज आदिगुणानां विषमसमवस्थाभेदकारणात् परप्रेरणामन्तरेण जडेभ्यो गुणेभ्यः एवं प्रवृत्तिः कथमत्राह - माययेति। परमात्मनो माययेच्छया प्रेरितेभ्य इति शेषः। इदमत्राऽऽकूतम्। रजोगुणकार्यभूतारब्धदेहात् [1-]चेतनाधिष्ठितात् सर्गः पालकसत्त्वगुणकार्यभूतारब्धदेहात्[-1] स्थितिः तमोगुणकार्यभूतारब्धदेहात्संयम इति च एतत्सर्वमीश्वरेच्छाधीनमिति॥ १६॥

एतदेव विशिनष्टि - **निमित्तमात्रमिति**। यत्र यस्येश्वरस्य सन्निधाने व्यक्ताव्यक्तं कार्यकारणात्मकमिदं विश्वं भ्रमति चेष्टते, किमिव? अयस्कान्तस्य सन्निधाने लोहं सर्वं यथा, तथा सः निर्गुणः सत्त्वादिगुणशक्त्यनुपहतशक्तिरात्मा परमात्मा तत्र सृष्ट्यादौ निमित्तमात्रं न तु उपादानकारणम्॥ १७॥

तर्हि मुख्यकर्तृत्वं हरेर्गतमत्राह - **स खल्विति**। खलुशब्दोऽन्यकारणशक्तिनिषेधार्थः। स भगवान् योगशक्त्या गुणप्रवाहेषु सृष्ट्यादिषु तत्तत्क्रियानुसारेण विभक्तवीर्यो विभक्तमाहात्म्यः अक्लिष्टकर्तृत्वादकर्तेव जगत्करोति अहन्तेव शत्रुभावरहितत्वान्निहन्ति संहरति। अनेन हरेः समत्वभङ्गो निरस्त इति। एकस्य विरुद्धकर्तृत्वं कथमित्यत उक्तं - चेष्टेति। दुर्विभाव्या ज्ञातुमशक्याऽस्मादृशैरिति शेषः। कर्तृत्वसामान्यनिषेधो[2] "हरिरक्लिष्टकारित्वादयस्कान्तवदुच्यते। कामकर्मस्वभावेषु काले चावस्थितो हरिः। सर्वकारणभूतस्सन् तत्तन्नाम्नाभिधीयते॥" (सत्यसंहितायां) इति वाक्यविरुद्धं स्यादिति नायमर्थः शोभते॥ १८॥

दुर्विभाव्यत्वमाह - **सोऽनन्त** इति। य एवंविधः स हरिरस्य विश्वस्यान्तकरः स्वयमनन्तः स्वमारकमृत्युरहितः "अन्तोऽस्त्र्यवसिते मृत्यौ" (वैज.को. 6-5-5) इति यादवः। देवदत्तवत् स्वयं दण्डमादाय हन्ति किम्? नेत्याह - काल इति। आयुरादिफलपाचकत्वात्। पूर्वापरत्वविशेषोऽपि नास्तीत्याह - अनादिरिति। न केवलमन्तकरः किन्तु आदिकृच्च। चौरवत्संवृतो न करोति अतोऽव्यय इति। अव्ययोऽसंवृतः निमित्तमात्रत्वं स्पष्टयन्नुक्तमेव द्रढयति जनमिति। जनेन पित्रादिशरीरेण जनं पुत्रादिशरीरं जनयन् आत्मनोऽधीनेन मृत्युना कालरूपेण मारयन् शरीरवियोगं कारयन् वर्तत इत्यन्वयः॥ १९॥

एवं प्रवर्तमानस्य नैर्घृण्यादिदोषापत्तिर्नास्ति समत्वादित्याह - **न वा इति**। वा इत्यनेनावैषम्यादिसूत्रप्रसिद्धिं दर्शयति समं पुण्यपापानुसारेण। मृत्योः परस्य विलक्षणस्य। रुद्रादीनां मारकत्वादिकमेतत्कटाक्षोपक्षिप्तमिति भावेनाह - तं धावमानमिति॥ २०॥

---

1--1. A omits 2. A, B °धे

**आयुषोऽपचयं जन्तोस्तथैवोपचयं विभुः ।**

**उभाभ्यां रहितः स्वस्थो दुस्स्थस्य विदधात्यसौ ।। २१ ।।**

**केचित्कर्म वदन्त्येनं स्वभावमपरे नृप ।**

**एके कालं परे दैवं पुंसः काममुतापरे ।। २२ ।।**

**अव्यक्तस्याप्रमेयस्य नानाशक्त्युदयस्य च ।**

**न वै चिकीर्षितं तात को वेदाद्धा[1] स्वसम्भवम् ।। २३ ।।**

**न[2] चैते पुत्रक भ्रातुर्हन्तारो[3] धनदानुगाः ।**

**विसर्गाऽऽदानयोस्तात पुंसो दैवं हि कारणम् ।। २४ ।।**

**स एव विश्वं सृजति स एवावति हन्ति[4] च ।**

**तथापि[5] ह्यनहङ्कारान्नाज्यते[6] गुणकर्मभिः ।। २५ ।।**

**श्रीध. आयुष** इति । अपचयम् अकालमृत्युम् । उपचयं कालमृत्योरपि रक्षाम् । यद्वा अपचयं मशकादौ, उपचयं देवादौ । स्वस्थत्वात्[7] उभाभ्याम्[8] उपचयापचयाभ्यां रहितोऽसौ विभुः दुस्स्थस्य [9-]कर्माधीनस्य[-9] जन्तोर्जीवस्य विदधाति करोति[10] ।। २१ ।।

एवम्भूतश्चेश्वरः सर्ववादिसम्मतो[11] विवादस्तु नाममात्र इत्याह - **केचिदिति** । पुंसः कामं वात्स्यायनादयः । श्रुतिश्च "कामोऽकार्षीत्कामः [12-]करोति कामः कर्ता कामः कारयिता[-12]" (म.ना.उ. 14-3) इत्यादिः[13] ।। २२ ।।

ननु कर्मादीनां जडत्वात्[14] स्वरूपतोऽपि[15] [16] भिन्नत्वात् कथमैकमत्यं तत्राह - **अव्यक्तस्येति** । [17-]अव्यक्तस्य[-17] निर्गुणस्य अत एवाप्रमेयस्य । तथाप्यस्य[18] सत्त्वे हेतुः । नानाशक्तीनां महदादीनाम् उदयो यस्मात् । चिकीर्षितमेव तावत्कोऽपि न वेद अथ स्वस्य सम्भवो यस्मात् तमीश्वरं को वेद[19] न कोऽपि वेद । अद्धेति पाठे साक्षात् । अतः तस्य[20] तत्त्वज्ञानाभावात् विशेषांशे विवाद इत्यर्थः । तथा

---

1. A, B, G, I, J, T ⁰थ स्व⁰; M, Ma, Ms ⁰द्धाऽस्य⁰ 2. M, Ma, Ms नैवेते 3. V ⁰तृह⁰ 4. W हन्त्यजः 5. A,G,I,J,M,Ma,Ms,T अ⁰ 6. W निरह⁰ 7. V adds स्वयं 8. B, J, V, Va omit उभाभ्याम् 9--9. B, J, V, Va omit 10. A, B, J, Va omit करोति 11. V ⁰दीनां स⁰ 12--12. V नाहं करोमि कामः कर्ता नाहं कर्ता कामः कारयिता नाहं कारयिता 13. B, J, V, Va ⁰दि। 14. A, B, J, Va ⁰त्वादिना 15. V omits अपि 16. V adds च 17-17. A,B, J, Va omit 18. B, J, V, Va omit अस्य 19. A, B, J, V, Va omit वेद 20. B, J, V, Va omit तस्य

च श्रुतिः ''को अद्धा वेद क इह प्रवोचत्कुत आजाता कुत इयं विसृष्टिः। अर्वाग्देवा अस्य विसर्जनेनाथा को वेद यत आबभूव'' (ऋक्.सं. 10-129-6) इत्यादिः[1] ॥ २३ ॥

ईश्वरवादस्य प्रकृतोपयोगमाह - **न चैत इति**। न चैते भ्रातुर्हन्तारः[2]। अत्रोक्तमेव[3] हेतुमनुवदति[4]। विसर्गाऽऽदानयोर्मृत्युजन्मनोः। यद्वा विसर्गः सृष्टिः आदानं संहारः। दैवमीश्वर एव हि कारणम् ॥ २४ ॥

तथापि निर्लेपतामाह - **स एवेति** ॥ २५ ॥

**वीर.** कर्मानुरूपनियमनमेवोपपादयति - **आयुष** इति। विभुः सर्वान्तरोऽसौ भगवान् जन्तोः कर्मवश्यस्य [5-]अत एव दुस्स्थस्य[-5] कर्मायत्तसुखदुःखादिभाजः आयुषः अपचयं ह्रासं तथा उपचयं वृद्धिं च स्वयमुभाभ्यामुपचयापचयाभ्यां रहितः अत एव स्वस्थः स्वेनैव हेयप्रतिभटकल्याणैकतानत्वस्वभावेन स्थितः विदधाति करोति, एवमुत्पत्तिमरणयोर्देवादिवैचित्र्यं[6] सुखदुःखयोश्चाद्वारकं कारणं तत्तत्कर्मैव। ईश्वरस्तु प्रयोजयितृ कारणमित्युक्तं भवति ॥ २१ ॥

एवं सर्वभूतान्तरात्मानं स्वसङ्कल्पकृतजगदुदयविभावलयलीलं[7] सर्वज्ञत्वसर्वशक्तित्वाद्यपरिमितोदारगुणसागरं तत्तत्कर्मानुरूपं जगन्नियन्तारं सर्वभूतसुहृदं परमात्मानमविज्ञाय एतमेव कालकर्मादिरूपेण विवदन्ते केचिदित्याह - **केचिदिति**। एवं सुखदुःखादिहेतुं केचित् कर्म पुण्यापुण्यरूपं कर्मेति वदन्ति। हे नृप ! अपरे स्वभावं प्रकृतिपुरुषयोः स्वरूपान्यथाभावस्वभावा-न्यथाभावरूपपरिणामस्वभावं वदन्ति। एके कालं सत्त्वादिगुणक्षोभहेतुं कालं वदन्ति। परे पुनः दैवं विधिम्। अपरे उत अपरे पुन. पुंसः परमपुरुषस्य कामं सङ्कल्पं वदन्ति। अयमेव पक्षः श्रेयान्। पुण्यापुण्यरूपस्य कर्मणः तज्जन्यादृष्टस्यापि भगवन्निग्रहानुग्रह-रूपत्वेन तत्सङ्कल्पानतिरिक्तत्वात्, कालस्वभावयोरपि तत्सङ्कल्पायत्तत्वात्। पुंसो जीवस्य काम इति व्याख्यानं त्वयुक्तं, दुःखविषयस्य कामानुपपत्तेः। अतो यथोक्तार्थ एव साधुः ॥ २२ ॥

पुंसः काममिति पक्षस्यैव साधुत्वं ज्ञापयन् कामस्य दुर्ज्ञेयत्वाह - **अव्यक्तस्येति**। हे तात ! अव्यक्तस्य व्यक्तैरिन्द्रियैर्न व्यज्यत इत्यव्यक्तः अत एवाप्रमेयस्य देशादिभिरपरिच्छिन्नस्य ऐन्द्रियकं हि सर्वं देशकालादिभिः परिच्छिद्य गृह्यते। अनेन विशेषणद्वयेन प्रकृतिपुरुषवैलक्षण्यसिद्धिः, प्रकृतेव्यक्तत्वात् पुरुषस्याणुत्वात्। उभयवैलक्षण्यापादकं विशेषणान्तरमाह नानाशक्तीनां विविधशक्तीनां ''पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'' (श्वेता.उ. 6-8) इति श्रुतेः। उदयः अभिव्यक्तिर्यस्मात्। तस्य

---

1. V °दि 2. V °र्तृह° 3. B, J, V, Va omit अत्र 4. V स्मारयति 5--5. A, B, T omit 6. A, B, T °हा° 7. A, B, T omit लीलं

भगवतः चिकीर्षितं कर्तुमिच्छाविषयं, कथम्भूतम् ? स्वसम्भवं स्वस्य लोकस्य सम्भवं जगदुत्पत्तिरूपं, सम्भवग्रहणं संहारादीनामप्युपक्षणम्। अद्धा तत्त्वतः को लोको वेद न कोऽपीत्यर्थः। प्रकृतिपुरुषविलक्षणस्यानन्तविविधशक्तेः परमपुरुषस्य कर्तव्यतासङ्कल्पविषयं जगदुत्पत्तिस्थितिसंहारादिरूपं व्यापारम्, एवंविध इति तत्त्वतः कोऽपि न जानातीत्यर्थः। तथा च श्रूयते - "क इत्था वेद यत्र सः, क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः" (ऋक्.सं. 10-129-6) इत्यादिका। अत्र भगवत्स्वरूपस्यैवातीन्द्रियत्वात् तत्सङ्कल्पविषययोः सुतरां दुर्विज्ञेयत्वज्ञापनायाव्यक्तस्येत्युक्तम्॥ २३॥

एवमुपपादितं भगवत एवोत्पत्तिमरणादिनिमित्तत्वं प्रकृते उपसंहरति - **न चैत** इति। हे पुत्रक ! एते धनदस्य कुबेरस्यानुगा भृत्याः त्वद्भ्रातृहन्तारो न भवन्ति, किन्तु पुंसः कर्मवश्यस्य विसर्गाऽऽदानयोः उत्पत्तिमरणयोः दैवमीश्वर एव हि कारणम्॥ २४॥

नन्वीश्वरश्चेदुत्पत्त्यादिकारणं तर्हि जीववत्सोऽपि सत्त्वादिगुणविशिष्टत्वात् तत्प्रयुक्तजगद्व्यापाररूपक्रियाश्रयत्वाच्च गुणकर्मभिः बध्येत तत्राह - **स इति**। यद्यपि स एवेश्वर एव[2] विश्वं सृजति अवति रक्षति हन्ति च, तथापि अनहङ्कारात् देहात्मनोस्तादात्म्याभिमानोऽहङ्कारः तदभावात् गुणकर्मभिः गुणानां सत्त्वादीनां कर्मभिः गुणकार्यभूतैः कर्मभिर्नाज्यते न बध्यते। यद्यपि जगदुत्पत्त्यादीन् गुणकार्यभूतान् व्यापारान् करोति ईश्वरः, तथापि स्वशरीरभूत प्रकृतिपुरुषात्मकेषु देवादिपदार्थेषु स्वसङ्कल्पकृतोत्पत्तिस्थितिलयेषु [3]स्वतादात्म्याभिमानाभावात् स्वयमजहत्स्वभावत्वाच्च न कर्मभिर्बध्यते। जीवस्तु कर्मणा सङ्कुचितज्ञानत्वेन जहत्स्वाभाव्याद् देवादिशरीरेषु स्वतादात्म्याभिमानाच्च बध्यत इत्यर्थः॥ २५॥

**विज.** आयुरादिफलपाचकत्वेनान्तादिकर इत्युक्तं स्पष्टयति - **आयुष** इति॥ २१॥

बहवः कालकर्मादिकमस्योत्पत्त्यादेः कारणमिति सङ्गिरन्ते। तत्पदार्थतात्पर्यापरिज्ञानादिति सन्तोष्टव्यं, यतस्तत्तद्वस्तुषु स्थित्वा तत्तत्क्रियार्थप्रवर्तकत्वेन तत्तन्नाम्नाऽयमेवोच्यत इति भावेनाह - **केचिदिति**। केचिन्मीमांसकाः, अपरे चार्वाकादयः, एके पौराणिकादयः, परे मौहूर्तिकाः, अपरे वात्स्यायनकोविदाः 'कामकर्मस्वभावेषु' (सत्यसंहितायां) इति वचनात् अयमेव निश्चीयत इति॥ २२॥

कामकर्मादिशब्दानां कथं निर्वचनं, येन तेषां भगवद्विषयत्वं ज्ञायत इति तत्राह - **अव्यक्तस्येति**। प्रत्यक्षादिप्रमाणाविषयश्चेत् शून्यकल्पोऽयमित्यत उक्तं नानाशक्तीति। कर्मादिनानाशक्तीनामुदयो यस्मात् स तथोक्तस्तस्य। अनेन परिशेषप्रमाणसिद्धिं सूचयति चिकीर्षितं कर्तुमिष्टं[4] कर्म अस्य सम्भवमुत्पत्तिं निरुक्तिप्रकारं च को ब्रह्मा वेत्ति चेत् सोऽप्यद्धा न जानातीत्यर्थः॥ २३॥

---

1. A, B, T omit स्व 2. A, B, T omit एव 3. A, B, T omit स्व 4. A, B °क्त°

एवं सर्वत्र हरेः स्वातन्त्र्यमुपपाद्य फलितमाह - **नैवेति**। विसर्गाऽऽदानयोर्मरणजन्मनोः विसर्गस्यादानस्याङ्गीकारस्य चेति वा। हिशब्दो हेतौ॥ २४॥

किं तद्दैवमित्यतो यज्जगत्कारणं ब्रह्म तदेवात्रोक्तमिति सृष्ट्यादिविशेषणैः विशिनष्टि - **स एवेति**। कर्दमक्षेत्रप्रवृत्तदेवदत्तवत् अस्य गुणकर्मलोपो नास्ति। अहं कर्तेत्यभिमानाभावादित्याह - अथापीति॥ २५॥

**एष भूतानि भूतात्मा भूतेशो भूतभावनः।**
**स्वशक्त्या मायया युक्तः सृजत्यत्ति च पाति च॥ २६॥**

**तमेव मृत्युममृतं तात दैवं सर्वात्मनोपेहि[1] जगत्परायणम्।**
**यस्मै बलिं विश्वसृजो हरन्ति गावो यथा वै नसि दामयन्त्रिताः॥ २७॥**

**यः पञ्चवर्षो जननीं त्वं विहाय मातुः सपत्न्या वचसा भिन्नमर्मा[2]।**
**वनं गतस्तपसा प्रत्यगक्ष माराध्य लेभे मूर्ध्नि पदं त्रिलोक्याः॥ २७॥**

**तमेवमङ्गा[3]त्मनि मुक्तविग्रहे[4] व्यपाश्रितं निर्गुणमेकमक्षरम्।**
**आत्मानमन्विच्छ[5] विमुक्त[6]मात्मदृक्[7] यस्मिन्निदं[8]भेदमसत्प्रतीयते॥ २९॥**

**त्वं प्रत्यगात्मनि तदा भगवत्यनन्त आनन्दमात्र उपपन्नसमस्तशक्तौ।**
**भक्तिं विधाय परमां शनकैरविद्या ग्रन्थिं विभेत्स्यति ममाहमिति प्ररूढम्[9]॥ ३०॥**

**श्रीध.** अनहङ्कारत्वे हेतुमाह - **एष इति**॥ २६॥

सत्यमीश्वर एव कर्ता, तथापि अहङ्कारादि[10]मत्तया न त्यक्तुं शक्यमिति चेत् अत आह - तमेवेति चतुर्भिः। मृत्युमभक्तानां भक्तानां **तमेवेति** चतुर्भिः। मृत्युमभक्तानां भक्तानां त्वमृतम् उपेहि शरणं गच्छ। तमेवेत्यवधारणे हेतुः। यस्मै नसि नासिकायां दामभिर्बद्धा गाव इव विश्वसृजोऽपि नामभिर्यन्त्रिता बद्धास्सन्तो बलिं हरन्ति तत्कारितं कर्म कुर्वन्तीत्यर्थः॥ २७॥

तदाराधनं च तव सु[11]शकमेवेत्याह - **य इति**। यः पञ्चवर्षः सुशकमेवेत्याह - य इति। यः पञ्चवर्षः स[12] त्वं यमाराध्य त्रिलोक्या

---

1. M, Ma, Ms ॰पैहि 2. M, Ma व॰ 3. A, B, G, I, J, T ॰न॰ 4. M, Ma, Ms ॰हैः 5. M, Ma, Ms ॰ष्य 6. V ॰क्त आत्यदृक् 7. W ॰न्यस्मि॰
8. M. Ma, Ms ॰दं भिन्न॰ 9. M, Ma ॰ढाम् 10. A. B, J, Va ॰दि मया 11. V सुकार॰ ; Va सुशक्य॰ 12. V सन्

मूर्ध्नि पदं स्थानं लेभे लब्धवानसि। इदानीं तमेव अन्विच्छ अवलोकयेत्युत्तरेणान्वयः। प्रत्यञ्चि [1]अक्षाणि इन्द्रियाणि[1] यस्मिन् तम्। क्रियाविशेषणं वा॥ २८॥

हरिं ध्यायन्तं प्रत्याह - **तमिति**। हे अङ्ग! ध्रुव! मुक्तविरोधे आत्मनि मनसि व्यपाश्रितम् अवस्थितं [2]परमात्मानम्[2] आत्मदृक् प्रत्यग्दृष्टिस्सन् [3]अन्विच्छ अवलोकय अन्वेषणं कुर्वित्यर्थः[3]। [4]इदम्भेदम्[4] [5]इति समस्तं पदम्[5]। अयं [6]दृश्यमानो[6] भेदो यस्मिंस्तदिदम्भेदमसदेव विश्वं यस्मिन् [7]अधिष्ठाने प्रतीयते॥ २९॥

तदन्वेषणफलमाह - **त्वमिति**। [8]त्वं तदा अन्वेषणकाल एव॥ ३०॥

**वीर.** एवं भ्रात्रादिशरीराणामुत्पत्तिमरणादिनिमित्तं निमित्तस्य च अनन्तविविधविचित्रशक्तियोगत्वम् अत एव नित्यमुक्तत्वं चाभिहितम्। अथ य एवम्भूतो भगवान् तमेव रागद्वेषादिभिर्विमुक्तस्त्वं सर्वात्मना भजस्वेत्याह - **एष** इत्यादिना। य एष भगवान् भूतात्मा भूतानां देवमनुष्यादीनामात्मा स किं जीवः? नेत्याह। भूतेशः ''ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति'' (भ.गी. 18-61) इत्युक्तरीत्या चिदचिदात्मकभूतानामन्तः - प्रविश्य तत्तत्कर्मानुरूपं नियन्ता न केवलं भूतेश एव, अपि तु तत्कारणं चेत्याह भूतभावनः। भूतानि भावयति उत्पादयतीति भूतभावनः, यद्वा भूतानि भावयति सृष्ट्यादिभिः सत्तादिमन्ति करोतीति भूतभावनः तथा भूतानां सत्तास्थितिप्रवृत्तिहेतुरित्यर्थः। कारणत्वमपि न निष्कृष्टस्वरूपेण अपि तु विशिष्ट[9]वेषेणेत्याह। स्वशक्त्या कार्योपयोगिस्वापृथक्सिद्ध-विशेषणभूतया मायया युक्तः ''माया वयुनं ज्ञानम्'' (वेद.नि. 3-9) ज्ञानपर्यायोऽप्यत्र मायाशब्दो जीववाची। अनेन निर्विकारत्वश्रुतिविरोधोऽपि परिहृतः। विकाराणां [10]प्रकृतिपुरुषगतत्वात् भूतानि सृजति अत्तिसंहरति पाति रक्षति च॥ २६॥

तमुक्तविधं मृत्युमभजतां बन्धकं भजतां तु अमृतं मोचकं दैवं स्वतेजसा दीप्यमानं जगतां परमयनं प्राप्यं प्रापकमाधारं च सर्वात्मना सर्वप्रकारेण मनोवाक्कायैरित्यर्थः। सर्वात्मकपरब्रह्मभावेनेति वा। यद्वा प्राप्यं प्रापकमाधारश्चेति बुद्ध्या एतदेव जगत्परायणमित्यनेनाभिप्रेतम्। उपेहि शरणं गच्छ। युक्तं चैतदित्याह। यस्मै भगवते विश्वस्रष्टारश्चतुर्मुखमरीच्यादयः बलिं पूजां हरन्ति कुर्वन्ति। विश्वसृजो हरन्ति इत्यनेन सर्वेश्वरेश्वरत्वमुक्तं, विश्वसृजो हि सर्वेषामीश्वरास्तेषामपि पूज्य इति तत्सिद्धिः। ननु विश्वसृजो हरन्तु बलिं, तस्यापि गोब्राह्मणादिवत् पूज्यत्वादित्याशङ्कां निराकर्तुं दृष्टान्तमाह। गावो बलीवर्दाः यथा नसि नासिकायां

---

1--1. B, J, Va omit 2--2. B, J, V, Va omit 3--3. A, B, J, Va omit 4--4. B, J. Va omit 5--5. B, J. V. Va omit
6--6. B, J., Va omit 7. B, J, V, Va omit अधिष्ठाने 8. V omits त्वं 9. A, B, T विशेषेणे° 10. A, B, T omit प्रकृति

दाम्ना सूत्रेण यन्त्रिताः प्रोताः पुरुषस्य कर्म कुर्वन्ति[1] तथा तद्वशं गता बलिं हरन्ति। अनेन सर्ववशित्वं सिद्धं, यस्य वशे सर्वं वर्तते स वशीत्युच्यते। तथा च श्रूयते "सर्वस्य वशी सर्वस्येशानः एष भूताधिपतिः एष भूतपालः एष सेतुर्विधरणः एषां लोकानामसम्भेदाय" (बृह.उ. 4-4-22) "न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गं स कारणं करणाधिपाधिपो, न चास्य कश्चिज्जनिता न चाधिपः" (श्वेता.उ. 6-9) इति। यो यदधीनस्तस्य तदनुवर्तनं युक्तमिति भावः ॥ २७॥

[2]तव तु विशिष्य तद्भजनमेव युक्तमाबाल्यं तत्रैवाभ्यस्तत्वादित्याह - **य इति**। यो भवान् पञ्चवर्षाणि अस्य, पञ्चवर्षस्सन् सपत्न्या मातुर्वचसा भिन्नं मर्म हृदयं यस्य सः, जननीं सुनीतिं विहाय वनं प्रविष्टः तत्र प्रत्यगक्षं प्रत्याञ्चि अक्षाणीन्द्रियाणि यस्मिन् कर्मणि यथा तथा अव्यापृते[3]न्द्रियमित्यर्थः। क्रियाविशेषणमिदं यं भगवन्तमाराध्य विलोक्य मूर्ध्नि उपरिष्टात् पदं स्थानं लेभे लब्धवान् ॥ २८॥

तमेवाऽऽत्मानं परमात्मानम् आत्मदृक् तच्छरीरभूतजीवात्मदर्शी अन्विच्छ अनुवर्तस्वेत्यन्वयः। अन्वेषणप्रकारमेवाह - अङ्ग ! हे ध्रुव ! यस्मिन् जीवात्मनि इदमसत् देवमनुष्यादिरूपं सततपरिणामि· वस्त्वसच्छब्दावाच्यं सततपरिणामिनो वस्तुन· उत्तरोत्तरावस्थाप्राप्तौ पूर्वपूर्वावस्थात्यागात् सर्वदा असदिति व्यपदेष्टुमनर्हत्वात्। तदुक्तं श्रीवैष्णवे पुराणे "मही घटत्वं घटतः कपाल· कपालिका चूर्णरजस्ततोऽणुः। जनैः स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु॥ यद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत्। (विष्णु.पु. 2-12-42 & 45) "अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते ॥ तत्तु नाशि न सन्देहो नाशिद्रव्योपपादितम् ॥" (विष्णु.पु. 2-14-24) इति। विश्वं प्रतीयते असदित्यस्य विशेषणत्वे तु अस्मिन् जीवे इदं विश्वमसत् प्रतीयते अविद्यमानमेव प्रतीयते, स्वतो जीवे देवमनुष्याद्यात्मकं विश्वमविद्यमानमपि पुण्यापुण्यरूपकर्मणा प्रतीयते न तु मिथ्या प्रतीयते इत्यर्थः। तस्मिन् मुक्तविग्रहे निरवयवे आत्मनि जीवे व्यपाश्रितं व्यवस्थितं निर्गुणं निरस्तहेयगुणमेकं निस्समाभ्यधिकमक्षर निर्विकारं विमुक्तं नित्यमुक्तं तमात्मानं एवमुक्तवक्ष्यमाणप्रकारेण अन्विच्छेत्यर्थः॥ २९॥

ननु उपासित एव मया भगवान् किमधुना भजस्वेत्युच्यते इत्याशङ्कायाम् [4]अनिरस्ताहम्ममा[4]भिमानेन त्रिवर्गलिप्सुना त्वयोपासितो भगवान् अत एव प्राकृतं स्थानमगाः। इदानीं निर्हेतुकभक्तिं विधाय मोक्ष्यसीत्याह - **त्वमिति**। प्रत्यक् जीवः तस्यात्मनि जीवान्तरात्मनि प्रत्यक् आत्मा शरीरं यस्येति वा। पूर्णषाड्गुण्ये [5]अनन्ते त्रिविधपरिच्छेदरहिते आनन्दमात्रे आनन्दैकरसे न तु क्वापि जड इत्यर्थः। उपपन्नसमस्तशक्तौ उपगताशेषज्ञानबलक्रियादिशक्तौ परमपुरुषे त्वं परमाम् अहैतुकीम् अव्यवहितेत्युक्तविधां भक्तिं शनकैः समाहितचित्तः विधाय तदा ममाहमभिमानाभ्यां रूढमूलमविद्यात्मकं ग्रन्थिं विशेषेण निर्मूलं विभेत्स्यसि॥ ३०॥

1. A. B °न्तः 2. A, T भवतु 3. A, B, T °हु° 4--4. A, B, T मुनिराह ममा° 5. A, B, T omit अनन्ते

**विज.** अनेनापि गुणकर्मलेपः कथमुद्धाटित इति तत्राह - **एष इति**। स्वशक्त्या स्वाधीनया स्वरूपशक्त्या वा॥ २६॥

कार्यपदप्रयोगाभावान्नेदमनुष्ठातुं योग्यमित्याशङ्क्यैवंविधं दैवमिति गुणान्तरसमर्पणेनोपसंहरति - **तमेवेति**। अमृतं नित्यमुक्तं नसि नासिकायां, 'यन्त्र-बन्धन' इति धातुः, दम्ना यन्त्रिता बद्धाः॥ २७॥

श्रीनारायणप्रसादेनाऽवाप्तसमस्तसम्पदः तव तन्नियतभूतद्रोहो न घटत इति भावेनाह - **यः पञ्चवर्ष** इत्यादिना। सर्वप्राणिनः प्रत्यक् प्रतिगतमक्षमिन्द्रियं यस्य स तथा तम्। अनेन मया क्रियमाणं कर्म नाऽसौ पश्यतीत्येत्परिहृतम्॥ २८॥

विमुक्तविग्रहैर्योगिभिः व्यपाश्रितं निषेवितम्। अनेन भूतविग्रहोऽस्य प्रियो न भवतीत्युक्तम्। निर्गुणमावृत्तिशून्यम्। कुपितत्वात् पुनःप्रसादानभिमुखमित्यर्थः। भूतद्रोहे क्रुद्धस्यास्य तपसापि पुनःप्रसादापादनं दुष्करं तवेति ध्वनितम्। अनेन शब्दाद्यविषयं वा वागादिनापि प्रसादयितुं दुश्शकमित्यर्थः। कुतः निर्गुणमतीन्द्रियमिन्द्रियाविषयत्वादित्यर्थः। ''गुणस्त्वावृत्ति-शब्दादिज्येन्द्रियामुख्यतन्तुषु'' (वैज.को. 6-1-20) इति यादवः। एवं केवलमक्षरं मूलकारणमात्मानं परमात्मानं विशिष्टा मुक्तिः यस्मात् स तथा तम्। एवंगुणविशिष्टं हरिम् आत्मनि हृदि अन्विष्यालोक्य भजस्वेत्यन्वयः। तत्स्वरूपं कीदृशमिति न प्रश्नार्हः इति भावेनोक्तमात्मदृगिति। पूर्वमात्मानं दृष्टवानिति यत्तस्मात् कथमित्यत उक्तं यस्मिन्निति। असदस्वतन्त्रं भिन्नं पञ्चविधभेदोपेतमिदं चेतनाचेतनात्मकं विश्वं यस्मिन् यदाधारतया प्रतीयत इति॥ २९॥

ननु आत्मदर्शिनो मम संसारपाशच्छेदः किमिति नाभूदित्यतः तादृग्गुणानुपसंहृत्य बिम्बोपास्त्यभावादतस्तथोपास्तौ स स्यादिति भावेन तदुपास्तिप्रकारं विदधान आह - **त्वं प्रत्यगात्मनीति**। प्रत्यगात्मनि तवाभिमुखे बिम्बरूपे भक्तिमुपास्तिलक्षणां सेवां अन्यत्रानुपपन्ना अत्रोपपन्ना अविरुद्धाः समस्ता अस्थूलानण्वादिलक्षणाः शक्तयो यत्र स तथा तस्मिन्॥ ३०॥

**संयच्छ शेषं भद्रं ते प्रतीपं श्रेयसां परम्।**
**श्रुतेन भूयसा राजन्नगदेन यथाऽऽमयम्॥ ३१॥**

**येनोपसृष्टात्पुरुषाल्लोक उद्विजते भृशम्।**
**न बुधस्तद्वशं गच्छेदिच्छन्नभयमात्मनः॥ ३२॥**

**हेलनं गिरिशभ्रातुर्धनदस्य त्वया कृतम्।**
**यज्जघ्निवान् पुण्यजनान् भ्रातृघ्नानित्यमर्षितः॥ ३३॥**

**तं प्रसादय वत्साशु सन्नत्या प्रश्रयोक्तिभिः[1] ।**
**न यावन्महतां तेजः कुलं नोऽभिभविष्यति ।। ३४ ।।**

**मैत्रेय उवाच**

***इत्युक्तस्तं प्रणम्याऽऽह भगवंस्तेऽनुशासनम् ।**
**आतिष्ठे भ्रातृमात्रोर्मे शोचतः क्षम्यतामिति ।।**

**एवं स्वायम्भुवः पौत्रमनुशास्य मनुर्ध्रुवम् ।**
**तेनाभिवन्दितः साकमृषिभिः स्वपुरं ययौ ।। ३५ ।।**

इति श्रीमद्भागवते महापुराणे अष्टादश साहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
चतुर्थस्कन्धे एकादशोऽध्यायः ।। ११ ।।

**श्रीध.** उपदेशसारमाह - **संयच्छेति** द्वाभ्याम् । प्रतीपं प्रतिकूलम् । अगदेन औषधेन यथा रोगं नियच्छति ।। ३१ ।।

**येनेति** । येन रोषेण उपसृष्टात् व्याप्तात् ।। ३२ ।।

अन्यच्च त्वया कार्यमित्याह - **हेलनमिति** द्वाभ्याम् । यद्यतः [2-]पुण्यजनान्[-2] जघ्निवान् घातितवान् ।। ३३, ३४, ३५ ।।

इति श्रीमद्भागवते चतुर्थस्कन्धे
श्री श्रीधरस्वामि विरचितायां भावार्थदीपिकायां
व्याख्यायां एकादशोऽध्यायः ।। ११ ।।

**वीर.** यदर्थं तत्त्वोपदेशः तमाह - **संयच्छेति** । श्रेयसां पुरुषार्थानां परं केवलं प्रतीतं प्रतिकूलं रोषं भूयसा श्रुतेन तत्त्वश्रवणेन अगदेन औषधेन आमयं रोगं यथा तथा उपसंहरेत्यर्थः ।। ३१ ।।

रोषस्य श्रेयः प्रतीपत्वमेव प्रपञ्चयति - **येनेति** । येन रोषेण उपसृष्टात् व्याप्तात् पुरुषाल्लोकः भृशं नितरामुद्विजते बिभेति । लोकोद्वेजनात् अधर्मात् पुरुषार्थनाश इति भावः । आत्मनः स्वस्याभयं निश्श्रेयसमिच्छन् बुधो विद्वान् तद्वशं [3]रोषवशं न गच्छेत् न प्राप्नुयात् ।। ३२ ।।

किञ्च गिरिशस्य रुद्रस्य यो भ्राता [4-]तस्य कुबेरस्य[-4] हेलनमवमानं त्वया कृतं यत् यतः पुण्यजनान् यक्षान् भ्रातृघ्नानिति बुद्ध्या

1. B °णा°  * An additional verse is found in M, Ma, Ms only and the commentary on the same can be found at its proper place
2--2. A, B, J, Va omit  3. A, B, T omit रोषवशं  4--4. A, B, T कुबेरः तस्य

अमर्षितः क्रुद्धः जघ्निवान् घातितवान् । भ्रातृघ्नानित्यस्येतिशब्दान्वये प्रथमान्तत्वं यद्यपि न्याय्यं भ्रातृघ्ना इति बुद्ध्या जघ्निवान् इति क्रोडीकारात्, तथापि पुण्यजनविशेषणत्वदृष्ट्या द्वितीया प्रयुक्ता ।। ३३ ।।

तं धनदं सन्नत्या[1] प्रणामेन प्रश्रयोक्तिभिः[2] विनयवाग्भिश्च हे वत्स ! आशु प्रसादय प्रसन्नं कारय । महतां धनदादीनां तेजः अस्माकं कुलं यावन्नाभिभविष्यति न नाशयति[3] ततः पूर्वमेवाशु प्रसादयेत्यर्थः ।। ३४ ।।

मनूक्तिमुपसंहरति मुनिः[4] - **एवमिति** । स्वायम्भुवो मनुः पौत्रं ध्रुवमेवमुक्तप्रकारेणानुशास्य आदिश्य तेन ध्रुवेणाभिवन्दितः[5][6] ऋषिभिस्सह स्वपुरं ययौ ।। ३५ ।।

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवत चन्द्रचन्द्रिकायां

व्याख्यायां एकादशोऽध्यायः ।। ११ ।।

**विज.** तत्र प्रथमसाधनमिदमित्याह - **संयच्छेति** ।। ३१ ।।

श्रेयसां प्रतिपत्वं कथमत्राह - **येनेति** । येन रोषेणोपसृष्टादुपरक्तात् सज्जनानुग्रहस्यापेक्षितत्वाल्लोको ज्ञानिजनोऽत्रोच्यते, 'लुक्-प्रकाश' इति धातोः ।। ३२ ।।

वैश्रवणस्य सत्स्वेकत्वेनास्यावज्ञाननिमित्तरोषोऽपि परिहरणीय इत्याह - **हेलनमित्यादिना** । वैश्रवणे हेलनमपि शिवावज्ञानं स्यात् तदवज्ञानेन श्रीनारायणविषयज्ञानमपि नोदेतीत्यभिप्रयेणोक्तं - गिरिशभ्रातुरिति । अत एव महतामिति बहुवचनम् ।। ३३, ३४, ३५ ।।

ध्रुवस्य च सत्तमत्त्वात् गुर्वनुशासनानुज्ञानं तथा मनोश्च पौत्रमभिनन्द्य स्वपुरगमनं वक्ति इत्युक्त इति । शोचत इत्यनेन पूर्व वैरानुसन्धानेन ध्रुवेण तूष्णीं स्थितं भ्रातृमातृमरणप्रतिक्रियां कर्तुं समर्थेनापीति जनश्रुतिं परिहर्तुमिव यक्षवधे प्रवृत्तमिति ध्वनयति ।।

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीविजयध्वजतीर्थकृतायां पदरत्नावत्यां

टीकायां एकादशोऽध्यायः ।। ११ ।।



1. A, B, T प्रणयेन 2. A, B, T प्रियोक्तिभिः 3. A, B, T नङ्क्ष्यति 4. A, B, T omit मुनिः 5. A, B, T नन्दितः 6. A, B, T add अभिमतः

# द्वादशोऽध्यायः

## मैत्रेय उवाच

ध्रुवं निवृत्तं प्रतिबुध्य वैशसा दपेत[1]मन्युं भगवान् धनेश्वरः ।
तत्राऽऽगतश्चारणयक्षकिन्नरैः संस्तूयमानोऽभ्यवद त्कृताञ्जलिम् ।। १ ।।

## धनद उवाच

भो भो[2] क्षत्रियदायाद परितुष्टोऽस्मि तेऽनघ !
[3]य स्त्वं पितामहादेशा द्वैरं दुस्त्यज मत्यजः ।। २ ।।

न भवा न्नवधी द्यक्षा न्न यक्षा भ्रातरं तव ।
काल एव हि भूतानां प्रभु रप्ययभावयोः ।। ३ ।।

अहं त्व मित्यपार्था धीरज्ञाना त्पुरुषस्य हि ।
स्वाप्नी वा[4]ऽऽभात्यतद्ध्या[5]ना द्यया बन्धविपर्ययौ[6] ।। ४ ।।

तद्गच्छ ध्रुव[7] भद्रं ते भगवन्त मधोक्षजम् ।
सर्वभूतात्मभावेन सर्वभूतात्मविग्रहम् ।। ५ ।।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

द्वादशे धनदेनाऽभिनन्दितः पुर मागतः । यज्ञै रिष्ट्वा हरेः स्थान मारुरोहेति कीर्त्यते ।।

ध्रुवमिति । वैशसात् वधात् निवृत्तं ध्रुवं[8] ज्ञात्वा ।। १ ।।

**भो भो** इति । हे क्षत्रियदायाद ! क्षत्रियपुत्र ! अत्यजः त्यक्तवानसि ।। २ ।।

न च वैरस्य कारण मस्तीत्याह - **न भवानिति** । अप्ययभावयोः मृत्युजन्मनोः ।। ३ ।

---

1. M, Ma, Ms मन्युः  2. A, B, G, I, J, T भोः  3. W यत्त्वं  4. M, Ma °व  5. M, Ma, Ms भात्यनुध्या°  6. M, Ma, Ms °यः  7. W नृप
8. A, B, J, Va omit ध्रुवं

कथं तर्हि [1]अस्य अहं हन्तेत्यादि बुद्धिः तत्राह - **अहमिति**। आभाति प्रकाशते जायत इत्यर्थः। अतद्ध्यानात् [2]देहानुसन्धानात् यया धिया [3-]कर्मात्मको[-3] बन्धः विपर्ययो दुःखादिश्च ॥ ४ ॥

**तदिति**। तत्तस्माद्गच्छ गत्वा च भगवन्तं भजस्वेत्युत्तरेणान्वयः। सर्वभूतात्मको विग्रहो यस्य तम् ॥ ५ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं पितामहेन स्वायम्भुवेनानुशिष्टः [4]औत्तानपादिः पुण्यजनवधा न्निवृत्तः कुबेरा ल्लब्धवरः स्वधर्माराधितगोविन्दो गुप्ताखिलक्षितिमण्डलो लब्धध्रुवक्षिति [5]र्बभूवेत्याह मुनिः [6]द्वादशे **ध्रुवमिति**। स्वायम्भुवोपदेशेनापगतक्रोधम् [7-]अत एव[-7] वैशसात् [8-]पुण्यजनानां[-8] वधा न्निवृत्तं ध्रुवं प्रतिबुद्ध्य ज्ञात्वा भगवान् धनेश्वर स्तत्र ध्रुवसन्निधौ आगतः चारणादिभिः संस्तूयमानः बद्धाञ्जलिं ध्रुव मभ्यवदत् उवाच ॥ १ ॥

[9]उक्ति मेवाऽऽह - **भो भो** इति षड्भिः। हे क्षत्रियदायाद ! क्षत्रियपुत्र ! [10]ध्रुव ! क्रोधत्याग निमित्तहर्षातिशयात् द्विरुक्तिः, हे अनघ ! यक्षवधनिमित्तपापरहित ! ते तुभ्यं परितुष्टोऽस्मि। कुतः ? यद्यस्मात् पितामहस्य स्वायम्भुवस्यादेशा दनुशासनात् दुस्त्यजमपि वैर मत्यजः त्यक्तवानसि ॥ २ ॥

ननु नाऽह मनघः पुण्यजनहननकर्तृत्वनिमित्तपापसम्बन्धात् तत्राऽऽह - नेति। भवान् यक्षान् न हतवान्, नाऽपि यक्षा स्त्वद्भ्रातरं हतवन्तः। कुतः ? हि यस्मात् भूताना मप्ययभावयोः मरणोत्पत्त्योः कालः [11]कालशरीरक ईश्वर एव प्रभुः [12-]समर्थः[-12] कारण मित्यर्थः ॥ ३ ॥

ननु हन्तृत्वं तत्प्रयुक्तस्वेदश्रमादिकं च मया यक्षैश्चापरोक्ष मनुभूयमान [13]मपह्नुत्य ईश्वर एव कथं हन्ता इत्युच्यते तत्राह - **अहं त्वमिति**। पुरुषस्याज्ञानात् देहविलक्षणात्मयाथात्म्यज्ञानाभावात् अतत् देहः तस्य ध्यानात्। असद्ध्यानादिति पाठेऽप्यय मेवार्थः। अहं त्वमिति अत्र हन्तेत्यध्याह्रियते। सामर्थ्यात् देवादि देहेषु तत्संसृष्टेषु जीवेषु च अहं हन्ता त्वं हन्ता इत्येवंरूपा अत एवाऽपार्था अर्थशून्या। अहं त्व मिति प्रतीतौ योऽर्थो विषयः प्रत्यग्रूपः तद्रहिता हन्तेति प्रतीतौ योऽर्थो विषयः तद्रहिता च अन्यथाज्ञानविपरीतज्ञानरूपेति यावत्, "[14]धीः बुद्धिः स्वाप्नीव स्वाप्नधीरिव आभाति। धर्म्यन्तरे धर्मान्तरप्रतीति रन्यथाज्ञानं, यथा पीतः शंख इति शुक्ले पीतिम्नः प्रतीतिः। धर्म्यन्तरस्य धर्म्यन्तरत्वेन प्रतीति र्विपरीतज्ञानं - यथे दं रजत मिति। शुक्तित्वाश्रयस्य

1. A, B, J, Va omit अस्य 2. V देहात्मानु° 3. B, J, Va omit, V कर्मसम्बन्धः 4. A, B, T ध्रुवः 5. A मनुः 6. A, B, T °शेन 7--7. A, B, T मनूप 8--8. A, B, T यक्षाणां 9. A, B, T उक्त° 10. W omits ध्रुव ! 11. W omits क 12--12. W omits 13. A, B, T °हृत्य 14. A, B, T omit धीः

धर्मिणो रजतत्वाश्रयत्वेन प्रतीतिः। हन्ताऽहमितिज्ञानं तु उभयविधमपि अहमर्थस्य देहरूपधर्मिणोऽहमर्थात्मरूपधर्म्यन्तरत्वेन प्रतीतेः विपरीत ज्ञानरूपत्वम्। अहन्तरि आत्मनि देहे च हन्तृत्वादिरूप धर्मान्तरप्रतीतेः अन्यथाज्ञानरूपत्वं च आभाति प्रतीयत इत्यर्थः। प्रतीतिः प्रमित्यप्रमितिसाधारणं ज्ञानम्। आत्मनोऽहन्तृत्वादिकं भगवता गीतं य एनं वेति हन्तारं यश्चैनं मन्यते हतं, उभौ तौ न विजानीतो नाऽयं हन्ति न हन्यते॥'' (भ.गी. 2-19) इति यद्यपि अहन्तु रात्मनोऽज्ञाना द्धन्तृत्वा-दिप्रतीतिमात्रं तथाऽपि देहस्य तदस्त्ये वेति चेत्, मैवं, देहस्याऽपि नित्यं जातमृतस्य तदभावात्। तथा चोक्तम् - ''अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्। तथाऽपि त्वं महाबाहो! नैनं शोचितु मर्हसि॥'' (भ.गी. 2-26) नित्यं मृत मिति हेतुगर्भं नित्यं मृतत्वात् पुन रस्य मरणकर्तृत्वकर्मत्व[1] प्रयुक्तशोको न कार्य इत्यर्थः। एवं च हननकर्तृत्व कर्मत्वानाश्रययो र्देहात्मनो र्हन्तृत्वादिबुद्धि रन्यथाज्ञान विपरीतज्ञान जनकानाद्य विद्यात्मकाज्ञान कार्यत्वात् स्वाप्नबुद्धिरिव बाधितविषयेति भावः। अज्ञानस्यानात्मन्यात्मबुद्धिरूप विपरीतज्ञानजनकत्व मुक्तम् - ''अनात्मन्यात्मबुद्धि र्या अस्वे स्वमिति या मतिः। अविद्यातरुसम्भूतं बीज मेत द्द्विधा स्थितम्॥'' (विष्णु.पु. 6-7-11) इति। अत्र स्वाप्नीवापार्था भातीत्यनेन दृष्टान्तेन धियो बाधितविषयत्वं विवक्षितम्। विषयस्याऽपि बाधो नाम तत्र प्रवृत्तिप्रतिबन्ध एव न त्वसत्यत्वं दृष्टान्त दार्ष्टान्तिकयो रुभयो रपि ज्ञानतद्विषययोः पारमार्थ्यात् तत्र यथा स्वाप्नानां गजतुरङ्गादीनां ''न तत्र रथा न रथयोगा न पन्थानो भवन्ति। अथ रथान् रथयोगान् पथः सृजते'' (बृह.उ. 4-3-10) इति श्रुत्युक्तरीत्या[2] ईश्वरसृष्टानां स्वप्नद्रष्ट्रेकानुभाव्यानां तत्कालमात्रावसायिनां परमार्थाना मपि तेषु क्षणिकत्वेन गजतुरगाद्यर्थिनः प्रवृत्तिप्रतिबन्धरूपो बाधः। एवं देहे आत्मभ्रान्तिनिमित्तात्मोपा दित्सया प्रवर्तितु मिच्छोः प्रवृत्तिप्रतिबन्धरूपो बाधः, आत्मनि देहे च हन्तृत्वादिनिमित्तशोकादौ प्रवृत्ति प्रतिबन्धरूपो बाध इत्युभयत्रानुगतोऽर्थः क्रोडीकर्तव्यः। देहात्मबुद्धिः स्वाप्नधीवन्न तात्त्विक सुखदुःखादिमात्रहेतु रपि तु उत्तरोत्तर जन्ममरणादिरूप संसृतिहेतुत्वेन महाऽनर्थकरी चेत्याह - यथेति। यथा अहं त्वमिति बुद्ध्या बन्धः जन्ममरणादिरूपः संसारः तत्प्रयुक्तो विपर्ययः स्वाभाविकापहतपाप्मत्वाद्याकार तद्विपरीतानपहतपाप्मत्वाद्याकारश्च भवति इत्यर्थः। अयं भावः - यद्यप्यपरोक्षं त्वया यक्षैश्चानुभूयते, हन्तृत्वादिकं तत्प्रयुक्तस्वेदश्रमादिकं च, तथाऽपि देहात्मनो रुभयो रपि ''हन्ता चे न्मन्यते हन्तुम्'' (कठ.उ. 2-19) ''य एनं वेत्ति हन्तारं'' (भ.गी. 2-19) ''अथ चैनं नित्य जातम्'' (भ.गी. 2-26) इत्यादिप्रमाणैः हन्तृत्वादिबुद्धे रज्ञानमूलत्व प्रतिपादनात्। ''अहं कृत्स्नस्य जगतः प्रभवः प्रलय स्तथा'' (भगी. 7-6) इत्यादिभि रीश्वरस्यैव कालशरीरकस्य हन्तृत्वप्रतिपादनाच्च स्वेदश्रमादेश्च सद्वारकतयापीश्वर एव ''काठिन्यवान् यो बिभर्ति तस्मै भूम्यात्मने नमः'' (विष्णु.पु. 1-14-28) इत्युक्तभूमिद्वारक काठिन्यवदुपपत्तेः न कोऽपि प्रमाणबाध इति॥ ४॥

---

1. A. B. T omit कर्मत्व 2. A. B. T श्रुतेः

तत्तस्मात्कालशरीरकस्य भगवत एवोत्पत्ति मरणादिहेतु त्वात् तमेव भगवन्तं सर्वाणि भूतानि पृथिव्यादीनि आत्माजीवश्च विग्रहः शरीरं यस्य त मधोक्षजम् । सर्वभूतात्मविग्रह मित्यनेन यक्षेष्वपि भगवदात्मकत्वबुद्धिः कार्येति विवक्षितम्, भजस्वे त्युत्तरत्रान्वयः । अभवाय मुक्तये हे ध्रुव ! ते तुभ्यं भद्रं मङ्गल मस्तु । गच्छ गृहान् प्रति इति शेषः । भजन प्रकार माह सर्वभूतात्मभावेन । चिदचिच्छरीरकत्वेन प्रकारेण अधोक्षजम् अधः कृताः परावृत्ताः अक्षजाः इन्द्रिय वृत्तयो यस्मात् तमिन्द्रियागोचर मित्यर्थः ॥ ५ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

साधनासामग्र्यां भगवत्प्रसादात् स्वरूपानन्दानुभवलक्षणो मोक्षोऽपि तत्तद्योग्यतानुसारेण प्राप्यते पुरुषै रिति निर्दिश्यतेऽस्मिन्नध्याये । तत्रादौ ध्रुवकृतापराधं क्षान्त्वा वैश्रवणेन ध्रुवाय वरप्रदानप्रकारं वक्ति - **ध्रुवं निवृत्त** मित्यादिना । वैशसात् युद्धात् ॥ १ ॥

परितोषहेतुमाह - यस्त्वमिति ॥ २ ॥

स्वस्य मनो श्चैकमत्यं व्यनक्ति - **न भवानिति** । अप्ययभावयोः मरणजन्मनोः ॥ ३ ॥

नन्वहं मच्छत्रू नवधिषं न त्व मेतदकार्षी रिति प्रदर्शनं कथ मत्राह - **अहं त्वमिति** । पुरुषस्य परमेश्वरस्य कर्तृत्वाज्ञाना दहं त्वं कर्तेति धी रपार्था भ्रान्ता भाति ''नाऽहं कर्ता न कर्ता त्वं कर्ता यस्तु स्वयं प्रभुः'' (मोक्षधर्मे) इत्यनेन परमेश्वरकर्तृत्वस्य प्रामाणिकत्व प्रतीतेः । कथमिव ? स्वाप्नीव यथा स्वप्ने जाग्रत्त्वबुद्धिः आत्मन्यविद्यमान कर्तृत्वाभिमाना दनर्थोपि स्यादि त्याह - अनुध्यानादिति । अनुध्यानात् पुनः पुन रात्मनि कर्तृत्वस्मरणात् यथा कर्तृत्वधिया सुखादिरूपस्याऽऽत्मनो बन्धेन पुत्रमित्रादिस्नेहबन्धेन विपर्ययो दुःखादि र्भवतीत्यत स्तादृशी बुद्धिः त्वया न कार्येति भावः ॥ ४ ॥

ननु जीवकृताकार्योपक्रमोपसंहारदर्शनात् कथं तस्य जीवस्य कर्तृत्वाभाव इत्याशङ्क्य कर्तृत्वादौ नियमाभावात् तद्दत्तमेव कर्तृत्वं न मम स्वतन्त्रकर्तृत्वमिति निश्चित्य तत्क्रियाविशिष्टं भगवन्तं भजस्वेत्याह - **तद्गच्छेति** । सर्वभूताना मात्मभावेन कर्तृत्वदानादानयोः कर्ता परमात्मेति स्नेहलक्षणया बुद्ध्या सर्वभूतेष्वात्मा विग्रहो ज्ञानादिगुणपूर्णा मूर्ति र्यस्य स तथा तं, यद्वा सर्वभूताना मात्मनि देहे विग्रहः प्रादेशत्वादिलक्षणो यस्य स तथा तम् ॥ ५ ॥

**भजस्व भजनीयाङ्घ्रि मभवाय भवच्छिदम् ।**
**युक्तं विरहितं शक्त्या गुणमय्याऽऽत्ममायया ॥ ६ ॥**

**वृणीहि कामं नृप यन्मनोगतं मत्तस्त्वमौत्तानपदेऽविशङ्कितः ।**
**[1]वरं वरार्होऽम्बुजनाभपादयोः अ[2]नन्तरं त्वां वय मङ्ग शुश्रुम ॥ ७ ॥**

**[3-]मैत्रेय उवाच[-3]**

**स राजराजेन वराय चोदितो ध्रुवो महाभागवतो महामतिः ।**
**हरौ स वव्रेऽचलितां स्मृतिं यथा तरत्ययत्नेन दुरत्ययं तमः ॥ ८ ॥**

**तस्य प्रीतेन मनसा तां [4]दत्त्वैलबिल स्ततः**
**पश्यतोऽन्तर्दधे सोऽपि स्वपुरं प्रत्यपद्यत ॥ ९ ॥**

**अथा यजत यज्ञेशं क्रतुभि र्भूरिदक्षिणैः ।**
**द्रव्यक्रियादेवतानां [5]कर्म कर्मफलप्रदम् ॥ १० ॥**

**श्रीध. भजस्वेति ।** [6-]भजनीयौ अङ्घ्री यस्य तम् । गुणमय्या शक्त्या युक्तम् । किं तत्त्वतः ? न, आत्ममायया । अत स्तत्त्वतः तया विरहितं यद्वा शक्त्याऽऽत्ममायया [7]युक्तं विरहितं च सगुणनिर्गुण भेदेन[-6] ॥ ६ ॥

**वृणीहीति ।** काम मसङ्कोचेन अविशङ्कितो [8]निर्भयः अनन्तरमतिनिकटम् ॥ ७ ॥

**स इति ।** स वराय चोदित इत्यनुवादरूपं पृथग्वाक्यम् । अतः स वव्र इति तच्छब्दस्या पौनरुक्त्यम् ॥ ८, ९ ॥

**अथेति ।** [9-]द्रव्यादिशब्दैः यज्ञादिकर्म लक्ष्यते[-9] । द्रव्य क्रिया देवतानां कर्मसाध्यं [10]तत्फलरूपं कर्मफलप्रदं चेत्यर्थः ॥ १० ॥

**वीर.** नन्वधोक्षजश्चे त्कथं भजनीय स्तत्राह । भजनीयौ अङ्घ्री चरणौ यस्य तम् । अतीन्द्रियत्वेऽपि योगयुङ्मनसा ध्येयचरण मित्यर्थः । नन्वस्मदादिवत् तस्याऽपि संसारित्वात् कथ [11]मभवाय भजस्वे त्युच्यते तत्राह । भवच्छिदं भवं संसारं छिनत्तीति तं न केवलं स्वय मसंसार्येव अपि तु भजता मपि भवच्छिदित्यर्थः । ननु प्रकृतिसम्बन्ध तत्कार्यादिक मेव हि संसारः । एवं च जीववत् सर्वभूतात्मविग्रहमिति प्रकृतिसम्ब[12]न्धाभिधानात् कथं तस्य भवच्छित्त्वं तत्राह । सत्त्वा दिगुणमय्या शक्त्या कार्योपयुक्तस्वा-

---

1. M, Ma वरार्हणोस्यम्बुज; W परं परार्होऽम्बुज 2. M, Ma, Ms निरन्तरं 3--3. B omits 4. A, b, G, I, J, T दत्वैडबिड॰; M, Ma, दत्वै लिबिल॰
5. M, Ma, Ms कर्माऽकर्म; V कर्मसाध्यं फ॰ 6--6. V omits 7. V omits 8. V omits निर्भयः 9--9. B, J, V, Va omit 10. B, J, V, Va omit तत्
11. A, B, T ॰ममुमेव 12. A, B, T ॰न्धविधा॰

पृथक्सिद्धविशेषणभूतया आत्मनः स्वस्य सम्बन्धिन्या मायया प्रकृत्या युक्तं नियन्तृत्वेन युक्तं तया विशेषेण रहितं [1]तादधीन्येन तया विरहित मित्यर्थः। जीवस्तु मायापरवश इति संसारी, परमेश्वर स्तु तस्याः प्रभु रित्यसंसारीति भावः ॥ ६ ॥

एवं परमपुरुषार्थलक्षणमोक्षसाधक[2]त्वेन प्रकृतिपुरुष शरीरकस्य अमृतेश्वरस्य भगवतो भक्तिं विधेही त्युपदिश्य तन्मनः परिशीलनाय त्रिवर्गे तं प्रलोभयति - **वृणीहीति**। हे! औत्तानपादे! नृप! यन्मनोगतं मनीषितं तं कामं वर मविशङ्कितः असङ्कोचेन त्वं वृणीहि वरय, धर्मादीनां त्रयाणां मध्ये यत्तवेप्सितं तद्वृणीहीत्यर्थः। त्रिवर्गवरणं तवानुचितमिति व्यञ्जयन् विशिनष्टि। अङ्ग! हे ध्रुव! परं केवलं परै र्ब्रह्मादिभिरपि [3-]अर्ह्यते इत्यर्हः[-3] तस्य अम्बुजनाभस्य भगवतः पादौ तयोरनन्तरम् [4-]अव्यवहितं निरन्तरं भगवत्पादारविन्दसमाहितचित्तम्[-4] इत्यर्थः। त्वां शुश्रुम ॥ ७ ॥

एवं त्रिवर्गे प्रलोभितो महाभागवतो ध्रुवः त्रिवर्गमनादृत्य भगवच्चरणारविन्दभक्तिदार्ढ्य मेवाऽवृणो दित्याह मुनिः **स** इति। राजराजेन कुबेरेण वरवरणाय चोदितः प्रवर्तितः स ध्रुवः महाभागवतः [5-]भागवतश्रेष्ठः[-5] महामतिः [6-]धर्मादिष्वल्पस्थिर मतिः[-6] हेतुगर्भ मिदं विशेषणद्वयम्। भागवतानां त्रिवर्गस्य निरयप्रायत्वा दिति भावः। हरौ भगवति अचलितां दृढां स्मृतिं वव्रे। स वशाय चोदित इत्यनुवादरूपं पृथग्वाक्यम्, अतः सवव्र इति तच्छब्दस्य न पौनरुक्त्यम्। दृढायाः स्मृतेः फल माह। यतः अचलितायाः स्मृतेः दुरत्ययं दुरतिक्रमणीय मपि तमः तमःकार्यं संसारात्मकं बन्धं तरति व्यपोहति। [7-]"स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" (छान्दो.उ. 7-26-2) इति श्रुतेः[-7] ॥ ८ ॥

ऐलबिलः कुबेरः प्रीतेन मनसा तुष्टेन मनसा तां भगवत्यचलितां स्मृतिं दत्वा तस्य ध्रुवस्य पश्यत स्सतः अन्तर्दधे अन्तर्हितवान्। सोऽपि ध्रुवोऽपि स्वपुरं प्रत्यपद्यत अगात् ॥ ९ ॥

अथानन्तरं भूरिदक्षिणैः [8-]समग्रदक्षिणैः[-8] द्रव्यं पुरोडाशादि क्रिया ऋत्विग्व्यापारः देवता इन्द्रादिः तेषां सम्बन्धमात्रे षष्ठी। द्रव्यादिसम्बन्धिभिः द्रव्यादिसमवायरूपै रिति यावत्। क्रतुभिः कर्मसाध्यम् आराध्य मिति यावत्, न केवलं कर्मैव अपि तु कर्मणां फलप्रदं यज्ञाना मीशं प्रयोजयितारं चायजत इष्टवान्। काम कर्मफलप्रदमिति पाठे विहितप्रतिषिद्धयोः फल मित्यर्थः ॥ १० ॥

**विज.** प्रादेशाद्याकारत्वेनाऽवस्थानं कथं गुणशक्ति मन्तरेणेत्यत उक्तं - युक्तमिति। आत्मसामर्थ्याख्यया शक्त्या युक्तं गुणमप्यात्माधीनया मायया प्रकृत्या विरहितम् ॥ ६ ॥

---

1. A, J तदाधी॰ 2. A, B, T ॰न॰ 3--3. A, B, T अर्ह्यते पूज्येते इत्यर्हौ 4--4. A, B, T अव्यवहित चित्तम् 5--5. W omits 6--6. W omits 7--7. A, B, T omit 8--8. A, T, W omit

यद्यपि हरेः करुणावर्षधारापात्रत्वेनाऽन्यतः प्राप्यो वरः तव[1] नाऽस्ति तथाऽपि वैश्रवणो ध्रुवे प्रसन्नः किलेति द्योतनाय वरं वरयेति वक्ति - **वृणीहीति**। अन्यतः कथं वृणोमीत्यविशङ्कितः अम्बुजनाभस्य हरेः पादयोः सेवायां निरन्तरं सदातनं तदेकमानस मित्यर्थः ॥ ७॥

मुमुक्षुणाऽयमेव वरो वरणीय इति शिक्षणाय तस्य वरदानप्रकार माह - **स राजराजेनेति**॥ ८॥

ऐ[2]लबिलः इ[3]लिबिलापुत्रो वैश्रवणः ॥ ९॥

ब्रह्मज्ञानोत्पत्तये यज्ञ एव कर्तव्य इति प्रकटनाय तस्य यज्ञकरणप्रकार माह - अथेति। अथ विषयासक्तिं विहाय पुरप्राप्त्यनन्तरं मङ्गलं कर्म प्रारब्धवान्। किं तदि त्यत उक्तम् अयजतेति। द्रव्य क्रिया देवतानां कर्मविषयम् अकर्मफलप्रदं मोक्षाख्य फलप्रदम् ॥ १०॥

**सर्वात्मन्यच्युते[4] सर्वे तीव्रौघां भक्ति मुद्वहन्।**
**ददर्शाऽऽत्मनि भूतेषु तमेवाऽवस्थितं विभुम् ॥ ११॥**

**तमेवं[5] शीलसम्पन्नं ब्रह्मण्यं दीनवत्सलम्।**
**गोप्तारं धर्मसेतूनां मेनिरे पितरं प्रजाः ॥ १२॥**

**[6]षड्विंशद्वर्षसाहस्रं शशास क्षितिमण्डलम्।**
**भोगैः पुण्यक्षयं कुर्व न्न[7]भोगै रशुभक्षयम् ॥ १३॥**

**एवं बहु[8]सवं कालं महात्माऽविक[9]लेन्द्रियः।**
**त्रिवर्गौपयिकं नीत्वा पुत्रायाऽदान्नृपासनम् ॥ १४॥**

**मन्यमान इदं विश्वं मायारचित मात्मनि।**
**अविद्यारचित[10] स्वप्नगन्धर्वनगरोपमम् ॥ १५॥**

---

1. A, B तस्य 2. A, B ऐल° 3. A. B इल° 4. A, G, I, J °तेऽसर्वे 5. T, W °व 6. A, B, G, I, J, M, Ma, T षट्त्रिंशं 7. B °न्नशुभै°
8. Ms °तिथ° 9. A, B, G, I, J °च° 10. A, B, G, I, J, M, Ma, Ms, T, V °त°

**श्रीध. सर्वात्मनीति**। [1]सर्वस्याऽऽत्मनि असर्वे सर्वोपाधिविवर्जिते॥ ११-१२॥

**षडिति**। [2-]भोगै रैश्वर्यादिभिः[-2] अभोगै[3]र्यज्ञाद्यनुष्ठानैः॥ १३॥

**एवमिति**। बहवः सवा यागाः संवत्सरा वा यस्मिं स्तं कालं [4-]त्रिवर्गौपयिकं[-4] त्रिवर्गसाधकं[5] नीत्वा अविकलानि संयतानीन्द्रियाणि यस्य॥ १४॥

**मन्यमान** इति। इदं देहादि भगवन्माययाऽऽत्मनि स्वस्मिन् रचितं मन्यमानः। अत्राविद्यासृष्टिं दृष्टान्तयति - अविद्या रचितेति॥ १५॥

**वीर.** न केवलं यज्ञै रेवायजत अपि तु पितामहा द्युपदेशानुसारेण सर्वात्मकत्वेन भगवन्त[6]मलभत चेत्याह - **सर्वात्मनीति**। सर्वेषा मात्मनि अन्तः प्रविश्य प्रशासनेन धारके अत एव [7]सर्वे सर्वशब्दवाच्ये। सत्व इति पाठे शुद्धसत्त्वमय दिव्यमङ्गल विग्रहविशिष्ट इत्यर्थः। असत्त्व इति छेदे तु सत्त्वादिगुणरहित इत्यर्थः। अच्युते आश्रितव्रातरक्षैकदीक्षे भगवति तीव्रौघामविच्छिन्नप्रसरां भक्ति मुद्वहन् [8]कुर्वन् आत्मनि स्वस्मिन् सर्वेषु भूतेषु चाऽवस्थित मात्मत्वेनाऽवस्थितं भगवन्तं तमेवाच्युतं ददर्श साक्षात्कृतवान्॥ ११॥

प्रजाः शीलसम्पन्नं सुस्वभावसद्वृत्तादियुक्तं ब्रह्मण्यं ब्राह्मणसेवापरायणं दीनेषु वत्सलं दोषानवेक्षया रक्षकं धर्म मर्यादानां पालकं तमेव ध्रुवमेव पितरं मेनिरे पितर मिवाऽमन्यन्तेत्यर्थः॥ १२॥

भोगैः सुखानुभवैः पुण्यक्षयम् अभोगै र्दुःखानुभवैः अशुभक्षयं पापक्षयं च कुर्वन् पुण्यपापयोः [9]उभयोरपि स्वफल जननद्वारा ब्रह्मप्राप्तिविरोधित्वेन अनुभवेनैव पुण्यपापे विधुन्वन्नित्यर्थः। [10]षड्विंशद्वर्षसाहस्रं वर्षाणां सहस्राण्येव साहस्राणि ततः समाहारद्विगुः षडधिकविंशतिसहस्रसङ्ख्याकवर्षपर्यन्त मित्यर्थः। क्षितिमण्डलं शशस अनुशिष्टवान्॥ १३॥

बहुसवं बहवः सवाः [11-]यागोपलक्षिताः[-11] संवत्सरा यस्मिन् [12]तत् त्रिवर्गौपयिकं त्रिवर्गसाधनं काल मविकलेन्द्रियः अव्याहतेन्द्रियः तथाऽपि महात्मा जितेन्द्रियो नीत्वा पुत्राय नृपासनमदात्॥ १४॥

तत इदं देवमनुष्याद्यात्मकं विश्व मात्मनि जीवे मायारचितं [13-]प्रकृतिसंसर्गकृतं तदपि अविद्यारचितं[-13], अविद्याशब्दः तदन्यव्युत्पत्त्या प्रकृतिवाची, प्रकृतिपरिणामरूपं स्वप्नगन्धर्वनगरोपमं स्वप्नगन्धर्वनगर मिव स्थितं मन्यमानः॥ १५॥

---

1. V सर्वात्मनि 2--2. V omits 3. V °ज्ञानु° 4--4. B, J, V, Va omit 5. A, B, J, Va °च° 6. A, B, T °मभजत 7. W omits सर्वे
8. W omits कुर्वन् 9. A, B, T omit उभयोः 10. A, B, J षड्त्रिंश° 11--11. A, B, T omit 12. A, B, T तं 13--13. A, B, T omit

**विज.** सर्वात्मनि सर्वान्तर्यामिणि सर्वे ''पूर्णे विश्व पूर्ण स्तथा सर्व समस्त श्चाभिधीयते'' इत्यभिधानात्। ''सर्व शर्व शिवस्थाणु '' (विष्णु.सहस्र. 17) इति नामत्वात् सर्वनामसञ्ज्ञा नाऽस्ति। आत्मनि स्वस्मिन् भूतेषु चावस्थित तं विभु व्याप्त य पुरा तपसा प्रत्यक्षीचकार तमित्यर्थ ॥ ११ ॥

तस्य प्रजानुरञ्जनविधान माह - तमेव मिति ॥ १२ ॥

पुरा कतिपयै र्मासै रेव भगवदनुग्रह मवाप्याभीष्ट माप्तवतो ध्रुवस्य किमु वक्तव्य मेतै रिति भावेन तस्य क्षितिपालन-कालावधि माह - **षट्त्रिंशदिति**। प्रारब्ध पुण्यक्षय मशुभक्षय ज्ञानसामर्थ्यात् ॥ १३ ॥

बहुसव बहुतिथ मविकलेन्द्रियो वशीकृतेन्द्रिय जरसा चक्षुरादीन्द्रियवैकल्य[1] अन्धत्वादिलक्षण न प्राप्त इति वा। त्रयाणा वर्गाणा धर्मकामार्थाना मौपयिक मुपयोगसाधन देह नीत्वा देहयात्रा विधायेत्यर्थ ॥ १४ ॥

पुत्राय सिहासन दत्वा अय किमकार्षीत्, गृह एवाऽवस्थितश्चे द्वैराग्यादिसाधनह्रासेन लोकोपहासविषय स्या दित्यत स्वपुर विहाय देशान्तर गत इति वक्तव्यम्। अत क देश शुचितीर्थ मगमदिति तत्राह - **मन्यमान** इत्यादिना। स ध्रुव इद विश्व कालोपसृष्ट मियता कालेन नष्ट भवतीति मन्यमानो विशाला बदरिकाश्रमे स्यन्दमाना नदी प्रययौ इत्यन्वय । ''विशाला बदरी प्रोक्ता नगरी निम्नगा तथा'' इत्यभिधानम्। कीदृश विश्वम् ? आत्मन्याधारतया हरेर्मायियेच्छया रचितम् ''अ निषेधे पुमान्विष्णौ'' (वैज को 8-7-10) इत्यभिधानात्। अस्य विष्णो विद्ययेच्छया रचिते स्वप्नगन्धर्वनगरे उपमा यस्य तत्तथोक्तम् - ''महामायेत्यविद्येति नियतिर्मोहिनीति च। प्रकृति र्वासनेत्येव तवेच्छाऽनन्तकथ्यते'' (स्कान्धे) इत्यनेन निरुपपद मायाशब्दस्य हरे रिच्छावाचित्व कथ मितीय माशङ्का परिहृतेति ज्ञायते ॥ १५ ॥

**आत्मस्त्र्यपत्यसुहृदो बलमृद्धकोश मन्तःपुरं परिविहारभुवश्च रम्याः।**
**भूमण्डलं जलधिमेखल माकलय्य कालोपसृष्ट मिति स प्रययौ विशालाम् ॥ १६ ॥**

**तस्यां[2] विशुद्धकरणः शिववार्विगाह्य बद्ध्वासनं[3] जितमरुन्मनसाऽऽहृताक्षः।**
**स्थूले दधार भगवत्प्रतिरूप एतद्ध्यायं स्तदव्यवहितो *व्यसृज त्समाधौ ॥ १७ ॥**

---

1 A B °ल्यात् 2 M Ma, Ms तस्या 3 W बद्धासनौ * M, Ma व्यसृजन्समाधौ, व्यसृजत् इत्यस्य स्थाने व्यसृजन् इति मूलश्लोकपाठो लभ्यते। परन्तु विजयध्वजीयव्याख्यानुसारेण विसृजन्, इति भाव्यम्।

**भक्तिं हरौ भगवति प्रवहन्नजस्र मानन्दबाष्पकलया मुहुरर्द्यमानाः।**
**विक्लिद्यमानहृदयः पुलकाचिताङ्गो[1] नात्मान मस्मर दसाविति मुक्तलिङ्गः ॥ १८ ॥**

**स ददर्श विमानाग्र्यं नभसोऽवतर द्ध्रुवः[2]।**
**विभ्राजय द्दश[3] दिशो राकापति मिवोदितम्[4] ॥ १९ ॥**

**तत्रानु देव प्रवरौ चतुर्भुजौ श्यामौ किशोरा वरुणाम्बुजेक्षणौ।**
**स्थिता ववष्टभ्य गदां सुनाससौ किरीट हाराङ्गद चारुकुण्डलौ ॥ २० ॥**

श्रीध. **आत्मेति**। आत्मा देहः। आत्मादि मायिकमपि पुनः कालेनोपसृष्ट मनित्य माकलय्य विचिन्त्य विशालां बदरिकाश्रमम् ॥ १६ ॥

तत्र तत्कृत मष्टाङ्गयोग माह - **तस्या मिति**। तस्यां शिवं वाः शुद्धोदकं[5] विगाह्य प्रविश्येति[6] स्नानादिनियमा उक्ताः। विशुद्धकरण इति शमदमादयो[7] यमाः। आसनादीनि स्फुट मेवोक्तानि। जितो मरुत् प्राणो येन, आहृतान्यक्षाणि [8-]इन्द्रियाणि[-8] येन सः। भगवतः प्रतिनिधिभूते स्थूले विराड्रूपे एतन्मनो दधार ध्यायन् अव्यवहितो ध्यातृध्येय भेदशून्य स्सन् समाधौ स्थित स्तत्स्थूलं व्यसृजत् ॥ १७ ॥

**भक्तिमिति**। एव मजस्रं नित्यं हरौ भक्तिं प्रकर्षेण वहन् असौ ध्रुवोऽहमित्यात्मानं [9-]न अस्मरत्[-9] न सस्मार। यतो मुक्तलिङ्गः [10-]त्यक्तशरीराभिमानः[-10]तत्र हेतवः-आनन्दबाष्पस्य[11] कलया बिन्दुप्रवाहेणाभिभूयमानः विक्लिद्यमानं द्रवत् हृदयं यस्य सः। पुलकै र्व्याप्ताङ्गः ॥ १८-१९ ॥

**तत्रेति**। अनु अनन्तरं देवप्रवरौ ददर्शेत्यनुषङ्गः। गदा मवष्टभ्य स्थितौ किरीटादिभिः सहिते चारुणी कुण्डले ययोः ॥ २० ॥

**वीर.** तथा आत्मा देहः, स्त्रियो दाराः अपत्यानि पुत्रादयः सुहृदश्च तान् ऋद्धं समृद्धं पूर्वोत्तरान्वयि बलं चतुरङ्गबलयुक्तम्। सैन्यं कोशं धनं रमणीयाः परिविहारभुवः परितो विहारभुवः। प्रतिविहारभुव इत्यपि पाठेऽय मेवार्थः। जलधिर्मेखला यस्य तत् जम्बूद्वीपात्मकं भूमण्डलं च सर्वं कालोपसृष्टं कालेनोपद्रुत मस्थिर मिति यावत्, आकलय्य विचार्य सः ध्रुवः विशालां बदरिकाश्रमं ययौ ॥ १६ ॥

---

1. V °ञ्चि° 2. M, Ma °द्ध्रुवः; V °द्ध्रुवम् 3. W °द्दिश स्सर्वाः 4. W °द्यतम् 5. A, B, J, Va omit शुद्ध 6. V adds अनेन 7. A, B, J, Va शमादयो 8--8. A, B, J, Va omit 9--9. A, B, J, Va omit 10--10. V शरीराभिमानरहितः 11. V बाष्पक°

तत्र कृत मष्टाङ्गयोग माह - **तस्या** मिति । तस्यां विशालायां शिवं निर्मलं पवित्रं च वाः वारि विगाह्य प्रविश्य । अनेन स्नानादिनियम उक्तः विशुद्धकरणः विशुद्धेन्द्रियः अनेन शमदमादयो यमा उक्ताः । बद्धानि आसनानि स्वस्तिकादीनि येन सः, जितो मरुत् प्राणो येन सः, मनसा आहृतानि प्रत्याहृतानि अक्षाणि श्रोत्रादीनि इन्द्रियाणि येन, एव मासनादीनि स्फुट मेवोक्तानि, स्थूले भगवत्प्रतिरूपे भगवद्दिव्यविग्रहे दिव्यात्मस्वरूपा पेक्षया स्थौल्य मत्र विवक्षितं, दधार मनो निवेशितवान् । एवं धारणा उक्ता । एतद्भगवत्प्रतिरूपम् अव्यवहितः विजातीय प्रत्ययान्तर रहितः ध्यायन् तद्दिव्यात्मस्वरूपम् ''ओं तत्स दिति निर्देशो ब्रह्मण स्त्रिविधः स्मृतः'' (भार. 6-39-23) इति स्मरणात् । समाधौ व्यसृजत् अनुसंहितवान् । यद्वा तद्भगवत्प्रतिरूपं व्यसृजत् विसृष्टवान्, दिव्यविग्रहं विसृज्य दिव्यात्मस्वरूप मनुसंहितवानित्यर्थः । शुभाश्रये मनसो निवेशमात्रं धारणा, शुभाश्रयगत[1]कान्ति सौकुमार्यादिगुणचिन्तनं ध्यानं, तज्जनितानन्दातिशयात्पारवश्यं समाधि रिति भेदः ॥ १७ ॥

एव मजस्रं नित्यं भगवति प्रकर्षेण भक्तिं वहन् कुर्वन् असौ ध्रुवः आत्मानं न सस्मार मनुष्यत्वादिबाह्याकार विशिष्टत्वेन न स्मृतवान् । यतो मुक्तलिङ्गः त्यक्तदेहात्माभिमानः । तत्र हेतवः - आनन्दबाष्पकलया [2-]आनन्दबाष्प[-2] बिन्दु प्रवाहेणाभिभूयमानः [3]विक्लिद्यमानं हृदयं यस्य सः, पुलकै र्व्याप्ताङ्गः ॥ १८ ॥

स ध्रुवः उद्यत मुदितं राकापति मिव पूर्णिमा चन्द्र मिव दश दिशः विभ्राजयत् नभसः अवतरत् अवरोहत् विमानश्रेष्ठं ददर्श ॥ १९ ॥

अनु अनन्तरं तत्र विमानाग्रे देवप्रवरौ ददर्शेत्यनुषङ्गः । तौ विशिनष्टि किशोरौ यौवनारम्भजुषौ गदामवष्टभ्य स्थितौ किरीटादिभिः सहिते चारुकुण्डले ययोः ॥ २० ॥

**विज.** [4]नन्विदमीश्वरेच्छारचित मिति वक्तुं न युक्तं, तथात्वे मिथ्याभूत स्वप्नादिसाम्यकथन मनुपपन्नं, तदुच्यते तस्मात् मायाशब्देनेन्द्रजालमेवोच्यते उक्तमानस्य अनेकार्थवृत्तिगवादि शब्दव दुपपत्ते रित्यत उक्तम् - कालेति । उर्वारुकश्यामतादिव त्कालान्तरेऽन्यथा दर्शनाद्यदृष्टं तन्नष्ट मिति क्षणभङ्गुरत्वात् स्वप्नादिसाम्यं न तु मिथ्यात्वा त्तस्य चार्थक्रियाकारित्वेन सत्यत्वस्य प्रामाणिकत्वात् तदुक्तम् ''अन्यथात्वात् क्षिप्रनाशा ज्जगत्स्वप्ना दिव स्मृतम् । वर्तमानं नियत्यैव सदैव परमात्मनि'' (वाराहे)) इति आत्मनीत्युक्त्या च सत्यत्व मवगम्यते । अनादि नित्यनिरस्तकुहकस्य हरेरिन्द्रजालाश्रयत्वं न युज्यते । सदानिरस्तकुहक मिति

1. W omits कान्ति 2--2. A. B. T omit 3. A. B. T add इव 4. Ma नन्वीदृगीश्व°

स्वोक्तेश्च ''निष्फलं निष्क्रियं शान्तम्'' (श्वेता.उ. 6-19) इति श्रुतेः निष्क्रियब्रह्मैक्य मात्मनो जानतो ध्रुवस्य विशालागमन क्रियायोगाच्च आत्मस्त्रीपुत्रादीनां विश्वान्तर्भूतत्वेन तद्ग्रहणेन गृहीताना मपि पुनर्वचनं दुष्करं तत्याग मपि कृतवानिति ध्रुवस्य वैराग्यातिशयद्योतनायेति। परितो विहारभुवः आकलय्य निश्चित्य॥ १६॥

तत्र गतोऽपि पितापुत्रविषयस्नेहं मुक्त्वा वैराग्यद्रढीयस्तया भगवद्भक्तिरामालिङ्गितस्य मुग्धस्येव स्थितस्य तदुपास्तिप्रकारं वक्ति - **तस्या** इति। तस्याः विशालायाः शिवं वाः मङ्गलवारि स्थूले पातालादिके नैतन्निज मित्यत उक्तं प्रतिरूप इति। शिलावत् प्रतिमास्थाने तदुक्तम् ''शिलावत्प्रतिमैषा हि विष्णो र्लोकचतुर्दशी'' (स्कान्दे) इति समाधौ निरायासेन चित्तस्य ध्येयवस्तुविषयीकरणमतिप्रवाहे सति अभ्यस्तत्वात् स्थूलध्यानं विसृजन् स्वबिम्बोपास्ते रावश्यकत्वेन स्थूलसन्निहितरूपैक्येन सूक्ष्मरूप मस्मरदित्यर्थः। अव्यवहितः स्थूलसन्निहितसूक्ष्मरूपयो रभेदं पश्यन्नित्यर्थः॥ १७॥

तस्यासंप्रज्ञातसमाध्यवस्था माह - **भक्तिमिति**। अह मसौ ध्रुव इत्यात्मानं नाऽस्मरत्, किन्तु भगवन्त मेवास्मरदित्यनेन जीवन्मुक्तत्वं लक्षयति। मुक्तलिङ्गः सूक्ष्मशरीराभिमानरहितः॥ १८॥

ध्रुवस्य हरे रपरोक्षज्ञानोत्पन्नप्रसादचिह्न माह - **स ददर्शेति**। विभ्राजयत् दीपयत् राकापतिं पूर्णचन्द्रम्॥ १९॥

वृक्षात्पतत्पर्ण मिव स्वर्गाच्च्युतं नक्षत्र मिव विमानं ना द्राक्षीत् किन्तु सनाथ मित्याह - **तत्रेति**। अनु अनन्तरं तत्र विमाने स्थितौ॥ २०॥

**विज्ञाय ता[1] वुत्तमगाय किङ्करावभ्युत्थितः साध्वसविस्मृतक्रमः[2]।**
**ननाम नामानि गृणन्मधुद्विषः पार्षत्प्रधानाविति संहताञ्जलिः॥ २१॥**

**तं कृष्णपादाभिनिविष्टचेतसं बद्धाञ्जलिं प्रश्रय नम्रकन्धरम्।**
**सुनन्दनन्दा वुपसृत्य[3] सस्मितं प्रत्यूचतुः[4] पुष्करनाभसम्मतौ॥ २२॥**

**[5-]सुनन्दनन्दा वूचतुः[-5]**

**[6]भो भो[7] राजन्! सुभद्रं ते वचो[8] नोऽवहितः श्रुणु।**
**यः[9] पञ्चवर्ष स्तपसा भवान् देव मतीतृपत्॥ २३॥**

---

1. M, Ma, Ms भाव 2. M, Ma, Ms सन्नवि° 3. M, Ma, Ms लभ्य 4. M, Ma, Ms, V प्रीत्यो° 5--5. W omits 6. W भोराजन्नस्तु भद्रं 7. M, Ma, Ms भद्र! 8. A, B, G, I, J, T, W वाचं; Ms वाचो 9. Ms यं

**तस्याखिल जगद्धातुः आवां[1] देवस्य शार्ङ्गिणः।**
**पार्षदा विह सम्प्राप्तौ नेतुं त्वं[2] भगवत्पदम्॥ २४॥**

**सुदुर्जयं विष्णुपदं जितं त्वया यत्सूरयोऽप्राप्य विचक्षते परम्।**
**आतिष्ठ[3] तच्चन्द्र दिवाकरादयो ग्रहर्क्षतारा: परियान्ति दक्षिणम्॥ २५॥**

**श्रीध.** विज्ञायेति। उत्तमगायः पुण्यश्लोको हरिः[4] तस्य किङ्करौ तौ विज्ञाय मधुद्विषः पार्षत्प्रधानाविति हेतोः साध्वसेन सम्भ्रमेण विस्मृतपूजाक्रमः [5-]विस्मृतः पूजाक्रमः[-5] येन, केवलं तस्य नामानि गृणन् ननाम॥ २१-२२॥

**भो भो** इति। सुभद्र मिति सशरीरस्यैव विष्णुपदारोहाभि[6] प्रायम्। अतीतृपत् तर्पितवान्॥ २३॥

**तस्येति**। आवां तस्य पार्षदौ॥ २४॥

**सुदुर्जय** मिति। सुदुर्जयत्वे हेतुः। सूरयः सप्तर्षयोऽपि यत्पदमप्राप्य[7] केवल मधःस्थिताः पश्यन्ति - यच्च चन्द्रा दयः दक्षिणं[8] प्रदक्षिणं यथा भवति तथा[9] एवं[10] परिक्रामन्ति तत् आतिष्ठ अधितिष्ठ॥ २५॥

**वीर.** उत्तमगायः पुण्यश्लोको भगवान्, तस्य किङ्करौ विज्ञाय मधुद्विषः परिषत्प्रधानाविति हेतोः साध्वसेन सम्भ्रमेण विस्मृतपूजाक्रमः केवलं तस्य नामानि गृणन् संहताञ्जलिः बद्धाञ्जलिः ननाम॥ २१॥

कृष्णस्य पादयोः अभिनिविष्टा चेतना चित्तं यस्य, प्रश्रयेण विनयेन नम्रा प्रह्वीभूता कन्धरा यस्य तं ध्रुवमुपसृत्य समीप मागत्य पुष्करनाभस्य [11-]पद्मनाभस्य[-11] भगवतः सम्मतौ भृत्यौ सुनन्दनन्दौ सस्मितं[12] स्मितेन सहितं यथा तथा, प्रीत्या प्रीतिपूर्व मूचतुः॥ २२॥

हे राजन्! ते[13] तुभ्यं भद्र मस्तु। नोऽस्माकं वाच मवहितः सावधानचित्त स्त्वं श्रुणु। किं तत्राह। यो भवान् पञ्चवर्षः तपसा देवं भगवन्तम् अतीतृपत् तर्पितवान्॥ २३॥

तस्याखिलजगन्निर्माणचतुरस्य सर्वेश्वरेश्वरस्य शार्ङ्गिणो भगवतः पार्षदा वावां त्वां भगवत्पदं प्रति नेतु मिह सम्प्राप्तौ॥ २४॥

सुदुर्जयं त्वदितरै र्दुःखेनाप्यसाध्यं विष्णुपदं त्वया जितं साधितम्। सुदुर्जयत्व मेवाह - सूरयः सर्वेषा मुपरिष्टा दवस्थिताः

1. M. Ma विद्धि 23. A, T त्वा 3. W य॰ 4. B, J, V, Va omit हरिः 5--5. A, J, V, Va omit 6. B ॰हणाभि॰ 7. A, B, J, Va यद्प्राप्य 8. B. J. V. Va omit 9. A, J, Va omit तथा 10. B omits एवं 11--11. A, T omit 12. A, B, T omit 13. W omits ते

सप्तर्षिप्रभृतयः यत्पद मप्राप्यैव परं केवलं विचक्षते पश्यन्ति, तथा यत्पदं चन्द्रादयः सोमप्रभृतिग्रहादयश्च प्रदक्षिणं यथा भवति एवं परियन्ति परितोभ्रमन्ति [1-] तदातिष्ठ [-1] ॥ २५ ॥

**विज.** उत्पन्न निर्दोषज्ञानत्वात् सहसा विमानपुरुषदर्शनात् तदा तस्य भ्रान्तिज्ञानं नाऽभूदिति भावेन तत्सत्कारप्रकार माह - **विज्ञायेति** । प्रागदृष्टश्रुतवस्तुदर्शने साध्वसलक्षणोऽ[2]न्तःकरणवृत्तिविशेषः सम्भ्रमो भवति, तेन सन्नो नष्टो विक्रमः प्रवृत्तिविशेषो यस्य स तथोक्तः, उत्तमो भावो लीला क्रिया वा विभूति र्वा यस्य स तथोक्तः, तस्य हरेः किङ्करौ सदाक्षिगतौ भृत्यौ संहताञ्जलिः बद्धाञ्जलिः ॥ २१ ॥

आत्मनो देवत्वेन हस्तादिसंज्ञया स्वागमनज्ञापनं विनैव स्वाभिप्राय मूचतु रित्याह - **तमिति** । उपलभ्य दृष्ट्वा ॥ २२ ॥

भवान् यं देव मतीतृपत् तृप्त मकार्षीत् तस्य हरेः पार्षदौ त्वां भगवत्पदं नेतु मिह प्राप्तौ विद्धीत्यन्वयः- ॥ २३-२४ ॥

वैकुण्ठं नेतुं किं नेत्याहतुरिति ब्रूते **सुदुर्जय** मिति । जितं साधितं सूरयः सप्तऋषिप्रभृतयो यदप्राप्य परं दूराद्विचक्षते पश्यन्ति तर्हि तद्गहनं विपिनं किं नेत्यत उक्तं चन्द्र इति । चन्द्रदिवाकरादयो ग्रहा ऋक्षाणि सप्तविंशतिसंख्याता अश्विन्यादयः ताराः मेषादिराशयो व्योमतले दृश्यमाना ज्योतिर्मूर्तयो वा दक्षिणं परियन्ति प्रदक्षिणं कुर्वन्ति । तदातिष्ठे त्यन्वयः ॥ २५ ॥

**अनास्थितं ते पितृभि रन्यै रप्यङ्ग कर्हिचित् ।**
**आतिष्ठ जगतां वन्द्यं तद्विष्णोः परमं पदम् ॥ २६ ॥**

**एतद्विमानप्रवर मुत्तमश्लोकमौलिना ।**
**उपस्थापित मायुष्म न्नधिरोढुं त्व मर्हसि ॥ २७ ॥**

**मैत्रेय उवाच**

**निशम्य वैकुण्ठनियोज्यमुख्ययो र्मधुच्युतं[3] वाच मुरुक्रमप्रियः ।**
**कृताभिषेकः कृतनित्यमङ्गलो मुनीन् प्रणम्याशिष मभ्यवादयत्[4] ॥ २८ ॥**

**परीत्याभ्यर्च्य धिष्ण्याग्र्यं, पार्षदावभिवन्द्य च ।**
**इयेष तदधिष्ठातुं बिभ्रद्रूपं हिरण्मयम् ॥ २९ ॥**

---

1--1. A, B, T omit 2. A, B °णान्तः° 3. B, M, Ma, Ms, V, W °तां 4. V °च°

*तदोत्तानपदः पुत्रो ददर्शान्तकमागतम्।
मृत्यो मूर्ध्नि पदं दत्वा आरुरोहाद्भुतं गृहम्॥
तदा दुन्दुभयो नेदु मृदङ्गपणवादयः।
गन्धर्वमुख्याः प्रजगुः पेतुः कुसुमवृष्टयः॥ ३०॥

स च स्वर्लोक मारोक्ष्यन् सुनीतिं जननीं ध्रुवः।
अन्वस्मरदगं[1] हित्वा दीनां[2] यास्ये त्रिविष्टपम्॥ ३१॥

**श्रीध.** एतदिति। आयुष्मन्नित्यपि [3-]सम्बोधनं[-3] सशरीर यानाभिप्रायमेव॥ २६-२७॥

**निशम्येति।** मधु च्यवते[4] स्रवतीति मधुच्युताम्। पाठान्तरे मधु च्युतं स्रुतं[5] यस्यां ता ममृतस्राविणी मित्यर्थः। कृतं नित्यं कर्म मङ्गलं चाऽलङ्करणं येन सः अभ्यवादयत्[6] वादयामास[7]॥ २८॥

**परीत्येति।** तदेव रूपं हिरण्मयं [8-]प्रकाशबहुलं[-8] बिभ्रत्सन् इयेष ऐच्छत्॥ २९॥

***तदेति।** गृहं विमानम्। अयं भावः - यदा ध्रुवो विमान मारुढु मैच्छत् मृत्युरागत्य प्रणम्योवाच। हे महाराज! मामङ्गीकुरु। उवाच ध्रुवः - स्वागतं ते क्षणं तावदुपविश एव मुक्त्वा ध्रुवो विष्णोः स्मरणं कृत्वा मृत्यो मूर्ध्नि पदं दत्वा विमानाग्रमारुरोह॥

**स इति।** दीनां जननीं[9] हित्वा कथ मगं दुर्गमं त्रिविष्टपं यास्यामी त्यन्वस्मरत्॥ ३०-३१॥

**वीर.** ते तव पितृभि र्मन्वादिभिः तथाऽन्यै रपि अङ्ग! हे ध्रुव! कदाचिदप्यनास्थितम् अनधिष्ठितमत एव जगतां वन्द्यं विष्णोः सम्बन्धि परमं सर्वोत्कृष्टं तत् त्वया जितं पदं स्थानम् आतिष्ठ अधितिष्ठ॥ २६॥

हे आयुष्मन्! उत्तमश्लोकमौलिना उत्तमश्लोकानां[10] मौलिना मुख्येन भगवता एतद्विमानश्रेष्ठ मुपस्थापितं प्रेषित मेतद्विमानाग्र्यं अधिरोढुं त्व मर्हसि। अत्र आयुष्मन्निति सम्बोधनं सशरीरयात्राभि प्रायकम्। अत्र वैकुण्ठ परमपद विष्णुपदादिशब्दा भगवत्स्थान साम्यात्परमव्योम्नीव विष्ण्वभिमानविषये ध्रुवलोके प्रयुज्यन्ते। तत्राऽपि हि भक्तानुजिघृक्षया भगवान् सर्वदा सन्निहितः। भक्तानुग्रहादेव पार्षदविमानादिप्रेषण मुपपन्नम्॥ २७॥

---

* An additional verse is found in A, B, G, I, J, T Editions only. The commentary of the same is found in A, B, J, Va only. This appears in its proper place. 1. M, Ma, Ms °हं 2. M, Ma, Ms नैनां 3--3. B, J, V, Va omit 4. V च्योतति 5. B, J, V, Va omit स्रुतं 6. V °च° 7. B, V वाच° 8--8. V omits * The commentary of Sridhar is not found in V edn. 9. B, J, V, Va omit जननीं 10. A, B, T °कमु°

वैकुण्ठनियोज्य मुख्ययोः भगवत्पार्षदप्रवरयोः मधुच्युता ममृतप्राविर्णी वाचं निशम्य भगवत्प्रियो ध्रुवः कृतमङ्गलस्नानः कृतं नित्यं कर्म मङ्गल मलङ्करणं च येन सः, मुनीन् प्रणिपत्य आशिष मभ्यवादयत् वाचयामास ॥ २८ ॥

विमानश्रेष्ठं परीत्य परिक्रम्य तदेव रूपं वपुः हिरण्मयं ज्योतिर्मयं बिभ्रत्सन् तद्विमानाग्र्य मधिष्ठातु मियेष ऐच्छत् ॥ २९ ॥

पेतुः पतितवत्यः ॥ ३० ॥

स च ध्रुवः स्वर्लोकम् आरोक्ष्यन् दीनां मातरं हित्वा अगं दुर्गमं त्रिविष्टपं यास्ये इत्येवं जननी मन्वस्मरत् ॥ ३१ ॥

**विज.** इतोऽपीद मास्थेयमिति प्रतिपादयत इत्याह - **अनास्थित** मिति । अन्यै रनधिष्ठितं चेत् किं श्मशानं तदित्यत उक्तं - जगतामिति । सा किंवसति रत उक्तं तद्विष्णोरिति । "शिं[1]शुमारो ध्रुव श्चैव संस्थितो यत्पुरे सदा । तत्पश्यन्ति न यान्त्यन्ये लोकं यान्ति सुरान्विना ॥" इति वचनेन तत्र तात्पर्य मवगन्तव्यम् ॥ २६ ॥

केनेदं विमानं प्रेषित मिति शङ्कां निवारयत इत्याह - **एतदिति** । उत्तमश्लोकमौलिना शिं[2]शुमारमूर्तिना हरिणा ॥ २७ ॥

मैत्रेयो विदुरायाऽऽह भगवद्भक्तमाहात्म्यं शृण्विति भावेन तस्य पद मारोढु मितिकर्तव्यतां वक्ति - **निशम्येति** । वैकुण्ठस्य हरेः नियोज्यानां पार्षदानां मध्ये मुख्ययोः, मधु पुष्परस मिव रसं च्योतति स्रवतीति मधुच्यु[3]तं । कृतं नित्यकर्माख्यं मङ्गलं येन सः कृतनित्यमङ्गलः अभ्यवादयत् अभिवादयामास ॥ २८ ॥

नेदं ध्रुवस्यैव मङ्गलशकुनम् अन्येषा मपि महतां भवतीति ध्वनयन् तद्यात्राप्रारम्भमाङ्गल्यं वक्तिपरीत्येत्यादिना ॥ २९ ॥

यदा धिष्ण्याग्र्यं विमानम् अधिष्ठातुम् इयेष तदा दुन्दुभ्यादयो नेदु रित्यन्वयः ॥ ३० ॥

नाऽह मेव सत्यसङ्कल्पशिरोमणिः, किन्तु भक्तोऽपीति भावेन हरिणा स्फुरितान्तः करणवृत्तिविशेषो ध्रुव एतादृशं पुत्रं सूतवत्याः स्वकृते त्यक्तविषयभोगायाः सुनीतेः पुत्रेण सह स्वर्लोकप्राप्ति र्नाऽभूत् स्वयं वा नाऽस्मार्षी दिति लोकापवादं मन्वान इव यदा स्वमातर मस्मार्षी त्तदा कैटभारेः सङ्कल्पं जानानौ तौ पार्षदौ तस्य पुरतो यान्तीं मातरं दर्शयामासतुरित्याह - **सचेति** । अनेन ध्रुवस्याऽपि सत्यसङ्कल्पत्वं लोके प्रकाशितमिति ज्ञायते ॥ ३१ ॥

**इति व्यवसितं तस्य व्यवसा[4]य सुरोत्तमौ ।**
**दर्शयामासतु र्दे[5]वीं दे[6]वयानेन गच्छतीम् ॥ ३२ ॥**

---

1. A, B शि॰ 2. A शि॰ 3. A, B ॰च्युत् ताम् । 4. M, Ma ॰सायं; T, V, W ॰सीय 5. A, B, G, I, J, T पुरो 6. M, Ma, Ms चाग्रगाम्

तत्र तत्र प्रशंसद्भिः पथि वैमानिकैः सुरैः ।

अवकीर्यमाणो ददृशे कुसुमैः क्रमशो ग्रहान् ॥ ३३ ॥

त्रिलोकीं देवयानेन सोऽतिव्रज्य मुनीनपि ।

[1] परस्ता [2] द्यत् ध्रुवगतिः [3-] तद्विष्णोः पद मभ्यगात् [-3] ॥ ३४ ॥

यद्भ्राजमानं स्वरुचैव सर्वतो लोकास्त्रयो ह्यनु विभ्राजन्त एते ।

[4-] यन्नाव्रजज्जन्तुषु येऽननुग्रहा [-4] व्रजन्ति भद्राणि चरन्ति येऽनिशम् ॥ ३५ ॥

शान्ताः समदृशः [5] शुद्धाः सर्वभूतानुरञ्जनाः ।

यान्त्यञ्जसाऽच्युतपद मच्युतप्रियबन्धवाः ॥ ३६ ॥

इत्युत्तानपदः पुत्रो ध्रुवः कृष्णपरायणः ।

अभूत्त्रयाणां लोकानां चूडामणि रिवामल. ॥ ३७ ॥

[6] गम्भीरवेगोऽनिमिषं ज्योतिषां चक्र [7] मर्पितम् ।

यस्मिन् भ्रमति कौरव्य ! [8] मेध्या मिव गवां गणः ॥ ३८ ॥

महिमानं विलोक्याऽस्य नारदो भगवान् ऋषिः ।

आतोद्यं वितुदन् श्लोकान् सत्रेऽगायत् प्रचेतसाम् ॥ ३९ ॥

श्रीध. इतीति । व्यवसित मभिप्राय व्यवसाय ज्ञात्वा ॥ ३२-३३ ॥

त्रिलोकी मिति । देवयानेन देवमार्गेण विमानेनेति वा । मुनीन् सप्तर्षी नपि तत परस्तात् यद्विष्णो पद तदभ्यगात् । ध्रुवा गति र्यस्य स· ॥ ३४ ॥

---

1 M, Ma, Ms पु° 2 M, Ma °ति° 3--3 A, B, G, I, J, M, Ma, Ms, T, V विष्णो पद मथाऽभ्यगात् 4--4 M Ma, Ms न ते खला जन्तुषु ये त्वनुग्रहात् 5 W सिद्धा 6 M, Ma, Ms वेगाऽनिमिषा, W वेगो ह्यनिश 7 A, B, G, I, J, T, V °माहितम् 8 A, B, G I J M Ma, Ms T मेढ्या°

**यदिति**। यद्भ्राजमान मनु यस्य, रुचा लोका [1]विभ्राजन्ते[1] [2]जन्तुषु येऽननुग्रहा निष्कृपाः ते यन्नाऽव्रजन् न गतवन्तः ॥ ३५॥

**शान्ता** इति। अच्युतः प्रियो बान्धवो येषां ते॥ ३६-३७॥

**गम्भीरेति**। अनिमिष मनलसं ज्योतिषां चक्रं यस्मिन्, आहित मर्पितं सत् भ्रमति। [3]मेध्या माहितो गम्भीरवेगो गवां गण इव॥ ३८॥

**महिमान** मिति। आतोद्यं वीणां [4]वितुदन् वादयन् प्रचेतसां ब्रह्मसत्रे भगवन्माहात्म्यप्रसङ्गेन ध्रुवमहिमप्रतिपादनपरान् त्रीन् श्लोकान् अगायत्॥ ३९॥

**वीर.** इत्येवम्भूतं तस्य ध्रुवस्य व्यवसित मभिप्रायं [5]व्यवसाय ज्ञात्वा सुरोत्तमौ सुनन्दनन्दौ देवयानेन देवप्रवरोपस्थापित-विमानेन गच्छन्तीं देवीं सुनीतिं दर्शयामासतुः॥ ३२॥

तत्र तत्र पथि विमानारूढैः देवैः प्रशंसद्भिः कुसुमवृष्टिभि रवकीर्यमाणो ग्रहान् आदित्यादिस्थानानि क्रमशो दृष्टवान्॥ ३३॥

देवयानेन सुनन्दनन्दनाख्य देवप्रवरोपस्थापितविमानेन त्रिलोकीं मुनीन् सप्तर्षी नप्यतिव्रज्य अतिक्रम्य ततः परस्तात् यद्विष्णोः पदं तत् ध्रुवा शाश्वती गति र्यस्य सः ध्रुवगतिः आकल्पस्थायित्वाद्गते ध्रुवत्वम् अभ्यगात् प्राप्तवान्॥ ३४॥

विष्णोः पदं विशिनष्टि - **यदिति**। स्वरुचैव यत् भ्राजमानमनुसृत्य तस्य रूचा एते त्रयो लोका भ्राजन्ते। यच्च जन्तुषु भूतेषु येऽननुग्रहा निरनुग्रहाः निष्कृपा स्ते नाव्रजन् न गतवन्तः येच जन्तुषु भद्राणि सुहृत्त्वादीनि अनिशं चरन्ति कुर्वन्ति ते व्रजन्ति तत्पद मध्यगादिति पूर्वेण सम्बन्धः। ध्रुवस्थानं प्राप्तानामपि सत्यलोकगताना मिव प्रायेण पुनरावृत्त्यभावात् कल्पान्ते मोक्ष्य माणत्वात् भूतसुहृत्त्वादीना मेव मुक्तिहेतुत्वाच्चैव मुक्तम्॥ ३५॥

किञ्च यदच्युतपदम् अच्युतः प्रियो येषां भागवतानां ते बान्धवा येषां ते, शान्ताः शमदमादियुक्ताः समदृशः देहात्मेश्वराणां प्रकृतिपरिणामरूपत्व-ज्ञानैकाकारत्व-सर्वान्तरात्मत्वादिरूप समदर्शिनः अत एव सर्वभूतानि यथायोग्यं दानमानादिभि रनुरञ्जयन्ति [6]प्रीणयन्तीति[6] सर्वभूतानुरञ्जनाः [7]सिद्धाः सिद्धप्राया न तु नितरां सिद्धाः, तेषा मर्चिरादिगत्या [8]ब्रह्मलोकावाप्तेः, अञ्जसा सुखेन यान्ति तत्पदमध्यगादिति [9]पूर्वेणैव सम्बन्धः[9]। अय मर्थः - शमदमादिभिः सर्वभूतसुहृत्त्वादिभिश्च परब्रह्मोपासननिष्ठा अपि केचित्प्रारब्धवशात् बुभुक्षावशाद्वाऽन्तराय विहताः सत्यलोकवत् ध्रुवलोकं गताः तत्रत्यभोगोत्तरं परिपूर्णयोगा मुच्यन्त इति॥ ३६॥

---

1--1. Va omits 2. A, J, V, Va omit जन्तुषु 3. A, B, J, Va मेढ्या° 4. Va °नु° 5. A, B, T omit 6--6. A, B, T प्रीतिं कुर्वन्तीति 7. A, B, T omit सिद्धाः 8. A, B, T °कप्राप्तेः 9--9. A, B, T °णान्वयः

इति उक्तप्रकारेण कृष्णो भगवान् परमयनं प्राप्यं प्रापकमाधारश्च यस्य स ध्रुवः त्रयाणां लोकानां अमलः चूडामणिः शिखामणि रिवाऽभूत्। अमल इति दृष्टान्त दार्ष्टान्तिकयो रुभयोरपि विशेषणम्॥ ३७॥

हे कौरव्य ! विदुर ! मेध्यां[1] धान्याक्रमणाय बलीवर्दबन्धनस्तम्भविशेषे गम्भीरवेगो गवां गणः बलीवर्दसमूह इव ज्योतिषां [2-] सूर्यचन्द्रादि ज्योतिषां [-2] चक्रं यस्मिन् ध्रुव आहितं सत् अनिशं भ्रमति॥ ३८॥

अस्य ध्रुवस्य महिमानं विलोक्य भगवान् नारदऋषिः आतोद्यं वीणां वितुदन् नादयन् प्रचेतसां सत्रे ब्रह्मसूत्रे[3] भगवन्माहात्म्य प्रसङ्गेन श्लोकान् ध्रुवमहिमप्रतिपादनपरान्[4] त्रीन् श्लोकानगायत्॥ ३९॥

**विज.** अग्रगा मग्रतो गच्छन्तीम्॥ ३३॥

ध्रुवा निश्चला गति र्यस्य स, तथा देवयानेन मार्गेण॥ ३४॥

तत्पदप्राप्त्यधिकारिणोऽन्वय व्यतिरेकाभ्यामाह - न त इति। ये तु जन्तुषु खलाः ते यत्र व्रजन्ति ये तु जन्तुषु अनुग्रहात् दयालक्षणात् अनिशं भद्राणि चरन्ति ते यद्व्रजन्ति एतदेव विशिनष्टि - शान्ता इति। एते खिला इति पाठे जन्तुषु ये भद्राणि चरन्ति एते खिला विष्णोरनुग्रहा व्रजन्ति। भद्राचरणं विशिनष्टियेऽनिशमिति। येऽनिशं शान्त्यादिगुणयुक्ता स्तेऽच्युतपदं यान्ती त्यन्वयः। एतत्पदं प्राप्य स्वरूपाविर्भावयोग्यान् विना पुरस्ता दन्यै रित्युक्तम्॥ ३५-३६-३७॥

चन्द्रदिवाकरादय इत्यत्र ज्योतिश्चक्रेण प्रदक्षिणीक्रियमाण मेतत् स्थान मित्युक्तं तत्कियद्दूरत इति न प्रतीतं तदिदानीं लक्षयति - **गम्भीरेति**। गम्भीरवेगानि आनिर्मीषीव गम्भीरवेगानिर्मीषि तेषाम्। मिष निमिष इति धातोः न निमिषन्ति मीलन्ती त्यनिमिषः, तेषाम्। अनस्तङ्गच्छता मित्यर्थः। यस्मिन्नित्यनेनोपरीति प्रतीतिं निवारयति मेढ्यामिति। अनेन मेढ्याः- समीपे परितो भ्रमन्तीति यथा प्रतीतं तथाऽत्रापीत्यर्थः॥ ३८॥

इति केनाऽयं महिमा लालितो येनाऽस्माक मपि तत्र श्रद्धातिशयः स्या दित्यत आह - **महिमान** मिति। आतोद्यं महद्वीणावाद्यम् "आतोद्यं वाद्य मिष्यते" (हल.को. 1-93) इति हलायुधः॥ ३९॥

---

1. A, B, T मेढ्यां 2--2. A, B, T omit 3. A, B, T omit ब्रह्मसत्रे 4. A, B, T ध्रुवस्य म⁰

### [1-] नारद उवाच [-1]

नूनं सुनीतेः पतिदेवतायाः तपः प्रभावस्य सुतस्य तां गतिम्।
दृष्ट्वाभ्युपायानपि वेदवादिनो नैवाधिगन्तुं प्रभवन्ति किं नृपाः ॥ ४० ॥

यः पञ्चवर्षो गुरुदारवाक्शरैः भिन्नेनयातो हृदयेन दूयता।
वनं [2] मदादेशकरोऽजितं [3] प्रभुं जिगाय [4] तद्भक्त[5]गुणैः पराजितम् ॥ ४१ ॥

यः क्षत्रबन्धुर्भुवि तस्याधिरूढ मन्वारुरुक्षे दपि वर्षपूगैः।
[6] यः पञ्चवर्षो यदहोभिरल्पैः [7] प्रसाद्य वैकुण्ठ मवाप तत्पदम् ॥ ४२ ॥

### मैत्रेय उवाच

एतत्तेऽभिहितं सर्वं यत्पृष्टोऽह मिह त्वया।
ध्रुवस्योद्दाम यशस[8]श्चरितं सम्मतं सताम् ॥ ४३ ॥

धन्यं यशस्य मायुष्यं पुण्यं स्वस्त्ययनं महत्।
स्वर्ग्यं ध्रौव्यं सौमनस्यं प्रशस्य मघमर्षणम् ॥ ४४ ॥

श्रुत्वैतच्छ्रद्धयाऽभीक्ष्ण मच्युत प्रियचेष्टितम्।
भवेद्भक्ति र्भगवति यया स्यात्क्लेशसंक्षयः ॥ ४५ ॥

**श्रीध. नूनमिति**। पतिरेव देवता यस्या स्तस्याः, सुतस्य य स्तपः प्रभावः तस्य तां गतिं फलमधिगन्तुं [9-] वेदवादिनः [-9] वेदवादशीला ब्रह्मर्षयोऽपि नैव प्रभवन्ति। अभ्युपायान् भगवद्धर्मान् दृष्ट्वाऽपि किं पुन र्नृपाः ॥ ४० ॥

तपः प्रभावं [10] तां गतिं च विशिनष्टि - **य** इति द्वाभ्याम्। गुरुदाराः पितृपत्नी सुरुचिः तस्या वाक्शरै र्भिन्नेन अत एव दूयता हृदयेन वनं यात स्सन् अजित मपि यो जिगाय वशीकृतवान् ॥ ४१ ॥

---

1--1. W omits 2. M, Ma ममाऽऽ° 3. Ms, V विभुं 4. M, Ma तद्भक्ति 5. Ms जनै 6. A, B, G, I, J, T, V षट् 7. W आसाद्य 8. W °त्रं 9--9. A, B, J, Va omit 10. A, B, J, Va omit तां

**य** इति। तस्याधिरूढं तेन प्राप्तं पदं यो भुवि क्षत्रबन्धुः क्षत्रियो भवेत्स तमनु वर्षसमूहै रप्यारोढु मिच्छेदपि किम् ? तत्सङ्कल्पोऽप्यशक्यो दूरत आरोहण मित्यर्थः। कथम्भूतं पदम् ? षड्वा पञ्च वा वर्षाणि यस्य सः अल्पै रेवाहोभिः वैकुण्ठं प्रसाद्य यत्तस्य पद मवाप तत्॥ ४२॥

**एतदिति**। उद्दाम मुत्कृष्टं यशो यस्य॥ ४३॥

**धन्यमिति**। धन्यं[1] धनार्थैर्निमित्तम्। ध्रौव्यं ध्रुवस्थानप्रापकम्। प्रशस्यं प्रशंसार्हम्। अघमर्षणं पापनाशनम्॥ ४४॥

**श्रुत्वेति**। अच्युतप्रियस्य ध्रुवस्य चेष्टितं श्रुत्वा यो वर्तते तस्य भक्ति र्भवेत्॥ ४५॥

**वीर.** श्लोकानेवाह - **नूनमिति**। पतिदेवतायाः सुनीतेः सुतस्य ध्रुवस्य यस्तपः प्रभावः तस्य फलभूतां तां[2] गतिं अभ्युपायान् गतिसाधनभूतान् भगवदाराधनरूपान् उपायानपि दृष्ट्वा वेदवादिनोऽपि ऋषयोऽपि अधिगन्तुं प्राप्तुं नैव प्रभवन्ति न समर्था भवन्ति किं पुन र्नृपाः नृपा न प्रभवन्तीति किमु वक्तव्य मित्यर्थः॥ ४०॥

गुरुदाराः पितृपत्नी सुरुचिः तस्या वाच एव[3] बाणाः तैः भिन्नेनात एव दूयता तप्तेन हृदयेन यो ध्रुवः पञ्चवर्ष एव वनं प्रति गतः तत्राऽपि मदाज्ञावशवर्ती अजित मपि विभुं भगवन्तं तद्भक्तगुणैः[4] भगवद्भक्तानां गुणै र्भूतमैत्र्यादिभिः पराजितं वशंगतम् "अहं भक्तपराधीनो ह्यस्वतन्त्रः" (भाग. 9-4-63) इति भगवदुक्तेः भक्तपराधीन मित्यर्थः। जिगाय वशीकृतवान्॥ ४१॥

तस्य ध्रुवस्य अधिरूढं प्राप्तं तेन[5] पद मित्यर्थः। पदं स्थानं यो भुवि क्षत्रबन्धुः क्षत्रियाभासः वर्षसमूहै रपि अधिरोढु मिच्छेदपि किम् ? तत्सङ्कल्पोऽप्यशक्यः, दूरत आरोहण मित्यर्थः। कथम्भूतं पदं ? षट्[6] पञ्च वा[7] वर्षाणि यस्य सः। अल्पै रेव अहोभि र्दिनैः वैकुण्ठं प्रसाद्य[8] प्रसन्नं[9] कारयित्वा यत्तस्य पद मवाप॥ ४२॥

तद्ध्रुवचरितं निगमयन् तच्छ्रवण-श्रावणादि[10--10] फलमाह मुनिः **एतदिति**। त्वया यत्प्रति[11] पृष्टोऽहं तत्सर्वं तुभ्यं कथितं किं तत्राऽह। उद्दामयशसः उत्कृष्टकीर्तेः ध्रुवस्य चरितं सतां हरिभक्तानां सम्मतम्॥ ४३॥

धन्यं धनेच्छया शृण्वतां श्रावयतां च धनसम्पादकं तथा यशस्यं यशस्करम् आयुष्करं स्वस्त्ययनं, मङ्गलकरं स्वर्गसम्पादकं, ध्रौव्यं ध्रुवस्थानप्रापकं सौमनस्यं मनः पीडाविनाशकं प्रशस्यं प्राशस्त्यसम्पादकम् अघमर्षणं पापनिरासकम्॥ ४४॥

एतदच्युतप्रियस्य ध्रुवस्य चेष्टित मभीक्ष्णं पौनः पुन्येन श्रद्धया श्रुत्वा यो वर्तते तस्य भगवति भक्ति र्भवति। भक्तिफलमाह- यया भक्त्या क्लेशाना माध्यात्मिकादीनां संक्षयो भवति॥ ४५॥

---

1. A, B, J, Va omit धन्यं 2. A, B, T omit तां 3. A, B, T omit एव 4. A,B,T omit तद्भक्त 5. A, B, T omit तेन 6. A, B, T omit षट् 7. A, B, T omit वा 8. A, B, T आसाद्य 9. A, B, T आसन्नं 10--10. A, B, T तच्छ्रवणादि 11. T यत्परि°

**विज.** तपस· प्रभावो माहात्म्यं यस्य स तथा तस्य। "प्रताप माहात्म्ययोः प्रभावः स्यात्" (वैज.को. 7-1-56) इति यादवः॥ ४०॥

अजितं जिगाय वशीचकार॥ ४१-४२-४३॥

ध्रौव्यं ध्रुवस्य मौक्षस्य साधनम्॥ ४४॥

अच्युतप्रियस्य ध्रुवस्य चेष्टितम्॥ ४५॥

**महत्त्व मिच्छतां तीर्थं श्रोतुः शीलादयो गुणाः**
**यत्र तेज स्तदिच्छूनां मनो[1] यत्र मनस्विनाम्॥ ४६॥**

**प्रयतः कीर्तये त्प्रातः समवाये द्विजन्मनाम्।**
**सायं च पुण्यश्लोकस्य ध्रुवस्य चरितं महत्॥ ४७॥**

**पौर्णमास्यां सिनीवाल्यां द्वादश्यां श्रवणेऽथवा[2]।**
**दिनक्षये व्यतीपाते सङ्क्रमेऽर्कदिनेऽपि वा॥ ४८॥**

**श्रावये च्छ्रद्धधानानां तीर्थपादपदाश्रयः।**
**नेच्छं स्तत्रात्मनाऽऽत्मानं सन्तुष्ट इति सिध्यति॥ ४९॥**

**ज्ञान मज्ञाततत्त्वाय यो दद्या त्सत्पथे[3]ऽमृतम्।**
**कृपालो र्दीननाथस्य देवा स्तस्यानुगृह्णते॥ ५०॥**

**इदं मयातेऽभिहितं कुरूद्वह! ध्रुवस्य विख्यात विशुद्धकर्मणः।**
**हित्वार्भकः क्रीडनकानि मातु र्गृहं च विष्णुं शरणं[4] जगाम॥ ५१॥**

इति श्रीमद्भागवते महापुराणे अष्टादशसाहस्र्यां
श्रीहयग्रीव ब्रह्मविद्यायां पारमहंस्यां संहितायां
चतुर्थस्कन्धे द्वादशोऽध्यायः॥ १२॥

---

1. A. B. G, I, J, M, Ma, T, W मानो 2. W तथा 3. M, Ma, Ms °त्परमार्थवित् 4. A. B. G. I. J. M. Ma. T. V add यो

**श्रीध. महत्त्वमिति**। तीर्थं महत्त्वावाप्तिस्थानम्[1]। गुणा यत्र भवन्ति॥ ४६॥

**प्रयत** इति। समवाये[2] सभायाम्॥ ४७-४८॥

**श्रावयेदिति**। नेच्छ न्निष्कामः तत्र श्रवणे आत्मनैवाऽऽत्मानं प्रति सन्तुष्टो भवतीति हेतोः सिद्धिं प्राप्नोति॥ ४९॥

**ज्ञानमिति**। किञ्च सत्पथे भगवन्मार्गेऽमृतरूपं ज्ञानं यो दद्यात्॥ ५०॥

**इदमिति**। ध्रुवस्य चरितं मया ते[3]ऽभिहितम्। मातुर्गृहं च हित्वा त्यक्त्वा[4]॥ ५१॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीधरस्वामि विरचितायां भावार्थदीपिकायां

व्याख्यायां द्वादशोऽध्यायः॥ ५२॥

**वीर.** महत्त्वं सर्वोत्कृष्टत्व मिच्छतां काममानानां तीर्थं [5-]महत्त्व प्राप्त्युपायो[-5] भवे दित्यनुषङ्गः। तथा श्रोतुः शीलादयो गुणाः भवेयु रित्यनुषक्तस्य वचनविपरिणामेना[6]ऽन्वयः। यत्र यस्मिन् ध्रुवचरिते श्रूयमाण इति शेषः। तदिच्छूनां तेज इच्छतां तेजो भवेत्। तेजसो विधेयत्वेन बुद्धिस्थत्वात् सन्निहितत्वात् प्रकृतत्वात् तच्छब्देन परामर्शा दुद्देश्यविशेषणत्वोपपत्तिः, तथा यत्र यस्मिन् चरिते मनस्विनां प्रशंसायां नित्ययोगे वा मत्वर्थीयः "अस्मायामेधास्रजो विनिः" (अष्ट. 5-2-121) इति विनि प्रत्ययः। मनः प्राशस्त्यं, भगवति मनसो नित्ययोगं वा इच्छतां मनः प्रशस्तं नित्ययुक्तं वा मनो भवेदित्यर्थः॥ ४६॥

अर्थसामर्थ्या त्प्रातः सायं च सायङ्काले च प्रयतः मनः प्रणिधानयुक्तः द्विजन्मनां ब्राह्मणानां समवाये सभायां पुण्यश्लोकस्य ध्रुवस्य महत् समीहितसाधनं चरितं कीर्तयेत्॥ ४७॥

पौर्णमास्यां सिनीवाल्यां दृष्टेन्दुकलाया ममावास्यायां श्रवण नक्षत्रयुक्ते दिने अर्कदिने सप्तमीभानुवासरादौ च कीर्तयेदिति सम्बन्धः॥ ४८॥

नेच्छन्निष्कामः तीर्थं पादेयस्य सः तीर्थपादो भगवान् तस्य पदाश्रयः भागवतः श्रद्दधानानां श्रद्धायुक्तान् प्रति इदं चरितं श्रावयेत् भागवतस्य नितरा मेतच्चरितश्रावणं युक्तमिति भावः। तत्र निष्कामनया[7] श्रावणे आत्मना स्वय मेवात्मानं श्रावयित्राद्यात्मानं प्रति

1. V ⁰त्व प्राप्ति 2. V adds सत् 3. V omits ते 4. A, B, J, Va omit त्यक्त्वा 5. A, B, T महत्वं प्राप्तु मुपायो 6. W ⁰न सम्बन्धः।
7. A, B, T ⁰तया

सन्तुष्ट इति सन्तुष्टो भगवान् भवेदिति हेतोः सिद्धयति। निष्कामनया[1] यः श्रावयति तस्मै[2] भगवान् स्वयमेव सन्तुष्ट इति सोऽपि सिद्धयत्वेव मुक्तिं प्राप्नोत्येवेत्यर्थः ॥ ४९ ॥

न केवलं निष्कामनया[3] श्रावयितारं भगवानेवाऽनुगृह्णीते[4], अपि तु सर्व एव देवा अनुगृह्णते इत्याह - **ज्ञानमिति**। अज्ञातं तत्त्वं तत्त्वत्रययाथात्म्यं येन तस्मै सत्पथे सतां मार्गे भगवन्मार्गे इत्यर्थः, अमृतरूपं ज्ञानं यो दद्यात् तस्य कृपालोरत एव दीननाथस्य देवा अनुगृह्णते अनुग्रहं कुर्वन्ति ॥ ५० ॥

हे कुरूद्वह ! विख्यातं प्रसिद्धं विशुद्धं[5] श्रुण्वता मप्यघशोधकं[6] कर्म[7] चेष्टितं यस्य तस्य ध्रुवस्येदं चरितं तुभ्यं मयाऽभिहितं कथितम्। यो ध्रुवः अर्भक एव सन् मातृगृहं क्रीडनकानि बाल[8] क्रीडासाधनानि च त्यक्त्वा विष्णुं शरणं जगामेति पुनः पुनः विस्मयते[9] ॥ ५१ ॥

**विज.** तीर्थ मुपायः साधनं [10-]मन्त्राद्युपदेष्टृवत् उपदेष्टा वा[-10] "तेजो बले प्रभावेऽन्ने ज्योतिष्यर्चिषि रेतसि। नवनीतेऽनले धर्मे दाने हस्तिमदेऽपि च" (वैज.को. 6-3-14-15) इत्यभिधानात्। तदिच्छूनां तेज आकाङ्क्षमाणानां यत्र यस्मिं श्चरितेऽभ्यस्यमाने तेजो भवतीत्यर्थः ॥ ४६ ॥

"समवाये समूहे कीर्तयेत्" इत्यतः तात्पर्यादिदमिति वक्ति - **पुण्यश्लोकस्येति** ॥ ४७-४८ ॥

श्रावयन् फलाभिसन्धिं न कुर्यादिति भावेनाह - नेच्छन्निति। तत्र चरिते श्राविते श्रुते वा फलन्नेच्छन् वर्तते इति शेषः। कथं तर्हि फलसिद्धि रित्यत आह - आत्मनेति। तत्रे त्युत्तरत्राऽपि सम्बध्यते। तत्र चरिते श्राव्यमाणे आत्मना मनसाऽऽत्मानं परमात्मानं प्रति सन्तुष्टः सिद्धयति प्राप्तभीष्टफलो भवति ॥ ४९ ॥

ध्रुवचरित व्याख्यानव्याजेन भागवतं ज्ञान मुपदिशतो न केवलं भगवानेवानुग्रहं करोति, किन्तु तदिन्द्रियाभिमानिनो देवा अपीत्याह - **ज्ञानमिति** ॥ ५० ॥

पुनरपि तन्माहात्म्यं सूचयन् उपसंहरति - **इदं मयेति** ॥ ५१ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे
श्री विजयध्वजतीर्थ कृतायां पदरत्नावल्यां
टीकायां द्वादशोऽध्यायः ॥ १२ ॥

---

1. A, B, T °तया 2. A, B, T तस्मिन् 3. A, B, T °तया 4. A, B, T गृह्णाति 5. A, B, T add कर्म यस्य सः 6. A, B, T add कर्मणां 7. A, B, T °नं 8. A, B, T omit बाल 9. W विस्मीयते 10--10. A, B मन्त्राद्युपदेष्टा

# त्रयोदशोऽध्यायः

## सूत उवाच[1]

निशम्य कौषारविणोपवर्णितं ध्रुवस्य वैकुण्ठपदाधिरोहणम्।
प्ररूढभावो भगवत्यधोक्षजे प्रष्टुं पुनस्तं विदुरः प्रचक्रमे ॥ १ ॥

## विदुर उवाच

के ते प्रचेतसो नाम कस्यापत्यानि सुव्रत।
कस्यान्ववाये प्रख्याताः कुत्र वा सत्रमासत[2] ॥ २ ॥

मन्ये महाभागवतं नारदं देवदर्शनम्।
येन प्रोक्तः क्रियायोगः परिचर्याविधिर्हरेः ॥ ३ ॥

स्वधर्मशीलैः पुरुषैर्भगवान् यज्ञपूरुषः[3]।
इज्यमानो भक्तिमता नारदेनेरितः किल ॥ ४ ॥

यास्ता देवर्षिणा तत्र वर्णिता भगवत्कथाः।
मह्यं शुश्रूषवे ब्रह्मन् कार्त्स्न्येनाऽऽचष्टुमर्हसि ॥ ५ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

एवं पञ्चभिरध्यायैः ध्रुवचर्याऽनुवर्णिता। अथैकादशभिश्चित्रं पृथुचारित्रमुच्यते। तत्र त्रयोदशे वक्तुं पृथोर्जन्म ध्रुवान्वये। अङ्गो वेनपिता पुत्रक्रौर्याद्गत इतीर्यते ॥

**निशम्येति**। प्ररूढो भावो भक्तिर्यस्य सः ॥ 1 ॥

**क इति**। अन्ववाये वंशे ॥ २ ॥

नारदेन प्रचेतसां सत्रे[4] वर्णिताः कथाः प्रष्टुं तन्महिमानमाह द्वाभ्याम्[5] - **मन्य इति**। देवस्य विष्णोः[6] दर्शनं यस्य सः। हरेः परिचर्याप्रकारः क्रियायोगः पञ्चरात्रे[7] येन प्रोक्तः ॥ ३ ॥

---

1. M, Ma, Ms श्रीशुक उवाच; Ma बादरायणिः 2. B, J, Ma, W °ते 3. M, Ma, Ms पुरुषोत्तमः 4. V omits सत्रे 5. A, B, J, Va omit द्वाभ्याम्
6. A, B, J, Va omit विष्णोः 7. V पा°

**स्वधर्मेति**। स्वधर्मशीलैः [1]पुरुषैः प्रचेतोभिः ॥ ४, ५ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं कात्स्न्र्येन श्रुतध्रुवचेष्टितो विदुषो "महिमानं विलोक्यास्य नारदो भगवानृषिः । आतोद्यं वितुदन् श्लोकान् सत्रेऽगायत्प्रचेतसाम् ॥" (भाग. 4-12-40) इत्युक्तप्रचेतस्सत्रे तत्र तत्र वर्णितभगवत्कथाबुभुत्सया पृच्छतीत्याह [2]बादरायणिः - **निशम्येति**। कौषारविणा मैत्रेयेणोपवर्णितं यद्ध्रुवस्य वैकुण्ठस्थानाधिरोहणं तन्निशम्य श्रुत्वा पुनरधोक्षजे भगवति प्ररूढः [3]अभिवृद्धः भावो भक्तिर्यस्य सः [4]विदुरः तं कौषारविमन्यत्प्रष्टुमुपक्रान्तवान् ॥ १ ॥

प्रश्नमेवाह - **के ते** इति। ते प्रचेतसां सत्रे इत्युक्ताः प्रचेतसः के इति जातिप्रश्नः। हे सुव्रत ! मैत्रेय ! कस्यापत्यानि पुत्रा इति योनिसम्बन्धप्रश्नः। कस्यान्ववाये [5]वंशे प्रख्याताः प्रसिद्धा इति वंशप्रश्नः। कुत्र वा सत्रमासत इति सत्रदेशप्रश्नः ॥ २ ॥

नारदेन प्रचेतसां वर्णिताः कथाः प्रष्टुं तन्महिमानमाह - **मन्य** इति। देवदर्शनं देवो भगवान् तस्य दर्शनं, [6-]दृश्यते अनेनेति दर्शनं,[-6] करणे ल्युट्। तत्त्वोपदेशेन भगवत्साक्षात्कारोपायभूत इत्यर्थः। देवस्य दर्शनं साक्षात्कारो यस्य यस्माद्वा इति बहुव्रीहिः तम् अत एव महाभागवतं मन्ये। तमेव विशिनष्टि - येन नारदेन हरेः परिचर्याविधिः पूजाप्रकाररूपः क्रियायोगः प्रोक्तः पञ्चरात्राद्युपदेशेन कथितः ॥ ३ ॥

क्रियायोगमेव विशदयन् नारदं प्रस्तौति - **स्वधर्मेति**। भक्तिमता निरतिशयभगवद्भक्तिमता नारदेन यज्ञपूरुषः यज्ञानां भोक्ता प्रभुश्च भगवान् स्वधर्मशीलैः स्वस्ववर्णाश्रमोचितभगवदाराधनरूपपञ्चमहायज्ञाद्यनुष्ठानपरैः पुरुषैः इज्यमान आराध्यमान ईरितः कथितः किल सर्वयज्ञाराध्यभगवत्परिचर्यारूपत्वेन स्वस्ववर्णाश्रमोचित[7]धर्मा अनुष्ठेया इति पञ्चरात्रादौ नारदेन भगवता कथितमित्यर्थः ॥ ४ ॥

एवं नारदं प्रस्तुत्य प्रचेतोभ्यः तदुपदिष्टकथाः पृच्छति - **या इति**। देवर्षिणा नारदेन तत्र तत्र प्रचेतसां ब्रह्मसत्रे या भगवत्कथा वर्णिताः ताः कथाः शुश्रूषवे [8-]श्रोतुमिच्छवे[-8] मह्यं कात्स्न्र्येन वक्तुमर्हसि ॥ ५ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अत्र हरितद्भक्तकथाश्रवणेन शुद्धन्तःकरणस्य बिम्बप्रतिबिम्बज्ञानादेवापवर्गः स्यादिति दीप्यतेऽस्मिन्नध्याये। तत्रादौ विदुरस्य

1. V omits पुरुषैः 2. A, B, T शुकः 3. A, B, T प्रवृद्धः 4. A, B, T omit विदुरः 5. A, B, T omit वंशे 6-6. A, B, T omit
7. A, B, T °ताः धर्माः 8--8. A, B, T omit

प्रचेतसां विषयप्रश्नप्रकारः तदुत्तरत्वेन मैत्रेयेणाऽस्य वंशावलिवर्णनं क्रियते - **निशम्येत्यादिना**। प्ररूढभावः प्रवृद्धभक्तिः सत्रेऽगायत् प्रचेतसामित्युक्तिः प्रश्नबीजम्॥ १॥

अन्ववाये वंशे॥ २॥

महाभागवतेन विदुरेण हरिकथाप्रश्नं विहाय प्रचेतसां प्रश्नः किमिति क्रियते इत्याशङ्क्य तेषां कथापि हरिकथाविनाभूता नारदेन प्रोच्यमानत्वात् नारदस्त्वन्यकथां न वक्ति भागवतचूडामणित्वादित्याह - **मन्य** इति। क्रियायोगः स क इति तत्राह। परिचर्याविधिः हरेरिति॥ ३॥

प्रवृत्तानां योग्यः कथं निवृत्तिविषयो भवतीत्याशङ्क्य सङ्कल्पविशेषात् स्यादित्याशयेनाह - **स्वधर्मशीलैरिति**। अयं भावः साक्षान्नारायण एव चरुपुरोडाशादिद्रव्यस्वामित्वेन तदभिमानित्वेनाग्न्यादिदेवतान्तर्यामित्वेन तच्छब्दप्रवृत्तिनिमित्तस्य मुख्यत्वेन देवतात्वेन च मन्त्रमूर्तित्वेनेज्यत इति नारदेन प्रतिपादित इति॥ ४॥

ततः किं फलितमित्यत्राह - **यास्ता** इति॥ ५॥

## मैत्रेय उवाच

**ध्रुवस्य चोत्कलः पुत्रः पितरि प्रस्थिते वनम्।**
**सार्वभौमश्रियं नैच्छदधिराजासनं पितुः॥ ६॥**

**स जन्मनोपशान्तात्मा निस्सङ्गः समदर्शनः।**
**ददर्श लोके विततमात्मानं लोकमात्मनि॥ ७॥**

**आत्मानं ब्रह्मनिर्वाणं प्रत्यस्तमितविग्रहम्।**
**अवबोधरसैकात्म्यमानन्दमनुसन्ततम्॥ ८॥**

**अव्यवच्छिन्नयोगाग्निदग्धकर्ममलाशयः।**
**स्वरूपमवरुन्धानो[1] नात्मनोऽन्यं तदैक्षत॥ ९॥**

1. M, Ma, Ms नान्यदस्मात्त॰; W नात्मनोऽन्यत्त॰

**जडान्धबधिरोन्मत्तमूकाकृतिरतन्मतिः ।**

**लक्षितः पथि बालानां प्रशान्तार्चिरिवानलः ॥ १० ॥**

**श्रीध.** ध्रुवस्य वंशे ते जाता इति वक्तुं ध्रुवस्य वंशमनुक्रामति - **ध्रुवस्येत्यादिना** । पितुः सार्वभौमश्रियं नैच्छदधिराजासनं च ॥ ६ ॥

अनिच्छायां[1] हेतुमाह - **स इति** चतुर्भि ॥ ७ ॥

**आत्मानमिति** । आत्मान स्वरूपभूत ब्रह्मावरुन्धान आप्नुवन् जानन् आत्मनो [2-]नान्यं तदैक्षत[-2] । स्वयं तु सर्वस्मादन्यस्सन् । कथम्भूतं ब्रह्म ? निर्वाणं शान्तम् । [3-]प्रत्यस्तमितविग्रह[-3] प्रत्यस्तमितः [4-]प्रतिसन्धानेनास्तमितः[-4] शान्तो विग्रहो भेदो यस्मिन् । अवबोधरसेनैकात्म्यं यस्य ॥ ८ ॥

**अव्यवच्छिन्नेति** । कथम्भूत ? अव्यवच्छिन्नो [5-]निरन्तरो[-5] यो योगः स एवाग्निः तेन दग्धः कर्ममल आशयो वासना च यस्य ॥ ९ ॥

**जडेति** । जडादीनामिवाऽऽकृतिः यस्य तथाभूतो लक्षितः अतन्मतिः न तेषामिव मतिर्यस्य सर्वज्ञत्वात् । प्रशान्तान्यर्चींषि ज्वाला यस्यानलस्य तद्वत्स्थितः ॥ १० ॥

**वीर.** एवमापृष्टो मुनिः प्रचेतसो ध्रुववंशे जाता इति वक्तुं ध्रुववंशमनुक्रामति[6] - **ध्रुवस्येति** । ध्रुवस्य पुत्रः उत्कलाख्यः पितरि ध्रुवे वनं प्रति गच्छति सति सार्वभौमश्रियं पितुरधिराजासनं च नैच्छत् ॥ ६ ॥

अनिच्छायां किं कारणमित्यपेक्षायां बहुजन्मसिद्धयोगमाहात्म्यप्रत्यक्षितस्वात्मयाथात्म्यानुभवतृप्तत्वादन्यत्पुरुषार्थजातं[7] नैच्छदिति वक्तुं तस्य स्वात्मानन्दानुभवमाह - **स इति** । स उत्कलः जन्मना जन्मप्रभृति उपशान्तः[8] रागादिभिरकलुषित[9] आत्मा मनो यस्य । अत एव निस्सङ्गः रागिभिः सङ्गरहितः समदर्शनस्सन् लोके विततं व्याप्तम् आत्मानम् आत्मनि लोकं च ददर्श । लोके विततमात्मानमिति शरीरव्यापकत्वमुक्तम् । आत्मनि लोकमित्यात्मनो धारकत्वमुक्तं, लोक्यते दृश्यते[10] इति लोकः शरीरम् ॥ ७ ॥

आत्मानं प्रत्यगात्मानं ब्रह्म धर्मभूतज्ञानबृहत्तया ब्रह्मशब्दवाच्यं निर्वाणं सुखस्वरूपं[11] प्रत्यस्तमितविग्रहं देहविनिर्मुक्तम् "अशरीरं

1. Va °च्छाहे° 2--2. V अन्यद्यत् तन्नैक्षत । 3--3. B, J, V, Va omit 4--4. B, J, V, Va omit 5--5. B, J, V, Va omit 6. A, B, T श्रावयति
7. W भूतं 8. W शान्तं 9. W °तं 10. A, B, T omit दृश्यते 11. W omits °स्व°

शरीरेषु'' (कठ.उ. 2-22) इति श्रुतेः । अवबोधरसैकात्म्यं अवबोध एव रसः ऐकात्म्यमेकस्वभावत्वं यस्य तं क्वचिदप्यंशे जाड्यरहितमित्यर्थः । आनन्दं धर्मभूतानन्दगुणविशिष्टं ''गुणवचनेभ्यो मतुपो लुग्वक्तव्यः'' (वार्तिक under अष्टा 1-4-19) इत्यनुशासनात् अतिसन्ततमत्यन्तं नित्यम् ॥ ८ ॥

स्वरूपं स्वस्वरूपभूतमवरुन्धानः अनुसन्दधानः अत एव अव्यवच्छिन्नयोगाग्निदग्धकर्ममलाशयः अव्यवच्छिन्नः निरन्तरः योगः आत्मयाथात्म्यज्ञानयोगः स एवाग्निस्तेन दग्धं कर्मरूपमलं यस्य सः, आशयोऽन्तःकरणं यस्येति बहुव्रीहिगर्भो बहुव्रीहिः । अन्यत् आत्मस्वरूपादन्यत् पुरुषार्थभूतदेहतदनुबन्ध्यादिकं स्वयमन्यः देहादिभ्यो विलक्षणः नैक्षत नापश्यत् ॥ ९ ॥

जडादितुल्यवेषः अतन्मतिः जडादितुल्यमतिरहितः प्रशान्तानि अर्चींषि ज्वाला यस्य सोऽग्निरिव स्थितः बालानां पथि मार्गे स्वमाहात्म्यानाविष्काररूपे लक्षितः ॥ १० ॥

**विज.** अधिराजासनं राजासनमधिकृत्य वर्तमानां सार्वभौमश्रियं नैच्छदित्यन्वयः ॥ ६ ॥

कुतो नैच्छदिति तत्राह - **स जन्मनेति** । जन्मप्रभृति भगवन्निष्ठादिगुणयुक्तत्वात् समदर्शनत्वं स्पष्टयति ददर्शेति । आत्मानं परमात्मानं लोके विततं ददर्श लोकमात्मनि परमात्माधारतया स्थितम् अद्राक्षीदित्यन्वयः ॥ ७ ॥

तदेव विशिनष्टि - **आत्मानमिति** । ददर्शेत्यनुवर्तते । आत्मानं स्वबिम्बं हरिमेवं ददर्शेत्यन्वयः । कथं ब्रह्म ''अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन्गुणाः'' इति श्रुतेः गुणतो देशतो व्याप्तं हृदयगुहाकाशस्याल्पत्वेन तत्स्थितस्यापि तथात्वात् कथं व्याप्तं इत्युच्यत इत्याशङ्क्य प्राकृतवैकृतरूपवत एव अनुपपत्तिः व्याप्तत्वेन हरेः तादृशशरीराभावादिति भावेनोक्तम् - निर्वाणमिति । ''एतद्बाणमवष्टभ्य'' इति श्रुतौ बाणशब्दस्य शरीरे प्रयोगात् देहविनाशे तत्रस्थस्यापि विनाशसम्भवात् कथं ब्रह्मत्वमुच्यत इत्यतो वाऽऽह निर्वाणमिति । निर्गतो नाशो यस्मात्तथोक्तम् - ''निर्वाणं निर्वृतौ मोक्षे विनाशे गजमज्जने'' (वैज.को. 7-3-20) इति यादवः । अनेन देहिनो जीवस्य देहोऽहमिति तन्निमित्तदुःखित्वेऽपि हरेस्तन्नास्तीति ज्ञापितम् । हरेः प्राकृतदेहो नास्तीति स्पष्टमाह प्रत्यस्तमितेति । ''गात्रं वपुः संहननं शरीरं वर्ष्मविग्रहः'' (अम.को. 2-330) इत्यमरः । प्रतीत्युपसर्गयोगेन यानि यान्यवताररूपा-ण्यन्तर्यामिरूपाणि च तानि तानि सर्वाण्यपि प्राकृतशरीररहितानीति सूचनेन मूलरूपस्य किमु वक्तव्यमित्यायातम् । तर्हीदं शून्यकल्पमित्यत उक्तम् अवबोधेति । अवबोधरसो ज्ञानरसः स एवैकमात्मनोऽभिन्नं रूपं यस्य तत्तथोक्तं, प्राकृतज्ञानमिश्रितं न भवतीत्येकेत्युक्तम् । तस्यापि ज्ञानवाचित्वादवगच्छतीत्यादौ सिद्धत्वात् । ''ज्ञानज्ञानः सुखसुखः'' इति श्रुतिरपि सूचिता स्यात् । रूपरूपिणोर-

भेदद्योतनायैकात्म्यमित्युक्तम् ''ऐकात्म्यप्रत्ययसारम्'' इति श्रुतिश्च। एवं चेत् विज्ञानवादानुप्रवेश इति तत्राह आनन्दमिति। आनन्दयतीत्यानन्दं सुखानुभवरूपमित्यर्थः। ''विज्ञानमानन्दं ब्रह्म'' (बृह.उ. 3-9-28) इति श्रुतेः। उपसंहरति अनुसन्ततमिति। अतः सर्वप्राणिष्वनुगतत्वेन तद्बहिष्ट्वेन च गुणगुणिनो रूपरूपिणोरभेदेन ततं व्याप्तमित्युपपन्नमित्यर्थः। ''समभेदे'' (वैज.को. 8-7-8) इति यादवः॥ ८॥

ज्ञानाग्निना दग्धबाह्यान्तःकरणस्यैतादृशभगवद्रूपदर्शनं सङ्गच्छत इत्याह - **अव्यवच्छिन्नेति**। योगशब्देन तज्जनितज्ञानं लक्ष्यते। अव्यवच्छिन्नयोगेन निरन्तरध्यानलक्षणोपासनया जातेन ज्ञानाग्निना दग्धं भस्मीभूतं कर्ममलं पापक्रियानिमित्तं मलं किट्टं यस्य स तथा, तादृश आशयोऽन्तःकरणं यस्य स तथा, निर्मलान्तःकरणपात्रे प्रज्वलितेन ज्ञानदीपेन लोके विततमात्मानमात्मनि ततं लोकं च ददर्शेत्युक्त्या द्वयोः समत्वमायातमिति मन्दाशङ्कामपनुदन् विशदयति - स्वरूपमिति। स्वरूपं जीवस्य बिम्बरूपं परमात्मानमवरुन्धानः स्वज्ञानान्तस्स्थितं कुर्वाणः साक्षात्कृतं कुर्वाणोऽस्माद्धरेरन्यत्स्वतन्त्रमनियतं तज्जगन्नैक्षत, किन्तु तत्सृष्टं तत्स्थापितं तन्नियतं तत्संहृतं तज्ज्ञापितं तद्बद्धं तन्मोचितमपश्यदित्यर्थः। तदा स्वरूपं प्रतिबिम्बमस्माद्बिम्बादन्यद्भिन्नं नैक्षतेति बिम्बप्रतिबिम्बयोरत्रैक्यमुच्यत इति वक्तुं न युक्तम्। अवरुन्धान इत्यस्य निर्विषयत्वात् तदेति कालस्य पृथङ्गनिर्देशानुपपत्तेश्च ददर्शेत्यत्र लोकात्मनोराधाराधेयत्वोक्तेश्च तस्य च भेदनिष्ठत्वात्। तदुक्तम् ''भिन्नस्वरूपमभिदं स्वरूपं तु द्विधा हरेः। भिन्नस्वरूपं ब्रह्माद्यं मत्स्याद्यभिदमुच्यते'' (गारुडे) इति॥ ९॥

एवंविधोऽपि लोकसम्भाषणविसर्जनार्थमविवेकिनामेवं दृष्ट इत्याह - **जडेति**। अतन्मतिः तत्तद्वस्तुविषयज्ञानशून्यः विवेकिनां पक्षे एव सर्वविलक्षणे विष्णौ यया संसारं तरति सा मतिर्यस्य सोऽतन्मतिरिति प्रशान्तार्चिः भस्मगर्भितोऽग्निरिव॥ १०॥

**मत्वा तं जडमुन्मत्तं कुलवृद्धाः समन्त्रिणः।**
**वत्सरं भूपतिं चक्रुर्यवीयांसं भ्रमेः सुतम्॥ ११॥**

**सर्वर्द्धिर्वत्सरस्येष्टा[1] भार्याऽसूत षडात्मजान्।**
**पुष्पार्णं तिग्मकेतुं[2] च इषमूर्जं वसुं जयम्॥ १२॥**

**पुष्पार्णस्य प्रभा भार्या दोषा च द्वे बभूवतुः।**
**प्रातर्मध्यन्दिनं सायमिति ह्यासन् प्रभासुताः॥ १३॥**

---

1. A, B, G, I, J, M, Ma, Ms, T स्वर्वीथि° 2. V चन्द्र

प्रदोषो निशिथो व्युष्टि[1]: इति दोषासुतास्त्रयः ।
व्युष्टि[2]: सुतं पुष्करिण्यां सर्वतेजसमादधे ॥ १४ ॥

स चक्षुः सुतमाकूत्यां पत्न्यां मनुमवाप ह ।
मनोरसूत महिषी विरजान्[3]नड्वला सुतान् ॥ १५ ॥

पुरुं[4] कुत्सं त्रितं द्युम्नं सत्यवन्तमृतं[5] व्रतम् ।
अग्निष्टोममतीरात्रं प्रद्युम्नं[6] शिबिमुल्मुकम् ॥ १६ ॥

उल्मुकोऽजनयत्पुत्रान्पुष्करिण्यां षडुत्तमान् ।
अङ्गं[7] सुमनसं[8] ख्यातिं क्रतुम[9]ङ्गिरसं गयम् ॥ १७ ॥

सुनीथाङ्गस्य या पत्नी सुषुवे वेनमुल्वणम् ।
यद्दौश्शील्यात्स राजर्षिर्निर्विण्णो निरगात्पुरात् ॥ १८ ॥

यमङ्ग शेपुः कुपिता वाग्वज्रा मुनयः किल ।
गतासोस्तस्य भूयस्ते ममन्थुर्दक्षिणं करम् ॥ १९ ॥

अराजके तदा लोके दस्युभिः पीडिताः प्रजाः ।
जातो नारायणांशेन पृथु[10]राद्यः क्षितीश्वरः ॥ २० ॥

श्रीध. मत्वेति । यवीयांसम् उत्कलात् कनिष्ठम् ॥ ११ ॥

सर्वेति । इष्टा प्रिया भार्या ॥ १२, १३ ॥

प्रदोष इति । निशिथः निशीथः ॥ १४ ॥

स इति । स सर्वतेजाश्चक्षुस्सञ्ज्ञं मनुं सुतं पुत्रम्[11]अवाप । मनोर्महिषी नाम्ना[12] नड्वला विरजान् शुद्धान् पुरुप्रमुखान् द्वादशसुतानसूत ॥ १५-१८ ॥

1. A, B, G, I. J, M, Ma, Ms, T °ष्टः 2. A, B, G, I, J, M, Ma, Ms, T °ष्टः 3. M, Ma, Ms वैराजा नड्वला 4. M, Ma, Ms पुरुकुत्सं
5. M, Ma, Ms व्रतमृतव्रतम् 6. M, Ma, Ms सु 7. M, Ma सुनासमाख्यातिं 8. Ms, W स्वातिं 9. M, Ma, Ms °मा° 10. M, Ma पृथुः पृथुपराक्रमः
11. V omits पुत्रम् 12. B, J, V, Va omit नाम्ना

**यमिति।** अङ्ग! हे विदुर! वागेव वज्रं येषां ते॥ १९॥

मथने हेतुः - **अराजक** इति। आद्यः पुरग्रामादीनां तेन रचितत्वात्॥ २०॥

**वीर.** तमुत्कलं मन्त्रिभिस्सहितास्सर्वे तत्कुलवृद्धाः जडमुन्मत्तं च ज्ञात्वा तं विहायेत्यर्थः। भ्रमेः सुतं यवीयांसं कनीयांसं वत्सरं भूपतिं राजानं चक्रुः॥ ११॥

वत्सरस्येष्टा शीलरूपगुणादिभिः नितरामनुकूला सर्वर्द्ध्याख्या[1] भार्या पुष्पार्णादीन् षट् पुत्रानसूत सुषुवे॥ १२॥

तत्र षण्णां पुत्राणां मध्ये पुष्पार्णाख्यस्य ज्येष्ठस्य प्रभा दोषेति द्वे भार्ये बभूवतुः। तत्र प्रभायाः सुताः प्रातरादयस्त्रयो बभूवुः॥ १३॥

दोषासुताः प्रदोषादयस्त्रयः आसन्। अत्र व्युष्टिः[2] पुष्करिण्याख्यायां भार्यायां सर्वतेजसाख्यं[3] सुतमादधे जनयामास॥ १४॥

स सर्वतेजसः[4] आकूत्याख्यायां[5] पत्न्यां चक्षुस्संज्ञं सुतं मनुमवाप। मनोः चक्षुस्संज्ञस्य नड्वाख्या महिषी भार्या विरजान् शुद्धान् सुतान् पुरुप्रमुखान् द्वादश पुत्रान् असूत॥ १५, १६॥

तत्रोल्मुकः पुष्करिण्यां भार्यायाम् उत्तमान् श्रेष्ठान् अङ्गादीन् षट् पुत्रानजनयत्॥ १७॥

तत्राङ्गस्य या सुनीथाख्या भार्या सा उल्बणं दुरात्मानं वेननामकं पुत्रं सुषुवे। दौरात्म्यमेव प्रपञ्चयति - यदित्यादिना। यस्य वेनस्य दौश्शील्यात् दुष्टस्वभावाद्धेतोः स राजर्षिरङ्गः निर्विण्णः नितरां दुःखितः पुरान्निरगात् निर्गतः॥ १८॥

हे अङ्ग! हे विदुर! मुनयः कुपिताः वेनेन कोपं प्रापिताः वागेव वज्रं येषां ते यं वेनं शेपुः किल शप्तवन्तः। शापाद्धतप्राणस्य तस्य वेनस्य दक्षिणं करं हस्तं पुनस्ते मुनयो ममन्थुः मथितवन्तः॥ १९॥

मथने हेतुमाह - **अराजक** इति। तदा शापानन्तरं लोके अराजके राज्ञा रहिते सति अत एव दस्युभिः पीडिताः प्रजा बभूवुः। तदा पृथुर्नाम आद्यः पुरग्रामादीनां तेन रचितत्वात् क्षितीश्वरो राजा नारायणांशेन जातः॥ २०॥

**विज.** अस्मिन्नेवं गते कोऽत्र राजाभूदत्राह - **मत्वेति।** कालावयवस्य वत्सरस्य राज्यार्हत्वं कथमित्यत उक्तं यवीयांसमिति। कुलवृद्धा

---

1. A, B, T स्ववींध्याख्या 2. A, B, T °ष्टः 3. A, B, T आख्यं 4. A, B, T तेजा॰ 5. A, B, T °तिनाम्न्यां

ज्येष्ठे कल्पनाम्नि सुते स्थिते वत्सरं राजानं कथमकुर्वन्नित्येतच्चोद्यं "कल्पः कल्पाभिमानी सन् शिंशुमारानुगः स्थितः । वत्सरो राज्यमकरोत्पित्रा दत्तं महाबलः । चक्रे नारायणः साक्षात्किंस्तुघ्नः कल्पमात्मजम्" (ब्राह्मे) इत्यनेन परिहर्तव्यम् ॥ ११ ॥

वत्सरोऽपि नाम्ना स्वर्वीथ्यां भार्यायां षट् सुतानापेत्याह[1] - **स्वर्वीथीति**। स्वर्गमार्गाभिमानित्वात्स्वर्वीथीति ॥ १२ ॥

अत्र यं यमादाय कथा प्रवर्तते स स एव वंशे हेतुभूतः, अन्ये तु अकृतोद्वाहाः योगिनोऽप्रजाश्चेति तात्पर्यं ज्ञातव्यम् । एताः स्त्रियः सुताश्च कालादितत्तद्वस्त्वभिमानिन इति च ॥ १३, १४ ॥

स सर्वतेजाश्चक्षुर्नामानं सुतं नाम्नाऽऽकूत्यां पत्न्यामवापेत्यन्वयः । मनोर्महिषी नाम्ना नड्वला वैराजा वैराजपुत्री पुरुकुत्सादीन् दशसुतानसूतेत्यन्वयः ॥ १५-१७ ॥

अङ्गस्य या सुनीथा नाम पत्नी सा उल्बणमसुरप्रकृतिं वेनं सुषुव इत्यन्वयः ॥ १८ ॥

यं वेनं अङ्ग ! विदुर ! गतासोः मृतस्य ॥ १९ ॥

ततः किमभूत्तत्राह - जात इति ॥ २० ॥

## विदुर उवाच

**तस्य शीलनिधेः साधोर्ब्रह्मण्यस्य महात्मनः ।**
**राज्ञः कथमभूत् दुष्टा प्रजा यद्विमना ययौ ॥ २१ ॥**

**किं[2] चांहो वेन[3]मुद्दिश्य ब्रह्मदण्डमयूयुजन् ।**
**दण्डव्रतधरे राज्ञि मुनयो धर्मकोविदाः ॥ २२ ॥**

**नावध्येयः प्रजापालः प्रजाभिरघवानपि ।**
**यदसौ लोकपालानां बिभर्त्योजः स्वतेजसा ॥ २३ ॥**

**एतदाख्याहि मे ब्रह्मन् सुनीथात्मजचेष्टितम् ।**
**श्रद्दधानाय भक्ताय त्वं परावरवित्तमः ॥ २४ ॥**

---

1. A °नवापे° 2. A, B, G, I, J, Ms, T वांहो 3. A, B, G, I, J, Ms, T, V वेन उ°

## मैत्रेय उवाच

**अङ्गोऽश्वमेधं राजर्षिराजहार महाक्रतुम्[1]।**

**नाऽऽजग्मुर्देवतास्तस्मिन्नाहूता ब्रह्मवादिभिः ॥ २५ ॥**

**श्रीध. तस्येति**। यद्यस्याः प्रजायाः हेतोर्विमनास्सन् ययौ ॥ २१ ॥

**किञ्चेति**। किं च[2] अंहः अपराधं वेने उद्दिश्य आलक्ष्य ॥ २२ ॥

यतोऽयमधर्म इत्याह - **नेति**। नावध्येयोऽवज्ञेयोऽपि न भवति ॥ २३ ॥

**एतदिति**। परावरविदां मध्येऽतिश्रेष्ठः त्वम्[3] ॥ २४ ॥

[4]अभावी पुत्रः काम्यकर्मणा बलादापादितो[5]ऽपि न सुखाय भवेदिति द्योतयन् अङ्गस्य पुत्रोत्पत्तिक्रममाह - **अङ्ग** इत्यादिना ॥ २५ ॥

**वीर.** [6-]एवं दत्तप्रश्नावसरः क्षत्ता पृच्छति - **तस्येति**। शीलनिधेः सुस्वभावसद्वृत्त्याश्रयस्य अत एव ब्रह्मण्यस्य ब्राह्मणसेवापरायणस्य ब्रह्मनिष्ठस्येति वा। अत एव महात्मनः सार्वात्म्यब्रह्मोपासनपरमनोयुक्तस्य साधोः परकार्यसाधनशीलस्य तस्य अङ्गस्य राज्ञः दुष्टा प्रजा पुत्रः[-6] कथमभूत् अजायत यत्[7] यतः दुष्टायाः प्रजाया हेतोर्विमनाः दुःखितमना ययौ पुरान्निर्गतः ॥ २१ ॥

दण्डः असाधुनिग्रहरूपो दण्डः स एव व्रतं तद्बिभर्तीति तत्तस्मिन् राज्ञि वेने[8] धर्मकोविदा मुनयः किं वा अंहः अपराधम् उद्दिश्याऽऽलक्ष्य वेनं ब्रह्मदण्डं प्रति[9] अयूयुजन् ब्रह्मशापेन युक्तं कृतवन्तः। प्रजापरिपालननिष्ठे राज्ञि शापकरणं मुनिभिरनुचितमिति भावः ॥ २२ ॥

तदेवाह - **नेति**। अघवानपि अपराध्यपि प्रजापालः राजा प्रजाभिर्नावध्येयः अवज्ञेयो न भवति यत् यस्मादसौ प्रजापालः लोकपालानामोजः स्वतेजसा बिभर्ति ॥ २३ ॥

हे ब्रह्मन्! एतत् सुनीथात्मजस्य वेनस्य[10] चेष्टितं श्रद्दधानाय शुश्रूषात्वरायुक्ताय भक्ताय मे[11] मह्यम् अनेन स्वस्य श्रवणे योग्यतोक्ता। परावरवित्तमः परः परमात्माः अवरः प्रकृतिपुरुषादिः तद्विदां मध्ये श्रेष्ठस्त्वम्, अनेन श्रावणे[12] योग्यतोक्ता। आख्याहि कथय ॥ २४ ॥

---

1. W क्रतूत्तमम् 2. A, B, J, Va वा 3. B, J, V, Va omit त्वम् 4. V अथापि 5. A, B, J, Va omit अपि 6--6. A, B, T omit 7. A, B, T omit यत् 8. A, B, T omit वेने 9. A, B, T omit प्रति 10. A, B, T omit वेनस्य 11. W omits मे 12. A, B, T कथने

एवमापृष्टो मुनिः ब्रह्मवित् काम्यकर्मणि बलादापातितोऽपि तेन न सुख्यतीति[1] द्योतयन्[2] अङ्गस्य पुत्रोत्पत्तिक्रममाह - अङ्ग इत्यादिना। राजा चासौ ऋषिः अङ्गः क्रतूनां मध्ये उत्तममश्वमेधमाजहार आरब्धवान्। तस्मिन्नश्वमेधे क्रतौ ब्रह्मवादिभिः श्रुताध्ययनादिसम्पन्नैः ऋत्विग्भिराहूताः सत्यः देवता नाऽऽजग्मुः नाऽऽगतवत्यः॥ २५॥

**विज.** श्रवणमङ्गलत्वात्सामान्यतः कथितं विशेषतो विदुरः श्रोतुं पृच्छतीत्याह - **तस्येति**। यद्विमनाः यस्या दुष्टप्रजाया विषण्णमनाः॥ २१॥

दण्डव्रतं हिंसाख्यं व्रतं[3] धारयतीति दण्डव्रतधरः "दण्डोऽस्त्री शासने राज्ञां हिंसायां लकुटे गुडे" (वैज.को. 6-5-38) इति यादवः। *यद्वा शासनाख्यं व्रतं बिभ्रति। न तेष्ववज्ञानलेशः सम्भाव्यत इत्याह - धर्मकोविदा इति॥ २२॥

नावध्येयः नावज्ञेयः। तत्र निमित्तमाह - यदसाविति॥ २३॥

यत एवं तत्त्वं तस्मादत्र महन्निमित्तमस्ति एतन्मे आख्याहीत्यन्वयः। मम अत्र इतिहासज्ञानं नास्तीति वक्तुं न शक्यमित्यत उक्तं परावरेति॥ २४॥

सूचितमर्थं विस्तरतो वक्तुमुपक्रमते - अङ्ग इति॥ २५॥

**तमूचुर्[4]विस्मितास्तात[5] यजमानमथर्त्विजः।**
**हवींषि हूयमानानि न ते गृह्णन्ति देवताः॥ २६॥**

**राजन् हवींष्यदुष्टानि श्रद्धयाऽऽसादितानि[6] ते।**
**छन्दांस्ययातयामानि योजितानि धृतव्रतैः॥ २७॥**

**न विदामेह देवानां हेलनं वयमण्वपि।**
**यन्न गृह्णन्ति भागान् स्वान् ये देवाः कर्मसाक्षिणः॥ २८॥**

---

1. A, B, T तुष्यतीति 2. A, B, T add अत्र * यद्वा इति व्याख्यानानन्तरम् आरभमानस्य विजयध्वजस्य दण्डव्रतधरे इति मूलशब्दस्य स्थाने दण्डव्रतधराः इति पाठान्तरं सम्मतमिति सम्भाव्यते।
3. A omits व्रतं 4. Ms, V त ऊचु° 5. A, B, G, I, J, T, V °स्तत्र 6. W °या साधि°

**मैत्रेय उवाच**

**अङ्गो द्विजवचः श्रुत्वा यजमानः सुदुर्मनाः ।**

**तत्प्रष्टुं व्यसृजद्वाचं सदस्यांस्तदनुज्ञया ॥ २९ ॥**

**नागच्छन्त्याहुता देवा न गृह्णन्ति ग्रहानिह ।**

**सदसस्पतयो ब्रूत किमवद्यं मया कृतम् ॥ ३० ॥**

**श्रीध. राजन्निति** । अयातयामानि अगतवीर्याणि ॥ २६-२८ ॥

**अङ्ग** इति । यज्ञे गृहीतमौनोऽपि वाचं व्यसृजत् प्रायुङ्क्त ॥ २९ ॥

**नेति** । आहुता आहूताः ग्रहान् सोमपात्राणि इह यज्ञे न गृह्णन्ति । [1-] सदसस्पतयः सदस्याः [-1] ॥ ३० ॥

**वीर.** हे तात ! [2] ऋत्विजो विस्मिता यजमानमङ्गमूचुः । [3] उक्तिमेवाह ते त्वया त्वत्सम्बन्धीनि हूयमानानि देवतोद्देशेन प्रक्षेपपूर्वकं त्यक्तानि अयातयामानि अगतवीर्याणि सारवन्तीत्यर्थः । हवींषि पुरोडाशादीनि देवता न गृह्णन्ति ॥ २६ ॥

हे राजन् ! हवींषि अदुष्टानि शुद्धानि ते त्वया श्रद्धया [4] साधितानि सम्पादितानि च तथा छन्दांसि क्रत्वङ्गभूता मन्त्रा अयातयामानि स्वरवर्णादिभिरगतवीर्याणि । तत्र हेतुः-दृढव्रतैः स्वरवर्णादियुक्तत्वेन मन्त्रोच्चरणमेव दृढं व्रतं येषां तैः ऋत्विग्भिर्योजितानि प्रयुक्तानि ॥ २७ ॥

एवं यथावत् अनुष्ठीयमाने क्रतौ देवहेलनं देवान् प्रति हेलनमपराधमणु अल्पमपि वयं न विदामो न जानीमः । यत् यस्मात् हेलनात् स्वकीयान् भागान् कर्मसाक्षिणः कर्मणि [5] गुणदोषद्रष्टारो देवा न गृह्णन्ति, अतोऽवश्यं केनचित् देवहेलनेन भवितव्यं, परन्तु तद्वयं न विदाम इत्यर्थः ॥ २८ ॥

एवं ऋत्विग्भिरुक्तोऽङ्गः तानाहेत्याह मुनिः । द्विजवचः श्रुत्वा अथानन्तरं सुतरां दुःखितमना यजमानोऽङ्गः यज्ञे गृहीतमौनोऽपि सदस्यान् सदसि स्थितान् प्रति तदनुज्ञया सदस्यानुज्ञया त्यक्तमौनः तद्देवतानागमनकारणं प्रष्टुं वाचं व्यसृजत् प्रायुङ्क्त॥ २९ ॥

---

1--1. A, B, J, Va omit 2. A, B, T add ते 3. A, B, T उक्त° 4. A, B, T °याऽऽसादि° 5. A, T °र्णां

वाग्विसर्गमेवाह - **नागच्छन्तीति** । इह क्रतौ देवता आहूता नागच्छन्ति ग्रहान् सोमपात्राणि न गृह्णन्ति, हे सदसस्पतयः ! मया किमवद्यं हेलनं कृतं तद्यूयं ब्रूत ॥ ३० ॥

**विज.** न द्रव्यादिदोषादित्याहुरित्याह - **राजन्निति** । आसादितानि आपादितानि अयातयामानि अगतवीर्याणि ॥ २६, २७ ॥

हेलनमवज्ञानम् ॥ २८, २९ ॥

आहुता आहूताः, ग्रहान् हविःपिण्डान् ॥ ३० ॥

**[1-]सदसस्पतय[-1] ऊचुः**

**नरदेवेह भवतो [2]नाघं तावन्मनाक् स्थितम् ।**

**अस्त्येकं प्राक्तनमघं यदिहेदृक् त्वमप्रजः ॥ ३१ ॥**

**तथा [3]साधय भद्रं ते आत्मानं [4]सप्रजं नृप ।**

**इष्टस्ते पुत्रकामस्य पुत्रं दास्यति यज्ञभुक् ॥ ३२ ॥**

**[5]तथा स्वभागधेयानि ग्रहीष्यन्ति दिवौकसः ।**

**यद्यज्ञपुरुषः साक्षादपत्याय हरिर्वृतः ॥ ३३ ॥**

**तांस्तान् कामान् हरिर्दद्याद्यान् यान् कामयते [6]जनः ।**

**आराधितो यथैवैष तथा पुंसां फलोदयः ॥ ३४ ॥**

**इति व्यवसिता विप्रास्तस्य राज्ञः प्रजातये ।**

**पुरोडाशं निरवपन् शिपिविष्टाय विष्णवे ॥ ३५ ॥**

**श्रीध. नरदेवेति** । इह जन्मनि न तावन्मनागीषदप्यघं स्थितम् । कथञ्चिज्जातस्याघस्य सद्य एव प्रायश्चित्तैः क्षालनात् । किन्तु प्राक्तनमेकमघमस्ति यद्यस्मादीदृक् गुणाधिकोऽपि त्वं प्रजारहितः ॥ ३१ ॥

---

1--1. M, Ma, Ms, W सदस्याः 2. M, Ma नावद्यं हि मनाक्; Ms नावद्यं किञ्चनाऽऽस्थितम् 3. M, Ma सादय 4. A, B, G, I, J, T, V सु
5. M, Ma, Ms यथा 6. V नरः

**तथेति**। अतो यथा देवा हविर्गृह्णन्ति तथाऽऽत्मानं सुप्रजं साधय। कथं साधनीयं तदाहुः - इष्ट इति॥ ३२॥

**तथेति**। तथा सति स्वभागान् ग्रहीष्यन्ति। यद्यतो हरिः साक्षात् वृतस्स्यात् अतस्तेन सह सर्वे देवा आगमिष्यन्तीत्यर्थः॥ ३३॥

नन्वतितुच्छान् कामान् हरिः कथं दद्यात् तत्राह - **तांस्तानिति**॥ ३४॥

**इतीति**। प्रजापतये पुत्रोत्पत्तये [1-]शिपिविष्टाय[-1] शिपिषु पशुषु यज्ञरूपेण [2-]प्रविष्टाय[-2]। तथा च श्रुतिः "यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति" (शतपथ.ब्रा) इति॥ ३५॥

**वीर.** हे नरदेव ! इह जन्मनि भवतः ब्रह्मविद· तावन्मनागीषद[3]प्यघं न स्थितं किन्तु प्राक्तनमेकमघमस्ति यद्यस्मादघादीदृक् गुणाधिको[4]ऽपि त्वम[5]प्रजः प्रजारहितो [6]बभूविथ॥ ३१॥

अतो देवा यथा हवींषि गृह्णीयुः तथाऽऽत्मानं सप्रजं सपुत्रं साधय। कथं साधनीयं तत्रा[7]हुः - इष्ट इति। यज्ञभुक् भगवान् पुत्रं कामयमानस्य ते त्वया इष्ट इज्यमानस्तुभ्यं पुत्रं दास्यति॥ ३२॥

[8]तथा तथा सति दिवौकसो देवाः स्वभागधेयानि स्वभागान् "भागरूपनामभ्यो धेयः" (वार्तिक under अष्टा 5-4-25) इति स्वार्थे धेयप्रत्ययः। ग्रहीष्यन्ति। यद्यतः यज्ञपुरुषो हरिः साक्षादपत्याय पुत्रार्थं वृतस्स्यात् अतस्तेन सह सर्वे देवा आगमिष्यन्तीत्यर्थः॥ ३३॥

नन्वतितुच्छान् कामान् हरिः कथं दद्यात् तत्रा[9]हुः - **तांस्तानिति**। जनो यान् [10]यान् कामान् प्रार्थयते तांस्तान् हरिर्दद्यात् यथा येन प्रकारेण भगवानाराधितो जनैः तेषां तथा स्वस्वकामानुसारेण फलोदयः फलावाप्तिर्भवति॥ ३४॥

इत्थं व्यवसिता निश्चिन्वाना ऋत्विजः राज्ञोऽङ्गस्य प्रजातये प्रजोत्पत्त्यै शिपिविष्टाय शिपिविष्टत्वगुणविशिष्टाय विष्णवे पुरोडाशं निरवपन्। शिपिभिः रश्मिभिः [11]विष्टः आविष्टः शिपिविष्टः तस्मै। तथा च मन्त्रः "किमित्ते विष्णोपरि चक्ष्यं भूत्प्रयद्वक्षे शिपिविष्टोऽस्मि" (ऋक्.सं. 7-100-6) इत्यादिः, अर्थवादश्च पशोर्भूमा या पृष्टिस्तद्विष्णुः शिपिविष्ट इत्यादिः। निरुक्तं च "यदुत प्रब्रूषे शिपिविष्टोऽस्मीति प्रतिपन्नरश्मिः शिपयोऽत्र रश्मय उच्यन्ते तैराविष्टो भवतीति।" यद्वा शिपिषु पशुषु यज्ञरूपेण प्रविष्टाय। तथा च श्रुतिः - "यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति" (शतपथ.ब्रा.) इति॥ ३५॥

---

1--1. V omits 2--2. V विशति प्रतितिष्ठतीति तथा। 3. A, B, T °प्यवद्यं 4. B, T omit अपि 5. A omits अप्रजः 6. A omits बभूविथ 7. W °ह 8. A, B, T omit तथा 9. W °ह 10. A, B, T omit यान् 11. W निविष्टः

**विज.** राज्ञा पृष्टाः यजमानकर्मगुणदोषान् विविच्य तत्परिहृत्य कर्मप्रवर्तनायाऽऽमन्त्रिताः सदस्या ऋत्विजः किम्विशेष्यमवलोक्य[1] प्रोचुरिति तत्राह - **नरदेवेति**। इहास्मिन् जन्मनि ईदृशः दृष्टोऽप्रजोऽनपत्य इति यदतः प्राक्तनं पूर्वजन्मार्जितमघं बालहत्यादिकमेकमघमस्तीत्यनुमीयते॥ ३१॥

तथा तस्मात्ते आत्मानं सप्रजं पुत्रेण सह वर्तमानं सादय[2] कुरु। ततो भद्रं भवति तत्र क उपाय इति तमाहुरित्याह - इष्ट इति॥ ३२॥

किं भद्रं स्यादित्यत्राह - **यथेति**। दिवौकसां हरेरङ्गोत्पन्नत्वेन तदाश्रितत्वेन स्थितेस्तन्मनस्कत्वेन तत्तुष्ट्या तत्तुष्टेः स्वभागादानानादानयोस्तदिच्छाऽविनाभूतत्वादधुना तदिष्टत्वात् सर्वं समञ्जसं भवतीति भावेनाहुरित्याह - यद्यज्ञपुरुष इति। अनेनापुत्रस्य लोको नास्तीति प्रायिकम्। सद्धर्मवतो धर्मबलाल्लोको भवत्येव। हरीच्छया विशिष्टपुरुषोत्पत्तये देवैः हविर्नाहृतम्। अङ्गस्यापि बालहत्यादिदोषादनपत्यत्वादि कल्प्यत इति ज्ञायते। तदुक्तम् - ''अनपत्योऽपि सद्धर्मा लोकजिन्नात्रसंशयः। देवैस्तु पृथुजन्मार्थे हविरङ्गस्य नो हृतम्'' (वामने) इति॥ ३३॥

न केवलं हरिपूजया पुत्रकामस्य पुत्रावाप्तिस्तत्तत्कामेन तत्तदवाप्तिरपि स्यादित्याह - **तांस्तानिति**। फलाकाङ्क्षानुसारेण पूजापि तादृशीति भावेनाहुः - आराधित इति॥ ३४॥

हितमुक्त्वा ते तूष्णीमभूवन् किम्? नेत्याह - **इतीति**। प्रजातये सन्तत्यै शिपिविष्टो नाम पुत्रकामेष्टिदेवता हरेरूपान्तिरम्। अत एव ''शिपिविष्टस्तु खलतौ दुश्चर्मणि महेश्वरे'' (वैज.को. 8-5-24) इत्यन्यवृत्तिनिवारणाय विष्णव इति॥ ३५॥

**तस्मात्पुरुष उत्तस्थौ हेममाल्यमलाम्बरः।**
**हिरण्मयेन पात्रेण सिद्धमादाय पायसम्॥ ३६॥**

**स विप्रानुमतो राजा गृहीत्वाञ्जलिनौदनम्।**
**अवघ्राय मुदा युक्तः प्रादात्पत्न्या उदारधीः॥ ३७॥**

**सा तत्पुंसवनं राज्ञी प्राश्य[3] वै पत्युरादधे।**
**गर्भं[4] काल उपावृत्ते कुमारं सुषुवेऽप्रजा॥ ३८॥**

---

1. A °शिष्ट° 2. A, B साधय 3. M, Ma, Ms प्रश्यर्तौ 4. M, Ma ततः काले; W गर्भकाले

**स बाल एव पुरुषो मातामहमनुव्रतः ।**
**अधर्मांसोद्भवं मृत्युं तेनाभवदधार्मिकः ॥ ३९ ॥**

**स शरासनमुद्यम्य मृगयुर्वनगोचरः ।**
**हन्त्यसाधुर्मृगान् दीनान् वेनोऽसावित्यरौज्जनः ॥ ४० ॥**

**श्रीध. तस्मादिति ।** योग्यतयाग्नेः ॥ ३६ ॥

**स** इति । पत्न्यै प्रादात् ॥ ३७ ॥

**सेति ।** पुमांसं सूतेऽनेनेति तथा तदन्नं[1] प्राश्य पत्युः सकाशात् गर्भमादधे अप्रजा सती ॥ ३८ ॥

**स इति ।** मातामहं मृत्युम् । मृत्योर्हि पुत्री सुनीथा ॥ ३९ ॥

**स इति ।** मृगयुः लुब्धकस्सन् तं दृष्ट्वा वेनोऽसावागच्छतीति जनः सर्वोऽप्यरौत् चुक्रोश ॥ ४० ॥

**वीर.** तस्मात् अग्नेरित्यर्थः । अर्थसामर्थ्यात् हेममयानि माल्यानि अमलाम्बराणि[2] च यस्य सः पुरुषः हिरण्मयपात्रेण सिद्धं सम्यक् पक्वं पायसान्नम् आदाय[3] गृहीत्वा उत्तस्थौ उत्थितवान् ॥ ३६ ॥

बुद्धिमान् स राजा अङ्गः विप्रानुमतः विप्रैरभ्यनुज्ञातः अञ्जलिना ओदनं पायसं गृहीत्वा स्वयमाघ्राय हर्षेण युक्तः पत्न्यै प्रादात् ॥ ३७ ॥

सा राज्ञी राज्ञः स्त्री सुनीथा पुंसवनं पुमांसं सूते अनेनेति पुंसवनं तदोदनं प्राश्य भुक्त्वा पत्युः सकाशात् गर्भमादधे धृतवती । अप्रजाः सती गर्भकाले गर्भधारणकाले उपावृत्ते अतीते सति कुमारं सुषुवे ॥ ३८ ॥

सः पुरुषः कुमारो बाल एव बाल्यात्प्रभृतीत्यर्थः, अधर्मांशोद्भवं मातामहं मृत्युं मृत्योर्हि पुत्री सुनीथा अनुव्रतः अनुसृतोऽभूत् । तेन मातामहानुसारेणाऽयमपि अधार्मिकोऽभवत् ॥ ३९ ॥

अधार्मिकत्वमेव प्रपञ्चयति - **स इति ।** स आङ्गः शरासनं धनुरुद्यम्य धनुष्यारोपितशर इत्यर्थः । मृगयुर्लुब्धकस्सन् अत एव वनगोचरः असाधुः दीनान् मृगान् हन्ति अवधीत् तं दृष्ट्वाऽसौ वेन आगच्छतीति सर्वो जनः अरौत्[4] चुक्रोश ॥ ४० ॥

---

1. B, J, V, Va omit अन्नं 2. A, B, T omit अमल 3. A, B, T omit आदाय 4. W व्यरौत्

**विज.** तस्मान्निरुप्तपुरोडाशात्॥ ३६॥

अञ्जलिनोदनमिति पाठः॥ ३७॥

पुमांसं सूत इति पुंसवनं, पायसमुपावृत्ते प्राप्ते अप्रजा पुत्ररहिता॥ ३८॥

बाल एव कौमारवया एव अधर्मांशेनोद्भवो यस्य स तथा तं मातामहं मातुः पितरं मृत्युनामानमसुरवरमनुव्रत इति यत् तेन स पुरुषोऽधार्मिको धर्मविरुद्धकर्मकृदभूदित्यनेन विशेषणेन धर्मांशोद्भवो मृत्युरन्योऽस्तीति रहस्यमवगन्तव्यम्। तदुक्तम् - ''मृत्युर्देवो यमभ्राता वेनमातामहोऽसुरः'' (वामने) इति॥ ३९॥

किं नामाऽयं बाल इत्यतः तत्कर्मानुसृतं नाम लोका अरूरुवन्नित्याह - **सशरासनमिति**। वेनयति पीडयतीति वेनः। ''पीडां वेनेति च प्राहुर्वेनोऽसौ पीडनादभूत्'' इति वचनात्, असाधुर्दुर्जन॰॥ ४०॥

**आक्रीडे क्रीडतो बालान् वयस्यान[1]तिदारुणः।**

**प्रसह्य निरनुक्रोशः पशुमारममारयत्॥ ४१॥**

**तं[2] विचक्ष्य[3] खलं पुत्रं शासनैर्विविधैर्नृपः।**

**यदा[4] न शासितुं कल्यो[5] भृशमासीत्सुदुर्मनाः॥ ४२॥**

**प्रायेणाभ्यर्चितो देवो येऽप्रजा गृहमेधिनः।**

**कदपत्यकृतं[6] दुःखं ये न विन्दन्ति दुर्भरम्॥ ४३॥**

**यतः पापीयसी कीर्तिरधर्मश्च महान्नृणाम्।**

**यतो विरोधः सर्वेषां यत आधिरनन्तकः॥ ४४॥**

**कस्तं प्रजापदेशं वै मोहबन्धन[7]मात्मनः।**

**पण्डितो बहु मन्येत यदर्थाः क्लेशदा गृहाः॥ ४५॥**

---

1. W ॰पि 2. V स 3. M, Ma, Ms विलक्ष्य 4. W यत्र शासयितुं 5. A, B, G, I, J, M, Ma, T कल्पो 6. A, B, G, I, J, M, Ma, Ms, T भृत
7. M, Ma मोहं

**श्रीध. आक्रीड** इति। आक्रीडे क्रीडास्थाने बालान् पशूनिवामारयत्॥ ४१॥

**तमिति**। विचक्ष्य दृष्ट्वा॥ ४२॥

दुर्मनसस्तस्य कुपुत्रनिन्दावाक्यान्याह - **प्रायेणेति** त्रिभिः। अप्रजाः ये तैरभ्यर्चितः। तत्र हेतुः। कुत्सितैरपत्यैः सम्भृतं दुर्भरं धारयितुमशक्यं दुःखं ये न निन्दन्ति॥ ४३॥

**यत इति**। सर्वेषां सर्वैस्सह आधिर्मानसी व्यथा॥ ४४॥

**क इति**। तं प्रजापदेशं पुत्रनाममात्रमप्यात्मनो मोहेन बन्धनम्। यदर्था यन्निमित्ताः क्लेशदा गृहा भवन्ति॥ ४५॥

**वीर.** आक्रीडे क्रीडास्थाने [1]क्रीडतः बालान् [2]वयस्यान् यूनोऽपि दारुणः क्रूरः अत एव निरनुक्रोशः कृपारहितस्सन् पशुमारममारयत् पशूनिवामारयत्॥ ४१॥

स नृपः अङ्गः खलं दुरात्मानं पुत्रं नानाविधैः शासनैः सामाद्युपायैः विचक्ष्यानुशास्येत्यर्थः। यदा [3-]शासितुं न कल्यः न समर्थः [-3]तदा भृशं नितरां सुदुर्मनाः दुःखितमनाः आसीत्॥ ४२॥

तस्य कुपुत्रनिन्दावाक्यान्याह त्रिभिः। ये गृहमेधिनो गृहाश्रमिणः अप्रजा अपुत्रा ये च पुत्रिणोऽपि कुत्सितापत्यकृतं दुर्भरं धारयितुमशक्यं दुःखं न विन्दन्ति न लभन्ते। तैः भगवान् देवः प्रायेणाभ्यर्चितः॥ ४३॥

यतः कदपत्यात् पापीयसी कीर्तिः अपकीर्तिः महानधर्मश्च नृणां भवेत् यथा यतः कदपत्यात् सर्वेषां विरोधः अनन्तकोऽपारः आधिः मानसी व्यथा च जायते॥ ४४॥

तं प्रजापदेशं पुत्रनाममात्रमपि आत्मनो मोहेन बन्धनं कः पण्डितो बहु मन्येत, यदर्था यत्पुत्रापदेशनिमित्ताः क्लेशसम्पादका गृहाः भवन्ति पुत्रापदेशमात्रमपि [4]क्लेशाकरगृहादिहेतुत्वेनाऽऽत्मनो बन्धकत्वात् पण्डितो न बहु मन्येतेत्यर्थः॥ ४५॥

**विज.** आक्रीडे क्रीडास्थाने। पशुमारमिति लुप्तोपमा। यथा पशुमारो गोघ्नश्चाण्डालस्तथेति॥ ४१॥

स्वशासनमुल्लङ्घ्य वर्तमानं पुत्रमवलोक्य पित्रा किमकारीति तत्राह - **तं विलक्ष्येति**। "दुरशोभनदुःखयोः" (वैज.को. 8-7-4) इत्यनेन सुष्ठु दुःखितमनाः॥ ४२॥

---

1. A, B, T omit क्रीडतः   2. T °स्थान्   3--3. A, B, T omit   4. A, B, T क्लेश°

प्रलापात् दुःखं चावगम्यत इत्याह - **प्रायेणेति**। ये गृहमेधिनोऽप्रजा एवं दुर्भरं कदपत्यकृतं दुःखं न विन्दन्ति तैस्सर्वैरपि प्रायेण देवो नारायणोऽभ्यर्चित इत्यन्वयः ॥ ४३ ॥

अपकीर्त्यादिदोषहेतुत्वात् पण्डितो नरकत्राणाहेतुत्वात् साधुरयं पुत्र इति बहुमानं न करोतीत्याह - **यत** इति ॥ ४४, ४५ ॥

**कदपत्यं वरं मन्ये सदपत्याच्छुचां[1] पदात्।**

**निर्विद्येत गृहान्मर्त्यो यत्क्लेशनिवहा गृहाः ॥ ४६ ॥**

**[2-]मैत्रेय उवाच[-2]**

**एवं स निर्विण्णमना नृपो गृहा न्निशीथ उत्थाय महोदयोदयात्।**

**अलब्धनिद्रोऽनुपलक्षितो नृभिः हित्वा गतो वेनसुवं प्रसुप्ताम् ॥ ४७ ॥**

**विज्ञाय निर्विद्य गतं पतिं प्रजाः पुरोहितामात्यसुहृद्गणादयः।**

**विचिक्युरुर्व्यामतिशोककातरा यथा निगूढं पुरुषं कुयोगिनः ॥ ४८ ॥**

**अलक्षयन्तः पदवीं प्रजापतेः हतोद्यमाः प्रत्युपसृत्य ते पुरीम्।**

**ऋषीन् समेतानभिवन्द्य साश्रवो न्यवेदयन् पौरव भर्तृविप्लवम् ॥ ४९ ॥**

इति श्रीमद्भागवते महापुराणे अष्टादश साहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
चतुर्थस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

**श्रीध.** इदानीं निर्वेदहेतुत्वेन कुत्सितमेवापत्यमभिनन्दति - **कदपत्यमिति**। शुचां पदात् [3]विरहादौ शोकानां स्थानात्। वरत्वे हेतुः निर्विद्येति। तत्कुतः ? यद्यतः कदपत्यात् गृहाः क्लेशनिवहाः भवन्ति ॥ ४६ ॥

**एवमिति**। महतामुदयानां विभूतीनामुदयो यस्मिंस्तस्मात् गृहाद्गतः। या वेनं सूते स्म ताम् ॥ ४७ ॥

**विज्ञायेति**। प्रजाः पुरोहितादयश्च विचिक्युरन्वेषितवन्तः। तं तत्रैव सन्तमपि नापश्यन्निपि दृष्टान्तेनाह - यथेति ॥ ४८ ॥

---

1. M, Ma °चा°  2--2. A, B, G, I, J, M, Ma, T, W omit  3. B, J, V, Va omit विरहादौ

**अलक्षयन्त** इति। साश्रवो रुदन्तः भर्तृर्विप्लवं नाशमदर्शनमित्यर्थः ॥ ४९ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्री श्रीधरस्वामि विरचितायां भावार्थ दीपिकायां

व्याख्यायां त्रयोदशोऽध्यायः ॥ १३ ॥

**वीर.** इदानीं निर्वेदहेतुत्वेन कुत्सितमेवापत्यमभिनन्दति - **कदपत्यमिति**। शुचां पदात् शोकानां स्थानात् उत्तरोत्तरं गृहासक्ति[1]जननद्वारा संसारदुःखहेतुत्वादिति भावः। सदपत्यात् कदपत्यं वरं श्रेष्ठं मन्ये। वरत्वे हेतुः मर्त्यो गृहान्निर्विद्येत निर्वेदं प्राप्नुयात्। [2-]तत्कुतः ? यत्[-2] यतः कदपत्यात् गृहाः [3-]क्लेशनिवहाः[-3] शोकावहाः भवन्ति। कदपत्यं परमिति पाठे तस्य परत्वं वैराग्यहेतुत्वात् ॥ ४६ ॥

एवमुक्तप्रका[4]रेण निर्विण्णमनाः सः नृपः अङ्गः महतामुदयानां विभूतीनामुदयः समृद्धिर्यस्मिन् तस्मात् गृहान्निशीथे उत्थाय अलब्धनिद्रः त्यक्तनिद्रः प्रसुप्तां वेनसुवं वेनस्य जननीं सुनीथां हित्वा नै[5]रैरनुपलक्षितः अदृष्टः गतः, वनं प्रतीति शेषः ॥ ४७ ॥

पुरोहितादयः सर्वाः प्रजाः पतिं राजानं निर्विद्य गतं निर्वेदं प्राप्य गतं विज्ञाय अत एव अत्यन्तशोकेन कातरास्सन्तः उर्व्यां [6]पृथिव्यां विचिक्युः अन्वेषणं चक्रुः, तं तु तत्रैव सन्तमपि नापश्यन्निति दृष्टान्तेनाह - यथेति। निगूढं हृदये वसन्तमपि तिरोहितं पुरुषं परमपुरुषं यथा कुयोगिनोऽन्वेषयन्ति तथेति ॥ ४८ ॥

प्रजापतेः राज्ञः पदवीं मार्गमलक्षयन्तोऽजानन्तः अत एव हतप्रयत्नाः ते पुरोहितादयः पुरीं प्रत्युपसृत्य आगत्य हे पौरव ! विदुर ! साश्रवः शोकाश्रुसहिताः समेतान् सङ्घीभूतानृषीन् प्रणम्य भर्तुः विप्लवं नाशमदर्शनं न्यवेदयन् विज्ञापितवन्तः ॥ ४९ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवत चन्द्रचन्द्रिकायां

व्याख्यायां त्रयोदशोऽध्यायः ॥ १३ ॥

**विज.** न केवलं दुःखमेव कदपत्यात् किन्तु विवेकिनः प्रयोजनं चास्तीत्याह - **कदपत्यमिति**। क्लेशसमूहेनाऽऽतुरो मर्त्यः

---

1. W °त्ति°  2--2. A, B, T omit  3--4. A, B, T omit  4. W °रं  5. W °रनव°  6. W पृथ्व्यां

स्वगृहात् निर्विद्येतेति यस्माद्वित्तैषणादिशुचापदात् सदपत्यात् कदपत्यं वैराग्यहेतुत्वात् साधु मन्ये इत्यन्वयः। "हलन्तादपि टापञ्च" इति वचनात् शुचेति रूपं साधु ॥ ४६ ॥

नन्वत्र शोकान्मरणं देशान्तरगमनं वा स्यात्। तत्र किमनेनाकारीति तत्राह - **एवं स** इति। महानुदयो महती विभूतिः तस्या उदयः उद्रेको यस्मिंस्तत्तथा तस्मात्। "लक्ष-दर्शनाङ्कनयोः" इति धातोः अनुपलक्षितोऽदृष्टः ॥ ४७ ॥

जलादौ मृतो दूरं गतो वेति संशये तयोरेकं निश्चित्य किमकार्षुस्तदीया इति तत्राह - **विज्ञायेति**। विचिक्युरन्विष्यादृष्टवन्तः हृदि निगूढं पुरुषं हरिम् ॥ ४८ ॥

अन्विष्यादृष्टवन्तः किमकुर्वन्नित्यत आह - **अलक्षयन्त** इति। पौरव ! विदुर ! साश्रवः बाष्पसहिताः साधीयसो विष्णुयाजिनोऽङ्गस्यैवं दुष्टपुत्रोत्पत्तिस्तन्निमित्तेन विप्लवश्च कथमभूदितीदं चोद्यं न[1] "अनपत्यत्वकर्मासौ बालहत्याकृतेः पुरा। अतो दुष्टोऽभवत्पुत्र इष्टो विष्णुरतः पृथुः।" (वामने) इति ॥ ४९ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे
श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां
टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥



1. M, Ma omit न

# चतुर्दशोऽध्यायः

## मैत्रेय उवाच

भृग्वादय स्ते मुनयो लोकानां क्षेमदर्शिनः ।
गोप्तर्यसति वै नृणां पश्यन्तः पशुसात्मताम्[1] ॥ १ ॥

वीर मातर माहूय सुनीथां ब्रह्मवादिनः ।
प्रकृत्यसम्मतं वेन मभ्य षिञ्चन् पतिं भुवः ॥ २ ॥

श्रुत्वा नृपासनगतं वेन मत्युग्रशासनम् ।
निलिल्यु र्दस्यवः सद्यः सर्पत्रस्ता[2] इवाखवः ॥ ३ ॥

स आरूढनृपस्थान उन्नद्धोऽष्टविभूतिभिः ।
अवमेने[3] महाभागान् स्तब्धः सम्भावितः स्वतः[4] ॥ ४ ॥

एवं मदान्ध उत्सिक्तो निरङ्कुश इव द्विपः ।
पर्यटन् रथ मास्थाय कम्पयन्निव रोदसी ॥ ५ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

चतुर्दशे तु दुष्पुत्रभया दङ्गे गते द्विजैः।अभिषिक्तस्य वेनस्य रोषात्तै र्वध उच्यते ॥

**भृग्वादय** इति । क्षेमदर्शिनः क्षेमचिन्तकाः पशुसमानरूपतां पश्यन्तः ॥ १ ॥

**वीरमातरमिति** । अमात्यादीनां प्रकृतीना मसम्मतम् । पाठान्तरे प्रकृत्या स्वभावेन[5] असम्मतम् ॥ २ ॥

**श्रुत्वेति** । चोराः सर्वे लीना बभूवुः ॥ ३ ॥

**स** इति । आरूढं नृपस्थानं राजासनं येन सः, अष्टविभूतिभिः लोकपालैश्वर्यैः ॥ ४-५ ॥

---

1. A, B, G, I, J, M, Ma, T, V साम्यताम् 2. W ग्रस्ताः 3. W मेनेत्मानं महाभागं 4. M, Ma शठः 5. V स्वरूपेण

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं पुरोहितादिभि र्निवेदिता ऋषयः तमेव खलं वेन मभिषिच्य पुन स्तेन पीडिताः तं[1] स्वतेजसा निहत्य तद्बाहुमथनादवतीर्णं भगवदंशभूतं पृथुं सस्त्रीक[2] मभिषिच्य राज्ये प्रतिष्ठापयामासु रित्याह चतुर्दशे[3] मुनिः **भृग्वादय** इति। लोकानां क्षेमदर्शिनः क्षेमचिन्तका स्ते विज्ञापिता भृग्वादय ऋषयः नृणां गोप्तरि त्रातरि असति अविद्यमाने सति पशुसात्मतां पशुसरूपतां[4] पश्यन्तः। पशुसाम्यता मिति पाठे पशुभिः साम्यं येषां ते, पशुसाम्या स्तेषां भावः पशुसाम्यता तां पश्यन्तः ॥ १ ॥

ब्रह्मवादिनः वीरस्य वेनस्य मातरं सुनीथा माहूय तस्यै विज्ञाप्येत्यर्थः। प्रकृतीना ममात्यादीनां असम्मत मपि वेनं भुवः पति मभ्यषिञ्चन् भुवः पतिं चक्रुरित्यर्थः ॥ २ ॥

अत्युग्रदण्डं वेनं राजासने प्रतिष्ठितं श्रुत्वा दस्यवः चोरादयः सर्पेभ्यः त्रस्ता भीताः आखवः मूषका इव सद्यः निलिल्युः लीना बभूवुः ॥ ३ ॥

स वेनः आरूढं नृपस्थानं राजासनं येन सः अष्टविभूतिभिः लोकपालैश्वर्यैः अणिमादिभिर्वा उन्नद्धः गर्वितः अत एव स्तब्धः विवेकशून्यः स्वतः स्वयं सम्भावितः न त्वितरैः इति भावः। आत्मानं महाभागं महाबुद्धिमन्तं महाभाग्यवन्तं वा मेने ॥ ४ ॥

एवं तथा ऐश्वर्यमदेन अन्धः अज्ञः निरङ्कुशो द्विपः[5] गज इव उत्सिक्तः[6] उत्पथः रथ मास्थाय अधिरुह्य रोदसी द्यावापृथिव्यौ[7] कम्पयन्निव पर्यटन् ॥ ५ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

गुरुवाक्यं श्रद्धयाऽनुष्ठिता मिहामुत्र श्रेयः स्यात्, अकुर्वता मनर्थ श्चेत्येतन्निरूप्यतेऽस्मिन्नध्याये। तत्रादौ भृग्वादिऋषिभिः क्रियमाणं राज्ये वेनस्याभिषेकं वक्ति **भृग्वादय** इति। "क्षेमो ना प्राप्तरक्षायाम्" (वैज.को. 6-5-22) इति यादवः। पशुसाम्यतां पशुसाधर्म्यं साङ्कर्यम् ॥ १ ॥

हे वीर! प्रकृत्या स्वभावेन अमात्यादिबुद्ध्या राज्यासम्मत मनुचितम् ॥ २ ॥

अस्मिन्नभिषिक्ते सति एकोगुणो राज्यस्य स्यादित्याह - **श्रुत्वेति**। निलिल्युः निलीनाः ॥ ३ ॥

---

1. A, B, T omit तं 2. A, B, T नप्त्रियम॰ 3. A, B, T ॰शेन 4. A, B, T समानरू॰ 5. A, B, T omit द्विपः 6. A, B, T उत्थितः 7. W पृथिवी

पालके राज्ञि बहवो गुणा भवन्ति, तत्रैको गुण इति विशिष्योच्यत इति चेत् सत्यम्, अस्य सर्वे दोषा एव सन्तीति वक्तु मुपक्रमते **स आरूढेति**। आरूढं नृपस्थानं सिंहासनं येन स तथा, मन्त्र्यमात्य दूत राज्य कोशदुर्गजनपदपुरोहिताख्यैः वा अणिमादिभिः वा अष्टविभूतिभिः उन्नद्धः स्तब्धः महत्सु उत्थानाद्याचारशून्यः ॥ ४ ॥

अतो लोकस्य किमवद्य मभू दत्राह - **एवं मदान्ध** इति। उत्सिक्तः उद्वृत्तः ॥ ५ ॥

**न यष्टव्यं न दातव्यं न होतव्यं द्विजाः क्वचित्।**
**एवं[1] न्यवारय[2]द्धर्मं भेरीघोषेण सर्वतः[3] ॥ ६ ॥**

**वेनस्यावेक्ष्य मुनयो दुर्वृत्तस्य विचेष्टितम्।**
**विमृश्य लोकव्यसनं कृपयो[4]चुश्च सत्रिणः ॥ ७ ॥**

**अहो उभयतः प्राप्तं लोकस्य व्यसनं महत्।**
**दारुण्युभयतो दीप्ते इव तस्करपालयोः ॥ ८ ॥**

**अराजकभया देष कृतो राजाऽतदर्हणः।**
**ततोऽप्यासी द्भयं त्वद्य कथं स्या त्स्वस्ति देहिनाम् ॥ ९ ॥**

**अहे रिव पयःपोषः पोषकस्याऽप्यनर्थ[5]कृत्।**
**वेनः प्रकृत्यैव खलः सुनीथागर्भसम्भवः ॥ १० ॥**

**श्रीध. वेनस्येति**। सत्रिणो मिलिता स्सन्तः ॥ ६, ७ ॥

**अहो** इति। मूलत श्चाग्रतश्च दीप्ते [6]प्रज्वलिते काष्ठे तन्मध्यवर्तिनां पिपीलिकादीनां यथोभयतो व्यसनम्, एवं तस्करेभ्यः पालकाच्च दुःखं प्राप्त मित्यर्थः ॥ ८ ॥

तदेवाहुः - **अराजकेति**। अतदर्हणो राज्यानर्हः ॥ ९ ॥

---

1. A, B, G, I, J, T, V इति   2. W ⁰यत्सर्वं   3. A, B, G, I, J, T ⁰शः   4. A, B, G, I, J, M, Ma, Ms, T ⁰चुः स्म
5. A, B, G, I, J, T, V भृत्; Ms ⁰वत्   6. B, J, V, Va omit प्र

स्माक मपि अनिष्टं जात मित्याहुः - **अहेरिति** । अहे र्यथा पयःपोषः क्षीरेण पोषणं पोषकस्या[1]प्यनर्थं विषद्वारा[1] बिभर्ति
[4]ष्णाति । तदेवाहुः - **वेन** इति । [2]खलत्वे हेतुः सुनीथागर्भसम्भव इति । मृत्यो दौहित्र इत्यर्थः[2] ॥ १० ॥

**वीर.** हे द्विजाः ! क्वचि दपि यागदानहोमादिकं न कर्तव्य मित्येवंरूपं धर्मं धर्माभासं भेरीध्वनिना न्यवारयत्, यत एव मतो दुर्मदः ॥ ६ ॥

मुनयो भृग्वादयः सत्रिणः याज्ञिका[3]श्च मिलितास्सन्तः दुर्दृप्तस्य वेनस्य चेष्टित मवेक्ष्य लोकानां व्यसनं दुःखं विमृश्य कृपया ऊचुः ॥ ७ ॥

उक्त मेवाह - **अहो** इति । मूलत श्चाग्रतश्च प्रदीप्ते ज्वलिते काष्ठे तन्मध्यवर्तिनां पिपीलिकादीनां यथोभयतो व्यसनम् एवं तस्करेभ्यः पालकात् पार्थिवाच्च दुःखं प्राप्त मित्यर्थः ॥ ८ ॥

तदेवाहुः - **अराजकभया** दिति । अतदर्हणः राज्यानर्होऽप्येष वेनः अराजकभयात् राजा कृतः । ततो राज्ञोऽप्यद्य भय मासीत्, देहिनां कथं स्वस्ति सुखं स्यात् ॥ ९ ॥

अस्माक मप्यनिष्टं जात मित्याहुः - अहेः सर्पस्य यथा पयःपोषः क्षीरेण पोषणं पोषकस्याऽप्यनर्थं करोति तथा, तदेवाहुः - सुनीथाया ग[5]र्भात् सम्भूतो वेनः प्रकृत्या स्वभावेनैव खलः दुरात्मा ॥ १० ॥

**विज.** हे द्विजाः ! ॥ ६ ॥

तत्र निग्रहानुग्रह समर्थाः मुनयः किमकार्षुरिति तत्राह - **वेनस्येति** । सत्रिणो यज्वानः ॥ ७ ॥

उभयतः तस्करपालयोः । दारुणीति सप्तमी षष्ठ्यर्थे, दारुण उभयतो दीप्तो वह्निः ॥ ८ ॥

दारुण इव उभयतो व्यसनं कथम् ? अत्राह - **अराजक** इति । न तस्य राज्यस्य अर्हणो योग्यो भवतीति अतदर्हणः ॥ ९ ॥

अय मप्यस्माक मनर्थकर इत्याहु रित्याह - **अहेरिवेति** । युष्माभिः कथं पोषित इति तत्राह - **प्रकृत्येति** । सुनीथागर्भसम्भवत्वात् ॥ १० ॥

---

1--1. B, J, V, Va omit 2--2. B, J, V, Va omit 3. A, B, T °का अपि 4--4. A, B, T omit 5. A, B, T अङ्गात्

निरूपितः प्रजापालः स जिघांसति वै प्रजाः ।
तथाऽपि सान्त्वये[1]मामुं नास्मां स्तत्पातकं स्पृशेत् ।। ११ ।।

तद्विद्वद्भि रसद्वृत्तो वेनोऽस्माभिः कृतो नृपः ।
सान्त्वितो यदि नो [2]वाचं न ग्रहीष्य[3]त्यधर्मकृत् ।। १२ ।।

लोकधिक्कार [4]सन्दग्धं दहिष्यामः स्वतेजसा ।
एव मध्यवसायैनं मुनयो गूढमन्यवः ।
उपव्रज्याऽब्रुवन् वेनं सान्त्वयि[5]त्वाऽथ सामभिः ।। १३ ।।

[6-]मुनय ऊचुः[-6]

नृपवर्य निबोधैत द्यत्ते विज्ञापया[7]म भोः ।
आयुः श्रीबलकीर्तीनां तव तात विवर्धनम् ।। १४ ।।

धर्म आचरितः पुंसां वाङ्मनः[8]कायवृत्तिभिः ।
लोकान् विशोकान् वितर[9]त्यथानन्त्य मसङ्गिनाम् ।। १५ ।।

**श्रीध. निरूपित** इति । निरूपितो नियुक्तोऽस्माभिः । सान्त्वयामोपपत्तिभिः प्रार्थयिष्यामः । तस्य पातकम् ।। ११ ।।

स्वस्य तत्पातक [10]स्पर्शे हेतुः **तदिति** । तत् पातकित्वं विद्वद्भिः [11]जानद्भिः ।। १२ ।।

**लोकेति** । गूढो मन्यु र्येषाम् । सामभिः प्रियोक्तिभिः ।। १३, १४ ।।

**धर्म** इति । [12-]असङ्गिनां[-12] निष्कामानां आनन्त्यं मोक्ष मपि [13-]वितरति[-13] ।। १५ ।।

**वीर.** अस्माभिः प्रजापालो निरूपितः नियुक्तः स एव प्रजाः जिघांसति हन्तु मिच्छति, तथाऽपि घातुकत्वेऽप्यमुं वेनं सान्त्वयेम उपपत्तिभिः प्रार्थयिष्यामः, तत स्तस्य पातक मस्मान्न स्पृशेत् ।। ११ ।।

1. M, Ma °यामोऽमुं मा°  2. W याच्ञा°  3. Ms °क°  4. W निर्दग्धं  5. A, B, G, I, J, T °त्वा च  6--6. W omits  7. W °महे ।
8. A, B, G, I, J, M, Ma, Ms, T W यबुद्धिभिः  9. Ms °त्यद्धा°; W त्यस्या°  10. A स्पर्श°  11. A, B, J, Va omit जानद्भिः
12--12. A, B, J, Va omit  13--13. A, B, J, Va omit

निषेधस्य प्रसक्तिपूर्वकत्वात् ता माहुः - तत् तस्य दौरात्म्यं विद्वद्भि र्जानद्भि रपि अस्माभि रसद्वृत्तो वेनः नृपः कृतः। अस्माभिः नृपीकरणा द्धेतो रयं **भूतानि** द्रुह्यति। अतोऽस्माभिः सान्त्वितश्चेन्न भूतद्रोहकृतं पाप मस्मान् स्पृशती त्यर्थः। सान्त्वनेन अप्रसन्ने सति कृत्य माहुः सान्त्वित इति। सान्त्वितः प्रार्थितः अधर्मकृदयं वेनोऽस्माकं याच्ञां न ग्रहीष्यति चेत्, तर्हि लोकानां धिक्कारेण निन्दया नितरां दग्धं स्वतेजसा स्वेषा मस्माकं तेजसा तपोबलेन दहिष्यामः ॥ १२ ॥

एव मध्यवसाय निश्चित्य गूढो मन्युः येषां ते, मुनयः एव मुपव्रज्य समीप मागत्य सामभिः प्रियोक्तिभिः वेनं सान्त्वयित्वा अब्रुवन् प्रार्थनापूर्वक मब्रुवन्नित्यर्थः ॥ १३ ॥

हे नृपवर्य वयं यद्विज्ञापयामहे तन्निबोध सावधानचित्तः आ[1]धत्स्व, कथम्भूतं तत् ? तव आयुरादीनां विवर्धनं विशेषेण वर्धकम् ॥ १४ ॥

किं तत् ? इत्याहुः - **धर्म** इत्यादिभि र[2]ष्टभिः। पुंसां वाङ्मनःकायानां **वृत्तिभिः** व्यापारैः धर्मः ईश्वराराधनरूपो धर्मः आचरितोऽनुष्ठितः लोकान् विशोकान् निर्दुःखान् वितरति कुरुते, असङ्गिनां विरक्ताना मानन्त्यं मोक्षसुखानन्त्यमपि वितरति ॥ १५ ॥

**विज.** अस्माभिः प्रजापालो निरूपितः, स साम्प्रतं [3]प्रजा जिघांसति वै हन्तु मेवाकांक्षति वै। तर्हि किं क्रियत इति तत्राह - तथापीति। प्रकृत्या खलत्वा दस्मदुक्तं न श्रृणोति यद्यपि तथापि इति। सान्त्वने हेतु माह - माऽस्मानिति ॥ ११ ॥

युष्मत्सान्त्वनाग्रहणे किं बाधकं करिष्यन्ति तदशक्तौ तत्सान्त्वनं व्यर्थ [4]माह - **तद्विद्वद्भिरिति**। असद्वृत्त इति। तस्य दौरात्म्यं विद्वद्भिः ॥ १२ ॥

एवं जिज्ञासमानाः कालक्षेपं ना कुर्वन्नित्याह - **एव मिति** ॥ २३, २४ ॥

आनन्त्यं [5]मोक्षम् असङ्गिनां फलाभिसन्धिरहितानाम् ॥ १५ ॥

**स ते मा विनशेद्वीर प्रजानां क्षेमलक्षणः।**

**यस्मिन् विनष्टे नृपति रैश्वर्या दवरोहति ॥ १६ ॥**

---

1. W °द° 2. A, B, T °ष्ट° 3. M, Ma प्रजां 4. Ma °मत्राह 5. A, B, omit मोक्षं

**राजन्नसाध्वमात्येभ्य श्चोरादिभ्यः प्रजा नृपः ।**
**रक्षन् यथा बलिं गृह्ण न्निह प्रेत्य च मोदते ॥ १७ ॥**

**यस्य राष्ट्रे पुरे चैव भगवान् यज्ञ[1]पूरुषः ।**
**इज्यते स्वेन धर्मेण जनै र्वर्णाश्र[2]मान्वितैः ॥ १८ ॥**

**तस्य राज्ञो महा[3]भाग भगवान् भूतभावनः ।**
**परितुष्यति विश्वात्मा तिष्ठतो निजशासने ॥ १९ ॥**

**तस्मिं स्तुष्टे किमप्राप्यं जगता मीश्वरेश्वरे ।**
**लोकाः सपाला ह्येतस्मै हरन्ति बलि मादृताः ॥ २० ॥**

**श्रीध. स** इति । मा विनशेत्[4] मा [5]विनश्यतु ॥ १६ ॥

**राजन्निति** । असाधवो ये अमात्या स्तेभ्यः यथा यथाशास्त्रम् ॥ १७, १८, १९, २० ॥

**वीर.** हे वीर ! सः लोकसुखकरो मोक्षसुखानन्त्यकरश्च [6]धर्मः मा विनश्येत् न नश्येत्, यस्मि न्नुक्तधर्मे विनष्टे सति नृपतिः पार्थिवः ऐश्वर्या दवरोहति भ्रश्यति ॥ १६ ॥

हे राजन् ! असाधवो ये अमात्याः तेभ्यः चोरादिभ्यः यथा यथाशास्त्रं प्रजाः पालयन् ताभ्यो बलिं पूजां गृह्णन् स्वीकुर्वत् इह लोके प्रेत्य परलोकं प्राप्य च मोदते सुखी भवति ॥ १७ ॥

यस्य राज्ञो [7]राष्ट्रे पुरे च स्थितै श्चातुर्वर्ण्य चातुराश्रम्य [8]रूपव्यवस्थया [9]अवस्थितैः जनैः यज्ञानां भोक्ता प्रभुश्च भगवान् स्वधर्मेण [10]पञ्चमहायज्ञादिरूपेण इज्यते आराध्यते ॥ १८ ॥

हे महाभाग ! तस्य निजशासने निजं स्वकीयं यच्छासनं शास्त्रविहितं प्रजापालनादिरूपं कर्म तस्मिन् तिष्ठतः राज्ञः विश्वात्मा सर्वात्मा भूतभावनः भूतानि भावयत्युत्पादयतीति भूतभावनः जगत्कारण भूतो भगवान् परितुष्यति ॥ १९ ॥

---

1. W भुक्प्रभुः 2. M, Ma, Ms, V ०मात्मकैः ; W ०मस्थितैः 3. M, Ma, Ms राज 4. V न 5. V omits वि 6. A, B, T omit धर्मः 7. A, B, T राज्ये 8. A, B, T रूपतया 9. A, B, T व्यव० 10. A, B, T omit महा०

[1]तुष्यतु भगवान् किं तेन ? तत्राह - **तस्मिन्निति**। जगता मीश्वरा ब्रह्मादयः तेषा मपीश्वरे तस्मिन् भगवति तुष्टे सति सपालाः पालकै स्सहिताः लोका आदृताः आदरेण युक्ता एतस्मै परितुष्टभगवते राज्ञे बलिं हरन्ति प्रापयन्ति॥ २०॥

**विज.** स धर्मो मा विनशेत् नष्टो न स्यात् बाधक माहु रित्याह - **यस्मिन्निति**। अवरोहति अधो याति॥ १६॥

कोऽसौ धर्मो यो लोकान् दधातीति तत्राहुरित्याह - राजन्निति। असाधवो दुर्जनाः अमात्याः सचिवा स्तेभ्यः "साधु स्त्रिषूचिते सौम्येसज्जनेवार्धुषौपुमान्" (वैज.को. 6-5-96) इत्यभिधानम्। "यथा सादृश्य योग्यत्ववीप्सास्वार्थानतिक्रमे" (वैज.को. 8-7-27) इति वचनात्। यथा योग्यं षष्ठांशं बलिं करम्॥ १७, १८, १९॥

तत्तुष्ट्या किं फलं स्यादित्यत्राह - **तस्मिन्निति**॥ २०॥

**तं सर्वलोकामर यज्ञसङ्ग्रहं त्रयीमयं [2]द्रव्यमयं तपोमयम्।**
**यज्ञै र्विचित्रै र्यजतो भवाय ते राजन् स्वदेशा[3]ननुरोद्धु मर्हसि। २१॥**

**यज्ञेन युष्मद्विषये द्विजातिभि र्वितायमानेन सुराः कला हरेः।**
**स्विष्टाः सुतुष्टाः प्रदिशन्ति वाञ्छितं तद्धेलनं नार्हसि वीर चेष्टितुम्॥ २२॥**

## वेन उवाच

**बालिशा बत यूयं [4]वा अधर्मे धर्ममानिनः।**
**ये वृत्तिदं पतिं हित्वा जारं पति मुपासते॥ २३॥**

**[5]अवजानन्त्यमी मूढा नृपरूपिण मीश्वरम्।**
**नानुविन्दन्ति ते भद्र मिह लोके परत्र च॥ २४॥**

**को यज्ञपुरुषो नाम यत्र वो भक्ति रीदृशी।**
**भर्तृस्नेहविदूराणां यथा जारे कुयोषिताम्॥ २५॥**

**श्रीध. तमिति**। सर्वांल्लोकांश्च तत्पा[6]लान् अमरांश्च तत्प्रापकान् यज्ञां श्च संगृह्णाति नियच्छतीति तथा तं विचित्रै [7-]र्द्रव्ययज्ञतपोज्ञानादि[-7]भिः भवाय समृद्धये [8-]यजतः नः[-8] जनान् स्वदेशान् तद्वासिनो जनान् अनुरोद्धु मनुवर्तितुम्॥ २१॥

1. A, B, T add परि 2. B वेद; W यज्ञ 3. Ms °न्न नि°; V °न्न वि° 4. M, Ma वै 5. M, Ma, Ms, V °न्ति ये 6. V °लकान्
7--7. B, J, V, Va यज्ञादिभिः 8--8. A, B, J, Va omit

**यज्ञेनेति**। युष्मद्विषये त्वद्देशे हरेः कला अंशाः सुराः तेषां सुराणां हेलनम् अवज्ञाम्॥ २२॥

**बालिशा** इति। बालिशा अज्ञाः वृत्तिद मन्त्रादिप्रदं मां हित्वा॥ २३, २४॥

**क** इति। भर्तृस्नेहो विदूरो यासां तासाम्॥ २५॥

**वीर.** सर्वान् लोकान् तत्पतीं श्च अमरा नमरत्वप्रापकान् यज्ञां श्च संगृह्णाति नियच्छतीति तथा तं, त्रयीमयं धर्माधर्मादिबोधक त्रयीप्रचुरं वेदैकप्रमाणकत्वेन तत्प्राचुर्यं विवक्षितम्। त्रय्याः भागद्वयात्मकत्वात् किंरूपं पूर्वभागप्राचुर्यं किंरूपं चोपरितनभागप्राचुर्य मित्यत्र तद्विवेचयन् विशिनष्टि यज्ञमयं तपोमय मिति। यज्ञप्रचुरं पूर्वभागोदितानां तेषा माराधनत्वेन तत्प्राचुर्यं विवक्षितम्। आराधनप्रकार प्रकाशकत्वेन पूर्वभागस्य तस्मिन् प्रामाण्य मिति भावः। अत्र "सर्वे वेदा यत्पद मामनन्ति तपांसि सर्वाणि च यद्वदन्ति" (कठ.उ. 2-15) "वेदैश्च सर्वै रहमेव वेद्यः" (भ गी. 15-15) इत्यादिक मनुसन्धेयम्। तपोमयं तपांसि उपासनानि तत्प्रचुरम् आराध्य स्वरूपरूप[1]गुणादिप्रकाशकत्वेनो परितनभागस्य प्रामाण्य मिति भावः। तं विचित्रै र्द्रव्यदेवतादिभि र्नानाविधैः यज्ञैः ते अभवाय मुक्तये। भवायेति च्छेदे ते तव समृद्धय इत्यर्थः। यजतः यागं कुर्वाणान् स्वदेशान् तद्वासिनो जनान् अनुरोद्धु मनुवर्तितुं हे राजन्! अर्हसि॥ २१॥

यस्य राज्ञो देशवासिभि र्जनैः भगवानिज्यते सोऽपि मुच्यत इत्यभिप्रायेण ते भवायेत्युक्तम्। तदेव प्रपञ्चयति - **यज्ञेनेति**। युष्मद्विषये तव देशे द्विजातिभि र्वितायमानेन निरन्तरं क्रियमाणेन यज्ञेन हरे र्भगवतः कलाः शरीरभूताः सुराः इन्द्रादयो देवाः स्विष्टाः यथाशास्त्र मिज्यमाना अत एव तुष्टा स्तव वाञ्छितं प्रदिशन्ति प्रयच्छन्ति। हे वीर! तद्धेलनं तेषां देवनां हेलनम् अवज्ञां चेष्टितुं कर्तुं[2] भवान्नार्हति॥ २२॥

एवं विज्ञापितो वेन आहेत्याह - वेन इति। यूयं बालिशा अज्ञाः वै नूनं कुतः, यतः अधर्मे धर्ममानिनः धर्मं मन्वानाः। तदेव प्रपञ्चयति। ये भ[3]वादृशा जनाः वृत्तिद मन्त्रादिप्रदं प्रभुं हित्वा जारं पति मुपासते॥ २३॥

ये च मूढाः नृपरूपेणावस्थित मीश्वर मवजानन्ति अवज्ञां कुर्वन्ति ते जना इह परत्र च लोके भद्रं कल्याणं नाऽनुविन्दन्ति न प्राप्नुवन्ति, किन्तु दुःखिनो[4] भवन्तीत्यर्थः॥ २४॥

भर्तृस्नेहः विदूरः यासां तासां कुयोषितां निन्दित[5]स्त्रीणां यथा जारपुरुषे भक्ति स्तथा यत्र[6] यज्ञपुरुषे वः युष्माक मीदृशी भक्तिः स यज्ञपुरुषः को नाम? किंशब्दः कुत्सायाम् असम्भावनायां वा॥ २५॥

---

1. A, B, T omit रूप 2. T omits कर्तुं 3. A, B, T त्वा° 4. A, B, T °तो 5. A, B, T निज (नीच) 6. A, B, T omit यत्र

**विज.** इतोऽपि श्रीनारायण एव इज्यत इत्याहु रित्याह - **तं सर्वेति** । सर्वशब्दः प्रत्येक मभिसम्बध्यते । सर्वान् लोकान् अमरान् यज्ञान् संगृह्णातीति सर्वलोकामर यज्ञसङ्ग्रहः तम् । त्रय्या त्रिभिर्वेदैः प्रतिपाद्येषु मुख्यप्रतिपाद्यत्वात् त्रयीमयः तम् । सर्वद्रव्याणां भगवद्विषयत्वात् हरि र्द्रव्यमय स्तम् । अनेनैव तपोमय मिति व्याख्यातम् । ''सर्वसङ्ग्रहणा द्विष्णुः सर्वसंग्रह उच्यते । वेदस्य तस्य वक्तृत्वात् प्राधान्यं तु त्रयीमयः ॥ सर्वं तद्विषयत्वेन मुख्यं सर्वमय स्ततः ॥'' (स्कान्दे) इति वाक्यं चात्र मानम् । एवंविधं श्रीहरिं विचित्रै र्यज्ञै स्ते तव भवाय भद्राय यजतः स्वदेशान् स्वस्य तव देश आदेश उपदेशो येभ्यः[1] यज्विभ्यस्ते स्वदेशा स्तान्, स्वस्य देशो विसर्जनं दानं येषां ते तथा तान् विप्रान् त्व मनुरोद्धु मनुकूलीकर्तु मर्हसीत्यर्थः । ''भवो भद्रे हरे प्राप्तौ'' (वैज.को. 6-1-41) इति यादवः ॥ २१ ॥

इन्द्रादिविषयेण स्वर्गादिफलप्रदेन यज्ञेन हरियजनं कथं संगच्छते प्रत्युत तद्विधानेनानर्थ एव स्यादित्याशङ्क्य इन्द्रादयो विष्णो र्मुख्यसन्निधान पात्रत्वेन तदिज्यया तत्प्रीत्या प्रीताः यजमानाय यद्यदभीष्टं तत्तद्दिशन्त्यन्यथाऽयजने तदवज्ञयाऽनर्थमेव प्रयच्छन्तीत्याहु रित्याह - **यज्ञेनेति** । ''विष्णोः सन्निहितत्वात्तु सर्वे[2] देवा हरेः कलाः'' (स्कान्दे) इति वचनात् मत्स्यादिवत्कला न भवन्तीति ज्ञातव्यम् । 'कल बन्धन' इति धातोः आत्मनि हरेः सन्निधानं बध्नन्तीति कला इत्यर्थः ॥ २२ ॥

ऋषीणां वाक्यामृतं शिरसि वज्रपातोपम मिव मन्यमानो गूढाक्षेपाभिसन्धिः वेनः प्रतिवक्तीत्याह - वेन इति ॥ २३ ॥

स्वबुद्ध्या बालिशत्व मुपपादयति - **अवजानन्तीति** ॥ २४ ॥

पुन रपि वेनः शापयोग्यापराध मात्मनि कर्तुं वक्ति - **को यज्ञ** इति ॥ २५ ॥

**विष्णु र्विरिञ्चो गिरिश इन्द्रो वायु र्यमो रविः ।**
**पर्जन्यो धनदः सोमः क्षिति रग्नि रपाम्पतिः ॥ २६ ॥**

**एते चान्ये च विबुधाः प्रभवो वरशापयोः ।**
**देहे वसन्ति[3] नृपतेः सर्वदेवमयो नृपः ॥ २७ ॥**

**तस्म[illegible]भि र्विप्रा यजध्वं गतमत्सराः ।**
**बलिं च मह्यं हरत मत्तोऽन्यः कोऽग्रभुक्पुमान् ॥ २८ ॥**

---

1. A, B, omit येभ्यः 2. M, Ma सर्व° 3. A, B, G, I, J, T, V भवन्ति; M, Ma, Ms तिष्ठन्ति

## [1-]मैत्रेय उवाच[-1]

**इत्थं विपर्ययमतिः पापीयानुत्पथं गतः ।**

**अनुनीयमान स्तद्याच्ञां न चक्रे भ्रष्टमङ्गलः ।। २९ ।।**

**इति तेऽसत्कृता स्तेन द्विजाः पण्डितमानिना ।**

**भग्नायां[2] भव्ययाच्ञायां तस्मै विदुर चुक्रुधुः ।। ३० ।।**

**श्रीध.** एते इति । "देहे भवन्ति [3-]नृपतेः" अतो[-3] नृपति रेवेश्वर इतरे तदंशा इति भावः ।। २६, २७ ।।

**तस्मादिति** । बलिं [4-]च करादिकम्[-4] । अग्रभुक् आराध्यः ।। २८, २९ ।।

**इतीति** । तेनासत्कृताः भग्नायां याच्ञायां [5-]चुक्रुधुः क्रोधं चक्रुः[-5] ।। ३० ।।

**वीर.** वरशापयो रनुग्रहनिग्रहयोः प्रभवः समर्थाः विष्ण्वादयोऽन्ये च देवा नृपतेः राज्ञो देहे वसन्ति; अतो नृपः सर्वदेवमयः सर्वदेवताप्रचुरः ।। २६, २७ ।।

तस्मात् नृपस्य सर्वदेवमयत्वात् मामेव हे विप्राः ! गतमत्सरा यूयं यजध्वं मह्यमेव बलिं स्वामिग्राह्यभागादिकं हरत समर्पयत । [6]मत्तः अग्रभुक् आराध्यः कः पुमानस्ति ? ।। २८ ।।

इत्थ मेवं विपरीतमतिः पापीयान् उत्पथं दुर्मार्गं प्राप्तः अनुनीयमानोऽपि प्रार्थ्यमानोऽपि तेषा मृषीणां याच्ञां न चक्रे यतोऽयं भ्रष्टमङ्गलः ।। २९ ।।

इतीत्थं पण्डित मात्मानं मन्वानेन तेन [7]वेनेन असत्कृता अवज्ञाता स्ते मुनयः भव्ययाच्ञायां लोकशु[8]भावहायां याच्ञायां [9]भग्नायां सत्यां हे विदुर ! तस्मै चुक्रुधुः कुपितवन्तः ।। ३० ।।

**विज.** अस्मद्भक्तिविषयो नाम्ना विष्णुः सृष्ट्यादिकारिण स्तदाज्ञानियता विरिञ्चादयः तत्परिवारभूता इति भ्रान्ति र्माभूत् यत एवैते विष्णुप्रभृतयो मयि सन्निहिताः, अतः तत्तच्छक्ति मत्त्वा दह मेवाखिलोत्तम इज्यतम इत्याह - **विष्णुरित्यादिना** ।। २६ ।।

---

1--1. W omits 2. M, Ma, Ms हव्य° 3--3. Va omits 4--4. V स्वामिभागम् । 5--5. V सत्याम् ।। ३० ।। 6. A, B, T omit मत्तः 7. A, B, T omit वेनेन 8. A, B, T °वहया° 9. A, B, T omit भग्नायां

वरशापयो र्दाने प्रभवः सर्वदेवमयः इत्युपसंहारः ॥ २७, २८ ॥

किं फलितं तदाह - **इत्थमिति**। तेषा मृषीणां याच्ञाम् ॥ २९ ॥

आत्मनि शापसामर्थ्ये समुल्लसति कर्णौ पिधाय निर्याण मनुचित मिति पश्यन्तः शापात्पूर्वभाविकोपायुध मृषय उदाहरन्नित्याह - **इतीति**। इति शब्दः प्रकारवचनः [1]हव्यविषययाच्ञायाम् ॥ ३० ॥

**हन्यतां हन्यता मेष पापः प्रकृतिदारुणः ।**
**जीवञ्जगदसा वाशु कुरुते भस्मसात् ध्रुवम् ॥ ३१ ॥**

**नाय मर्हत्यसद्वृत्तो नरदेव वरासनम् ।**
**[2]योऽधियज्ञपतिं विष्णुं विनिन्दत्यनपत्रपः ॥ ३२ ॥**

**को [3]वैनं परिचक्षीत वेन मेक मृतेऽशुभम् ।**
**प्राप्त ईदृश मैश्वर्यं यदनुग्रह[4]भाजनः ॥ ३३ ॥**

**इत्थं व्यवसिता हन्तु मृषयो [5]रूढमन्यवः ।**
**[6]निजघ्नु र्हुङ्कृतै र्वेनं हत मच्युतनिन्दया ॥ ३४ ॥**

**ऋषिभिः स्वाश्रमपदं गते पुत्रकलेबरम् ।**
**सुनीथा पालयामास विद्यायोगेन शोचती ॥ ३५ ॥**

**श्रीध. क** इति । परिचक्षीत निन्देत[7]। अशुभं वेनं विना । कृतघ्नता माहुः । यदनुग्रहविषय स्सन् ईदृश मैश्वर्यं यः प्राप्तः ॥ ३१, ३२, ३३ ॥

**इत्थमिति**। पूर्वं [8]ये गूढमन्यवः [9]ते इदानीं [10-]रूढमन्यवः प्रकटकोपाः[-10] हुङ्कृतै र्हुङ्कारैः ॥ ३४ ॥

**ऋषिभिरिति**। स्वाश्रमपदं प्रति ऋषिभि र्गते गमने कृते सति विद्यायोगेन मन्त्रसहितया [11-]युक्त्या[-11] पालयामास ॥ ३५ ॥

**वीर.** क्रोध मेव प्रपञ्चयति **हन्यतामिति**। प्रकृत्या स्वभावेन दारुणो घातुकः अत एव पापीयान् एष वेनो हन्यतां, कोपात् द्विरुक्तिः । यतोऽसौ जीवन् जगत् भस्मसात् [12]भस्मीभूत माशु कुरुते ध्रुवं नूनम् ॥ ३१ ॥

1. A भव्य 2. M, Ma यो वै; V यो हि 3. W वैतं 4. M, Ma, Ms भाजनम्; V भाग्जनः 5. W गूढ 6. M, Ma निर्ज° 7. V adds विनिन्देत 8. A, B, J, Va omit ये 9. A, B, J, Va omit ते 10--10. V omits 11--11. V omits 12. A, B, T भस्म

असद्वृत्तोऽयं वेनो राजासनं प्रति नार्हति योग्यो न भवति, हि यस्मात् यो वेनः अनपत्रपो निर्लज्जः, यज्ञपतिं विष्णुं विनिन्दति ॥ ३२ ॥

अशुभ मशुभाचारं वेन मेक मृते विना को वै पुमान् तं विष्णुं परिचक्षीत निन्देत् । वेनस्य कृतघ्नता माह - यस्य विष्णोः अनुग्रहभाजनः अनुग्रहविषय स्सन् ईदृश मैश्वर्यं प्राप्तः ॥ ३३ ॥

इत्थं व्यवसिता निश्चिन्वाना ऋषयः रूढमन्यवः पूर्वं गूढमन्यव इदानीं रूढमन्यवः सन्तः पूर्व मेव भगवन्निन्दया हतप्रायं वेनं हुङ्कारै र्निजघ्नुः ॥ ३४ ॥

एवं हुङ्कारै[1] रेव वेनं निहत्य ऋषिभिः स्वाश्रमस्थाने गते प्राप्ते सति शोचती सुनीथा पुत्रस्य वेनस्य[2] कलेबरं विद्यायोगेन मन्त्रसहितया युक्त्या पालयामास ॥ ३५ ॥

**विज.** ऊचु श्चेत्याह - **हन्यता** मिति । जीवंश्च जगत् भस्मसा त्करोति ॥ ३१, ३२ ॥

निन्द्यदोषसद्भावा न्निन्दतीति किं न स्यादत्राह - **को वेति** । "निरनिष्टो निरवद्यः" इति श्रुते रशुभोऽय मेव निन्द्यदोषाकर इति भावः । यस्य हरे रनुग्रहस्य भाजनं यस्यानुग्रहो यस्मिन् सः यदनुग्रहः पुमान् स एव भाजमं वा तदनुग्रहरहितत्वात् अयं हन्तव्य इत्यर्थः । अत्र क्रोधवचनयोः क्रमकरण मेकैकं दृष्ट्वाऽस्मा नयं क्षमापये दिति बुद्ध्या कृत मिति ज्ञातव्यम् ॥ ३३ ॥

मरेत्युक्तिः श्रोतॄणां श्रोत्रदुस्सहेति प्रकारान्तरेण तं जघ्नु रित्याह - **इत्थ** मिति । एवं मारितो वेनः कं लोक मवाप ऋषीणां तन्मतदूषकत्वात् के तस्या नुष्ठातारः तन्मतनिरासिनः पृथोश्च क्षिप्रभावित्वा दुत्सन्नप्रायमिति च वक्तुं न युक्तम्; तत्र तत्र दृश्यमानत्वा दिति, सर्वम् "अहं ब्रह्मेति वेन स्तु ध्यायन्नापाधरं तमः । तद्राद्धान्तो महीं व्याप्तो भेर्या ख्यापयतोऽनिशम् ॥ असुरा राक्षसाश्चैव पिशाचा स्तत्पथि स्थिताः । भूमौ तत्पृथुना सर्वं निरस्तं महिमात्मना । पुनः कलियुगे प्राप्ते अष्टाविंशतिमे मनोः । वैवस्वतस्य समये जाताः क्रोधवशा भुवि । ख्यापयन्ति दुरात्मानो मणिमां स्तत्पुरस्सराः ॥" (भविष्यत्पुराणे) इत्यतोऽत्र तु ग्रन्थबाहुल्या दन्यत्र विस्तृतत्वाच्च ज्ञातु मनभ्यर्हितत्वा[3] च्च न प्रपञ्चित मिति ज्ञातव्यम् । तेषां क्रोधवशानां पुरस्सरोऽग्रगन्ता मुख्य इत्यर्थः ॥ ३४ ॥

वेनस्य पुत्राभावा दृषीणां क्रोधात् पुरोहितस्य भीतत्वात् प्रेतकार्यमन्त्रवक्तृभावा त्परं कलेबरं किं कृत मत्राह - **ऋषिभिरिति** । विद्यायोगेन मन्त्रौषधादिविद्योपायेन शोचतीत्यनेन मातृस्वभावो दर्शितः ॥ ३५ ॥

---

1. W °रणैव  2. A, B, T omit वेनस्य  3. A, B °र्थि°

एकदा मुनय स्ते तु [1]सरस्वत्सलिलाप्लुताः।
हुत्वाग्नीन् सत्कथाश्चक्रु रुपविष्टाः सरित्तटे ॥ ३६ ॥

वीक्ष्योत्थि[2]तान् महोत्पातानाहुर्लोकभयङ्करान्।
अप्यभद्र मनाथाया दस्युभ्यो न भवेद्भुवः ॥ ३७ ॥

एवं [3-]ब्रुवत्सु ऋषिषु[-3] धावतां सर्वतो दिशम्।
पांसुः समुत्थितो [4]भूरि [5]श्चो[6]राणा मभिलुम्पताम् ॥ ३८ ॥

तदुपद्रव माज्ञाय लोकस्य वसु लुम्पताम्।
भर्तर्युपरते तस्मि न्नन्योन्यं च जिघांसताम् ॥ ३९ ॥

[7]चोरप्रायं जनपदं हीनसत्त्व मराजकम्।
[8]लोकान्नावारयन् शक्ता अपि तद्दोषदर्शिनः ॥ ४० ॥

**श्रीध. एकदेति।** पुंवद्भाव आर्षः, सरस्वत्या सलिले आप्लुताः [9-]कृतस्नानाः विष्णुकथाः च[-9]क्रुः ॥ ३६ ॥

**वीक्ष्येति।** तदा तु उत्पातान् वीक्ष्य [10-]नृपरहिताया[-10]ः भुवोऽभद्रं न भवेत्किम् ? इत्याहुश्च ॥ ३७ ॥

**एवमिति।** एवं मृशन्तः तर्कयन्तः ऋषयः [11-]स्थिता[-11]ः तदा धावतां चोराणां भूरिः पांसुः [12]धूलिः समुत्थितः ॥ ३८ ॥

**तदिति।** तत्तदा तेषां, लोकस्य [13]वसु धनं लुम्पतां जिघांसतां चोपद्रव माज्ञाय ॥ ३९ ॥

**चोरप्राय मिति।** तथा चोरप्रायम् अराजकं हीनसत्त्वं च जनपद माज्ञाय शक्ता अपि [14]अवारणे दोषदर्शिनो[15]ऽपि [16]जना लुम्पतो लोकान्नावारय न्नित्यन्वयः ॥ ४० ॥

**वीर.** ते मुनयः एकदा सरस्वत्याः सलिलै राप्लुताः स्नाताः, पुंवद्भाव आर्षः। अग्निं हुत्वा प्रातरग्निकार्यं कृत्वा सरितः सरस्वत्यास्तटे उपविष्टा स्सन्तः सत्कथां भगवत्कथां चक्रुः कथयामासुः ॥ ३६ ॥

---

1. M, Ma, Ms सरयूस॰ 2. I ॰तांस्तदो॰ 3--3. A, B, G, I, J, T, V मृशन्त ऋषयो 4. M, Ma, Ms भूमे॰ 5. W श्चौ॰ 6. M, Ma, Ms ॰णां वसु 7. W चौर 8. M, Ma, लोका ना॰ 9--9. V इत्यर्थः। 10--10. B, J, V, Va omit 11--11. B, V omit 12. B, J, V, Va omit धूलिः 13. B, J, Va omit वसु 14. V वारणे 15. V omits अपि 16. V मुनयः; Va omits जना

तदा उत्थितान् हि महोत्पातान् वीक्ष्य उत्पातै र्यल्लोकानां भयं तेनातुरा दुःखिताः अनाथाया भुवः दस्युभ्य श्चौरादिभ्योऽभद्रं न भवेत्किमित्याहुः ॥ ३७ ॥

एवम् ऋषिषु ब्रुवत्सु सत्सु सर्वतो दिशं सर्वासु दिक्षु धावता मभितो धनादिकं लुम्पतां हरतां चौराणां[1] भूरि र्बहुलः पांसुः समुत्थितोऽभूत् ॥ ३८ ॥

वसु धनं लुम्पतां हरतां[2] चौराणां[3] भर्तरि राज्ञि उपरते नष्टे सति अन्योन्यं जिघांसतां हन्तु मिच्छतां लोकानां च तथाविध मुपद्रवम् ॥ ३९ ॥

तथा चौरप्राय[4] मराजकं हीनसत्त्वं च जनपद माज्ञाय ज्ञात्वा शक्ता अपि वेन मिव हुङ्कारेणैव[5] चौरा[6] न्निहन्तुं शक्ता अपि ऋषयः तद्दोषदर्शिनः तस्मा च्चौरादिहनना[7] द्यो दोषः पापं तं पश्यन्तः "घातुं (तं) न घातु (त)को विप्रः" इति स्वधर्मं पश्यन्त इति भावः, नावारयन् न निवारितवन्तः ॥ ४० ॥

**विज.** एवं वेनं शप्त्वा (किं) तपोबला दन्य मेकं राजानं चक्रुः ? (उत) तद्वंश्याभावात् तूष्णी मासुः ? कलेबरं मुनयः किमकुर्वन्निति परीक्षितः शङ्कां परिहरन् उत्तरकथाप्रसङ्गमाह - **एकदेति** । सरयूनाम्नो नद्याः सलिले आप्लुताः कृतस्नानाः सतोऽभ्यर्हितस्य विष्णोः कथा यदा चक्रुः ॥ ३६ ॥

तदा महोत्पातान् वीक्ष्याहुरित्यन्वयः । किमाहुरिति तत्राह - अपीति । अपि शब्दस्य भवेदित्यनेनान्वयः । अनाथाया इति[8] हेतुगर्भविशेषणा दभद्रं सम्भावितमिति प्रावोचन्नित्यर्थः ॥ ३७ ॥

वसु लुम्पतां चोराणां सकाशात् भूमेः पांसुः समुत्थित इत्यन्वयः ॥ ३८ ॥

ततः किमभूदत्राह - **तदुपद्रवमिति** । तत्तदा लोकस्य चोराणा मुपद्रव माज्ञायैव निश्चित्य मृतस्य वेनस्य महीपते रूरुं तरसा ममन्थुः इत्यन्वयः ॥ ३९ ॥

युष्मत्तोऽन्ये तन्निवारका न सन्ति किमिति तटस्थचोद्यं परिहरन्तीत्याह - **चोरप्रायमिति** । सत्यं तद्दोषदर्शिनो यद्यधर्मकर्तारं न वारयन्ति तर्हि[9] स दोष स्तानपि स्पृशेदिति दोषं पश्यन्तः, किञ्च शक्ता स्तन्निवारणे समर्था अपि लोकाः 'लुक्-प्रकाशन' इति धातोः विशिष्टज्ञाना जना हीनसत्त्वं पराक्रमविधुर मराजकं प्रजापालकरहितं जनपदं वीक्ष्य चोरान्नावारयन्निति[10] यदत इत्यर्थः ॥ ४० ॥

---

1. A, B, T चो° 2. A, B, T omit हरतां 3. A, B, T चो° 4. A, B, T चो° 5. W °रै रेव 6. W चो° 7. W च्चो° 8. A, B, omit इति
9. A, B, omit तर्हि 10. A, B चोरादीन्ना°

**ब्राह्मणः समदृक् शान्तो दीनानां समुपेक्षकः ।**

**स्रवते ब्रह्म तस्याऽपि भिन्न[1]भाण्डात्पयो यथा ॥ ४१ ॥**

**नाङ्गस्य वंशो राजर्षे रेष संस्थाषु मर्हति ।**

**अमोघवीर्या हि नृपा वंशेऽस्मिन् केशवाश्रयाः ॥ ४२ ॥**

**विनिश्चित्यैव मृषयो विपन्नस्य महीपतेः ।**

**ममन्थु रूरुं तरसा तत्राऽऽसीद्बाहुको नरः ॥ ४३ ॥**

**काककृष्णोऽतिह्रस्वांगो ह्रस्वबाहु र्महाहनुः ।**

**ह्रस्व[2]पान्निम्ननासाग्रो रक्ताक्ष स्ताम्रमूर्धजः ॥ ४४ ॥**

**तं तु तेऽवनतं दीनं किं करोमीति वादिनम् ।**

**निषीदेत्यब्रुवं स्तात स निषाद स्ततोऽभवत् ॥ ४५ ॥**

**तस्य वंश्या स्तु [3]नैषादा गिरिकाननगोचराः ।**

**[4]येनाहरज्जायमानो वेन कल्मष मुल्बणम् ॥ ४६ ॥**

इति श्रीमद्भागवते महापुराणे अष्टदश साहस्र्यां

श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां

चतुर्थस्कन्धे चतुर्दशोऽध्यायः ॥ २४ ॥

**श्रीध. ब्राह्मण** इति । शक्तानां क्षत्रियाणा मवार[5]णे दोष इति किं वक्तव्यम् । समदृगपि शान्तोऽपि ब्राह्मणोऽपि यदि दीनानां समुपेक्षको भवेत्तर्हि तस्याऽपि ब्रह्म तपः [6]स्र[7]वति ॥ ४१ ॥

**नाङ्गस्येति** । अत उपेक्षादोषपरिहाराय नाङ्गस्येत्यादि विनिश्चित्य महीपते रूरुं तरसा ममन्थु रित्यन्वयः । संस्थातुं नाशं गन्तुं, यद्वा ऋषय एव लम्पतो लोका न्नावारयन् । कथम्भूताः ? हुङ्का[8]रेणैव वेनं निवारयितुं शक्ता अपि । [9]तत्किम् ? [10]तस्मिन्निवारणे

---

1. W भाण्डपयो 2. W वाङ्निम्न 3. M, Ma, Ms दृष्ट्वा 4. M, Ma, Ms योऽपा० 5. A adds न 6. V स्रवते 7. V adds गच्छति 8. V णैरेव 9. V तत्किमर्थम् ? 10. V तान्नि०

तन्मरणादिदोषदर्शिनः न चोदासत, चोरोपद्रुते दीनोपेक्षायां तपोहानिप्रसङ्गात्। न चान्यं तन्निवारकं राजान मकुर्वन्। अंगवंशो-च्छेदस्याऽनर्हत्वात्। अतो वेनस्यैव देहं ममन्थुरिति योज्यम्॥ ४२॥

**विनिश्चित्येति**। बाहुको[1] [2] वामनः[3]॥ ४३॥

तमेवाह - **काकेति**। काक इव कृष्णः महत्यौ हनू कपोलप्रान्तौ यस्य। ह्रस्वौ पादौ यस्य॥ ४४, ४५॥

**तस्येति**। गिरिः काननं च गोचर आश्रयो न तु पुरादिप्रवेशो येषाम् ते। तत्र हेतुः; येन कारणेनासा वहरत्ततस्तस्य वंश्या स्तथाभूताः॥ ४६॥

इति श्रीमद्भागवते चतुर्थस्कन्धे
श्री श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां चतुर्दशोऽध्यायः॥ १४॥

**वीर.** नन्वेव मृषीणा मपि शक्तानां चोरोपद्रुत दीन लोकोपेक्षायां तपोनाशप्रसङ्गस्स्यादिति ब्राह्मणः समदृगित्यनेनाशङ्क्य स्वतपसो नाशाभावार्थं राजान्तरमेव सम्पाद्य तन्मुखेनैव दीनपरित्राणं कार्य मित्यभिप्रायेण राजान्तरकरणोपाय[4] मूरुमन्थनादिकं चक्रु रित्याह - नाङ्गस्येति द्वाभ्याम्। समदृक् सर्वस्य ब्रह्मात्मकत्व दर्शी तदुपयुक्तशमादिसम्पन्नोऽपि ब्राह्मणो यदि दीनानां समुपेक्षकः स्यात् तर्हि तस्य ब्रह्म[5] ब्राह्म्यं तपः इति यावत्, [6]स्रवते गच्छति यथा भिन्नभाण्डस्थं जलं तद्वत्॥ ४१॥

अत उपेक्षारूपं दोषपरिहाराय नाङ्गस्येत्यादि विनिश्चित्य महीपते रूरुं तरसा ममन्थु रित्यन्वयः। राजर्षे रङ्गस्यैष वंशः संस्थातुं अवसानं प्राप्तुं नाऽर्हति। हि यतोऽस्मिन्वंशे जाता नृपा अमोघवीर्याः, तत्र हेतुः केशवाश्रयाः॥ ४२॥

एव मित्थं विनिश्चित्य ऋषयः विपन्नस्य विपत्तिं प्राप्तस्य मृतस्येत्यर्थः। ऊरुं तरसा बलेन ममन्थुः मथितवन्तः, तत्र मथिते ऊरौ बाहुको [7]नामतो नर आसीत् उद्बभूव॥ ४३॥

बाहुक मेव विशिनष्टि - **काकेति**। काक इव कृष्णः अतीव ह्रस्वाङ्गः, ह्रस्वौ बाहू यस्य, महान्तौ हनू कपोलप्रान्तौ यस्य ह्रस्वा वाक् यस्य, निम्नं नतं नासिकाग्रं यस्य, रक्ते अक्षिणी यस्य, ताम्रवर्णा मूर्धजाः केशा यस्य सः॥ ४४॥

---

1. V adds नाम 2. V ⁰नकः 3. V adds जातः 4. A, B, T भूत 5. A, B, T omits ब्राह्म्यं 6. W स्रवति 7. A, B, T नाम

तं बाहुकं दीनं किङ्करोमीति दीनवादिनं च राज्यानर्ह मभिप्रेत्य निषीदेति उपविशेति [1]अब्रुवन् [2]उक्तवन्तः । हे तात ! ततः निषीदेति ऋषिवचनात् स [3]बाहुकः निषादोऽभवत् । [4-]स च[-4] निषादजातीयोऽभवदित्यर्थः ॥ ४५ ॥

तस्य बाहुकस्य ये वंश्या स्ते नैषादाः । गिरिः काननं गोचरः आश्रयः न तु पुरादिप्रवेशो येषां ते अभवन् । तत्र हेतुः येन कारणेन असौ बाहुको जायमानः उल्बण मुत्कटं [5]कल्मषं पाप महरत् स्वीकृतवान् तत स्तस्य वंश्या स्तथाभूता इत्यर्थः ॥ ४६ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवत चन्द्रचन्द्रिकायां

व्याख्यायां चतुर्दशोऽध्यायः ॥ १४ ॥

**विज.** सामान्य मुक्त्वा जातिविशेषस्य दोषाधिक्य माहुरित्याह - **ब्राह्मण** इति । ब्रह्मेति भावप्रधानो निर्देशः । दुष्टोपद्रवेण दीनानां जनाना मुपद्रवं दृष्ट्वा समुपेक्षक स्तूष्णीम्भूतः स्यात् तस्य ब्रह्मत्वं ब्राह्मण्यं स्रवते नश्यति । तन्निदर्शयन्ति - भिन्नेति । तस्मादस्माभि रनुष्ठेयमिति भावः ॥ ४१ ॥

इतोऽपीत्याहु रित्याह - **नाङ्गस्येति** । संस्थातुं नाशं प्राप्तुं कुत इत्यत उक्त ममोघेति ॥ ४२ ॥

यथाऽमृतमन्थने कालकूट मादा वुदभूदेवं तत्राऽपीति भावेनाऽह - **तत्रेति** । तत्र मथ्यमाने सति बाहुको वामनः "कुब्जक्षुद्र दीर्घखर्व ह्रस्ववामन बाहुकाः" इत्याभिधानम् ॥ ४३ ॥

विशिनष्टि - **काकेति** । महाहनुः स्थूलकपोलः निम्ननासाग्रोऽधोनतघ्राणशिराः ॥ ४४ ॥

ततःनिषीदेति वचनात् ॥ ४५ ॥

स क इति तं विशिनष्टि- योऽपाहरदिति । अनेन वेन श्चतुर्धा विभक्त इति ज्ञायत इति । तथा हि तामसो राजसः सात्त्विकः तामसतामस इति । तत्र तामसांशो निषादः । राजसांशः स्वर्गस्य गन्ता । सत्वांशःपृथुः । तामसतामसांशो वेनः स्वयमन्धन्तमो गतः ।

---

1. A, B, T omit अब्रुवन्  2. W omits उक्तवन्तः  3. T omits बाहुकः  4--4. W omits  5. T omits कल्मषं

तदुक्तम् - ''त्र्यंशो वेनः समुद्दिष्टः सत्त्वांशः पृथुता मगात्। रजोंऽशश्च दिवं प्राप निषाद स्तामसोऽभवत्। स्वयं वेनश्चतुर्थस्तु महातमसि पातितः ॥ (कौर्मे) इति। रजोंऽशो वेनो दिवङ्गत इति केनाऽवगम्यते इति चोद्यं ''पापरूपी पृथग्जातो निषादो वेनदेहतः। यस्मात्तस्मात्पृथोः पुत्रा द्रजो वेनो दिवं ययौ (गारुडे) इत्यनेन परिहृत मिति ग्रन्थान्तर सिद्धत्वात् अत्र न विस्तृतम् ॥ ४६ ॥

इति श्रीमद्भागवते महापुराणे चतुर्थस्कन्धे

श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां

टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥



# पञ्चदशोऽध्यायः

## मैत्रेय उवाच

अथ तस्य पुनर्विप्रैः [1]अपुत्रस्य महीपतेः ।

बाहुभ्यां मथ्यमानाभ्यां मिथुनं समपद्यत ॥ १ ॥

तद्दृष्ट्वा मिथुनं जातमृषयो ब्रह्मवादिनः ।

ऊचुः परम[2]सन्तुष्टा विदित्वा भगवत्कलाम् ॥ २ ॥

## [3]ऋषय ऊचुः

एष विष्णोर्भगवतः कला भुवन[4]पालिनी ।

इयं च [5]लक्ष्म्याः सम्भूतिः पुरुषस्यानपायिनी ॥ ३ ॥

[6]अयं तु प्रथमो [7]राज्ञां पुमान् प्रथयिता यशः ।

पृथुर्नाम म[8]हाराजो भविष्यति पृथुश्रवाः ॥ ४ ॥

इयं च देवी सुदती गुणभूषण[9]भूषणा ।

अर्चिर्नाम वरारोहा पृथुमेवावरुन्धती ॥ ५ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

ततः पञ्चदशे वि[10]प्रैर्मथनाद्वेनबाहुतः । जातस्य हि पृथोरुक्तमभिषेकार्हणादिकम् ।

किमूचुरित्यत आह - **एष** इति चतुर्भिः । लक्ष्म्याः सम्भूतिः कला ॥ १-३ ॥

**अयमिति** । अत्र यः पुमान् स तु महाराजो भविष्यति ॥ ४ ॥

**इयमिति** । सुदती शोभन[11]दन्तवती गुणानां [12-]भूषणानां च[-12] भूषणरूपा, अवरुन्धती भर्तृत्वेन भजन्ती भविष्यति ॥ ५ ॥

---

1. M, Ma, Ms विपन्नस्य 2. B संहृष्टाः 3. Ms विप्राः 4. B, J पालनी, M, Ma, Ms पावनी 5. M, Ma लक्ष्मीः, Ms, W लक्ष्मीस° 6. B, J, M, Ma, Ms अत्र 7. W राजा 8. M, Ma राजा 9. M, Ma भूषिता 10. J °र्मन्थ° 11. V °दन्ता 12--12. A omits

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

अथानन्तरं तस्य अपुत्रस्य महीपतेः वेनस्य बाहुभ्यां पुनर्विप्रैर्मथ्यमानाभ्यां मिथुनं स्त्रीपुंसात्मकं समपद्यत उद्बभूव ॥ १ ॥

ब्रह्मवादिन ऋषयः तज्जातं मिथुनं दृष्ट्वा भगवत्कलां भगवदंशं विदित्वा अत एव परमसन्तुष्टा ऊचुः ॥ २ ॥

किमूचुरित्यत आह - **एष** इति चतुर्भिः । एष पुमान् भगवतो विष्णोर्भुवनपालिनी कला भुवनपालनार्थं कलयाऽवतीर्ण इत्यर्थः, इयं च स्त्री लक्ष्म्याः सम्भूतिः सम्भवः [1]तस्याः कलेत्यर्थः । तत्र हेतुः पुरुषस्यानपायिनी पुरुषमविहाय जातेति भावः । "राघवत्वेऽभवत् सीता रुक्मिणी कृष्णजन्मनि । अन्येषु चावतारेषु विष्णोरेषाऽनपायिनी ।" (विष्णु.पु. 1-9-144) इति वचनार्थोऽत्रानुसन्धेयः ॥ ३ ॥

अयं मिथुने यः पुमान् सोऽयं राज्ञां प्रथमः मुख्यः यतोऽयं यशः कीर्तिं प्रथयिता विस्तारयिता, अतः [2-]पृथुश्रवाः[2] पृथुकीर्तिसम्पन्नः पृथुर्नाम महाराजो भविष्यति । नामशब्दः प्रसिद्धौ । प्रथयति यशः पृथुरिति योगरूढिभ्यां प्रख्यातो महाराजो भविष्यतीत्यर्थः ॥ ४ ॥

इयं तस्मिन् मिथुने [3-]या स्त्री[-3] सेयं सुदती शोभनदन्तवती, [4]इतरावयवसौष्ठवस्याप्युपलक्षणमिदम् । वरारोहा स्त्री यतो गुणानां भूषणानां च भूषणा भूषणवदौज्ज्वल्यविशिष्टाश्रयभूतेत्यर्थः । ततोऽर्चिर्नाम अर्च्यते उज्ज्वलतीत्यर्चिरिति योगरूढिभ्यां प्रख्याता [5-]पृथुमेवावरुन्धती[-5] भर्तृत्वेन भजन्ती भविष्यति ॥ ५ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अथ सत्त्वांशात् पृथोरुत्पत्तिं वक्ति - **अथेति** ॥ १, २ ॥

एष विष्णोः कलेति लिङ्गव्यत्ययेन मत्स्यादिवत्साक्षाद्धरेरंशतावचः साक्षादंशो नायं किन्तु विशेषावेशात्तदंश इति वचनमिति ध्वनयति । तदुक्तं - "पृथुहैहयादयो जीवास्तेष्वाविष्टो हरिस्स्वयम् । विशेषावेशतस्तेषु साक्षाद्धर्यंशतावचः ॥ किंस्तुघ्नव्यासऋषभकपिला मत्स्यपूर्वकाः । आकूतिजैतरेयौ च धर्मजत्रयमेव च । धन्वन्तरिर्हयग्रीवो दत्तात्रेयश्च तापसः । स्वयं नारायणस्त्वेते नाणुमात्रविभेदिनः । बलतो रूपतश्चैव गुणैरपि कथञ्चन" (तत्त्वनिर्णये) इति । इयं च लक्ष्मीः सम्भूतिरिति विशेषणात् पृथुरपि हरेः साक्षादंशः । इतरथाऽस्य तत्पतित्वायोगादिति बुद्धिव्यामोहो न कर्तव्यः । "तत्र सन्निहिता श्रीश्च यत्र सन्निहितो हरिः । नास्य

---

1. A, B, T omit तस्याः 2--2. A, B, T omit 3--3. A, B, T omit 4. A, B, T इतरस्या° 5--5. A, B, T omit

सन्निधिमात्रेण रमा पत्नीत्वमाव्रजेत्। साक्षादेव तु साक्षाच्च हरेः सन्निधितः क्वचित्। गोप्यादिरूपा भवति विपरीतं न तु क्वचित्॥'' (तत्त्वनिर्णये) इति निर्णायकवचनात्। ''पुरुषोधातृपुन्नाग पुंस्त्वात्मपरमात्मनोः'' (वैज.को. 7-1-46) इत्यभिधानात् प्रकरणबलाच्च पुरुषं परमात्मनमपहाय न तिष्ठतीत्यभिप्रायेणोक्तं पुरुषस्यानपायिनीति लक्ष्मी विशेषणवती कापि रमणी भर्तृवियोगशून्या जातेति तात्पर्यमिति॥ ३॥

श्रीनारायणचरणारविन्दमकरन्दनिषेविणां महतां पुरुषाणामिहामुत्रानभिमता अपि भगवदिच्छया सकलाः सम्पदो भवन्तीति निरूप्यतेऽस्मिन्नध्याये पृथुकथाकथनव्याजेन। तत्रादौ विप्राणां पृथुप्रशंसाप्रकारं वक्ति - अत्रेति। तुशब्देन भेदवाचिना पृथोर्हरेश्च महान् भेदोऽस्तीति सूच्यते। एतदर्थद्योतकप्रमाणसद्भावात्, तथा ह्युक्तम् - ''ब्रह्मण्यनन्ते गरुडे रुद्रे कामे शचीपतौ। अनिरुद्धे मनौ चैव पृथौ च कृतवीर्यजे॥ नारदे चैवमाद्येषु विशेषात् सन्निधिर्हरेः। सुदर्शनादिष्वस्त्रेषु तथा सन्निहितो हरिः। नरलक्ष्मणौ बलश्चैव शेषस्यांशाः प्रकीर्तिताः। तथा भरतशत्रुघ्नौ शङ्खचक्रावुदाहृतौ॥ प्रद्युम्नश्च कुमारश्च स्कन्दः कामांशकाः स्मृताः॥'' (स्कान्दे) इति। ''वैन्ये पृथौ सन्निहितो राजरूपी जनार्दनः'' (ब्राह्मे) इति विशेषवचनेनायं वैन्यः पृथुः श्रीनारायणांशः अन्यः, तथा कश्चित् पृथुनामा तत्रोच्यत इति शङ्का निर्मूलितेति ज्ञातव्यम्। अत्रास्मिन् वर्षे राज्ञां गणनसमये प्रथमः कथम्? यतो यशः प्रथयिता अतः प्रथयितृत्वात् पृथुर्नाम महाराजेत्यत्र टच्प्रत्ययाभावः तेभ्यो वैशिष्ट्यद्योतनार्थः॥ ४॥

सुदती शोभमानदन्ता अर्चिर्नाम गुणैरर्चितत्वात्, भूषणैर्ज्वलितत्वात्। ''अर्चिर्भा ज्वाला'' (वैज.को. 6-5-6) इत्यभिधानम्। वरो वरणीय आरोहो नितम्बो यस्यास्सा तथोक्ता, अवरुन्धती पतित्वेन स्वीकुर्वाणा भविष्यतीत्यर्थः॥ ५॥

**एष साक्षाद्धरेरंशो जातो लोकरिरक्षया।**
**इयं च तत्परा हि श्रीरनुजज्ञेऽनपायिनी॥ ६॥**

### [1-]मैत्रेय उवाच[-1]

**प्रशंसन्ति स्म तं विप्रा गन्धर्व[2]प्रवरा जगुः।**
**मुमुचुः सुमनोधाराः सिद्धा नृत्यन्ति [3]स्वः स्त्रियः॥ ७॥**

---

1--1. W omits 2. Ma प्रमुखा 3. M, Ma, Ms स॰

**शङ्खतूर्यमृदङ्गाद्या नेदुर्दुन्दुभयो दिवि।**
**तत्र सर्व उपाजग्मुर्देवर्षिपितृणां[1] गणाः ॥ ८ ॥**

**ब्रह्मा जगद्गुरुर्देवैः[2] सहागत्य[3] सुरेश्वरैः।**
**वैन्यस्य दक्षिणे हस्ते दृष्ट्वा चिह्नं गदाभृतः ॥ ९ ॥**

**पादयोररविन्दं च तं[4] वै मेने हरेः कलाम्।**
**यस्याप्रतिहतं चक्रमंशस्य[5] परमेष्ठिनः ॥ १० ॥**

**श्रीध.** अत्र हेतुः - **एष** इति। लोकस्य [6-]रिरक्षया[-6] [7-]रिरक्षयिषया[-7] ॥ ६ ॥

**प्रशंसन्तीति**। स्वःस्त्रियः अप्सरसो नृत्यन्ति स्म ॥ ७, ८ ॥

**ब्रह्मेति**। देवैः सह आसृत्य[8] आगत्य वैन्यस्य पृथोः चिह्नं रेखात्मकं चक्रम् ॥ ९ ॥

**पादयोरिति**। अप्रतिहतं रेखान्तरैरभिन्नं चक्रं यस्य चिह्नं स परमेश्वरस्यांशः ॥ १० ॥

**वीर.** अत्र हेतुः - **एष** इति। रक्षितुमिच्छा रिरक्षा लोकस्य रिरक्षया साक्षात् हरेरंशः एष पृथुर्जातः आवेशावतारोऽयम्[9]। तत्परा तदनन्यार्हा अत एवानपायिनी श्रीः लक्ष्मीरियं जज्ञे, लक्ष्म्यंशजातेत्यर्थः ॥ ६ ॥

तं पृथुं विप्राः प्रशंसन्ति स्म प्रशशंसुः गन्धर्वश्रेष्ठा जगुः गानं कृतवन्तः, सिद्धाः सुमनोधाराः पुष्पवृष्टीर्मुमुचुः स्वःस्त्रियः स्वः स्वर्गः तत्रत्याः स्त्रियः अप्सरसः नृत्यन्ति ननृतुः ॥ ७ ॥

शङ्खादयो[10] दुन्दुभयः विनेदुः। तत्र पृथोः समीपे देवादीनां गणाः उपाजग्मुः आगताः ॥ ८ ॥

[11] जगतां गुरुः पिता हितोपदेष्टा च, ब्रह्मा चतुर्मुखः देवैस्सहागत्य वैन्यस्य वेनापत्यस्य पृथोर्दक्षिणे हस्ते गदाभृतो भगवतः, चिह्नं रेखात्मकं चक्रादिकं दृष्ट्वा ॥ ९ ॥

---

1. G, I °तृ° 2. M, Ma, Ms, V °वः 3. A, B, G, I, J, T सहाऽऽसृत्य; V उपसृत्य; W सहाऽऽश्रित्य 4. M, Ma, Ms तस्मिन्; V वैन्यं 5. A, B, G, I, J, T, V °मंशः सः 6--6. Va omits 7--7. V रक्षणेच्छया 8. V उपसृत्य 9. A, B, T omit अयम् 10. A, B, T °भ्यादयः 11. A, B, T omit जगतां

तथा पादयोररविन्दं च दृष्ट्वेत्यर्थः, हरेः कलामंशं मेने। अप्रतिहतं रेखान्तरैरभिन्नं चक्रं सुदर्शनं यस्य चिह्नं तस्य परमेष्ठिनः परमपुरुषस्यांशस्य व्यधिकरणे इमे षष्ठ्यौ। परमेष्ठिनेति तृतीयान्तपाठे तु तस्य पृथोः परमेष्ठिना ब्रह्मणा ब्राह्मणैस्सहाभिषेकः आरब्ध इत्यन्वयः। अंशः सन्निति पाठे अप्रतिहतं रेखान्तरैरसङ्कीर्णं चक्रं रेखात्मकं चक्रम् अंशस्सन् सुदर्शनांशस्सन् यस्य स्थितमिति शेषः। अंशशब्दापेक्षया सन्निति पुल्लिङ्गनिर्देशः॥ १०॥

**विज.** एष पृथुः साक्षात् हरेः श्रीनारायणस्यांश इति "सप्तसु प्रथमा" (शब्दनिर्णये) इति सूत्रात् अंशस्य सन्निधानस्य मुख्यं पात्रं, लोकरिरक्षया जनरक्षणेच्छया, यद्वा "प्रत्यक्षसदृशोः साक्षात्" (वैज.को. 286-59) इत्यभिधानात् हरेः साक्षादंशः पृथोः या जातिः तज्जातिसदृशजातिरूपेण सन्निहित इत्यर्थः। तदुक्तम् - "राजरूपी जनार्दनः" (ब्राह्मे) इति, यतो हरेः पृथौ सन्निधानविशेषात् तदंशत्वं तस्माच्छ्रियोऽपि तथा वचनमित्यस्मिन्नर्थे हिशब्दः। "हि हेताववधारणे" (वैज.को. 8-7-9) इति यादवः। अवधारणार्थत्वे उक्तस्मृतिविरोधः॥ ६॥

गन्धर्वप्रवरादयस्तत्र द्विजप्रशंसासमये गानादिकं चक्रुरित्यन्वयः॥ ७, ८॥

तत्र देवान् विशिनष्टि - **ब्रह्मेति**। तस्मिन् पृथौ सन्निहितां हरेः कलां मेन इत्यन्वयः॥ ९, १०॥

**तस्याभिषेक आरब्धो[1] ब्राह्मणैर्ब्रह्मवादिभिः।**
**आभिषेचनिकान्यस्मै आजह्रुः सर्वतो जनाः॥ ११॥**

**सरित्समुद्रा गिरयो नागा[2] गावः खगा मृगाः।**
**द्यौः क्षितिः सर्वभूतानि समाजह्रुरुपायनम्॥ १२॥**

**सोऽभिषिक्तो महाराजः सुवासाः साध्वलङ्कृतः।**
**पत्न्याऽर्चिषालङ्कृतया विरेजेऽग्निरिवापरः॥ १३॥**

**तस्मै जहार धनदो हैमं वीर वरासनम्।**
**वरुणः सलिलस्रावमातपत्रं शशिप्रभम्॥ १४॥**

**वायुश्च वालव्यजने धर्मः कीर्तिमयीं स्रजम्।**
**इन्द्रः किरीटमुत्कृष्टं[3] दण्डं संयमनं यमः॥ १५॥**

---

1. Ms आरब्धे 2. V, W नगा 3. W मकुटं

**श्रीध. तस्येति**। आभिषेचनिकानि अभिषेकसाधनानि॥ ११-१३॥

**तस्मै** इति। हे वीर! विदुर![1] वरासनम्[2] उत्तमासनम्[3]। सलिलस्य स्रावो यस्मात् तत्॥ १४॥

**वायुश्चेति**। द्वे वालव्यजने॥ १५॥

**वीर.** आभिषेचनिकानि अभिषेकसाधनानि सर्वतो दिग्भ्यो जनाः अस्मै पृथवे आजह्रुः आहृतवन्तः॥ ११॥

सरितः समुद्राश्च गिरयो हिमवदादयः, नागाः सर्पाः, खगाः शकुनयो द्यौरादयश्चेत्येवं सर्वभूतान्युपायनं सान्मानिकं समाजह्रुः॥ १२॥

स महाराजः पृथुरभिषिक्तः सुवासाः कौशेयादिमहार्हवस्त्रः स्रग्वी स्रक् वैजयन्ती अस्यास्तीति स्रग्वी, अलङ्कृतः किरीटाद्याभरणैरिति शेषः, तथालङ्कृतया भार्यया अर्चिषा सह अपरोऽग्निरिव रेजे रराज॥ १३॥

सर्वभूतानि समाजह्रुरुपायनमित्येतदेव[4] प्रपञ्चयति - **तस्मा** इति। हे वीर! तस्मै पृथवे धनदः हैमं हिरण्मयं श्रेष्ठं सिंहासनं जहार। सलिलस्य स्रावो यस्मात्तथाभूतं शशिप्रभमातपत्रं वरुणः जहार[5] इत्यनुषङ्गः॥ १४॥

वायुर्द्वे वालव्यजने कीर्तिमयीं कीर्तिप्रचुरां कीर्तिसम्पादकत्वेन तत्प्राचुर्यमत्र विवक्षितम्। स्रजं, धर्मः, जहारेति[6] सर्वत्रानुषङ्गः। संयमनं दुष्कृद्विषयसमीचीननियमनसाधनं दण्डम्॥ १५॥

**विज.** एवं प्रशस्य ब्रह्मणैः किमकारीति तत्राह - **तस्येति**। अभिषेकसाधनानि स्वयं सम्पादितानि किं वान्यैरित्यत आह - आभिषेचनिकानीति॥ ११॥

तत्रोपायनानि के आजह्रुरिति तत्राह - **सरिदिति**॥ १२, १३॥

न केवलं सरिदादय उपायनं ददुः, किन्त्वन्ये लोकपालादयोऽपीत्याह - **तस्मा** इति॥ १४, १५॥

**ब्रह्मा ब्रह्ममयं वर्म भारती हारमुत्तमम्।**
**हरिः सुदर्शनं चक्रं तत्पत्न्यव्याहतां श्रियम्॥ १६॥**

---

1. B, J, Va omit विदुर! 2--2. V वरमासनम् 3--3. V omits 4. A, B, T omit एव 5. A, B, T आजहार 6. A, B, T आजहार

**दशचन्द्रमसिं रुद्रः शतचन्द्रं तथाम्बिका।**

**सोमोऽमृतमयानश्वांस्त्वष्टा रूपाश्रयं रथम्॥ १७॥**

**अग्निराजगवं चापं सूर्यो रश्मिमयानिषून्।**

**भूः पादुके योगमय्यौ[1] द्यौः पुष्पं[2] बलिमन्वहम्॥ १८॥**

**नाट्यं सुगीतं वादित्रमन्तर्धानं च खेचराः।**

**ऋषयश्चाशिषस्सत्याः समुद्रः शङ्खमात्मजम्॥ १९॥**

**सिन्धवः पर्वता नद्यो रथवीथीर्महात्मनः।**

**सूतोऽथ मागधो वन्दी तं स्तोतुमुपतस्थिरे॥ २०॥**

**स्तावकांस्तानभिप्रेत्य पृथुर्वैन्यः प्रतापवान्।**

**मेघनिर्ह्रादया वाचा प्रहसन्निदमब्रवीत्॥ २१॥**

**श्रीध. ब्रह्मेति।** ब्रह्ममयं वेदमयं वर्म कवचं तत्पत्नी श्रीः श्रियं सम्पदम्॥ १६॥

**दश चन्द्रमिति।** दश चन्द्राकाराणि बिम्बानि कोशे यस्य तम् असिं खड्गं, शतचन्द्रं चर्मरूपाश्रयमतिसुन्दरम्॥ १७॥

**अग्निरिति।** अजस्य गोश्च शृङ्गाभ्यां निर्मितं चापम्। योगमय्यौ पादस्पर्शमात्रेणाभीष्टदेशप्रापिके॥ १८॥

**नाट्यमिति।** नाट्यादिकौशलं खेचराः आत्मजं स्वप्रभवम्॥ १९॥

**सिन्धव इति।** तं स्तोतुमुपस्थिताः॥ २०॥

**स्तावकानिति।** स्तावकान् स्तोतुमुद्यतान् अभिप्रेत्य ज्ञात्वा॥ २१॥

**वीर.** ब्रह्मा चतुर्मुखः ब्रह्ममयं वेदप्रचुरं[3] ब्रह्मप्रवचनापादकसामर्थ्यवत्वेन ब्रह्मप्राचुर्यमत्र विवक्षितम्। वर्म कवचं, भारती सरस्वती उत्तमं महार्हं हारं, हरिः उपेन्द्रः सुदर्शनं चक्रं, यदा पृथौ भगवदंशोऽनुप्रविष्टः तदेदं चक्रमपि सुदर्शनांशेनानुप्रविष्टमिति भावः। तत्पत्नी हरेः[4] पत्नी श्रीः अव्याहतां श्रियं सम्पदम्॥ १६॥

1. M, Ma, Ms °मये 2. A, B, G, I, J, T पुष्पावलि°; M, Ma, Ms पुष्पबलि° 3. A, B, T °मयं 4. A, B, T हरिपत्नी

दश चन्द्राकाराणि बिम्बानि कोशे यस्य तमसिं खड्गं रुद्र आजहार। रुद्रपत्नी[1] अम्बिका शतचन्द्रं[2-] शतं[-2] चन्द्राकाराणि बिम्बानि यस्मिन् तत् शतचन्द्र[3-] शतचन्द्राख्यं[-3] खेटापरपर्यायं चर्मेत्यर्थः। सोमः चन्द्रः अमृतमयान् अमृतस्राविव्त्वेन तत्प्राचुर्यमत्र विवक्षितम् अश्वानाजहार। रूपाश्रयमतिसुन्दरं रथम्॥ १७॥

अग्निराजगवमजस्य गोश्च शृङ्गाभ्यां निर्मितं चापं सूर्यः रश्मिमयान् रश्मिवत्सर्वत्र प्रवेशसामर्थ्येन तत्प्राचुर्यमत्र विवक्षितं, भूर्धरणी[4-] योगमय्यौ योगवदभीष्टदेशप्रापणसमर्थत्वेन तत्प्राचुर्यमत्र विवक्षितम्। अन्वहम्[-4] अहरहर्बलिं पूजां[5] पूजार्हं पुष्पं द्यौराजहार॥ १८।

खेचराः सिद्धसाध्यगन्धर्वादयः नाट्यादीनि आजह्रुः[6] प्रापयामासुः। ऋषयः सत्याः आशिषः आजह्रुः[7] कृतवन्त इत्यर्थः। समुद्रः आत्मजं स्वस्माद्भवं शङ्खमाजहार॥ १९॥

सिन्धवो नदाः, नद्यः पर्वताश्च महात्मनः पृथोः रथवीथीः रथमार्गान् आजह्रुः[8] ददुः। धातूनामनेकार्थत्वाद्दाने वृत्तिः। ततः सूतादयः तं पृथुं स्तोतुमुपतस्थिरे उप समीपे स्थितवन्तः॥ २०॥

तान् सूतादीन् स्तावकान् स्तोतुमुद्युक्तान् अभिप्रेत्य प्रतापवान् महाप्रभावः वेनस्यापत्यं पृथुः मेघनिर्ह्रादया मेघगर्जनवत्[9--9] गम्भीरया वाचा प्रहसन् स्मितपूर्वमिदं वक्ष्यमाणमब्रवीत्॥ २१॥

**विज.** तस्य हरेः पत्नी लक्ष्मीः॥ १६॥

नाम्ना दशचन्द्रं खड्गं त्वष्टा विश्वकर्मा रूपाश्रयं रथम्॥ १७॥

योगमयेऽणिमादियोगसाधने॥ १८॥

अन्तर्धानमदृश्यताम् आत्मजमात्मनो जातम्॥ १९॥

रथवीथीः रथमार्गान्। यथात्मविद्यं राजा निषेवणीय इति भावेन सूतादीनामुपस्थानप्रकारं वक्ति - सूतोऽथेति॥ २०॥

पृथोर्निरहङ्कारत्वप्रकटनाय वक्ति - **स्तावकानिति**। मेघनिर्ह्रादवत् मेघध्वनिवत् ध्वनिः यस्याः सा तथा तया॥ २१॥

1. A, B, T omit रुद्र° 2--2. A, B, T omit 3--3. A, B, T omit 4--4. W omits 5. A, B, T omit पूजां 6. W जह्रुः 7. W जह्रुः 8. W जह्रुः 9--9. W गर्जितवत्

## पृथुरुवाच

भोः[1] सूत हे मागध सौम्य वन्दिन् लोकेऽधुनाऽस्पष्टगुणस्य मे स्यात्।
किमाश्रयो मे स्तव एष योज्यतां[2] मा मय्यभूवन् वितथा गिरो वः ॥ २२ ॥

तस्मात्परोक्षेऽस्मदुपश्रुतान्[3]यलङ्करिष्यथ स्तोत्रमपीच्य[4]वाचः।
सत्युत्तमश्लोकगुणानुवादे जुगुप्सितं न स्तवयन्ति सभ्याः ॥ २३ ॥

महद्गुणानात्मनि कर्तुमीशः[5] कः स्तावकैः स्तावयतेऽसतोऽपि।
[6]एतेऽभविष्यन्निति विप्रलब्धो जनाप[7]हासं कुमतिर्न वेद ॥ २४ ॥

प्रभवो ह्यात्मनः स्तोत्रं[8] जुगुप्सन्त्यति[9] विश्रुताः।
ह्रीमन्तः परमोदाराः पौरुषं वा[10] विगर्हितम् ॥ २५ ॥

वयं त्वविदिता लोके सूताऽ[11]द्यापि वरीमभिः।
कर्मभिः कथमात्मानं गाप[12]यिष्यामि बालवत् ॥ २६ ॥

इति श्रीमद्भागवते महापुराणे अष्टादश साहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
चतुर्थस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥

**श्रीध.** भो इति। लोके स्पष्टगुणस्य सतो मे स्तुतिः, अधुना तु किमाश्रयो मे स्तवो योज्यताम्। अतो वो गिरोऽधुना मयि वितथा व्यर्थाः[13] मा भूवन्। यद्वा लोकेऽधुना अस्पष्टगुणस्य मे[14] किमाश्रयः स्तवः स्यात्। अतः एष क्रियमाणः स्तवो मे मदन्यस्य योज्यतां न तु मयि[15], वितथाभिधानापत्तेरित्यर्थः ॥ २२ ॥

---

1. M. Ma. Ms हे; J, W भो 2. W यु° 3. M, Ma, Ms °पाश्रि° । V °पष्टु° 4. M, Ma, Ms °ड्य 5. M, Ma, Ms °मिच्छन
6. A. B, G, I, J, T. V तेऽस्या°; M, Ma, Ms स वै भ° 7. A, B, G, I, J, T °व° 8. V ख्यातिं 9. A, B, G, I, J, M, Ma, Ms, T °पि
10. W वाऽपि ग° 11. W °द्या विव° 12. A, B, G, I, J, M, Ma, Ms, T, V °म 13. A, B, J, Va omit व्यर्थाः 14. A omits मे; J. °ऽमे
15. A. B. J. Va मे

**तस्मादिति**। तस्मात्परोक्षे कालान्तरे स्पष्टेषु [1] गुणेषु सत्सु अस्माकमुपश्रुतानि [2] [3-] प्रशस्तानि [-3] यशांसि प्रतिस्तोत्रमलमत्यर्थं करिष्यथ। हे अपीच्यवाचो मधुगिरः [4] ननु, सभ्यैः प्रेरिता वयं त्वामेव स्तुम इति चेत्तत्राह उत्तमश्लोकस्य गुणानुवादे कार्ये सति जुगुप्सितमर्वाचीनं न स्तावयन्ति॥ २३॥

ननु सम्भावितैरेव गुणैरात्मानं जनः स्तावयतीति चेत्तत्राह - **महद्गुणानिति**। महतां गुणानात्मनि सम्पादयितुं शक्तोऽप्यसतो गुणान् सम्भावनामात्रेण कः स्तावयते। यद्वा आदावेव सतोऽपि कः स्तावयते स्तव एव प्रख्यातिसिद्धेः। अन्यस्तु मिथ्यागुणस्तुतिश्लाघी मन्द इत्याह - त इति। यद्ययं शास्त्राभ्यासादिकमकरिष्यत्तर्ह्यस्य ते विद्यादयो गुणा अभविष्यन्निति क्रियातिपत्त्या विप्रलब्धो जनानामवहासं [5] न वेद॥ २४॥

**प्रभव** इति। किञ्च प्रभवोऽपि विश्रुता अपि ह्रीमन्तो [6] ऽपि जुगुप्सन्ति। पौरुषं [7] वेति दृष्टान्ते यथाऽतिस्तुतौ क्रियमाणायां विगर्हितं ब्राह्मणवधादि पौरुषमपि [8] निन्दन्ति तथोचितामपि स्तुतिं न सहन्त इत्यर्थः॥ २५॥

**वयमिति**। वरीमभिरिति [9-] दीर्घत्वमार्षम् [-9]। भवितृप्रधानोऽयं निर्देशः। वरिष्ठैः कर्मभिः अविदिता इत्यर्थः॥ २६॥

इति श्रीमद्भगवते चतुर्थस्कन्धे

श्रीश्रीधरस्वामि विरचितायां भावार्थदीपिकायां

व्याख्यायां पञ्चदशोऽध्यायः॥ १५॥

**वीर.** [10] उक्तिमेवाह - हे सूतादयः! लोकेऽधुनाऽस्पष्टगुणस्य सतो मे मम एषः युष्माभिः करिष्यमाणः स्तवः किमाश्रयो योज्यतां, लोके प्रख्याता हि गुणाः स्तोत्रविषया अप्रख्यातगुणस्य मे स्तवो विषयाभावाद्वितथः स्यात्। अतो वो युष्माकं स्तुतिगिरः मयि वितथा मा भूवन्। मम [11] युष्माकं चानिष्टापत्तिः स्यादिति भावः॥ २२॥

तस्मात्परोक्षे कालान्तरे स्पष्टेषु [12] गुणेषु सत्सु अस्मानुपाश्रितानि यशांसि प्रति स्तोत्रमलमत्यर्थं करिष्यथ। हे अपीच्यवाचः! मधुरवाचः! सूतादयः! [13-] अनवसरे समीरितानां मधुरगिरां शोभा नोपपद्यत इत्यभिप्रायः। [-13] सभ्यैः प्रेरिता वयं त्वामेव स्तुम इति चेत्तत्राह - उत्तमश्लोकस्य भगवतो गुणानुवादे कार्ये सति जुगुप्सितमनुत्तमश्लोकं मादृशं सभ्या न स्तावयन्ति न स्तुतिं कारयन्ति॥ २३॥

---

1. Va omits गुणेषु 2. V °श्रु° 3--3. A, B, J, Va omit 4. A, B, J, Va omit ननु 5. V °प° 6. V omits अपि 7. A, B, J, Va omit पौरुषं 8. B, J, V, Va omit अपि 9--9. V दीर्घ आर्षः। 10. A, B, T उक्त° 11. A, B, T omit मम 12. A, B, T °ष्टगु° 13--13. W omits

ननु गुणानामधुनाऽस्पष्टत्वेऽपि भविष्यद्गुणैरात्मान जन स्तावयतीति[1] चेत्तत्राह - **महद्गुणानिति** । अधुनाऽसतोऽपि महता[2] गुणानात्मनि स्वस्मिन् कर्तु सम्पादयितुमीश शक्तोऽपि स्तावकै स्तोतृभि क स्तावयते स्तुति कारयति[3], न कोऽपीत्यर्थ । यदि कश्चित्, एते गुणा अभविष्यन्निति करिष्यमाणशत्रुजयादिभि शौर्यादयो गुणा स्वस्मिन्नभविष्यन्निति बुद्ध्याऽऽत्मान स्तावयते स कुमति विप्रलब्धोऽधिक्षिप्तो जनानामपहास न वेद ॥ २४ ॥

सुमतयस्तु[4] स्वात्मस्तुति निन्दन्तीत्याह - **प्रभव** इति । परमोदारा निरतिशयौदार्यादिगुणसम्पन्ना प्रभवोऽपि सद्गुणानात्मनि सम्पादयितु शक्ता अपि विश्रुता प्रख्याता अपि ह्रीमन्तो लज्जायुक्तास्सन्त आत्मन [5]स्वस्यापि गर्हित पौरुष तद्विषय स्तोत्र वा जुगुप्सन्ति निन्दन्ति ॥ २५ ॥

हे सूताद्या सूतप्रभृतय लोके अविदिता अप्रख्याता वयन्तु विवरीमभि नितरा वरिष्ठै दीर्घ आर्ष । सूताऽद्यापीति पाठे सूतेति जात्यभिप्रायमेकवचन, तच्च मागधादीनामप्युपलक्षण, हे सूतादय ! अद्यापि अधुनापि वरीमभि वरिष्ठै कर्मभिर्लोके अविदिता वयमत[6] कथम् अह बालवदात्मान गापयिष्यामि,[7] गै [8]शब्दे[8] णिच्यात्वे ''अर्तिह्रीव्लीरी'' (अष्टा 7-3-36) इत्यादिना पुक्, तस्मात्[9] लृटि उत्तमै[9]कवचन [10]स्तावयिष्यामि इत्यर्थ ॥ २६ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखिताया भागवत चन्द्रचन्द्रिकाया

व्याख्याया पञ्चदशोऽध्याय ॥ १५ ॥

**विज.** हे सूताद्या ! योज्यता, स्तुति प्रयुञ्जता वो युष्माकमेष स्तवो मे किमाश्रय क गुणमाश्रित्य वर्तमान स्यादित्यन्वय । तव शौर्यादिगुणमाश्रित्य वर्तत इति तत्राह - लोक इति । अस्पष्टगुणस्याप्रकाशितपराक्रमादिगुणस्य यद्वा यद्यह प्रख्यातगुण स्या तर्ह्येष व स्तवो योज्यताम् । न च तथा तस्मात्किमाश्रयो योज्यते, यत एवमतो वो मयि प्रयुक्ता गिरो वितथा मा भूवन्नित्यन्वय ॥ २२ ॥

किमिदानी फलितमत्राह - **तस्मादिति** । यस्मादिदानीमनाविष्कृतगुणा वय तस्मादीड्यवाचो यूय परोक्षे कालान्तरे कृतविक्रमानन्तरमस्मदुपाश्रितान्यस्मद्विषयाणि कर्माण्याश्रित्यालमत्यर्थं स्तोत्र करिष्यथेत्यन्वय । यद्वा कथङ्कार चेद वितथा स्यु

---

1 A, B T °येदिति 2 A, B T महत 3 A, B, T °ते 4 A,B,T omit तु 5 A,B,T स्वस्य विग° 6 A,T वय 7 A, T °म
8--8 A, B T omit 9--9 A, B, T लृडुत्तमबहुवचन 10 A, B,T °म

अस्मद्गिर इति तत्राह - तस्मादिति । यतो वयमप्रकाशितगुणाः तत्र प्रवर्तमानः विषयाणामसत्वाद्वैतथ्यमालभन्ते, तस्मात्तद्दोषपरिहारार्थमस्मदपरोक्षे चास्मन्निकटेऽस्मद्दूरप्रदेशे वर्तमानो यो हरिः तस्येड्यवाचो हरेराश्रितानि चरितान्यङ्गीकृत्य स्तोत्रमलङ्करिष्यथ भूषितं कुरुत[1] । अन्यथा दूषितमेव स्यात् अतस्तस्य गुणानां नित्यत्वात् तद्विषया युष्मद्गिरः सफलाः स्युः । "अविद्यमानकथका वन्दिनः परिकीर्तिताः इति युष्मद्दोषोऽपि परिहृतः स्यादिति भाविनो गुणान् समूह्य स्तुम इति तत्राह - सतीति । उत्तमश्लोकगुणानामनुवादे सति अभ्यर्हितेऽपि सभ्या आत्मस्तवनं जुगुप्सितमिति न स्तवयन्ति[2], "आत्मप्रशंसा मरणम्" इति स्मृतेः ॥ २३ ॥

वयं तत्र तत्र[3] तं प्रभुं स्तुत्वा ततः फलं लभामहे । तत्कथमित्याशङ्क्य तन्मूर्खविषयं न विद्वद्विषयमित्याशयेनाह - **महद्गुणानिति** । अनभिव्यक्तत्वेन बाल्येऽसतः[4] अविद्यमानानपि महतां पृथिव्यादीनां क्षमादिगुणानात्मनि कर्तुमिच्छन् प्रकाशयितुकामः को विद्वान् स्तावकैर्भवादृशैः स्तावयते न कोऽपीत्यन्वयः । कथं तन्मूर्खविषयमभूदिति तत्राह - स वा इति । यद्वा यदुक्तं हरिविषयं स्तोत्रमलं करिष्यथेति तद्गुणसन्दृब्धं स्तोत्रं निर्गुणे हरौ कथं सङ्गच्छते, तथात्वे वा अस्मद्गिरां वैतथ्यं सुलभं स्यादिति तत्राह - सतीति । उत्तमश्लोकस्य हरेर्गुणानामनुवादे सति स्तोतॄणां पापहरत्वेन प्रशस्ते, सभ्याः पण्डिताः "विण्मूत्रपूर्णं मदुपैति कन्या" इति जुगुप्सितमात्मानं न स्तावयन्तीत्यन्वयः । सभ्येष्वेकोऽपि तथाविधः किं न स्यादिति शङ्कमानो मूर्ख एवेति भावेनाह - महद्गुणानिति । आत्मन्यसतो महतः "अणोरणीयान् महतो महीयान्" (कठ.उ. 2-20) इति श्रुतिसिद्धस्य हरेः गुणानौदार्यादिकानात्मनि कर्तुमिच्छन् स्तावकैः को विद्वान् स्तावयते, अपिपदेनोक्तं जुगुप्सितमित्यनुकर्षति । किमित्याक्षेप इत्यतो लोकापवाद-विषयत्वादित्याशयेनाह - स वा इति ॥ २४ ॥

सद्गुणाः प्रभवोऽप्यात्मस्तुतिं जुगुप्सन्ते, किमुत वयमिति भावेनाह - **प्रभवोऽपीति** । विद्यमानगुणसन्दृब्धस्तोत्रं प्रत्यक्षप्रमितं पारमार्थिकं पौरुषमपि निन्दन्तीत्यर्थः ॥ २५ ॥

वरीमभिर्वरणीयैः श्रेष्ठैरित्यर्थः ॥ २६ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे
श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां
टीकायां पञ्चदशोऽध्यायः ॥ १५ ॥

1. B, M, Ma कुर्वन्तु 2. A, B, M स्ता° 3. Ma omits तत्र 4. A, B, omit असतः

# षोडशोऽध्यायः

## मैत्रेय उवाच[1]

इति ब्रुवाणं नृपतिं गायका मुनिचोदिताः।

तुष्टुवुस्तुष्टमनसस्तद्वागमृतसेवया॥ १॥

वन्दिनः ऊचुः

नालं वयं ते महिमानुवर्णने यो देवदेवो[2]ऽवततार मायया।

वेनाङ्गजातस्य च पौरुषाणि ते वाचस्पतीनामपि बभ्रमुर्धियः॥ २॥

अथाप्युदारश्रवसः पृथोर्हरेः कलावतारस्य कथामृतादृताः।

यथोपदेशं मुनिभिः प्रचोदिताः श्लाघ्यानि कर्माणि वयं वितन्महे[3]॥ ३॥

एष धर्मभृतां श्रेष्ठो लोकं धर्मेऽनुवर्तयन्।

गोप्ता च धर्मसेतूनां शास्ता तत्परिपन्थिनाम्॥ ४॥

एष वै लोकपालानां बिभर्त्येकस्तनौ तनूः।

काले काले यथाभागं लोकयोरुभयोर्हितम्॥ ५॥

## श्री श्रीधरस्वामिविचरिता भावार्थदीपिका

षोडशे सर्वलोकेशैः सत्कृतं भार्यया युतम्। मुनिप्रयुक्ताः सूताद्याः स्तुवन्ति स्मेति वर्ण्यते॥

**इतीति**। गायकाः सूतादयः॥ १॥

**नालमिति**। नाऽलं न समर्थाः। यो भवान् अवतारेष्वप्यस्याधिक्यमाहुः। वेनस्य अङ्गाज्जातस्य ते पौरुषाणि प्रत्यवितर्क्यतया ब्रह्मादीनामपि धियो बभ्रमुः। कुतः पुनर्वयं तद्वर्णने समर्था भवेम॥ २॥

---

1. A, B, G, I, J, T, V omit; M, Ma सूत उवाच   2. A, B, G, I, J, T, V वर्यो°   3. A, B, G, I, J, T °हि

**अथेति** । अथापि यथावद्वर्णयितुमशक्ता अपि कथामृते सादराः मुनिभिः कृत[1] उपदेशो[2] योगबलेन हृदि प्रकाशनं तदनतिक्रम्य[3] वितन्महे[4] विस्तारयामः ॥ ३, ४ ॥

**एष** इति । तनौ स्वदेहे लोकपालानां तनूर्मूर्तीः काले काले[5] बिभर्ति यथाभागं पालनपोषणानुरञ्जनादिकार्यानुसारेण यज्ञादिप्रवर्तनेन स्वर्गस्य हितं, वृष्ट्यादिना च भूलोकस्य हितं यथा भवति तथा ॥ ५ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवमविकत्थयित्रा पृथुनाऽऽत्मस्तुतेः वारिता अपि तुष्टमनसो[6] गायकास्तुष्टुवुरित्याह मुनिः षोडशेन[7] - **इतीति** । गायकाः सूतादयः तस्य पृथोर्वागेवामृतं तस्य सेवया तुष्टं मनो येषां ते मुनिभिः भगवदंशभूतस्य पृथोः अविकत्थयितृत्वादि-कल्याणगुणजाताभिज्ञैः मुनिभिः प्रचोदितास्सन्तः, इति उक्तप्रकारेण ब्रुवन्तमपि नृपतिं पृथुं तुष्टुवुः ॥ १ ॥

तत्र गायकाः पृथोः कल्याणगुणानुवर्णनात्मकस्तुतावात्मनामसामर्थ्यमापादयन्तः पुनः मुन्यनुगृहीताः सन्तः तत्सामर्थ्यमाहुः - **नाऽलमिति** द्वाभ्याम् । ते तव महिम्नः अनुवर्णने वयं नाऽलं न समर्थाः, कुतः यो भवान् देवदेवः देवानां सद्गुणैर्दीप्यमानानामपि ब्रह्मादीनां देवः निरतिशयानन्तकल्याणगुणजातेन दीप्यमानो भवान् मायया आत्मीयसङ्कल्परूपज्ञानेन "माया वयुनं ज्ञानम्" (वेदा.नि. 3-9) इति मायाशब्दस्य ज्ञानपर्यायत्वात् अवततार अवतीर्णः अनन्तकल्याणगुणाकरो भगवानेव त्वद्रूपेणावतीर्णः । अतः कथमनन्तानां गुणानां वर्णने वयं प्रभव इत्यर्थः । ननु सत्यम्, अनन्तानां भगवद्गुणानां वर्णने यूयमसमर्था इति । अहं तु मानुषः, तत्कथं मद्गुणानुवर्णने यूयमप्रभवः, तत्राहुः - वेनस्याङ्गाज्जातस्यावतीर्णस्यापि ते[8] अजहदनन्तकल्याणगुणजातस्य भगवदंशभूतस्य तव[9] पौरुषाणि, प्रति इति शेषः, अप्रतर्क्यतया वाचस्पतीनां ब्रह्मादीनामपि धियो बुद्धयः[10] बभ्रमुः[11] किमु वक्तव्यं वयमसमर्था इति, यतो ब्रह्मादय एव मुमुहुरित्यर्थः ॥ २ ॥

यद्यपि त्वन्महिमानुवर्णने वयं नाऽलं, तथापि विपुलकीर्तेः हरेरंशावतारभूतस्य पृथोः कथामृते आदृताः सादरा वयं मुनिभिः उपदेशो यथा भवति तथा प्रचोदिताः[12] प्रेरितास्सन्तः श्लाघ्यान्यनवद्यानि कर्माणि वितन्महे विस्तारयामः ॥ ३ ॥

विस्तरमेव[13] प्रपञ्चयति - **एष** इति । एष पृथुः धर्मभृतां वर्णाश्रमानुबन्धिधर्मानुष्ठानपराणां मध्ये श्रेष्ठः "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो

---

1. V omits कृतः 2. V adds यथा भवति तथा 3. V तदुपदेशमनतिक्रम्य 4. A, B, J, Va °हि 5. B, Va omit काले 6. W तुष्टूषवः 7. W पञ्चदशेन 8. A, B, T omit ते 9. A, B, T omit तव 10. W omits बुद्धयः 11. A, B, T omit बभ्रमुः 12. A, B °णो° 13. A, B, T °स्ता°

जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते'' (भगी० 3-21) इत्युक्तरीत्या स्वयं कृत्स्नविदप्यकृत्स्नविल्लोकसङ्ग्रहार्थं नितरां स्ववर्णाश्रमोचितधर्मानुष्ठानपर इत्यर्थः । अत एव लोकमकृत्स्नविल्लोकं धर्मे अनुवर्तयन् अनुवर्तयिता स्वस्ववर्णाश्रमोचितधर्मं अनुष्ठापयिता [1-]धर्म सेतूनां[-1] धर्मः सेतुर्येषां तेषां, सेतुर्हि तीरान्तरप्रतिलम्भकः तद्वच्छ्रौतस्मार्तधर्मः, स समीहितप्रापको येषां ते धर्मसेतवः धर्मैकशरणाः साधव इति यावत्, तेषां गोप्ता तत्परिपन्थिनां धर्मविरोधिनामसाधूनां शास्ता । यद्वा धर्मा एव सेतवः मर्यादा येषां तेषां गोप्ता केनाकारेणेत्यपेक्षायां लोकं धर्मेऽनुवर्तयन् इत्यपेक्षितप्रकारनिर्देशः ॥ ४ ॥

एष पृथुः स्वयमेक एव लोकपालानां सूर्येन्द्रादीनां तनूः तनुवत्कार्योपयोग्यपृथक्सिद्ध[2-]विशेषणभूतानितरसाधारणान्[-2] गुणान् । तनुशब्दस्य शरीरपरत्वेऽपि कार्योपयोग्यपृथक्सिद्धविशेषणत्वमेव प्रवृत्तिनिमित्तं, तद्गुणपरत्वेऽपि तुल्यम् । तनौ स्वदेहे काले काले यथाभागं भागमनतिक्रम्य उभयोर्लोकयोर्हितं यथा भवति तथा बिभर्ति । इहलोकस्य पालनपोषणानुरञ्जनद्वारेण अमुष्य लोकस्य यज्ञादिप्रवर्तनेनेत्येवं यथाभागं हितं यथा भवति तथा बिभर्तीत्यर्थः ॥ ५ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

पृथुस्तुतिव्याजेन हरौ [3]भक्त्यवतारार्थं तन्माहात्म्यं निरूप्यते अस्मिन्नध्याये । नन्वत्र सूतादयः स्तुतौ पृथुना निवारिताः । अन्ये के स्तोतारो, येन ततः स्तुत्या हरौ भक्तिः अवतार्यत इत्याशङ्क्य, मुनिप्रेरितास्त एव तुष्टुवुरिति तत्स्तुतिप्रकारमुपक्रमते - **इति ब्रुवाण**मित्यादिना ॥ १ ॥

वयं स्तोष्याम इति प्रारम्भ एव श्रेयान्, न तु तत्र समर्था इत्याहुरित्याह - **नाऽलमिति** । अलं समर्थाः पृथुसन्निहितश्रीहरिमहिमसन्दृब्धत्वादिति भावेनोच्यते - य इति । यो देवदेवः श्रीनारायणो मायया भक्तानुकम्पेच्छया अवततार । तस्य [4]वेनाङ्गजं वेनस्याङ्गादवयवाज्जन्म, अतस्य 'अत सातत्यगमने' इति धातोः विशेषसन्निहितत्वेन प्राप्तस्य, ते त्वयि स्थितस्य हरेः पौरुषाणि वर्णयितुं वाचस्पतीनां ब्रह्मादीनामपि धियो बभ्रमुरिति यस्मात् तस्मात् वयं न समर्था इति किमु वर्णनीयम् । चशब्दः कैमुत्यार्थः, अन्यत्र [5-]देवो हरिः तस्य[-5] देवः देवनं क्रीडनं यस्मिन् पृथौ स देवदेवः पृथुः मायया भगवदिच्छोद्बोधितमुनीच्छयाऽवततार प्रकाशितोऽभूत् । तस्य ते वेनस्याङ्गात् अवयवाज्जातस्य पौरुषाणि कथयितुं वाचस्पतीनां कवीनां धियो बभ्रमुरिति यदत इति । धीशब्देन मनो लक्ष्यते "मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति" (ऐत.उ. 1-1-2) इति श्रुतेः । वाचो भ्रमन्तीति किमु वक्तव्यमित्यर्थः ॥ २ ॥

---

1--1. A. B. T omit 2--2. W भूतान् असाधारणगुणान् 3. B, M, Ma भक्त्याव० 4. Ma omits वेनाङ्गजं 5--5. A omits

तर्हि निवर्ततामित्याहुरित्याह - **अथापीति**। असमर्था अपि कथामृतादृतत्वात् निवर्तयितुं मनो नायातीत्यर्थः। तर्हि किं नु कुर्वन्ति इति तत्राहुरित्याह - यथोपदेशमिति। साकल्येन स्तवनाशक्तौ निवर्तनं वरमित्यत उक्तं - मुनिभिरिति। आज्ञोल्लङ्घनभीरुत्वात् वितन्महे प्रपञ्चयामः॥ ३॥

किङ्गुणविशिष्टः प्रपञ्च इत्यत्रोच्यते - **एष** इति। तत्परिपन्थिनां तस्य धर्मसेतोर्विरोधिनाम्॥ ४॥

एष पृथौ सन्निहितो हरिः तनौ स्वदेहे तनूः शक्तिलक्षणा मूर्तीः यथाभागं बिभर्ति॥ ५॥

**वसु काल उपादत्ते[1] काले चायं विमुञ्चति।**
**समः सर्वेषु भूतेषु प्रतपन्[2] सूर्यवद्विभुः॥ ६॥**

**तितिक्षत्यक्रमं वैन्य उपर्याक्रमतामपि।**
**भूतानां करुणः शश्वदार्तानां क्षितिवृत्तिमान्॥ ७॥**

**देवेऽवर्षत्यसौ देवो नरदेववपुर्हरिः।**
**कृच्छ्रप्राणाः प्रजा ह्येष रक्षिष्यत्यञ्जसेन्द्रवत्॥ ८॥**

**आप्याययत्यसौ लोकं वदनामृतमूर्तिना।**
**सानुरागावलोकेन विशदस्मितचारुणा॥ ९॥**

**अव्यक्तवर्त्मैष[3] निगूढकार्यो गम्भीरमेधा[4] उपगुप्तवित्तः।**
**अनन्तमाहात्म्यगुणैकधामा प्रभुः प्रचेता इव संवृतात्मा॥ १०॥**

**श्रीध. वस्विति**। सूर्यादितनुधारणमेवाहाष्टभिः। वसु धनं करादानकाले उपादत्ते[5], दुर्भिक्षादिकाले विमुञ्चति च। अष्टौ मासान् सूर्यो यथा वसु जलमादत्ते वर्षासु विमुञ्चति तद्वत्॥ ६॥

**तितिक्षतीति**। मस्तके पादेनाक्रमतामप्यार्तानां भूतानामतिक्रमं सहिष्यते क्षितेर्वृत्तिः सर्वसहनं सा वृत्तिर्यस्यास्ति स तथा॥ ७॥

---

1. Ms °ध° 2. V प्रावर्षत् 3. M, Ma, Ms विशुद्ध 4. A, B, G, I, J °वेधा; M, Ma, Ms चेता; W वेदी 5. A, B, J, Va आदत्ते

**देव इति** । देवेऽवर्षति सति[1] एष कृच्छ्रं गताः प्राणा यासां ताः प्रजाः स्वयं वृष्टिं कृत्वा रक्षिष्यति । अत्र हेतुः - असौ नरदेववपुर्हीरिरिति ॥ ८ ॥

**आप्याययतीति** । वदनमेवामृतमूर्तिश्चन्द्रः तेन सानुरागोऽवलोको यस्मिन् । विशदं शुभ्रं[2] यत्[3] स्मितं तेन चारुणा । अत्र च क्वचिद्वर्तमाननिर्देशो "वर्तमानसामीप्ये वर्तमानवद्वा" (अष्टा. 3-3-131) इति, भूतनिर्देशश्च "आशंसायां भूतवच्च" (अष्टा. 3-3-132) इति द्रष्टव्यः ॥ ९ ॥

**अव्यक्तेति** । न व्यक्तं वर्त्म प्रवेशनिर्गममार्गो यस्य । निगूढं निष्पत्तेः पूर्वमविज्ञातं कार्यं यस्य तच्च कार्यं गम्भीरं, किमर्थमेतत्कृतमित्यन्यैरज्ञाताभिप्रायं विधत्त इति तथा उपगुप्तं सुरक्षितं वित्तं यस्य । अनन्तमाहात्म्यश्चासौ गुणानामेकं धाम विष्णुः यस्मिन् सः । अनन्तमाहात्म्योपेता गुणा एवैकं धाम स्थानं यस्येति वा । संवृतात्मा संयतमूर्तिः समुद्रचरत्वेन वरुणस्याप्येते गुणा द्रष्टव्याः ॥ १० ॥

**वीर.** तत्र सूर्यादितनुधारणमेवाहाष्टभिः । वसु धनं [4-]काले करादानकाले[-4] उपादत्ते स्वीकरोति काले दुर्भिक्षकाले विमुञ्चति । अष्टौ मासान् सूर्यो यथा प्रतपन् वसु जलमादत्ते वर्षासु विमुञ्चति तद्वत्, अत एव सर्वेषु भूतेषु समः ॥ ६ ॥

वैन्यः[5] पृथुः उपरि मस्तके पादादिना आक्रमतामप्यार्तानां भूतानां करुणः करुणावान् अतिक्रमं तितिक्षति सहिष्यते । अतः क्षितिवृत्तिमान् क्षितेः[6] भूमेर्या वृत्तिः सर्वसहनं[7] सा[8] वृत्तिर्यस्यास्तीति तथा[9] ॥ ७ ॥

तथा देवे अवर्षति सति कृच्छ्रङ्गताः प्राणाः यासां, ताः प्रजाः स्वयं वृष्टिं कृत्वा इन्द्रवद्रक्षिष्यति । अत्र हेतुः असौ नरदेववपुर्हीरिरिति ॥ ८ ॥

असौ पृथुः वदनामृतमूर्तिना वदनमेवामृतमूर्तिश्चन्द्रस्तेन, लोकमाप्याययति वर्धयति । वदनामृतमूर्तिना कथम्भूतेन ? अनुरागसहितोऽवलोको यस्मिन्, विशदं यत् स्मितं तेन चारु सुन्दरं तेन । अत्र क्वचित् क्वचित् वर्तमाननिर्देशो "वर्तमानसामीप्ये वर्तमानवद्वा" (अष्टा. 3-3-131) इति, भूतनिर्देशः "आशंसायां भूतवच्च" (अष्टा.3-3-132) इति द्रष्टव्यः ॥ ९ ॥

अव्यक्तं प्रवेशनिर्गमयोरविज्ञातं वर्त्म मार्गो यस्य, निगूढं निष्पत्तेः पूर्वमपरैरविज्ञातं[10] कार्यं यस्य, गम्भीरवेदी किमर्थमेवं कृतवानिति

---

1. A. B. J, Va omit सति 2. B, J, V, Va omit शुभ्रं 3. V omits यत् 4--4. A, B, T omit 5. A, B, T प्रभुः 6. A, B, T omit क्षितेः 7. A. B. T omit सर्व 8. A, B, T तत् 9. A, B, T omit तथा 10. A, B,T प्रागवि°

परैरज्ञाताभिप्रायः, उपगुप्तं सुरक्षितं वित्तं धनं[1] यस्य सः, अनन्तमाहात्म्याद्धेतोर्गुणानामेकं मुख्यं धाम आश्रयः, प्रचेता इव संवृतात्मा समुद्रावरणेन वरुण इव चतुर्भिः समुद्रैः जलप्राकारादिभिर्वापरिवेष्टितमूर्तिः। वरुणस्याप्युक्तगुणा द्रष्टव्याः ॥ १० ॥

**विज.** भरणप्रकारं दर्शयति **वस्वित्यादिना**। ''वसुर्हृदेऽग्नौ योक्त्रेंशौ वसु तोये धने मणौ'' (वैज.को. 6-5-78) इत्यभिधानात् यथासम्भवं योज्यम्। करादानकाले वसु धनमुपादत्ते दुर्भिक्षादौ दानयोग्यपुरुषागमनकाले विमुञ्चति। सूर्योऽपि ग्रीष्मादिकाले वसु जलमुपादत्ते वर्षादौ मुञ्चति। समो यथायोग्यं दण्ड्यादिषु[2] प्रतपन् प्रतापं कुर्वन्नन्यत्र यथर्तु प्रतपन् ॥ ६ ॥

उपर्याक्रमतामात्मानमतिक्रम्य वर्तमानानां सतामक्रममपराधं तितिक्षति सहते। दारिद्र्येणार्तानां क्षितिवृत्तिमान् भूमिलक्षणवृत्तिदाता, भूमार्थो मतुबर्थः ॥ ७ ॥

देवेऽवर्षति अनावृष्टौ सत्यां बुभुक्षया कृच्छ्रप्राणाः क्लिष्टेन्द्रियचेष्टाः प्रजा रक्षिष्यतीत्यन्वयः ॥ ८ ॥

वदनामृतमूर्तिना मुखचन्द्रेण ॥ ९ ॥

अव्यक्तं सूक्ष्मं वर्त्म चारैः प्रवेशमार्गो यस्य स तथा अव्यक्तानां योगिनां वर्त्म यस्येति वा। नितरां शुद्धं कार्यं कर्तव्यं यस्य। उपगुप्तवित्तः सुरक्षितकोशः सुरक्षितयशा वा ''वित्तं यशो धनं वित्तो विद्वान् विश्रुत एव च'' इत्यभिधानम्। अनन्तानां माहात्म्यगुणानामेकं धाम आश्रयो यस्य स तथा, अनन्तमाहात्म्यगुणा एवैकं धाम यस्य स तथा वा, अन्यत्र शेषस्य माहात्म्यगुणैकधामा। संवृत आत्मा स्वरूपं यस्य स तथा ॥ १० ॥

**दुरासदो दुर्विषह आसन्नोऽपि विदूरवत्।**
**नैवाभिभवितुं शक्यो वेनारण्युत्थितोऽनलः ॥ ११ ॥**

**अन्तर्बहिश्च भूतानां पश्यन् कर्माणि चारणैः।**
**उदासीन इवाध्यक्षो वायुरात्मेव देहिनाम् ॥ १२ ॥**

**नादण्ड्यं दण्डयत्येष सुतमात्मद्विषामपि।**
**दण्डयत्यात्मजमपि दण्ड्यं धर्मपथे स्थितः ॥ १३ ॥**

---

1. W omits धनं 2. A, B दण्डा°

**अस्याप्रतिहतं चक्रं पृथोरामानसाचलात् ।**

**वर्तते भगवानर्को यावत्तपति गोगणैः ॥ १४ ॥**

**रञ्जयिष्यति यल्लोकमयमात्मविचेष्टितैः ।**

**अथामुमाहू राजानं मनोरञ्जनकैः प्रजाः ॥ १५ ॥**

**श्रीध. दुरासद** इति । दुरासदः शत्रोर्मनसापि प्राप्तुमशक्यः दुर्विषहः, शत्रुभिः सोढुमशक्यः: विदूरवत् पौरुषेणाभिभवितुमशक्यः, वेन एवारणिस्तस्मादुत्थितः ॥ ११ ॥

**अन्तरिति** । चारणैः गुप्तभृत्यैः पश्यन्नपि स्वस्तुतिनिन्दादौ[1] उदासीन इव वर्तिष्यते यथा देहिनामध्यक्षोऽविकृत आत्मभूतो वायुः सूत्रात्मा तद्वत् ॥ १२ ॥

**नेति** । आत्मद्विषां सुतमिति सुतग्रहणं स्वात्मजसाम्यार्थम् । [2-]द्विषां सुतमपि दण्डानर्हं न दण्डयति, आत्मनः सुतमपि दण्डार्हं दण्डयत्येवेत्यर्थः[-2] । धर्मपथे यमस्य वृत्ते स्थितः ॥ १३ ॥

**अस्येति** । चक्रमाज्ञा सेना वा रथस्य वा चक्रं मानसाचलमभिव्याप्य प्रवर्तते । [3]कियत्पर्यन्तमित्यत आह । अर्को रश्मिगणैर्यावत् तपति तावत् ॥ १४ ॥

**रञ्जयिष्यतीति** । यद्यस्मात् रञ्जयिष्यत्यथ तस्मात् मनोरञ्जनैर्हेतुभिरमुं राजानमाहुः । मनोरञ्जनकैरिति चेष्टितविशेषणं वा ॥ १५ ॥

**वीर.** दुरासदः शत्रोर्मनसा[4]ऽपि प्राप्तुमशक्यः [5]दुर्विषहः शत्रुभिः सोढुमशक्यः आसन्नः सन्निहितोऽपि विदूरवत्पौरुषेणाभिभवितुमशक्यः, वेन एवारणिः तस्मादुत्थितोऽनलोऽग्निरिव । अनलस्याप्येते गुणा द्रष्टव्याः ॥ ११ ॥

चारणैर्गूढपुरुषैः अन्तर्बहिश्च भूतानां कर्माणि पश्यन्नपि स्तुतिनिन्दादावुदासीनो वर्तिष्यते, देहिनामध्यक्षो देहधारणे प्रधानहेतुभूतः, सूत्रात्मा सूत्ररूपो वायुरिव, सूत्रात्मेति ह्रस्व आर्षः, वायुरात्मेव देहिनाम् इति पाठान्तरं, तत्र आत्मा अन्तः प्रविश्य धारको[6] वायुरिवेत्यर्थः, उदासीन इव [7-]उदासीनवत्[-7] आस्त इत्यत्र दृष्टान्तः ॥ १२ ॥

एष पृथुः आत्मद्विषां शत्रूणामपि सुतमदण्ड्यं न दण्डयति, सुतग्रहणं स्वात्मजसाम्यार्थम्, आत्मजमपि दण्ड्यं दण्डयति, यतोऽसौ धर्मपथे स्थितः यमस्य वृत्तौ स्थितः ॥ १३ ॥

---

1. V °दिषु 2--2. B, J, V, Va omit 3. A, B, J, Va किम्प° 4. A, B, T omit अपि 5. A, B, T omit दुर्विषहः 6. T °णो
7--7. A, B, T omit

अस्य पृथोः[1] चक्रम् आज्ञा, रथचक्रं च अप्रतिहतं सत् मानसाचलमभिव्याप्य वर्तते। किं वक्तव्यम् आ मानसाचलादिति ? यतोऽसावर्कः सूर्यो यावद् गोगणैः किरणसमूहैस्तपति तावत् वर्तते॥ १४॥

राजशब्दप्रवृत्तिनिमित्तं प्रजारञ्जनरूपम् अस्मिन्नेव पुष्कलमित्याहु :- **रञ्जयिष्यतीति**। अयं पृथुरात्मनः स्वस्य विचेष्टितै र्व्यापारैः यतो लोकं रञ्जयिष्यति। अथ ततः मनोरञ्जनैः हेतुभिरमुं राजानं प्रजाः आहुः॥ १५॥

**विज.** अग्नेः शक्तिसन्निधानस्वभावमाह - **दुरासद** इति॥ ११॥

वायुसन्निधानफलमाह - **अन्तर्बहिरिति**। अन्तश्चारणैः श्वाससञ्चारैर्बहिश्चारिगूढपुरुषैः प्रेमलम्बनत्वात् देहिनामात्मा। वायुस्तु प्राणरूपेणोदासीन उपरि स्थितोऽधो वर्तमानं सर्वमीक्षते यथा तथाऽयमप्यध्यक्षः सर्वस्मादुपरि वर्तमानावक्षौ यस्येति वा अध्यक्षः। परितो वर्तमानं जानाति तथेति वा॥ १२॥

आत्मद्विषामात्मशत्रूणां सुतमप्यदण्ड्यं[2] न दण्डयति, दण्ड्यं तमात्मजमपि दण्डयति। तत्र निमित्तमाह - धर्मपथे इति। अनेन धर्मराजसन्निधानफलमुक्तं भवति॥ १३॥

परमेष्ठ्यंशसन्निधानफलमाह - **अस्येति**। आमानसाचलात् मानसपर्वतपर्यन्तमन्तरं[3] गोगणै रश्मिगणैः॥ १४॥

चन्द्रगुणसन्निधानफलमाह - **रञ्जयिष्यतीति**। यद्यस्मात् अस्मात्॥ १५॥

**दृढव्रतः सत्यसन्धो ब्रह्मण्यो वृद्धसेवकः।**
**शरण्यः सर्वभूतानां[4] मानदो दीनवत्सलः॥ १६॥**

**मातृभक्तिः परस्त्रीषु पत्न्यामर्ध[5] इवात्मनः।**
**प्रजासु पितृवत् स्निग्धः किङ्करो ब्रह्मवादिनाम्॥ १७॥**

**देहिनामात्मवत् प्रेष्ठः सुहृदानन्दवर्धनः[6]।**
**मुक्तसङ्गप्रसङ्गोऽयं दण्डपाणिरसाधुषु॥ १८॥**

---

1. A, B, T प्रभोः 2. Ma °मथा° 3. A, B, omit अन्तरं 4. M, Ma नामानन्दो 5. M, Ma, Ms पत्न्याः स्मर इवापरः।
6. A, B, G, I, J, T, V °दां नन्दि°

***एष दोग्धा महीं वीरो गां सतीमोजसौषधीः ।**
**समां करिष्यते चेमां धनुष्कोट्या समन्ततः ॥ १९ ॥**

**अयं तु साक्षाद्भगवांस्त्र्यधीशः कूटस्थ आत्मा कलयाऽवतीर्णः ।**
**यस्मिन्नविद्यारचितं निरर्थकं पश्यन्ति नानात्वमपि[1] प्रतीतम् ॥ २० ॥**

**अयं भुवो मण्डलमोदयाद्रेः गोप्तैकवीरो नरदेव[2]नाथः ।**
**आस्थाय जैत्रं रथमात्तचापः [3]पर्यस्यते दक्षिणतो यथाऽर्कः ॥ २१ ॥**

**श्रीध. मातृभक्तिरिति ।** मातरीव भक्तिर्भजनं यस्य । आत्मनो देहस्यार्ध इव पत्न्यां प्रीतिमान् ॥ १६, १७ ॥

**देहिनामिति ।** नन्दिं सुखं वर्धयतीति तथा[4] । मुक्तसङ्गेषु [5]साधुषु प्रकृष्टः सङ्गो यस्य । दण्डपाणिरिवेत्यपराधानुपेक्षणमुच्यते । नादण्ड्यमित्यत्र पक्षपाताभाव उक्तः ॥ १८, १९ ॥

**अयं त्विति ।** [6-]अयं साक्षाद्भगवान् षड्गुणैश्वर्यसम्पन्न एव[-6] । अयंत्विति तुशब्देन निरुपमत्वं दर्शयति । कोऽसावात्मा तमाह । यस्मिन् प्रतीतमपि नानात्वमर्थशून्यं पश्यन्ति ॥ २० ॥

**अयमिति ।** आ उदायाद्रेस्तत्पर्यन्तं गोप्ता गोपयिष्यति तदर्थं पर्यस्यते पर्यटिष्यति प्रदक्षिणीकरिष्यतीत्यर्थः ॥ २१ ॥

**वीर.** दृढव्रतः अप्रतिहतसङ्कल्पः । सङ्कल्पोऽपि तस्य नासमीचीनविषय इत्याह[7] । सत्यसन्धः सत्यं समीचीनं सन्धत्ते सङ्कल्पते इति सत्यसन्धः, ब्रह्मण्यः ब्राह्मणेषु साधुः, वृद्धनां ज्ञानवृद्धानां सेवकः, सर्वभूतानां शरण्यः रक्षकत्वेन विश्वसनीयः, मानदः सम्मानकारः[8] दीनेषु वत्सलः ॥ १६ ॥

परस्त्रीषु परदारेषु मातरीव भक्तिर्भजनं यस्य, आत्मनो देहस्यार्धे इव पत्न्यां वर्तते । प्रजासु पितृवत् स्निग्धः दोषाऽनवेक्षणेन प्रीतिपूर्वकमनुवर्तनशीलः, ब्रह्मवादिनां [9-]ब्रह्मविदां[-9] किङ्करो दासः ॥ १७ ॥

---

* This verse is not found in G, I, J, V. This verse appears in Edn. W as follows - ओजसैष महावीरो दोग्धा गामोषधीस्सतीम् । इमां च स्वधनुःकोट्या समां परिकरिष्यते ॥ १९ ॥ 1. M, Ma, Ms ⁰मिव 2. W लोक 3. W पर्येष्यते 4. V नन्दिवर्धनः । 5. B, J, V, Va omit साधुषु 6--6. A, B, J, Va omit 7. W ⁰हुः 8. A, B, T ⁰करः 9--9. W omits

देहिनामात्मवत् निरतिशयप्रीतिविषयः सुहृदां [1]नन्दिमानन्दं सुखं वर्धयतीति तथा, मुक्तसङ्गेषु वीत[2]रागेषु प्रकृष्टः सङ्गो यस्य, असाधुषु दण्डपाणिरिवेत्यपराधाक्षमोच्यते। नादण्ड्यमित्यत्र पक्षपाताभाव इत्यपौनरुक्त्यम्॥ १८॥

एष महावीरः पृथुः ओजसा बलेन सतीः गां भूमिमोषधीर्दोग्धा भूमेरोषधीर्धोक्ष्यतीत्यर्थः, "अकथितं च" (अष्टा. 1-4-51) इति दुहेः द्विकर्मकत्वात् गामिति द्वितीयानिर्देशः, तथा इमां भूमिं स्वध[3]नुःकोट्या परितः [illegible] करिष्यते॥ १९॥

किं बहुना ? अयं सद्गुणानामाश्रय इति यतोऽसावनन्तकल्याणगुणनिधिर्भगवा[4]नेवावतीर्ण इत्याहुः - **अयं त्विति**। अयं त्वित्यनेन निस्समाभ्यधिकत्वमभिप्रेतं, तत्र हेतुः, साक्षाद्भगवान् भगवच्छब्दप्रवृत्तिनिमित्तभूतज्ञानादिषाड्गुण्यपूर्णहेयगुणराहित्यमुच्यते। कूटस्थ इति निर्विकार इत्यर्थः। त्र्यधीशः त्रिलोकेशः त्रिविधचेतनानामीश इति वा, एवम्भूतो यः परमात्मा स कलया स्वांशेन जीवेनावतीर्ण इत्यर्थः। शरीरभूतपृथ्वाख्यजीवोपलक्षितोऽवतीर्णः, आवेशावतार इत्यर्थः। यद्वा यो भगवान् स आत्मा जीवशरीरकः विशेष्यसन्निधौ गवादिशब्दानां व्यक्तिपर्यन्तत्ववज्जीववाचिनोऽपि आत्मशब्दस्य शरीरिपरमपुरुषपर्यन्तत्वस्याकृतिनयसिद्धत्वात्। कलया इत्थम्भूतलक्षणे तृतीयेयं, स्वापृथक्सिद्धज्ञानादिगुणविशेषणोपलक्षितोऽवतीर्णः। कोऽसावात्मा यच्छरीरकोऽवतीर्ण इत्यत्राह - **यस्मिन्निति**। यस्मिन् जीवे प्रतीतमपि अविद्यारचितं प्रकृतिपरिणामरूपं नानात्वं देवमनुष्यादिभेदं निर्गतम् अर्थाद्वस्तु[5]नः निरर्थकम् अवास्तविकं पश्यन्ति, तत्वदर्शिन इति शेषः। परमार्थतः आत्मनि अविद्यमानं देहात्माभिमानिनामात्मनि प्रतीतमपि नानात्वं देहविलक्षणात्मयाथात्म्यदर्शिनः प्रकृतिपरिणामरूपत्वेन तद्गतमेव पश्यन्तीत्यर्थः। यस्मिन् प्रतीतं नानात्वमित्यनेनात्मनि नानात्वस्य प्रतीतिविषयत्वं, न तु प्रमितिविषयत्वमित्युक्तम्। अनेन जीवे नानात्वमविद्यासम्बन्धकृतं न तु स्वभावतः इत्युक्तं भवति। यद्वा ननु जीवशरीरकः कलयावतीर्णश्चेत् जीवस्याविद्यासम्बन्धादाविद्यका जैवा दोषाः परस्मिन् पुरुषे प्रस[6]जेयुः तत्राहुः - यस्मिन्निति। भगवति प्रतीतमपि जीवशरीरकत्वादिना [7]हेतुना [8-]प्रतीयमानमपि[-8] अविद्याकृतं नानात्वं [9-]देवादिरूपनानात्वं[-9] निरर्थकं पश्यन्ति अर्थात् प्रयोजनान्निर्गतं निरर्थकमकार्यकरं, यद्यपि जीवशरीरकत्वादिना [10]हेतुना प्रतीयते, तथापि जीव इव बालत्वयुवत्वादिकं देवादिदेहसम्बन्धात् प्रतीयमानमपि न वास्तविकं, किन्तु देवादिदेहगत[11]मेव। एवं परस्मिन्नपि पुरुषे जीवसम्बन्धात् प्रतीतमपि जीवगतमेव, न तु परमपुरुषगतम्। न चैवं जीववत् सशरीरत्वादवास्तविकेनापि नानात्वेनार्थप्रसक्तिरिति वाच्यं, जीवस्याप्यनर्थप्रसक्तेः सशरीरत्वप्रयुक्तत्वाभावात् प्रकृतिवश्यत्वाद्यायत्तत्वात्, परमात्मनस्तु मायां स्ववशीकुर्वतः प्रकृतिवश्यत्वकर्मवश्यत्वाद्यभावेनानानर्थाप्रसक्तेः। एतदेवाभिप्रेत्य निरर्थकं पश्यन्तीत्युक्तम्॥ २०॥

---

1. W omits नन्दिम्   2. A, B, T रागिषु   3. W °नुष्को°   4. A, B,T °निहाव°   5. A, B , T °तः   6. A, B, T °ज्जे°   7. T omits
8--8. A, B प्रतीतमपि   9--9. A, B, omit   10. A, B, T omit हेतुना   11. W omits एव

अयं नरदेवनाथः पृथुः आ उदयाद्रेः उदयाद्रिपर्यन्तं भुवो मण्डलं गोप्ता रक्षिष्यति। रक्षणार्थमेकवीरः स्वसमा[1]भ्यधिक-वीरान्तरशून्यः जैत्रं जयशीलं रथमास्थाय अधिष्ठाय आत्तो धृतः चापो धनुर्येन सः अर्क इ[2]व दक्षिणतः प[3]र्येष्यते प्रदक्षिणीकरिष्यतीत्यर्थः ॥ २१ ॥

**विज.** ''सन्धाऽवधौ प्रतिज्ञायाम्'' (वैज.को. 6-2-44) इति यादवः ॥ १६, १७ ॥

आनन्दवर्धनः आनन्दवृद्धिकरः मुक्तसङ्गैः परमहंसैः प्रसङ्गो यस्य स तथा। पूर्वं ध्वनितमर्थं स्पष्टयति - **दण्डपाणिरिति** ॥ १८, १९ ॥

उक्तमिदं सर्वं श्रीनारायणसन्निधानफलमित्यभिप्रेत्याह - **अयं त्विति**। तुशब्द एवार्थे, अस्मिन् पृथौ कलयाऽवतीर्णः सन्निहितः साक्षाद्भगवांस्तु ऋष्याद्यन्यतमो न स्यात्, किन्तु नारायण एव त्विति हेतुगर्भविशेषणद्वयमाह - त्र्यधीश इति। त्रयाणाम् ईशा इन्द्रादयः तेषामप्यधिकत्वेनेशः ''स्यादध्यधिक ईश्वरे'' (वैज.को. 8-7-13) इति यादवः। चेतनाचेतनकूटे तिष्ठतीति कूटस्थः, स्थानदोषत्वेन लेपनमस्य नास्तीत्यत उक्तम् - आत्मेति। गुणपूर्णत्वादात्मा। तर्हि स्थानभेदान्नानात्वमायातमत्रोच्यते - यस्मिन्निति। यल्लोके निरर्थकं तद्यस्मिन् हरौ प्रतीतमविद्यया हरीच्छया रचितं कल्पितं नानात्वामिव यथा पश्यन्ति। एतदुक्तं भवति यल्लोके खपुष्पादिकमविद्यमानं तन्मत्स्यादिभगवद्रूपेषु प्रतीतं नानात्वं यथा मिथ्याभूतं पश्यन्ति योगिनस्त्वथेति। तदुक्तम् - ''यल्लोके निरर्थकं तद्भगवद्रूपेषु प्रतीतनानात्वदृष्टान्तेन पश्यन्ति सन्तः।'' ''मत्स्यरूपादिनानात्वदृष्टिवद्यन्निरर्थकम्'' (पाद्मे) इति। ''एवं धर्मान् पृथक् पश्यन्'' (पाद्मे) इति च। अनेन तद्धर्माणामपि पृथक्त्वदर्शनेन अनर्थ इत्युक्तं भवति ॥ २० ॥

राज्यावधिमाहुरित्याह - **अयमिति**। आ उदायाद्रेः उदयपर्वतपर्यन्तं पर्यस्यते[4] पर्यटति ॥ २१ ॥

**[5]तस्मै नृपालाः किल तत्र तत्र बलिं हरिष्यन्ति सलोकपालाः।**
**[6]मंस्यन्त [7]एषां स्त्रिय आदिराजं चक्रायुधं तद्यश [8]उच्चरन्त्यः ॥ २२ ॥**

**अयं महीं गां दुदुहेऽधिराजः प्रजापतिर्वृत्तिकरः प्रजानाम्।**
**यो लीलयाऽद्रीन् स्वशरा[9]सकोट्या भिन्दन् समां गामकरोद्यथेन्द्रः ॥ २३ ॥**

---

1. A, B, T °मानाभ्य° 2. A, B, T °वत् 3. A, B, T पर्यस्यते 4. A, B °टिष्यति 5. A, B, G, I, J, T, W अ° 6. M, Ma, Ms मंस्यन्ति; V मन्यन्त 7. Ms येषां 8 A, B, G, I, J, T उद्ध° 9. W °ग्य°

**विस्फूर्जयन्नाजगवं धनुः स्वयं यदाचरत् क्ष्मामविषह्यमाजौ[1]।**
**तदा निलिल्युर्दिशि दिश्यसन्तो लाङ्गूलमुद्यम्य यथा मृगेन्द्रः ॥ २४ ॥**

**एषोऽश्वमेधाञ् शतमाजहार सरस्वती प्रादुरभावि[2] यत्र।**
**[3]अहार्षीद्यस्य हयं पुरन्दरः शतक्रतु[4]श्चरमे वर्तमाने ॥ २५ ॥**

**एष स्व सद्मोपवने[5] समेत्य सनत्कुमारं भगवन्तमेकम्।**
**आराध्य भक्त्याऽलभताऽमलं तज्ज्ञानं यतो ब्रह्म परं विदन्ति[6] ॥ २६ ॥**

**तत्र तत्र गिरस्तास्ता इति विश्रुतविक्रमः।**
**श्रोष्यत्यात्माश्रिता गाथाः पृथुः पृथुपराक्रमः ॥ २७ ॥**

**दिशो विजित्या[7]प्रतिरुद्धचक्रः स्वतेजसोत्पाटितलोकशल्यः।**
**सुरा[8]सुरेन्द्रै[9]रनुगीयमान[10]महानुभावो भविता पतिर्भुवः ॥ २८ ॥**

इति श्रीमद्भागवते महापुराणे अष्टादश साहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
चतुर्थस्कन्धे षोडशोऽध्यायः ॥ १६ ॥

**श्रीध. अस्मै** इति। अस्मै तथा प्रदक्षिणं कुर्वते। मंस्यन्ते[11] ज्ञास्यन्ति। तस्य यश उद्धरन्त्य उदाहरन्त्यः कीर्तयन्त्यः ॥ २२।

**अयमिति**। इन्द्र इवाद्रीन् भिन्दन्[12] ॥ २३ ॥

**विस्फूर्जयन्निति**। लाङ्गूलमुद्यम्य[13] उन्नमय्य[14] यथा मृगेन्द्रश्चरति तथा धनुर्विस्फूर्जयन् यदा क्ष्मामचरत् ॥ २४ ॥

**एष इति**। सरस्वती यत्र प्रादुरभावि प्रादुरभूत्[15]। [16-]कर्मकर्तरि चिण्।[-16] तत्राऽहार्षीत् हरणं करिष्यतीत्यर्थः ॥ २५, २६ ॥

**तत्रेति**[17]। विश्रुता विक्रमा[18] यस्य सः। गाथाः [19-]प्रबन्धान् आत्माश्रिता[-19] विष्ण्वाश्रिताः ॥ २७ ॥

---

1. M, Ma, Ms आजौ; W विक्रमः　2. M, Ma, Ms °रभूद्वि　3. A, B, G, J, T अहारषी°; W आहार्षी°　4. W क्रतो°　5. W वनं
6. M, Ma, Ms वदन्ति; V व्रजन्ति　7. W विजेता°　8. M, Ma, एवं सु°　9. A, B, G, I, J, T °रुप°　10. M, Ma, Ms °मानो　11. V मन्यन्त
12. A, B, J, Va विभिन्दन्　13. A, B, J, Va omit उद्यम्य　14. V omits उन्नमय्य　15. V °र्भूता　16--16. V omits　17. V °तो　18. V °मो
19--19. V omits

**दिश इति**। उपगीयमानो [1]महानुभावो यस्य सः ॥ २८॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीश्रीधरस्वामि विरचितायां भावार्थदीपिकायां

व्याख्यायां षोडशोऽध्यायः ॥ १६॥

**वीर.** [2]तस्मै तथा प्रदक्षि[3]णं कुर्वते पृथवे लोकपालैरिन्द्रादिभिः सहिता नृपाला राजानः तत्र तत्र बलिमुपायनं [4-]हरिष्यन्ति समर्पयिष्यन्ति[-4]। एषां [5-]सलोकपालानां नृपाणां[-5] स्त्रियः तस्य पृथोः यशः उच्चरन्त्यः कथयन्त्यः आदिराजं पृथुं चक्रायुधं भगवन्तं मंस्यन्ते ज्ञास्यन्ति॥ २२॥

तद्यशःकथनरूपं स्त्रीणां वाक्यमाहुः - अयमित्यादिभिश्चतुर्भिः। अयमित्यादिकं न सूतादिवाक्यम्। ''एष दोग्धा महावीरो गां सतीम्'' इत्यनेन पौनरुक्त्यापत्तेः। अत एव दुदुहे अकरोत् निलिल्युरिति भूतनिर्देशोपपत्तिः। अयमधिराजः पृथुः प्रजापतिः प्रजापालनाधिकृतः प्रजानां जीवनोपायकरः जीवनोपायं चिकीर्षुरित्यर्थे पर्यवसानं बोध्यम्। गां गोरूपधरां महीं दुदुहे। इन्द्र इव, स्वशराग्र्यकोट्या शरशब्दो [6]धनुः परः धनुः कोट्येति पूर्वमुक्तत्वात् शराग्र्यस्य धनुः श्रेष्ठस्य कोट्या अग्रेण लीलया अद्रीन् भिन्दन् गां भूमिं समामकरोत् करिष्यतीत्यर्थः॥ २३॥

लाङ्गूलं पुच्छमुद्यम्य उन्नमय्य यथा मृगेन्द्रः सिंहः चरति तथा आजगवं धनुः विस्फूर्जयन् शत्रुभिः सोढुमशक्यो विक्रमो यस्य सः, यदा क्ष्मामचरत् तदा असन्तो धर्मविरोधिनो दिशि दिशि निलिल्युः लीना बभूवुः॥ २४॥

एष पृथुः सरस्वती सरस्वत्याख्या महानदी यत्र यस्मिन् ब्रह्मावर्ते प्रादुरभावि प्रादुरभूत्, कर्मकर्तरि चिण्, तत्र देशे शतमश्वमेधान्यजहाराकरोत्। यस्य शतक्रतोः क्रतुशतं सङ्कल्प्यानुतिष्ठतः पृथोश्चरमे शततमे क्रतौ वर्तमाने प्रवर्तमाने सति पुरन्दरः इन्द्रोऽयमश्वमहार्षीत् हृतवान्॥ २५॥

एष पृथुः स्वसद्मनः स्वगृहस्य उप समीपे यद्वनं तत्समेत्य तत्रैकमसहायं भगवन्तं सनत्कुमारं भक्त्या आराध्य तदमलं ज्ञानमलभत। किं तत् यतो ज्ञानात् परं ब्रह्म विदन्ति॥ २६॥

1. V महाननुभावो 2. A, B, T अस्मै 3. A, B, T °णी° 4--4. W हरन्ति समर्पयन्ति 5--5. A, B, T नरलोकपालानां नृणां
6. A, B, T omit धनुःपरः

विश्रुताः विक्रमाः यशांसि यस्य, पृथुः पराक्रमः प्रभावो यस्य सः पृथुः आत्माश्रयाः स्वविषया गाथाः प्रबन्धरूपा तास्ता गिरः इति[1] एवं श्रोष्यति ॥ २७ ॥

स्वतेजसा स्वबलेन उत्पाटिताः निर्मूलिताः लोकानां शल्यसदृशाः दुरात्मानो येन सः, अत एवाप्रतिरुद्धचक्रः अप्रतिहताशः दिशो विजेष्यते। सुरासुरश्रेष्ठैः उपगीयमानः महाननुभावो यस्य सः, भुवः पतिः भविता भविष्यति ॥ २८ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवत चन्द्रचन्द्रिकायां

व्याख्यायां षोडशोऽध्यायः ॥ १६ ॥

**विज.** अन्येषु राजसु सत्सु अस्याधिराज्यं कथमित्याशङ्क्य चक्रवर्तित्वाद्युज्यत इति उच्यते - तस्मा इति ॥ २२ ॥

कीदृशं यश उच्चरन्त्य इत्यत्राह - **अयं महीमिति** ॥ २३ ॥

निलिल्युः निलीनाः, लाङ्गूलं पुच्छम् ॥ २४ ॥

अहार्षीदित्यनेनास्य प्रतिभटः शतमख एव नान्य इति द्योतनाय कथितमिति ज्ञातव्यम्। चरमे अन्त्येऽश्वमेधे वर्तमाने सति ॥ २५ ॥

यतो ज्ञानात्परं ब्रह्म प्रत्यक्षं भवति योगिनः ॥ २६ ॥

तद्भविष्यत्कथा अतीतत्वेन कथं कथ्यते इत्यत्रोच्यते - **तत्रेति**। आत्माश्रिताः स्वविषया याः त्रिभिः षड्भिश्चरणैरुपलक्षिता यशोनिबन्धाः ॥ २७ ॥

अप्रतिरुद्धचक्रोऽप्रतिहताज्ञो भविता भविष्यतीत्युपसंहरते ॥ २८ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्या

टीकायां षोडशोऽध्यायः ॥ १६ ॥

1. A, B, T omit इति एवं

# सप्तदशोऽध्यायः

## मैत्रेय उवाच

एवं स भगवान् वैन्यः ख्यापितो गुणकर्मभिः ।

छन्दयामास तान् कामैः प्रतिपूज्याऽभिनन्द्य च ॥ १ ॥

ब्राह्मण प्रमुखान् वर्णान् भृत्यामात्यपुरोधसः ।

पौराञ्जानपदान् श्रेणीः प्रकृतीः समपूजयत् ॥ २ ॥

## वदुर उवाच

कस्मा द्दधार गोरूपं धरणी[1] बहुरूपिणी ।

यां दुदोह पृथु स्तत्र को वत्सो दोहनं च किम् ॥ 3 ॥

प्रकृत्या विषमा देवी कृता तेन समा कथम् ।

तस्य मेध्यं हयं देवः कस्य हेतो रपाहरत् ॥ ४ ॥

सनत्कुमारा द्भगवन्[2] ब्रह्मन् ब्रह्मविदुत्तमात् ।

लब्ध्वा ज्ञानं सविज्ञानं राजर्षिः कां गतिं गतः ॥ ५ ॥

## श्री श्रीधरस्वामिविरचिता भावार्थदीपिका

ततः सप्तदशे लोकक्षुधा[3] प्रशमयन् पृथुः । ग्रस्तबीजां महीं हन्तुं यत्तो भीत्या तया स्तुतः ।

एवमिति । छन्दयामास तोषितवान् ॥ १ ॥

ब्राह्मण इति । भृत्या नमात्यान् पुरोधसः पुरोहितांश्च श्रेणीः तैलिकताम्बूलिकादीन् पौरविशेषान् प्रकृती र्नियोगिनः ॥ २ ॥

कस्मादिति । दोहनं पात्रम् ॥ 3 ॥

प्रकृत्येति । मेध्यं यज्ञार्हम् ॥ ४ ॥

---

1. A, B, G, I, J, M, Ma, Ms, T धरित्री 2. A, B, G, I, J, M, Ma, Ms, T, V °वतो 3. V लोके क्षुधः

**सनत्कुमारादिति** । सविज्ञान मपरोक्षज्ञानसहितम् ॥ ५ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं सूतादिभिः प्रख्यापितोरुगुणगणः पृथुः प्रतिपूजित सूत ब्राह्मण भृत्यामात्यादिगणः[1] क्षुत्पीडितजनैः प्राप्तशरणः आत्मनि रुद्धबीजां महीं जिघांसुः पुन स्तया प्रसादितो बभूवेत्याह मुनिष्षोडशेन - **एवमिति** । भगवान् वैन्यः पृथुः एवं गुणैः कर्मभिश्चात्मीयैः ख्यापितः प्रसिद्धिं प्रापितः तान् सूतादीन् कामैः तत्तदिच्छाविषयैः वस्त्राभरणादिभिः प्रतिपूज्य तेषां स्तुति मभिनन्द्य च छन्दयामास तोषितवान् ॥ १ ॥

ब्राह्मणादीन् चतुरो वर्णान् भृत्या न मत्यान् पुरो-धसः पुरोहितान् श्रेणीः तैलिकताम्बूलिकादीन् पौरान् पुरवासिनः जानपदान् देशवासिनो जनान् प्रकृतीः नियोगिनः[2] सम्यगपूजयत् ॥ २ ॥

एवं सूतादिस्तुतिकथनव्याजेन समासतश्श्रावित पृथुचरितं मुनिं पुन स्तच्चरित विस्तर[3] शुश्रूषया क्षत्ता पृच्छति इत्याह[4] - **विदुर** इति । बहुरूपिणी कामरूपिणी धरित्री[5] कस्माद्धेतोः गोरूपं दधार ? यां धरित्रीं पृथु र्दुदोह; तत्र वत्सः कः ? दोहनं दोहनसाधनं पात्रम् ॥ ३ ॥

प्रकृत्या स्वभावेन विषमा पर्वतादिभि र्निम्नोन्नता । देवी धरित्री कथं समा[6] कृता ? तस्य[7] पृथोः मेध्यं यज्ञार्हं हय मश्वं देवः इन्द्रः कस्मा द्धेतोः अपाहरत् ? ॥ ४ ॥

हे भगवन् ! मैत्रेय ! ब्रह्मविदां मध्ये उत्तमात् सनत्कुमारात् ब्रह्मविषयं सविज्ञानं उपासनात्मकज्ञानसहितं, ज्ञानं श्रवणजन्यं ज्ञानं लब्ध्वा राजर्षिः पृथुः कां गतिं गतः प्राप्तः ॥ ५ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अस्मिन्नध्याये सूतादिभिः श्रीहरिमहिमोपनिबद्धत्वेन पृथो र्महिम्न उक्तत्वात् तन्माहात्म्य मेवोच्यते । तत्रादौ सूतादितृप्ति करण प्रकार माह - **एवं भगवानित्यादिना** । छन्दयामास तोषयामास ॥ १ ॥

"राज्ञा समानवयसः श्रेणय स्त्वङ्गरक्षका" इत्यभिधानात् श्रेणयोऽङ्गरक्षकाः ॥ २ ॥

---

1. A, T °त्यगणः 2. B, W निजयो° 3. A,B,T omit विस्तर 4. W omits इत्याह 5. A,B,T omit धरित्री 6. A,B,T °मीकृ° 7. A,B,T omit तस्य

विदुरः सूतादिभिः सूचितं गोदोहनादि पृथुविक्रमं विस्तरतः श्रोतुं लोकोपकाराय पृच्छति - **कस्मादिति**। दोहनं पात्रद्रव्यम् ॥ ३-५ ॥

**यच्चाऽन्यदपि कृष्णस्य ब्रह्मन्[1] भगवतः प्रभोः।**

**श्रवः सुश्रवसः पुण्यं पूर्वदेहकथाश्रयम् ॥ ६ ॥**

**भक्ताय मेऽनुरक्ताय तव चाऽधोक्षजस्य च।**

**वक्तु मर्हसि योऽदुह्य द्वैन्यरूपेण गा मिमाम् ॥ ७ ॥**

**सूत[2] उवाच**

**चोदितो विदुरेणैवं वासुदेवकथां प्रति।**

**प्रशस्य तं प्रीतमना मैत्रेयः प्रत्यभाषत ॥ ८ ॥**

**मैत्रेय उवाच**

**यदा[3]ऽभिषिक्तः पृथु रङ्ग विप्रै रामन्त्रितो जनतायाश्च पालः।**

**प्रजा निरन्ने क्षितिपृष्ठ एत्य क्षुत्क्षामदेहाः पति मभ्य[4]वोचन् ॥ ९ ॥**

**[5-]प्रजा ऊचुः[-5]**

**वयं राजन्! जाठरेणाभितप्ता यथाऽग्निना कोटरस्थेन वृक्षाः[6]।**

**त्वामद्य याताः शरणं शरण्यं यस्सा[7]धितो वृत्तिकरः पतिर्नः ॥ १० ॥**

**श्रीध. यच्चेति**। पूर्वदेवः पृथ्ववतारः तत्कथाश्रयम्। श्रवो यशः, सुष्ठु शोभनं[8] श्रवो यस्य ॥ ६ ॥

**भक्तायेति**। अदुह्यत् दुग्धवान् ॥ ७-८ ॥

**यदेति**। जनताया स्त्वं पाल इत्यामन्त्रितो नियुक्तः तदा निरन्ने क्षितितले सति क्षुधा क्षामाः क्षीणा देहा यासां ताः प्रजा एत्य पतिं पृथु मब्रुवन् ॥ ९ ॥

---

1. A, B, G, I. J, T भवान्; W भगवन् 2. M, Ma श्रीशुकः ; Ms श्रीबादरायणिः 3. Ms यथाऽ 4. V ०न्व० 5--5. A, B, G, I, J, T, V omit 6. M, Ma वृक्षः 7. M, Ma, Ms ०श्शाधि नो 8. A, B, J, V omit शोभनं

**प्रजा** इति। जाठरेणाऽग्निनाऽभितप्ताः यः साधितो विप्रै र्मन्थनेन[1] सम्पादितः तं त्वां शरणं याताः ॥ १० ॥

**वीर.** सुश्रवसः शोभनकीर्तेः प्रभोः भगवतः कृष्णस्य। यः पूर्वदेहः प्रथमोऽवतारः पृथुः तस्य या कथा तदाश्रयं तत्प्रतिपाद्यं पुण्यं श्रृण्वतां पुण्यसम्पादकं श्रवो यशः, यच्चाऽन्यदपृष्ट मपि तत्सर्वम् ॥ ६ ॥

तव अधोक्षजस्य च भक्ताय अनुरक्ताय मे मह्यं वक्तु मर्हसि। कोऽसावधोक्षजो यस्य भक्ताये त्युक्तं - तत्राऽह - योऽधोक्षजो वैन्यरूपेण पृथुरूपेणाऽवतीर्णः इमां गां पृथ्वीम् अदुह्यत् दुग्धवान् ॥ ७ ॥

एव मापृष्टो मुनि र्विस्तरेण पृथुचरितं वक्तु मुपचक्रमे इत्याह सूतः **चोदित** इति। अस्य शुकवचनत्वं तु न्याय्यम्। विदुरेणैवं वासुदेवस्य पृथोः कथां प्रति चोदितो मैत्रेयः प्रीतमना स्सन् तं विदुरं प्रशस्य प्रस्तूय प्रत्यभाषत[2] ॥ ८ ॥

अङ्ग ! हे विदुर ! विप्रै र्यदा पृथुरभिषिक्तः जनतायाः जनसमूहस्य "ग्रामजनबन्धुभ्य स्तल्" (अष्टा. 4-2-43) इति समूहार्थे तल् प्रत्ययः। पाल इत्यामन्त्रितो नियुक्तश्च तदा क्षितिपृष्ठे भूमण्डले निरन्ने अन्नरहिते सति क्षुधा क्षामाः क्षीणाः देहाः यासां ताः प्रजाः एत्यसमीप [3-]मागत्य पतिं[-3] पृथु मब्रुवन् ॥ ९ ॥

हे राजन् ! यथा कोटरगतेन वह्निना वृक्षा अभित स्तप्ता भवन्ति तथा वयं[4] जाठरेणाऽग्निना अभितप्ता स्सन्तः यो भवान् नोऽस्माकं वृत्तिकरः पतिः, विप्रैः साधितो मथनेन सम्पादितः तं शरण्यं त्वा मधुना शरणं याताः गताः ॥ १० ॥

**विज.** पूर्वदेहाः पुरातना स्तेषां कथाश्रयं सत्कथासम्बन्धं सुश्रवसो हरेः श्रवो यशः ॥ ६ ॥

योऽदुह्यदिति सर्वप्राणिनां तच्छक्तिनियतत्वात् पुन र्वचन मादौ वक्तव्यार्थम् ॥ ७ ॥

तत्र शुकोऽपि कथाप्रसङ्गं सन्दधातीत्याह - **चोदित** इति। त्वयाऽहं यथा चोदितः एवं विदुरेणेति ॥ ८ ॥

तत्र पूर्वोत्तर कथाविच्छेदपरिहारायादित एव मैत्रेयो वक्ती त्याह - **यदेति**। क्षितिपृष्ठे भूगोलके निरन्ने भोजनपदार्थरहिते सति ॥ ९ ॥

निरन्न इत्यनेन दुःखनिमित्तमिति ज्ञातं[5], तत्कीदृशमत्राह - **वय मिति**। जाठरेण जठरसम्बन्धिनाऽग्निना कोटरं वृक्षविवरं

---

1. V ०थ० 2. A, B, T अभाषत 3--3. W omits 4. A, B, T omit वयं 5. Ma omits ज्ञानं

युष्माक मीदृशाग्निपरिहाराय अन्यशरणप्राप्तिः किं न स्यादत्राह - यस्साधीति। यस्त्वं नोऽस्माकं वृत्तिकरः पतिः यस्मा त्तस्मा न्नोऽस्मान् शाधि अनुशिक्षस्व - इयं बुद्धिरिति॥ १०॥

**तन्नो[1] भवानीहतु[2] रातवेऽन्नं क्षुधाऽर्दितानां नरदेवदेव।**
**यावन्ननङ्क्ष्यामह उज्झितोर्जा[3] वार्तापति स्त्वं किल लोकपालः॥ ११॥**

**मैत्रेय उवाच**

**पृथुः प्रजानां करुणं निशम्य परिदेवितम्।**
**दीर्घं दध्यौ कुरुश्रेष्ठ निमित्तं सोऽन्वपद्यत॥ १२॥**

**इति व्यवसितो बुद्ध्या प्रगृहीतशरासनः।**
**सन्दधे विशिखं भूमेः[4] क्रुद्ध स्त्रिपुरहा यथा॥ १३॥**

**प्रवेपमाना धरणी निशाम्यो[5]दायुधं च[6] तम्।**
**गौः सत्यपाद्रवद्भीता मृगीव मृगयुद्रुता[7]॥ १४॥**

**ता[8] मन्वधाव त्तद्वैन्यः कुपितोऽत्यरुणेक्षणः।**
**शरं धनुषि सन्धाय यत्र यत्र पलायते[9]॥ १५॥**

**श्रीध. तदिति।** तत् तस्मात् नोऽस्माक मन्नं रातवे रातुं दातुं ईहतु ईहताम् यत्नं करोतु। उज्झितोर्जाः त्यक्तान्नाः सत्यः वार्ताया जीविकायाः पतिः॥ ११॥

**पृथुरिति।** परिदेवितं विलापम्। निमित्तं हेतु मन्वपद्यत ज्ञातवान्॥ १२॥

**इतीति।** पृथिव्या ओषधि बीजानि ग्रस्तानीति व्यवसितो निश्चितवान् सन्॥ १३॥

**प्रवेपमाना इति।** मृगयुना द्रुताऽनुगता मृगीव॥ १४-१५॥

1. M, Ma °नर्हति 2. W दा° 3. M, Ma °तान्ना° 4. M, Ma, Ms भूमौ 5. M, Ma °श° 6. Ms, V पृथुम्। 7. M, Ma °यो र्द्रुतम्।
8. M, Ma तामेवा न्व व्रजद्वैन्यः ; Ms, V तामेवाऽन्वद्रवद्वैन्यः 9. M, Ma °ति

**वीर.** तस्मात् हे नरदेव उज्झितोर्जाः त्यक्तान्ना वयं यावत् न नङ्क्ष्यामहे न नाशं यास्यामः तावदेव क्षुधा अर्दितानां पीडितानां[1] नोऽस्माकम् अन्नं दातवे[2] दातुं भवानीहतु यत्नं करोतु; यतः त्वं वार्तायाः जीविकायाः पतिः रक्षिता लोकानां पालकश्च ॥ ११ ॥

प्रजानां करुणं परिदेवितं विलापं निशम्य श्रुत्वा पृथुः दीर्घं चिरं दध्यौ चिन्तितवान्। हे कुरुश्रेष्ठ ! स पृथुः निमित्तं लोकस्य निरन्नत्वे निमित्तं हेतुं अन्वपद्यत ज्ञातवान् ॥ १२ ॥

**इतीति**। पृथिव्या ओषधिबीजानि ग्रस्तानीति व्यवसितः निश्चिन्वानः प्रगृहीतं शरासनं धनुर्येन सः, यथा त्रिपुरहन्ता रुद्रः तथा भूमेः हेतोः क्रुद्धः विशिखं बाणं सन्दधे ॥ १३ ॥

उदायुधं शरासने संहितशरं पृथुं निशाम्य[3] दृष्ट्वा धरणी प्रवेपमाना नितरां भयात्कम्पमाना गौ स्सती गोरूपं धृतवती मृगयुना व्याधेन[4] द्रुता अनुद्रुता भीता मृगीव हरिणीव अपाद्रवत् पलायितवती ॥ १४ ॥

[5-]वैन्यः पृथुः कुपितः कोपयुक्तः अत एव अति नितरां अरुणे ईक्षणे यस्य सः, धनुषि बाणं सन्धाय यत्र यत्र सा पलायते पलायितवती[-5] तत्र तत्र तामेव धृतगोरूपां धरणी मनुसृत्य गतवान् ॥ १५ ॥

**विज.** वृत्तिकर इत्यनेन ज्ञाताभिप्रायस्याऽपि राज्ञः स्वाभिप्राय मुद्गलयन्तीत्याह - **तन्न** इति। रातवे मरणाय उज्झितान्ना स्त्यक्तान्नाः पूर्व मेवेति शेषः। वार्तापतिः जनाना मन्नं दत्वा रक्षक इत्यर्थः ॥ ११ ॥

राज्ञो राजधनमदोत्सिक्तत्वसम्भवेन किमुत्तरं कार्य मभूदत्राह - पृथुरिति। करुणं दयाजनकं निमित्त मन्नाभावस्य कारण मन्वपद्यत ज्ञातवान् ॥ १२ ॥

ज्ञात्वाऽप्यशक्य मिति मत्वा साधयिष्याम इति गुडजिह्विकावाणी मुक्त्वा किं कार्यान्तरे तेनाऽस्थायीति तत्राह - **इतीति**। विशिखं शरं त्रिपुरहा हरः ॥ १३ ॥

तत्र भूम्या किमकारीति तत्राऽऽह - **प्रवेपमानेति**। वेपृ कम्पन इति धातुः। गौ स्सती गोरूपा मृगयो र्व्याधात् ॥ १४ ॥

अत्र पृथुना पलायन्त्याः स्त्रियाः किमिति निवृत्तं किं नेत्याह - **तामेवेति**। अन्वव्रजत् पृष्ठतो गतोऽभूत्। सारङ्ग इव कार्यसारग्राहित्वात् पृष्ठतोऽयासीदेव न बाणं मुक्त्वाऽवधीदि त्याशयेनाऽऽह - शरमिति ॥ १५ ॥

---

1. A, B, T omit पीडितानां 2. A, B, T रा° 3. A, B °श° 4. A, B, T ad क्रुद्धेन 5--5. A, B, T omit

**सा दिशो विदिशो देवी रोदसी चान्तरं तयोः ।**
**[1]धावन्ती तत्र तत्रैनं ददर्शानूद्यतायुधम् ॥ १६ ॥**

**लोके नाविन्दत त्राणं वैन्या न्मृत्यो रिव प्रजाः ।**
**त्रस्ता तदा निववृते हृदयेन विदूयता ॥ १७ ॥**

**[2]भूमिः**

**[3]उवाच च महाभाग [4]धर्मज्ञापन्नवत्सल ।**
**त्राहि मा[5]मपि भूतानां पालनेऽवस्थितो भवान् ॥ १८ ॥**

**स त्वं जिघांससे कस्मा द्दीना मकृत [6]किल्बिषाम् ।**
**अहनिष्य त्कथं योषां धर्मज्ञ इति यो मतः ॥ १९ ॥**

**प्रहरन्ति न वै स्त्रीषु कृतागस्स्वपि जन्तवः ।**
**किमुत त्वद्विधा राजन् ! करुणा दीनवत्सलाः ॥ २० ॥**

[7-]**श्रीध. सेति** । रोदसी द्यावापृथिव्यौ तयो रन्तरं अन्तरिक्षं च अनु पृष्ठतः उद्यत मायुधं येन तम् ॥ १६, १७, १८ ॥

**स इति** । यो धर्मज्ञ इति मतः, स भवान् योषां मां कथ महनिष्य द्धनिष्यति ॥ १९-२० ॥

**वीर.** सा देवी धरित्री दिशो विदिशः रोदसी द्यावापृथिव्यौ तयोः अन्तर मन्तरिक्षं च [8]धावती सती तत्र [9]तत्र दिग्विदिगादिषु एनं पृथुं अनु [10]पृष्ठतः उद्यत मुद्धृत मायुधं येन तं ददर्श ॥ १६ ॥

मृत्योः भीताः प्रजा इव वैन्यात् पृथो स्त्रस्ता सती त्राणं रक्षणोपायं लोके न अविन्दत नालभत । किन्तु तदा विदूयता नितरां उपतप्तेन हृदयेन निववृते न्यवर्तत ॥ १७ ॥

उवाच च [11]उक्ति मेवाह, हे महाभाग महाबुद्धिमन् ! परेङ्गितज्ञेत्यर्थः । धर्मज्ञ ! [12]स्त्रीणां वधानर्हत्वरूपधर्मज्ञ ! आपन्न वत्सल ! आपन्नेषु आपदं प्राप्तेषु [13]वात्सल्यविशिष्ट ! भूतानां पालने अवस्थितो भवान् । अतो भूतेष्वन्तर्भूतां मामपि त्राहि ॥ १८ ॥

1. B, M, Ma धावती 2. A, B, G, I, J, M, Ma, V, T omit भूमिः 3. M, Ma °चाऽथ 4. A, B, G, I, J, M, Ma, T °गं 5. V °मभि° 6. V कल्मषाम् ।
7--7. B, Va omit 8. A, T धावन्ती 9. A, T omit तत्र 10. A, B, T °प्रविष्टं 11. A, B, T °क्त° 12. A, B, T स्त्रीवधा° 13. A, B, T वत्सलत्व

स त्वं भूतपालनाधिकृत स्त्वं अकृतकिल्बिषां निरपराधां दीनां मां कथं जिघांससे[1] हन्तु मिच्छसि अनेन स्वस्याऽवध्यत्वमुक्तम्। हन्तृत्वं तवाऽनुचित मित्याह - अहनिष्यदिति। अतो न पौनरुक्त्यम्। धर्मज्ञ इति मतः ज्ञातो यो भवान् योषां मां कथ महनिष्यत् हनिष्यति॥ १९॥

हे राजन्! सामान्यजना अपि कृतागस्स्वपि कृतापराधास्वपि स्त्रीषु न वै प्रहरन्ति; किमुत दीनवत्सलाः करुणाः त्वादृशाः न प्रहरन्तीति॥ २०॥

**विज.** राजरूपिणो हरेः सन्निधानविशेषवित्त्वात् उत्तरकार्यस्याऽपि स्वाभिप्रेतत्वात् नेन्द्राद्यन्यतमोऽपि तामत्रायते त्याह - **लोकेनेति**। वैन्या दन्यस्मात् "जीवन् भद्राणि पश्यति" (भार. 3-240-36) इति बुद्ध्वैव[2] हरेः सर्वप्राणि प्रेरकत्वेन तच्छक्तिनियतत्वाच्च भूमे रावृत्ति माह - त्रस्तेति॥ १६-१७॥

अत्र वचन मेवानुसर्तव्यं नाऽन्यदिति भाववती वक्ति - **उवाचेति**॥ १८॥

रक्षायां नियुक्तस्य तवाऽपराधम् अन्तरेणाभिहननं न युक्त मित्याह - **स त्वमिति**। एव मपि मां हनिष्यसि चेत् तव धर्मज्ञत्वं अपहसितं स्यादित्याशयेनाह - अहनिष्यदिति। यो भवान् धर्मज्ञ इति मतोऽभविष्य त्तर्हि कथं योषां मा महनिष्य दित्यन्वयः॥ १९॥

बालिशा अपि जन्तवः स्त्रीवधं न कुर्वन्ति, किं पुन र्भवादृशा इत्याह - प्रहरन्तीति॥ २०॥

**मां विपाट्याऽजरां[3] नावं यत्र विश्वं प्रतिष्ठितम्।**
**आत्मानं च प्रजा श्चेमाः कथ मम्भसि धास्यसि॥ २१॥**

**पृथुरुवाच**

**वसुधे त्वां वधिष्यामि मच्छासनपराङ्मुखीम्।**
**भागं बर्हिषि या वृङ्क्ते न तनोषि[4] च नो[5] वसु॥ २२॥**

**यवसं जग्ध्यनुदिनं नैव दोग्ध्यौधसं पयः।**
**तस्या मेवं हि दुष्टायां दण्डो[6] नाऽत्र न शस्यते॥ २३॥**

1. A, B, T °सि 2. A, B, बुद्ध्यैव 3. M, Ma, Ms निहत्याऽ° 4. A, B, G, I, J, T °ति 5. V या 6. W दण्डोऽन्यत्र

**त्वं खल्वोषधिबीजानि[1] प्राक् सृष्टानि स्वयम्भुवा।**

**न मुञ्चस्यात्मरुद्धानि मामवज्ञाय मन्दधीः ॥ २४॥**

**अमूषां क्षुत्परीताना मार्तानां परिदेवितम्।**

**शमयिष्यामि मद्बाणै र्भिन्नाया स्तव मेदसा॥ २५॥**

**श्रीद. मामिति।** अजरां दृढां [2-]नावं विपाट्य कथ म[-2]म्भसि धास्यसि धारयिष्यसि॥ २१॥

**वसुधे इति।** बर्हिषि यज्ञे या भवती देवतारूपेण भागं वृङ्क्ते भजते। वसु धान्यादिकम्॥ २२॥

**यवसमिति।** गोरूपेण तु यवसं तृणं जग्धि अत्तीत्यर्थः। [3-]औधसं ऊ[-3]धस्सम्बन्धि पय स्तु नैव दोग्धि दुग्धं न प्र[4]स्रवति। अत्र अस्मिन्नपराधे॥ २३॥

**त्वमिति।** आत्मनि देहे रुद्धानि॥ २४॥

मद्वधे सर्वथा अन्नं न स्यादिति चेदत आह - अमूषां प्रजानां मेदसा मांसेन॥ २५॥

**वीर.** किञ्च यत्र मयि विश्वं जगत् प्रतिष्ठितं तां अजरां दृढां नावं नौरूपां[5] विपाट्य विभिद्य आत्मानम् इमाः प्रजा श्चाम्भसि कथं धास्यसि धारयिष्यसि॥ २१॥

एव मुक्तो धरित्र्या पृथुः तदुक्तीः प्रतिवक्ष्यन्नाह - **वसुध इति।** यत्त्वयोक्तं "स त्वं जिघांससे कस्मा द्दीना मकृतकिल्बिषाम्" (भाग. 4-17-19) इति तत्रेत्याह त्रिभिः; हे वसुधे! मच्छासन पराङ्मुखीं मदाज्ञातिवर्तिनीं त्वां वधिष्यामि; राज्ञो ममाज्ञातिलङ्घन मेवाऽयं[6] भवत्याः प्रथमोऽपराध इति भावः। किञ्च या भवती बर्हिषि यज्ञे भागं वृङ्क्ते देवतारूपेण भागं भजते या च त्वं वसु धान्यादिकं न तनोषि न ददासि; उपकारानभिज्ञाया स्तवाऽयं द्वितीयोऽपराधः इति भावः॥ २२॥

ननु सापराधाया अपि गोरूपायाः मम वधोऽनुचितः तत्राऽह - **यवसमिति।** या गौः अनुदिनं यवसं तृण मेव परं[7] जग्धि अत्ति, अथ पय स्तु नैव सन्दोग्धि न प्रपूरयति, तस्यां दुष्टायां गवि दण्ड एव उचितः, अन्यत्र अदुष्टायां गवि दण्डो न प्रशस्यत इत्ययं धर्मो दृश्यत इति भावः॥ २३॥

---

1. M, Ma, V °ल्वौ° 2--2. B, J, Va omit; A विपाट्य हत्वा 3--3. B, J, V, Va omit 4. A, B, J, Va omit प्र 5. A, B, T नावरूपां
6. A, B, T °ऽद्यं 7. A, B, T omit परं

स्वयम्भुवा ब्रह्मणा भूतानां जीवनार्थत्वे प्राक्कल्पादौ सृष्टानि ओषधिबीजानि आत्मनि स्वस्यां रुद्धानि आत्मनि ग्रस्तानीत्यर्थः। मां भूतपालनाधिकृत मवज्ञाय पराभूय अत एव मन्दधीः त्वं न मुञ्चसि; अतस्त्वद्वध उचित एवेति भावः ॥ २४ ॥

तर्हि किं मद्वधसाध्यं ? प्रत्युत मद्वधे अन्नं न स्यात्तत्राह - **अमूषा** मिति। क्षुत्परीतानां क्षुधा परितो व्याप्तानां अत एव आर्तानां अमूषां प्रजानां परिदेवितं दुःखं मद्बाणै र्भिन्नायाः तव मेदसा मांसेन शमयिष्यामि ॥ २५ ॥

**विज.** न केवल मदृष्टहानिः, अपि तु दृष्टहानि रपि स्यादित्याह - **मां निहत्येति**। अजरां नूतना मिव स्थितां धास्यसि धारयिष्यसि ॥ २१ ॥

स्वोक्तकारित्वकरणाय पृथु र्भीतिकरं वाक्यं वक्ति **वसुध** इति। ननु वधयोग्यापराधः क इति तत्राह - **मच्छासनेति**। अनेन तव पत्यु र्मम स्त्रीवधो न दोषाय, भर्तृशासनातिक्रम एवापराधित्वा दिति ध्वनितम्। किं तत् त्वच्छासनातिलङ्घनं येन अपराधिनी स्यामत्राह - **भागमिति**। या भवती बर्हिषि यज्ञे "भूः स्वाहेति" हुतं हविर्भागं वृङ्क्ते वृणोति, सा त्वं वसु धनं योग्यं न तनोषि परिपाकेन न प्रपञ्चयसी त्यन्वयः ॥ २२ ॥

एतदेव विशिनष्टि - **यवस** मिति। हविराख्यं यवसं पयश्शब्दस्य जलेऽपि वृत्ते रित्यत आह - **औधस** मिति। गोरूपत्वादेव मुक्तिः। मत्पालिताभ्यः प्रजाभ्यः या पयो न दोग्धि तस्या मेवं दुष्टाया मत्र भवत्यां दण्डो न शस्यत इति न हि; शस्यत एवेत्यर्थः ॥ २३ ॥

आत्मनि असत्त्वात् न मुञ्चामीति ने त्याह - **त्वं खलु** इति। त्वदधिकरणत्वेन प्रजाजीवनार्थत्वेन विरिञ्चिसृष्टौषध्यदाने चौर्याख्य दोषोऽपि तव स्यादित्यर्थः। आत्मनि सत्त्वात् न दास्यामीति दुराग्रहबुद्धि रवज्ञेति ॥ २४ ॥

मद्वध स्तव कोपनिवारणावसायी, न तु शरणागत प्रजारक्षणोपायसिद्धि रिति तत्राह - **अमूषा** मिति। अमूषां शरणागतानाम्। मेदसा मांसविशेषेण ॥ २५ ॥

**पुमान् योषि दुत क्लीब आत्मसम्भावितोऽधमः[2]।**
**भूतेषु निरनुक्रोशो नृपाणां तद्वधोऽवधः[3] ॥ २६ ॥**

**त्वां स्तब्धां दुर्मदां नीत्वा मायागां तिलशः शरैः।**
**आत्मयोग बलेनेमा[4] धारयिष्याम्यहं प्रजाः ॥ २७ ॥**

---

1. A, B, T °दित्यत्राह 2. A, B,G,T,I,T,J,M,Ma,Ms,T °वनोऽ 3. M,Ma,Ms वरः 4. W °नैव

**एवं मन्युमयीं मूर्तिं कृतान्त मिव बिभ्रतम्।**

**प्रणता प्राञ्जलिः प्राह मही सञ्जातवेपथुः ॥ २८ ॥**

**धरो[1] वाच**

**नमः परस्मै पुरुषाय मायया विन्यस्तनानातनवे गुणात्मने।**

**नमः स्वरूपानुभवेन निर्धुत[2]द्रव्यक्रियाकारक विभ्रमोर्मये ॥ २९ ॥**

**येनाऽह [3-]मात्मायतनं[-3] विनिर्मिता धात्रा यतोऽयं गुणसर्गसंग्रहः।**

**स एव मां हन्तु मुदायुधः स्वराडुपस्थितोऽन्यं शरणं क माश्रये ॥ ३० ॥**

**श्रीध.** यदुक्तं योषां कथं हनिष्यती[4]ति तत्राह - **पुमानिति**। तस्य वधः अवध एव ॥ २६ ॥

यच्चोक्तं कथ मम्भसि धास्यसीति तत्राह - **त्वामिति**। तिलश स्तिलप्रमाणानि खण्डानीत्येवं भूतामवस्थां नीत्वा ॥ २७ ॥

**एवमिति**। मन्युमयीं मूर्तिं [5-]बिभ्रतमिति[-5] कृतान्ततुल्यत्व मुच्यते, न तु कृतान्तस्य मन्युमयी मूर्ति रिति ॥ २८ ॥

शुद्धसत्त्वतनुं देव मकस्मा दतिदारुणम्। वीक्षमाणा पृथुं पृथ्वी तुष्टाव करुणोक्तिभिः। (श्लोकोऽयं श्रीधरीयः) **नम** इति। मायया विन्यस्ताः विरचिताः नानाघोरादितनवो येन तस्मै गुणात्मने गुणमयत्वेन प्रतीयमानाय। वस्तुतस्तु निर्धुताः [6]मायया निरस्ताः द्रव्यक्रियाकारकेषु अधिभूताध्यात्माधि[7]देवेषु विभ्रमः अहङ्कारः तन्निमित्ता ऊर्मयो रागद्वेषादयश्च यस्मिन् तस्मै ॥ २९ ॥

अहो सर्वजीवाश्रयत्वेन सृष्टां मां कथं हन्तुं प्रवर्तते इत्याह - **येनेति**। येन[8] विधात्रा आत्मनां जीवानां आयतन महं विनिर्मिता यतः यस्यां मयि गुणसर्गस्य चतुर्विधभूतग्रामस्य सङ्ग्रहः धारणम् [9-]स एव[-9] स्वराट् स्वतन्त्रः ॥ ३० ॥

**वीर.** यदप्युक्तम् - "अहनिष्यत्कथं योषां धर्मज्ञ इति यो मतः" (भाग. 4-17-19) इति तत्राह - **पुमानिति**। पुमान् योषिद्वा क्लीबः नपुंसको वा आत्मसम्भावितः आत्मनैव सम्भावितः न तु परैः। अत एव अधमः भूतेषु निरनुक्रोशः निष्कृपः स्यात्। तर्हि पुमादिविभाग मनादृत्य तद्वध एव नृपाणा मुचित इत्यर्थः ॥ २६ ॥

यदप्युक्तं - "मां विपाट्य" (भाग. 4-17-21) इत्यदिना तत्राह - **त्वामिति**। मायागां माया[10]धृतगोरूपां तथा दुर्मदां

---

1. J पृथिव्युवाच; M,Ma धरण्युवाच; Ms भूमिः; V मह्युवाच; W omits धरोवाच 2. T °र्धू° 3--3. M, Ma, Ms °मात्मीयतनुर्वि° 4. V °सीति 5--5. A, B, J, Va बिभ्रतः 6. A, B, J, Va omit मायया 7. A, B, J, V °दै° 8. V omits येन 9--9. B, J, V, Va omit स एव 10. A, B, T मायया

मदभावे कथ मम्भसि प्रजा धास्यती त्येवंरूपदुर्मदविशिष्टां त्वां शरै र्मद्बाणैः तिलशः तिलप्रमाणानि खण्डानि इत्येवम्भूता मवस्थां नीत्वा प्रापय्य आत्मनो मम योगबलेन योगसामर्थ्येनैव अहं प्रजा आत्मानं च धारयिष्यामि ॥ २७॥

एवं मन्युमयीं [1]क्रोधप्रचुरां मूर्तिं विग्रहं बिभ्रतं कृतान्त मिव स्थितं पृथु मित्यर्थः, न तु कृतान्तवत् मन्युमयीं मूर्तिं बिभ्रत मिति। कृतान्तस्य तदभावात्। प्रणता प्रह्वीभूता, मही धरित्री सञ्जातकम्पा प्राञ्जलिः प्राह ॥ २८॥

पृथुनैवं प्रत्युक्ता पृथ्वी साक्षाद्भगवदवतारभूतोऽयं पृथुः सर्वज्ञः सर्वशक्तिः न मया वञ्चयितुं शक्य इत्यालोच्य [2]स्वतः ओषधि बीजनिर्गमोपायम् [3-]उपदिदिक्षन्ती[-3] क्रोधा दयं स्वोपदिष्टोपायं मा ग्रहीदित्याशङ्क्य तावत् [4]तत्क्रोधोपशमनाय आत्मनो दैन्यं आकिञ्चन्यञ्च निवेदयन्ती [5]तं चिदचिच्छरीरत्वेन जगत्सृष्ट्यादिकारणत्वेन धर्मपरित्राण निमित्तावतारविशिष्टत्वेन च स्तौति - **नमः परस्मै** इति। मायया स्वापृथक्सिद्ध विशेषणभूतया मायया प्रकृत्या विन्यस्तनाना तनवे निष्पादितदेवमनुष्यादि व्यष्टि क्षेत्रज्ञ शरीराय अनेन प्रकृति पुरुषशरीरकत्वं जगत्कारणत्वं तच्च सद्वारक मिति चोक्तं भवति। सद्वारकत्व मेव व्यनक्ति - गुणात्मने इति। प्रकृतिगुणविशिष्टत्वात् तद्द्वारा सत्त्वादिगुणस्वभावाय यथा ''काठिन्यवान् यो बिभर्ति . . . . तस्मै भूम्यात्मने नमः'' (विष्णु. पु. 1-12-28) इति भूमिद्वारा काठिन्यवत्त्वं, न तु स्वरूपतो गुणात्मकत्वं, निर्गुणश्रुतिविरोधात्। प्रकृतिपुरुषशरीरकत्वेऽपि तद्वैलक्षण्येन स्थिति माह - परस्मै प्रकृतिपुरुषविलक्षणाय। वैलक्षण्ये हेतु माह - स्वरूपानुभवेन निर्धुत द्रव्यक्रिया कारकविभ्रमोर्मये स्वरूपानुभवः स्वरूप विषयं यथाऽवस्थितं ज्ञानं स्वरूपशब्देन प्रकृतिपुरुषेश्वरस्वरूपाणि [6]त्रीण्यपि विवक्षितानि। स्वरूपाणां प्रकृतिपुरुषेश्वररूपाणां अनुभवेन याथात्म्यज्ञानेन निर्धुताः निरस्ताः द्रव्यक्रियाकारक विभ्रमाः द्रव्य क्रिया कारकेति द्वन्द्वः। विभ्रमशब्दः प्रत्येकं सम्बध्यते, द्वन्द्वान्ते श्रुतत्वात्। तत्र द्रव्यभ्रमो नाम पृथिव्यादिद्रव्यारब्धेषु देहिष्वात्मभ्रमः, [7]गच्छामि इच्छामि द्वेष्मीति देहगतक्रियाणा मात्मनि भ्रमः क्रियाभ्रमः। कारकभ्रमः कर्तृत्वभ्रमः। स च ''अधिष्ठानं तथा कर्ता कारणं च पृथग्विधम्। विविधा च पृथक्चेष्टा दैवं चैवात्र पञ्चमम्। शरीरवाङ्मनोभि र्यत्कर्म प्रारभते नरः। न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः। तत्रैवं सति कर्तार मात्मानं केवलं तु यः। पश्यत्यकृतबुद्धित्वा न्न स पश्यति दुर्मतिः॥'' इत्युक्तरीत्या कर्तृत्वस्य अधिष्ठानादिषु पञ्चस्वनुगतत्वेऽपि [8]अननुगतत्वेनैव प्रतीतिरूपः। एते त्रयो भ्रमाः तत्प्रयुक्ताः ऊर्मयः अशनाया पिपासा शोक मोह जरा मृत्व्याख्याः तस्मै सर्वदा युगपत्प्रत्यक्षित सर्ववस्तुविषय प्रमितिरूप साक्षात्कार निरस्त दोषमूल भ्रम तत्कार्यत्वा द्वैलक्षण्यसिद्धिः। गुणभेदाभि प्रायेण नमसो द्विरुक्तिः। अत्र जगत्कारणत्वकथनेन

1. W मन्यु 2. A, B, T स्वयम् 3--3. A. B. T विवक्षन्ती 4. A, B, T omit तत् 5. A, B, T omit तं 6. A, B, T omit त्रीणि
7. A, B, T omit गच्छामि 8. A, B, T आत्मगतत्वे°

तदुपयुक्त सार्वज्ञ्य सर्वशक्ति त्वादिमत्त्वस्याऽप्यभिप्रेतत्वा त्सर्वज्ञं सर्वशक्तिं त्वां त्वकार्यजगदन्तर्भूताऽहं वञ्चयितुं असमर्थेत्यभिप्रेतम्। अनेन स्वस्या आकिञ्चन्य मप्युक्तम्[1]॥ २९॥

तदेव विशदयन्त्याह - **येनेति**। येन धात्रा दधाति विदधाति सृजतीति धाता, तेन त्वया आत्मायतनं आत्मनां व्यष्टि जीवानाम् आयतनं स्थानभूताऽहं विनिर्मिता सृष्टा। कथम्भूताऽहम् ? यतः यस्यां मयि गुणसर्गसंग्रहः गुणमय प्रकृति परिणामात्मक देवादिप्रपञ्चो वर्तते स एव धात्रा भवान् उदायुधः उद्धृतायुधः स्वराट् स्वतन्त्र स्सन्। स्वराडित्यनेनन ह्यन्यो निवारको त्यभिप्रेतम्। मां स्वसृष्टां भूमिं हन्तु मुपस्थितः ततः त्वत्तोऽन्यं कं शरणं रक्षणोपायम् आश्रये ? न कमपि, किन्तु त्वामेवेत्यभिप्रायः॥ ३०॥

**विज.** तथाऽपि स्त्रीवधो न शस्त इति तत्राह - **पुमानिति**। य एवं विध स्तद्वधः॥ २६॥

यदुक्तं मां निहत्याऽऽत्मान मिमाः प्रजाश्चाऽम्भसि कथं धारयिष्यसीति तत्राह - **त्वां स्तब्धा** मिति। मायागा मित्यनेन गोवधदोषोऽपि नास्तीति सूचितम्। आत्मयोगबलेनौत्पत्तिक स्वरूपधारणया शक्त्या॥ २७॥

तत्र निरुत्तरया धरया किमकारीति तत्राह - **एवमिति**॥ २८॥

स्वयं देवतास्वेकत्वेन हरे रन्यस्यैवं विधवाक्यानुदयात् इत्यादि हेतुना ज्ञातत्वात् धरा पृथ्वन्तर्यामिणं तद्योगै र्गुणैः अन्यत्रायोग्यैः श्रीनारायण मभिष्टौति - **नम इति**। मायया प्रकृत्या चित्प्रकृत्या वा। विन्यस्ताः तद्योग्यतया विरचिताः नानातनवो ब्रह्मादिजीवदेहा येन स तथोक्त स्तस्मै। ''ब्रह्मादि जीव देहास्तु मायादेहाः प्रकीर्तिताः'' (वाराहे) इति वचनात्। मायाशब्देन नेन्द्रजाल मन्त्रोच्यत इति। स्वस्याऽपि प्राकृतदेहसम्भवेन देवदत्तवत् कर्मणि श्रान्तत्वेन प्रपञ्चरचनानुपपत्ति रित्यत उक्तम् - **अगुणात्मन इति**। सत्त्वादिगुणरहित स्वरूपाय। यदि हरेः स्वरूपं प्राकृतगुणरहितं, तर्हि कीदृशम् ? येन देहित्वेन सृष्ट्यादौ प्रवृत्तिः स्यादित्यस्यापीदमेवोत्तरं गुणात्मन इति। ज्ञानानन्दादिगुणदेहाय। ''आत्मा जीवे धृतौ देहे, (वैज.को. 6-1-6) इति यादवः। अस्तु ज्ञानादिगुणदेहत्वं, तथाऽपि प्रकृत्या प्रवर्तमानस्य कर्दममणे रिव कथित दोषानिस्तार इति तत्राह - **स्वरूपेति**। स्वरूपानुभवेन ''तद्ब्रह्म वेदाऽहं ब्रह्मास्मीति श्रुतिसिद्धेन स्वरूपापरोक्षेण निर्धूता निरस्ता द्रव्यक्रियाकारक निमित्तानां विभ्रमाणा मूर्मयो येन स तथा द्रव्यादयः तामस तैजस वैकारिकाऽहंकार संज्ञाः। यद्वा द्रव्यं गुणाना माधारो देहः, क्रिया कर्मेन्द्रियं, कारकं ज्ञानेन्द्रियं एतन्निमित्तानां विभ्रमाणां संशया द्यन्तः करणधर्माणा मूर्मयः परम्पराः दूरोत्सारिताः येन स तथा। ''विभ्रमः संशये भ्रान्तौ शोभायां च'' (वैज.को. 7-1-69) इति यादवः। तत्र किं कारणं इत्यत उक्तं स्वरूपेति। द्रव्यक्रियादिनिमित्तविभ्रमोर्मयोऽस्माकमेव न हरेरिति निरणायि॥ २९॥

---

1. W °मित्युक्तम्

यतः स्वामित्वेन पितृत्वेन गुरुत्वेन स्थितं हरिं शरणं विहाय ममाऽन्यो रक्षकोऽस्तीति भ्रान्ताऽलब्धान्य निवृत्ते त्यतः तत्स्वामित्वादिकं तवैवेति सयुक्तिक माह - **येनेति**। येन धात्रा हरिणाऽह मात्मीय तनुः स्वशरीरत्वेन निर्मिता, ''यस्य पृथिवी शरीरम्'', (बृह.उ. 3-7-3) इति श्रुतेः। यतो यस्मा त्सत्त्वादिगुणैः सर्गसंग्रहः स्यात्, स एव पितृभूतः। स्वराट् स्वामी उदायुधः शिक्षागुरु र्मां हन्तु मुपस्थित इत्यन्वयः। किमत इति तत्राह - अन्य मिति। ''किं कुर्मः कस्य वा ब्रूमो गरदायां स्वमातारि'' इति वाक्यं ध्वनयति कमित्यनेन॥ ३०॥

**य एतदादा वसृजच्चराचरं स्वमाययाऽऽत्माश्रययाऽवितर्क्यया।**
**तयैव सोऽयं किल गोप्तु मुद्यतः कथं नु मां धर्मपरो जिघांससि[1]॥ ३१॥**

**नूनं [2]बतेशस्य समीहितं जनैः [3]त्वन्मायया दुर्जययाऽकृतात्मभिः।**
**न लक्ष्यते य स्त्वकरो दकारयत् योऽनेक एकः परत [4]स्स ईश्वरः॥ ३२॥**

**सर्गादि योऽस्याऽनुरुणद्धि शक्तिभि र्द्रव्यक्रिया कारक चेतनात्मभिः।**
**तस्मै समुन्नद्ध निरुद्धशक्तये नमः परस्मै पुरुषाय वेधसे॥ ३३॥**

**स वै भवानात्म विनिर्मितं जगद् भूतेन्द्रियान्तः करणात्मकं विभो!**
**संस्थापयिष्य न्नज मां रसातला दभ्युज्जहाराम्भस आदिसूकरः॥ ३४॥**

**अपा मुपस्थे मयि नाव्यवस्थिताः प्रजा भवानद्य रिरक्षिषुः किल।**
**स वीरमूर्तिः समभूद्धराधरो यो मां पयस्युग्रशरो जिघांससि[5]॥ ३५॥**

**नूनं जनैरीहित मीश्वराणामस्मद्विधै स्तद्गुणसर्गमायया।**
**न ज्ञायते मोहित [6]चित्तवृत्तिभिस्तेभ्यो नमो वीरयशस्करेभ्यः॥ ३६॥**

इति श्रीमद्भागवते महापुराणे अष्टादश साहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
चतुर्थस्कन्धे सप्तदशोऽध्यायः॥ १७॥

---

1. A, B, G, I, J, M, Ma, Ms, T ⁰ति 2. M, Ma, Ms ⁰ति 3. M, Ma, Ms तवेशस्य 4. A, B, G, I, J, T तन्मा⁰; M, Ma, Ms स्वमा⁰
5. A, B, G, I, J, T ⁰श्च 6. A, B, G, I, J, T, V वर्त्मभि⁰

**श्रीध.** सृष्टिसंहार[1]कारकोऽह मेवेति चेत्, तथाऽपि प्रजापालने प्रवृत्तस्य मद्वधोऽनुचित एवेत्याह - **य** इति। आत्माश्रयया जीवविषयिण्या॥ ३१॥

अतो दुर्ज्ञेय मीश्वरचेष्टित मित्याह - **नूनमिति**। अकृतात्मभिः विक्षिप्तचित्तैः यः ईश्वरः स्वतन्त्रः अकरोत् ब्रह्माणम्। परत इति तेन ब्रह्मणा चराचर मकारयत्। यश्च स्वतः एकः परतः मायया तु अनेकः॥ ३२॥

तस्मा दचिन्त्यशक्तये केवलं नम इत्याह - **सर्गेति**। सर्गादिजन्मस्थिति भङ्गं अस्य जगतः अनुरुणद्धि अनुवर्तते [2]अनुकरोति। द्रव्याणि महाभूतानि, क्रियाः, इन्द्रियाणि, कारकाः देवाः, चेतना बुद्धिः, आत्मा अहङ्कारः तैः स्वशक्तिरूपैः समुन्नद्धाः समुत्कटाः निरुद्धाः शक्तयो यस्य॥ ३३॥

प्राणिनां धारणार्थं मां रसातला दुद्धृत्येदानीं प्रजारक्षणे प्रवृत्तस्य मद्वधो न युक्त इति [3]सकरुण माह द्वाभ्यां - **स** इति। हे अज! यः सृष्टवान् स एव भवान् स्वनिर्मितं चराचरं जगत् सम्यक् स्थापयितु [4]मिच्छन् आदिसूकर स्सन् मामभ्युज्जहार॥ ३४॥

**अपा मिति**। स एव धराधरः। वराहः अद्य अपा मुपस्थे उपरि मयि नावि आधारभूताया मवस्थिताः प्रजाः रक्षितु मिच्छुः वीरमूर्तिः पृथुरूपः समभूत्। य एवम्भूत स्स त्वं [5]पयसि निमित्ते मां जिघांससीति विचित्र मित्यर्थः॥ ३५॥

तस्मा दीश्वरचेष्टितं [6]दुर्विज्ञेय मिति कैमुतिक[7]न्यायेनोपसंहरति - **नून मिति**। तस्य ईश्वरस्य गुणसर्गरूपया मायया मोहितं चित्त मेव वर्त्म येषां, मोहितानि चित्तवर्त्मानि येषा मिति वा, तैः जनैः ईश्वराणां हरिभक्ताना मेव ताव दीहितं न ज्ञायते, किं पुन स्तस्य परमेश्वरस्य। अत [8-]एव परमेश्वरवत्[-8] तेभ्योऽपि नम एव केवलम्। वीराणां जितेन्द्रियाणां यशः कुर्वन्ति ये तेभ्यः यथा वीराणां यशो वर्धेत तथा [9]युक्तं चेष्टतां, न तु यथेष्टमिति भावः॥ ३६॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीश्रीधरस्वामि विरचितायां भावार्थदीपिकायां

व्याख्यायां सप्तदशोऽध्यायः॥ १७॥

**वीर.** ननु य एव स्रष्टा, स एव हन्ति चेत् किं त्वया विधेयम्? सत्यं, स्रष्टु रपि हन्तृरूपधारण एव हनने प्रवृत्ति रुचिता, न

1. V कर्ताऽ° 2. A, B, J, Va omit अनु° 3. V सकारणम् 4. A, B, J, Va omit इच्छन् 5. A adds क्षीरे 6. A, B, J, Va दुर्ज्ञेयम् 7. A. B, J, Va °त्यन्या° 8--8. V परमेश्वरायेव 9. A, B, J, Va omit युक्तं

त्ववितृरूपधारिण स्तवे त्याह - **य एतदिति** । यो भवान[1]ेव एत च्चराचरात्मकं जगत्, आत्मा आश्रयो यस्या स्तया अवितर्क्यया एवं विधेति चिन्तयितु मशक्यया स्वाऽपृथक्सिद्ध विशेषणभूतया प्रकृत्या । मायाशब्दः सङ्कल्परूपज्ञानपरो वा । अवितर्क्येण स्वसङ्कल्पेनाऽसृजत् । स एव भवान् तयैव सङ्कल्पेन गोप्तुं चराचरात्मकं जगद्रक्षितु मुद्यतः उद्युक्तः । न तु कालाग्निरुद्राद्यवतारेणेव हन्तुं प्रवृत्त इत्यर्थः । अतः प्रजापालनरूप धर्मप्रवृ[2]त्त स्त्वं मा[3] प्रजानां भोग्य भोगोपकरण भोगस्थाना[4]दिरूपां मां कथं नु जिघांससि हन्तु मिच्छसि ॥ ३१ ॥

विचित्रानन्तशक्ते स्तव प्रभाव मजानत्या ममेदं त्वदीयं कृत्यं अनुचित मिव प्रतीयते, त्वच्चिकीर्षितन्तु न के[5]ऽपि जा[6]नीयु रित्याह - **नून मिति** । अकृतात्मभिः अवशीकृतचित्तैः त्वां अप्रपन्नैः इति यावत् । दुर्जयया जेतु मशक्यया स्वमायया आ[7]त्मीय मायया करणभूतया ईशस्य तव समीहितं चेष्टितं द्वा[8]भ्यां चिकीर्षितं जनै र्न लक्ष्यते न ज्ञायते[9] । यद्वा दुर्जयया स्वमायया हेतुभूतया अकृतात्मभिः मोहितचित्तैः मादृशैः जनैः ईशस्य तव समीहितं न लक्ष्यत इत्यर्थः । कोऽसा वीश्वरः यस्य समीहितं न लक्ष्यते तत्राह- यः स्वत एकोऽपि परतः ब्रह्मरुद्रादि क्षेत्रज्ञरूप शरीरभेदा दनेक स्सन् अकरोत् महदादि पृथिव्यन्त जगत्सृष्टिं अकारयत्, व्यष्टिसृष्टि मित्यर्थः । सः ईश्वरः त्व मेवेति भावः ॥ ३२ ॥

अतोऽचिन्त्यशक्तये तुभ्यं केवलं नम इत्याह - **सर्गा दीति** । यो भवान् अस्य जगतः सर्गादि सृष्ट्यादिकं द्रव्यक्रिया कारक चेतनात्मभिः, द्रव्यं प्रधानात्मक मचिद्द्रव्यं, क्रिया जीवादृष्टाख्यं कर्म, कारकः करोति गुणक्षोभमिति कारकः कालः, चेतनो जीवः, एतद्रूपाभि स्[10]स्वशक्तिभिः अनुरुणद्धि अनुवर्तते करोतीति यावत् । तस्मै समुन्नद्धाः कार्योन्मुखाः विरुद्धा श्शक्तयो यस्य तस्मै । सृष्टिस्थितिसंहाराणां युगपद्विरुद्धत्वा त्तद्द्वारा तदुपयुक्तशक्तीनां विरोधः । युगपत् सृष्ट्यादीनां मिथो विरुद्धत्वेऽपि कालभेदा दुपपन्नत्वेन सृष्ट्याद्युपयुक्तशक्तिमत्त्व मुपपन्नम् । वेधसे कारणभूताय परस्मै प्रकृतिपुरुष विलक्षणाय पुरुषाय तुभ्यं नमः ॥ ३३ ॥

तव समुन्नद्ध विरुद्धशक्तिमत्त्वं न मानान्तरगम्यम् । अपि तु अपरोक्षं मयैवाऽनुभूत मित्याह - **स वा इति** द्वाभ्याम् । हे विभो ! आत्मनि आत्मना स्वयं विनिर्मितं, भूतानि पृथिव्यादीनि, इन्द्रियाणि श्रोत्रादीनि, अन्तःकरणं चैतदात्मकं जगत्संस्थापयिष्यन् हे अज ! कर्मायत्तोत्पत्तिशून्य ! तथाऽपि आदिसूकरः स्वेच्छोपात्ता प्राकृत दिव्यवराहावतारो भूत्वा [11-] स वै प्रसिद्धः [-11] भवान्मां त्वन्निमित्त जगदाधारभूतां मां अम्भसः अम्भसि प्रविश्य "ल्यब्लोपे कर्मण्यधिकरणे च" (भुवः प्रभवः (1-4-31) इतिसूत्रे 1474, 1475) इत्यधिकरणे पञ्चमी रसातलात् अभ्युज्जहार उद्धृतवान् ॥ ३४ ॥

---

1. W omits एव 2. A, B, T प्रवर्तक॰ 3. A, T, omit मां 4. A, B, T, omit ॰नरू॰ 5. A, B, T omit केऽपि 6. A, B, T विजा॰
7. A, B, T स्वात्मी॰ 8. A, B, T omit द्वाभ्यां 9. A, B, T add इति । 10. A, B, T omit स्व 11--11. A, B, T omit

स धराधरः आदिवराहः अद्य अपां मुपस्थे उपरि नावि नौकावदाधारभूतायां मयि अवस्थिताः प्रजाः रिरक्षिषुः रक्षितुमिच्छुः भवान् समभूत् भवद्रूपेण अवतीर्णः। स एव त्व मधुना वीरमूर्तिः[1] पृथुरूपः उग्र स्तीक्ष्णः शरो यस्य। पयसि निमित्ते गां गोरूपां मां जिघांससि हन्तु मिच्छसि किल; इत्येतत् विरुद्ध शक्तिमत्त्वं मयैवोपलब्ध[2] मित्यर्थः ॥ ३५ ॥

एव मचिन्त्यविविधशक्तिमत्त्वेन भगवन्तं स्तुत्वा तदेव पुन रनुसन्दधती सर्वानवतारान्नमस्करोति - **नूनमिति**। येषा मीश्वराणा मीश्वरावताराणां ईहितं चिकीर्षितं तद्गुणसर्गमायया तस्य ईश्वरस्य सम्बन्धिन्या सत्त्वादिगुणकार्यप्रपञ्चमूलया मायया मोहितं यच्चित्तं तस्य वर्त्मनि वृत्तयो येषां तैः मादृशैः अज्ञै[3] र्जनैः न ज्ञायते। नूनं निश्चये[4]। तेभ्यः वीराणा मन्येषा मपि यशस्करेभ्यो हिरण्याक्षादयः भगवता युद्धे निहता, इत्येवंरूपकीर्तिसम्पादकेभ्यः अवतारेभ्यो नमः ॥ ३६ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्री वीरराघवविदुषा लिखितायां भागवत चन्द्रचन्द्रिकायां

व्याख्यायां सप्तदशोऽध्यायः ॥ १७ ॥

**विज.** तव निर्माता ईश्वरोऽन्यः, त्वां जिघांसुः पृथुराजाचापर इति मन्दाशङ्कां परिहरन्निव पूर्वोक्तार्थं विवृणोति - **य एतदिति**। आत्मैवाश्रयो यस्याः सा आत्माश्रया तथा अत एव अवितर्क्यया विविध तर्काविषयया ''अजा मेकां लोहितशुक्लकृष्णाम्'' (म.ना.उ. 8-4) इत्यादि श्रुति सिद्धत्वात्, निर्वक्तु मशक्येति एतद् द्वैतवादितर्कागोचर मित्यर्थः। एवं विधया स्वमायया स्वप्रकृत्या स्रष्टुः पालयितु श्चैकत्वेन तस्य हन्तृत्वं न युक्तम्, अदर्शना दित्यर्थः। ''वार्तासम्भाव्ययोः किल'' (वैज.को. 8-7-19) इत्यभिधानम्। अत सम्भावितं न भवतीति यथा स्वस्य तर्काविषयत्वं तथा मायाया अपीति सूचितम् ॥ ३१ ॥

हरे स्तर्काविषयत्वं स्पष्टयति **नूनं तवेति**। विभो! अकृतात्मभिः अल्पबुद्धिभिः अशिक्षितबुद्धिभि र्वा जनैः दुर्जयया स्वमायया ईशस्य ऐश्वर्यादिगुणाकरस्य, समीहितं समीचीनं चेष्टितं न लक्ष्यते; नूनं तर्कयामी त्यन्वयः। ''तर्क निश्चितयो र्नूनम्'' (वैज.को. 8-7-22) इति यादवः। समीहितं किं तदित्यत आह - यस्त्विति। यस्त्वकरो त्कार्यं ब्रह्मणा जगद कारयच्च। अनेकः ''इन्द्रो मायाभिः पुरुरूप ईयते'' (बृह.उ. 2-5-15) इति श्रुतेः। तत्त्वत एकः ''एक मेवाऽद्वितीयम्'' (छान्दो.उ. 6-2-1) इति श्रुतेः। एवंविधः स परतः परेषा मीश्वरो नाऽस्माक मार्ताना मिति क्षोण्याक्षेप लक्षण मर्थविशेषं ध्वनयति अर्थान्तरासम्भवात् ॥ ३२ ॥

---

1. W क्रोध 2. A, B,T लक्षित 3. A. B, T omit अज्ञैः 4. A, B, T निश्चितम्।

कर्तृत्वेन कारयितृत्वेन सर्वस्वातन्त्र्यप्रतीतेः पृथिव्यादीनां कर्तृत्व मीश्वर शक्त्यनुस्यूतत्वा[1] दित्याह - **सर्गादीति**। द्रव्याणि पञ्चभूतानि, क्रियाः कर्मेन्द्रियाणि, कारकाः ज्ञानेन्द्रियाणि, चेतनो जीवः, एतान् व्याप्य तिष्ठन्तीति चेतनात्मानः, ताभिः शक्तिभि र्योऽस्य जगतः सर्गा द्यनुरुणद्धि तत्तद्योग्यतानुकूल्येन करोति तस्मै नम इत्यन्वयः। एकस्य युगपदनेक वैचित्र्योपेतपदार्थस्रष्टृत्वं कथ मुपपद्यते इत्यत उक्तम् - समुन्नद्धेति। तदुक्तं - ''विरुद्ध शक्तयो यस्य नित्या युगपदेव तु। तस्मै नमो भगवते विष्णवे सर्वजिष्णवे'' (वाराहे) इति। कर्तृत्वशक्तिः स्वरूपभूते त्युक्तं वेधस इति कर्तृत्वशक्तिमते। किं नामधेय मस्ये त्यत उक्तं - परस्मा इति। अनेन पुंशक्तिमत्त्वा दस्यैवोक्त मुपपन्न मित्यसूचि॥ ३३॥

पूर्वं त्वयैव भूतधात्रीत्वेन संक्लृप्तत्वात् हिरण्याक्षनीतां मां उदाहारितवान् तत्रात्मयोगबलेनैव धारयिष्यामीत्यङ्गीकारे सङ्कल्पभङ्गः स्या दित्याशयेनाह - **स वै** इति। स वै इत्यनेन य एतदित्याद्युक्तं परामृश्यते, मा माम्॥ ३४॥

भूमे रुद्धर्ता अन्यः अह मन्यः, तस्मा त्सङ्कल्पभङ्गः कथमिति मन्दशङ्कां परिहरति - **अपा मुपस्थे** इति। जलस्योपरि स्थितां मां जिघांसति, स वीरमूर्ति र्भवानद्य रक्षितुकामो धराधरो भूमेः भर्ता समभू दित्यन्वयः॥ ३५॥

स्त्री त्वं अस्मद्विचेष्टितं किं जानासी त्याशङ्क्य सत्यं, तथाऽप्यस्माकं युष्मत्प्रसादनाय नम इत्येतत् कर्तु मुचित मिति भावेनाऽऽह- **नूनं जनै** रिति। त्वद्गुणसर्गमायया तव सृष्ट्यादौ गुणकर्मभूतया सर्गमायया प्रकृत्या॥ ३६॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां

टीकायां सप्तदशोऽध्यायः॥ १७॥

---

1. A, B शक्त्या अ॰

# अष्टादशोऽध्यायः

## मैत्रेय उवाच

इत्थं पृथुमभिष्टूय रुषा प्रस्फुरिताधरम्।
पुनराहावनिर्भीता संस्तभ्यात्मानमात्मना॥ १॥

सन्नियच्छा[1]ऽभि भो मन्युं निबोध श्रावितं च मे।
सर्वतः सारमादत्ते यथा मधुकरो बुधः॥ २॥

अस्मिंल्लोकेऽथवामुष्मिन् मुनिभिस्तत्त्वदर्शिभिः।
दृष्टा योगाः प्रयुक्ताश्च पुंसां श्रेयः प्रसिद्धये॥ ३॥

तानातिष्ठति यः सम्यगुपायान् पूर्वदर्शितान्।
अवरः[2] श्रद्धयोपेत उपायान्[3] विन्दतेऽञ्जसा॥ ४॥

ताननादृत्य यो विद्वानर्थानारभते स्वयम्।
तस्य व्यभिचरन्त्यर्थाः आरब्धाश्च[4] पुनः पुनः॥ ५॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

*अष्टादशे महीवाक्याद्वत्सपात्रादिभेदतः। पृथ्वादिभिस्तु [5-]सा दुग्धा स्वं स्वं दुग्धमितीर्यते[-5]॥

सन्नियच्छेति। हे अयिभो! प्रभो! यद्वा भो देव! अभि अभयं [6]यथा भवति एवं मन्युं सन्नियच्छ श्रावितं विज्ञापितम्। न मद्वाक्ये अनादरः कर्तव्य इत्याह। बुधो हि सर्वतः सारमादत्ते॥ १, २॥

मयि जीर्णाश्चौषधीः उपायेन गृहाणेति वक्तुम् उपायेन सर्वं सिध्यति नान्यथेत्याह - **अस्मिन्निति** त्रिभिः। पुंसां श्रेयसः पुरुषार्थस्य प्रसिद्धयेऽस्मिंल्लोके कृष्यादयः, अमुष्मिंश्च लोकेऽग्निहोत्रादयो, योगा उपायाः दृष्टाः [7]ज्ञाता प्रयुक्ता अनुष्ठिताश्च॥ ३॥

1. M, Ma, Ms °च्छ विभो 2. M, Ma, Ms °प° 3. A, G, I, J, T, W °पे° 4. M, Ma प्रायशश्च; Ma, V प्रारब्धाश्च * This extra verse is found in Edn V. आलोलतुलसीमालमारूढविनतासुतम्।
ज्योतिरिन्दीवरश्याममाविरस्तु ममाग्रतः॥ 5--5. V क्रमशः सा दुग्धेति निरूप्यते। 6. V adds तथा 7. B, J, V, Va omit ज्ञाताः

**तानिति**। पूर्वैर्दर्शितान् अवरोऽर्वाचीनः ॥ ४॥

**तानिति**। अविद्वान् विद्वानपीति[1] वा। व्यभिचरन्ति न सिध्यन्ति ॥ ५॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं सर्वकारणत्वेन विचित्रशक्तित्वेन[2] च पृथुं प्रस्तूय तदभिमतौषधिबीजनिर्गमोपायं विवक्षन्ती तत्र तं विश्वासयितुं प्रसादयन्त्याह मही इत्याह मुनिः। इत्थं पूर्वोक्तप्रकारेण पृथुमभिष्टूय ततोप्यनिवृत्तरुषा प्रस्फुरितः नितरां चलितः अधरोष्ठो यस्य तं, दृष्ट्वेति शेषः, भीता सती अवनिः मही आत्मानं मन आत्मना बुद्ध्या संस्तभ्य निर्भयं कृत्वा आह ॥ १ ॥

उक्तमेवाह - भो हे पृथो ! अभि अभितः कात्स्न्येन मन्युं क्रोधं सन्नियच्छ उपसंहर। मे मया श्रावितं विज्ञापितं निबोध जानीहि। किं तदित्यत्राह। बुधः सारासारविभागज्ञः यथा मधुकरः भृङ्गः तथा सर्वतः सर्वेभ्यो वस्तुभ्यः सारमादत्ते गृह्णाति। वक्ष्यमाणरीत्या मत्तः सारभूतक्षीरादानेनैवेष्टसिद्धौ किं वृथा मह्यं क्रुध्यसीति भावः ॥ २ ॥

मया गीर्णा ओषधीरुपायेन गृहाणेति वक्तुमुपायेन सर्वं सिध्यति नान्यथेत्याह - **अस्मिन्निति** त्रिभिः। पुंसां कामिनां श्रेयसः पुरुषार्थस्य प्रसिद्धये निष्पत्तये तत्त्वदर्शिभिः मुनिभिरस्मिंल्लोके ये उपायाः कृषिगो[3]रक्षवाणिज्यादयः जीवनोपाया दृष्टा विज्ञाता निर्णीता इति यावत्, ये चामुष्मिन् परस्मिन् लोके स्वर्गसाधनभूता अग्निहोत्रादयः उपायाः प्रयुक्ता अनुष्ठिताश्च[4], चशब्दात् दृष्टाश्च ॥ ३ ॥

तानेव पूर्वैर्मुनिभिर्दर्शितान् उपायान् योऽवरोऽर्वाचीनः सम्यक् श्रद्धया कर्तव्येषु त्वरया उपेतः युक्तस्सन् आतिष्ठति स एवाञ्जसा सुखेनोपायानुपायसाध्यान् विन्दते लभते ॥ ४ ॥

अन्यस्तु न विन्दत इत्याह - **तानिति**। यो विद्वानविद्वान् वा तान् पूर्वदर्शितानुपायान् अनादृत्य, स्वयमर्थान्[5] स्वबुद्धिमात्रेणैव[6] पुरुषार्थसाधनत्वेनावधारणीयान् अर्थान्[7] पुरुषार्थोपायाभासानारभते। तस्यार्थास्ते उपायाभासाः पुनः पुनः प्रारब्धाश्च[8] अन्तरायविहतौ पुनः पुनरनुष्ठिता अपि व्यभिचरन्ति, न फलजनका भवन्तीत्यर्थः ॥ ५ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

स्वरूपभूता गुणा हरेरपरोक्षज्ञानात् व्यज्यन्ते इत्येतदर्थसङ्ग्रहार्थं भूमेस्तत्तद्वसु दोहनं निरूप्यतेऽस्मिन्नध्याये। तत्रादौ पृथोः क्रोधशमनाय पुनर्भूमेः तं प्रति वचनप्रकारं वक्ति - **इत्थमिति** ॥ १ ॥

1. V omits इति 2. A, B, T शक्तिमत्त्वेन 3. W रक्षा 4. A, B, T omit च 5. A, B, T add स्वबुद्ध्या 6. A, B, T omit एव 7. W omits अर्थान् 8. W adds अन्तरा

कथं नियच्छामि क्रोधं येन तच्छान्तिहेतुं श्रुत्वा आर्द्रान्तःकरणो भवामीति तत्राह - निबोधेति। पुंसेह सद्धर्म एव शिक्षणीयो न सल्लिकाधर्म इत्याशयेनाह - सर्वत इति॥ २॥

कीदृशं श्राव्यते यत्प्रकृतोपयोगि स्यादत्राह - **अस्मिन्निति**। लोके कृष्यादिश्रेयःसिद्धये बीजाद्यर्जनोपायाः, अमुष्मिन् स्वर्गादौ, यागादियोगाः तत्त्वदर्शिभिर्मुनिभिर्दृष्टाः प्रयुक्ताश्चेत्यन्वयः॥ ३॥

ततः किमित्यतोऽन्वयव्यतिरेकावाह - **तानातिष्ठतीति**॥ ४॥

अविद्वानव्युत्पन्नः, व्यभिचरन्ति नियमेन न सिध्यन्ति॥ ५॥

**पुरा सृष्टा[1] ह्योषधयो ब्रह्मणा[2] या विशाम्पते।**
**भुज्यमाना मया दृष्टा असद्भिरधृतव्रतैः॥ ६॥**

**अपालितानादृता[3] च भवद्भिर्लोकपालकैः।**
**चोरीभूतेऽथ लोकेऽहं यज्ञार्थेऽग्रसमोषधीः॥ ७॥**

**नूनं ता वीरुधः क्षीणा मयि कालेन भूयसा।**
**तत्र योगेन दृष्टेन भवानादातुमर्हति॥ ८॥**

**वत्सं कल्पय मे वीर येनाहं वत्सला तव।**
**धोक्ष्ये क्षीरमयान् कामाननुरूपं च दोहनम्॥ ९॥**

**दोग्धारं च महाबाहो भूतानां भूतभावन।**
**अन्नमीप्सितमूर्ज[4]स्वद्भगवान् वाञ्छते यदि॥ १०॥**

**श्रीध.** सहेतुकमुपायमाह - **पुरेति** षड्भिः॥ ६॥

**अपालितेति**। भवद्भिरिति राजसामान्याभिप्रायेण [5-]वेनादिभिरिति[-5] वा अपालिता चोराद्यनिवारणात् अनादृता च यज्ञादिप्रवर्तनाभावात्। यज्ञार्थे अग्रसं गिलितवत्यस्मि[6]। अन्यथा अधृतव्रतैर्भुक्ता न प्रसोष्यन्ते[7] ततश्च यज्ञादयो न सिध्येरन्निति भावः॥ ७॥

1. M, Ma ०श्रौ०; Ms, V ०स्त्वो० 2. Ms ०णाऽथ 3. M, Ma, Ms ०तास्ताः 4. M, Ma, Ms ०मोजस्व० 5--5. V omits
6. A. B, J, Va omit अस्मि 7. V प्रसविष्यन्ते

**नूनमिति** । क्षीणा जीर्णाः ॥ ८ ॥

**वत्समिति** । दोहनं[1] दोहपात्रम् । दोग्धारं चोपकल्पय । धोक्ष्ये प्रपूरयिष्यामि ॥ ९ ॥

**दोग्धारमिति** । भूतानाम्[2] ईप्सितमन्नम् । ऊर्जस्वत् बलप्रदम् ॥ १० ॥

**वीर.** नन्वस्त्वेवं, कोऽसावोषधिबीजनिर्गमोपायः, किमर्थं च तानि त्वग्रसः इत्यत्राह - **पुरेति** । हे विशाम्पते ! ब्रह्मणा पुरा या ओषधयः सृष्टाः इह जीवनार्थत्वेन यज्ञानुष्ठानद्वारा परत्र लोके स्वर्गाद्यर्थत्वेन च सृष्टाः, ता ओषधयः अधृतव्रतैः लोकपालन[3]यज्ञाद्यनुष्ठान[4]रूपव्रतरहितैः, अत एवासद्भिः भुज्यमानाः मया दृष्टाः असद्भिर्भुज्यमाना इमा ओषधयः समूलं[5] नश्येयुरिति आलोचिता इत्यर्थः ॥ ६ ॥

अहं च भवद्भिः भवादृशैः लोकपालैरपालिता अनादृता च सती, लोके सर्वस्मिन् चौरीभूते चौरप्राये सति, यज्ञार्थे यज्ञनिमित्तम् ओषधीरग्रसं गिलितवती । असद्भिर्भुज्यमाना न रोक्ष्यन्ति, ततश्च यज्ञादयो न सिध्येयुरित्यालोच्याग्रसमित्यर्थः ॥ ७ ॥

ता मया गीर्णा वीरुधः ओषधयः भूयसा महता कालेन मयि क्षीणाः जीर्णाः, नूनं निश्चये तत्र[6] जीर्णानां पुनर्निर्गमने दृष्टेन निश्चितेन योगेनोपायेन आदातुं ग्रहीतुमर्हति ॥ ८ ॥

कोऽसौ दृष्टो योगस्तत्राह - **वत्समिति** त्रिभिः । हे वीर ! महाबाहो ! हे भूतभावन ! यदि भवान् भूतानामूर्जस्वद्बलप्रदमन्नं वाञ्छति, तर्हि मे गोरूपाया ममानुरूपं वत्सं दोहने, दुहन्त्यस्मिन्निति दोहनं पात्रं, दोग्धारं चोपकल्पय, येन वत्सादिसामग्रीसम्पादनेन अहं तव वत्सला त्वद्विषये वात्सल्यवती क्षीरमयान् क्षीरविकारान् मत्[7]क्षीरप्रकृतिकान् कामान्, काम्यन्त इति कामाः, ओषधीः छन्दस्सोमवीर्यौजोबलासवादयस्तान् धोक्ष्ये क्षीररूपेण प्रपूरयिष्यामि ॥ ९, १० ॥

**विज.** किं बहुकथाकथनेन अधुना ओषधीनामनुपलम्भः कस्मात् तन्निमित्तं कथयेति तत्राह - **पुरेति** । याः पुरा विरिञ्चेन सृष्टास्ता ओषधीरहमग्रसमित्यन्वयः ॥ ६ ॥

असत्पुरुषैर्भुज्यमानत्वं भवादृशेन क्षत्रियेणारक्षितत्वम् अगोपितत्वं, नृलोकस्य चोरप्रायत्वं, चावेक्ष्य सत्सूत्पन्नेषु श्रीनारायणपूजालक्षणयज्ञप्रयोजनस्यावश्यकत्वादिति ॥ ७ ॥

---

1. A, V दोहन   2. A, B, J, Va add अभि   3. A, B, T यज्ञानु॰   4. A, B, T omit रूप   5. A, B, T ॰ला   6. A. B. T omit तत्र
7. A, B, T मत्तः क्षीर

तर्हि ता देहीति तत्राह - **नूनमिति**। क्षीराणामापादनं दुस्साध्यमिति तत्राह - **तत्रेति**। शास्त्रदृष्टेन, ननु स्वरूपतो नष्टा उत लघुतामापन्ना इति संशयो मा भूत्तत्तत्कार्यसाधने तच्छास्त्रदृष्टोपायेन सर्वं साध्यम्॥ ८॥

तथापि किं रामानुचराणां वानराणां वा[1], रेणुकाया वा मृतसञ्जीविन्यादिनेत्यत्र प्राप्तमुपायं वक्ति - **वत्समिति**। वत्सला वत्सप्रिया अनुरूपं तत्तद्योग्यं दोहनं दोहक्रियाविशेषम्॥ ९॥

नैतावता पूर्यत इत्युक्तं - **दोग्धारं चेति**। ओजस्वद् अवष्टम्भकृत् प्राणधारणशक्तिप्रदमित्यर्थः॥ १०॥

**समां च कुरु मां[2] राजन् देववृष्टं[3] यथा पयः।**
**अपर्तावपि भद्रं ते उपावर्तेत मे[4] विभो॥ ११॥**

**इति प्रिय[5]हितं वाक्यं भुव आदाय भूपतिः।**
***वत्सं कृत्वा मनुं पाणावदुहत्सकलौषधीः॥ १२॥**

****तथा[6] परे च सर्वत्र सारमाददते बुधाः।**
**ततो[7]ऽन्ये च यथाकामं दुदुहुः पृथुभाविताम्॥ १३॥**

**ऋषयो दुदुहुर्देवीमिन्द्रियेष्वथ सत्तम।**
**वत्सं बृहस्पतिं कृत्वा पयश्छन्दोमयं[8] शुचि॥ १४॥**

**कृत्वा वत्सं सुरगणा इन्द्रं सोममदूदुहन्।**
**हिरण्मयेन पात्रेण वीर्यमोजो बलं पयः॥ १५॥**

**श्रीध. समामिति**। अपगतेऽपि [9- वर्षर्तौ -9] देववृष्टमुदकं यथा मे मयि[10] सर्वतोऽपि[11] वर्तेत॥ ११॥

[12- इतीति। मनुं स्वायम्भुवम्। ओषधीर्व्रीह्यादीः -12]॥ १२॥

---

1. B omits वा 2. Ms मे 3. Ms दृष्टं; V सृष्टं 4. M, Ma, Ms मां 5. A, B, G, I, J, T, V °यं * This half verse is the first half of 13th verse in M. Ma. Ms ** This half verse is the second half of the 12th verse in M, Ma, Ms 6. M, Ma, Ms चकार 7. M, Ma, Ms °ऽपरे य° 8. W भुवि 9--9. V omits 10. V omtis मयि 11. A, B, J, Va omit अपि 12--12. V omits

प्रसङ्गादर्थान्तरमाह - **तथेति**। [1-]भुवो वाक्यं श्रुत्वा[-1] यथा पृथुः एवं सर्वत्र वाक्ये परेऽपि सारमादत्ते। प्रस्तुतमनुवर्तयति। ततोऽन्ये च ऋष्यादयः पञ्चदश दुदुहुः। पृथुना भावितां वशीकृताम्॥ १३॥

**ऋषय** इति। देवीं पृथ्वीम्। वाङ्मनःश्रवणैर्वेदग्रहणात् इन्द्रियाणां पात्रत्वम्॥ १४॥

**कृत्वेति**। सोमममृतम्। वीर्यं मनश्शक्तिम्। ओज इन्द्रियशक्तिं, बलं देहशक्तिं च तदेव पयः॥ १५॥

**वीर.** हे वीर! मां[2] पर्वतादिभिः निम्नोन्नतां पृथ्वीं समां कुरु, किं त्वत्समीकरणसाध्यं तत्राह। देववृष्टं वर्षासु देवेन[3] पर्जन्येन वृष्टं पयः जलमपर्तावपि [4-]वर्षर्त्वपगमे[-4]ऽपि मे मम यथा उपावर्तेत सर्वतो वर्तेत[5]। इत्थं समीकरणाभावे क्वापि मयि[6] जलं न तिष्ठेदतः समाहं कर्तव्येत्यर्थः। हे प्रभो! ते तुभ्यं भद्रं दोहनसमीकरणाभ्यां भद्रं भूयादित्यर्थः॥ ११॥

एवं धरित्र्याऽभिहितः पृथुः तथैवाकरोदित्याह मुनिः। इति उक्तविधं प्रियं हितं च भूमेर्वाक्यमादाय ओमिति *अनुमन्य **मनुं** स्वायम्भुवं वत्सं कृत्वा पाणौ दोहनपात्रे स्वयं दोग्धा भूत्वा सकलौषधीः अदुहत्, सकलौषधिप्रकृतिभूतं क्षीरमदुहत्। क्षीरं **प्रदुह्य** धरित्र्यां तद्विकिरन् ओषधीः प्रादुर्भावयामासेत्यर्थः। एवमग्रेऽपि बोध्यम्॥ १२॥

यथा पृथुः एवमपरे च बुधाः सारासारविवेककुशलाः सर्वत्र सर्वेषु पदार्थेषु[7] सारमाददते। गोरूपाया धरित्र्याः क्षीरं **प्रदुह्य** सर्ववस्तुषु सारं निहितवन्त इत्यर्थः, एतदेवाह[8] अन्ये ऋषिप्रभृतयः यथाकामं स्वस्वकामानुरूपं पृथुभावितां पृथुना वशीकृतां **गां**[9] दुदुहुः॥ १३॥

के के किं किम् अदुहन्? तत्राह - **ऋषय** इति। ऋषयो वसिष्ठादयः बृहस्पतिं वत्सं कृत्वा देवीं धरित्रीमिन्द्रियेषु पात्रभूतेषु, वाङ्मनश्श्रवणैः वेदग्रहणादिन्द्रियाणां पात्रत्वम्। हे सत्तम! विदुर! शुचि पवित्रं छन्दोमयं छन्दःप्रचुरं छन्दःप्रकृतित्वेन तत्प्राचुर्यमात्र विवक्षितं, पयः क्षीरं दुदुहुः दुग्धवन्तः॥ १४॥

तदा सुरगणाः इन्द्रं वत्सं कृत्वा हिरण्मयेन पात्रेण वीर्यं मनश्शक्तिः, ओजः इन्द्रियशक्तिः, बलं देहशक्तिः, एतत्त्रयसम्पादकं सोमममृतं[10] तदात्मकं पयः अदूदुहन्॥ १५॥

**विज. ओषध्युत्पत्तौ प्रधानसाधनं जलं, तत् विषमायां मयि देववृष्टं पयो न समं प्रसरति, तद्यथा अपर्तावपि अवृष्टिकाले[11] समं स्यात्तत्तथा मां समां कुरु अन्यथा ओषध्यनुत्पादे त्वत्कोपविषया स्यामित्याह - समां चेति॥ ११॥**

---

1--1. B, J, V, Va omit 2. A, B, T omit मां 3. T omits देवेन 4--4. T omits 5. W तदर्थं 6. A, B, T omit मयि
* अनुमत्य इति भाव्यम् 7. T omits पदार्थेषु 8. A, B, T तदेवाह 9. A, B, T omit गां 10. W °तापरात्मकं 11. A, B, M °ष्ट°

अत्रापि त्वद्ग्रस्तं त्वयैवोद्गीर्य दातव्यम् अन्यथा वधिष्यामीति पुनरपि पृथुना किं कुपितं न, किन्तु तदुक्तमङ्गीकृतं सारग्राहित्वादित्याह - **इतीति**। प्रियहितं श्रोतृसुखं प्रियं पथ्यं हृदयङ्गमं हितम्। भूपतिः पृथुः॥ १२. १३॥

ततोऽपर इत्युक्तं विव्रियते - **ऋषय** इत्यादिना। देवीं सरस्वतीं, इदमेव विशिनष्टि छन्दोमयमिति। वेदमयं पयः कुत्र वागिन्द्रियेषु॥ १४॥

न केवलं सोमरसमात्रमदूदुहन् किन्तु तदुद्भवं गुणं चेत्याह - वीर्यमिति। पराक्रमं माहात्म्यं वा, ओजोऽवष्टम्भशक्तिं, बलं निराहारत्वेऽपि चेष्टाशक्तिम्, अत्र बाह्यानेव गुणान् अदूदुहन् न तु स्वरूपभूतान्। तदुक्तं "गुणाः स्वरूपभूताश्च बाह्याश्चेति द्विधा मताः। स्वरूपभूता व्यज्यन्ते हरेर्बाह्यान् दुहुः[1] पयः" (ब्राह्मे.) इति॥ १५॥

**दैतेया दानवा वत्सं प्रह्लादमसुरर्षभम्।**
**विधाय[2] दुदुहुः क्षीरमयः[3] पात्रे सुरासवम्॥ १६॥**

**गन्धर्वाप्सरसोऽधुक्षन् पात्रे पद्ममये पयः।**
**वत्सं विश्वावसुं कृत्वा गान्धर्वं मधु सौभगम्॥ १७॥**

**वत्सेन पितरोऽर्यम्णा कव्यं क्षीरमधुक्षत।**
**आमपात्रे महाभाग[4] श्रद्धया श्राद्धदेवताः॥ १८॥**

**प्रकल्प्य वत्सं कपिलं सिद्धाः सङ्कल्पनामयीम्।**
**सिद्धिं नभसि विद्यां च ये च विद्याधरादयः॥ १९॥**

**अन्ये च मायिनो मायामन्तर्धानाद्भुतात्मनाम्[5]।**
**मयं प्रकल्प्य वत्सत्वे[6] दुदुहुर्धारणामयीम्॥ २०॥**

**श्रीध. दैतेया इति।** सुरामासवं च[7-] तालादिमद्यम्[-7]॥ १६॥

**गन्धर्वेति।** मधु वाङ्माधुर्यं सौभगं[8] सौन्दर्यं तत्सहितम्॥ १७॥

---

1. A, B दुदुहुः 2. A, B, G, I, J, T, W °याददूदुहन् 3. W °यस्पा° 4. A, B, G, I, J, T °गाः श्र:° 5. M, Ma °नगतात्मना; Ms °नगतात्मनाम्
6. A, B, G, I, J, T वत्सं ते 7--7. V सुरा आसवं 8. A omits सौभगं

**वत्सेनेति** । कव्यं पितॄणामन्नम् । आमपात्रे अपक्वे मृण्मये अधुक्षत दुदुहुः ॥ १८ ॥

**प्रकल्प्येति** । सङ्कल्पनामयीम् अणिमादिरूपां[1] सिद्धिम् । ये विद्याधरादयस्ते च तमेव वत्सं प्रकल्प्य[2] नभस्येव पात्रे खेचरत्वादिरूपां विद्यां दुदुहुः ॥ १९ ॥

**अन्ये** इति । अन्ये च किम्पुरुषादयोऽन्तर्धानेनाद्भुतात्मनाम् [3-]आश्चर्यमनसां[-3] सम्बन्धिनीं मायाम् । धारणामयीं सङ्कल्पमात्रप्रभवाम् ॥ २० ॥

**वीर.** दितेरपत्यानि, दानवाः, दोग्धारः असुरश्रेष्ठं प्रह्लादं वत्सं विधाय कृत्वा अयस्पात्रे[4] ''गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा'' (मनु.स्मृ. 11-94) इति त्रिविधां सुरामासवं च तालादिमद्यं पयः दुदुहुः । कार्यकारणयोरभेदोपचारेण सुरासवं पयो दुदुहुरित्यभेदनिर्देशः, एवमग्रेऽपि ॥ १६ ॥

गन्धर्वाः अप्सरसश्च दोग्धारः विश्वावसुं वत्सं कृत्वा पद्ममये पद्मात्मके पात्रे गान्धर्वं[5] गन्धर्वाणां सम्बन्धि [6-]मधु वाङ्माधुर्यं, सौभगम् अप्सरसां सम्बन्धि[-6] सौन्दर्यं च पयः अधुक्षन् दुदुहुः ॥ १७ ॥

श्राद्धदेवताः पितरः पित्रादिपितृगणाः दोग्धारः अर्यम्णा वत्सेन अर्यमणं वत्सं कृत्वेत्यर्थः । आमपात्रे अपक्वे मृण्मये पात्रे श्रद्धया कव्यं पितॄणामन्नं क्षीरमधुक्षत दुदुहुः, आर्षत्वात् व्यत्ययेनादादेशः । कव्यस्य विशेषेण श्रद्धया देयत्वज्ञापनाय श्रद्धया अधुक्षतेत्युक्तं, यद्यपि श्रद्धया देयं श्राद्धं (सा अस्य) ''तस्य देवता'' (अष्टा. 4-2-24) इत्यवयवार्थादेव कव्यस्य श्रद्धापूर्वकत्वं प्रतीयते, तथापि गच्छतीति गौः ''गमेर्डोः'' (उणादि सू. 2-68) गौर्गच्छतीत्यत्र प्रकृत्युपात्तगमनस्येव प्रकृत्युपात्तश्रद्धाया अविवक्षणात् श्रद्धयेत्युक्तम् ॥ १८ ॥

सिद्धा दोग्धारः कपिलं मुनिं वत्सं प्रकल्प्य विधाय[7] नभसि आकाशे पात्रे सङ्कल्पनामयीं सङ्कल्पप्रचुरामणिमादेः सङ्कल्पानुसारभावित्वात्[8] सङ्कल्पनामयीमित्युक्तम् । सिद्धिमणिमादिसिद्धिम् अधुक्षन्त । तथा ये च विद्याधरादयस्ते दोग्धारः ते पितरमेव वत्सं कपिलं प्रकल्प्य नभस्येव पात्रे खेचरत्वादिरूपां विद्यां क्षीरात्मना दुदुहुः ॥ १९ ॥

---

1. B, J, V, Va omit **रूपां** 2. V **परिकल्प्य** 3--3. B, J, V, Va omit 4. A, B, T **अयःपात्रे** 5. A, B, T omit **गान्धर्वं** 6--6. A, B, T omit 7. A, B, T omit **विधाय** 8. A, B, T **सारित्वात्**

अथान्ये च मायिनः आश्चर्यरूपधारिणः किम्पुरुषादयो दोग्धारः वत्सत्वे वत्सभावे [1-]मयं प्रकल्प्य[-1], मयं वत्सं कृत्वेत्यर्थः। धारणामयीं धारणाप्रचुरां मनोव्यापारविशेषधारणाख्ययोगानुसारित्वाद्धारणामयीमित्युक्तम्, एतच्चैकादशस्कन्धे स्फुटीभविष्यति, अन्तर्धानमद्भुतरूपं चेत्येतदुभयकारित्वेन तदात्मिकां मायां विचित्ररूपसर्गकारिणीं शक्तिं दुदुहुः ॥ २० ॥

**विज.** अयःपात्रे अयोमये पात्रे सुराख्यमासवं मधु। प्रह्लादस्य प्रतिमन्वन्तरमुत्पन्नप्रायत्वादत्रोक्तं "प्रतिमन्वन्तरं प्रायः प्रह्लादाद्या बभूविरे" (ब्राह्मे) इति वचनात् ॥ १६ ॥

गान्धर्वं गानं, मधु सौभगं सौभाग्यलक्षणं मधु ॥ १७ ॥

आमपात्रे नवभाण्डे, श्राद्धदेवताः श्राद्धकर्मणा देवता[2]· ॥ १८ ॥

सङ्कल्पनामयीं सङ्कल्पमात्रेणाभीष्टसिद्धिप्रदां सिद्धिं ये विद्याधरादयस्ते च नभसि विद्यां खेचरत्वलक्षणां सिद्धिम् अधुक्षतेत्यन्वयः ॥ १९ ॥

अन्तर्धानगतात्मनाऽदृश्यत्वे प्राप्तमनस्कत्वेन अन्ये मायिनो धारणामयीं चिन्तामात्रसाध्यां मायाम् ॥ २० ॥

**यक्षरक्षांसि भूतानि पिशाचाः पिशिताशनाः।**
**भूतेशवत्सा दुदुहुः कपाले क्षतजासवम् ॥ २१ ॥**

**तथाहयो दन्दशूकाः सर्पा नागाश्च तक्षकम्।**
**विधाय वत्सं दुदुहुर्बिलपात्रे विषं पयः ॥ २२ ॥**

**पशवो यवसं क्षीरं वत्सं कृत्वा च गोवृषम्।**
**अरण्यपात्रे चाधुक्षन्मृगेन्द्रेण च दंष्ट्रिणः ॥ २३ ॥**

**क्रव्यादाः प्राणिनः क्रव्यं दुदुहुः [3]स्वकले[4]बरे।**
**सुपर्णवत्सा विहगाश्चरं चाचरमेव च ॥ २४ ॥**

**वटवत्सा [5]वनस्पतयः [6]पृथग्रसमयं पयः।**
**गिरयो हिमवद्वत्सा नानाधातून् स्वसानुषु ॥ २५ ॥**

---

1--1. W omits 2. A, B omit देवताः 3. A, B, G, I, J, T स्वे 4. A, B, G, I, J, M, Ma, T ⁰वरे 5. V ⁰स्पत्यः 6. V ⁰ग्रोह⁰

**श्रीध. यक्षेति**। भूतेशो रुद्रः स एव वत्सो येषां ते। क्षतजं रुधिरं तदेवासवम्॥ २१॥

**तथेति**। अहयो निष्फणाः, दन्दशूका वृश्चिकादयः, सर्पाः सफणास्त एव कद्रूसन्ततिजा नागाः बिलपात्रे मुखे॥ २२॥

**पशव इति**। यवसं तृणम्। गोवृषं रुद्रवाहं[1] वृषभम्। मृगेन्द्रेणेत्युत्तरेणान्वयः॥ २३॥

**क्रव्यादा इति**। क्रव्यं मांसम्। चरं कीटादि। अचरं फलादि॥ २४-२५॥

**वीर.** पिशिताशना मांसभक्षा यक्षादयो दोग्धारः भूतेशो रुद्रो वत्सो येषां ते। भूतेशं वत्सं विधायेत्यर्थः। कपाले पात्रे क्षतजं रुधिरं, तदेवासवम् आसववन्मादकत्वात् आसवमित्युक्तं दुदुहुः॥ २१॥

अहयो निष्फणा, दन्दशूकाः दंशनस्वभावाः, सर्पाः सफणाः, त एव कद्रूसन्ततिजाता नागाः, दोग्धारः तक्षकं वत्सं विधाय बिलान्येव पात्राणि तेषु विषं पयः दुदुहुः॥ २२॥

तदा पशवो दोग्धारः गोवृषं गोषु वृषं श्रेष्ठं रुद्रवाहनं वृषभं बत्सं कृत्वा अरण्यमेव पात्रं तस्मिन् तृणं[2] क्षीरम् अधुक्षन्, मृगेन्द्रेणेत्युत्तरेणा[3]न्वयः॥ २३॥

क्रव्यादा मांसाशिनः दंष्ट्रिणो व्याघ्रादयः प्राणिनः दोग्धारः मृगेन्द्रेण सिंहेन वत्सेन स्वकलेबरे[4] पात्रे क्रव्यं मांसं दुदुहुः। विहगाः पक्षिणः सुपर्णो गरुडः येषां ते चरं कीटादिकम् अचरं फलादिकं च दुदुहुः॥ २४॥

वनस्पतयः वृक्षाः वटो वत्सो येषां तथाभूतास्सन्तः पृथक् कट्वाम्लमधुरादिभिन्नं रसमयं पयः दुदुहुः। गिरयः पर्वता दोग्धारः हिमवान् वत्सो येषां तथाभूतास्सन्तः स्वसानुषु पात्रभूतेषु नानाधातून् गैरिकादीन् दुदुहुः॥ २५॥

**विज.** पिशिताशना मांसरक्षाः, भूतेशो भैरवाख्यो रुद्रो, वत्सो येषां ते तथोक्ताः। क्षतजासवं रुधिराख्यं मद्यम्॥ २१॥

अह्यादीनां विषधरत्वसाम्येऽप्यवान्तरविशेषत्वात् पृथगुक्तिः॥ २२॥

गोवृषं नन्दिकेश्वरं, मृगेन्द्रेण सिंहेन, दंष्ट्रिणः क्रव्यादाः प्राणिनो हिंस्राः, क्रव्यमपक्वमांसं, स्वकलेवरे पात्रे दुदुहुरित्यन्वयः। चरं जङ्गममचरं तरुफलम्॥ २३, २४॥

वनस्पतयः तिक्तादिभेदेन बहुत्वाद्रसस्य पृथगित्युक्तं, नानाधातून् सुवर्णादीन्॥ २५॥

---

1. V °हनं   2. T omits तृणं   3. W °रत्रा°   4. A, B, T °वरे

सर्वे स्वमुख्यवत्सेन स्वे स्वे पात्रे पृथक्[1] पयः।
सर्वकामदुघां पृथ्वीं दुदुहुः[2] पृथुभाविताम्॥ २६॥

एवं पृथ्वादयः पृथ्वीमन्नादाः[3] स्वन्नमात्मनः।
दोहवत्सादिभेदेन क्षीरभेदं कुरूद्वह॥ २७॥

ततो[4] महीपतिः प्रीतः सर्वकामदुघां पृथुः।
दुहितृत्वे चकारेमां प्रेम्णा दुहितृवत्सलः॥ २८॥

चूर्णयन् स्वधनुष्कोट्या[5] गिरिकूटानि राजराट्।
भूमण्डलमिदं वैन्यः प्रायश्चक्रे समं विभुः॥ २९॥

अथास्मिन् भगवान् वैन्यः प्रजानां वृत्तिदः पिता।
निवासान् कल्पयाञ्चक्रे तत्र तत्र यथार्हतः॥ ३०॥

ग्रामान् पुरः पत्तनानि[6] दुर्गाणि विविधानि च।
घोषान् व्रजांश्च[7] शिबिरानाकरान् खेटखर्वटान्[8]॥ ३१॥

प्राक्पृथोरिह नैवैषा पुरग्रामादिकल्पना।
यथासुखं वसन्ति स्म तत्र तत्राकुतोभयाः॥ ३२॥

इति श्रीमद्भागवते महापुराणे अष्टादश साहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
चतुर्थस्कन्धे अष्टादशोऽध्यायः॥ १८॥

श्रीध. अनुक्तसर्वसङ्ग्रहार्थमाह[9] - **सर्वे** इति। सर्वे, स्वजातौ यो मुख्यः तेन वत्सेन॥ २६॥

उपसंहरति - **एवमिति**। स्वन्नम् अभीष्टमन्नम्। तदेव[10] क्षीरभेदं[11] दुदुहुः। दोहः पात्रम्॥ २७॥

---

1. M, Ma पृथक्। 2. M, Ma, Ms °मुदुहन् 3. M, Ma, Ms °मुदुहन् 4. W एवं 5. M, Ma, Ms, V, W °नुः को° 6. V पट्टणानि
7. A, B, G, I, J, T, V °जान् स° 8. W °र्प° 9. V omits सर्व 10. A, B, J, Va तमेव 11. V भेदेनैवं

**तत** इति। इमां पृथ्वीम्॥ २८॥

**चूर्णयन्निति**। धनुषोऽग्रेण गिरिश्रृङ्गाणि चूर्णयन्, राजराट् राज्ञां राजा [1-]सर्वेषामाजीविकादानात्[-1]॥ २९, ३०॥

**ग्रामानिति**। ग्रामा [2]अट्टादिशून्याः। पुरो [3]अट्टादिमत्यः। ता एव महत्यः [4]पत्तनानि। दुर्गाणि विविधानि [5-]दुर्गमस्थानानि[-5]। यथाह बृहस्पतिः "औदकं पार्वतं वार्क्षमैरिणं धान्वनं तथा॥" (बृहस्पतिः) इति। घोषान् आभीराणां निवासान्। व्रजान् गवां निवासान्। शिबिरं सेना[6]निवेशस्थानम्। तत्सहितानाकरान् [7]सुवर्णाद्युत्पत्तिस्थानानि। खेटाः कर्षकग्रामाः। खर्वटाः पर्वतप्रान्तग्रामांस्तांश्च॥ ३१, ३२॥

**वीर.** अनुक्तसङ्ग्रहार्थमाह। सर्वे स्वजातौ यो मुख्यस्तेन वत्सेन स्वे स्वे पात्रे सर्वान् स्वापेक्षितान् कामान् दोग्धीति तां सर्वकामदुघां पृथ्वीं पृथक् [8]पृथक् पयः दुदुहुः॥ २६॥

उपसंहरति - **एवमिति**। एवमन्नादाः [9]अन्नाकाङ्क्षिणः पृथ्वादय आत्मनः स्वस्य स्वन्नं समीचीनमन्नं स्वाभीष्टमन्नमित्यर्थः। तदेव क्षीरभेदं दोहः पात्रं दोहादिभेदेन दुदुहुः। हे कुरूद्वह!॥ २७॥

ततो महीपतिः पृथुः प्रीत[10]स्सन् सर्वकामदुघामिमां पृथ्वीं प्रेम्णा दुहितृत्वे चकार दुहितरममन्यतेत्यर्थः। यतोऽयं दुहितृवत्सलः॥ २८॥

ततो राजराट् राज्ञां राजा विभुः समर्थः वैन्यः पृथुः स्व[11]धनुष्कोट्या स्वधनुषोऽग्रेण गिरिकूटानि गिरिश्रृङ्गाणि चूर्णयन् भूमण्डलं प्रायशः समं चक्रे। प्रायोग्रहरणात्तेनासमीकृतमपि क्वचित् क्वचित् दृश्यत इत्यभिप्रेतम्॥ २९॥

अथ दोहनसमीकरणानन्तरं प्रजानां वृत्तिदः जीविकाप्रदः पिता पितृवद्रक्षकश्च भगवान् वैन्यः पृथुः यथार्हतः यथायोग्यं तत्र [12]तत्र [13]अस्मिन् भूमण्डले प्रजानिवासान् कल्पयाञ्चक्रे॥ ३०॥

के ते निवासास्तत्कल्पिता इत्यत्राह - **ग्रामानिति**। ग्रामा हट्टादिशून्याः, पुरः हट्टादिमत्यः, [14-]ता एव महत्यः[-14] पत्तनानि, दुर्गाणि विविधानि औदकपार्वतवार्क्षादिभेदभिन्नानि, घोषान् आभीराणां निवासान्, व्रजान् गवां निवासस्थानानि, शिबिरान् सेनानिवासस्थानानि, [15-]तत्सहितान्[-15] आकरान् स्वर्णोत्पत्तिस्थानानि, खेटान् कृषीवलग्रामान्, [16]खर्पटान् पर्वतप्रान्तग्रामान्, कल्पयामासेत्यन्वयः॥ ३१॥

---

1--1. V omits 2. A, B, J, Va ह° 3. A, B, J, Va ह° 4. V पट्टणानि 5--5. B, J, V, Va omit 6. A, B, J, Va निवास 7. A, B, J, Va स्वर्णादिस्था° 8. T omits पृथक् 9. A, B, T अन्न 10. W omits सन् 11. W धनुः कोट्या 12. A, B, T omit तत्र 13. A, B, T तस्मिन् 14--14. W omits 15--15. W omits 16. W °र्व°

किं पृथोः प्राक् ग्रामादयो नाभूवन् ? नेत्याह । इह भूमण्डले पृथोः प्राक् पूर्वमेषा पुरग्रामादिकल्पना नैव नास्त्येवेत्यर्थः । तत्र पृथुकल्पितग्रमादिषु, नास्ति कुतोऽपि भयं यासां ताः, प्रजा यथासुखं स्वस्वसुखानुसारेण वसन्ति स्म अवसन्नित्यर्थः ॥ ३२ ॥

**विज.** उपसंहरति - **सर्व** इति । स्वजातिषु मुख्यः स्वमुख्यः स एव वत्सस्तेन, सर्वान् कामान् दोग्धीति सर्वकामदुघा ताम् ॥ २६ ॥

एकस्याः पृथ्व्याः क्षीरभेदः कथमत्राभूदत्राह - **एवमिति** । दोहभेदेन वत्सभेदेन आदिशब्दाद्दोग्धृभेदेन च ॥ २७ ॥

राज्ञा किं प्रीतं, कुपितमुत तूष्णीम्भूतम् ? इति संशयावसरो नास्तीत्याह - **तत** इति । लोकगोविलक्षणक्षीरभेददातृत्वात् अत्र प्रीतेरेव सम्भावितत्वात् ॥ २८ ॥

इदानीं भूमेः समीकरणप्रकारं वक्ति - **चूर्णयन्निति** । गिरिकूटानि गिरिशृङ्गाणि "कूटोऽस्त्री शृङ्गमायाद्येष्वद्रिकुञ्चेषुभेदयोः" इति यादवः । क्वचित् क्वचित् गिरिकूटादीनां सत्त्वात् प्राय इत्युक्तम् ॥ २९ ॥

भूमेः समीकरणेन सुखपर्यटनात्परं प्रजानां प्रयोजनं किमकारि राज्ञेति । तत्राह - **अथेति** ॥ ३० ॥

उक्तं विशिनष्टि - **ग्रामानिति** । "ग्रामो बहुजनाकीर्णो राजराजाश्रयं पुरम्" समुद्रसङ्गतनद्युपकण्ठे यवनजनाश्रयः पत्तनम् । जलपर्वतादिना गन्तुमशक्यं स्थानं दुर्गं, गवां स्थानं घोषः, गोपालानां स्थानं व्रजः, "गोष्ठं घोष इति प्रोक्तो व्रजस्तत्पालसंस्थितिः" इत्यभिधानात् । "गोष्ठाध्वनिवहा व्रजाः" (अम.को. 3-187) इति सामान्यवचनमिति ज्ञातव्यं सेना निवेशस्थानं शिबिरं, वैश्यानामाश्रयो नगरं, मृगयोपजीवनं खेटः । आदित्यादिवारमुद्दिश्य[1] यत्र वणिजां योगस्तत् खर्वटाख्यं स्थानं, वस्त्रभार विक्रयस्थानं वा, पाखण्डिनां निवासस्थानं वा ॥ ३१ ॥

इदं पुरादिनिर्माणं पृथोः माहात्म्याविनाभूतमित्याह - **प्राक्पृथोरिति** । किमत इति तत्राह - यथेति अनेनेतः पूर्वं राज्ञां साधुत्वेऽपि सम्बाधया प्रजानां निवाससुखं नास्तीति सूचितम् ॥ ३२ ॥

इति श्रीमद्भागवते महापुराणे परमहंस्यां संहितायां
श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां टीकायां
चतुर्थस्कन्धे अष्टादशोऽध्यायः ॥ १८ ॥



1. M. Ma आप्तादि

# एकोनविंशोऽध्यायः

## मैत्रेय उवाच

अथादीक्षत राजर्षिः[1] हयमेध शतेन सः।

ब्रह्मावर्ते मनोः क्षेत्रे यत्र प्राची सरस्वती॥ १॥

तदभिप्रेत्य भगवान् कर्मातिशयमात्मनः।

शतक्रतुर्न ममृषे पृथोर्यज्ञमहोत्सवम्॥ २॥

यत्र यज्ञपतिः साक्षात् भगवान् हरिरीश्वरः।

[2]अन्वभूयत सर्वात्मा सर्वलोक गुरुः प्रभुः॥ ३॥

अन्वितो ब्रह्मशर्वाभ्यां लोकपालैस्सहानुगैः।

उपगीयमानो गन्धर्वैः मुनिभिश्चाप्सरोगणैः॥ ४॥

[3]सिद्धा विद्याधरा दैत्या [4]दानवा गुह्यकादयः।

सुनन्द नन्द प्रमुखाः पार्षदप्रवरा हरेः॥ ५॥

कपिलो नारदो दत्तो [5]योगेशास्सनकादयः।

तमन्वीयुर्भागवता ये च तत्सेवनोत्सुकाः॥ ६॥

## श्रीधरस्वामि विरचिता भावार्थदीपिका

ऊनविंशेऽश्वमेधाश्वहयप हरणात्पृथोः। इन्द्रं हन्तुं प्रवृत्तस्य धात्रा वारणमुच्यते।

**अथेति**। हयमेधशतेन निमित्तेन अदीक्षत दीक्षितोऽभूत् शताश्वमेधसङ्कल्पमकरोदित्यर्थः। ब्रह्मावर्ते [6-]देवविनिर्मिते देशे[-6] "सरस्वती दृषद्वत्यो र्देवनद्योर्यदन्तरम्। [7]तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते॥" (मनु.स्मृ. 2-17) [8-]इति प्रसिद्धेः[-8]॥ १॥

---

1. A, B, G, I, J, T, W राजा तु 2. M, Ma, Ms अन्वाहू° 3. B, J, M, Ma, Ms सिद्ध° 4. W मा° 5. V योगी° 6--6. A, B, J, Va omit
7. V तत् 8--8. A, B, J, Va omit

**तदिति**। आत्मनः स्वस्य कर्म, अतिशेत इत्यतिशयं अभिप्रेत्य ज्ञात्वा तदिति तं पृथोर्यज्ञमहोत्सवं न ममृषे न सेहे॥ २॥

अतिशयमेव दर्शयति - यत्रेत्यादि[1] सप्तभिः। **यत्रेति**। साक्षादन्वभूयत प्रत्यक्षेणादृश्यत॥ ३, ४॥

**सिद्धेति**। सिद्धादयश्च तं हरिं अन्वीयुरित्युत्तरेणान्वयः॥ ५, ६॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं पृथुर्धरित्र्या गोरूपधरायास्तत्सन्दर्शितोपाय दुग्धौषधिबीजस्समीकृत भूमिः कल्पितप्रजानिवासोऽभूदित्युक्तम्। अथ सङ्कल्पितशताश्वमेधः स्वनुष्ठितैकोनशताश्वमेधः [2-]शत क्रत्वपहृत चरमाश्वमेध[-2] पशुः जिघांसितशतक्रतुः चतुरानन [3-]निदेशेन निवृत्तशतक्रतु[-3] वधो [4]विरत चरम क्रतुः कृतशतक्रतु सख्यः कृतावभृथस्नानः प्राप्तदेव वरो [5]विप्रगणाशासितो दत्त ऋत्विग्दक्षिणः पूजित देवर्षिगणो बभूवेत्याह मुनिरेकोन[6]विंशेन **अथेति**। अथ दोहन समीकरण प्रजानिवासकरणानन्तरं स राजर्षिः पृथुः हयमेधशतेन निमित्तेन आदीक्षत दीक्षितोऽभूत् शताश्वमेध सङ्कल्पमकरोदित्यर्थः। कुत्रेत्यत्राह - ''सरस्वती दृषद्वत्योर्देवनद्योर्यदन्तरम्। तं देव निर्मितं देशं ब्रह्मावर्तं प्रचक्षते'' (मनु.स्मृ. 2-17) इति प्रसिद्धे ब्रह्मावर्ताख्ये, यत्र क्षेत्रे प्राची सरस्वती नदी प्रवहति इति शेषः॥ १॥

भगवान् शतक्रतुरिन्द्रः तत् आत्मनः स्वस्य कर्म, अतिशेते इत्यतिशयम्, अभि प्रेत्य ज्ञात्वा आत्मन इति पञ्चमी वा। पृथोः यज्ञमहोत्सवं न ममृषे न सेहे॥ २॥

कर्मातिशयं प्रपञ्चयन् ब्रह्मावर्तं प्रस्तौति **यत्रेति** सप्तभिः। यत्र महोत्सवदेशे ईश्वरस्सर्वान्त रात्मा षाड्गुण्यपूर्णः सर्वलोकहितोपदेष्टा प्रभुः यज्ञाराध्यः तत्फलप्रदश्च हरिः साक्षादन्वभूयत प्रत्यक्षोऽभूत् तत्र आविर्बभूवेतियावत्॥ ३॥

कथम्भूतोऽन्वभूयत तत्राऽह - ब्रह्म [7]रुद्राभ्यां तथा सभृत्यै र्लोकपालैश्च अन्वितो युक्तः गन्धर्वादिभिः उपगीयमानः अन्वभूयत॥ ४॥

सिद्धादयस्सुनन्दनन्दौ प्रमुखौ मुख्यौ येषां ते हरेर्भगवतः पार्षदप्रवराश्च॥ ५॥

तथा कपिलादयः ये चान्ये भगवतो भक्तास्तेपि तत्सेवने भगवत्सेवने उत्सुका आसक्ताः सन्तः तं भगवन्तमन्वीयुः [8]अनुसृतवन्तः॥ ६॥

---

1. A, B, J, Va यत्रेति 2--2. A, B, T omit 3--3. A, B, T °शनिवृत्तेन्द्र 4. A, B, T विरमित 5. T °शं° 6. A, B, W °रष्टादशेन
7. T शर्वाभ्यां 8. A अनुसृत्य गतवन्तः

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

ब्रह्मार्पित कर्मणा शुद्धान्तः करणस्य पुंसो हरेरापरोक्ष्यं स्यादिति वेदयितुं पृथोर्यज्ञकरण व्याजेन हरेर्माहात्म्यं निरूप्यतेऽस्मिन्नध्याये ''कर्मणा ज्ञानमातनोति'' इति श्रुतेः। तत्र प्रथमतः पृथोर्यज्ञदीक्षाप्रकारमाह - **अथेति**। ''घोटके वीति तुरग तुरङ्गाश्वतुरङ्गमाः। वाजिवाहार्व गन्धर्व हयसैन्धव सप्तयः'' (अम.को. 2-500) इत्यमरः। नाम्ना ब्रह्मावर्ते - ''सरस्वती दृषद्वत्यो रन्तरं देवनिर्मितम्। ब्रह्मावर्तं मानवन्तं विदुर्देशं विचक्षणाः'' (मनु.स्मृ. 2-17) इत्यभिधानम्। प्राचीमैन्द्रीं दिशमुद्दिश्य स्यन्दमाना॥ १॥

अत्र इन्द्रेण स्वनामाभिभूषणौ यज्ञे क्रियमाणे कथं क्षान्तमत्राह - **तदभिप्रेत्येति**॥ २॥

शतक्रतोः कर्मणोऽतिशयमाह **यत्रेति**। सर्वात्मा सर्वव्यापी॥ ३॥

निघण्टुवत्[1] यज्ञपतिरित्यादिनाम्नां बहुत्वकथनेन किमेकेनागतेनेत्यत उक्तम् **अन्वित** इति। अनेनापि राजैश्वर्यं न द्योतितमित्यत उक्तमुपगीयमान इति॥ ४॥

गायकानां किञ्चिदनुगम्य स्वाभिप्रेत मुपेत्य पश्चादन्यतो गमनसम्भवादित्यतो यावद्गम्यमनुगन्तॄनाह - **सिद्धेति**॥ ५॥

तत्त्वविदां अनुगमनमेव तन्माहात्म्यद्योतकमित्यत उक्तं - **कपिल** इत्यादिना[2]। नित्यविरोधिनां दैत्यादीनां अनुगमनं कथं सङ्गच्छत इत्यत उक्तं **भागवता** इति। अनेन दैत्यादयो द्विविधाः सन्तीति ध्वनितं, ये च तस्य हरेः सेवनोत्सुकास्ते चान्वीयुरिति॥६॥

**यत्र धर्मदुघा भूमिः सर्वकाम दुघा सती[3]।**
**दोग्धि[4] स्माभीप्सितानर्थान् यजमानस्य भारत॥ ७॥**

**ऊहुः सर्वरसान्नद्यः क्षीरदध्यन्नगोरसान्।**
**तरवो भूरि वर्ष्माणः प्रासूयन्त मधुच्च्युतः[5]॥ ८॥**

**सिन्धवो रत्ननिकरान् गिरयोऽन्नं चतुर्विधम्।**
**उपायनमुपाजह्रुः[6] सर्वे लोकाः सपालकाः॥ ९॥**

**इति चाधोक्षजेशस्य पृथोस्तु[7] परमोदयम्।**
**असूयन्[8] भगवानिन्द्रः प्रतिघातमचीकरत्॥ १०॥**

1. M. Ma॰ घण्ड॰ 2. M. Ma.॰ दि 3. M. Ma. मही 4. W. दोग्ध्री 5. W, इच्युः 6. M॰ नान्युपा॰ 7. M, Ma, Ms, पृथोर्यज्ञमहोदयम् 8. W. व्युर्भ॰

**श्रीध. यत्रेति**। धर्मदुधा हविर्दोग्ध्री धेनुः[1] सती ॥ ७॥

**ऊहुरिति**। ऊहुर्वहन्ति स्म। सर्वरसान् इक्षुद्राक्षादिरसान् क्षीरं च दधि च अन्नं च पानकादि गोरसः घृतं तक्रं च तांश्च। भूरीणि विस्तृतानि वर्ष्माणि शरीराणि येषां ते। फलादि प्रासूयन्त मधुच्युतः मधुस्राविणस्सन्तः ॥ ८॥

**सिन्धव** इति। चतुर्विधं भक्ष्यं भोज्यं चोष्यं लेह्यं च ॥ ९॥

**इतीति**। अधोक्षजः ईशो नाभो यस्य तस्य[2-] पृथोः[-2] परम उदयोऽभिवृद्धिर्यस्मिं स्तत् कर्म असूयन् असहमानः प्रतिघातं विघ्नं चकारेत्यर्थः ॥ १०॥

**वीर.** हे भारत! यत्र ब्रह्मावर्ते धर्मदुघा घृतादि हविर्दोग्ध्री भूमिः सर्वकामदुघा तत्तदीप्सितान् अनीप्सितांश्च कामान् दुहन्ती यजमानस्य पृथोः अभीप्सितानर्थान् दोग्ध्री स्म[3] दुदुहे ॥ ७॥

नद्यः सर्वरसान् इक्षुद्राक्षादिरसान् क्षीरं दधिचान्नं पानकादि गोरसं घृतं तक्रं च ऊहुः वहन्तिस्म। तरवः भूरीणि विस्तृतानि वर्ष्माणि शरीराणि येषां तथा भूताः मधुश्चुतः मधु स्राविणस्सन्तः प्रासूयन्त पुष्पफलादिक मिति शेषः ॥ ८॥

सिन्धवस्समुद्राः रत्नानां निकरान् समूहान् धृतवन्त इति योग्य क्रियाध्याहारः यद्वा अनुषक्तस्य प्रासूयन्तेत्यस्य प्रकृतोपयुक्तार्थ परत्वम्। गिरयः चतुर्विधं भक्ष्यभोज्यचोष्य[4] लेह्यभेदेन चतुर्विधमन्नं प्रददुः सपालकास्सर्वे जनाः उपायनं साम्मानिकं उपाजह्रुः समर्पित वन्तः ॥ ९॥

अधोक्षजो भगवान् ईशो नाथो यस्य, तस्य पृथोः भगवदवतारभूतस्याप्यावेशावतारत्वाज्जीवाभिप्रायेणऽधोक्षजेशस्ये त्युक्तम्। इत्युक्तविधं परमः उदयो वृद्धिर्यस्मिन् तत्कर्म असूयुरसहमानः[5] प्रतिघातं विघ्नं अचीकरत् अकरोत् निवृत्तप्रे[6]रणात् कृञोणिच् ॥ १०॥

**विज.** धर्मदुघा यज्ञयोग्यपयोदोग्ध्रीति। न केवलमेतावदेव, किन्तु सर्वकामदुघा नैतत्स्तुतिमात्रमनुभवसिद्धमित्याह **महीति**। महित्वान्महनीयत्वाच्च मही ॥ ७॥

गोपालानां रसानां चतुर्विधान्नजनित्वेन कथं तत्सम्भव इत्यत्राह - **ऊहुरिति**। अनेन नदीनां मूर्तिमत्त्वं लक्षयति। जलानां

1. V. Omits धेनुः 2-2. B,J,V,Va. Imit 3. A,B,T. दोग्धि 4. T. चूष्य लेहन 5. A,B,T असूयन् 6. A,B, T, ०ष०

मूर्तिमधार्यमाणानां वोढुमसम्भवात्। "वर्ष्म देह प्रमाणयोः" (अम.को. 3-280) इत्यभिधानात् स्थूल प्रमाणाः ॥ ८ ॥ भक्ष्यं भोज्यं लेह्यं पेयं चेति चतुर्विधं व्ययार्थं द्रव्यं न कोशादुद्धार्यं, किन्तु सर्वैं रानीतमेवालं प्रीत्यापि तस्यातिशुद्धत्वादिति भावेनाह - **उपायनानीति** ॥ ९ ॥

भूमण्डले कोप्यजातशत्रुः नास्ति यतः श्रीनारायणैक देवस्य पृथोरपि यज्ञ विघ्नं शक्रोऽकरोदित्याह - **इतीति**। इति शब्दः प्रकारवचनः उक्त प्रकारयज्ञे महोदय असूयन् असहमानः स्वार्थे वा यत्प्रत्ययः ॥ १० ॥

**चरमेणाश्वमेधेन यजमाने यजुष्पतिम्।**
**वैन्ये यज्ञपशुं[1] स्पर्धन्नपोवाह तिरोहितः ॥ ११ ॥**

**तमत्रिर्भगवानैक्षत्त्वरमाणं विहायसा।**
**आमुक्तमिव पाषण्डं[2] योऽधर्मे धर्मविभ्रमः ॥ १२ ॥**

**अत्रिणा चोदितो[3] हन्तुं पृथुपुत्रो महारथः।**
**अन्वधावत सङ्क्रुद्धस्तिष्ठ[4] तिष्ठेति - चाब्रवीत् ॥ १३ ॥**

**तं तादृशाकृतिं वीक्ष्य मेने[5] धर्मं शरीरिणम्।**
**जटिलं भस्मना च्छन्नं तस्मै बाणं न मुञ्चति ॥ १४ ॥**

**वधान्निवृत्तं[6] तं[7] भूयो हन्तवेऽत्रि रचोदयत्।**
**जहि यज्ञहनं तात महेन्द्रं विबुधाधमम्[8] ॥ १५ ॥**

**श्रीध. चरमेणेति**। वैन्ये यजुष्पतिं विष्णुं यजमाने सति स्पर्धमान इन्द्रः तिरोहितस्सन् अश्वमपहृतवान् ॥ ११ ॥

**तमिति**। त्वरमाणं धावन्तम्। आमुक्तम्[9]। "आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापि न द्धवत्। सन्नद्धो वर्मितस्सज्ज" अम.को. 2-52) इत्यमरसिंहः[10]। पाषण्डं[11] वेषं कवचमिव गृहीतवन्तमित्यर्थः। अधर्मे धर्मविभ्रमः धर्मोऽयमिति भ्रान्तिकरः यः तम् ॥ १२, १३ ॥

---

1. v पतिः 2. A, B, G, I, J, M, Ma, T ° ख ° 3. V सूचितं, W. ज्ञापितो 4. B, सन्नद्धः, V, तं क्रुद्धः 5. M. Ma. ° नेऽधर्म J, MS. V, °ने धर्म 6. M. Ma. °पापान्नि° 7. M, Ma वै 8. M, Ms, Ms, °धिपम् 9. A,B,J,Va Omit आमुक्तम् 10. Aadds पाखण्डं आमुक्तमिव 11. A,B,J,Va पाखण्डं

**तमिति**। न मुञ्चतिस्म॥ १४॥

**वधादिति**। हन्तवे हन्तुं, यज्ञहनं यज्ञं हतवन्तम्॥ १५॥

**वीर.** प्रतिघातकरणमेव प्रपञ्चयति **चरमेणेत्यादिना**। यजुष्पतिं भगवतस्त्रयीपतित्वेपि प्रकृतस्याश्वमेधस्य यजुर्वेद विहितत्वात्तदधिपतित्वा[1]भिप्रायेण यजुष्पतिमित्युक्तम्। यजुष्पतिं भगवन्तं चरमेण शततमेनाश्वमेधेन वैन्ये पृथौ यजमाने आराधयति [2]सति स्पर्धन्स्पर्धमानः [3]इन्द्रः चक्षिङोङित्करणेन अनुदात्ते त्वल्लक्षणस्यात्मनेपदस्यानित्यत्वज्ञापनाच्छत्रादेशः। तिरोहितस्सन् यज्ञ पशुमश्वमपोवाह अपहृतवानित्यर्थः॥ ११॥

तमिन्द्रं विहाय[4]सा आकाशे त्वरमाणं धावन्तं भगवानत्रिर्मुनिः ऐक्षत्। कथम्भूतम्? अधर्मे धर्म विभ्रमः धर्मभ्रान्तिकर जटिलत्वाद्याकार लक्षणो [5]यः पा[6]षण्डः तं आमुक्तं प्रविष्टम्। यद्वा आमुक्तमिव [7]कवचितमिव पाषण्डं पाषण्डरूप[7] कवचमिव [8]गृहीतवन्तमित्यर्थः[8]। कोऽसौ पा[9]षण्डः येन अमुक्तस्तत्राह - य इति। पूर्ववदर्थः॥ १२॥

अत्रिणा ज्ञापितः सूचितः पृथोः पुत्रः सङ्क्रुद्धस्सन् तं पशुहर्तारमन्वधावत् तिष्ठतिष्ठेत्यब्रवीच्च॥ १३॥

तादृशाकृतिं पा[10]षण्डाकृतिं तमश्वहर्तारं वीक्ष्य जटिलं जटाधारिणं भस्मना च्छन्नं हेतुगर्भमिदं विशेषणद्वयम्। जटिलत्वाद्भस्मनाच्छन्न त्वाच्च शरीरिणां मूर्तं धर्मं मेने बभ्रामेत्यर्थः। अतस्तस्मै [11]अश्वहर्त्रे अश्वहर्तारं[11] हन्तुं बाणं न मुञ्चति, मा मुञ्चत्। जटिल [12]त्वादिना रूपेण अधर्मेपि धर्मभ्रमकरेण भ्रान्तस्तस्मै बाणं नामुञ्चदित्यर्थः॥ १४॥

वधादश्वहर्तुर्वधान्निवृत्तं तं पृथुपुत्रं अत्रि भूयः पुनः हन्तुं अचोदयत् प्रेरयामास। चोदनामेवाह हे तात! यज्ञहनं यज्ञ विघ्नकर्तारमत एव विबुधेष्वधमं यज्ञस्य विबुधाराधनरूपस्य हन्तृत्वा[13]त्तेषु अधम मिति [14]अभिप्रायः। महेन्द्रं जहि संहर॥ १५॥

**विज.** कीदृशं विघ्नमकरोत् इत्यत्राह - **चरमेणेति**। चरमेण अन्त्येन शततमेन यज्ञेन यजुष्पतिं यजुर्मन्त्राधिदैवतं हरिं यजमाने सति स्पृधुस्पर्धायामिति धातोः शतृच् प्रयोगेणाऽऽत्मनः शतक्रतुत्वं प्रेतमिति ध्वनयन् इन्द्रो हरेरुल्लङ्घनं नाकरोदिति ज्ञायेते हरेरनभिप्रेतत्वे अश्वापहरणं तत्कटाक्षतो न क्षममिति। "उत्तमश्लोक विग्रहौ" इति (भाग 4-19-36) वक्ष्यमाणत्वात्॥ ११॥

---

1. A,B,T. °रित्यभि° 2. A,B,T, OMIT सति 3. W. OMITS इन्द्रः 4. W, °ख° 5. A,B,T, OMIT यः 6. A,B,T, 0ख0 7-7. A,B,T, °ख° 8-8. A,B,T OMIT 9. A,B,T °ख° 10. A,B,T, °ख° 11-11. W, OMITS 12. A,B,T, °दिरू°' 13. W, OMITS तेषु 14. A,B,T भावः

नन्वेवं तर्हि ऋषीणां त्रिकाल दर्शित्वख्यातिरपहस्तितेति तत्राह - **तमत्रिरिति** । विहायसा गन्तुं त्वरमाणम् । पुनः किमाकारमद्राक्षीदित्यतउक्तमामुक्तमिवेति । पाखण्डरूपमामुक्तं गृहीतमिव स्थितं पाखण्डं लक्षयति योऽधर्म इति । जनानां ज्ञानदुर्बलानां अधर्मे धर्मोऽयमिति विभ्रमो बुद्धिभ्रंशो यस्तत्पाखण्डरूपं ॥ १२ ॥

अत्रिणा दृष्टं चेत्प्रकृते किमागतमत्राह - अत्रिणेति ॥ १३ ॥

अनुधावनेन प्रत्यावर्त्य शक्रेण सह युद्धमभूत्किम् । नेत्याह - **तमिति** । अधर्मशरीरिणं पापदेहिनं मेने इत्यन्वयः । मुञ्चति मुमोच जटा[1] पाखण्डिना सह युद्धं न धर्म इति ॥ १४ ॥

चोरक्रिया मनुवर्तमानस्य पुंसो वधो न दोषायेति मुख्यधर्म विदुषा तत्र प्रेर्यमाणेन भवितव्य मिति जानन् अत्रिः पुनश्च तमचोदयदित्याह - पापान्निवृत्तमिति । वैशब्देन पापशङ्कां निवारयति, गुरोर्वचनमौषधम्'' इति स्मृतेः । विबुधाधिपत्यं चतुर्मुखस्याप्यस्तीत्यत उक्तं महेन्द्रमिति ॥ १५ ॥

**एवं वैन्यसुतः प्रोक्तस्त्वरमाणं विहायसा ।**
**अन्वद्रवदभि[2]क्रुद्धो रावणं[3] गृध्रराडिव ॥ १६ ॥**

**सोऽश्वं रूपं च तद्धित्वा तस्था[4] वन्तर्हितःस्वराट् ।**
**वीरः[5] स्व[6]पशुमादाय पितु र्यज्ञमुपेयिवान् ॥ १७ ॥**

**तत्तस्य चाद्भुतं कर्म विचक्ष्य[7] परमर्षयः ।**
**नामधेयं ददुस्तस्मै विजिताश्व इति प्रभो ॥ १८ ॥**

**उपसृज्य तमस्तीव्रं जहाराश्वं पुनर्हरिः ।**
**चषालयूपतच्छन्नो[8] हिरण्यरशनं विभुः ॥ १९ ॥**

**अत्रिः सन्दर्शयामास त्वरमाणं विहायसा ।**
**कपालखट्वाङ्गधरं वीरो नैनमबोधत[9] ॥ २० ॥**

---

1. M लटा 2. M,MA, MS, धावदति⁰ 3. T,W वारणं मृग ⁰ 4. A, B, G, I, J, T तस्मा अन्त⁰ 5. M,MA, धीरः 6. MS, W, स ⁰
7. M, MA, MS, विलक्ष्य 8. M, MA यूपयोच्छन्नोः, MS, यूपान्तश्छन्नोः, V, W, व्यूपात्तं छन्नो 9. A, B, G, J, MS, T, V ⁰बा⁰

**श्रीध.** [1-]**एवमिति**[-1]। गृध्रराट् जटायुः ॥ १६ ॥

**स इति**। तस्मै हित्वा तदर्थमुत्सृज्य ॥ १७ ॥

**उपसृज्येति**। उपसृज्य सृष्ट्वा तेन सम्यक्[2] च्छन्नस्सन् चषालो यूपाग्रे निक्षिप्तः[3] काष्ठकटकः[4] तद्युक्तात् यूपात् हिरण्य निर्मिता रशना यस्य तं, रशनाया दृढत्वेन च्छेदाशक्त्या रशनासहितमेवोद्धृत्य यूपाग्रान्नीतवानित्यर्थः। विभुस्समर्थः ॥ १९, २० ॥

**वीर.** एवं प्रोक्तो वैन्यसुतः पृथुपुत्रः विहायसा आकाशे त्वरमाणं धावन्तं इन्द्रं वारणं गजं मृगराडिव सिंह इव अत्यन्तं क्रुद्धः अन्वद्रवत् अनु पृष्ठतः अद्रवत् अधावीत्[5] ॥ १६ ॥

स स्वराडिन्द्रः तत्पाषण्डं[6] रूप मश्वञ्च हित्वा अन्तर्हितः तिरोहितः तस्थौ स्थितवान्, स वीरः पृथुपुत्रः पशुम् अश्वम् आदाय गृहीत्वा पितुः पृथोः यज्ञम् उपेयिवान् प्राप्तवान् ॥ १७ ॥

तस्य च पृथुपुत्रस्य तदद्भुतं विस्मयनीयं कर्म इन्द्रजयेनाश्वाहरणरूपव्यापारं विचक्ष्य[7] दृष्ट्वा परमर्षयोऽत्र्यादय स्सर्वे तस्मै पृथुपुत्राय विजिताश्वः विजयेनाऽऽहृतः अश्वो येन स विजिताश्व इत्यन्वर्थं नामधेयं दद्धुः चक्रुः। हे प्रभो! विजितेन्द्रिय! विदुर! ॥ १८ ॥

प्रभुः हरि रिन्द्रः तीव्रं निबिडं तमः उपसृज्य सृष्ट्वा तेन तमसा च्छन्न स्सन् चषालयूपे चषालोऽग्रे क्षिप्तः काष्ठकटकः तद्युक्ता द्यूपा दित्यर्थः। हिरण्यनिर्मिता रशना यस्य तं अश्वं पुनः जहार अपहृतवान् ॥ १९ ॥

पूर्ववद्विहायसा त्वरमाणं इन्द्रं अत्रिर्मुनिः विजिताश्वाय सन्दर्शयामास सन्दर्शितोऽपि वीरो विजिताश्वः एत मिन्द्रं कपाल खट्वाङ्गधरं हेतुगर्भ मिदं, कपालखट्वाङ्गधरत्वात्[8] [9-]नाबोधत न ज्ञातवान्[-9] ॥ २० ॥

**विज.** गृध्रराट् जटायुः ॥ २६ ॥

अत्रेन्द्रोऽसुरजनमोहाय स्वा मिशक्तिं दर्शयन्निवाऽभवदित्याह - सोऽश्व मिति। तदुक्तम् - ''देवा श्शक्ताश्च मोहाय दर्शयेयु रशक्तवत्। ऋषीणां चैव राज्ञाञ्च नहि ते देवता समाः। आज्ञाया वा हरेः क्काऽपि कार्यतो वा क्वचित्क्वचित् (गारुडे) इति यत्र क्काऽपि तु देवैः ऋष्यादिषु'' प्रणिपातादिकं क्रियते सोऽपि तत्सयहरौ मनसा सङ्कल्प्य क्रियत इति तात्पर्यं ज्ञातव्यञ्च। तदुक्तम् - ''प्रणिपातादिकं देवैः ऋष्यादिषु जनार्दने। क्रियतेऽतो न तेषां हि तेजो भङ्गः कथञ्चन। अत्युत्तमाना मवरे तेजोभङ्गो न विद्यते। यथा नराणां तिर्यक्षु प्रायः साम्ये हि स स्मृतः'' (स्कान्दे) इति ऋष्यादिषु स्थिते जनार्दने क्रियत इत्यर्थः ॥ १७ ॥

---

1-1. V, OMITS 2. A, B, J, VA, OMITS सम्यक् 3. VA, विं 4. V, शैक्म 5. A, B, आधाविङ्गः 6. A, B, T, °ख° 7. A, B, T वीक्ष्य
8. A, B, T धारि 9-9. A, B, T नाबाधन न हनवान् ॥

इन्द्रं जितवता पृथोः पुत्रेण लोकसम्मतं किं जयस्तम्भलक्षणं यशः प्राप्त मत्राह - ततस्येति ॥ १८ ॥

पुंसा स्वकार्यसिद्धिपर्यन्तं प्रयत्नवता भाव्यमिति न्याय मनुसन्दधानः इन्द्रः पूर्वस्मा दधिकयत्नं विधाय दुर्जनमोहाय वेषान्तरं विधाया श्व मपाहार्षी दित्याह - उपसृज्ये इति। हरि रिन्द्रः, चषालयूपयो रन्त र्मध्ये च्छन्नो निलीनः "चषालो यूपकटकः" "कुम्ब्वा सुगनावृतिः" (अम.को. 2-417) इत्यभिधानात् दक्षनिर्मितयूपे वलय श्चषालः। हिरण्येन रचिता रशना काञ्ची यस्य तम् ॥ १९-२० ॥

**अत्रिणा चोदित स्तस्मै सन्दधे विशिखं रुषा।**
**सोऽश्वं रूपं च तद्धित्वा तस्था वन्तर्हितः स्वराट् ॥ २१ ॥**

**वीर [1]स्स्वाश्व मुपादाय पितृयज्ञ मथाऽव्रजत्।**
**तदवद्यं हरे रूपं जगृहु र्ज्ञान दुर्बलाः ॥ २२ ॥**

**यानि रूपाणि जगृहे इन्द्रो हयजिहीर्षया।**
**तानि पापस्य [2]षण्डानि लि[3]ङ्गं षण्ड मिहोच्यते ॥ २३ ॥**

**[4]एव मिन्द्रे हरत्यश्वं वैन्ययज्ञ जिघांसया**
**तद्गृहीतविसृष्टेषु पा[5]षण्डेषु मति र्नृणाम् ॥ २४ ॥**

**धर्म इत्युपधर्मेषु नग्न रक्त पटादिषु।**
**प्रायेण [6]सज्जते भ्रान्त्या पेशलेषु च वाग्मिषु ॥ २५ ॥**

**श्रीध.** **वीर** इति। अवद्यं निन्दितं [7-]हरे रिन्द्रस्य[-7] रूपं [8-]ज्ञानदुर्बलाः[-8] मन्दप्रज्ञाः जगृहुः ॥ २१ ॥

तदेव पा[9]षण्डनाम निरुक्त्या दर्शयति **यानीति**। बहुवचनेन च अन्यान्यपि गृहीतानीत्युक्तम् ॥ २३ ॥

तत्प्रभृति [10]पाषण्डमार्गाः प्रवृत्ता इत्याह - **एवमिति**। तेन गृहीतेषु पुन [11]र्विसृष्टेषु ॥ २४ ॥

धर्म इति। नग्नाः जैनाः, रक्तपटाः बौद्धाः आदिशब्देन कापालिकादयः तेषु उपधर्मेषु [12-]धर्मोपमेषु[-12] धर्म एव अय मिति [13]मतिः सज्जत इति द्वयो [14]रन्वयः। पेशलेषु आपा[15]ततो रम्येषु वाग्मिषु हेतूक्तिचतुरेषु ॥ २५ ॥

---

1. A, B, G, I, J, M, MA, MS, T °श्वा° 2. A, B, G, I, J, M, MA, T ख° 3. A, B, G, I, J, M, MA, T ख° 4. M, MA °मिन्द्रो 5. A, B, G, I, J, M, MA, T °ख° 6. W, सज्यते 7-7. B, J, V, VA, OMIT 8-8. B, J, V, VA, OMIR 9. A, B, J, VA, °ख° 10. A, B, J, VA, °ख° 11. A adds पाखण्डेषु 12-12. V, OMITS 13. V, OMITS मतिः 14. V °रेकान्वयः 15. A °नर°

**वीर.** अत्रिणा पुनः स एवेन्द्र इति चोदितो विजिताश्वः रुषा तस्मै इन्द्राय विशिखं बाणं सन्दधे। इन्द्रः अश्वं तद्रूपं कपालखट्वाङ्ग धरत्वादिरूपं च हित्वा अन्तर्हित स्सन्[1] तस्थौ॥ २१॥

अथानन्तरं वीरो विजिताश्वः स्वाश्वं स्वपितु र्यज्ञाङ्ग मश्व मुपादाय गृहीत्वा पितुः पृथो र्यज्ञ मव्रजत्। तत्प्रभृति पाषण्डमार्गः प्रवृत्त इत्याह - **तदवद्य** मिति सार्धै स्त्रिभिः। हरे रिन्द्रस्य तदवद्यं निन्दितं [2-]रूपं जटिलत्वादिरूपं[-2] ज्ञानदुर्बलाः ज्ञानहीनाः जगृहुः॥ २२॥

एतदे[3]वोपपादयति - हयस्याश्वस्य जिघृक्षया ग्रहीतु मिच्छया यानि यानि रूपाणि जग्राह तानि तानि रूपाणि पापस्य [4]षण्डानि समूहा इति वर्णलोपेन निरुक्तानि रूपाणि लिङ्गं षण्डलिङ्गं पापित्वज्ञापकं षण्डं समूह इत्यन्वर्थनाम्ना इहास्मिन् लोके उच्यत इत्यर्थः॥ २३॥

एवं वैन्यस्य पृथोः यज्ञजिघांसया यज्ञविघ्नं कर्तु मिच्छया अश्व मिन्द्रे हरति सति अश्वहरणोपायतया तेन इन्द्रेण गृहीतेषु पुनः पुनः विसृष्टेषु॥ २४॥

उपधर्मेषु धर्माभासेषु अत एव पेशलेषु मृदुलेषु अनुकूलाभासेष्विति यावत्। वाग्मिषु मित मिव सम्यगिव वादिषु नग्न रक्तपटादिषु भावप्रधानो निर्देशः। नग्नत्व रक्तपटा दित्ववत्सु पाषण्डेषु [5]रूपेषु नृणां मति र्धर्म इति भ्रान्त्या प्रायेण प्रायशः [6]सज्जते आसक्ता भवति॥ २५॥

**विज.** कायाच्छिरसः पृथग्भावं कुर्वती शिखा यस्य स विशिखः। ''वि निषेधे पृथग्भावे'' (वैज.को.8-7-6) इति यादवः। एवं विधं शरं दृष्ट्वा किं पराद्रवदिन्द्रो न, किन्तु निलीनोऽभूत्। रूपान्तरेण यज्ञान्तरायकरणायेत्याह - सोऽश्वमिति॥ २१॥

अन्तर्हित इत्यनेन गृहीतरूपं विसृज्य रूपेणान्तर्धानं गम्यते। तत्र पूर्वरूपं किमभू दचेतनस्य चेतनसम्बन्ध एव हानादि क्रियासामर्थ्य मन्यथोच्छ्वसनीभूय नष्टं स्यात्। न तद्युक्तं देवकृतस्य अन्यथात्वादर्शना दत्राह - **तदवद्य**मिति। हरे रिन्द्रस्य ज्ञानदुर्बला अन्यथाज्ञानिन इत्यर्थः॥ २२॥

रूपस्यावद्यत्व माह - **यानीति**। खण्डानि लिङ्गानि, खण्डं समुदायः। किमित्यत उक्तं लिङ्ग मिति। खण्डपदस्य समुदायवाचित्वेऽपि इहाऽस्मिन् प्रकरणे खण्डशब्देन लिङ्ग मुच्यते। अभ्यर्हितत्वा दुभयोः समुदायवाचित्वात्। ''लिङ्गं शेफसि

---

. W, OMITS सन् 2-2. W, OMITS 3. T. °दुप° 4. A, B, T ख° 5. W, OMITS रूपेषु 6. W, सज्यते

वेषेंऽशे चिह्ने बुद्ध्यादि संहतै'' (वैज.को.6-3-30) इत्यभिधानात्। संहतिः समुदायः इत्यर्थः पापस्य वेषो वा। ''अप्यक्षर साम्यान्निर्ब्रूया''दिति निरुक्तिकारवचना देकेनाऽपि प्रकारेण विवक्षितार्थसिद्धिः स्फुटेति॥ २३॥

साम्प्रतं ये वर्तमानाः पाखण्डा एतन्मूला इत्याह - **एवमिति**। मतिः अभिरुचिः अभूदिति शेषः॥ २४॥

कथं धर्म इति निरूप्य स्वयं किं रूपेषु उपधर्मेषु स्वतोऽधर्मत्वेऽपि उपमितधर्मेषु। तदुक्तम् - ''धर्मोपमत्वधर्मो[1] यः उपधर्मः स उच्यते।'' (हरिवंशे) इति चक्षुर्विषयं लक्षण माह - नग्नेति। आदिशब्देन कन्थानरकपाल-ढक्कादिमत्त्वं गृह्यते। तेषा मनुत्सादन माह - प्रायेणेति। सङ्गे निमित्त माह - पेशलेष्विति। पेशलेष्व विचाररमणीयेषु। एतदपि कुत इत्यत उक्तम् - वाग्मि ष्विति। कुतर्क बृंहित शास्त्रवाचालेषु॥ २५॥

**तदभिज्ञाय भगवान् पृथुः पृथुपराक्रमः।**
**इन्द्राय कुपितो बाण मादत्तोद्यत कार्मुकः॥ २६॥**

**तमृत्विजः शक्रवधाभिसन्धितं विचक्ष्य दुष्प्रेक्ष्य[2] मसह्य रंहसा[3]।**
**निवारयामासु रहो महामते न युज्यतेऽत्रान्यवधः[4] प्रचोदितात्॥ २७॥**

**वयं मरुत्वन्त मिहार्थनाशनं ह्वयामहे त्वच्छ्रवसा[5] हतत्विषम्।**
**अयातयामो पहवै[6]स्तम[7]मग्नये प्रसह्य राजन् जुहवाम तेऽहितम्॥ २८॥**

**इत्यामन्त्र्य क्रतुपतिं विदुरास्य र्त्विजो रुषा।**
**स्रुग्घस्ताञ्जुह्वतो[8][9]ऽभ्येत्य स्वयम्भूः प्रत्यषेधत॥ २९॥**

**श्रीब्रह्मा**

**न वध्यो भवता मिन्द्रो यद्यज्ञो भगवत्तनुः।**
**यं[10] जिघांसत[11] यज्ञेन यस्येष्टा स्तनव स्सुराः॥ ३०॥**

**श्रीध.** तदिति। शक्रवधे अभिसन्धितं कृताभिप्रायं प्रचोदितात् पशोः वधा दन्यस्य वधः तव न युज्यते॥ २६-२७॥

---

1. A, B °धमोऽयम् 2. M, MA दुःप्रे° 3. A, B, G, I, J, T °सम् 4. M, MA, वधोऽप्रचोदितः 5. W, त्वद्यशया 6. V हुतै° 7. A, B, G, I, J, T °रनन्तरं 8. M, MA., स्रुङ्नस्तञ्जु° 9. W, °तो वीक्ष्य 10. M, MA तं 11. A, B, G, I, J, T, V °ध्न

तद्वधन्तु वयं करिष्याम इत्याहुः - **वयमिति** । वय मिह [1-]यज्ञे, अर्थं पशुं नाशयतीत्यर्थनाशनं[-1] त्वत्कीर्त्यैव हतप्रभ मिन्द्र माह्वयामहे । कैः ? अयातायामैः अगतवीर्यैः [2-]उपहुतैः[-2] आह्वानमन्त्रैः । अनन्तरं च ते तव अहितं जुहवामः होष्यामः ॥ २८ ॥

**इतीति** । अस्य पृथोः सृक् हस्ते येषां तान् ॥ २९ ॥

**नेति** । यमिन्द्रं यज्ञेन [3-]यजनेन[-3] जिघांसथ । यज्ञेन इष्टा स्सर्वे सुराः यस्य तनवः स इन्द्रः भवताम् [4]**अवध्यः** वधार्हो न भवति । यत् यस्मात् यज्ञो नाम अय मिन्द्रः भगवत स्तनुः अवतारः । "स यामाद्यै स्सुरगणै रपा त्स्वायम्भुवान्तरम्" (भाग. 1-3-12) "[5-]तत स्सप्तम आकूत्यां रुचे र्यज्ञोऽभ्यजायत[-5] । (भाग.1-3-12) इत्युक्तत्वात् ॥ ३० ॥

वीर. तत् इन्द्रकृतं क्रतुविघ्न मभिज्ञाय ज्ञात्वा अपरिमित पराक्रमः पृथुः कुपित स्सन् उद्यतं कार्मुकं धनुर्यस्य सः, इन्द्राय बाण मादत्त । इन्द्रं हन्तुं बाणं गृहीतवानित्यर्थः ॥ २६ ॥

शक्रवधे अभिसन्धितं कृताभिप्राय मत एव क्रोधेन दुष्प्रेक्ष्य मसह्यं परैः सोढु मशक्यं रंहो बलं वेगश्च यस्य तं, पृथु मृत्विजः अत्र्यादयः निवारयामासुः । निवारणमेवाह - अहो ! महामते ! प्रचोदिता द्विहिता त्पशो र्वधात् अन्यस्य वधस्तु न युज्यते ॥ २७ ॥

तद्वधन्तु वयं करिष्याम इत्याहुः - वयमिति । इहाऽर्थनाशनं यज्ञनाशकं त्वत्कीर्त्यैव हतप्रभं मरुत्वन्त मिन्द्रं वय माह्वयामहे कैः ? अयातयामैः अगतवीर्यैः उपहवैः आह्वानमन्त्रैः, अनन्तरं च हे राजन् ! ते तव अहितं शत्रुं च मिन्द्रं प्रसह्य मन्त्रबलेन अग्नये जुहवाम, पशु पुरोडाश मिवाग्नौ होष्यामः ॥ २८ ॥

इति इत्थं क्रतुपतिं पृथु मामन्त्र्य विज्ञाप्य हे विदुर ! अस्य पृथोः ऋत्विजः स्रुक् हस्ते येषां तान्, रुषा क्रोधेन जुह्वतः होमं कुर्वाणान् स्वयम्भू श्चतुराननः अभ्येत्य आगत्य प्रत्यषेधत निवारयामास ॥ २९ ॥

प्रतिषेध मेवाह - भवता मार्त्विज्ये कर्मणि अधिकृताना मिन्द्रो वध्यो न भवति, कुतः ? यत् यस्मात् यज्ञः भगवत स्तनुः शरीरं तथा सुराश्च यस्य भगवतः इष्टाः निरतिशय प्रीति विषयाः तनवः । तत्कथं यज्ञेन [6-]भगवच्छरीरभूतेन यं[-6] भगवच्छरीरभूत मिन्द्रं जिघांसथ हन्तु मिच्छथ ॥ ३० ।

---

1-1. A, B, J, VA यज्ञनाशकं 2-2. A, B, J, V, VA OMIT 3-3 B, J, V, VA, OMIT 4. A, B, J, VA OMIT अवध्यः 5-5. V OMITS
6-6. A, B, T omit

**विज.** एव मस्या मवस्थायां पृथुना कृतः पराक्रमो न श्रूयत इति तत्राह - **तदभिज्ञायेति** ॥ २६ ॥

विहितहिंसां विनाऽन्यहिंसोद्यमे तत्त्वविदो निद्रिताः किम् ? तत्राह - ऋत्विज इति। कुतो न युक्त इत्यत उक्तम् अप्रचोदित इति, अविहितत्वात् ॥ २७ ॥

कथं तर्हि तन्निग्रहोपाय इति तत्रोच्यते - **वय मिति**। अयातयामोपहवै रन्यत्र। प्रयुक्तत्वेनागतसारै र्मन्त्रैः मरुत्वन्त मिन्द्रम् अर्थनाशनं यज्ञाख्यप्रयोजन द्रुहम्। आहूय किं कुर्वन्तीति तत्रोच्यते - तमग्नय इति। ते तवाऽहितम्।

नन्विन्द्रे निधनं गते यज्ञ एव न स्यात्, मन्त्राणां तद्विषयत्वात्। 'मरुत्वन्तं सख्याथ हवामहे'' (ऋक्.सं.) इति श्रुतेः। अतोऽत्र धर्मरहस्यवेदी कोऽपि नाऽभूदिति सभादोषं परिहरतो ब्रह्मण उक्ति प्रकारं वक्ति **इतीति**। क्रतुपतिं पृथुम्। अस्य पृथोः सम्बन्धिनः म्रुङ्न्यस्तं हविः मन्त्रशक्त्येति शेषः ॥ २९ ॥

किमाकारः प्रतिषेध इति तत्राह - **न वध्य** इति। कुतो न वध इत्यत उक्तम् - यद्यज्ञ इति। य द्यस्मात् भगवतो हरे स्तनुः यज्ञः। अनेन इन्द्रस्यावध्यत्वे किमायात मत्राऽऽह - यस्येति। सुराः इन्द्राद्या हरे रिष्टा स्तनवो विशेषसन्निधानयोग्या, यस्मा त्तस्मात्तस्येष्ट तनुत्वा दस्मिन् यज्ञे तमिन्द्रं न जिघांसत। इन्द्रजिघांसया हरेरप्रीत्या यज्ञ एव न स्या दित्यर्थः। यद्वा यज्ञो भगवत इन्द्रस्य तनुः यदत्रेष्टाः सुराश्च यस्येन्द्रस्य तनवः तस्मात् अस्मिन् यज्ञे तं न जिघांसतेति ॥ ३० ॥

**तदिदं पश्यत महद्धर्मव्यतिकरं द्विजाः।**
**इन्द्रेणानुष्ठितं राज्ञः कर्मै[2]त द्विजिघां[3]सता ॥ ३१ ॥**
**[4-]पृथुकीर्तेः[-4] पृथो भूर्या[5]त्तर्ह्योकोनशतक्रतुः।**
**अलं ते क्रतुभिः स्विष्टै[6]र्य द्भवा न्मोक्षधर्मवित् ॥ ३२ ॥**
**[7]नैवात्मनो महेन्द्राय रोष माहर्तु मर्हसि।**
**उभावपि हि भद्रं ते उत्तमश्लोक विग्रहौ ॥ ३३ ॥**
**माऽस्मिन् महा[8]भाग कृथाः स्म चिन्तां निशामयास्मद्वच आदृतात्मा।**
**यद्ध्यायतो दैवहतं तु[9] कर्तुं मनोऽतिरु[10]ष्टं विशते तमोऽन्धम् ॥ ३४ ॥**

---

1. A, B, यत्रेष्टाः 2. M, MA ०द्धि 3. M, MA ०या 4-4. M, MA, MS पृथुकीर्तिः पूपृथो ! भूयाः 5. M, MA, MS त्वं ह्योकोन 6. M, MA, MS शिष्टै 7. A, B, G, I, J, MA, MS, J ने 8. A, B, G, I, J, M, MA, T, राज 9. A, B, G, I, J, T, W ०न० 10. M, MA, MS कष्टं

**क्रतु र्विरमता मेष देवेषु दुरवग्रहः ।**
**धर्मव्यतिकरो यत्र पा[1]षण्डै रिन्द्रनिर्मितैः ॥ ३५ ॥**
**एभि [2]रिन्द्रोपसंसृष्टैः [3]पाषण्डै र्हारिभि र्जन[4]म् ।**
**ह्रियमाणं विचक्ष्वै[5]नं यस्ते यज्ञध्रुगश्वमुट् ॥ ३६ ॥**

**श्रीध.** अतो बलीयसाऽनेन सख्य मेव कर्तव्य मन्यथा भूयः पा[6]षण्डं स्रक्ष्यती त्याशयेनाह - **तदिति** । तदिद मिन्द्रेणानुष्ठितं महदन्याय्यं पश्यत । किमित्यपेक्षाया माह । धर्मस्य व्यतिकरं विपर्ययं पा[7]षण्डपथम् ॥ ३१ ॥

तर्हि किमत्र युक्त मित्यत आह - **पृथुकीर्ते** रिति । एकेनोनं शतं यस्मिं स्तादृशः [8]क्रतुः [9]क्रतुप्रयोगः पृथो र्भूयान् । पृथुकीर्तिः पृथु रिति पाठे एकोनशतं क्रतवो यस्य तादृशोऽपि पृथोः महेन्द्रा त्पृथुकीर्तिः भूया दित्यर्थः । तदेव मृत्विजः प्रति उक्त्वा पृथुं प्रत्येवाह अन्त मिति ॥ ३२ ॥

आत्मनैवाऽऽत्मने महेन्द्राय रोषं कर्तुं नाऽर्हसि तत्र हेतुः उभावपीति ॥ ३३ ॥

**माऽस्मिन्निति** । तथाऽपि क्रतुसमाप्ति मेव ध्यायन्तं प्रत्याह । अस्मिन् यज्ञविघ्ने चिन्तां मास्म कृथाः । य द्यस्मात् दैवहतं कार्यं कर्तुं ध्यायतो मनो नु निश्चित मतिरुष्टं सत् अन्धं तमो मोहं विशति, न तु शान्तिं लभते ॥ ३४ ॥

**क्रतु** रिति । अत एव तव क्रतु र्विरमतु । नन्विन्द्रः किमि[10]ति न निवार्यतेऽत आह यतो देवेषु [11-]दुरवग्रहः[-11] दुराग्रहो भवतीति यत्र क्रतौ ॥ ३५ ॥

इन्द्र दुराग्रहकृत मनर्थं पश्येत्याह - एभिरिति । एभिरिन्द्रेणोपसंसृष्टै रधिष्ठितैः हारिभिः चित्ताकर्षकैः । य इन्द्र स्तेऽश्वं मुष्णातीति तथा यज्ञाय द्रुह्यतीति तथा । तेन सृ[12]ष्टैः ॥ ३६ ॥

**वीर.** हे द्विजाः ! राज्ञः पृथो रेतद्धर्मरूपं कर्म जिघांसता नाशयितु मिच्छता इन्द्रेणाऽनुष्ठितं धर्मव्यतिकरः [13]संकरः पाषण्डात्मकं महदन्याय्यं पश्यत ॥ ३१ ॥

---

1. A, B, G, I, J,M, MA, T °ख° 2. W, °रिन्द्राव 3. A, B, G, I, J, M, MA, T °ख° 4. MS. °नै: 5. M, MA, MS °तत् 6. A, B, J, VA °ख°
7. A, B, J, VA, °ख° 8. A OMITS क्रतुः, V, OMITS क्रतु 9. A, B, J, VA OMIR पृथुः 10. A, B, J, VA, OMITS इति
11-11. A, B, J, VA, OMITS 12. V. संसृष्टैः 13. A, B, T, OMIT सङ्करः

तर्हि तथा चेत् पृथुकीर्तेः विपुलकीर्तेः पृथोः एकेन ऊनं शतं यस्मिन् तादृशक्रतु प्रयोगः[1] एकोनशतक्रतु रपि पृथुः महेन्द्रात् पृथुकीर्तिः भूयादित्यर्थः । पृथुकीर्तिः पृथु रिति पाठे एकोनशतं क्रतवो यस्य तादृशः पृथुर्भूया दित्यर्थः । पृथुं सान्त्वयति ते त्वया स्विष्टैः सम्यगनुष्ठितैः एतावद्भिः क्रतुभि रलं यत् यस्मात् भवान् मोक्षधर्मवित् मुमुक्षोः रागाद्यपेत मेव कर्मानुष्ठानं युक्त मिति भावः ॥ ३२ ॥

आत्मना मनसा रोषं महेन्द्राय आहर्तुं स्वीकर्तुं त्वं नार्हसि, हि यस्मात् त्वं महेन्द्र श्चेति उभा वपि उत्तमश्लोकस्य भगवतो विग्रहौ शरीरभूतौ अतः नाऽन्योन्यं विरोधो युक्त इति भावः । ते तुभ्यं भद्रं भूयात् ॥ ३३ ॥

हे महाभाग ! अवहितमना मद्वचो निशामय श्रुणु अस्मिन् यज्ञविघ्ने चिन्तां मास्म कृथाः, यत् यस्मात् दैवहतं कार्यं कर्तुं ध्यायतः पुरुषस्य मनः नु निश्चित मिति रुष्ट मन्धं तमः मोहं विशति न तु शान्तिं लभते ॥ ३४ ॥

अत एव तव क्रतु र्विरमताम् । नन्विन्द्रः किं न निवार्यते तत्राह । यतो देवेषु दुरवग्रहो भवति यत्र क्रतौ इन्द्रनिर्मितैः पाषण्डै र्धर्मव्यतिकरोऽभवत् ॥ ३५ ॥

इन्द्रदुराग्रहकृत मनर्थं पश्येत्याह । एभि रिन्द्रेणावसृष्टैः[2] कल्पितैः पाषण्डै र्हारिभि श्चित्तापकर्षकैः ह्रियमाणां स्ववशीक्रियमाणं जनं विचक्ष्व पश्य य स्ते तव यज्ञध्रुक् यज्ञनाशकः अश्वं मुष्णाति अपहरतीति तथा ॥ ३६ ॥

**विज.** भीषयन्निव वक्ति - **तदिद** मिति । इन्द्रेण शतक्रतुत्वहानिलक्षण भीत्यैतदनुष्ठित मिति ध्वनयति इन्द्रेणेति । पृथो राज्ञ एतत्कर्म जिघांसया ॥ ३१ ॥

इदानीं पृथु मभिवदति - **पृथुकीर्तिरिति** । हे पृथो ! त्व मेकोनशतक्रतु रिति । पृथुकीर्तिः प्रख्यातकीर्ति र्भूया इत्यन्वयः । हि शब्देन त्वमेवैवंविधकीर्तिमान्नाऽन्यः इति स्फोटयति[3] । शक्रः शतक्रतु र्भूया दहं त्वदाज्ञया एको त्तरशतक्रतु र्भूयास मित्येव मभिसन्धिः स्या दत्राह - **अलं ते इति** । ते शिष्टै रेकद्वित्रैः क्रतुभि रधिकः स्यामिति बुद्धि रलं तिष्ठतु "अलं तु भूषणे शक्तौ पर्याप्तौ विनिवारणे" (वैज.को. ८-7-13) इति यादवः । तव[4] तदेव भूषण मिति भावेनाह - यद्भवानिति । मोक्षधर्म स्तारतम्यादि लक्षण स्तं वेत्तीति यद्यस्मा त्तस्मा न्निवृत्तिधर्मज्ञ इति वा । अनेन पृथुजीवा दिन्द्रस्यात्युत्तमत्वं सूचितमिति ज्ञायते ॥ ३२ ॥

फलित माह - **नैवात्मनेति** । त्वत्सन्निहित हरे र्विशेष निवास हेतुत्वा दात्मन इत्युक्तम् । एतदेव विशिनष्टि - उभाविति ।

---

1. W, °गं 2. W. °णोप 3. A, °र° 4. A, °दै°

उत्तमश्लोकस्य हरेः विशेषस्थितिहेतु विग्रहो देहो ययो स्तौ तुभ्यं भद्र मस्तु हरेः सन्निधान विशेष पात्रत्वात्। अन्योन्यं जय पराजयाः न वक्तव्याः ॥ ३३ ॥

रोष शमनमेव कर्तु मुचित मन्यथा चिन्तया देहनाश स्तव स्यादित्याह - माऽस्मिन्निति। यद्दैवहतं कार्यं तत्कर्तु मुपायं ध्यायतः पुंसो मनोऽतिकष्ट मन्धं तमो विशते। तु शब्देन लोकद्वयेऽप्यनर्थपरम्परां सूचयति। हेत्वर्थो वा तस्मा दस्मिन् कार्ये चिन्तां स्मृत्वा मा कृथाः इत्यन्वयः। "स्मृते वृत्ते निषेधे स्म" (वैज.को. 8-7-7) इति यादवः। अथैत त्कुर्वित्याह निशामयेति। निशामय श्रुणु ॥ ३४ ॥

किं तदत्राह - **क्रतुरिति**। न केवलं क्रतो र्विरमेण पूर्यते; किन्तु देवेषु दुरवग्रहो विरमतां देवेषु कुपितेषु त्वद्राष्ट्रे वृष्टिविघातोऽपि स्या दत स्तद्दुरवग्रहविरामः कर्तव्य इत्यर्थः। क्रतुविशेषणं वा। कुपितदेवविषयो दुष्टोऽवग्रहो यस्मा त्स तथा देवप्रीत्या सुवृष्ट्यर्थं पुरुषै र्यज्ञोऽनुष्ठीयते। तत्र देव प्रतिहते क्रतौ क्रियमाणे तदप्रीत्याऽनावृष्ट्यां व्रीह्याद्यौषध्यनुत्पत्त्याऽन्नाभावेन प्राणिनां प्राणधारणोपायाभावेन देहवियोगलक्षणो विनाशः स्या दिति। "व्याङ्परिभ्यो रमः, (अष्टा 1-3-83) इत्यनेन विहित परस्मैपद प्रयोगं विहाय स्वार्थहानि सूचनाय विरमता मित्यात्मनेपदप्रयोगः। इतोऽपि क्रतु र्विरमत्वित्याह धर्मव्यतिकर इति। यत्र यस्मिं श्चरमा श्वमेधे क्रियमाणे सति इन्द्रनिर्मितैः पाखण्डै र्धर्मव्यति करोऽधर्मे धर्मबुद्धया धर्मनाशः स्यात् ॥ ३५ ॥

धर्मव्यतिकरं प्रत्यक्षतोऽपि पश्ये त्याह - **एभिरिति**। हारिभि र्वशीकरणसमर्थै ह्रियमाणं संगृह्यमाणं मेत त्कर्म विचक्ष्व पश्य। कोऽसा विन्द्र इत्यत आह - य इति। यज्ञं द्रुह्यतीति यज्ञधृक्। अश्वं मुष्णातीति अश्वमुट् स इन्द्र इत्यर्थः ॥ ३६ ॥

**भवान् परित्रातु मिहावतीर्णो धर्मज्ञ[1] नाना समयानुरूपम्।**
**वेनापचारा दवलुप्त मद्य तद्देहतो विष्णुकलाऽसि वैन्य[2] ॥ ३७ ॥**
**स त्वं विमृश्यास्य[3] भवं प्रजापते[4] सङ्कल्पनां[5] विश्वसृजां[6] पिपीपृहि।**
**ऐन्द्रीं च माया मुपधर्ममातरं प्रचण्डपाषण्डपथं[7] प्रभो जहि ॥ ३८ ॥**

---

1. A, B, G, I, J, T धर्मं जनानां; M, MA, MS धर्मं च नाना 2. MS, W, वैन्यः 3. M, MA, °भिभवं 4. M, MA, MS पतेः
5. A, B, G, I, J, T °ल्पनं, M, MA, MS, °ल्पितं 6. M, MA, MS सृजोऽतिपी° 7. A, B, G, I, J, M, MA, T °ख°

## मैत्रेय उवाच

**इत्थं स लोकगुरुणा समादिष्टो विशाम्पतिः ।**

**तथा च [1]कृतवान् सख्यं मघोनापि च सन्दधे ॥ ३९ ॥**

**कृताव[2]भृथ्यस्नानाय पृथवे भूरि कर्मणे ।**

**[3]वरान् ददु स्ते वरदा ये तद्बर्हिषि तर्पिताः ॥ ४० ॥**

**विप्राः सत्याशिषस्तुष्टाः श्रद्धया लब्धदक्षिणाः ।**

**आशिषो युयुजुः क्षत्तः [4]आदिराजाय [5]सत्कृ[6]ताः ॥ ४१ ॥**

**[7]त्वया[8]ऽऽहूता महाबाहो सर्व एव समागताः ।**

**पूजिता दानमानाभ्यां पितृदेवर्षिमानवाः ॥ ४२ ॥**

इति श्रीमद्भागवते महापुराणे अष्टादश साहस्र्यां

श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां

चतुर्थस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥

**श्रीध.** ततो मम किमिति चे त्तत्राह - **भवानिति** द्वाभ्याम् । सांख्ययोगदिनानासिद्धान्तानुरूपं धर्मं वेनस्यान्याया लुप्तं परित्रातुं तद्देहा द्विष्णोः कलैव त्व मवतीर्णोऽसि ॥ ३७ ॥

**स इति** । हे [9-]प्रजापते[-9] अस्य विश्वस्य [10]भवम् उद्भवं विचार्य यैः उत्पादितोऽसि तेषां विश्वसृजां सङ्कल्पं [11-]व्यवसितं[-11] पिपीपृहि [12]इति आर्षः प्रयोगः पूरये [13]त्यर्थः । प्रचण्डो [14]यः पाषण्डमार्गः सैव ऐन्द्री माया [15-]उपधर्ममाता अधर्मजननी[-15] तां जहि [16]विनाशय ॥ ३८ ॥

**इत्थ मिति** । तथा च कृत्वा यज्ञाग्रहं हित्वा वात्सल्यं स्नेहं च कृत्वा इन्द्रेण सह सन्धानं च कृतवान् ॥ ३९ ॥

**कृतेति** । कृत मवभृथ सम्बन्धि स्नानं येन स तस्मै ॥ ४०, ४१ ॥

---

1. A, B, G, I, J, T, V कृत्वा वात्सल्यं 2. A, B, G, I, J, T भृया 3. V वरं 4. M, राज 5. MS, सत्कथाः 6. MS. adds सदस्याः This Vesseis Mot Found in M, Ma 7. M, MA तथाऽऽहनाः 8. M.Ma. °ऽऽहनाः 9-9. V omit 10. A, B, J, VA, omit भवम् 11-11. A, B, J, VA, omit 12. A, B, J, VA, omit 13. A, B, J, VA °ख° 14. V स एव 15-15. A, B, J, VA उपधर्मजननी 16. B, J, V, VA, omit

तंतः[1] तुष्टानां वाक्यं त्वयेति ॥ ४२ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्री श्रीधरस्वामिविरचितायां भावार्थदीपिकायां

व्याख्यायां एकोनविंशोऽध्यायः ॥ १९ ॥

**वीर.** ततो मम किमिति चेत्[2] तत्राह - **भवानिति** द्वाभ्याम्। नाना समयानुरूपं विविधसिद्धान्तानुरूपं धर्मं वेनस्या पचारा दन्याया दवप्लुतं परित्रातुं अद्य अधुना तस्य वेनस्य देहतः इह लोकेऽवतीर्णः वैन्यः वेनपुत्रोऽपि त्वं विष्णुकलाऽसि[3] विष्णो रंशभूतोऽसि ॥ ३७ ॥

स विष्णुकलाभूत स्त्व मस्य जगतो भव मुत्पत्तिं विमृश्य विचार्य हे प्रजापते! विश्वसृजां सङ्कल्पानां[4] सङ्कल्पं पिपीपृहि पूरय। येभ्यो विश्वसृड्भ्योऽस्य जगत युक्त मित्यभिप्रायेण प्रजापते इति सम्बोधनं कृतम्। प्रचण्डो यः पाषण्डमार्गः सैवेन्द्री माया उपधर्मस्य माता जननी तां जहि प्रभो! तथा कर्तुं समर्थ स्त्व मित्यभिप्रायेण प्रभो इति सम्बोधनम् ॥ ३८ ॥

उपसंहरति - **इत्थमिति** पञ्चभिः। इत्थ मेवं लोकगुरुणा ब्रह्मणा[5] सम्यगादिष्टो दिशाम्पतिः दिक्पतिः स पृथुः मघोना इन्द्रेण सह तथा च ब्रह्मोक्तरीत्या सख्यं कृतवान्[6] तेनैव च सन्दधे सन्धिं कृतवान् ॥ ३९ ॥

कृत मवभृथसम्बन्धिस्नानं येन तस्मै, भूरिकर्मणे विपुलव्यापाराय पृथवे तस्य पृथो र्बर्हिषि यज्ञे ये तर्पिता स्ते वरदा देवा वरान् ददुः ॥ ४० ॥

सत्याः फलाऽविनाभूताः आशिषः आशीर्वादाः येषां ते विप्राः श्रद्धया प्राप्तदक्षिणाः[7] अत एव तुष्टाः पुनश्च सत्कृताः हे क्षत्तः। आदिराजाय पृथवे आशिषः युयुजुः कृतवन्तः ॥ ४१ ॥

हे महाबाहो! विदुर! तथाऽन्ये ये तत्र यज्ञे समागता स्ते सर्वे आदृताः प्रीतिविषयीकृताः यथायोग्यं दानमानाभ्यां[8] पूजिताः पित्रादयः ॥ ४२ ॥

---

1. A, B, J, VA, omit ततः 2. A, B, T omit चेत् 3. W, omits कृतं 4. A, B, T, °नं 5. A, B, T, omit ब्रह्मणा 6. A, B, T कृतं 7. A, B, T आवाप्त 8. W सम्माना°

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां एकोनविंशोऽध्यायः ॥ १९ ॥

**विज.** धर्मावनार्थ मवतीर्ण त्वाच्च तस्य नाशप्रयत्ने महानतिक्रम इत्याशयेनाऽऽह - **भवानिति** । च शब्दो धर्मविरोधि परिहारार्थ मपीति ग्राह्यम् । नाना समयानुरूपं नानाविधशास्त्रानुसृतं वेनापचारा द्वेनाख्यापचारा दवलुप्तं नष्टं तस्य वेनस्य देहतः "अहं कः" इति भ्रान्ति र्माभूदित्यत स्तत्स्वरूप मुपदिशति विष्णुकलेति । हे वैन्य ! अनेन विष्णोः सत्त्वेन स्थितिहेतुत्वात् तत् कलाविशिष्टत्वात् तद्धर्मविरुद्धाचरणं न युक्त मिति सूचयति ॥ ३७ ॥

उक्तोपसंहारमुखेन कर्तव्यं विधत्ते **सत्त्व मिति** । यस्मा द्धर्मावनार्थ मवतीर्णोऽसि तस्मात्स त्वं प्रजापते रिन्द्रस्याभिभवं त्वच्चिकीर्षितं शतक्रतुत्वं विमृश्य[1] मदनुष्ठिते[2] धर्मविरोधः स्यादिति मया तन्नकार्य मिति विचार्य विश्वसृज इन्द्रस्य सङ्कल्पितं पृथुना शतक्रतुत्वं न विधेय मिति निरूपित मति पिपीपृहि अत्यन्तं पूरयेत्यन्वयः । इन्द्रस्य विरोधाकरणेऽभितः सर्वतो भवं शुभं भवतीति विमृश्य विश्वसृजः प्रजापते र्मम तवैकोनशतक्रतुत्वं सङ्कल्पित मति पिपीपृहीति वा । पृ-पालन पूरणयो रिति धातुः । प्रचण्डस्य पाखण्डस्य, पन्थान मैन्द्री मिन्द्रनिर्मिता मुपधर्मस्य मातरं जनयित्रीं मायाञ्च जहि विशिष्टधर्माचरणेन विनाशये त्यन्वयः ॥३८॥

सात्त्विकप्रधानत्वा त्पृथुना चतुर्मुखोक्तं गृहीत मित्याह - **इत्थमिति** । मघोनेन्द्रेण ॥ ३९ ॥

यज्ञान्तोऽवभृथ स्तत्प्रभाव मावभृथ्यं कृत मावभृथ्यं स्नानं येन स तथोक्त स्तस्मै ॥ ४० ॥

एतदेव विशिनष्टि **विप्रा** इति । सत्याशिषोऽभीष्टसाधनसमर्थ शुभवाक्यप्रबन्धाः आशीर्दानलक्षण एव फलाविर्भाव प्रदर्शनाय युयुजु रित्युक्तम् । फल नित्यसम्बन्धार्थं वा ददातेः कालान्तरेऽपि फलप्राप्ति संशयहेतुत्व सम्भवात् ॥ ४१ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां

टीकायां एकोनविंशोऽध्यायः ॥ १९ ॥

---

1. A. B. °शन् 2. A omits मत्

# विंशोऽध्यायः

## मैत्रेय उवाच

भगवान[1]पि वैकुण्ठः साकं मघवता विभुः।
यज्ञैर्यज्ञपतिः [2]स्विष्टो यज्ञभुक् तमभाषत॥ १॥

[3-]श्री भगवानुवाच[-3]

एष [4]तेऽकार्षीद्भङ्गं हयमेधशतस्य [5]ह।
क्षमापयत आत्मानममुष्य क्षन्तुमर्हसि॥ २॥

सुधियः साधवो लोके नरदेव नरोत्तमाः[6]।
नाभिद्रुह्यन्ति भूतेभ्यो [7]यर्ह्यनात्मा कलेबर[8]म्॥ ३॥

पुरुषा यदि मुह्यन्ति त्वादृशा देवमायया।
श्रम एव परंजातो दीर्घया वृद्धसेवया॥ ४॥

अतः [9]कायमिमं विद्वान विद्याकामकर्मभिः।
[10]आरब्ध इति नैवास्मिन् प्रतिबुद्धो[11]ऽनुषज्यते॥ ५॥

## श्री श्रीधरस्वामिविरचिता भावार्थदीपिका

विंशेतु विष्णुना साक्षात्पृथोर्यज्ञेऽनुशासनम्। वरदानप्रसङ्गेन प्रीतिश्चान्योन्यमीर्यते।

भगवानिति। मघवता साकम् इन्द्रेण सह वर्तमानः॥१॥

एष इति। आत्मानं [12-]त्वां[-12] क्षमापयतः क्षमां कारयतः अमुष्य [13]इन्द्रस्य [14-]त्वमपि[-14] क्षन्तुमर्हसि॥२॥

---

1. M, MA, ⁰वाञ्चापि 2. A, B, G, J, T ⁰स्तुष्टो 3-3. MS श्रीवैकुण्ठः, W, OMITS 4. M, MA, MS, ते ह्यकार्षी⁰; A, B, J, T तेऽकारर्षीं ; G, I तेऽकार्षो⁰; V तेऽकारिष⁰ 5. W हि 6. M, MA ⁰म ! 7. A, B, G, I, J, T, V यर्हि नात्मा 8. W, ⁰रः 9. M, MA, MS एवं इमं 10. M, MA, MS आरव्धमिति 11. M, MA, न सज्ञते ; A, B, G, I, J, T, MA, V ⁰ऽनुषज्जते 12--12. A, B, J, Va omit 13. B, J, V, Va omit इन्द्रस्य 14--14. V omits

**सुधिय** इति। यर्हि यस्मात् कलेबरमात्मा न भवति अतस्तदभिमानेन भूतानि नाभिद्रुह्यन्ति॥३,४॥

**अत्त** इति। अविद्या स्वरूपाज्ञानं ततः कामः ततः कर्म तैरारब्ध इति विद्वान् अत एव प्रतिबुद्ध आत्मज्ञोऽस्मिन्नैवानुषज्जते॥५॥

## श्री वीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं चतुर्मुखादेश निवृत्तक्रोधः कृतशतक्रतु सख्य आदृतर्त्विग्देवर्षि[1]गण आसीदित्युक्तम्। अथ भगवता निवेदितेन्द्र क्षमापणः प्रतिबोधित तत्त्वत्रययाथात्म्यस्वधर्मः परवरणप्रवर्तितः प्रतिनिवृत्त त्रिवर्ग लिप्सः प्रपूरितपरमपूरुषः स्वपुरमगादित्याह मुनिः[2] विंशेन **भगवानपीति**। षाड्गुण्यपूर्णो यज्ञरक्षकः सर्वयज्ञाराध्यो वैकुण्ठः परमपूरुषः पृथ्वनुष्ठितैर्यज्ञैः सम्यगाराधितो मघवता सह इन्द्रेण सह तं पृथुमभाषत जगाद॥ २॥

[3]उक्तिमेवाह - **एषइति**। एष इन्द्रस्ते तव हयमेधशतस्याश्वमेधशतसङ्कल्पस्य हि यस्मात् भङ्गमकार्षीत् अत आत्मानं त्वां क्षमापयतः क्षमां कारयतः अमुष्य इन्द्रस्य क्षन्तुमर्हसि इन्द्रविषये क्षमां कर्तुमर्हसीत्यर्थः॥ २॥

कथं दुस्सहोऽपराधः क्षन्तुं शक्यस्तत्राह **सुधिय इति**। हे नरदेव! लोके नरोत्तमाः सुधियः देहात्मयाथात्म्यविदः साधवः परोपकारपराः भूतेभ्य आगस्कृद्भ्योऽपि भूतेभ्यः नाभिद्रुह्यन्ति, कुतः यर्हि यस्मात् कलेबरमनात्मा आत्मेतरत्। अतस्तदभिमानेन द्रोहं न कुर्वन्तीत्यर्थः। सुधि[4]यां सोढुं शक्य एवेति भावः॥ ३॥

एवमन्वयमुखेन सुधियां भूतद्रोहाकरणमभिधाय व्यतिरेकमुखेनाह - **पुरुषा इति**। यदि त्वादृशाः सुधियः पुरुषा ईश्वरमायया यदि मुह्यन्ति [5-]मोहं प्राप्नुवान्ति[-5] देहात्ममोहेन देह प्रयुक्त भूतद्रोहादिकं कुर्वन्ति तर्हि त्वादृशैः [6]चिरकालं कृतया महतां सेवया श्रम एव परं केवलं जातः सम्पादितः। ते दुर्धियः एवेति भावः॥ ४॥

अतः सुधियां देहात्माभिमान प्रयुक्त भूतद्रोहादेरभावात्, अन्यथा दुर्धीत्वप्रसङ्गाच्च इमं कायं देहमविद्या कामकर्मभिः अविद्या अज्ञानं तच्च देहात्माभिमान स्वतन्त्रतात्माभिमानरूपेण द्विविधं, कामः अविद्यामूलकः शब्दादिविषयेष्विच्छाविशेषः, कर्म काममूलकं पुण्यापुण्यरूपम्, एभिरारब्धः उत्पादित इत्येवमिमं कायं देहं विद्वान् जानन् अत एव प्रतिबुद्धः चिदचिदीशयाथात्म्यज्ञः अस्मिन् देहे नैवानुषज्[7]यते। एवकारेण नितरामासक्त्यभावः सूच्यते॥ ५॥

---

1. A, B, T omit ऋषि 2. A, B add एकोन 3. A, B, T उक्त° 4. A, B, T °या 5--5. A, B, T omit 6. A, B, T °ल° 7. A, B, T °ज्ज°

## श्री विजयध्वजतीर्थकृता पदरत्नावली

अत्रोत्तमगुरुणा स्वयोग्योपासनाविषयो हरिरुपदेष्टव्य इति द्योतयितुं पृथुजीवाय हरिणा स्वात्मोपदिश्यत इति प्रतिपादयितुमाह - **भगवानिति**। अपिशब्दस्य ब्रह्मभाषणेन पुनः समुच्चयः कारयितृत्वेन स्वामित्वेन भोक्तृत्वेनापि एक एवोच्यत इति दर्शनाय, वैकुण्ठादिनामग्रहणं च शब्देनाग्रपूजयेष्ट इति समच्चिनोति, जगदुत्पत्तौ विश्लिष्टानां भूतानां संयोजकत्वात् वैकुण्ठः। तदुक्तं शान्तिपर्वणि - "मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना। वायुश्च तेजसा सार्धं वैकुण्ठत्वं ततो मम।" (भारते - शान्तिपर्वणि) इति। "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेवच।" (भगी - 9-24) इति च॥ १॥

हयमेधशततमस्येति व्याख्येयम्। अन्यथा चरमाश्वमेधसिद्ध्या तदेकभङ्गाभावेन सर्वभङ्गापत्त्या त्वमेकोनशतक्रतुरित्यनुपपन्नं स्यात्। इममर्थं ग्रन्थान्तरे सिद्धं हेत्यनेन सूचयति। किमत्र कार्यं तदाज्ञापयेति तत्राह - क्षमापयत इति। आत्मानं त्वां क्षमापयतोऽमुष्येन्द्रस्य क्षन्तुमर्हसीत्यन्वयः। आत्मानं मां क्षमापयत इति वा, त्वयि सन्निहितत्वेन तव विरोधाचरणं ममेति तत्तस्मान्मम क्षमापणं प्रार्थनमित्यर्थः॥ २॥

अक्षमा साधुगुणो न स्यादित्याह - **सुधिय** इति। तत्र निमित्तमाह - यर्हीति। कलेबरमनात्मा जडमत एवानित्यं यर्हि यस्मात् तस्मात्॥ ३॥

इतोऽपि क्षमा कर्तव्येति व्यतिरेकमुखेनाह **पुरुषा** इति॥ ४॥

तत्किम्? तत्राह - **अत एवेति**॥ ५॥

**असंसक्तः शरीरेऽस्मिन्नमुनोत्पादिते गृहे।**
**अपत्ये द्रविणे वापि[1] कः कुर्यान्ममतां बुधः॥ ६॥**

**एकः शुद्धः स्वयंज्योति र्निर्गुणोऽसौ[2] गुणाश्रयः।**
**सर्वगोऽनावृतः साक्षी परमात्माऽऽत्मनः[3] परः॥ ७॥**

***देहाद्युपात्तास्तद्धर्मा[4] न स्युस्तद्द्रष्टुरात्मनः।**
**कैवल्यं तस्य वैधर्म्यं[5] तत्सुषुप्तं निदर्शनम्॥ ८॥**

---

1. M, Ma, Ms दारे 2. W °ऽपि 3. A, B, G, I, J, T, V निरात्माऽऽत्माऽऽत्मनः; M, Ma, Ms निरात्मा नाऽऽत्मनः * This verse is not found in A, G, I, J, T, V and the same verse is not commented upon by Sridhara. 4. M, Ma, Ms °र्था° 5. M, Ma, Ms वै धर्मः

**य एवं सन्तमात्मानमात्मस्थं वेद पूरुषः ।**
**नाज्यतेप्रकृतिस्थोऽपि तद्गुणैः [1]स मयि स्थितः ॥९॥**

**यः स्वधर्मेण मां नित्यं निराशीः श्रद्धयान्वितः ।**
**भजते शनकैस्तस्य मनो राजन् प्रसीदति ॥१०॥**

**परित्यक्तगुणः सम्यग्दर्शनो विशदाशयः।**
**[2]शान्तिं मे समवस्थानं ब्रह्म कैवल्यमश्नुते ॥ ११ ॥**

**श्रीध.** तथापि [3-]पुत्रादिषु आसक्तस्य मम[-3] भूतद्रोहेण च सङ्गो भवेत्तत्राह - **असंसक्त इति** ॥ ६ ॥

प्रतिबोधक्रमं विवृण्वन् देहेऽनुषङ्गाभावमाह **एक इति** द्वाभ्यां। असावात्मा [4]आत्मनो देहात्परो भिन्नः तत्र नवधा वैलक्षण्येन भेदं साधयति **एक** इति नवभिः पदैः। देहो हि बालयुवादिभेदादनेको मलिनश्च[5] जडश्च सगुणश्च स्वकारणभूतगुणाश्रितश्च परिच्छिन्नश्च गृहादिभिरावृतश्च दृश्यश्च सात्मा च। आत्मा तु नैवमतो भिन्नः ॥७॥

**य इति** । आत्मस्थं स्वस्मिन् स्थितम् । प्रकृतिस्थोऽपि [6]स्वदेहस्थोऽपि [7]तद्गुणैः तद्विकारै र्न लिप्यते । यतः स मयि ब्रह्मणि स्थितः ॥ ८,९ ॥

इयमवस्था कस्योत्पद्यत इत्यपेक्षायामाह - **यः स्वधर्मेणेति** चतुर्भिः। [8-]निराशीः निष्कामः[-8] ॥ १० ॥

[9-]भवतु मनः प्रसन्नं ततः किम् ? तत्राह[-9] - **परित्यक्तगुण** इति। यर्हि [10]यदा विशदाशयः प्रसन्नमनाः तदा परित्यक्तगुणस्सन् सम्यग्दर्शनो भूत्वा शान्तिमश्नुते। शान्तिमेवाह। [11]मे मम सम्यगौदासीन्येनावस्थानमेव ब्रह्म तदेव कैवल्यमश्नुते॥२२॥

**वीर.** देह एवानासक्तः, कथं देहानुबन्धिष्वा[12]सक्तः स्यादित्याह - **असंसक्त इति**। अस्मिन् शरीरे असंसक्तः समित्येकीकारे आत्मना सह देहमेकीकृत्य तस्मिन्नासक्त इत्यर्थः, अमुना शरीरेणोत्पादिते सम्पादिते गृहे अपत्ये पुत्रादौ द्रविणे वित्ते च ममतां को वा बुधः कुर्यात् ? न कोऽपि बुधः कुर्यात्। अज्ञस्तु कुर्यादित्यर्थः। अतो बुधः देहार्थं देहानुबन्ध्यर्थं वा भूतद्रोहादिकं न कुर्यादिति भावः ॥ ६ ॥

---

1. M, Ma समव   2. W शान्तं   3--3. A, B, J, Va पुत्रादिममत्वेन   4. V आत्मनः   5. V adds अनात्मा   6. A, B, J, Va omit स्व
7. B, J, V, Va omit तद्गुणैः   8--8. B, J, V, Va omit   9-9. V omit   10. B, J, V, Va omit यदा   11. A, J, V, Va, omit मे   12. W °ष्व°

बुध इत्यनेन चिदचिदीशयाथात्म्यज्ञानवत्त्व मुपक्षिप्तं तत्कीदृशमित्यपेक्षायां तत्र **एक** इति द्वाभ्यां चिदचिदीशस्वरूपं विशोध्य ततो[1] य एवमित्येकेन आत्मयाथात्म्यज्ञानयोगस्य भगवज्ज्ञानाङ्गत्वं तत एकेन कर्मयोगस्यापि[2] तदङ्गत्वमभिधाय तदुभयानुगृहीत भगवद्भक्ति[3] योगस्य भगवत्प्राप्त्युपायतामभिदायेदृश भगवदुपासन निष्ठस्य देहतदनुबन्धि[4] प्रयुक्त विकारा न स्युरित्याह - **एक** इत्यादिना। प्रकृति विविक्तात्म स्वरूपशोधनेन प्रकृति परिणामरूपदेहस्य तद्विपरीत धर्मवत्त्वस्यार्थादेव सिद्धेः पृथक् तद्बोधनं नापेक्षितमिति तावदात्मस्वरूपं प्रकृतिविविक्तं शोधयति। एकः ज्ञानैकाकारतया सर्वत्र एकस्वरूपः ''एको व्रीहिः सुसम्पन्नः सुपुष्टं कुरुते प्रजाः'' इति वदयं [illegible]शः।

नानाकारेषु देवमनुष्यादिशरीरे ष्ववस्थितोऽपि सर्वत्र ज्ञानैकाकारतया एकस्वरूप[5] इत्यर्थः। देहस्तु देवमनुष्यपशुपादपतदवान्तर भेदभिन्नः। शुद्धः निर्मलः देहस्तु मलिनः। स्वयंज्योतिः स्वयंप्रकाशः निर्गुणः रागद्वेषादिरहितः गुणाश्रयः ज्ञानानन्दादिगुणाश्रयः सर्वगः अणुस्वरूपत्वेऽपि धर्मभूतज्ञानेन सर्वव्यापी अनावृतः देह इव गृहादिभिः अनावृतः साक्षी देहेन्द्रियादीनामपरोक्षं द्रष्टा, देहस्तु परप्रकाश्यः रागद्वेषादि गुणाश्रयः ज्ञानादिगुणानाश्रयः व्याप्यः आवृतः दृश्यश्चेत्यर्थ सिद्धं, परं केवलमात्मा देहादिष्वन्तः प्रविश्य धारकः देहस्तु धार्यः, अत आत्मनः देहात्परः विलक्षणः ॥ ७ ॥

अत एव देहादिभिः उपात्ताः स्वीकृताः, आदिशब्दः प्राणेन्द्रियपरः, तद्धर्मा तेषां देहादीनां धर्माः बाल्ययौवनाशना पिपासादयः तच्छब्देन बाल्यादीनां तदेकान्तत्वं सूच्यते। तद्रद्रष्टुस्तस्य देहादेर्द्रष्टुरात्मनो जीवस्य न स्युः। तस्य आत्मनो यत्कैवल्यं देहगतजात्यादिराहित्यमेव तस्य देहा द्वैधर्म्यमुक्तं, देहविलक्षणमात्मस्वरूपं कदा स्फुरतीत्याशङ्कायां सुषुप्त्युत्क्रान्त्योः इत्यभिप्रयन् तत्र सुषुप्ते जीवदवस्थायामेवाहरहरनुभूयमानत्वेन सुषुप्तिरेव निदर्शनमित्याह। तत् तत्र सुषुप्तं सुषुप्तिः - भावेक्तः - निदर्शनमुदाहरणमित्यर्थः। सुषुप्तौ हि देहगतब्राह्मणत्वादिबाह्याकारो नानुभूयते, किन्तु देहविलक्षणं स्वस्वरूपं तथा चोक्तं तृतीये ''भूतसूक्ष्मेन्द्रिय मनोबुद्ध्यादिष्विह निद्रया। लीनेष्वसति यस्तत्र निर्दिष्टो निरहं क्रियः ॥ (भाग 3-27-14) इति[6]। अनेन देह तद्धर्माणां चात्मप्रतीत्यविषयत्वमुच्यते। एवं प्रकृतिपुरुषयोः स्वरूपे निरूपिते। यद्वा इदं श्लोकद्वयं प्रधानजीवविलक्षण परमात्मस्वरूपकथनपरं प्रकृति पुरुषस्वरूपं तु अर्थाद्विशोधितं भवति प्रकृति विविक्तात्मस्वरूप विवेचन परत्वे हि सुषुप्तं तन्निदर्शन मित्यस्वरसं स्यात्। सुषुप्तौ देहादेरप्रतीतावपि उक्तविधत्वेनात्म स्वरूपस्याप्रतीतेः। तस्मादयमर्थः - एकः स्वसमाभ्यधिक-द्वितीयवस्त्वन्तर रहितः शुद्धः अपापविद्धः अपहतपाप्मेत्यर्थः। स्वयंज्योतिः निरूपाधिकस्वयं प्रकाशः निर्गुणः प्रकृतिपुरुषगताज्ञत्वदुः खित्वादिहेयगुणरहितः, गुणाश्रयः

---

1. A,B,T अथ 2. A,B,T omit अपि 3. A, B, T omit भगवद् 4. A, B, T देहानु 5. W omits स्व 6. A, B, T add निरहाक्रिय इति

अनन्तकल्याणगुणाश्रयः सर्वगः स्वरूपतः स्वभावतश्च विभुः अनावृतः देहादिष्ववस्थितोऽपि तैरपरिच्छिन्नः, साक्षी सर्वं युगपत् साक्षात्कर्ता उदासीनो वा। आत्मनः उक्ताकारविपरीताज्जीवात् परः विलक्षणः परमात्मा परो मा यस्मात् स परमः स चासौ आत्मा च स्वसमानाधिकात्मान्तराव्याप्यः स्वव्यतिरिक्तस्य सर्वस्यान्तःप्रविश्य प्रशासनेन धारकः। जीवस्तु नैकः, किन्तु बहवः समानाकाराः "नित्यो नित्यानां चेतनश्चेतनानां"(कठ 5-5-13) "न त्वेवाहं जातु नासम्" (भगी 2-12) इत्यादिकमत्रानुसन्धेयम्। यद्यपि जीवस्वरूपमपि स्वयंज्योतिरेव, तथापि तत्स्वरूप सत्ता स्थितिप्रवृत्त्यादेः परमात्मेच्छायत्तत्त्वस्य "द्रव्यं कर्म च कालश्च स्वभावो जीव एव च। यदनुग्रहतस्सन्ति न सन्ति यदुपेक्षया" (भाग - 2-10-12) इति स्मरणात् न निरूपाधिक स्वयंज्योतिष्ट्वम्। यद्यपि प्रजापति वाक्ये जीवस्याप्यपहतपाप्मत्वं "य एष आत्मापहतपाप्मा" इत्यादिना श्रुतं, तथापि तत्कर्मणा सङ्कुचितं, मुक्तौतु परमात्मप्रसादादाविर्भूतमिति न सर्वदा विशुद्धत्वं, तथा च श्रुतिः - "एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरूपसम्पद्य स्वेन रूपेणाभिसम्पद्यते" (छान्दो. उ 8-12-3) इति। सूत्रं च "सम्पद्याविर्भावः स्वेन शब्दात्"(ब्र.सू 4-4-1) इति। तथा च कल्याणगुणाश्रयो न भवति, किन्तु दुःखित्वादिहेयगुणाश्रयः। अत्र निर्गुणाश्रयशब्दाभ्यां हेयगुणनिषेधकल्याणविधी विवक्षितौ। अत्र "न हिंस्यात्" "पशुमालभेत"इतिवत् उत्सर्गापवादन्यायेन दहरविद्यायां "य एष आत्माऽपहताप्मा" इत्यादिना कल्याण गुणान् विदधति श्रुतिरेव प्रमाणं, तथा जीवो न सर्वगः अणुत्वात्। तथा च श्रुतिः- "एषोऽणुरात्मा चेतसा वेदितव्यः" (मुण्ड.उ 3-1-9), "आराग्रमात्रो ह्यवरोऽपि दृष्टः" (श्वेत.उ.5-8) इति। अत एव परिछिन्नः नापि साक्षी किन्तु कर्मफलदी। तथा च श्रूयते "तयो - रन्यः पिप्पलं स्वाद्वत्ति" (मुण्ड .उ.3-1-1) इति। तथा च स्वस्मादधिकेन परमात्मना व्याप्यः धार्यश्च। "यः आत्मनि तिष्ठन् (बृह.उ.3-7-22) इत्यादिश्रुतेः। एवं जीवस्वरूप मर्थाद्विविक्तं द्रष्टव्यं, पूर्वव्याख्योक्तरीत्या प्रकृतिस्वरूपमपि यत एव प्रकृतिपुरुषाभ्यां विलक्षणः परमात्मा अत एव हेतोः देहाद्युपात्ता। आदिशब्देन जीवसंङ्ग्रहः देहैर्जीवैश्चोपात्ताः परिणामित्वकिञ्चिज्ञत्वदुःखित्वादयः औपाधिकाः धर्माः तद्धर्माः प्रकृतिपुरुषैकान्ता जडत्वाणुत्वादयः स्वाभाविकाश्च। तद्द्रष्टुः प्रकृतिपुरुषयोः साक्षात्कर्तुः आत्मनः तयोरन्तर्व्याप्यावस्थितस्य परमपुरुषस्य न स्युः। कैवल्यं प्रकृतिपुरुषगतपाराक्त्वणु त्वादिविपरीत प्रत्यक्त्वापरिच्छिन्न त्वादिधर्म वत्वमेव। कैवल्यं प्रकृति पुरुषाभ्यां वैलक्षण्यं नामेत्यर्थः, तत्तत्र जीवात्परमात्मनो वैधर्म्ये सुषुप्तं सुषुप्तिः निदर्शनमुदाहरणमित्यर्थः। सुषुप्तग्रहणमुत्क्रान्तेरप्युपलक्षणं, तथाहि - सुषुप्त्युत्क्रान्त्योः प्रत्यगात्मनोऽर्थान्तररत्वेन परमात्मनो व्यपदेशो दृश्यते तावद्वाजसनेयके "कतम आत्मा योऽयं विज्ञानमयः प्राणेषु" (बृह.उ.4-3-7) इति। प्रकृतस्य प्रत्यगात्मनः सुषुप्त्यवस्थायाम्, अकिञ्चिज्ज्ञस्य सर्वज्ञेन परमात्मना परिष्वङ्ग आम्नायते - "प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" (बृह.उ.4-3-21) इति। तथा उत्क्रान्तावपि प्राज्ञेनात्मनान्वारूढ उत्सर्जन् यातीति। न च स्वपत उत्क्रामतो वाऽप्यकिञ्चिज्ज्ञस्य तदानीमेव स्वेनैव सर्वज्ञेन सता

तदानीमेव स्वेनैव सर्वज्ञेन सता परिष्वङ्गान्वरोहौ सम्भवतः न च क्षेत्रज्ञान्तरेण, तस्यापि सर्वज्ञत्वा सम्भवात्। तस्मात्तत्र प्राज्ञेनेति सर्वज्ञः परमात्मा उक्तः। "न बाह्यं किञ्चन वेद नान्तरम्" (बृह.उ.4-3-21) इत्यज्ञो जीव उच्यते, तस्मात्तत्र वैधर्म्यं निदर्शितं, तथा च सूत्रं "सुषुप्त्युत्क्रान्त्यो र्भेदन" (ब्र.सू.1-3-42) इति॥८॥

**य इति**। यः पुमान् एवं परमात्मनो धार्यतया व्याप्यतया आत्मनि परमात्मनि स्थितं सन्तम्[1] आत्मानं प्रत्यगात्मानं वेद उपास्ते न तु तदुपासनमात्रपरः, किन्तु मयि अन्तर्यामिणि पूर्वोक्तैकत्वादिधर्मिणि स्थितः मदुपासननिष्ठ इति यावत्। तिष्ठते र्धातोरुपासन परत्वं "अभयं प्रतिष्ठां विन्दते" (तैत्ति.उ.2-7) "तन्निष्ठस्य मोक्षोपदेशात् (ब्र.सू.1-1-7) इत्यादि श्रुतिसूत्रादि प्रयोगादवगम्यते। ज्ञानयोगानुगृहीतमद्भक्ति योगनिष्ठ इत्यर्थः। प्रकृतिस्थोऽपि उपासनदशायां प्रकृतिविशिष्टोऽप्युपासननिर्वृत्त्यनन्तरं तद्गुणैः प्रकृतिगुणैः नाज्यते[2] न युज्यते, किन्तु मुक्तो भवेदित्यर्थः॥ ९ ॥

एवं यःपुमान् स्वधर्मेण स्ववर्णाश्रमोचितपञ्चमहायज्ञादि नित्यनैमित्तिकादि धर्मेण निराशीः स्वधर्मसाध्यफलेष्वाशारहितः अनभिसंहित फलकर्तृसङ्ग इत्यर्थः। मां सर्व कर्माराध्यमिन्द्रादिसर्व देवता शरीरकं सर्वकर्मफलप्रदं नित्यं श्रद्धया कर्तव्येषु कर्मसु त्वरया भजते। हे राजन्! पृथो! तस्य ज्ञानकर्मयोगाभ्यामनुगृहीत भगवद्भक्तियोगनिष्ठस्य मनःशनकैः प्रसीदति दारादिभि रकलुषितं भवति॥ १०॥

एवं परित्यक्तगुणः कात्स्न्येंन त्यक्तरागादिगुणः अत एव विशदाशयः निर्मलान्तःकरणः अत एव सम्यग्दर्शनः उक्तविधात्मस्वरूपतद्विलक्षण परमात्मस्वरूपदर्शी शान्तमशनायाद्यूर्मिषट्क रहितं मे मत्सम्बन्धि समवस्थानं सम्यगावासभूतं मच्छरीरभूतमित्यर्थः। ब्रह्म गुणतो बृहत्वात् ब्रह्मशब्दवाच्यं कैवल्यं केवलं प्रकृतिवियुक्तमाविर्भूतापहतपाप्मत्वादि गुणकमात्मस्वरूपम् अश्नुते प्राप्नोति। ब्रह्मात्मकाविर्भूतगुणाष्टकस्वरूपेण सम्पन्नो भवति, मुक्तो भवतीति यावत्॥११॥

**विज.** शरीरासङ्गफलमाह - **असंसक्त** इति। अमुनादेहेन पुत्रादिगतममताबुद्धित्यागः फलमित्यर्थः॥६॥

शरीराद्यसक्तिरप्येकत्वादिगुण विशिष्ट परमात्मज्ञानिन एव सुदृढा स्यादित्यतस्तत्स्वरूपं निरूपयति **एक** इत्यादिना। घटादिष्वेकत्वादिकमौपचारिकं हरौ तु निरूपचरितमिति द्योतनाय वेदान्तसिद्धगुणानुपदिशति। तथाहि "एको देव" (श्वेत.उ.6-11) इति, "न जायते म्रियते वा विपश्चित्" (कठ-उ-2-18) इति जननादिदोषाभावाच्छुद्धः "पूर्णः सत्यः शुद्धबुद्धस्वरूपो नित्यचिन्मय"

---

1. A, B, T omit सन्तम् 2. A, B, T omit नाज्यते

इति ''अत्रायं पुरुषः स्वयंज्योति (भवति) (बृह.उ.4-3-9) ''परं ज्योति रुपसम्पद्य'' (छांदो.उ.8-3-4) इति, ''केवलो निर्गुणश्च''(श्वेत.उ.6-11) इति ''विज्ञानमानन्दं ब्रह्म''(बृह.उ.3-9-28) इति ''अन्तर्बहिश्च तत्सर्वम्'' (पु.सू.महा.ना.उ 9-5) इति अनावृतः स्वस्यान्येषामावृत एव ''अन्येषामावृतो विष्णुः स्वस्याना वृत एव च''(तन्त्रसारे) इति, साक्षी चेति निर्गत आत्मा स्वामी यस्य स निरात्मा तस्यात्मान्यो न विद्यत इति अनात्मनो गुणराशिराहिताज्जीवराशेः परः ''उत्तमः पुरुषस्त्वन्यः'' (भगी.15-17) इति ॥ ७ ॥

हरेः सर्वगतत्वेन जननादिदेहधर्माः सम्भवन्ति[1] अतः कथं देहिपरत्वमत्राह - **देहादीति** । देहप्रभृतितद्धर्मा देहधर्मा जननादयस्तद्द्रष्टुस्तेषां धर्माणां द्रष्टुः आत्मनः सर्वस्य जगतोऽन्तर्यामिणो हरेर्न स्युरित्यन्वयः। ''आत्मा सर्वस्य जगतः तस्यात्माऽन्यो न विद्यते'' (तन्त्रसारे ) इति। कीदृशा अपार्थाः पुरुषार्थाख्यप्रयोजनशून्याः हरे धर्मः क इति तत्राह **कैवल्य**मिति। ''अनन्यसदृशत्वाच्च केवलोऽसौ हरिः स्मृतः ''। (तन्त्रसारे ) इति वचनात्। कैवल्यं नामान्यसादृश्यराहित्यं धर्म इत्यर्थः। वै इत्येतत् ''तद्यत् स्वभावः कैवल्यम्'' इति वाक्यं सूचयति , नित्यनिर्दुःखत्वं च तस्य धर्मस्तद्बुद्धावारोहयति **सुषुप्तमिति**। तस्य धर्मस्य निदर्शनं दृष्टान्तः सुषुप्तं शरीराभिमानाभावेन हर्येकस्थितिः। ''सुषुप्तिर्नाम न हि तदा दुःखलेशोऽस्ति'' ''सता सौम्य तदा सम्पन्नो भवति'' (छान्दो.उ. 6-8-1) इति श्रुतेः। ''सुषुप्तवच्च निर्दुःखो जाग्रद्वच्च प्रकृतिमान्'' (तन्त्रसारे) इति च। आत्मावगम्यत्वं वा तद्धर्मः। अत्रापि सुषुप्तमुदाहरणं हि मानं, तस्यापि जन्यज्ञानाभावेनाहमिति स्वरूपज्ञानवेद्यत्वात् ''आत्मनैवावगम्यत्वाद्धरिरेष सुषुप्तत्वात्। केवलत्वेन विज्ञेयो मुक्तस्तद्वददुःखता'' (अध्यात्मे) इति च॥ ८॥

भगवद्धर्म कथनफलमाह - **य एवं सन्तमिति**। यः पुरुषः एवं सन्तमात्मस्थं जीवान्तर्यामिणमात्मानं वेद स प्रकृतिस्थोऽपि तस्य शरीरगुणैः क्षुत्पिपासादि लक्षणैर्नाज्यते न लिप्यते। समवस्थितः सम्यगाहितचित्तत्वादिति हेतुगर्भविशेषणम्॥ ९॥

मनः प्रसादस्य प्रथमसाधनत्वात् तत्सम्भवः केन स्यादिति तत्राह - **य इति**॥ १०॥

मनः प्रसाद फलमाह - **परित्यक्तगुण** इति। परितः त्यक्ता गुणा विषयलक्षणा येन स तथा समवस्थानं निर्विकारं यद्ब्रह्म कैवल्यं स्वस्वयोग्यतानुरोधेन पूर्णतालक्षणं केवलभावं, तल्लक्षणं शान्तिं मे प्रसादान्मुक्तिमश्नुते इत्यन्वयः॥ ११॥

---

1. A, B, M उत

**उदासीनमिवाध्यक्षं द्रव्यज्ञानक्रियात्मनाम्।**

**कूटस्थमिममात्मानं यो वेदाऽऽप्नोति शोभनम्॥ १२॥**

**भिन्नस्य लिङ्गस्य गुणप्रवाहो[1] द्रव्यक्रियाकारकचेतनात्मनः।**

**[2]दृष्टासु सम्पत्सु विपत्सु सूरयो न विक्रियन्ते मयि बद्धसौहृदाः॥ १३॥**

**समः समानोत्तममध्यमाधमः सुखे च दुःखे च जितेन्द्रियाशयः।**

**मयोपक्लृप्ताखिललोक[3]संयुतो विधत्स्व धी[4]राखिललोकरक्षणम्॥ १४॥**

**श्रेयः प्रजापालनमेव राज्ञो यत्साम्पराये सुकृतात्[5] षष्ठमंशम्।**

**[6]हर्ताऽन्यथा हृतपुण्यः प्रजानामरक्षिता करहारोऽघमत्ति॥ १५॥**

**एवं द्विजाग्र्यानुमतानुवृत्तो[7] धर्म[8]प्रधानो[9]ऽन्यतमोऽवितास्याः।**

**ह्रस्वेन कालेन गृहोपयातान् द्रष्टासि सिद्धाननुरक्तलोकः॥ १६॥**

**श्रीधरः** सम्यग्दर्शनमेवाह - **उदासीनमिति।** [10-]उदासीनमेव आत्मानं द्रव्यज्ञानक्रियात्मना[-10] देहज्ञानकर्मेन्द्रियमनसा मध्यक्षमिव स्थितमात्मानं यो वेद॥ १२॥

संसारिणः कथं कूटस्थत्वम्? अत आह - **भिन्नस्येति।** भिन्नस्य लिङ्गस्य देहस्य गुणप्रवाहः संसारः। भिन्नत्वे हेतुः द्रव्याद्यात्मकस्य। तत्र चेतना चिदाभासः। अतो दृष्टासु [11-]प्राप्तासु सम्पदादिषु[-11] हर्षशोकादिभिः न विक्रियन्ते [12-]विकारं न प्राप्नुवन्ति[-12]॥ १३॥

**सम इति।** त्वं च सूरिः, अतः सुखे दुःखे च समस्सन् समाना उत्तममध्यमाधमा यस्य। जितानीन्द्रियाण्याशयश्च येन। सत्वमखिललोकरक्षणं विधत्स्व। कथमेकेन मया रक्षणं कर्तुं शक्यं तत्राह। मया ईश्वरेणोपक्लृप्ताः सम्पादिता येऽखिला लोका अमात्यादयः तैस्संयुतः॥ १४॥

ननु रक्षणं दण्डादिसापेक्षमतस्तपोऽन्यद्वा पुण्यं करिष्यामीति चेदत आह - **श्रेय इति।** यद्यस्मात् साम्पराये परलोके प्रजाभिः कृतात्सुकृतात् षष्ठमंशं हर्ता[13] हरिष्यति। अरक्षणे दोषमाह। अन्यथा प्रजाभिर्हृतं पुण्यं यस्य स, प्रजानामघमत्ति पापं भुङ्क्ते। अन्यथेत्यस्य विवरणम्। करहारस्सन् अरक्षिता चेत्॥ १५॥

---

1. M, Ma, Ms °हं 2. M, Ma, Ms दृष्ट्वा सुस° 3. M, Ma, Ms सत्व 4. A, B, G, I, J, T, V वी° 5. M, Ma, Ms °तं 6. M, Ma, Ms अतोऽ° 7. A, B, G, I, J, T, Ms, V वृत्त° 8. M, Ma धर्मे प्रजानां च समोऽ° 9. Ms नाऽ° 10--10. V omits 11--11. B, J, Va omit; V सम्पत्सु विपत्सु च 12--12. A, B, J, Va omit 13. A, B, J, Va हरति

एवं च मोक्षोऽप्यनायासेन भविष्यतीत्याह **एवमिति**। द्विजाग्र्याणामनुमतश्चासावनुवृत्तश्च परम्परा प्राप्तो यो धर्मः स एव प्रधानम्, अर्थकामौ तु प्रासङ्गिकौ यस्य अन्यतमोऽतिशयेनान्यः। धर्मादिष्वनासक्त इत्यर्थः। ऐकपद्यपाठे धर्मप्रधानावन्यतमावर्थकामौ यस्येत्यर्थः। अस्याः पृथिव्याः अविता सन् अल्पेन कालेन गृहागतान् सनकादीन् द्रक्ष्यसि। अनुरक्तो लोको यस्मिन् सः ॥१६॥

**वीर.** एवं तन्त्रत्रयविमर्शनपूर्वकं ज्ञानकर्मयोगानुगृहीतभगवद्भक्तियोगस्यामृतत्वप्राप्त्युपायतामभिधाय एवंविधस्य पुंसो जीवदवस्थायामवस्थान प्रकारमाह - **उदासीनमिति**। द्रव्यं पृथिव्यादिभूतानि, ज्ञानं श्रोत्रादि ज्ञानेन्द्रियाणि, क्रिया वागादि[1]कर्मेन्द्रियाणि, आत्मा मनः, एषामध्यक्षमधिपं कूटस्थं स्वरूपतो निर्विकारम् अत एव[2] [3]इममात्मानं प्रत्यगात्मानमुदासीनमिव स्थितं यो वेद द्रव्याद्यध्यक्षत्वं प्रकृतिसम्बन्धकृतं परमार्थतस्तु कूटस्थ उदासीनः, इत्येवमात्मानं यो वेद सः शोभनमाप्नोति [4]जीवदशायामपि सुखमेवाप्नोतीत्यर्थः ॥ १२ ॥

ननु विप्रतिषिद्धमेतदुच्यते द्रव्याद्यध्यक्षत्वं कूटस्थत्वमुदासीनत्वं चेति। करणप्रवर्तकत्वमेव हि करणाधिपत्त्वं तच्च विकारः तदभावः कूटस्थत्वमुदासीनत्वं तत्राह - **भिन्नस्येति**। द्रव्य क्रियाकारकचेतनात्मनः द्रव्यं पृथिव्यादि, क्रियाकारकाणि कर्मेन्द्रियाणि, चेतना ज्ञानेन्द्रियजातम् एतदात्मकस्येत्यर्थः। क्रिया कर्मेन्द्रियाणि, कारकाणि ज्ञानकरणानि श्रोत्रादीनि, चेतना चित्तमेतदात्मकस्येति वार्थः। द्रव्याद्यात्मकस्यात एव भिन्नस्य देवमनुष्यादिभावेन भिन्नस्य लिङ्गस्य शरीरस्य गुणप्रवाहः गुणपरिणामो भवति। अयं भावः- यद्यपि द्रव्याद्यध्यक्षत्वरूपविकार आत्मन्यस्ति, तथापि स विकारः ज्ञानविकाररूपः, स च धर्मभूतज्ञानगतो न स्वरूपगत इति स्वरूपतः कूटस्थत्वमुदासीनत्वं च। देवादिरूपेण परिणामस्तु द्रव्यादिसङ्घातस्यैवेति। [5]ननु धर्मतो वाऽपि सति विकारे न कूटस्थततोपपत्तिः, कूटस्थता हि निर्विकारता सा च नित्यताऽपरपर्याया धर्मतो वा, नित्यत्वे कथं नित्यतेति चेत् उच्यते- धर्मभूतं ज्ञानद्रव्यं नित्यमेव, तस्य च कर्मणा कदाचित् सङ्कोचः कदाचिद्विकासश्च इत्यवस्थाद्वयमङ्गीक्रियते। तत्र सङ्कोचो नाम प्रसराभावः, तदभावो [6-]विकासप्रसररूपः, अभावाभावस्य[-6] भावरूपत्वात्, अतो धर्मभूतं ज्ञानद्रव्यमपि नित्यमेवेति धर्मतोऽपि कूटस्थतोपपत्तिः। पृथिव्यादीनां तु स्वरूपतः स्वभावतश्च विकार इति न कूटस्थत्वम्। अत आत्मनः सततमेकरूपत्वात् देहस्य प्रतिक्षणपरिणामित्वादपुरुषार्थ[7]रूपत्वाद् देह प्रयुक्तासु दृष्टासु प्राप्तासु सम्पत्सु विपत्सु च सूरयः तत्त्वत्रयविवेचनचतुरा न विक्रियन्ते सम्पदापत्प्रयुक्तहर्षशोकाभ्यां न युज्यन्त इत्यर्थः। कथं सति शरीरे तत्प्रयुक्तहर्षशोकासम्बन्धः तत्राह। मयि निरतिशयप्रीतिविषये बद्धं सौहृदं यैस्ते। सौहृदशब्देन

1. W ॰दीनि 2. A, B, T add द्रव्यमयम् 3. A, B, T omit इमम् 4. A, B, T जीवनद॰ 5. A, T omit ननु 6--6. A, B, T विकासः प्रसररूपाभावस्य
7. A, B, T omit रूप

सुहृदो धर्मो निरतिशयप्रेमोच्यते। तेन प्रीति रूपमुपासनं लक्ष्यते। बद्धशब्देन तस्य विजातीयाप्रत्ययान्तराव्यवहितत्वं च, तथा च विजातीय[1] प्रत्ययान्तराव्यवहितमद्विषयनिरतिशय प्रीति[2]रूपभक्त्या विस्मृतदेहधर्मा हर्षशोकाभ्यां न युज्यन्त इत्यर्थः। त्वं च सूरिः॥ १३॥

अतः सुखे दुःखे च देहप्रयुक्ते समस्सन्, साम्यं मम कथं सम्भवेत्तत्राह - विजितेन्द्रियाशयः वशीकृतबाह्येन्द्रियान्तः करणः। जितेन्द्रियस्य तव सुखदुःखयोः साम्यं सम्भवेदेवेत्यर्थः। अत एव समाना उत्तममध्यमाधमाः यस्य स तिर्यङ्मनुजदेवादिषु देहातिरिक्तसर्वात्म सामान्या[3]नुसन्धान परस्तेषां च ब्रह्मात्मकत्वे साम्यधीः त्वमखिललोकरक्षणं विधत्स्व। कथमेकेन मया तत्कर्तुं शक्यं तत्राह। मया ईश्वरेण उपक्लृप्ताः सम्पादिताः अमात्यादयो येऽखिला लोकाः तैः संयुतः॥ १४॥

ननु मम मुमुक्षामनुत्पाद्य किमखिललोकरक्षणं विधत्स्वेत्युच्यते तत्राह- **श्रेय इति**। राज्ञः प्रजापालनमेव श्रेयः[4] श्रेयस्साधनं समीहितपुरुषार्थसाधनमित्यर्थः। कुतः, यत् यस्मात् प्रजापालनात् साम्पराये देह वियोगे प्रजाभिर्यत्कृतं सुकृतं तस्य षष्ठमंशं हर्ता हरति। अन्यथा लोकरक्षणाभावे प्रजानामरक्षिता प्रत्युत प्रजापीडनादिना तद्दत्तं करं स्वामिग्राह्यभागं, हरतीति हारः तथाभूतः अत एव प्रजाभिरात्तपुण्यः तासामघमत्ति आदत्ते[5]॥ १५॥

तस्मात् यदि प्रजाः पालयसि धर्मतस्तदा तव मुक्तिरपि सुलभा स्यादित्याह- **एवमिति**। द्विजाग्र्याणामनुमतश्चासावनु वृत्तश्च। व्यस्तपाठे [6-]अनुमतः अनुवृत्तश्च[-6]। धर्मप्रधानः अनभिसंहित फलस्ववर्णाश्रमोचितधर्मप्रधानः, अन्यतमः प्रजानां मध्ये अन्यतम इव स्वस्मिन् स्वातन्त्र्यमनारोप्येत्यर्थः। अविता रक्षिता यदि स्याः भवेः तदा ह्रस्वेन अल्पेन[7] कालेन गृहान् प्रत्युपगतान् सिद्धान् सनकादीन् अनुरक्ताः स्वस्मिन् अनुरागयुक्ता लोका यस्य स त्वं द्रष्टासि। तैरुपदिष्टतत्त्वोऽमृतत्वं यास्यसीत्यर्थः॥ १६॥

**विज.** सम्यग्दर्शन इत्युक्तं दर्शनप्रकारं दर्शयति - **उदासीनमिवेति**। द्रव्यज्ञानक्रियात्मनां तामसवैकारिकतैजसरूपाणां पदार्थानामध्यक्षमधिपतिम्। उदासीनमिवाक्लिष्टकारिणमेव। कूटस्थं निर्विकारमात्मानं हरिं यो वेद स शोभनं दर्शनमेवाप्नोतीत्यन्वयः। "हरिरक्लिष्टकारित्वादुदासीन इतीर्यते" (अध्यात्मे) इति च॥ १२॥

इदं चावश्यं ज्ञेयमित्याह- **भिन्नस्येति**। द्रव्यक्रियाकारकचेतनानि सन्ततं व्याप्य तिष्ठतीति द्रव्याद्यात्मा तस्य जीवाद्भिन्नस्य। कालादिव्यवधानेन लीनं पदार्थजातं गमयतीति ज्ञापयतीति लिङ्गं तस्य मनसो यः सत्त्वादिगुणानां प्रवाहः प्रवर्तनविशेषस्तं दृष्ट्वा

---

1. A, B, T omit विजातीय 2. A, B, T omit प्रीति 3. A, B, T साम्यानु 4. A, B, T omit श्रेयः 5. A, B, T omit आदत्ते
6--6. A, B, T omit 7. W आसन्नेन

ज्ञात्वा। प्रत्यक्षासु सम्पत्सु विपत्सु च प्राप्तासु न विक्रियन्ते जातोऽहं मृतोऽहमित्यादिविकारं न प्राप्नुवन्ति। के ? सूरयः। अत्र हेतुगर्भविशेषणमाह- **मयीति**। मयि बद्धं सौहृदं महत्त्वबुद्धिलक्षणं प्रेम यै स्ते तथा तस्मादिति शेषः। ''जीवाद्भिन्नस्य मनसो गुणाः सत्त्वादयो मताः। तज्ज्ञात्वा न विकुर्वीत स्वस्वरूपं मनस्तथा'' (षाड्गुण्ये) इति वचनात् उक्त एवार्थो नान्य इत्यर्थः ॥ १३ ॥

इदमपि मुक्तिसाधनमित्याह - **सम इति**। सुखे च दुःखे च समो निर्विकारः समानाः स्वस्वयोग्यतानुसारेण उत्तममध्यमाधमाश्च यस्य स तथोक्तः। समत्वे कारणमाह- **जितेति**। रक्षायां किम्बल इत्यत उक्तं **मयेति**। मया उपक्लृप्तः अखिलः पूर्णः सत्त्वगुणस्तेन संयुतः ॥ १४ ॥

अपवर्गानुपयोगिप्रजापालनेन किमित्याशङ्क्येदमेव तव श्रेय इत्याह- **श्रेय इति**। साम्पराये मोक्षे प्रजाकृतसुकृताद्विभज्य षष्ठमंशं सुकृतं लभत इति यस्मात्तस्मादिति। विपक्षे बाधकमाह - अत इति। अतोऽन्यथेत्यस्य विवरणमरक्षितेति ''दुःखैनोव्यसनेष्वघम्'' (वैज.को 6-3-2) इति यादवः ॥ १५ ॥

गुरूपदिष्टज्ञानस्यैव मुक्तिहेतुत्वात् किं प्रजारक्षणेनेत्याशङ्क्य तेन ज्ञानोपदेष्टृसिद्धज्ञानप्राप्तिस्ततः संविच्च प्राप्यत इत्याह- **एवमिति** ॥ १६ ॥

**वरं च मत् कञ्चन मानवेन्द्र वृणीष्व तेऽहं गुणशीलयन्त्रितः।**
**नाहं मखैर्वै सुलभस्तपोभिर्योगेन वा यत्समचित्तवर्ती[1] ॥ १७ ॥**

## मैत्रेय उवाच

**स इत्थं लोकगुरुणा विष्वक्सेनेन विश्वजित्।**
**अनुशासित[2] आदेशं शिरसा जगृहे हरेः ॥ १८ ॥**

**स्पृशन्तं पादयोः प्रेम्णा[3] व्रीडितं स्वेन कर्मणा[4]।**
**शतक्रतुं परिष्वज्य विद्वेषं विससर्ज ह ॥ १९ ॥**

**भगवानपि[5] विश्वात्मा पृथुनोपहृतार्हणः।**
**समुज्जिहानया भक्त्या गृहीतचरणाम्बुजः ॥ २० ॥**

1. M, Ma, Ms वृत्त 2. W °तमादेश° 3. M, Ma, Ms शीर्ष्णा 4. W पाप्मना 5. A, B, G, I, J, Ms. T °थ

**प्रस्थानाभिमुखोऽप्येनमनुग्रहविलम्बितः[1]।**

**पश्यन् पद्मपलाशाक्षो न प्रतस्थे सुहृत्सताम्॥ २१॥**

**श्रीध. वरमिति**। मत् मत्तः सकाशात् कञ्चन कञ्चिद्[2]वरं वृणीष्व। यतः[3] गुणाः क्षमादयः[4] शीलं निर्मत्सरत्वादिस्वभावस्तैरहं यन्त्रितो वशीकृतः। तद्रहितैस्तु मखादिभिः नाहं सुलभः। यतः समं चित्तं येषां तेष्वेव वर्तितुं शीलं यस्य सोऽहम्॥ १७,१८॥

**स्पृशन्तमिति**। क्षमापयितुं पादयोः स्पृशन्तम्। स्वेन कर्मणाऽश्वापहरणेन व्रीडितम्। प्रेम्णा परिष्वज्य॥ १९॥

**भगवानिति**। भगवान् प्रस्थानाभिमुखोऽप्यनुग्रहेण विलम्बितस्सन् न प्रतस्थे प्रयाणं न कृतवानिति द्वयोरन्वयः। कथम्भूतः? उपहृतमर्पितमर्हणं यस्मै। समुज्जिहानया समुद्गच्छन्त्या वर्धमानया भक्त्या गृहीते चरणाम्बुजे यस्य॥ २०॥

**प्रस्थानेति**। पद्मपलाशवदक्षिणी यस्य तथा भूतस्सन् एनं पृथुं पश्यन्॥ २१॥

**वीर.** किञ्च हे मानवेन्द्र! मत् मत्तः सकाशात् कञ्चिद्वरं वृणीष्व। ते तव गुणाः शमादयः शीलं निर्मत्सरादिस्वभावः तैर्यन्त्रितः वशीकृतोऽहं तद्रहितैस्तु मखैर्यागैः तपोभिः कृच्छ्रचान्द्रायणादिभिर्योगेन वा नाहं सुलभः, कुतः यत् यस्मात् समं चित्तं येषां तेष्वेव वर्तितुं शीलमस्य सोऽहम्॥ १७॥

स विश्वजित् पृथुरेवं लोकगुरुणा विष्वक्सेनेन भगवता अनुशिष्टः हरे रादेशमाज्ञां शिरसा जगृहे अतीवाऽऽदृतवानित्यर्थः॥१८॥

ततः पादयोः क्षमापयितुं स्पृशन्तं स्वेन स्वीयेन अश्वहरणादिकर्मणा व्रीडितं लज्जितं शतक्रतुमिन्द्रं प्रेम्णा परिष्वज्यालिङ्ग्य तस्मिन् विद्वेषं विससर्ज अत्याक्षीत्। हेति विस्मये। आर्द्रापराधजनितविद्वेषं तदैव विससर्जेति विस्मये॥ १९॥

ततो विश्वात्मा सर्वात्मा[5] भगवानपि पृथुनोपहृतं समर्पितमर्हणमर्घ्यादिकं यस्य समुज्जिहानया समुद्रिक्तया भक्त्या गृहीतौ चरणौ अम्बुजे इव यस्य। प्रस्थानाभिमुखः स्वलोकं प्रति प्रयाणाभिमुखोऽपि अनुग्रहेण विलम्बितः सञ्जातविलम्बः सतां भक्तानां सुहृत् निरतिशयप्रीतिमान् एनं पृथुं पश्यन् पद्मदलवद्विशाले अक्षिणी यस्य सः पद्मपत्रवद्विशालाभ्यामक्षिभ्यां पश्यन्निति भावः, न प्रतस्थे न ययावित्यर्थः॥ २०,२१॥

**विज.** साक्षात्कृतो वैकुण्ठोऽपि कञ्चन वरं नाददिति लोकापवादं परिहरति- **वरञ्चेति**। अपवादभीरुः वरं वृणीष्वेति वक्ति न तु तद्गुणलुब्ध इत्यतः उक्तं - तेऽहमिति। मखादीनन्तरेण गुणशीलयन्त्रित इति किं विशिष्योच्यते इति तत्राह - नाहमिति।

---

1. Ms °ड° 2. B, J, Va किञ्चि° 3. A, B, J, Va omit यतः 4. V शमदमादयः 5. W omits सर्वात्मा

योगेनाष्टाङ्गलक्षणेन, समं तत्तद्वस्तुयोग्यतानुसृतं वृत्तं वर्तनं येषां ते समवृत्ताः पुरुषास्तेषु वर्तितुं शीलमस्येति समवृत्तवर्ती यद्यस्मात् तस्मान्नाहं तव मखादिना सुलभः स्यां, किन्तु गुर्वादिषु संवृद्धभक्त्यैवेत्यर्थः ॥ १७ ॥

पृथुरात्मनि गुणग्राहित्वलक्षणं प्रकटयन् श्रीरमणोक्तमग्रहीदित्याह- **स इत्थमिति**। विश्वजित् समस्तजेता ॥ १८ ॥

विष्वक्सेनेन श्री हरिणोक्तं गृहीतमिति शृङ्गग्राहक इव दर्शयतीत्याह - **स्पृशन्तमिति**। मनसा पृथुसन्निहितराजरूपिणो हरेः पादयोः स्पृशन् व्रीडितमसुरजनमोहाय लज्जास्वभावं दर्शयन्तम् "आयासदुःखव्रीडादीन् प्रायशः सुखिनोऽपि तु। नियमादृषिभूपेषु मोहायादर्शयन् सुराः" (ब्रह्मतर्के) इति वचनात् व्रीडितत्वं नेत्यर्थः ॥ १९ ॥

विष्णोः पृथौ प्रसादोद्रेकं दर्शयति - **भगवानिति**। विश्वात्मा पूर्णात्मा "जगत्समस्तं विश्वं च निखिलं पूर्णमुच्यते" इत्यभिधानात् विश्वपदस्य पूर्णार्थत्वमेवाङ्गीकर्तव्यं न तु प्रपञ्चात्मत्वम्, तस्य बहुप्रमाणविरुद्धत्वात्। चन्द्रोदये समुद्रवृद्धिवदनुदिनं समुज्जिहानया [1-]प्रवर्धमानया[-1] भक्त्येत्यनेन "अपक्वभक्तियुक्ता ये न तेषां हरिदर्शनम्। प्रायो भवति दुःखस्य त्वभावः प्रायशो भवेत्" (प्रकाशसंहितायाम्) इति वचनात् साक्षात्कृतमधोक्षजं प्रत्यक्षं पश्यतः पृथोरपक्वभक्तियुक्तेभ्योऽप्युत्तमत्त्वं दर्शयन् तत्साक्षात्कारे भक्तिरेव प्रयोजकत्वात्तच्छृङ्खलया कीलितत्वात् मद्बन्धने सैव सम्पादनीयेति सूचयति ॥ २० ॥

"यात्रा प्रयाणं प्रस्थानम्" इत्यभिधानात् ॥ २१ ॥

**स आदिराजो रचिताञ्जलिर्हरिं विलोकितुं नाशकदश्रुलोचनः।**
**न किञ्चनोवाच स[2] बाष्पविक्लबो हृदोपगू[3]ह्यामु[4]मधादवस्थितः ॥ २२ ॥**

**अथाव[5]मृज्या[6]श्रुक[7]ला विलोकयन्नतृप्तदृग्गोचरमाह पूरुषम्।**
**पदा स्पृशन्तं क्षितिमंस उन्नते विन्यस्तहस्ताग्रमुरङ्गविद्विषः ॥ २३ ॥**

## पृथुरुवाच

**वरान् विभो त्वद्वरदेश्वराद् बुधः कथं वृणीते गुणविक्रियात्मनाम्।**
**ये नारकाणामपि सन्ति देहिनां तानीश कैवल्यपते वृ[8]णे न च ॥ २४ ॥**

---

1--1. A, B, omit 2. W च 3. A, B, G, I, J, M, Ma, T °गु° 4. Ms °नुपथादव°; M, Ma °मुमथाध्यव° 5. M, Ma °भि° 6. Ms °श्या° 7. M, Ma, Ms कणान् 8. M, Ma °वृणीत कः

**न कामये नाथ तदप्यहं क्वचिन्न यत्र युष्मच्चरणाम्बुजासवः[1] ।**
**महत्तमान्तर्हृदयान्मुखच्युतो[2] विधत्स्व कर्णायुत[3]मेष मे वरः ॥ २५ ॥**

**स उत्तमश्लोक महन्मुखच्युतो भवत्पदाम्भोजसुधाकणानिलः ।**
**स्मृतिं पुनर्विस्मृततत्त्ववर्त्मनां कुयोगिनां नो वितरत्यलं वरैः ॥ २६ ॥**

**श्रीध.** भगवतस्तत्कृपातिरेकमुक्त्वा तस्य भक्त्युद्रेकमाह- **स इति** द्वाभ्याम् । बाष्पविक्लबत्वेन तूष्णीमवस्थितस्सन् अमुं हरिं हृदोपगुह्य अधात् धृतवान् ॥ २२ ॥

**अथेति** । अतृप्तयोर्दृशोर्गोचरं विषयभूतम् । पदा क्षितिं स्पृशन्तमिति । अयं भावः - न खलु देवाः पदा भुवं स्पृशन्ति अतः कृपापरवशोनूनं हरिरात्मानं विस्मृतवानिवेति । अत एव[4] स्खलनपरिहारायैव गरुडस्योन्नते स्कन्धे विन्यस्तं हस्ताग्रं येन तम् ॥ २३ ॥

वरं वृणीष्वेति यदुक्तं तदसहमान आह- **वरानिति** । हे विभो ! वरदानां ब्रह्मादीनामीश्वरात् वरप्रदात् त्वत् त्वत्तः सकाशात् बुधस्सन् कथं वरान् वृणीते । कीदृशान् ? गुणैर्विक्रियत इति गुणविक्रियोऽहङ्कारः स एवात्मा येषां तेषां ब्रह्मादीनां सम्बन्धिनः देहाभिमानिनां भोग्यानिति वा । तथा चेत् सः[5] बुध एव न भवतीत्यर्थः । जुगुप्सितत्वादपीत्याह- ये इति । बुध एवाहमपि न वृणे इति समुच्चयाय चकारः ॥ २४ ॥

कैवल्यपते इति सम्बोधनात् कैवल्यं वरिष्यतीति मा शङ्कीरित्याह- **नेति** । महत्तमानाम् अन्तर्हृदयान्मुखद्वारेण निर्गतो भवत्पदाम्भोजमकरन्दो यशश्श्रवणादिसुखं यत्र नास्ति तादृशं चेत्कैवल्यं तर्हि तत् क्वचित् कदाचिदपि न कामये । तर्हि किं कामयसे? तदाह यशश्श्रवणाय कर्णानामयुतं विधत्स्व । ननु त्वदन्यः[6] [7-]कोऽप्येवं न वृतवान्[-7] इति चेत् किमन्यचिन्तयेत्याह । मम तु एष एव वरः ॥ २५ ॥

ननु तर्हि कैवल्याभावे रागद्वेषाद्याकुलानां भक्तिसुखमपि न स्यादित्याशङ्क्याह- **स इति** । भवत्पदाम्भोजसुधायाः कणो लेशः तत्सम्बन्धी योऽनिलः स एव दूरादपि किञ्चिद्यशश्श्रवणमात्रमित्यर्थः । विस्मृतं तत्त्ववर्त्म यैः कुयोगिभिस्तेषामपि पुनः स्मृतिमात्मज्ञानं वितरति अतो न खलु भक्तानां रागद्वेषा[8]दिसम्भवोऽतो नोऽस्माकं सारग्राहिणामन्यैः वरैरलम् । भक्तावेव मोक्षादिसर्वसुखान्तर्भावादिति भावः ॥ २६ ॥

---

1. M, Ma, Ms °वम् । 2. M, Ma, Ms °तं 3. M, Ma °मृत 4. V omits **एव** 5. B, J, V, Va omit **सः** 6. A, B, J, Va omit त्वदन्यः
7--7. A, B, J, Va omit 8. B, J, V, Va omit **द्वेष**

**वीर.** एवं भगवतो भक्ते पृथौ कृपातिरेक उक्तः पृथोः भगवति भक्त्युद्रेकमाह - **स इति** द्वाभ्याम् । स आदिराजः पृथुः बद्धाञ्जलिः आनन्दाश्रुपूर्णलोचनः अत एव हरिमवलोकितुं नाशकत् न समर्थोऽभूत् । बाष्पैर्विक्लबः अधृष्टस्तूष्णीमवस्थितस्सन् किञ्चिदपि नोवाच च[1] । किन्तु अमुं हरिं हृदा उपगूह्य[2] आवृत्य संश्लिष्य आलिङ्ग्येति यावत्, अधात् धृतवान् ॥ २२ ॥

अथानन्तरमश्रुकला अश्रुकणान् हस्तेनावमृज्य अतृप्तयोर्दृशोर्गोचरं विषयभूतं पदा चरणेन क्षितिं भूमिं स्पृशन्तम् । अयं भावः- न खलु देवाः पदा भुवं स्पृशन्ति । अतः कृपापारवश्यान्नूनं हरिरात्मानं विस्मृतवानिवेति उरङ्गद्विषो वैनतेयस्य उन्नते अंसे स्कन्धे विन्यस्तं हस्ताग्रं येन तं, पूरुषं परमपूरुषमाह उवाच ॥ २३ ॥

तत्र यदुक्तं वरं वृणीष्वेति तदसहमान आह- हे विभो ! वरदानां ब्रह्मादीनामीश्वराद्वरदात् त्वत् त्वत्तः सकाशात् बुधः अर्थकामादीनां सातिशयत्वं नश्वरत्वं च जानन् वरान् वृणीते । कीदृशान् ? ये वरा गुणविक्रियात्मनां सत्त्वादिगुणानुसारेण विक्रिया विकाराः यस्मिन्नात्मनि स्वभावे स आत्मा स्वभावो येषां नारकाणां संसारिणामपि देहिनां सन्ति तेषामपि भोग्या इत्यर्थः, तस्मात् हे कैवल्यपते ! मुक्त्यधिपते ! मुक्तिप्रदेत्यर्थः, हे ईश ! सर्वान्तर ! तान् क्षुद्रान् न वृणे ॥ २४ ॥

तर्हि कैवल्यमेव वरय तत्राह- **नेति** । हे नाथ ! महत्तमानां भागवतानामन्तर्हृदयात् मुखद्वारेण निर्गतो भगवत्पदाम्बुजमकरन्दो यशश्श्रवणादिसुखं यत्र नास्ति तादृशं चेत् कैवल्यमपि तन्न कामये न वृणे । तर्हि किं कामयसे तत्राह- त्वद्गुणश्रवणाय मे मह्यं कर्णायुतं कर्णानामयुतम् अयुतशब्द आनन्त्यपरः गुणानामानन्त्यादनन्तगुणश्रवणार्थमनन्तश्रोत्राणि विधत्स्व धेहि[3] । एष एव ममाभिमतो वर इत्यर्थः ॥ २५ ॥

किं मद्गुणश्रवणसाध्यं यदर्थं कर्णायुतं प्रार्थयसे तत्राह- **स इति** । हे उत्तमश्लोक ! महतां त्वद्भक्तानां मुखाच्च्युतः स भवतः पदाम्भोजयोः या सुधा तस्या यो लेशः तत्सम्बन्धी योऽनिलः वायुः दूरादपि किञ्चिद्यशश्श्रवणमात्रमित्यर्थः । विस्मृतं तत्त्ववर्त्म तत्त्वमार्गः यैः कुयोगिभिः तेषामपि नः अस्माकं त्वद्विषयां स्मृतिं भक्तिं वितरति ददाति, अतो वरैः पुरुषार्थान्तर साधनभूतैरलम् ॥ २६ ॥

**विज.** न केवलं पृथोः भक्त्युद्रेक आन्तरः, अपि तु बाह्योऽपि दृश्यते इति भावेनाह- **स आदिराज** इति । चक्षुर्वाग्व्यवहारोपरमेण पुनः किमकारीति तत्राह-**हृदेति** ॥ २२ ॥

---

1. A, B, T एवं तु 2. A, B, T °गु° 3. A, B, T देहि

किमनया तूष्णीं व्यवस्थित्या द्रष्टुस्तन्द्रीहेतुभूतायेति निरूप्य हर्युक्तस्योत्तरं वक्तुमुपक्रमते- **अथेति**। अश्रुकणान् नेत्रजलबिन्दून् अतृप्तयोरलम्बुद्धिमप्राप्तयोः दृशोर्गोचरं विषयमुरङ्ग विद्विषः गरुडस्य॥ २३॥

भगवदादिष्टं चेत्पृथुना गृहीतमथ तदुक्तेषु कस्योत्तरत्वेन वक्तव्यमस्यास्तीति न पश्याम्यन्यत् अतः किमाहेति तत्राह- **वरानिति**। जातावेकवचनमिति न्यायेन वरं वृणीष्वेत्युक्तं तत्र देयत्वेनाभिमताः किमैहिका उत पारत्रिकाः, आद्ये स्रक्चन्दनवनितादयो यदि तर्हि तत्रापि वदामीत्याह- **वरानिति**। सुलभत्वाद्वरणीया न भवन्तीत्याह - **गुणेति**। गुणेषु विषयेषु विक्रिया विकारस्तेन युक्त आत्मा मनो येषां ते तथा तेषां नारकाणां नरकस्थानाम्, अपिशब्देन नरलोके किं वक्तव्यमिति सूचयति। 'वैश्रवणात् पुलाकादानवत्' कैवल्यपते स्त्वत् एतादृशवरादानं जुगुप्सितमित्यर्थः। द्वितीयोऽप्यनेनैव प्रयुक्तः। स्वर्गसारूप्यादिलक्षणमोक्षभेदेन पारत्रिका अपि द्विधा भिद्यन्ते। तत्र कैवल्येऽपि न ममाभिरुचिः किमुत स्वर्गादाविति॥ २४॥

एवं तर्हि तव कोऽभिप्राय इत्यत्र आह - **न कामय** इति। क्वचिदित्यनेन पुरुषार्थमात्रमाक्षिपति, तर्हि मया देयं नास्तीत्यत्राह- **महत्तमेति**। महत्तमानामन्तर्हृदयान्मुखद्वारेण च्युतं निस्सृतं कर्णयोरमृतं तच्चरितलक्षणं विधत्स्वेत्यन्वयः। अनेन सर्वदैतत्तुभ्यमस्त्विति तत्र त्वदनुग्रह एव कारणमन्यथा न स्यादिति ध्वनयति। अभीष्टं पूरयति - **एष** इति॥ २५॥

'हस्त प्राप्तमणित्यागवत्' कैवल्यादिपुरुषार्थत्यागेन तव किं फलितमिति तत्राह - **स इति**। हे उत्तमश्लोक! महतां मुखद्वारेण च्युतः॥ २६॥

**यशः शिवं सुश्रव आर्यसङ्गमे यदृच्छया चोपश्रृणोति[1] ते सकृत्।**
**कथं गुणज्ञो विरमेद्विना[2] पशुं श्रीर्यत्प्रवव्रे गुणसङ्ग्रहेच्छया॥ २७॥**

**अथाभजं[3] त्वाखिलपूरुषोत्तमं गुणालयं पद्मकरेव लालसः।**
**अप्यावयोरेकपतिस्पृधोः कलिर्न स्यात्कृतत्वच्चरणैकतानयोः॥ २८॥**

**[4] जगज्जनन्यां जगदीश वैशसं स्यादेव यत्कर्मणि नः समीहितम्।**
**करोषि[5] फल्ग्वप्युरु दीनवत्सलः[6] स्व एव धिष्ण्येऽभिरतस्य किं तया॥ २९॥**

**भजन्त्यथ त्वामत एव साधवो व्युदस्तमायागुणविभ्रमोदयम्।**
**भवत्पदानुस्मरणादृते सतां निमित्तमन्यद्भगवन्न विद्महे॥ ३०॥**

---

1. W °मि 2. V °दृते 3. A, B, G, I, J, T °जे 4. M, Ma जन्तोर्जगत्यां 5. B °ति 6. M, Ma, Ms °ल

**मन्ये गिरं ते जगतां विमोहिनीं वरं वृणीष्वेति भजन्तमात्थ यत्।**

**वाचा नु तन्त्या यदि ते जनोऽसितः कथं पुनः कर्म करोति मोहितः ॥ ३१ ॥**

**श्रीध.** ननु भक्ति मुंक्तिफलैवातः फलं विहाय साधने भवतः कोऽयमाग्रह इत्याशङ्क्याह- **यश** इति। हे सुश्रवः ! मङ्गलकीर्ते ! ते[1] शिवं यशः सतां सङ्गमे यः सकृदपि यदृच्छयाऽप्युपश्रृणोति[2] गुणज्ञश्चेत् स पशुं विनाऽन्यः कथं विरमेत्। गुणातिशयं सूचयति। श्रीर्यद्यशः एव प्रकर्षेण वव्रे[3] वृतवती गुणानां सर्वपुरुषार्थानां सङ्ग्रहः स्वस्मिन् समाहारः तदिच्छया॥ २७॥

अतो लक्ष्मीरिवान्यवर परि[4]त्यागेन त्वामेवाहं भजे इत्याह - **अथेति**। लालसः उत्सुकः सन् कर्मणि क्रियमाणे यथेन्द्रेण सह कलिरेवं भक्तावपि किं लक्ष्म्या सह कलिः[5] कलहः[6] न स्यादिति वितर्कयति। एकस्मिन् पत्यौ [7-]त्वयि विषये मिथः[-7] स्पर्धमानयोरावयोरपि किं कलिर्न स्यादिति काक्का वितर्कः। ननु पर्यायेण सेवायां न स्यात्। मैवम्[8]। कृतस्त्वच्चरणयोरेवैकतानो मनोविस्तारो याभ्यां तयोः॥ २८॥

भवतु [9-]वा[-9] कलिस्तथापि भजेयमेवेत्याह- **जगदिति**। जगज्जनन्यां वैशसं विरोधः स्यादेव, तत्र हेतुः यस्याः कर्मणि [10-]चरणसेवालक्षणे[-10] न समीहितमिच्छा भवति तथापीन्द्रविरोधे मत्पक्षपातवदत्रापि मयि[11] तव पक्षपात एव स्यादित्याह। फल्गु तुच्छमप्युरु बहु करोषि यतो दीनेषु वत्सलो दयावान्[12]। [13-]ननु ब्रह्मादिभिरपि प्रार्थितां श्रियं विहाय त्वयि पक्षपात एव कथं स्यादत आह[-13] - स्वे स्वरूप एव रतस्य तव[14] तया लक्ष्म्या[15] किं प्रयोजनम्। तां नाद्रियसे इत्यर्थः॥ २९॥

**भजन्तीति**। यतस्त्वं दीनवत्सलोऽत एव साधवो निष्कामा अथ ज्ञानानन्तरमपि त्वाम् एव[16] भजन्ति। कथम्भूतम्? मायागुणानां विभ्रमो विलासः तस्योदयः कार्यं स निरस्तो यस्मिंस्तम्। ननु[17] ते मां[18] किमर्थं भजन्ति तत्राह। भवत्पदानुस्मरणात् विना अन्यत्तेषां निमित्तं फलं न विद्मः॥ ३०॥

वरैः प्रलोभनं च कृपालोः तवानुचितमित्याशयेनाह - **मन्य इति**। नु अहो ते वाचा तन्त्या यदि जनोऽयमसितोऽबद्धः स्यात्तर्हि पुनः पुनः फलैः मोहितस्सन् कथं कर्म करोति॥ ३१॥

---

1. V omits ते 2. V omits अपि 3. A, B, T, Va omit वव्रे 4. A, B, J, Va omit परि 5. V omits कलिः 6. A, B, J, Va omit कलहः न 7--7. A, B, J, Va omit 8. A, B, J, Va नैवम् 9--9. V कलहः 10--10. B, J, V, Va omit 11. B, J, V, Va omit मयि 12. V omits दयावान् 13--13. A, B, J, Va omit 14. B, J, V, Va omit तव 15. B, J, V, Va omit लक्ष्म्या 16. A, B, J, Va omit एव 17. A, B, J, Va omit ननु 18. B, J, V, Va omit मां

वीर. त्वद्विषयभक्तिवर्धकत्वात् त्वद्गुणा[1]नुश्रवणस्य यदृच्छयापि त्वद्गुणानेव श्रृणुयामित्याह - **यश इति**। हे सुश्रवः! शोभनकीर्ते! सतां सङ्गमे सति सकृदपि [2-]यदृच्छयापि ते तव यशः कीर्तिमेव परं श्रृणोमि। सकृदपि[-2] यदृच्छयापीत्यनेन असकृदत्यादरेण यशसः श्रोतव्यता सूच्यते। तदुपपादयति यः कश्चित् पुमान् गुणज्ञः सारग्राही चेत् पशुं कर्मजडमृते कथं विरमेत्? [3]त्वद्गुणानुश्रवणादिति शेषः। अगुणज्ञः पशुश्चेत् त्वद्यशः सकृदाश्रुत्य ततो विरमेदित्यर्थः। गुणज्ञस्याविराम[4]मेव सदृष्टान्तमुपपादयति यत्-यस्मात् श्रीः लक्ष्मीः गुणानां भवदीयकल्याणगुणानां सङ्ग्रहेच्छया संस्मरणेच्छया प्रवव्रे त्वामिति शेषः। यद्वा गुणानां सर्वपुरुषार्थानां सङ्ग्रहः स्वस्मिन् समाहारः तदिच्छया [5]यत् त्वद्यशः प्रवव्रे नितरां वृतवती॥ २७॥

अतो लक्ष्मीरिवान्यपरित्यागेन त्वामेवाहं भजामीत्याह - **अथेति**। [6]अथ हे भगवन्! अखिलपूरुषोत्तममखिलेभ्यो बद्धमुक्त [7-]नित्यभेदेन त्रिविधेभ्यः[-7] पूरुषेभ्यः उत्तमं "पञ्चमी भयेन" (अष्टा 2-1-37) इत्यत्र पञ्चमीति योगविभागात्समासः। अनेन जीवानामभजनीयत्वं विवक्षितम्। अखिलपुरुषोत्तमत्वे हेतुः- गुणालयं त्रिविधेष्वपि चेतनेष्वसम्भावितनित्यनिरुपाधिकानन्याधीनसर्वज्ञत्वसर्वशक्तित्वसर्वकारणत्वसत्यत्वज्ञानत्वानन्तत्वादिकल्याण - गुणाश्रयं त्वामेव पद्मकरेव लक्ष्मीरिव लालसः [8-]अत्यासक्तः[-8] अभजं भजेयमित्यर्थः। ननु द्वयोरपि मां भजमानयोरिन्द्रेण सहेव तव कलहः स्यात् तत्राह- एकपतिस्पृधोः एकस्मिन् पत्यौ स्पर्धमानयोः एकभर्तृश्रद्धावतोरिति यावत्। आवयोः लक्ष्म्या मम च कलिः कलहो न स्यात् असम्भावितः। असम्भवमेवोपपादयति त्वच्चरणैकतानयोः त्वच्चरणयोरेकतानो मनस ऐकाग्र्येण वृत्तिर्ययो स्तयोः आवयोः तत्कलिरित्येतत् क्व न भवेदेवेत्यर्थः, विषयस्यापरिच्छिन्नत्वादिति भावः॥ २८॥

भवतु नाम कलिस्तथापि भजेयमित्याह **-जगदिति**। हे जगदीश! जगज्जनन्यां जगन्मातरि लक्ष्म्यां वैशसं विरोधः स्यादेव। तत्र हेतुः - यस्याः कर्मणि नः समीहितमिच्छा भवति, तथापि इन्द्रविरो[9]धे मत्पक्षपातवत् अत्रापि तव मत्पक्षपात एव स्यादित्याह। फल्गु तुच्छमपि उरु बहु करोषि यतो दीनेषु वत्सलः। स्व एव धिष्ण्ये स्वस्वरूप एवाभिरतस्य तव तया जगज्जनन्या किं प्रयोजनं तां नाद्रियस इत्यर्थः। यद्वा नन्वेतावन्तं कालं कर्म फलासङ्गेनानुष्ठितमधुना फलासङ्गाभावेऽप्यवश्यं मां भजतोऽप्यैहिकं फलं दास्याम्येव तत्राह- जगज्जनन्यामिति। हे जगदीश! कर्मणि यज्ञादौ जगज्जनन्या प्रकृत्या यन्नः अस्माकं समीहितं फलं तद्वैशसमनर्थरूपं फलं संसाराभिप्रायेण वैशसमित्युक्तं स्यादेव प्राकृतं फलं स्यादेवेत्यर्थः। किन्तु फल्ग्वपि प्राकृतफलसाधनत्वेन तुच्छमपि यज्ञादिकर्म उरु

---

1. A, B, T omit अनु 2--2. A, T omit 3. W omits त्वत् 4. A, B, T omit एव 5. A, B, T omit यत् 6. A, B, T omit अथ
7--7. A, B, T नित्येभ्यः 8--8. A, B, T omit 9. A, B, T add अपि

फल्वपि प्राकृतफलसाधनत्वेन तुच्छमपि यज्ञादिकर्म उरु करोषि तस्मिन् स्वाराधनैकवेषतामापाद्य स्वविषयभक्त्युत्पादनद्वारा अनन्तस्थिरमुक्ति फलसाधनतासम्पादनेनोरु करोषीत्यर्थः। यतो भवान् दीनवत्सलः [1]दीनेषु वत्सलः[1] दोषादर्शी। अयम्भावः- यद्यपि [2]वयम् अनादिप्रकृतिसम्बन्धात् यज्ञादिकर्मणां त्वदाराधनरूपतामजानन्तः पशुपुत्रवृष्ट्यन्नस्वर्गाद्यैहिकामुष्मिकफलसाधनतामापाततश्चोदनाभ्यः प्रतिपन्नामवबुद्ध्य कर्मानुतिष्ठामः। तथापि त्वं दीनेषु दासेषु दोषादर्शी [3]फल्गु फलाशां निवर्त्यानन्तस्थिरफलसाधनतामेव निष्पादयसीति। जगज्जगत्यामिति पाठे प्राणिपूर्णभुवने इत्यर्थः। फल्गुत्वमेवोपपादयति - स्व एव धिष्ण्ये स्वस्वरूप एवाभिरतस्य स्वात्मारामस्येत्यर्थः, तया जनन्या किं प्रयोजनं स्वात्मारामस्य प्राकृतं फलं किमिति न भवति अतिक्षुद्रमित्यर्थः, स्वात्मारामस्य जगज्जगत्यां फल्गु परलोकप्राप्तिरित्यर्थः॥ २९॥

एवमैश्वर्यान्तरेभ्य आत्मानुभवस्यातिशय उक्तः, ततोऽपि भगवदनुभवस्यातिशयत्वं सूचयन् स्वात्मानुभवपूर्वकभक्ति योगस्य कर्तव्यतां सोदाहरणमाह - **भजन्तीति**। अत एव केवलकर्मणां फल्गुत्वादेव साधवो निष्कामाः अथ प्रत्यगात्मयाथात्म्यज्ञानानन्तरं त्वां भजन्ति। कथम्भूतम्? व्युदस्तमायागुणविभ्रमोदयं मायाया ये गुणा रजस्तमादयः तन्मूलको यो भ्रमः देहात्मभ्रमः स्वतन्त्र्यात्मभ्रमश्च तस्य य उदयः उद्रेकः व्युदस्तः निरस्तः मायागुणविभ्रमोदयो येन तं संश्रितमायागुणभ्रमनिरासकमित्यर्थः। निरतिशयानन्दरूपमात्मानुभवं लब्ध्वापि किमर्थं मां भजन्ते तत्राह - हे भगवन्! सतां भवत्पदानुस्मरणात् ऋते त्वत्पदाम्बुजस्मरणं विना अन्यन्निमित्तं फलं न विद्महे, नित्यनिरतिशयानन्तानन्दरूपे त्वच्चरणस्मरणे समुद्रे विप्रु डिव केवलस्वात्मानुभवोऽप्यतितुच्छ इति भावः॥ ३०॥

वरैः प्रलोभनं कृपालोस्तवानुचितमित्याशयेनाह- **मन्य इति**। त्वां भजन्तं मां वरं वृणीष्वेति यदात्थ अवोचः तां ते तव गिरं जगतां विमोहिनीं विषमिश्रपयः पानप्रलोभनवाक्यतुल्यां मन्ये। त्वदभजनात् प्राप्तसंसाराणां दैवात् त्वद्भजने सति पुनस्तेषां वरप्रलोभनैः संसारहेतुमेवाऽऽपादयसि भक्तानुग्रहैकशीलस्य दयालोस्तव तन्निग्रहोऽनुचित इति भावः। नु अहो ते तव तन्त्या दामतुल्यया बन्धक्या वाचा "अपाम सोमममृता अभूम, अक्षय्यं हवैचातुर्मास्य याजिनः सुकृतं भवति"। (ऋक्.सं.6-4-11) इत्यादिकया "यामिमां पुष्पितां वाचम्" (भ.गी. 2-42) इति त्वदुक्त विधया वेदगिरा जनो लोकः यदि असितः अबद्धः स्यात्, "षिञ् बन्धने"। (धातुपाठे) आपाततः प्रतिपन्नफलाशानिर्मुक्तो मुमुक्षुः स्यादित्यर्थः। तर्हि कथं पुनः फलैः मोहितस्सन् कर्म प्रवृत्तिधर्मं करोतीत्यर्थः॥ ३१॥

---

1--1. A, B, T omit 2. A, B, T omit वयम् 3. W omits फल्गु

**विज.** ननु मत्कथा भवता बहुशोऽश्रावि, अतोऽस्मादाग्रहाद्विरम्यान्यं वरं वरयेति चेत्तत्राह - **यश इति**। हे सुश्रवः! शोभनकीर्ते! आर्याणां त्वत्तत्त्वज्ञानां सङ्गमे यदृच्छया प्रसङ्गतः प्राप्तं तव यशः कथारूपेण ग्रथितं भक्त्या उपश्रृणोति, स गुणज्ञः सारज्ञः पुरुषः पशुमज्ञमृते कथमस्माद्विरमेदित्यन्वयः। तत्र हेतुः **श्रीरिति**। गुणस्त्वावृत्तिस्तत्सङ्गहेच्छया यद्यशः प्रवव्रे इति यस्मात्तस्मात् अनेन यशश्श्रवणमात्रावृत्या क्रियते चेदानन्दाभिवृद्धिः स्यादिति सूच्यते। "गुणस्त्वावृत्तिशब्दादि ज्येन्द्रियामुख्यतन्तुषु" (वैज.को. 6-1-20) इति यादवः॥ २७॥

अथ तस्मादहं त्वामभजं भजामि, तथाप्येकमेव पतिं स्पर्धेते इत्येकपतिस्पृधौ तयोस्त्वच्चरणैकतानयोः त्वत्पदैकनिष्ठयोरावयोः कलिः कलहः कृतो न स्यात् अपि, किं न स्यादेव?॥ २८॥

जन्तु स्वभावमपेक्ष्य कलिः स्यादिति शङ्का, न तु भगवद्भक्तस्येत्यभिप्रेत्याह- **जन्तोरिति**। हे जगदीश! अखण्डेश! "जगत्समस्तं विश्वं च निखिलं पूर्णमुच्यते" इति च। जगत्यां राजप्रधानलोके विद्यमानस्य जन्तुसमूहस्य मिथो वैशसं हिंसालक्षणः कलहः स्यात् कलिस्वभावत्वात्। अत्रास्मद्विषये स न स्यात् निमित्ताभावात् इत्युक्तं- यत्कर्मणीति। नोऽस्माकं कर्मणि त्वत्पूजालक्षणे यत्समीहितं शुभलक्षणं चेष्टितं तत् फल्गु अल्पमपि उरु महत्करोषि। तत्र हेतुगर्भविशेषणमाह- **दीनवत्सल इति**। तत्राप्यल्पस्यापि शुभस्य फलप्रदानेन महत्त्वकरणं, न तु परमाणुपरिमितस्य शुभस्य सुखपर्वतीकरणम्। तथा सति वैषम्यापातः स्यात्, तस्य निर्दोषस्यासम्भवादिति बोद्धव्यम्। इतोऽपि कलिर्नस्यादित्याह - **स्व एवेति**। स्वे स्वरूपभूते धिष्ण्ये महिम्न्येव "धिष्ण्यं तेजश्च सामर्थ्यं महिमा धाम चोच्यते" इत्यभिधानम्। स्वसुखार्थम् अन्यापेक्षां विना अभिरतस्य तव वात्सल्यं विना तया श्रियापि किमत्रापि वात्सल्यमेव कारणं येन येन भक्त्यतिशयः क्रियते तत्र तत्राधिकवात्सल्यं स्यादिति तात्पर्यमवबोद्धव्यम्। जगत्यां मूलप्रकृतौ श्रियां जन्तोरज्ञजनस्य वैशसं विषमबुद्धिलक्षणं स्यादेव। न तु पण्डितस्य। कुतः यद्यस्मात् नः कर्मणि श्रौतादिविषये वैशसं यत्संज्ञपनलक्षणं तत्समीचीनमीहितं भक्तिपूर्वकत्वात्। अल्पपुण्यस्य तव न मद्भक्तियोग्यत्वमत्राह- **करोषीति**। "यमेवैष वृणुते तेन लभ्यः" (कठ. 3-2-22) इति श्रुतेः। भक्तिवशत्वद्योतनाय फल्ग्वप्युरु करोषीत्युक्तम्। अनेन हरौ भक्तिरवश्यं कर्तव्येति ज्ञायते, अन्यत्सममिति। भजनक्रियामपि न शक्नुमः कर्तुं त्वत्प्रसादातिरेकेणेत्याह- **जगज्जगत्यामिति**। जगतां जङ्गमेन उपलक्षणमेतत्, स्थावरेणापि युक्तायां जगत्यां लोके। नोऽस्माभिः कर्मणि विषये यत्समीहितं स्यात् तद्वैशसमेव हिंसारूपमेव। अत एव फल्गु तुच्छफलं ततः स्वतश्च तृप्तये नालमित्यर्थः। अथ भगवानुरु परिपूर्णं करोति, अत्र हेतुगर्भविशेषणं- **हे दीनवत्सलेति**। हेत्वन्तरमाह- **स्व एवेति**। परिपूर्णानन्दरूपेऽभिरतस्य तया भजनक्रियया किं भृत्यवात्सल्यादुरुकरोतीत्यर्थः। अथवा अप्येकपतिस्पृधोः कलिः स्यादिति सन्देहः

कृतः, पूर्वमधुना तव मयि पक्षपातात् कलिरित्याह- **जगज्जगत्यामिति**। जगतो जङ्गमस्थावरलक्षणस्य प्राणिसमूहस्य जगत्याधारभूता मूलप्रकृतिर्लक्ष्मीः, तस्यां वैशसं पीडा स्यादेव। हे जगदीश! कुतः? यत् यस्मादस्माकं कर्मणि श्रौतादौ फल्ग्वप्युरु करोति न तथा तया कृतं हे दीनवत्सल! अथवा किमिदमाश्चर्यमित्याह - **स्व एवेति**। तया श्रिया किं प्रयोजनम्? कामिनामुपकारिण्येत्यर्थः। जगज्जगत्यामित्येकपदेऽपि लक्ष्म्यामित्यर्थः। अथवा जगतो हिंसारूपत्वात् तदन्तः पाती, कथमहं त्वां भजामि त्वत्प्रसादं विनेत्याह- **जगदिति**। हे जगदीश! जगत्यां लोके यज्जगत्प्राणिसमूहः तद्वैशसमेव हिंसाप्रवृत्तिरेव। तथापि तदन्तःपातिभिः अस्माभिः कर्मणि यत्समीहितं स्यात् तत्फल्गु हिंसारूपमप्युरु अहिंसारूपकमपि करोति। भवान् हे दीनवत्सल! किमर्थमेवं पक्षपातेन करोति भवान् हे दीनवत्सल! किमर्थमेवं पक्षपातेन करोति न स्वे धिष्ण्येऽभिरतस्य तया अहिंसया तव किं, केवलं मामुद्धर्तुमेवेति भाव इति केचिद्व्याचक्षते, तदसत्। पदानां विवक्षितार्थावाचकत्वेन पाठसम्प्रदायाभावेन प्रमाणविरोधेन प्रेक्षावद्भिरुपेक्षणीयत्वात् पूर्वापरविरोधाच्च लक्ष्म्या हरेर्भक्तेषु पक्षपातकथनाय स्वानुभवविरुद्धत्वाच्च॥ २९॥

अस्मिन्नर्थे साधुसम्मतिमाह - **भजन्तीति**। अथान्यच्चास्मिन्नर्थे प्रमाणमस्तीति किं तदिति तदुच्यते। अत एव भक्तवात्सल्यादेव साधवः सज्जनास्त्वां भजन्ति कं गुणमुपसंहृत्येति तत्रोक्तं **व्युदस्तेति**। मायागुणानां विभ्रमोदयो विलासोदयो यः स निरस्तो येन स तथा तं संसारोच्छेदोऽपि न स्वत एषामित्यभिप्रेत्याह - **भवत्पदेति**। अन्य त्कर्मादिकम्॥३०॥

विमुक्ति मुख्य निमित्तमङ्घ्रिस्मरणादन्यन्नास्तीति यद्यस्मात्तस्माद्धजन्तं प्रति वरं वृणीष्वेति वाणी जगन्मोहकरीत्याह - **मन्ये गिर मिति**। तदुपपादयति - वाचेति। "तस्येदं वाचा तन्त्या नामाभिर्दामभिः सर्वं सितम्"() इति श्रुतिः "षिञ्-बन्धने"()यद्यसितो बन्धनरहित स्तर्हि पुनः शश्वत्कथं कर्म करोतीत्यन्वयः॥ ३१॥

**त्वन्मायया‌द्धा [1]जन ईश खण्डितो यदन्यदाशास्त ऋतात्मनोऽबुधः।**
**यथा चरे द्बालहितं पिता स्वयं तथा त्वमेवार्हसि नः समीहितम्[2]॥ ३२॥**

**[3-]मैत्रेय उवाच[-3]**

***[4-]ते साधु वर्णितं[-4] राजन्[5-]नाशास्से न[-5] यदाशिषः।**
**स्वर्गापवर्गनरकान् समं पश्यति मत्परः॥ ३३॥**

---

1. M, Ma जगदीश 2. A, B, G, I, J, M, Ma, Ms, T, V °तुम् * These two verses are not found in A, B, G, I, J & T. 3--3. M, Ma श्री भगवानुवाच; Ms श्रीवैकुण्ठः 4--4. M, Ma, Ms, V साधु तेऽवसितं 5--5. V मत्त आशिषः

प्रीतोऽहं ते महाराज ! शेषं दुस्त्यजमत्यजः ।
मदादेशं श्रद्दधानः तन्मह्यं परमर्हणम्[1] ॥ ३४ ॥

मैत्रेय उवाच

*इत्यादिराजेन नुतः स विश्वदृक् तमाह राजन्[2] मयि भक्तिरस्तु[3] ते ।
दिष्ट्येदृशी धीर्मयि ते[4] कृता यथा मायां मदीयां [5-]तरति स्म दुस्त्यजाम्[-5] ॥ ३५ ॥

**तत्त्वं[6] कुरु मयाऽऽदिष्टमप्रमत्तः[7] प्रजापते ।
मदादेशकरो लोकः सर्वत्राप्नोति[8] शोभनम् ॥

मैत्रेय उवाच

इति वैन्यस्य राजर्षेः प्रतिनन्द्यार्थवद्वचः[9] ।
पूजितोऽनुगृहीत्वैनं गन्तुं चक्रेऽच्युतो मतिम् ॥ ३६ ॥

देवर्षिपितृगन्धर्व[10] सिद्धचारणपन्नगाः ।
किन्नराप्सरसो मर्त्याः खगा भूतान्यनेकशः ॥ ३७ ॥

यज्ञेश्वरधिया राजा वाक्वित्ता[11]ञ्जलिभक्तिभिः[12] ।
सभाजिता ययुः सर्वे वैकुण्ठानुगतास्ततः ॥ ३८ ॥

भगवानपि राजर्षेः सोपाध्यायस्य पश्यतः[13] ।
हरन्निव मनोऽमुष्य स्वधाम प्रत्यगात्[14]प्रभुः[15] ॥ ३९ ॥

अदृष्टाय नमस्कृत्य नृपस्सन्दार्शितात्मने[16] ।
[17] वासुदेवाय देवानां देवाय स्वपुरं ययौ ॥ ४० ॥

---

1. M, Ma, Ms, V °मा° * This verse is not printed in M, Ma Edns. There is not commentary of Vijayadwaja in the same
2. Ms adds श्रीवैकुण्ठः 3. Ms °रस्खला 4. Ms लोकहिते 5--5. ततरुस्सुदुस्तराम् ** This verse is not commented by either Sridhara or Veeraraghava or Vijayadhaja 6. Ms, V स त्वं 7. Ms ममाऽऽदि° ; W मयोद्दि° 8. Ms, T, V °मा° 9. Ms, V अभि 10. Ms °र्वाः 11. A, B, G, I, J, M, Ma, Ms, T वाग्वि° 12. A, B, G, I, J, M, Ma, Ms, T °तः । 13. A, B, G, I, J, T, V चाच्युतः 14. A, B, G, I, J, T प्रत्यपद्यत 15. V °द्विभुः 16. M, Ma, Ms स्वस्य स° 17. A, B,G, I, J, T अव्यक्ताय च

इति श्रीमद्भागवते महापुराणे अष्टादश साहस्र्यां

श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां

चतुर्थस्कन्धे विंशोऽध्यायः ॥ २० ॥

**श्रीध.** त्वन्मायया खण्डितस्य त्वया पुनः खण्डनं न कर्तव्यं किन्तु हितं चेष्टितव्यमित्याह - **त्वन्मायये ति** । त्वन्मायया ऋतादात्मनस्त्वत्तः खण्डितः पृथक्कृतो यद्यतोऽन्यत्पुत्रादिकमाशास्ते अतः स्वयमविज्ञापित एव नः[1] [2-]समीहितुं[-2] हितं चेष्टितुमर्हसि, [3-]यथा बालहितं पिता स्वयमेव करोति तद्वत्[-3] ॥ ३२-३६ ॥

**यज्ञेति** । [4-]वाक्चित्ताञ्जलि भक्तिभिः[-4] [5]पूजितास्सन्तः । वैकुण्ठानुगताः पार्षदाश्च ॥ ३७,३८ ॥

***भगवानिति** । अमुष्य राज्ञः । हरन्निवेति लोकोक्तिः । वस्तुतस्तस्य मनः सर्वदैव तदधीनमस्त्येव । स्वधाम राज्ञो हृदयम्॥ ३९ ॥

**अदृष्टायेति** । अदृष्टाय लोचनपथमतिक्रान्ताय । सन्दर्शितः [6-]अनुभावित[-6] आत्मा येन तस्मै । [7-]वासुदेवाय शुद्धचेतसि प्रतीयमानाय[-7] । [8-]वस्तुतोऽव्यक्ताय[-8] ॥ ४० ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीश्रीधरस्वामि विरचितायां भावार्थदीपिकायां

व्याख्यायां विंशोऽध्यायः ॥ २० ॥

**वीर.** त्वन्मायया मोहितस्य त्वया पुनर्मोहनं [9-]न कार्यं[-9] किन्तु हितमेव चेष्टितव्यमित्याह - **त्वन्माययेति** । हे ईश ! त्वन्मायया अबुधः स्वात्मपरमात्मयाथात्म्य ज्ञानविधुरः जनः लोकः दैवात्वां भजन् ऋतात्मनः सत्यात्मनस्त्वत्तः यदि अन्यत् अर्थकामादिकमाशास्ते तर्हि खण्डितः पृथक्कृतः दूरीकृत एव स्यादित्यर्थः । ईशेति हेतुगर्भम्, आत्मना ईशेन त्वया आत्मीयमीशित्वं[10] दूरीकृतं स्यादितीशत्वमेव विप्लुतं स्यादिति भावः । अतः स्वयमविज्ञापित एव त्वं[11] बालहितम[12]ज्ञपुत्रहितंपिता यथा चरेत् कुर्यात् तथा नः समीहितं कर्तुमर्हसि ॥ ३२ ॥

---

1. B, J, V, Va omit नः 2--2. B, J, V omit 3--3. A, B, J, Va omit द 4--4. A, B, J, Va वाग्वित्ताञ्जलिभिर्भक्तितः 5. V सम्पू°

* The commentary of Sridhara on 39th verse is not found in V Edn. only. 6--6. B, J, V, Va omit 7--7. B, J, V, Va omit

8--8. V omits 9--9. A, B, T नोचितं 10. A, B, T °मैश्वर्यं 11. A, B, T omit त्वं 12. W omits अज्ञ

एवमुक्तो भगवान् तदुक्तमनुजग्राहेत्याह मुनिः। हे राजन्! ते त्वया साधुवर्णितं यत् यस्मात् आशिषः ऐहिक पुरूषार्थान्नाशास्से नेच्छसि, अतो भवान् मत्परः स्वर्गापवर्गनरकान् समं यथा तथा पश्यति। अपवर्गोऽत्र कैवल्यं, नरकग्रहणं दृष्टान्तार्थं, नरकवत् स्वर्गापवर्गावपि[1] हेयौ द्रक्ष्यसीत्यर्थः ॥ ३३ ॥

हे महाराज! ते तुभ्यमहं प्रीतः यस्मा- त्वं मदादेशं श्रद्दधानः विश्वसन् दुस्त्यजमपि शेषमत्यजः। तन्मदादेशविश्वसनमेव मह्यं परमुत्कृष्टमर्हणमाराधनम् ॥ ३४ ॥

इति पूर्वोक्तरीत्या आदिराजेन पृथुना नुतः स्तुतः स विश्वभुग्भगवान् तमादिराजं प्रत्याह। उक्तमेवाह - हे राजन्! मयि ते तव भक्तिरस्तु वर्धतां, दिष्टया दैववशेन ते त्वया मयीदृशी धीर्भक्तिः कृता, कथम्भूता? यया धिया दुस्त्यजामपि मदीयां मायां तरति स्म ॥ ३५ ॥

उपसंहरति - **इतीति**। वैन्यस्य राजर्षेः प्रभोः अर्थवत् श्रुण्वतामपि पुरूषार्थसाधनं वचः अभिनन्द्य तेन पूजितः एनं वैन्यं अनुगृह्याच्युतो भगवान् गन्तुं मतिं चक्रे ॥ ३६ ॥

तदा देवादयः सर्वे राज्ञा यज्ञेश्वर धिया भगवदात्मकत्वधिया यथायोग्यं वागादिभिः सभाजिताः पूजिताः ततः यज्ञभूमेः वैकुण्ठं ? भगवन्तमनुसृत्य गताः ययुः ॥ ३७,३८ ॥

सोपाध्यायस्य राज्ञः पश्यतस्सतः अमुष्य राज्ञो मनो हरन्निव भगवान् स्वधाम प्रत्यगात् ॥ ३९ ॥

अदृष्टाय चक्षुर्विषयतामप्राप्ताय सन्दर्शित आत्मा येन तस्मै, देवानां ब्रह्मादीनामपि देवाय वासुदेवाय। "वसन्ति यत्र भूतानि भूतात्मानि" (वि.पु.6-5-75) इति निरुक्त वासुदेव पदवाच्याय नमस्कृत्य स्वपुरं ययौ ॥ ४० ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवत चन्द्रचन्द्रिकायां

व्याख्यायां विंशोऽध्यायः ॥ २० ॥

**विज.** इतोऽपि मोहित इत्याह - **त्वन्माययेति**। अबुधो यो जनः ऋतात्मनः सत्यात्मनो हरेः सकाशादन्यत् स्वर्गादिकमाशास्त

---

1. A, B, T omit अपि

इति यत्तस्मादेष त्वन्मायया खण्डितः त्वदुपास्तेर्वियोजित इत्यर्थः। अस्यामवस्थायां बहुप्रजल्पेन किम्? इदमेव प्रार्थय त्याह ययेति॥ ३२॥

पृथूक्तं श्रीपतिमनसि संविष्टमिति भावेन हरेः तदुक्तिप्रशंसा प्रकारमाह - **साध्विति**। साधु उचितं इदमात्यन्तिकभक्त लक्षणमि भावेनाह - **स्वर्गेति**। नरकान्नरकान्तरप्राप्ति समये किञ्चिन्निवृत्तिः समत्वम्॥ ३३॥

मद्भक्तस्य रोषत्याग एव मत्प्रीतिसाधनमित्याह प्रीत इति॥ ३४॥

प्रतिवचनं चेत्समाप्तं परं किमकारि हरिणेति तत्राह-इतीति॥ ३६॥

हरिमनुगता देवादयः किं चक्रुरत्राह - **देवेति**॥ ३७॥

सर्वप्राणिषु यज्ञेश्वरो हरिरवस्थितः। तदुक्तं ''भूतेषु हरिरित्येव हर्यर्पणधिया तथा! सर्वभूतेषु च हरेः पूज कार्यात्मवेदिभिः''(पाद्मे) इति वचनात् इदं सर्वं तदर्पणमास्त्विति धीर्यज्ञेध्वर धीः, तया सभाजिताः सम्भाविताः॥ ३८॥

गन्तुं मन एव कृतं न तु गतमिति शङ्का मा भूदित्याह **भगवानपीति**॥ ३९॥

राज्ञो यज्ञशालातः स्वपुरप्रस्थानप्रकार माह अदृष्टायेति अदृष्टाय चक्षुषोरविषयाय स्वस्य सन्दर्शितात्मने साक्षात्कारित स्वरूपाय॥ ४०॥

इति श्रीमद्भगवते चतुर्थस्कन्धे

श्रीविजयध्वजतीर्थ कृतायां पदरत्नावल्यां

टीकायां विंशोऽध्यायः॥ २०॥

# एकविंशोऽध्यायः

## मैत्रेय उवाच

मौक्तिकैः कुसुमै[1]स्स्रग्भिः दुकूलैः स्वर्णतोरणैः ।
महासुरभिभि र्धूपै र्मण्डितं तत्र तत्र वै[2]॥ १ ॥

चन्दनागु[3]रुतोयार्द्र रथ्याचत्वरमार्गवत् ।
पुष्पाक्षतफलै स्तोक्मै[4] र्लाजै रर्चि[5]र्भिरर्चितम् ॥ २ ॥

[6]सवृन्तैः कदलीस्तम्भैः पूगपोतैः परिष्कृतम् ।
तरुपल्लवमालाभिः सर्वतः समलङ्कृतम् ॥ ३ ॥

प्रजास्तं दीपबलिभिः सम्भृताशेषमङ्गलैः ।
[7-]अभीयु र्मृष्टकन्याश्च[-7] मृष्टकुण्डलमण्डिताः ॥ ४ ॥

शङ्खदुन्दुभिघोषेण ब्रह्मघोषेण चर्त्विजाम् ।
विवेश भवनं वीरः स्तूयमानो गतस्मयः ॥ ५ ॥

## श्री श्रीधरस्वामिविरचिता भावार्थदीपिका

एकविंशे तु पृथुना प्रजाना मनुशासनम् । महासत्रे सुरादीनां महासदसि वर्ण्यते ॥

स्वपुरं यया वित्युक्तं, तत्पुर मनुवर्णयति त्रिभिः **मौक्तिकै**रिति ॥ १ ॥

**चन्दनेति** । चन्दनागु[8]रुयुक्तै स्तोयैः आर्द्राः रथ्यादयः तद्युक्तम् । तोक्मैः हरितयवैश्च अङ्कुरैरिति वा अर्चिर्भि र्दीपैः ॥ २ ॥

[9-]**सबृन्दैरिति** । सबृन्दैः पुष्पफलयुक्तैः कदली स्तम्भैः पूगैः वृक्षैः तथाविधैः सर्वतः समलङ्कृतं शोभि[-9]तम् ॥ ३ ॥

**प्रजा इति** । सम्भृतानि [10-]सम्पादितानि[-10] अशेषाणि मङ्गलानि दध्यादीनि तैः सह अभिजग्मुः । मृष्टाः उज्ज्वलाः कन्याश्च ॥ ४ ॥

1. A, B, G, I, J, M, Ma, Ms, T ⁰मस्र⁰ 2. V च 3. V, W ⁰ग⁰ 4. M, Ma, Ms ⁰थै⁰; W० कै० 5. A, G, I, J, Ms, V ⁰र्भि⁰ 6. A, B, G, I, J, T सबृन्दैः; M, Ma, Ms संवृतैः; V संवृत्तं 7--7. W अभिजग्मु र्मुष्टकन्याः 8. V ⁰ग⁰ 9--9. This commentary is not found in V Edn. 10--10. B, J, V, Va omit

**शङ्खेति** । गतस्मयः निरहङ्कारः ॥ ५ ॥

## श्री वीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

पुरं यया वित्युक्तम् । तत्पुर मनुवर्णयति - **मौक्तिकै**रिति । मौक्तिकै र्मुक्तादामभिः चन्दनागरुयुक्तैः तोयै रार्द्रा रथ्यादयः अस्मिन् सन्तीति तथा, तोकै[1] र्यवाङ्कुरैः अर्चिभि[2]र्दीपैश्च ॥ २ ॥

पूगपोतै र्बालपूगैः परिष्कृतं अलङ्कृतम् । सम्भृतान्य शेषाणि मङ्गलद्रव्याणि दध्यादीनि तैस्सह अभिजग्मुः राज्ञोऽभिमुखं ययुः । मृष्टानि नि[3]र्घर्षितानि कुण्डलानि यासां ताः । मृष्टाः उज्ज्वलाः कन्याश्च [4-]अभिमुखं ययुः[-4] ॥ ३,४ ॥

ततः शङ्खादिघोषेण ऋत्विजां वेदघोषेण च सह वन्दिभिस्स्तूयमानोऽपि गतस्मयः निरहङ्कारः वीरः पृथुः भवनं विवेश ॥ ५ ॥

## श्री विजयध्वजतीर्थकृता पदरत्नावली

देवादीन् विना हरे र्ब्राह्मणाः सन्निधानपात्र मित्ये तत्प्रतिपाद्यतेऽस्मिन्नध्याये । तत्र अनन्तरातीताध्याये पृथुः पुरं यया वित्युक्तम् । तत्पुरं वर्णयति **मौक्तिकै**रित्यादिना ॥ १ ॥

पिष्टचन्दनागुरुमिश्रतोयै रार्द्रा रथ्या चत्वरमार्गा यस्मिं स्तत्तथोक्तम् । गोमयतोयैः अर्चिभि[5] र्दीपज्वालाभिः ॥ २ ॥

पूगपोतैः क्रमुकपुष्पैः परिष्कृतं अलङ्कृतम् ॥ ३ ॥

सम्भृतानि सम्पादितानि अशेषाणि मङ्गलानि दध्यादीनि तैश्च युक्ताः मृजसंशुद्धाविति धातुः ॥ ४ ॥

भूयः पुरप्रवेशानन्तरं गतस्मयो गर्वरहितः ॥ ५ ॥

**पूजितः पूजयामास तत्र तत्र महायशाः ।**
**पौराञ्जानपदांस्तांस्तान् प्रीतः प्रियवरप्रदः ॥ ६ ॥**

**स एवमादीन्यनवद्य चेष्टितः कर्माणि भूयांसि म[6]हान्महत्तमः ।**
**कुर्वन् शशासाऽवनिमण्डलं यशः स्फीतं निधायाऽऽरुरुहे परं पदम् ॥ ७ ॥**

---

1. A, B, T तौकमैः 2. A अर्चिर्भिः 3. A, B, T निघ° 4--4. A, B, T अभीयुः । 5. A °र्भि° 6. M, Ma महन्म°

## [1-]सूत उवाच[-1]

[2]तदादिराजस्य यशो विजृम्भितं गुणै [3]रशेषैर्गुणवत्सभाजितम् ।
क्षत्ता महाभागवतः सदस्पते कौषारविं प्राह [4]गृणन्त मर्चयन् ॥ ८ ॥

## विदुर उवाच

सोऽभिषिक्तः पृथु र्विप्रै र्लब्धाशेषसुरार्हणः ।
[5]बिभ्रच्च वैष्णवं तेजो बाह्वो र्याभ्यां दुदोह गाम् ॥ ९ ॥

कोन्वस्य कीर्तिं न शृणोत्यभिज्ञो यद्विक्रमोच्छिष्ट मशेषभूपाः ।
लोकाः सपाला उपजीवन्ति काम मद्याऽपि तन्मे वद कर्म शुद्धम् ॥ १० ॥

**श्रीध. पूजित** इति । प्रियान् वरान् प्रददातीति तथा ॥ ६ ॥

**स** इति । गुणै र्महान्, अत एव महत्तमः पूज्यतमः ॥ ७ ॥

**तदिति** । गुणै र्विजृम्भितं ऊर्जितं गुणवद्भिः सभाजितं सत्कृतं यशः गृणन्तं [6]मैत्रेय मर्चयन् प्राह सदस्पते ! शौनक ! ॥ ८ ॥

**स** इति । लब्धानि अशेषसुराणा मर्हणानि येन सः, किमकरोदिति शेषः ॥ ९ ॥

श्रवणौत्सुक्य माविष्कुर्वन्प्रार्थयते- **को न्विति** । यस्य विक्रमः पृथ्वीदोहनं तस्य उच्छिष्टतुल्यं कामं [7]विषयं तत्तस्य कर्म वद ॥ १० ॥

**वीर०** तत्र तत्र रथ्यादिषु पौरादिभिः पूजितः महायशाः विपुलकीर्तिः पौरान् पुरवासिनः जानपदान् देशवासिनश्च तदीयपूजादिभिः प्रीत स्तेभ्यः समीहितवरप्रदो भूत्वा यथायोग्यं पूजयामास ॥ ६ ॥

तथा गुणै र्महान् अत एव महत्तमः पूज्यतमः अत एवाऽनवद्यचेष्टितः निर्दुष्टोदा[8]रव्यापारः एवमादीनि दोहनादीनि भूयांसि कर्माणि कुर्वन् भूमण्डलं शशास अनुशिष्टवान् । ततः स्फीतं विपुलं यशः इह लोके निधाय परम्पदं वैकुण्ठं [9]आरुरुहे अधिरूढवान् ॥ ७ ॥

---

1--1. Ms बादरायणिः 2. M, Ma, Ms श्रुत्वादि 3. V ⁰दोषै⁰ 4. M, Ma, Ms गुरुं सम⁰ 5. A, B, G, I, J, T ⁰त्स 6. B, J, V, Va omit मैत्रेयम् 7. B, J, V, Va omit विषयं 8. A, B, T ⁰त्तर 9. A, B, T आरुरोह

एवं श्रुतपृथुचरित्रः क्षत्ता एवमादीनीत्यादिशब्दोपक्षिप्ताऽन्यतदुदारचेष्टितशुश्रूषया पुनः प्राहेत्याह- सूतः श्रुत्वेति। अशेषै र्गुणैः विजृम्भित मूर्जितं गुणवद्भिः सभाजितं सत्कृतं अधिराजस्य [1-] राजाधिराजस्य [-1] पृथो र्यशः श्रुत्वा महाभागवतः क्षत्ता हे सदस्पते! शौनक! गृणन्तं कथयन्तं कौषारविं मैत्रेयमर्चयन् साधुसाध्विति सम्मानयन् प्राह॥ ८॥

[2] उक्ति मेवाह - **स** इति द्वाभ्याम्। विप्रै र्ब्रह्मर्षिभिः राज्येऽभिषिक्तः लब्धं अशेषाणा मखिलाना मिन्द्रादीना मर्हणं येन सः, वैष्णवं विष्णो स्सम्बन्धि तेजः वीर्यं बाह्वोः बिभ्रच्च बिभ्राणश्च याभ्यां वैष्णवतेजश्शालिभ्यां [3] बाहुभ्यां गां दुदोह। एवम्भूतः किमकरोदिति शेषः॥ ९॥

श्रवणौत्सुक्य माविष्कुर्वन् प्रार्थयते- **कोन्विति**। अस्य पृथोः कीर्तिं मभिज्ञ श्चेत् कोनु न शृणोति ? कथम्भूतस्य ? यस्य विक्रमः पृथ्वीदोहनादिरूप स्तस्य यदुच्छिष्टं [4-] उच्छिष्ट तुल्यं [-4] काम मद्याऽपि अशेषभूपाः लोकपालै स्सहिता लोकाश्च उपजीवन्ति। शुद्धं निरवद्यं तत्कर्म तदीयं चेष्टितं मे मह्यं वद॥ १०॥

**विज०** प्रियानभीष्टान् वरान् प्रददातीति प्रियवरप्रदः॥ ६॥

प्रश्न मङ्कुरयन्नुपसंहरति - **स एव** मिति। भूयांसि महान्ति। स्फीतं पृष्टं लोके निधाय॥ ७॥

गुणवद्भिः पुरुषैः सभाजितं पूजितम्॥ ८॥

किमाहेति तत्राह- **सोऽभिषिक्त** इति। स पृथुः यत्कर्माऽकरोत्तन्मे वदेत्यन्वयः। लब्धान्यशेषैः सुरैः कृतान्यर्हणानि येन स तथोक्तः॥ ९॥

वक्तव्यत्वे गुण माह- **कोन्वस्येति**। ''देवेभ्य ऋषयो भूपाश्चोच्यन्ते शक्तिमत्तया। क्वचित् क्वचित्तु मोहार्थं कादाचित्कात्तु हेतुतः'' (नारदीये) इति वचना द्युक्तं सपाला इति॥ १०॥

**[5-] मैत्रेय उवाच [-5]**

**गङ्गायमुनयो र्नद्यो रन्तरा क्षेत्र मावसन्।**
**[6] आरब्धानेव बुभुजे भोगान् पुण्यजिहासया॥ ११॥**

---

1--1. A, B, T omit  2. A, B, T उक्त॰  3. A, B, T omit बाहुभ्यां  4--4. A, B,T तुच्छ॰  5--5. B omits  6. V प्रा॰

**सर्वत्रास्खलितादेशः सप्तद्वीपैकदण्डधृत्[1]।**

**अन्यत्र ब्राह्मणकुला दन्य त्राऽच्युतगोत्रतः ॥ १२ ॥**

**एकदाऽऽसीन्महासत्त्रदीक्षा तत्र दिवौकसाम्।**

**समाजो ब्रह्मर्षीणां च [2]देवर्षीणां च सत्तम ॥ १३ ॥**

**तस्मिन्नर्हत्सु सर्वेषु स्वर्चितेषु यथार्हतः।**

**उत्थितः [3]सदसो मध्ये ताराणा मुडुराडिव ॥ १४ ॥**

**प्रांशुः पीनायतभुजो गौरः कञ्जा[4]रुणेक्षणः।**

**सुनासः सुमुखः सौम्यः पीनांसः [5-]सुद्विजस्मितः[-5] ॥ १५ ॥**

**श्रीध० गङ्गेति**। प्राचीनकर्मभिः प्रारब्धान् [6]प्राप्तानेव बुभुजे न तु भोगान्तरार्थं कर्माणि करोति। तदपि भोगेन पुण्यक्षपणेच्छया न तु सुखासक्त्येत्यर्थः ॥ ११ ॥

**सर्वत्रेति**। अस्खलितः अप्रतिहतः आदेशः आज्ञा यस्य। सप्तसु द्वीपेषु एक एव दण्डं धारयतीति तथा। किं सर्वत्र ? नेत्याह- ब्राह्मणकुलव्यतिरेकेण अच्यु[7]तो गोत्रप्रवर्त[8]कतुल्यो येषां वैष्णवानां तद्व्यतिरेकेण च ॥ १२ ॥

**एकदेति**। एकदा तस्य महासत्त्रदीक्षा आसीत्। [9]तत्र सत्त्रे देवादीनां समाज आसीदित्यर्थः ॥ १३ ॥

**तस्मिन्निति**। तस्मिन्[10]सत्त्रे पूज्येषु स्वर्चितेषु सत्सु सदसः मध्ये उत्थितः [11-]स पृथुः[-11] समन्ततः समैक्षतेति [12]षष्ठश्लोकेनाऽन्वयः ॥ १४ ॥

**प्रांशु रिति**। प्रांशुः उन्नतः पीनौ च तौ आयतौ च भुजौ यस्य, कञ्जवदरुणे ईक्षणे यस्य सः, शोभना द्विजाः स्मितं च यस्य सः ॥ १५ ॥

**वीर० एवमुक्तो मुनिराह- गङ्गायमुनयो** रित्यादिना। यद्यप्यत्र मुनिराहेत्याहेत्येवं रूपं सूतवाक्य मपेक्षितम्। तथाऽप्यर्थ सिद्धत्वात् तन्त्रे [13]त्यवगन्तव्यम्। एवं प्रश्नेऽपि शुकवाक्य मर्थसिद्धं ज्ञेयं गङ्गायमुनयो र्महानद्योः अन्तरा मध्ये स्थितं ब्रह्मावर्ताख्यं क्षेत्रं,

---

1. A, B, G, I, J, M, Ma, Ms, T धृक्  2. A, B, G, I, J, T राज०  3. M, Ma, Ms स सदो०  4. V ०ऽऽयते०  5--5. M, Ma सुद्विजः स्मितः; Ms सुस्मितद्विजः  6. A, B, J, Va omit प्राप्तान्  7. V ०तगोत्रं  8. V ०नतुल्यं  9. V तत्यत्रे  10. B, J, V, Va omit सत्त्रे  11--11. B, J, V, Va सन्  12. B, J, V, Va षष्ठेना०  13. A, B, T ०धि

क्षेत्रे आवसन् "उपान्वध्याङ् वसः" (अष्टाध्यायी-१-४-४८)) इत्याधारस्य कर्मसंज्ञायां द्वितीया, आरब्धानेव प्राचीनकर्मायत्तानेव भोगान् न तु अपूर्व साधनानुष्ठानारब्धान्, तत्र हेतुः पुण्यजिहासया पुण्यक्षपणेच्छया मुमुक्षोः पापवत् पुण्यस्याऽपि स्वफल-जननद्वारा मोक्षविरोधित्वेन पुण्यस्याऽपि जिहासितव्यत्वबुद्धिमतो[1] मोक्षविरोधि भोगसाधनत्वेन[2] कर्मानुष्ठानासम्भवादिति भावः। बुभुजे अनुभूतवान्॥ ११॥

सर्वत्र अस्खलितः अप्रतिहतः[3] आदेश आज्ञा यस्य, सप्तद्वीपेषु एक एव दण्डं धारयति, तथा स्वसमान राजान्तररहित इत्यर्थः। दण्डधारणं किं सर्वत्र, न, ब्राह्मणकुलादन्यत्रापि किं सर्वत्र, न, किन्तु अच्युतगोत्रतः अच्युतगोत्रात् अन्यत्र जात्यन्तरेष्वपि भागवतकुला दन्यत्रेत्यर्थः॥ १२॥

एकदा महासत्रदीक्षा आसीत्। महासत्रसङ्कल्पं कृत्वा तत्र दीक्षितोऽभूदित्यर्थः। तत्र महासत्रे दिवौकसां देवानां ब्रह्मर्षीणां देवर्षीणां च समाजः सभा आसीदित्यर्थः। हे सत्तम!॥ १३॥

तस्मिन् समाजे महत्सु पूज्येषु सर्वेषु[4] यथायोग्यं पूजितेषु सत्सु स्वेनेति[5] शेषः। सदसः मध्ये उत्थित स्सन् समन्तत स्समैक्षतेति षष्ठेनान्वयः। तं विशिनष्टि-ताराणां मध्ये उडुराडिव चन्द्र इव स्थितः॥ १४॥

प्रांशु रुन्नतः पीनावायतौ दीर्घौ भुजौ यस्य, पद्मवदरुणे ईक्षणे यस्य, शोभना नासा[6] यस्य, सुन्दरं मुखं यस्य, सौम्यः प्रसन्नः, पीनावंसौ स्कन्धौ यस्य, शोभनाः द्विजाः दन्ताः यस्मिन्, तत्स्मितं यस्येति बहुव्रीहिगर्भो बहुव्रीहिः॥ १५॥

**विज०** श्रद्धावतः श्रोतुं यस्मिन् श्रद्धा, विदुषा तदेव वक्तव्यमिति भावयन्मैत्रेय स्तत्रोत्तरत्वेन तत्कथामाह- **गङ्गेति**। यावद्भिः भोगैः देहस्थितिः स्यात्तानेव नाऽधिकानित्येवकारार्थः। तानपि पुण्यजिहासया पुण्यक्षयाभिप्रायेण न सुखार्थम्॥ ११॥

सर्वत्रेत्युक्तं सङ्कोचयति अन्यत्रेति। अच्युतगोत्रतो वैष्णवकुलात् "गोत्रं नाम्नि कुलेऽचले" (वैज.को.6-5-28) इति यादवः॥ १२॥

ज्ञानिनः प्राराब्धकर्मभोगस्य नियतत्वेन सिद्धत्वा न्नैतद्वर्णन मत्रापेक्षितम्। अन्यत्किञ्चिच्छ्राव्य मस्ति चेत् वक्तव्यमिति तत्राह- **एकदेति**। "यज्ञभेदे सदा दाने सत्र माच्छादने वने" इत्यभिधानात्। दीक्षेति विशेषणा द्दीक्षायज्ञे इत्यर्थः। समाजः सम्मेलनम्॥ १३॥

दानार्थं भोजनार्थं वा मिथो निरीक्षणार्थं चेत स्ततः सङ्गच्छन्ते जनाः। किमत्र चोद्य मिति तत्राह- **तस्मिन्निति**।

1. A, B, T **बुद्धिः, अतो** 2. A, B, T भोगे 3. W omits अप्रतिहतः 4. A, B, T omit सर्वेषु 5. A, T देवेनेति 6. A, B, T नासिका

तस्मिन्समाजेऽर्हत्सु सम्मान्येषु "अर्हन्तौ जिन सम्मान्यौ" (वैज. को. 6-5-6) इति यादवः। उडुराट् चन्द्रः स राजा समन्तत श्चतुर्दिश मुपविष्टा नैक्षतेति षष्ठश्लोकेनान्वयो वेदितव्यः ॥ १४॥

कथम्भूत इति तल्लक्षणं वक्ति- **प्रांशु** रित्यादिना। गौरो निर्मलः, यद्वा "गौरोऽरुणे सिते पीते" (अम.को. 3-344) इति वचनात् गौरशब्दाक्षिप्तवर्णविशेष विशिष्टत्वं वक्ति- **कञ्जारुणेक्षण** इत्यादिना। सौम्यः सुन्दरः विप्रप्रियो वा सोमयोग्यो वा, द्विजा दन्ताः ॥ १५॥

**व्यूढवक्षा बृहच्छ्रोणि: [1]वलिवल्गुदलोदरः।**
**आवर्तनाभि रोजस्वी काञ्चनोरु रुदग्र[2]पात्॥ १६॥**

**सूक्ष्मवक्रासित स्निग्धमूर्धजः कम्बुकन्धरः।**
**महा[3]धने दुकूलाग्रे परि[4]वी[5]योपवीय च॥ १७॥**

**व्यञ्जिताशेषगात्रश्री र्नियमे न्यस्तभूषणः।**
**कृष्णाजिनधरः श्रीमान् कुशपाणिः कृतोचितः॥ १८॥**

**शिशिरस्निग्धताराक्षः [6]समैक्षत समन्ततः।**
**[7]ऊचिवा निदमुर्वीशः [8]सदः संहर्षयन्निव॥**
**चारुचित्रपदं श्लक्ष्णं मृष्टं गूढ मविक्लबम्॥ १९॥**

***सर्वेषामुपकारार्थं तदा अनुवदन्निव।**

**श्रीध० व्यूढेति**। व्यूढं विस्तीर्णं वक्षो यस्य, वलिभि स्तिसृभिः वल्गुसुन्दरं दलवत् [9]अधोऽग्रं अश्वत्थपत्रमिव उपरि विस्तृतं अधस्ता त्सङ्कुचित मुदरं यस्य, आवर्तवत् [10-]अम्भसां भ्रम इव[-10] निम्ना नाभि र्यस्य, काञ्चनवदुज्ज्वलौ ऊरूयस्य, उदग्रौ उन्नताग्रौ पादौ यस्य॥ १६॥

---

1. M, Ma. वलीवल्गुतरोदरः; W दलवत्पल्लवोदरः 2. M, Ma °वाक् 3. W धनदु° 4. A, B, G, I, J, Ma, Ma, Ms, T धा° 5. M, Ma, Ms °धाय
6. M, Ma, Ms तानै° 7. W उक्त° 8. M, Ma, सदस्यान् ह° * An extra half verse is found in A, B, G, I, J & T Edns.
9. V omits अधोऽग्रं 10--10. B, J, V, Va omit

**सूक्ष्मेति।** सूक्ष्माश्च ते वक्राश्च असिता [1]नीलाश्च स्निग्धाश्च मूर्धजाः यस्य, कम्बुवत्त्रिरेखाङ्किता कन्धरा यस्य, [2-]परिवीय धृत्वा[-2], उपवीय उत्तरीयं कृत्वा॥ १७॥

**व्यञ्जितेति।** नियमे निमित्ते न्यस्तानि त्यक्तानि भूषणानि येन सः, अत एव तै रनावृतत्वात्। व्यञ्जिता अशेषगात्रेषु श्रीः स्वाभाविकी शोभा येन। कृतान्युचितानि [3-]विहितानि[-3] कर्माणि येन॥ १८॥

**शिशिरेति।** शिशिरे सन्तापहरे स्निग्धे च तारे ययो स्ते अक्षिणी यस्य। इदं वक्ष्यमाणं वाक्य मुक्तवाँश्च चारु श्रोत्रप्रियं चित्राणि पदानि यस्मिन्, श्लक्ष्णं [4-]प्रशस्तं[-4]। मृष्टं शुद्धं गूढं गम्भीरार्थं अविक्लबं अव्याकुलं॥ १९॥

उत्प्रेक्षते- स्वयमनुभूतम् अनुवदन्निव॥

**वीर०** व्यूढं विस्तीर्णं वक्षः यस्य, बृहन्तौ पीनौ श्रोणी नितंबौ यस्य, वलिभिः तिसृभिः [5]वल्गु सुन्दरं दलव दश्वत्थपर्णवत् उपरि विस्तृत मधस्ता त्सङ्कुचित मुदरं यस्य, आवर्तव [6]न्निम्नो नाभि र्यस्य, ओजस्वी इन्द्रियशक्तिमान् काञ्चनवदुज्ज्वला ऊरू **यस्य,** उदग्रौ उन्नतौ पादौ यस्य॥ १६॥

सूक्ष्माश्च वक्राश्च असिताश्च स्निग्धाश्च मूर्धजा यस्य, कम्बुव त्रिरेखाङ्किता कन्धरा कण्ठः यस्य, महाधने अनर्घे दुकूलश्रेष्ठे परिवीय वसित्वा उपवीय उत्तरीयं कृत्वा॥ १७॥

नियमे निमित्ते न्यस्तानि त्यक्तानि अशेषभूषणानि येन, अत एव तै रनावृतत्वा द्व्यञ्जिता अशेषे ष्ववयवेषु श्रीः स्वाभाविकी शोभा येन, श्रीमान् समुदायकान्तिमान् कुशपाणिः पवित्रपाणिः, कृतानि उचितानि कर्माणि येन॥ १८॥

शिशिरे सन्तापहरे स्निग्धे च तारे ययो स्ते अक्षिणी यस्य, एवम्भूत उर्वीश स्सदस्यान् सन्तोषयन्निव इदं वक्ष्यमाणं वाक्य मुक्तवान्। वाक्यं विशिनष्टि - [7-]**चारुश्रोत्र प्रियं**[-7] चित्राणि पदानि यस्मिन्। श्लक्ष्णं प्रसन्नं मृष्टं शुद्धं अनपशब्दितं गूढं गम्भीरं अगाधार्थं अविक्लबं अव्याकुलम्॥ १९॥

**विज०** व्यूढवक्षा उन्नतवक्षाः। वलीभी रेखाभिः अतिशयेन वल्गु सुन्दर मुदरं यस्य स तथा, उदग्रवाक् उन्नतवाक्॥ १६॥

सूक्ष्माश्च वक्राश्च असिता नीलाश्च स्निग्धा श्च मूर्धजाः केशा यस्य स तथा। कम्बुवत्त्रिरेखाङ्कित वृत्तशंखवत्कन्धरा यस्य स तथा। उपधायोत्तरीकृत्य॥ १७॥

---

1. A, B, J, Va omit नीलाः    2--2. A, B, J, Va परिधाय वसित्वा    3--3. B, J, V, Va omit    4--4. A, B, J, Va प्रसन्नं    5. A, B, T मञ्जु
6. A, B,T निम्ना    7--7. A, B, T चारुश्रोत्रप्रियं चारूणि

**नियमे** यज्ञनियमविषये ॥ १८ ॥

किमर्थं निरीक्षण मिति अविदुषां चित्तव्याकुलतां परिहरति-**ऊचिवानिति**। चित्राणि पदानि यस्मिं स्तत्तथा। श्लक्ष्णं मधुरं हृद्यं हृदयप्रियं, गूढ मर्थतो गम्भीरम्। अविक्लब मकातर मस्खलित मिति यावत्। वचन मिति शेषः ॥ १९ ॥

[1-]राजोवाच[-1]

**सभ्याः श्रुणुत भद्रं वः साधवो य इहाऽऽगताः ।**
**सत्सु जिज्ञासुभि र्धर्म मावेद्यं स्वमनीषितम् ॥ २० ॥**

**अहं दण्डधरो [2]धात्रा प्रजाना मिह योजितः ।**
**रक्षिता वृत्तिदः [3]स्वेषु सेतुषु स्थापिता पृथक् ॥ २१ ॥**

**तस्य मे तदनुष्ठाना [4]द्यानाहु र्ब्रह्मवादिनः ।**
**लोकाः स्युः कामसन्दोहा यस्य तुष्यति दिष्टदृक् ॥ २२ ॥**

**य उद्धरे त्करं राजा प्रजा धर्मेष्वशिक्षयन् ।**
**प्रजानां शमलं भुङ्क्ते [5]भगं च स्वं जहाति सः ॥ २३ ॥**

**तत् प्रजा भर्तृपिण्डार्थं स्वार्थ [6]मेवानसूयवः ।**
**कुरुष्वाधोक्षज[7]धियः तर्हि मेऽनुग्रहः कृतः ॥ २४ ॥**

**श्रीध० सभ्या** इति। भाषणे हेतुः धर्मं जिज्ञासुभिः पुम्भिः सत्सु स्वमनीषितं आवेद्यं वक्तव्यं, अतः प्रजानुशासन मिषेण जिज्ञासैव क्रियते। न तु युष्मान् प्रति धर्मप्रवचन मिति भावः ॥ २० ॥

इदानीं प्रजा शिक्षयिष्यन् प्रजाशिक्षणादिकं ममावश्यक मित्याह- **अह** मिति त्रिभिः। पृथक् [8]स्वेषु [9-]स्वस्वहितवर्त्मसु[-9] सेतुषु [10-]स्थापिता[-10] स्थापयिता ॥ २१ ॥

**तस्येति**। दिष्टदृक् प्राक्कर्मसाक्षी ईश्वरो यस्य तुष्यति तस्य वेदवादिनः यान् लोकानाहुः प्रजारक्षणाद्यनुष्ठानात्। ते लोकाः मे स्युः। कथम्भूताः? कामानां सम्यग्दोहः प्रपूरणं येषु ते ॥ २२ ॥

---

1--1. M, Ma, Ms पृथु रुवाच 2. A, B, G, I, J, T, W राजा 3. M, Ma तेषु 4. M, Ma, Ms °द्यदा° 5. M, Ma, Ms भागं
6. M, Ma, Ms °मप्यन° 7. M, Ms धियं 8. A, B, J, Va omit स्वेषु 9--9. B, J, V, Va omit 10--10. Va omits

अन्यथा त्वनिष्टं स्या दित्याह -य इति। शमलं पापं भग [1-]मैश्वर्यं पुण्यं वा[-1] ॥ २३ ॥

**तदिति**। तत्तस्मात् हे प्रजाः! भर्तु र्मे [2-]पिण्डार्थं[-2] पिण्डदानव त्परलोकहितार्थं [3]स्वार्थं स्वकार्य मेव कुरुत। [4]स्वधर्म मेवाऽनुतिष्ठत। अधोक्षजे धी र्येषां तादृशा स्सन्तः वासुदेवार्पण दृष्ट्येत्यर्थः। अनुग्रहः कृतः भवेदिति शेषः ॥ २४ ॥

**वीर०** अय मस्मान् प्रति सर्वज्ञ इव धर्मानुपदेष्टु मुत्सहत इति बुद्ध्या सभ्या मा क्रुध्येयु रिति मनीषया स्ववाक्यश्रवणाय सभ्यान् प्रार्थयते **सभ्या** इति। हे सभ्याः ! सभायामुपविष्टाः अनुपविष्टान् सम्बोधयति इह सत्रभूमौ ये आगताः मूर्खाश्चेन्मा मसूयेरान्नित्यभिप्रायेण विशिनष्टि **साधव** इति। नाहं ज्ञः किन्तु जिज्ञासु र्जिज्ञासितव्यं विज्ञापयामीत्यभिप्रायेणाह- **धर्मं जिज्ञासुभिः स्वमनीषितं** ज्ञेयं **सत्सु** सतां समीपे **आवेद्यं** विज्ञापनीयं प्रजानुशासन व्याजेन जिज्ञासैव क्रियते न तु युष्मान् प्रति धर्म उपदिश्यत इति भावः ॥ २० ॥

इदानीं प्रजारक्षणादिकं ममाऽप्यावश्यक मित्याह **अहमिति** त्रिभिः। धात्रा भगवता प्रजानां दण्ड धरत्वेन अहं योजितो नियुक्तः, न केवलं दण्डधर एव किन्तु रक्षितृत्वेन आजीविका प्रदत्वेन स्वेषु स्वस्य वर्णाश्रमोचितेषु सेतुषु धर्ममर्यादासु पृथगसङ्करेण स्थापयितृत्वेन च योजित इत्यर्थः ॥ २१ ॥

किं [5]प्रजारक्षणादि साध्यं फलं तत्राह- **तस्येति**। ब्रह्मवादिनः वेदार्थतत्त्वस्य स्वानुष्ठानेनोपदेष्टारः प्रजारक्षणादिना राज्ञः यान् पुण्यलोकान् प्राप्यत्वेनाहुः, ते लोकाः तस्य प्रजारक्षणादिनिष्ठस्य मे तदनुष्ठानात् प्रजारक्षणाद्यनुष्ठानात् कामसन्दोहाः मत्समीहित कामपूरणाः भवेयुः, स्युरिति सम्भावनायां लिङ्। स्वस्य मुमुक्षुत्वेन प्राकृतलोकस्य प्राप्यत्वाभावात् अतो हार्द माह-यस्येति। यस्य प्रजारक्षणादिनिष्ठस्य दिष्टदृक् प्रजारक्षणादि कर्मसाक्षी ईश्वरः तुष्यति, तस्मिं स्तुष्टे मुक्तिरपि सुलभेति भावः ॥ २२ ॥

अन्यथा त्वनिष्टं स्यादित्याह- **य** इति। यो राजा धर्मेषु प्रजा अशिक्षयन् करं स्वामिग्राह्यभाग मुद्धरेत् करमात्रं गृह्णीयादित्यर्थः। तर्हि प्रजानां सम्बन्धि शमलं पापमेव भुङ्क्ते। सः स्वीयं भगं ज्ञानशक्तिबलैश्वर्यादिकं च जहातीत्यर्थः ॥ २३ ॥

तत् तस्मात् हे प्रजाः, भर्तु र्मम पिण्डार्थं पिण्डदानवत्परलोकहितार्थं स्वार्थं स्वप्रयोजन मेव स्वस्ववर्णाश्रमोचितधर्ममेव असूयारहिताः कुरुत अनुतिष्ठत। अधोक्षधियः भगवद्विषयकबुद्धयः तदर्पणदृष्ट्येति यावत्। "तत्कुरुष्व मदर्पणम् (भ.गी 9-27) इति स्मृतेः। [6-]तर्ह्येवं क्रियते चेत् मह्य मनुग्रह एव युष्माभिः कृतः स्यात्[-6] ॥ २४ ॥

---

1--1. A, B, J, Va omit 2--2. B omits 3. B, J, V, Va omit स्वार्थं 4. V omits स्व 5. A, B, T रक्षादि 6--6. A, B, T omit

विज० किमनेन चित्तव्याकुलता परिहृतेति तत्राह-सभ्या इति। वो भद्र मस्त्वित्युक्तं प्रथमं चित्तव्याकुलता परिहारायेति ज्ञातव्यम्। धर्मं जिज्ञासुभि र्ज्ञातुकामैः पुरुषैः स्वमनीषितं सत्सु योग्येष्वावेद्यम्॥ २०॥

किं तत्स्वमनीषित मित्यत उक्तं- अहमिति। "दण्डोऽस्त्री शासने राज्ञां हिंसायां लगुडे दमे" (वैज.को.6-5-38) इत्यभिधानात्। तत्तद्योग्येषु तं तं दण्डं धारयतीति दण्डधरः। धात्रा हरिणा, धातृशब्दार्थं लक्षयति रक्षितेत्यादिना। स्थापिता स्थापयिता॥ २१॥

तस्य मे कामान् सन्दुहन्तीति कामसन्दोहाः। कर्मण्यण् प्रत्ययः। कामानां सन्दोहा येष्विति वा। लोकाः स्यु रिति ब्रह्मवादिनः आहुरिति। यद्यस्मात्तस्मा देतत्फल मन्वीक्ष्याऽहं धात्रेह प्रजापालनादौ योजित इत्यन्वयः। तदनुध्यानात् तस्य प्रजापालनस्य अनुष्ठाना दित्यनुवादः। श्रीनारायणप्रसादेन भाविनो लोकाः कथं प्रजापालनेन स्यु रिति तत्राह यस्येति॥ २२॥

व्यतिरेक माह य उद्धरेदिति। भागं षष्ठांशं पुण्यम्॥ २३॥

इदानीं प्रजाः प्रत्याह- तत्प्रजेति। यस्मात्प्रजाना मरक्षणे प्रत्यवायो भवति तत्तस्मात् हे प्रजाः! यद्यनसूयवो यूयं अधोक्षजे हरौ धियं कुरुत। तर्हि नोऽनुग्रहः कृतो भवेदित्यन्वयः। तवानेन किं तत्राह- भर्तृपिण्डार्थमिति। भर्तु र्मम षष्ठांशलक्षणसुकृताख्य प्रयोजनाय, न केवलं मम युष्माक मप्यस्ति प्रयोजन मित्याह- स्वार्थमिति॥ २४॥

**यूयं तदनुमोदध्वं पितृदेवर्षयोऽमलाः।**
**कर्तुः शास्तु रनुज्ञातु स्तुल्यं यत्प्रेत्य तत्फलम्॥ २५॥**

**अस्ति यज्ञपति र्नाम केषाञ्चि[1]दिह सत्तमाः।**
**इहामुत्र च [2]लक्ष्यन्ते ज्योत्स्नावत्यः क्वचिद्भुवः॥ २६॥**

**मनो रुत्तानपादस्य ध्रुवस्याऽपि महीपतेः।**
**प्रियव्रतस्य राजर्षे रङ्गस्याऽस्मत्पितुः पितुः॥ २७॥**

**ईदृशाना मथाऽन्येषा मजस्य च भवस्य च।**
**प्रह्लादस्य बलेश्चाऽपि कृत्यमस्ति गदा[3]भृता॥ २८॥**

---

1. A, B, G, I, J, T, V °दर्ह° 2. V दृश्यन्ते 3. M, Ma, Ms भृतः

*दौहित्रादीनृते मृत्योः शोच्यान् धर्मविमोहितान् ।
वर्ग[1]स्वर्गापवर्गाणां प्रायेणैकात्म्यहेतुना[2] ॥ २९ ॥

**श्रीध० यूयमिति** । शास्तुः शिक्षयितुः[3], अनुज्ञातुः अनुमोदितु श्च प्रेत्य परलोके यत्फलं तत्तुल्यम् ॥ २७ ॥

**अस्तीति** । कर्म कर्तव्य मित्यनुमोदामहे, न तु वासुदेवे अर्पणीयमिति । वेनादिभि स्तदनङ्गीकारा दित्येवंवादिनः शनैः सम्बोधयन्नाह - हे अर्ह सत्तमाः ! [4-]मीमांसकश्रेष्ठाः[-4] ! यज्ञपति र्नाम परमेश्वरः केषां चिन्मते तावदस्ति, तथाऽपि विप्रतिपत्ते र्न ततत्सिद्धि रित्याशङ्क्य जगद्वैचित्र्याऽन्यथानुपपत्तिं प्रमाणयति इहामुत्रच ज्योत्स्नावत्यः कान्तिमत्यो भुवः भोगभूमयः शरीराणिच [5-]क्वचि क्वचिद्दृश्यन्ते। नैतद्वै चित्र्य मीश्वरस्य भावे घटत इत्यर्थः[-5] ॥ २६ ॥

ननु इदं कर्म वैचित्र्यादेव सेत्स्यति । तथाऽपि विद्वदनुभवेन ईश्वरसिद्धिरित्याह - **मनोरिति** त्रिभिः । अस्मत्पितामहस्याङ्गस्य ॥ २७ ॥

**ईदृशानामिति** । कृत्यमस्ति अवश्यं कर्म फलदात्रा भाव्यमिति[6] तेषां मत मित्यर्थः[7] ॥२८॥

**दौहित्रादीनिति** । मृत्योःदौहित्रान् वेनादीन् ऋते[8] विना[9] धर्मे विमोहितान् अत श्शोच्यान् । ननु कर्मैव फलं दास्यति विध्युद्देशगता देवता वा, किं परमेश्वरेण ? तत्राह-वर्गेति - वर्गोऽत्र त्रिवर्गः, स्वर्गः धर्मस्य फलं, अपवर्गो मोक्षः, तेषा मैकात्म्येन एकरूप्येण सर्वानुगतेन हेतुना । तत्रापि प्रायेण हेतुना [10-]सर्वानुगतत्वं महत्त्वं चेश्वरस्यैव[-10] दृष्टम् । अयं भावः - न ताव ज्जडस्य कर्मणः फलदातृत्वं घटते न च अर्वाग्देवतानां स्वातन्त्र्यं अन्तर्यामिश्रुतेः, न च, तथा कर्मसाम्ये फलतारतम्यं, क्वाचित्तदसिद्धिश्च सम्भवति । अत स्स्वातन्त्र्येण कर्तु मकर्तु मन्यथा कर्तुं समर्थेन परमेश्वरेण भाव्यमिति ॥ २९ ॥

[11-]**वीर.** एवं प्रजा अनुशास्य देवादीन् प्रार्थयते - यूयं हे पित्रादयः । निर्मलाः असूयादिरहिताः[-11] यूयं तन्मदनुशासन मनुमोदध्वं किमनुमोदनमात्रसाध्यं तत्राह - कर्तुरिति । यद्यस्मात् कर्तुः प्रयोज्यस्य शास्तुः प्रयोजकस्य अनुज्ञातुः अनुमन्तुः, तत्र अप्रवृत्तस्य प्रवर्तकत्वं [12-]प्रयोजकत्वं[-12] प्रवृत्तस्य प्रवर्तकत्व मनुमन्तृत्व मिति विवेकः । प्रेत्येति कृदन्तयोगा[13] त्कर्तरि शेषे षष्ठी कर्त्रादिभिः प्रेत्य परलोकं प्राप्य तुल्यं फल मनुभूयत इत्यर्थः ॥ २५ ॥

---

* अस्य श्लोकस्य पूर्वार्धोत्तरार्धयोः व्यत्ययेन पाठः M, Ma, Ms ग्रन्थेषु मुद्रितः । 1. M, Ma, Ms राज्य 2. M, Ma, Ms °ता । 3. V शासितुः 4--4. B, J, V, Va omit 5--5. A, B, J, Va omit 6. V भवितव्यम् 7. V °मिति भावः 8. A, B, J, Va omit ऋते 9. V हित्वा 10--10. B, J, V, Va omit 11--11. A, B, T omit 12--12. A omits 13. W ल्यबन्त

अत्र "यस्य तुष्यति दिष्टदृक् (भाग-4-21-22), "कुरुताधोक्षजधियः (भाग4-21-24) इति कर्मणां भगवदाराधनरूपत्व माराधिता त्कर्मभि र्भगवतश्च फलप्राप्ति रवगम्यते। तत्र निरीश्वरवादिनां केषां चिन्मते इद मुक्त मनुपपन्न मित्युद्भाव्य ईश्वरसिषाध यिषया तत्सद्भावं ताव त्प्रतिजानीते **अस्तीति**। ते हि निरीश्वरवादिन एव माहुः - प्रकृति पुरूषातिरेकेण ईश्वराख्यः कश्चित्पदार्थो न विद्यते प्रमाणाभावात्। न ताव त्प्रत्यक्षं, तदविषयत्वा त्तस्य। नाऽप्यनुमानं, प्रत्यक्षोपलब्ध साध्यधर्माव्यभिचारि साधनधर्म विषयत्वेनानुमानस्य प्रत्यक्षाविषये तदप्रवृत्तेः। नाऽपि शब्दः न तावल्लौकिकः भ्रमप्रमादादि दोषसंस्पर्श सम्भावनया तस्य प्रामाण्य निश्चयायोगात्। नाऽपि "सत्यं ज्ञान मनन्तं (तैत्ति.उ.2.1.1) "निष्क्रियं निष्कलम् (श्वेत.उ.6-19) इत्यादि वैदिकशब्दः, लोके वृद्धव्यवहारादन्यत्र शब्दस्य बोधकत्व शक्त्यवधारणासम्भवात् व्यवहारस्य च कार्यबुद्धिपूर्वकत्वेन कार्यरूपार्थ एव शब्दस्य प्रामाण्य मिति लौकिकव्युत्पत्त्यनुसारेण वैदिकशब्दाना मपि कार्यवस्तुपरत्वेनैव व्युत्पत्तिनिश्चयात्सिद्धरूपे ईश्वरे तेषां प्रामण्यासम्भवात्। अत एव त[1]स्मा त्फलप्राप्तिश्चासंभाविनी। न च "इष्टापूर्तं बहुधा जातं" (म.ना.उ 1-6) "ब्रह्मविदाप्नोति परम्,, (तैत्ति.उ.2-1-1) इत्यादिना ऐहिक मामुष्मिकं ब्रह्मोपासनात् तत्प्राप्तिरूपं च फलं श्रुत मिति वाच्यम्। तस्य कर्मसु कर्तृभूतस्य प्रत्यगात्मनो याथात्म्य वेदन प्रतिपादनपरत्वात्। अतः कर्तु स्संस्कारद्वारेण विद्यायाः क्रतुशेषत्वात् तत्र फलश्रुति रर्थवादमात्रम्। न च, विचित्रसृष्ट्यन्यथानुपपत्त्या ईश्वरसिद्धिः, ततः फलसिद्धि श्चेति वक्तुं युक्तम्। पुण्यापुण्यरूपानुष्ठितकर्म संस्कृतायाः प्रकृतेरेव पुरूषार्थानुरूपं विचित्रपरिणामसम्भवात्; यथा विषादिदूषिताना मन्नपानादीनां औषधविशोषाऽऽप्यायितानां च सुख दुःख हेतुभूत परिणामविशेषस्य देशकालादिव्यवस्थया दर्शनं तद्वदिति सङ्ग्रहः। हे सत्तमाः! केषाञ्चिदास्तिकानां मते यज्ञपति र्नाम यज्ञाराध्य स्तत्फलप्रदश्चे श्वराख्यः कश्चिदस्ति। तत्र ताव द्विचित्रसृष्ट्यन्यथानुपपत्तिं प्रमाणयति -इहामुत्र चेति। इह लोके चामुष्मिंश्चलोके ज्योत्स्नावत्यः प्रकाशबहुलाः भुवः विचित्रा भोग्यभूमयः तद्भोक्तारो विचित्रशरीराश्च दृश्यन्ते। एतच्च दर्शन मीश्वर मन्तरेणानुपपन्नम्। यदुक्तम्.- प्रकृते रेव जीवकर्मानुगुणं विचित्र परिणामसम्भव इति, नैतदुपपद्यते। सर्वज्ञेश्वरानधिष्ठितायाः तस्याः विचित्र परिणामासम्भवात्। यद्यनधिष्ठिताया अपि [2-]तस्याः[-2] परिणामः सम्भाव्येत, तर्हि प्रलयदशायां तस्याः विचित्र परिणामार्थ मीश्वरानपेक्षणात् सतत परिणाम स्वभावत्वेन अपरिणामित्वेन अवस्थानं न स्यात्। ईश्वराधिष्ठितत्वे तु तस्य सत्यसङ्कल्पत्वेन विचित्रसृष्टि तदभावा वुपपन्नौ। न च क्षेत्रज्ञाधिष्ठितत्वेन ता वुपपन्नाविति वक्तुं शक्यम्। तेषां अनुन्मत्तानां स्वेच्छयैव स्वानर्थावहापुण्यानुष्ठान पूर्वक पशु पादपत्वादिशरीरापादनस्यासम्भवात्। ईश्वराभ्युपगमे तु "इष्टापूर्तं बहुधा जातं जायमानम्", "यतः प्रवृत्ति र्भूतानां येन सर्व मिदं

1. A, B अ॰ 2--2. W omits

ततम्''(भ.गी 18-46) ''स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः,, (भ.गी.18-46) ''तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्र मशुभा नासुरीष्वेव योनिषु ॥ (भ.गी.16-19) इत्युक्तरीत्या भगवान्पुरूषोत्तमोऽवाप्तसमस्तकामः सर्वज्ञः सत्यसङ्कल्पः स्वमाहात्म्यानुगुणलीलाप्रवृत्तः एतानि कर्माणि समीचीनान्येतान्यसमीचीनानीति कर्मद्वैविध्यं संविधाय तदुपादानोचित देहेन्द्रियादिकं तन्नियमनशक्तिं च सर्वेषां क्षेत्रज्ञानां सामान्येन प्रदिश्य स्वशासनावबोधिवेदाख्यशास्त्रं च प्रदर्श्य तदुपसंहारार्थं च अन्तरात्मतयाऽनुप्रविश्य अनुमन्तृतया च नियच्छन् तत्र पुण्यरूप कर्मकारिणं स्वशासनानुवर्तिनं ज्ञात्वा धर्मार्थकाममोक्षैः वर्धयते[1] शासनातिवर्तिनं च तद्विपर्ययै र्योजयतीति सर्व मेतदुपपन्नं वैचित्र्य मिति भावः। न च ''सत्यं ज्ञानम्'' (तैत्ति.उ.2-1-1) इत्यादिभिः कर्माङ्गभूत प्रत्यगात्म - याथात्म्यं विविच्यते इति वक्तुं शक्यम्, कर्तुः प्रत्यगात्मनः शुद्धस्य अशुद्धस्य च खद्योतकल्पस्याविद्यादि हेय सम्बन्धयोग्यस्यासम्भावनीययोः निरस्तनिखिल हेयगन्धानन्तकल्याणगुणाकर स्वसङ्कल्पकृत जगदुदयविभव लयलील सर्वज्ञत्व[2] सर्वशक्तित्व ज्ञानानन्दादि स्वरूपस्वभावयोः परमात्मैकान्तयोः[3] श्रवणात्। तथाहि - अपहतपाप्मा विजरो विमृत्यु र्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः'' तदैक्षत बहुस्यां प्रजायेय (धान्द.उ.6-2-3) इति ''तत्तेजोऽसृजत'' (छान्द.उ.6-2-3) ''यः सर्वज्ञः सर्ववित्,, (मुण्ड.उ.1-1-9) ''यतो वाचो निवर्तन्ते अप्राप्य मनसा सह'' (तैत्ति.उ.2-4,9) इति। न चैषां वाक्यानां सिद्धवस्तु परत्वासम्भवः। यादृच्छिक व्युत्पत्ते रपि शारीरकमीमांसायां सिद्धान्तितत्वेन कार्यार्थ एव व्युत्पत्ति रिति निर्बन्धस्य निर्निबन्धनत्वात्। फलश्रुति रर्थवादरूपेत्यपि न युक्तिमत्। अर्थवादादेः प्रतीयमानार्थे तात्पर्याभावेऽपि रात्रिसत्रप्रतिष्ठापगोरण शतयातना साध्य साधनभावे शर्कराञ्जनद्रव्य पशुविशेषादे रर्थवादोक्तस्याऽपि विवक्षितत्वादिति संक्षेपः ॥ २६ ॥

केषाञ्चिदित्युक्तानास्तिकान् प्रदर्शयन् तेषां ईश्वराभ्युपगमोऽस्तीत्याह- **मनो** रिति। **अस्मत्पितुः पितुः** अस्मत्पितामहस्याङ्गस्य ॥ २७ ॥

अजस्य चतुर्मुखस्य, भवस्य रुद्रस्य, मन्वादीनां गदाभृता भगवता कृत्स्नं कर्तव्यं कर्म फलदानरूपं प्रयोजनमस्ति। मन्वादीनां मते अवश्यं कर्मफलदात्रा भवितव्य मित्यभ्युपगतमित्यर्थः ॥ २८ ॥

नन्वचेतनस्य क्षणभाविनः कर्मणः फलप्रदत्वासम्भवेऽप्यपूर्वाख्यशक्तिकल्पनाद्वारा कर्मण एव फलप्रदातृत्वं स्यात्। विध्युद्देशश्रुतदेवताया वा किमीश्वरेणेति चेत्याशङ्कां परिहरन् दर्शयति। वर्ग स्त्रिवर्गो धर्मादिः, स्वर्गो धर्मफलं, अपवर्गो मोक्षः, एषां प्रायशः ऐकात्म्यहेतुना एक मात्मस्वरूपं येषां तेषां भाव ऐकात्म्यम्। एकेनैव प्रदेयत्व रूपैकात्म्यं तद्रूपेण हेतुना वर्गादीना मेकेनैव

1. A, B, T °ति  2. A, B, T omit सर्वज्ञत्व  3. A, B, T omit परमात्म

प्रदेयत्व श्रवण स्मरण रूप हेतुना ईश्वरोऽभ्युपगतो मन्वादिभिरित्यर्थः। तथा च श्रूयते- ''इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः। (म.ना.3-1-6), ''तदेवाऽग्निः तद्वायुस्तत्सूर्य स्तदु चन्द्रमाः'' (ममा.3-1-17) इत्यादि। स्मर्यते च यो यो यां यां तनुं भक्तः, (भगी 7.21) ''धमार्थ काममोक्षाख्यं य इच्छेत् (भाग. 4-8-41) इत्यादि। अयम्भावः - यज-देवपूजाया मिति। देवताराधनभूत यागाद्याराध्य भूताग्निवाय्वादि देवताना मेव तत्तत्फलहेतुतया तस्मिन् तस्मिन्नपि वाक्ये व्यपदेश स्तावत् दृश्यते। ''वायव्यं श्वेत मालभेत भूतिकामो वायुर्वै क्षेपिष्ठा देवता, वायुमेव स्वेन भागधेयेनो पधावति, स एवैनं भूतिं गमयति इत्यादिषु। तत्र हि कामिनः सिषाधयिषित फल साधनत्वप्रकारोपदेशो विध्यपेक्षित एवेति नातत्परत्वशङ्का युक्ता। एव मपेक्षितेऽपि फलसाधनत्वप्रकारे शब्दा देवावगते सति तत्परित्यागेन अश्रुतापूर्वाख्यशक्तिकल्पन मनुपपन्नम्। [1-]यद्वाय्वादीनां फलसाधनत्वं[-1] ''स एवैनं भूतिं गमयति'' इत्यादिना प्रतीतं तद्वाय्वाद्यात्मनाऽऽराध्यतया फलदायित्वेनावस्थितस्य परमपुरुषस्यैवेति श्रूयते। ''इष्टापूर्तम् (म.ना.3-1-6)। इत्यादिका, ''तदेवाऽग्नि स्तद्वायुः''(म.ना.3-1-17) इत्यादिका चेति। अतोऽपूर्वस्य देवताया वा न फलसाधनत्व मिति मन्वाद्युपादानं प्रदर्शनमात्रं न तु परिगणन मित्याशयेनाह- दौहित्रादीनिति। धर्मे विमोहितान् धर्मस्वरूप तदनुष्ठान तत्साधन तत्फलसाधनादिकमजानानान् अत एव शोच्यान् मृत्योः दौहित्रादीन् आदिशब्दः प्रकारे तत्सदृशानित्यर्थः। वेनादीन् ऋते विना सर्वेषां मते ईश्वरोऽस्तीत्यर्थः ॥ २९ ॥

**विज०** सभ्यानुद्दिश्याह- **यूय** मिति। तेन किमस्माकं फल मित्यत उक्त मनुज्ञातु रिति। अनुज्ञात्रादीनां शास्त्रेषु यत्फल मुक्तं, तत्तदनुज्ञानुसारि फलं स्या दित्यभिप्रायेण तुल्य मित्युक्तम्, न तु कर्त्रनुज्ञात्रो स्तुल्यफलत्वं स्यात्, अन्यथा कृतहान्यादिदोषापत्तिरिति॥ २५॥

ननु यद्यधोक्षजसद्भावे प्रमाणं स्या त्तर्हि तद्धियं कुरुतेति विधातुं युक्तं, तदेव कुत इति तत्राह **अस्ती**ति। यद् दृष्टं तदेव सत्, यददृष्टं तदेवासदिति वादिनोऽपेक्ष्य केषाञ्चिदित्युक्तम्। केषाञ्चिद्व्यासादीनां महात्मनां पक्षे यज्ञपति र्नाम विष्णुरस्तीत्यन्वयः। ''यज्ञो यज्ञपति र्यज्वा'' इत्यादि स्मृतेः। श्रीनारायणस्य प्रसादेन प्राप्या लोका स्तेन नियता देवताश्च सन्तीत्येतदेकोक्त्याह- इहेति। इह मनुष्य लोके तच्छरीरे च। अमुत्र स्वर्गादौ ज्योत्स्नावत्यः प्रकाशभूयिष्ठा भुवः स्थानविशेषाः इन्द्रियादिप्रेरकत्वेन भवनात् भुवो देवता श्च दृश्यन्ते ; प्रमाणत इति शेषः। ''प्रकाशवद्भुवो देवा मानुषाश्चाऽपि केचन (वाराहे) इति वचनात्। दुर्लभत्वात् क्वचि दित्युक्तम्। इहेत्यनेन बिलस्वर्गं लक्षयति। सुखहेतुत्वेन चन्द्रिकया तुल्यरत्न प्रकाशेन प्रकाशितत्वात् ज्योत्स्नावत्य इति॥ २६॥

---

1--1. A, B, T द्वारेण फलसाधनत्वं

केषाञ्चिदिति सूचितां स्तान् नामतो निर्दिशति मनोरिति। अस्मत्पितु र्वेनस्य पितुः ॥ २७॥

अजस्य ब्रह्मणः, गदाभृतो हरेः। कृत्यं पूजालक्षणं कार्य मस्ति ॥ २८॥

स्वर्गादि रन्याधीनतया तत्प्राप्त्यर्थं तदुपादा[1]नस्यैव कर्तव्यत्वेन तत्र किं गदाभृतः कृत्येनेति तत्राह- **राज्येति**। राज्यादेः प्रायेणान्याधीनत्व मन्तरेणैवैकात्मनः समस्तात् प्रधानस्य हरे र्हेतुना कारणत्वम्। ''एकात्मा हरि रुद्दिष्टः प्रधानत्वात् समस्ततः'' (वाराहे) इति वचनात्। ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गः इति श्रुतेः। स्वर्गादिप्राप्त्यर्थमपि श्री नारायणस्य पूजा ज्ञानज[2]नयित्री कार्ये त्याशयः। ननु प्रायश्शब्दस्य प्राचुर्यार्थावधारार्थत्वे निषिद्ध्य अवशिष्टाल्प निषेधः कथं क्रियत इति चेन्न, तस्यावधारणाक्षेपे प्रयोगदर्शनात्। तदुक्तम् - ''प्रायः पदं स्यात्प्राचुर्ये चाऽऽक्षेपात्मावधारणे। अर्थतोऽवधृतिः क्षेप सुखाक्षेपोऽवघारणम्'' (वाराहे) इति। एकश्चेतनो जीव एव राज्यादेः कारणमधिकृतत्वा दिति चेन्न विपक्षाविरोधात् अनाम्नायत्वाच्च ''एकात्मा हरिरुद्दिष्टः प्रधानत्वा त्समस्ततः'' (वाराहे) इति। एतत्समाख्यानस्मृतिविरोधाच्च। केषाञ्चिदित्यनेन केषाञ्चिन्नास्तीत्युक्तम्। नास्तिकानाह- दौहित्रादीनिति। मृत्यो र्दौहित्रो दुहितुः पुत्रो वेनः ॥ २९॥

**यत्पादसेवाभिरुचिस्तपस्विना मशेषज[3]न्मोपचितं मलं धियः।**
**सद्यः क्षिणोत्यन्वह मेधती सती यथा पदाऽङ्गुष्ठविनिस्सृता सरित्॥ ३०॥**

**विनिर्धुताशेषमनोमलः पुमानसङ्गविज्ञानविशेषवीर्यवान्।**
**यदङ्घ्रिमूले कृतकेतनः पुनः न संसृतिं क्लेशवहां प्रपद्यते॥ ३१॥**

**तमेव यूयं भजताऽऽत्मवृत्तिभिः मनोवचःकायगुणैः स्वकर्मभिः।**
**अमायिनः कामदुघाङ्घ्रिपङ्कजं यथाधिकारावसितार्थ सिद्ध[4]यः॥ ३२॥**

**असाविहानेक गुणोऽगुणोऽध्व[5]रः पृथग्वि[6]धद्रव्यगुणक्रियोक्तिभिः।**
**सम्पद्यतेऽर्थाशयलिङ्गनामभिः विशुद्धविज्ञानघनः स्वरूपतः॥ ३३॥**

**प्रधानकालाश[7]य कर्मसङ्ग्र[8]हे शरीर[9] एष प्रतिपद्य चे[10]तनाम्।**
**क्रियाफलत्वेन विभु र्विभाव्यते यथाऽनलो दारुषु तद्गुणात्मकः॥ ३४॥**

---

1. M ⁰धा⁰  2. B, M, Ma जनित्री  3. A, T जन्मा⁰  4. M, Ma, Ms ⁰ये  5--5. M, Ma, Ms गुणाध्वरैश्शता  6. M, Ma, Ms ⁰धैःधर्म
7. A, B, G, I, J, T, V धर्म  8. M, Ma, Ms ⁰हः  9. M, Ma, Ms शेषं  10. M, Ma, Ms ⁰नः

**श्रीध०** किञ्च जीवानां मोक्षदः परमेश्वर एव नाऽर्वाग्देवता स्तासा मपि जीवत्वाविशेषादित्याशयेनाऽऽह**यदिति** त्रिभिः। यस्य पादयोः सेवायां अभिरुचिः तपस्विनां संसारतप्तानां अशेषैः जन्मभिः उपचितं[1] समृद्धं धियो मलं सद्यः क्षपयति तमेव भजतेति तृतीयेनाऽन्वयः। कथम्भूताऽभिरुचिः[2] ? अहन्यहनि वर्धमाना, सती सात्त्विकी [3]अव्यभिचारिणी भक्तिः[3] तत्पादसम्बन्धस्यैवैष महिमेति दृष्टान्तेनाह[4] - यथेति॥ ३०॥

**विनिर्धुतेति**। विनिर्धुता अशेषा मनोमला यस्य। असङ्गो वैराग्यं तेन विज्ञानस्य विशेषः साक्षात्कार स्तदेव वीर्यं यस्य। यस्यांऽघ्रिमूले कृताश्रय स्सन्॥ ३१॥

**तमिति**। आत्मवृत्तिभिः अध्ययनाध्यापनादिभिः[5] मनोवचःकायानां गुणैः ध्यानस्तुति सपर्याभिः[6] अमायिनो निष्कपटाः सन्तः। ननु ब्रह्मादिभिः सेव्ये किमस्मद्भक्त्या भविष्यति - तत्राह- यथाधिकार मेवावसिता निश्चिता समाप्ता वा अर्थसिद्धिर्येषाम्॥ ३२॥

स्वकर्मभिः यागादिभिः भजते त्युक्तम्। तत्र ''ब्रह्मार्पणं ब्रह्महविः, (भ.गी.4-24) इति न्यायेन सर्वेषु यागेषु[7] तदङ्ग [8]तत्फलेषु[8] भगवद्दृष्ट्या कर्म कर्तव्यम्, न भिन्न दृष्ट्येति वक्तुं तेषां भगवद्रूपता माह असाविति-द्वाभ्याम्। असौ भगवानेव स्वरूपतो विशुद्ध विज्ञानघनोऽपि अगुणः, निर्विशे षणोऽपि[9] सन् इह कर्ममार्गेऽनेकगुणो नानाविशेषणवान्[10], अध्वरो यज्ञः सम्पद्यते। ''यज्ञो वै विष्णुः'' (तैत्ति.सं. 1-5-6) इति श्रुतेः। अनेकगुणत्व मेवाऽऽह। पृथग्विधानि (मै.ब्रा.1-2-5) यानि द्रव्यादीनि तैः, तत्र द्रव्याणि व्रीह्यादीनि, गुणाः शुक्लादयः, क्रियाः अवघातादयः उक्तयः मन्त्राः, अर्थः अङ्गसाध्यः[11] उपकारः, आशयः सङ्कल्पः, लिङ्गं पदार्थानां शक्तिः, नाम ज्योतिष्टोमादि तैश्चाध्वरः सम्पद्यते॥ ३३॥

यागतदङ्गानां भगवद्रूपत्व मुक्त्वा यागफलस्याऽपि भगवद्रूपता माह - **प्रधानेति**। एष विभुः परमानन्दोऽपि शरीरे चेतनां विषयाकारां बुद्धिं प्रतिपद्य तदभिव्यंग्यानन्दरूप स्सन् क्रियाफलत्वेन प्रतीयते। ''एतस्यैवाऽऽनन्दस्यान्यानि भूतानि मात्रा मुपजीवन्ति'' (बृह.उ.4-3-32) इति श्रुतेः। यथाऽनलः दारुषु स्थितः तद्गुणात्मको दारु धर्म दैर्घ्यवक्रत्वादिमान्, तद्वत्। कथम्भूते शरीरे प्रधान मव्यक्तम्। काल स्तत्क्षोभकः, आशयो वासना, धर्मः अदृष्टं[12] तैः संगृह्यते जन्यत इति तथा तस्मिन् देहे[13]॥ ३४॥

---

1. A, B, J, Va omit उपचितं 2. B, J, V, Va omit अभिरुचिः 3--3. A, B, J, Va omit 4. V सदृष्टान्तम् 5. A, B, J, Va omit अध्ययन 6. V परिचर्याभिः 7. A, B, J, Va यागत° 8--8. V कल्पेषु 9. V गुणोऽपि 10. V गुणवान् 11. V याग 12. V adds अत्र 13. A, B, J, Va omit देहे

**वीर०** एवं केवलकर्मणां तन्मूलकापूर्वस्य स्वातन्त्र्येण देवतायाश्च फलसाधनत्वाभावः परमपुरुषस्यैव साधनभावश्चोपपादितः। इदानीं तद्दढिम्ने तस्य भगवत्पादारविन्दभजनस्यैव अनर्थनिरासकत्वपूर्वकपुरुषार्थापादकत्व माह- **यत्पादेति**। तपः सन्तापः आध्यात्मिकादिः। 'तप-सन्तापे, इति धात्वर्थानुरोधात् तद्वतां तापत्रयातुराणां इत्यर्थः। यस्य भगवतः पादयोः या सेवा भक्तिः, तस्या मभिरुचिः अहरहः प्रवर्धमाना सती अनेकजन्मभिः अनन्तजन्मभिः उपचितं संवर्धितं धियो मनसः मलं सद्यः क्षिणोति क्षपयति। तमेव भजतेति तृतीयेनाऽन्वयः। तत्पादसम्बन्धस्य एष महिमेति दृष्टान्तेनाऽऽह- यथेति। यथा तत्पादाङ्गुष्ठात्[1] विनिस्सृता सरित् गङ्गा मलं क्षिणोति तथेत्यर्थः॥ ३०॥

किं मलक्षपणसाध्यं तत्राह- विनिर्घृतं निरस्तमशेषं मनोमलं यस्य। असङ्गो वैराग्यं, इदं साधनसप्तकोपलक्षणम्। विज्ञानं प्रकृतिविविक्तात्म याथात्म्यवेदनं ताभ्यां विशेष्यत इति विशेषः, अङ्गभूत ज्ञानकर्मकृतोपकार इत्यर्थः। तदेव वीर्यं बलं यस्य भक्तियोगस्य सोऽस्यास्तीति तथा, यस्य भगवतोऽङ्घ्रिमूले कृतकेतनः कृतस्थानः तदेकनिरतः। अनेन भक्तियोगस्य विजातीय प्रत्ययान्तराव्यवहितत्वं विवक्षितम्। ईदृशः पुमान् क्लेशवहां गर्भजन्म जरामरणादिक्लेशकारिणीं संसृतिं पुनः न प्रतिपद्यते॥ ३१॥

तस्मात् स्वकर्मभिः [2]स्ववर्णाश्रमोचितैः पञ्चमहायज्ञादिभिः आत्मवृत्तिभिः "शमो दम स्तप श्शौचं क्षान्ति रार्जव मेव च" (भ.गी.18-42) इत्यादिस्थानोक्त शमादिभिः मनोवचः कायगुणैः ध्यानस्तुति परिचर्यादिभिः अमायिनो निष्कपटाः सन्तः, कथम्भूतम्? कामं समीहितं दोग्धि प्रपूरयतीति कामदुघं तदङ्घ्रिपङ्कजं यस्य, यथाऽधिकारावसितार्थसिद्धयः। [3-]अधिकारः फलं[-3] अधि कर्मण्यधिकृत्य क्रियते साध्यते इति व्युत्पत्तेः। यथाधिकारं [4]स्वस्वसमीहितं फल मनतिक्रम्य अवसिता निश्चिता अर्थसिद्धिः फलसिद्धिर्येषां ते स्वस्वसमीहिता[5]र्थानुसारेण फलसिद्धिः भाविनी इत्येवं निश्चितबुद्धय इत्यर्थः। निश्चयस्याऽपि अनुष्ठानोपयोगित्वात् संशयस्य अनर्थावहत्वात्। तथा च स्मर्यते - "नायं लोकोऽस्ति न परो न सुखं संशयात्मनः। अज्ञश्चाऽश्रद्दधानश्च संशयात्मा विनश्यति।" (भ.गी. 4-40) इति॥ ३२॥

ननु कर्मणां द्रव्यदेवतादिभेदादेव भेदः। अन्यथा कर्मैक्य मेव स्यात्। ततश्च प्रतिनियतसाधनोपसंहार प्रयासो व्यर्थः स्यात्। एवं च कथमेकदेवतोद्देशेन सर्वकर्मानुष्ठानं कुरुतेत्युच्यते, तत्राह - **असाविति**। अत्र गुणाध्वर इति पाठः गुणोऽध्वर इति च। तत्र व्यस्तपाठे अगुण इति च्छेदः, भगवद्विशेषणं हेयगुणरहित इत्यर्थः। अनेकगुण इति शुभगुणविधानात्। समस्तपाठे तु अध्वरविशेषणं, सत्त्वादिगुणान्वित इत्यर्थः। कर्तृद्वारा तदन्वयो बोध्यः। तत्र स्वरूपतः स्वरूपेण विज्ञानघनः विज्ञानशब्देन अनुकूलात्मकं ज्ञानं

---

1. A, B, T °ष्ठवि° 2. A, B, T omit स्व 3--3. A, B, T omit 4. A, B,T omit स्व 5. W °तानु

विवक्षितम् । घनशब्देन तस्यैव सान्द्रत्व मभिप्रेतम् । विज्ञानैक स्वरूप इत्यर्थः । अगुणः निरस्तहेयगुणः, अनेक गुणः अनन्तकल्याणगुणः, योऽसौ परमात्मा स एव पृथग्विधानिद्रव्याणिव्रीह्याद्यपश्वादीनि गुणाः "शुक्ला मालभेत" "कृष्णामालभेत" इत्यादि विध्युद्देशश्रुत शुक्लादयः, क्रियाः अवहननावेक्षणा लम्भनादयः उक्तयो मन्त्राः, पृथग्विधत्वं त्रिष्वप्यन्वेतव्यम् । पृथग्विधद्रव्यादिभिः अध्वर स्सन्, अध्वरस्य द्रव्यादिसंघातरूपत्वात् द्रव्यादीनां भगवच्छरीरत्वात् अध्वररूपो भूत्वेत्यर्थः, अर्थाशय लिङ्गनामभिः सम्पद्यते । अर्थः अध्वर प्रयोजनं स्वर्गादिरूपं फलं, तस्य आशयाः आश्रुयभूतानि । [1-]जलाशय-कमलाशय-इति प्रयोगात्[-1] । लिङ्गानि अग्नीन्द्रादि रूप शरीराणि, नामानि वाचकाग्नीन्द्रादिशब्दाः तैः सम्पद्यते अग्नीन्द्रादिलिङ्गस्य फलाश्रयत्वं फलदानक्रियायाः अग्नीन्द्राद्याश्रितत्वात् बोध्यं, अध्वराराध्यत्वेन तत्फलदत्वेना वगताग्नीन्द्रादि नामरूपात्मको भवतीत्यर्थः । तथा च श्रुतिः- "यज्ञो वै विष्णुः" (तै.त्ति.सं 1,56, तै.त्ति.बा 1-2-5) "तदेवाग्नि स्तद्वायु स्तत्सूर्य स्तदु चन्द्रमाः, (म.ना.उ.1-17) इति अग्नीन्द्रादिद्वारभेदेन द्रव्यादि भेदेन च कर्मणां भेदः । अग्न्या द्यन्तरात्मतयाऽवस्थितस्य परमपुरुषस्यैकस्यैव आराध्यत्व [2]फलप्रदत्वाद्युपपत्तेः [3-]तात्पर्यतः[-3] एक देवताराधनत्वमपि उपपन्न मिति भावः ॥ ३३ ॥

एवं कर्म तदाराध्यदेवतारूपत्व मुक्तम् । अथ कर्म [4]फलभोक्तृजीवरूपत्वं तत्फलरूपत्वं चाह- **प्रधानेति** । एष भगवान् प्रधानं प्रकृतिः काल स्तद्गुणक्षोभकः, आशयो वासना, धर्मः अदृष्टम् एभिः सञ्जूद्यते उत्पद्यत इति । तथा तस्मिन् शरीरे चेतनां शब्दाद्यनुभवरूपं ज्ञानं प्रतिपद्य जीवद्वारा प्रतिपद्येत्यर्थः । तत्र जीवादिभिः सामानाधिकरण्ये च हेतुः- "विभुर्य आत्मनि तिष्ठन्" इत्युक्तरीत्या जीवान्तरात्मतयाऽवस्थानात् । सर्वजगदुपादान त्वादुपादानत्वस्य च भाव्यवस्थाविशेषवतः प्रागवस्थायोगित्व रूपत्वात् जीवं प्रति उपादानत्वेन च जीवधर्मभूत ज्ञान सङ्कोच विकासरूप विकाराश्रयत्वस्याऽपि जीवद्वारकत्वेन विभोः परस्य सत्त्वात् शब्दाद्यनुभवरूपचेतनां प्रतिपद्येत्युक्तम् । क्रियाफलत्वेन स्वर्गादिरूपतया विभाव्यते निश्चीयते । एवं कर्मतदाराध्य तत्फलभोक्तृ तत्फलरूपत्व मुक्तम् । तत्र कर्मादिगत दोषसंस्पर्शमाशङ्क्य तन्नेत्यभिप्रायेण दृष्टान्तमाह- **यथेति** । दारुषु अनलोऽग्नि र्यथा तद्गुणात्मकः दारुगतदैर्घ्यवक्रत्वादिमान् प्रतीयते; तद्वत् वस्तुत एकरूपोऽप्यनलोऽधिष्ठानवैचित्र्याद्विचित्र इव प्रतीयते तथेत्यर्थः । [5-]सामानाधिकरण्येऽपि अयमेव दृष्टान्तः । वस्तुतः खादिरत्वादिव्यपदेशशून्योऽप्यनलः खादिरोऽनलःप्लक्षो नलः, नैयग्रोधोऽनलः इति खादिरत्वप्लक्षत्वनैयग्रोधत्वादिगुणकः[-5] सामानाधिकरण्येन व्यपदिश्यते [6-]खादिरादिदारुषु अभिव्याप्तेः। तद्वत् चेतनाचेतनेषु अभिव्याप्तत्वात् अभिव्याप्तिनिबन्धनेन सामानाधिकरण्येन व्यपदिश्यते[-6] इति ॥ ३४ ॥

---

1--1. W omits 2. W फलद॰ 3--3. A, B, T स्वारस्यतः 4. A, B, T omit फल 5--5. A, B, T omit 6--6. A, B, T omit

**विज.** यज्ञपति रस्तु राज्यादे र्हेतु र्येन विधिना फलसिद्धिः स्यात्तं प्रकार मुपदिशेत्यत आह - **यत्पादेति** । अत्र गङ्गादृष्टान्तो बुद्ध्यवतारार्थं, न तु गङ्गाकृष्ण पाद सेवयोः फलसाम्याभिप्रायेण। कृष्णपादसेवा साक्षात् ज्ञानसाध्य प्रसादसाधनं, गङ्गासेवातु शुद्धान्तःकरणस्य भगवत्सेवा मुत्पाद्य तत्साधनमिति परम्परयोपसङ्गच्छते॥३०॥

नष्टमनोमलस्य किमात्यन्तिक फल मत्राह **विनिर्धुतेति**। निरस्तमनोदोषस्य पुंसो विषयासङ्ग लक्षणवैराग्याज्जाताया भक्ते र्विज्ञानं भवति। तदेव **विशेषवीर्य मस्यास्तीति** असङ्ग विज्ञान विशेष वीर्यवान्। यस्याऽङ्घ्रिमूले कृताश्रयः विज्ञानात् पूर्वं यथा **संसार माप्नोति तथा नाप्नोती त्यस्मिन्नर्थे पुनरिति**। संसारक्लेश प्रतिपत्तिमपि नाऽऽप्नोति किं पुन स्तत्प्राप्तिरित्यतः प्रपद्यत इति॥ ३१॥

एवं तत्सेवाफल मुक्त्वा तदुपास्तिं विधत्ते **तमेवेति।** फलस्यानुभवसिद्धत्वा दन्ययोगव्यवच्छेदार्थ एवशब्दः भजतैवेत्ययोग व्यवच्छेदो वा आत्मनि हरावेव वृत्ति र्वर्तनं येषां ते तथा तैः। अय मेव मनआदीनां गुणः यद्विष्णु विषयत्वेन चरणम्। स्वकर्मभिः स्वस्य विहिताश्रमादि कर्मभिः। उक्त मेतत्सर्व मप्रयोजकम्। व्याजिन इत्यत उक्तम्। अमायिन इति। फलपूर्वविधाने क्षिप्रप्रवृत्ति र्भवतीति भावेनोक्तम् - कामदुघेति। वेदानुकूलमिति द्योतनाय - **दुघेति**। इद मेव दर्शयन्नित्यम्भाव माह य **यथेति**। "अथाऽत आनन्दस्य मीमांसा भवति" (तैत्ति.उ.2-8) इत्यादिश्रुतौ मनुष्योत्तम मारभ्य ब्रह्मपर्यन्तं योग्य मधिकारो योग्यतालक्षण स्तस्मि न्नवसिता निर्णीता अर्थसिद्धि रानन्दप्राप्ति र्या, तदर्थ मित्यर्थः। अर्थःमोक्षः। अर्थःस्याद्विषये मोक्षे शव्दवाच्ये प्रयोजने" (वैज.को.6-1-3) इति यादवः॥ ३२॥

स्वकर्मभिरिति उक्तकर्मकरण प्रकार माह - **असाविति**। "आत्मा वा इद मेक एवाऽग्र आसीत्,, (ऐत.उ.1-1-1) इत्यादिश्रुतिसिद्धः योऽसौ श्रीनारायणःइह जीवराशौ सता पुंसा अनुष्ठितैः अनेकगुणाध्वरैः सम्पद्यते प्राप्यत इत्यन्वयः। ते च अधिकारभेदात् बहवः इत्याशयेनाह - **पृथगिति**। षोडशादिभेदाभिन्नैः अनेकगुणत्वं व्यनक्ति-**द्रव्येति**। द्रव्यं पुरोडाशादि कल्पोक्तगुणविशिष्टम्। "द्रव्यं गुणाना माधारे (वैज.को.6-3-15) इति यादवः। गुणः विशिष्टःमातापितृजन्यत्वादि, क्रिया ऋत्विग्व्यापारः। "इन्द्रायाग्नये,, इत्या द्युक्तयो **येषु ते तथा**तैः अर्थेषु यजमानेषु आशयोऽन्तः करणं येषां ते देवाः अर्थाशयाः तेषां लिङ्गानि वज्रधरत्वादीनि इन्द्रादिनामानि च येषु ते तथा तैः यद्वा अर्थाशयत्वं मुक्ता श्रयत्वं चक्रधरादि लिङ्गं नारायणादि नाम च येषु ते तथा तैः, **कथं प्राप्यते। विशुद्धविज्ञानघनस्वरूपतः** एवं ज्ञानेन प्राप्य इत्यर्थः, अनेन कर्मणा शुद्धान्तःकरणा ज्जातं ज्ञानं संसारनिवर्तक मित्यु क्तया "**कर्मणैव हि संसिद्धि मास्थिता जनकादयः**,, (भ.गी.3-20) इत्यादेः गतिरुक्तेति ज्ञायते॥३३॥

कर्मसाधनज्ञानेन ज्ञायत इत्युक्तम्। तत्र विशिष्टतया ज्ञानं मुक्तिसाधनं स्यादिति तं प्रकारं ब्रूते **प्रधानेति**। प्रधानं प्रकृतिः, कालः, फलपाचकः, आशयोऽन्तः, करणं, कर्म जीवादृष्टम् - एतानि संगृह्णातीति प्रधान कालाशय कर्मसंग्रहः। त्यक्तेषु सर्वेषु शरीर मेव शिष्यते यस्य स शरीरशेषो जीवः तं प्रतिपद्य प्राप्य चेतनः ज्ञानशक्तिमान् नित्याविप्लुतज्ञान इत्यर्थः। विभुः श्रीनारायणोऽयं क्रियाफलत्वेन कर्मफलदातृत्वेन पुण्यकर्मभिः पुरूषैः विभाव्यते ज्ञायत इत्यन्वयः। "फल मत उपपत्तेः, (ब्र.सू.3-2-38(37)) इति सूत्रात् हरेः कर्मफल दातृत्वं सिद्धम्। अत्र दृष्टान्तमाह - यथेति। यथा अनलः अग्निः तस्य[1] दारुणे गुणं स्थौल्यादिक मादत्ते दारुस्थौल्या द्यनुसारेण स्वयंच स्थौल्यादिमान् भवतीति तद्गुणात्मको विध्युक्त गुणवत्सु दारुषु अग्निः मथानादिना अभिव्यक्तो ज्ञायत तथा प्रधानादिशब्दाभिधेय लक्ष्म्यादिभिः परिवृतः जीवान्तर्गतः जीवपरिमाणगुणानुकारी तदनुष्ठित कर्मफलदातृत्वेन गुरुशिष्य व्याख्यान श्रवण लक्षणमथनेन अभिव्यक्तो हरि र्ज्ञायत इति भावः। प्रधानादीनां हर्यधीनत्वं तद्भिन्नत्वं च दर्शयितुं तद्ग्रहणम्। देहस्थत्वेऽपि तद्गुणसम्पृक्ताभाव दर्शनाय दार्वनलनिदर्शनम्। किञ्चानेन देहदोष धारण सामर्थ्यं जगत्भक्षणाऽप्यलम्बुद्धिराहित्यं सूचयितुं दार्वनलपद मुपात्त मिति ज्ञापयति॥ ३४॥

**अहो ममाऽमी[2] वितरन्त्यनुग्रहं हरिं गुरुं यज्ञभुजामधीश्वरम्।**
**स्वधर्मयोगेन यजन्ति मामका निरन्तरं क्षोणितले दृढव्रताः[3]॥ ३५॥**

**मा जातु तेजः प्रभवेन्महर्द्धिभि स्तितिक्षया[4] तपसा विद्यया च।**
**देदीप्यमानेऽजित देवतानां कुले स्वयं राजकुलाद्[5] द्विजानाम्॥ ३६॥**

**ब्रह्मण्यदेवः पुरुषः पुरातनो नित्यं हरि र्यच्चरणाभिवन्दनात्।**
**अवाप लक्ष्मी मनपायिनीं यशो जगत्पवित्रं च महत्तमाग्रणीः॥ ३७॥**

**यत्सेवयाऽशेषगुहाशयः[6] स्वराड् विप्रप्रिय स्तुष्यति काममीश्वरः।**
**तदेव तद्धर्म परै र्विनीतैः सर्वात्मना ब्रह्मकुलं निषेव्यताम्॥ ३८॥**

**पुमाँ ल्लभेतानतिवेल[7] मात्मनः प्रसीदतो[8]ऽत्यन्तशमं स्वतःस्वयम्।**
**यन्नित्यसम्बन्धनिषेवया ततः परं किमत्रास्ति मुखं[9] हविर्भुजाम्॥ ३९॥**

1. A, B तत्तद्दा° 2. M, Ma, Ms बतामी 3. M, Ma, Ms धृत 4. W °साऽऽतिथ्यया च 5. M, Ma, Ms कुले 6. M, Ma, Ms गुणाश्रयः 7. M, Ma, Ms °ष्यति 8. M, Ma, Ms प्रसा° 9. M, Ma, Ms सुखं

**श्रीध.** तदेव मप्रवृत्तान् भगवद्भजने प्रवर्त्य स्वतः प्रवृत्तानां प्रवृत्तिमभिनन्दनेन द्रढयति - **अहो** इति। वितरन्ति कुर्वन्ति, [1-]गुरुं गुरुत्वेन स्वहितकर्म फल दातृत्वेन च पूज्यं हरि रूप मिष्टदैवतं स्वधर्मयोगेन यजन्ति पूजयन्ति[-1] ॥ ३५ ॥

इदानीं हरिभक्ति दार्ढ्याय ब्राह्मणभक्तिं विधत्ते**माजात्वि**त्यष्टाभिः। महत्यश्च ता ऋद्धय श्च ताभिः यद्राजकुलस्य तेजः तस्मात् द्विजानां कुलेऽजितो विष्णुः[2] देवता येषां [3-]वैष्णवानां तेषां[-3] च कुले मा जातु प्रभवेत्कदाचिदपि प्रभावं[4] न करोतु[5] कथम्भूते ? समृद्धिभि र्विनाऽपि स्वयमेव तितिक्षादिभि र्देदीप्यमाने ॥ ३६ ॥

ब्राह्मणान् स्तुवन्नाह - **ब्रह्मण्येति**। यच्चरणाभिवन्दनात् हरिः लक्ष्मीं यशश्च अवाप, यत्सेवया च ईश्वरः तुष्यति, तदेव ब्रह्मकुलं निषेव्यता मिति द्वयो रन्वयः ॥ ३७ ॥

**यदिति**। तस्य हरेः लोकसंग्रहरूपो यो धर्मः तत्परैः ॥ ३८ ॥

ननु ब्रह्मकुले एव नित्यं सेव्यमाने सर्वदेवतामुखभूते अग्नौ यज्ञाद्यनुष्ठानं न स्यात्। न च तेन विना चित्तशुद्धिः, न च तया विना मोक्षः स्या दित्याशङ्क्याह - **पुमानिति** द्वाभ्याम्। यस्य ब्रह्मकुलस्य नित्यं सम्बन्धेन निषेवया पुमान् स्वयमेव ज्ञानाभ्यासादिकं विनाऽपि [6-]अत्यन्त[-6] इमं[7] मोक्षं लभेत[8]। कुतः? यत्सेवया स्वत एवानतिवेलं शीघ्रं प्रसीदतः शुद्ध्यत आत्मन श्चित्तात् ततः परं श्रेष्ठं [9-]हविर्भुजां[-9] देवानां किं मुखमस्ति ब्राह्मणसेवयैव यज्ञादिफलं ज्ञानफलं च तत्सर्वं[10] भवतीत्यर्थः ॥

**वीर.** तदेवं अप्रवृत्तान् भगवद्भजने प्रवर्त्य स्वतः प्रवृत्तानां प्रकृत्यभिनन्दनेन प्रथयति - **अहो** इति। ये भूतले मामकाः मद्विषयवासिनो जनाः दृढव्रताः दृढसङ्कल्पाः स्ववर्णा श्रमोचित[11]धर्मयोगेन यज्ञभुजां इन्द्रदीना मधीश्वरं अन्तरात्मानं गुरुं हितोपदेष्टारं हरिं स्वाश्रित दुरितहरं नित्यं भजन्ति। ते अमी जनाः मम अनुग्रहं वितरन्ति कुर्वन्ति। अहो इति हर्षे ॥३५॥

इदानीं भगवद्भक्तिदार्ढ्याय ब्राह्मणभक्तिं विधत्ते **माजातु** इत्यष्टभिः। तत्र तावत् ब्राह्मण कुलस्य राजकुल निग्रहाविषयत्वं प्रार्थयते। महर्धिभिः महत्यश्चताः ऋद्धयः ताभिः यत् राजकुलस्य तेजः तस्मात् सकाशात् द्विजानां कथम्भूतानाम्, अजितो भगवान् देवता येषां तेषां कुले जातु कदा चिदपि मा प्रभवेत् प्रभावं न करोतु। कथम्भूते ? समृद्धिभिः विनाऽपि स्वयमेव तितिक्षादिभिः देदीप्यमाने। यद्वा राजकुलस्य ब्राह्मणकुल निग्रहाविषयत्वं प्रार्थयते। अजितदेवतानां द्विजानां कुले तितिक्षया द्वन्द्व सहनेन तपसा

---

1--1. B, J, V, Va omit 2. B, J, Va omit विष्णुः; V हरिः 3--3. V omits 4. V adds तत्र 5. V कुर्यात् 6. A, B, J, Va अत्युत्तमं 7. B omits शमं 8. V लभते 9--9. B, J, V, Va omit 10. V omits तत् 11. A, B, T omit उचित

कृच्छ्रादिना ब्रह्मोपासनया वा आतिथ्यया अतिथ्याराधनया चकाराच्छमदमादिसङ्ग्रहः । एभिः देदीप्यमाने सति तेषां तेजः महर्द्धिभिः राजकुलाद्धेतोः कदाचित् मा प्रभवेत् महर्धिप्रयुक्त गर्वसहितात् राजकुलात् ब्राह्मणकुलं कुपितं मा भूदित्यर्थः । कुलद्वय मन्योन्यं यथायोग्य मनुगृह्णात्विति भावः ॥ ३६ ॥

यच्चरणाभिवन्दनात् - येषां [1-] ब्रह्मणानां [-1] चरणाभिवन्दनात् हरिः लक्ष्मीं [2-] अनपायिनीं [-2] जगत्पवित्रं यशश्च अवाप । यत्सेवया च ईश्वरः तुष्यति, तदेव ब्रह्मकुलं निषेव्यता मिति द्वयो रन्वयः । हरिं विशिनष्टि - ब्रह्मण्य देवः ब्राह्मणसेवा परायणानां मन्वादीना मपि देवः पुराणः पुरुष इति । न चैवं ईश्वरस्य लक्ष्मी यशसः सम्बन्धस्य सोपाधिकत्व प्रसङ्गः । भगवदितरेषां यश आदि सम्बन्धस्य ब्राह्मणसेवायत्ततैक कथनमात्र तात्पर्यकत्वात् अस्य श्लोकस्य अर्थवादवाक्यस्य स्वार्थे तात्पर्याभावात्, विधेः स्तावकत्वात् । न च अर्थवादस्य स्वार्थे तात्पर्यभावे सति इतरेषामपि यशआदि सम्बन्धेऽपि तात्पर्यं नास्तीति वक्तुं शक्यम् । ब्राह्मण सेवाविध्यपेक्षित फलसमर्थकत्वेन तत्र तात्पर्यनिश्चयात् । न ह्यसता गुणेन प्ररोचना सम्भवति, न च ''पयः पिब शिखा ते वर्धते,, इति बाला द्युपच्छन्दन वाक्ये असताऽपि गुणेन प्ररोचना दृश्यत इति वाच्यम् । तत्राऽपि यद्यसत्व निश्चयः तर्ह्यप्रवृत्तेः प्रवृत्त्यर्थ प्ररोचनाया एवाऽनुपपत्तेः । तस्मात् तत्र असत्ता मजानतां[3] बालानां पयःपानादि प्रवृत्त्यर्थं शिखा वर्धनादिकं असदपि फलत्वेन कीर्त्यते । तत्र असत्वं प्रत्यक्षतः अवगतं, इह तु मन्वादिषु ब्राह्मणसेवकेषु यशस्सम्बन्धस्यैव प्रत्यक्षतुल्यशास्त्रेण अवगमात् असत्तानिश्चायकस्य प्रमाणान्तरस्य अभावात् । न च तेषां तत्सम्बन्धे ब्राह्मण सेवातिरिक्तं अदृष्टान्तर मेव कारण मिति वक्तुं युक्तम्, अदृष्टान्तरस्याऽपि स्वस्ववर्णाश्रमैकान्त नित्य नैमित्तिकादि पूर्वक याग जन्यत्वात् स्व स्व वर्णाश्रम धर्मेषु ब्राह्मणसेवायाः अपि अनुप्रविष्टत्वात् । स्वराट् स्वतन्त्रः अकर्मवश्यः, तथाऽपि विप्रप्रियः विप्राधीनः बहुव्रीहि षष्ठी तत्पुरुष समासद्वयेन अन्योन्यं भृशं प्रीतिविषयत्वलाभात् विषयवैलक्षण्याधीन त्वात् पारतन्त्र्यस्य स्वतन्त्रास्यापि स्वेच्छया पारतन्त्र्योपपत्तेः ईश्वरः तुष्यति । ईश्वरस्य कर्मवश्यत्वं नाम देव मनुष्यादि सजातीयचेष्टां कुर्वतोऽपि तच्चेष्टायत्त सुखदुःखाद्यस्पर्शनं चेति विप्रतिषिद्धम्, यच्चेष्टनं तत्प्रयुक्तसुखाद्यस्पर्शनं चेति विप्रतिषिद्ध मिति शङ्क्यम् । स्वर्गिना[4] रकव्यापारेषु तथा दर्शनात् । एवञ्च , ईश्वरस्य ब्राह्मण सेवा तदभाव जन्यसुखा द्यस्पर्शिनोऽपि तत्सेवापरायणत्व कथनेन द्विजसेवायाः आवश्यकत्वद्योतनाय स्वराडिति विशेषणम् । नन्वन्यसेवया अन्यः कथं तुष्येत् । तत्राह अशेषगुहाश्यः । सेवकसेव्ययोरूभयोरपि हृदयगुहायां तदन्तरात्मतया निविष्टत्वेन सेवाजन्य द्विजादिनिष्ठ प्रीतेरपि द्विजातिद्वाराऽऽश्रयस्सन् सेवकनिष्ठसेवाश्रद्धादिक मेवक्ष्य तुष्यतीत्यर्थः । कामं तुष्यतीत्यनेन द्विजसेवातः अधिकः तोषहेतु र्नास्तीति

---

1--1. A, B, T omit 2--2. A, B, T omit 3. T ⁰नानां 4. A, B, T स्वार्ग

द्योत्यते। तस्मात् द्विजसेवायाः यश आदि हेतुत्वात् [1-] भगवत्तोषहेतुत्वाच्च [-1] तद्धर्मपरैः द्विज सेवैकशीलैः तदुपयुक्तं गुणमाह - विनीतैः एकविशेषणोपादानेन द्विजप्रसादननियम मन्तरेण अन्यो हेतु रनपेक्षित [2] इति सूचितम्। सर्वात्मना करणत्रयैक्येन ब्रह्मकुलं निषेव्यताम्॥ ३७,३८॥

किञ्च, ''प्रसादे सर्वदुःखानां हानिरस्योपजायते प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥(भ.गी.2-65) इत्युक्तरीत्या सर्वदुःखहानि हेतु भूत मनः प्रसाद निर्वर्तकत्वादपि द्विजसेवैव कार्येत्याह - **पुमानिति**। येषां ब्राह्मणानां नित्यसन्बन्धरूप सेवया पुमान् अनतिवेलं शीघ्रं स्वय मेव प्रयत्नान्तर मन्तरेणैव प्रसीदतः आत्मनः मनसः शमं शान्तिं लभेत। ततः [3-] शान्तान्मनसः [-3] [4] परं किमस्ति साध्यम् इति शेषः। शान्तमनसा असाध्यं किञ्चिदपि नास्तीत्यर्थः। किञ्च, हविर्भुजां इन्द्रादीनां मुखं ब्राह्मणकुलं ब्राह्मणसेवयैव तन्मुखानां हविर्भुजां यज्ञाराध्य देवानामपि सेवा कृता स्यात्। ''ब्राह्मणोऽस्य मुख मासीत्,, (तैत्ति.उ.3-36-37) इति ब्राह्मणकुलस्य भगवदावेशावतारस्य ब्रह्मणो मुखत्वात् (पु.सू.1-5) तदाराधनेनैव हविर्भुगन्तरात्मतया अवस्थितः परमात्मा तुष्यतीति ब्राह्मणा एव अन्नादिभिराराध्या इति भावः॥३९॥

**विज०** गुरुशिष्यव्याख्यानादिमथनेन हरि रभिव्यक्तो भवतीत्युक्तम्। तत्र गुरवः शिष्याश्च श्रीनारायणमुखोत्पन्नत्वात् व्याख्यानादे [5] र्मुखव्यापारत्वेन अत एव मुख्यत्वेन सात्त्विकत्वेन च स्वत एव व्याख्यानादौ प्रवृत्ति सम्भवाज्जलस्यन्दनवत् ब्राह्मणा एवेत्यभिप्रेत्याधुना तानभिष्टौति- **अहो बतेति**। अमी इत्यनेन हरे र्मुखजातत्वं परामृशति, बतेति चित्तं द्रवीकरोति, अहो इति सभ्यानुन्मुखीकरोति। इष्टदेवतात्वेन गुरुत्वेन स्वविहितकर्मफल दातृत्वेन श्रीनारायण एव पूज्य इत्यतो विशेषत्रयम्। ''एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः। यद्भक्त्या पुण्डरीकाक्षं स्तवै रर्चे न्नरस्सदा'' (विस. भार 13-135-8) इति वचनात्। स्वधर्मयोगो भक्तियोग स्तेन यजन्ति पूजयन्ति भगवद्भक्तत्वेन स्वचेतः प्रीति जनकत्वा न्मामका इत्युक्तम्। कृत्या ह्यन्यव्यापार राहित्यप्रकटनाय निरन्तरमिति। एतत्सूचनाय धृतव्रता इति। सत्रादिकर्मसु दीक्षितानामन्यव्यापाराभाव स्तथाऽत्रापीति कर्मणां फलाधिक्यद्योतनाय क्षोणितले पतनदुःखक्षयहेतुत्वात् प्रतिष्ठाहेतुत्वाच्च क्षोणितल इति, क्षिणु-क्षये, तल-प्रतिष्ठाया मिति धातुः॥ ३५॥

स्ववंश्यानां राज्ञां शिक्षामाह- **माजात्विति**। राजकुले विद्यमानाभिः महर्धिभिः समुत्चितं तेजः प्रभाव लक्षणम्। अजितः श्री नारायणो देवता येषां ते तथा तेषां तितिक्षादिना देदीप्यमाने द्विजानां कुले जातु कदाचिदपि मा प्रभवेत् कुलक्षये समर्थं न भवेत्॥ ३६॥

---

1--1. A, B, T omit 2. W इव 3--3. A, B, T शान्तमनसः 4. A, B, T omit परं 5. A, B, मुख०

न केवलं ब्रह्मकुलं नाभिभवनीयं किन्तु, तत्र भक्तिरपि कर्तव्येत्यत्र कैमुत्यन्यायमाह- **ब्रह्मण्यदेव** इति। ''अर्क मर्कट मण्डूकविष्णुवासव वायवः। तुरङ्ग सिंह शीतांशु यमाश्च हरयोदश '' (हला.को. 5-70) इति निगदाद्धरिरिन्द्रो यस्य श्रीनारायणस्य चरणाभिवन्दनादनपायिनीं लक्ष्मी मवाप, जगत्पवित्रं यशश्चावाप। सोऽपि पुरातनः पुरुषो ब्रह्मण्यदेवो ब्राह्मणप्रियश्च। देवः क्रीडादिगुणयुक्तश्चेत्यन्वयः[1]। ब्राह्मणप्रियत्वं क्रीडामात्रमिति दर्शयितुं देव इति पदम्। अत एव महत्तमाग्रणी रित्युक्तम्। महता मिन्द्रादीनां सकाशा दुत्तमा ब्रह्मादय स्तेषा मप्यग्रणीः श्रेष्ठ स्तस्मात् क्रीडामात्र मिदम्। अत एवाऽनुपपत्त्या हरिशब्देनेन्द्र एव गृहीतः ''यत्प्रसादेन देवेन्द्रो वेदोदितयशा अभूत्। सोऽपि विष्णुरमेयात्मा सदा ब्राह्मण वत्सलः'' (हरिवंशे) इति स्मृतेश्च प्रतीतार्थ परित्यागो युक्तः। अजित देवताना मित्युक्ति विरोधाच्च॥ ३७॥

अस्तु विष्णु र्द्विजप्रियः, ततः प्रकृते किमित्याशङ्क्य विष्णुभक्ति मवमृश्य ब्राह्मणसेवा कार्येत्याह-**यत्सेवयेति**। अपवर्गावाप्तौ श्रीलक्ष्मीकान्तप्रसाद एवाऽपेक्षणीयोऽतः क्षितिदेवप्रीत्या किम् इत्यतो वा यत्सेवयेति। भगवत्प्रसादोत्पत्तौ विप्रसेवा द्वार मित्यर्थः। स्वराट् स्वतन्त्रः यतो विष्णुप्रसादो भवति तस्मात् ब्राह्मणकुलं निषेव्यतामित्युपसंहरति- तदेवेति। तद्धर्मपरै र्विष्णुधर्मपरैः॥ ३८॥

ब्राह्मणसेवा प्रसन्न श्रीनारायण प्रसादान्मौक्तिक परमानन्दोऽपि भवतीत्याह - **पुमानिति**। यस्य हरे र्नित्यसम्बन्धो येषां ते, यन्नित्यसम्बन्धात् द्विजा स्तेषां निषेवया सेवालक्षणया सङ्गतः पुमा नतिवेलं क्षिप्रं तस्याऽऽत्मनो हरेः प्रसादतोऽत्यन्तशमं भगवन्निष्ठाजन्यमुक्तिसुखं लभेत। तत स्तस्मा न्मोक्षसुखात्पर मन्य त्सुखं हविर्भुजा मप्यत्र संसारोऽस्ति, किं, नास्त्येव। हविभुजो देवताः। किंविशिष्टम्? स्वयं स्वरूपभूतम्। अस्वरूप मपि स्वरूपवन्नोपचरित मित्याह - स्वत इति। महत्सेवां द्वार माहुः विमुक्तेरिति। महत्सेवाया अपि मुक्तिसाधनत्वं सिद्धम्। यद्वा यन्नित्यसम्बन्धानां सतां निषेवया पुमानात्मनो मनसः प्रसादतोऽत्यन्तशम मतिशयित भगवन्निष्ठां लभेत। ततः श्रीनारायणनिष्ठायाः स्वतोऽकृत्रिमं स्वयं स्वरूपसुखं लभेत। तत इत्युत्तरत्राऽपि सम्बध्यते। शेषं पूर्ववत्॥ ३९॥

**अश्नात्यनन्तः खलु तत्त्वकोविदैः श्रद्धाहुतं यन्मुख इज्यनामभिः[2]।**
**न वै तथा चेतनया बहिष्कृते हुताशने पारमहंस्य पर्यगुः[3]॥ ४०॥**

**यद्ब्रह्म नित्यं विरजं सनातनं श्रद्धातपोमङ्गल मौनसंयमैः।**
**समाधिना बिभ्र दिहार्थदृष्टये[4] यत्रेदमादर्श इवाऽवभासते॥ ४१॥**

---

1. A, B, omit गुण 2. M, Ma इज्य 3. M, Ma वर्य 4. A, B, G, I, J, T °ति हा

**तेषामहं पादसरोजरेणुमार्या वहेयाधिकिरीट[1]मायुः।**

**यं नित्यदा बिभ्रत आशुपापं [2]नश्यत्यमुं सर्वगुणा भजन्ति ॥ ४२ ॥**

**गुणाऽऽ[3]लयं शीलधनं कृतज्ञं [4]श्रद्धाश्रयं संवृणुते नु सम्पदः।**

**प्रसीद[5]तां ब्रह्मकुलं गवां च जनार्दनः सानुचरश्च मह्यम् ॥ ४३ ॥**

## मैत्रेय उवाच

**इति ब्रुवाणं नृपतिं पितृदेव द्विजातयः।**

**तुष्टुवु हृष्टमनसः साधुवादेन साधवः ॥ ४४ ॥**

**श्रीध०** हरेरपि तदेव परं मुख मित्याह - **अश्नातीति**। इज्यानां पूज्याना मिन्द्रादीनां नामभिः यस्य [6-]ब्रह्मकुलस्य[-6] मुखे श्रद्धया हुतं हविः अनन्तो यथाऽश्नाति तथा चेतनया [7-]बहिष्कृते[-7] रहिते हुताशने हुतं नाश्नाति। कैर्हुत मश्नाति? तत्त्वकोविदैः सर्वदेवमय श्चैतन्यमूर्ति रनन्त इति तत्त्वं विद्वद्भिः। कुत एवम्भूतोऽसौ तत्राह। पारमहंस्यं ज्ञानं तत्परानर्हन्त्यधिकुर्वन्तीति पारमहंस्यपर्याः ता गावो वाचो यस्मिन्, उपनिषद्भिः ज्ञानघनत्वेनोक्त इत्यर्थः। यद्वा परमहंसानां ज्ञाननिष्ठानां गम्यः पारमहंस्यः। परितः [8][9]न गच्छन्ति गावो [10]इन्द्रियाणि यस्मात्स पर्यगु रिन्द्रियनियन्ता स चासौ स च पारमहंस्य पर्यगुः ज्ञानरूपः सर्वान्तर्यामीत्यर्थः ॥ ४० ॥

न केवलं चेतनत्वेन हुताशना द्विशेषः, किन्तु वेदज्ञानादपि इत्याह- **यदिति**। यदित्यव्ययम्। ये ब्रह्म वेदं नित्यं बिभ्रति तेषा मित्युत्तरेणाऽन्वयः। मङ्गलं नाम "प्रशस्ताचरणं नित्य मप्रशस्तस्य वर्जनम्। एतद्धिमङ्गलं प्रोक्त मृषिभि[11] स्तत्त्वदर्शिभिः" ॥ मौन मध्ययन विरोधिवार्तात्यागः [12-]संयमो दमः[-12] तैः समाधिना चित्तस्थैर्येण च [13]किमर्थम् अर्थदृष्टये [14-]अध्ययनस्य अर्थ ज्ञानपर्यवसायित्वात्[-14] वेदार्थमपि विचारयन्तीत्यर्थः। यत्र वेदे [15-]इदं विश्व मवभासते-यथा[-15] [16-]आदर्शे[-16] मुखम्। ह स्फुटम् ॥ ४१ ॥

**तेषामिति**। हे आर्या [17-]आ[-17] आयुः यावज्जीवम् अधिकिरीटं मुकुटस्योपरि वहेयेति प्रार्थनायां लिङ्। यं रेणुम् ॥ ४२ ॥

गुणभजनस्य फल माह- **गुणेति**। गुणायन मन्वनु सम्पदः संवृणते सम्यग्भज[18]न्ति। तस्मा त्[19-]प्रसीदतां[-19] प्रसीदतु [20-]ब्रह्मकुलं[-20] गवां च कुलम् ॥ ४३,४४ ॥

---

1. M, Ma आयुः 2. Ms नङ्क्ष्यत्यमुं 3. A, B, G, I, J, Ms, T °ऽयनं 4. A, B, G, I, J, T, W वृ° 5. V °तु 6--6. B, J, V, Va omit 7--7. A, B, J, Va omit 8. V omits न 9. V adds अयन्ति 10. A, B, J, Va वाचः 11. V °मुनिभिः 12--12. B, J, V, Va omit 13. B, J, V, Va omit किमर्थम् 14--14. B, J, V, Va omit 15--15. V omits 16-16. B, J, V, Va omit 17--17. V omits 18. V °न्ते 19--19. V omits 20--20. A, B, J, Va omits

वीर० ननु "अग्निमुखा वै देवाः" इति देवाना मग्निमुखत्वश्रवणात् अग्नौ हुत मेव हविर्भुगन्तरात्मभूत परमात्म प्रीतये भविष्यति। तत्राह- अश्नातीति। सत्यमग्नि रपि तन्मुखमिति, तथाऽपि तत्त्वकोविदैः ब्राह्मणानां भगवत्प्रियतमशरीर त्वं जानद्भिः "न ब्राह्मणान्मे दयितं रूप मेतच्चतुर्भुजम्" (भाग. 10-86-54) इति भगवद्वचनात्। इज्यनामभिः आराध्येन्द्रादिनामभिः यस्य ब्राह्मणस्य मुखे श्रद्धया हुतं हवि रनन्तो भगवान् यथा अश्नाति, तथा चेतनया [1-]बहिष्कृते[-1] रहिते हुताशने अग्नौ हुतं नाश्नाति कुत एवम्भूतोऽसौ तत्राह- पारमहंस्यपर्यगुः, परमहंसा भगवदुपासकाः तेषां भावः कर्म वा पारमहंस्यं, ज्ञाननिष्ठेति यावत्। यद्वा चतुर्वर्णादित्वात् स्वार्थेष्यञ्, परमहंसा एव पारमहंस्याः, तान् परित्यज्य न गच्छति [2]अगुः। गाङ् गता वित्यस्मान्नञ् [3]पूर्वात् "कुर्भ्रश्चे" त्यौणादिक सूत्रे प्राक् प्रत्ययनिर्देशात् धात्वन्तरादपि कुप्रत्ययस्याभ्युपगमात् कुप्रत्यये "आतो लोप इटि च" (अष्टा.6-4-64) इत्यालोपः। न च तत्राऽपि सन्वद्भावस्याऽपि विधानात् द्वित्वापत्तिः, बहुल ग्रहणा त्तदभावात्। यद्वा मृगय्वादेराकृतिगणत्वात् कुप्रत्ययः। "प्रियो हि ज्ञानिनोत्यर्थ महं स च मम प्रियः।" (भ.गी. 7-17) "ज्ञानीत्वात्मैव मे मतम्" (भ.गी. 7-18) इति [4]भगवदुक्तरीत्या निरतिशयप्रीतिविषयान् परमहंसान् अत्यादरेणावेक्षमाणस्तत्रैव नित्यं सन्निहित इति तस्मिन् दत्तं साक्षात् स्वमुखे न्यस्तमिव भुङ्क्त इति भावः॥ ४०॥

न केवलं चेतनत्वेन हुताशना द्विशेषः, किन्तु, वेद तदर्थ ज्ञानानुष्ठानादिनापीत्याह - यदिति। यद्ब्रह्मकुलं विरजं रागाद्यपेतं भ्रमप्रमादादि पुरुषदोष विनिर्मुक्तं च सनातन मनादि ब्रह्म परं ब्रह्म तत्स्वरूपप्रकाशकं वेदं च श्रद्धा उपासनाया मध्ययनाध्यापन जपपारायणादिषु त्वरा [5]तपः उपासनोपयुक्त ज्ञान कर्म योगः। अध्ययनाद्युपयुक्तकाण्डव्रतादि श्च कर्म योगस्य कृच्छ्रादि-रूपानशनादिगर्भत्वा त्तपश्शब्देनाभिधानं युक्तम्। मङ्गलं विशुद्धाचारः मौनं वाङ्नियमः आरम्भणसंशीलनं च संयमः ध्यानोपयुक्तशमदमादिः अध्ययना दुपयुक्तकरणनियमश्च समाधिना ध्यानेन धारणया च अर्थदृष्टये अर्थः पुरुषार्थरूपं ब्रह्म अभिधेयं यज्ञोपासना श्च तद्दृष्टये तत्साक्षात्काराय [6-]तज्ज्ञानाय[-6] च इहा स्मिंल्लोके बिभ्र द्बिभ्राणं यत् ब्राह्मणकुलम्। पुन र्ब्रह्म विशिनष्टि- यत्र ब्रह्मणि परस्मिन् वेदे च इदं विश्वं परमात्मस्वरूपादिकं च आदर्श इव [7-]दर्पण इव[-7] अवभासते प्रकाशते॥ ४१॥

तेषां ब्राह्मणानां पादसरोजरेणुं हे आर्याः! आयुः आ आयुः इत्याङ्प्रश्लेषोऽत्र बोध्यः, यावज्जीवमित्यर्थः। अधिकिरीटं मुकुटोपरि वहेयेति प्रार्थनायां लिङ्; किं तद्वहन साध्यं तत्राह- यं ब्राह्मण पादसरोजरेणुं नित्यदा बिभ्रतः वहतः पुरुषस्य पाप माशु [8]नश्यति अमुं वहन्तं सर्वगुणा कल्याणगुणाः भजन्ति आश्रयन्ते॥ ४२॥

---

1--1. A, B, T omit 2. A, B, T add तैः परितो गीयत इति वा। 3. A, B, T add गै-शब्दे इत्यस्माद्वा। 4. A, B, T °द्गीतोक्त 5. A,B,T omit तपः 6--6. A, B, T तदाराधनाय 7--7. A, B, T omit 8. A, B, T नङ्क्ष्यति

तं च गुणालयं शुभगुणाश्रयं शील मेव धनं यस्य तं, कृत मुपकारं जानातीति कृतज्ञं, वृद्धान् ज्ञानाधिकान् आश्रयत इति तं, सर्वाः सम्पदः संवृणते, वृणते र्लट्। "आत्मने पदेष्वनतः" (अष्टा.3-1-54) इति झस्यादादेशः, "श्नाभ्यस्तयो रातः" (अष्टा. 6-4-112) इत्यालोपः। सम्यक् भजन्ते उपसंहरन्ति। ब्रह्मकुलं द्विजकुलं गवां च कुलं सानुचरः सभक्तः भगवां श्च मह्यं प्रसीदताम्॥ ४३॥

एवं वदन्तं नृपतिं पृथुं पित्रादयः साधवः गुणज्ञास्तुष्टमनसः साधुवादेन साधु साध्विति वादेन तुष्टुवुः स्तुतवन्तः॥ ४४॥

**विज०** इतोऽपि ब्रह्मकुलसेवा कर्तव्येत्याह- **अश्नातीति**। भगवत्तत्त्वकोविदैः पुरुषै रीड्यस्य हरे र्नामभि र्यन्मुखे श्रद्धयाहुत मनन्तो यथाऽश्नाति तथा चेतनया बहिष्कृते जडे हुताशने हुतं नाश्नातीत्यन्वयः। अनन्त इत्यनेन न केवलमात्रं फलं, किन्तु अनन्त मेवेति ध्वनयति। अनुनयार्थः खलु शब्दः। वा इत्यनेन नाऽहं तथाऽद्मीति प्रसिद्धिं स्मारयति। ब्राह्मणेष्वपि यतिमुखासनेन हरे र्विशेषत स्तृप्ति रित्यभिप्रेत्याह - **पारमहंस्येति**। पारमहंस्यैः परमहंसाश्रमस्थै र्वर्या वरणीया गावो यस्य स पारमहंस्यवर्यगुः। त एव तद्वचनाभिप्रायं विदित्वा श्रद्धयाऽनुष्ठातार इत्यर्थः। यद्वा परमहंसविषया वर्या मनोहरा गावो यस्य स तथा। यती नधिकं स्तौतीति तेषामेव तत्त्वज्ञानाधिक्यादित्यर्थः। चित्रगुशब्दवदयं शब्दः॥ ४०॥

नन्वग्नित आधिक्ये चेतनावत्त्वं प्रयोजकं चे दवैदिकाना माराधनपात्रत्वं स्या दित्याशङ्क्य ब्रह्मकुलस्य वैशिष्ट्यमाह- **यद्ब्रह्मेति**। अत्र "यावद्ब्रह्माधिष्ठितं तावती वाक्" इति श्रुतिः। वेदस्य पर ब्रह्मणश्च लक्षणसाम्यात् द्वय मप्येकोक्त्या वक्ति। यद्ब्राह्मणकुलं नित्यत्वादि गुणविशिष्टब्रह्म वेदं हरे स्तत्त्वं च बिभ्रत् बिभर्ति। तद्धारणे सामर्थ्यं वक्ति - श्रद्धेति। "आचारहीनं न पुनन्ति वेदाः" (वसिष्ठस्मृतिः 6-3) इति वचनम्। मङ्गलं पुण्यं संयमो दमः, समाधि रेकाग्रता। किमर्थमित्यत उक्तमर्थसिद्धय इति। पुरुषार्थोपयोगीतरज्ञानप्रयासोऽपि न कार्य इत्याह- **यत्रेति**। यत्र ब्रह्मणि श्रीनारायणे इदं जगत् आदर्शेदर्पण इवावभाति। वेदे चेदं पुरुषार्थचतुष्टयं ज्ञायते। यद्वा यत्र ब्रह्मकुले इद मुक्तं ब्रह्मद्वयं दर्पण इवावभाति॥ ४१॥

एवं ब्रह्मकुल मभिष्ट्यात्मक्रियोपदेशस्तत्सेवा यावदायुः कर्तव्येति विधत्ते- **तेषामिति**। हे आर्याः! तत्त्वज्ञानोत्पत्तौ प्रथमसाधनं पापप्रणाशः। सोऽप्यनेन स्यादित्याशयेनाह- यं नित्यदेति। उत्तरफल माह - **अमुमिति** अमुं पुरुषम्॥ ४२॥

एतदेव विशिनष्टि- **गुणालयमिति**। सम्पदो गुणालयत्वादिविशिष्टं पुरुष मनुसंवृणुते इत्यन्वयः। संवृणुत इति पाठे सं वृण्वत इति व्याख्येयम्। यं नित्यसम्बन्धनिषेवयेत्यादौ प्रस्तुतो जनार्दनः पारमहंस्यवर्यगुरित्यनेन ध्वनिता गावश्च ब्रह्मकुलं च प्रसीदत्विति उपसंहरति प्रसीदता मिति। ब्रह्मकुलसेवावद्गोकुलसेवा ब्रह्मादि परिवृत श्रीजनार्दनसेवा च यथा शास्त्रविहितं मुमुक्षुणा कर्तव्येत्यतो वाह प्रसीदता मिति॥ ४३॥

इदानीं मैत्रेयः पृथूक्ता वविप्रतिपत्तिः सर्वस्याऽभूदिति वक्ति - इतीति। साधुवादेन निर्दोषवाक्येन ॥ ४४ ॥

पुत्रेण जयते लोकान[1]िति सत्यवती श्रुतिः।
ब्रह्मदण्डहतः पापो यद्वेनोऽत्यतरत्तमः ॥ ४५ ॥

हिरण्यकशिपु श्चाऽपि भगव न्निन्दया तमः ।
विविक्षु रत्यगा त्सूनोः प्रह्लादस्यानुभावतः॥ ४६ ॥

वीरवर्य पित[2]ः ! पृथ्व्याः समाः सञ्जीव शाश्वतीः ।
यस्येदृश्यच्युते भक्तिः सर्वलोकैक भर्तरि ॥ ४७ ॥

अहो वयं ह्य[3]द्य पवित्रकीर्ते[4] त्वयैव नाथेन मुकुन्दनाथाः ।
य[5] उत्तमश्लोकतमस्य विष्णो र्ब्रह्मण्यदेवस्य कथां व्यनक्ति[6] ॥ ४८ ॥

नात्यद्भुत[7] मिदं नाथ तव[8] जीव्यानुशासनम् ।
प्रजानुरागो महतां प्रकृतिः करुणात्मनाम् ॥ ४९ ॥

अद्य न स्तमसः पारस्त्वयोपासादितः प्रभो ।
भ्राम्यतां नष्टदृष्टीनां कर्मभि र्दैवसंज्ञितैः ॥ ५० ॥

नमो विवृद्धसत्त्वा[9]य पुरुषाय महीयसे ।
यो ब्रह्मक्षत्र माविश्य बिभर्तीदं स्वतेजसा ॥ ५१ ॥

इति श्रीमद्भागवते महापुराणे अष्टादश साहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
चतुर्थस्कन्धे एकविंशोऽध्यायः ॥ २१ ॥

---

1. M, Ma लोक इति 2. A, B, G, I, J, M, Ma, Ms, T पितः 3. V ह्यद्य; W स्माऽद्य 4. Ms कीर्तेः 5. M, Ma, Ms यदुत्तम
6. M, Ma, Ms °क्ति 7. M, Ma, Ms °न्तिक° 8. A, B, G, I, J, T, W तवाजी° 9. W सत्याय

**श्रीध.** साधुवाद माह - **पुत्रेणेति** षड्भिः। यद्यतो वेनोऽपि तमो नरक मत्यरदतिततार ॥ ४५,४६,४७॥

**अहो** इति मुकुन्दनाथाः स्म त्वन्नाथत्वमेव मुकुन्दनाथत्वे पर्यवसित मित्यर्थः। तत्र हेतु र्य इति ॥ ४८॥

**नेति**। [1-]आजीविना[-1] सेवकानां [2-]आ सम्यगनु[-2] शासनम्, प्रजास्वनुरागःप्रकृतिः स्वभावः ॥ ४९॥

**अद्येति**। उपासादितः [3]समीपं प्रापितः कर्मभि र्भ्राम्यताम् ॥ ५०॥

ईश्वरदृष्टया विप्रादयोऽपि प्रणमन्ति **नम** इति। ब्रह्माविश्य ब्राह्मणजाति मधिष्ठाय क्षत्रं [4]क्षत्रियं बिभर्ति। क्षत्रं चाऽविश्य ब्रह्म बिभर्ति, तदुभयंचा विश्येदं विश्वं बिभर्ति ॥ ५२॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्री श्रीधरस्वामि विरचितायां भावार्थदीपिकायां

व्याख्यायां एकविंशोऽध्यायः

**वीर.** स्तुति मेवाह **पुत्रेणेति**। पुत्रेण लोकान् पुण्यलोकान् पिता जयति साधयतीति श्रुतिः जनश्रुतेः सत्यवती अबाधिता, पुत्रेणेति पुत्रशब्दावयवार्थ विषयभूतेनेत्यर्थः। पुं (पुत्) संज्ञका न्नरकात् त्रायते इति। हि पुत्रशब्दं निदर्शयन्ति। यत् यस्मा द्वेनोऽपि तमः नरकम् अतरत् ॥४५॥

तथा हिरण्यकशिपु रपि भगवन्निन्दया तमो विविक्षुः प्रवेशमाशङ्कितः "आशङ्कायां सन् वक्तव्यः,, (अष्टा.6-4-17 वार्तिकम्) इति सन्नन्तात् "सनाशंसभिक्षउः,, (अष्टा.3-2-168) इत्युः, सूनोः प्रह्लादस्यानुभावतः प्रभावात् तमः नरकं अत्यगात् अतिक्रम्य भगवन्त मगादित्यर्थः ॥ ४६॥

तस्माद्धे वीरश्रेष्ठ! पृथ्व्याः पति स्त्वं शाश्वतीः समाः संवत्सरान् सञ्जीव। "कालाध्वनोरत्यन्तसंयोगे,, (अष्टा.2-3-5) इति द्वितीया। यस्य तव सर्वलोकाना मेकस्मि" न्नद्वितीये भर्तर्यच्युते इदृशी भक्ति रस्ति ॥ ४७॥

हे पवित्रकीर्ते! वयं त्वयैव नाथेन मुकुन्दनाथाः त्वन्नाथत्व मेवामस्माकं मुकुन्दनाथत्वे पर्यवसित मित्यर्थः। कुतः? यो भवान् ब्रह्मण्य देवस्य उत्तमश्लोकस्य विष्णोः कथां व्यनक्ति प्रकाशयति ॥ ४८॥

हे नाथ! तव आजीव्यानुशासनं राजान मजीवन्ति उपजीवन्तिमाजीव्याः तेषा मस्माकम् अनुशासनमिति यदिदं नाऽत्यद्भुतं, कुतः? महात्मनां करुणात्मनां कृपास्वभावानां प्रजास्वनुरागः प्रकृति : स्वभावः ॥ ४९॥

---

1--1. V जीव्यानां 2--2. V omits 3. A, B, J, Va omits समीपं 4. V °यान्

हे प्रभो ! दैवसंज्ञितैः दैवापरपर्यायैः कर्मभिः भ्रमतां संसरतां अत एव नष्टदृष्टीनां नोऽस्माकं अधुना त्वया तमसः नरकस्य पार स्तीर मुपासादितः प्रापितः ॥ ५० ॥

ईश्वरदृष्ट्या प्रणमन्ति नम इति । ब्राह्मणजाति मधिष्ठाय[1] यः क्षत्रं बिभर्ति, क्षत्र माविश्य ब्रह्मकुलं बिभर्ति, तदुभय माविश्य इदं विश्वं बिभर्ति, तस्मै भरणोपयुक्तगुणमाह विवृद्धसत्त्वाय रजस्तमोभ्या मनभिभूतसत्त्वप्रचुराय, अत एव महीयसे पुरूषाय[2] परमपुरुषविभूतिभूताय तुभ्यं नमः ॥ ५१ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्री वीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां एकविंशोऽध्यायः ॥ २१ ॥

**विज.** सूचितं स्पष्टयति स- **पुत्रेणेति** । ''सोऽयं मनुष्य लोकः पुत्रेणैवजय्यः ,,(बृह.उ.1-5-16) इत्यादिक श्रौतमपि दृष्टचरित मित्याहु रित्याह - **ब्रह्मदण्डेति** । ''शश्वत्पुत्रेण पितरोऽत्यायन्बहुलं तमः, इति श्रुति रत्र प्रमाणम् । पापस्य वेनस्य तम स्तरणं सत्यं चे त्सर्वेऽपि मुक्तिप्राप्तियोग्या इत्यायातं, ननु नारकी कोऽपीति चेन्न - वेन शब्दस्य तामसराजस सात्विकभेदेन अभिधेयत्रित्वस्य प्रामाणिकत्वात् । ''वेनस्थो राजसे जीवः पृथुना स्वर्गतिं गतः । स्वयन्तु तम एवाऽऽप सात्विकः पृथुता मगात् ,, (ब्रह्माण्डपुराणे) इति स्मृतेः । तथा च वाक्य योजना ब्रह्मदण्डहतो विप्रशापहतः पापो दैत्यो नाम्ना वेन स्तमोऽतरदिति यत्तदिति प्रशंसामात्रं न तु सत्यं, सत्यं तु सर्वस्मा दत्यधिकं दुःखोदर्कं तमोऽत्यतर द गच्छत् । तृ - प्लवनतरणयो रिति धातोः प्लु-गताविति च । ''अति स्या दधिकार्थोक्तौ प्रशंसाया मतिक्रमे'' (वैज.को.8-7-15) इत्याभिधानात् । यत्तामसो वेनः सर्वदुःखकरो दैत्यःसोऽत्यतग त्सुखभोग लोक मतिक्रम्यागच्छ दन्धन्तमः इति शेषः । ब्राह्मणानां विप्राणां दण्डो राजयोग्यशिक्षा तया हतो गतः । ''दण्डोऽस्त्री शासने राज्ञाम्'' (वैज.को.6-5-38) इति यादवः । हनहिंसागत्यो रिति धातुः । रजोगुणपानं पातीति वा पापो राजसो वेन स्तमोऽत्यतरत् । तमोऽतिक्रम्य स्वर्गतिं गतः । पृथु गुणेने ति शेषः । यदतरत् तर्तुमशक्यं तमोगुण इति शेषः । तदतिक्रम्य वर्तमानं सत्त्वं वेत्तीति ज्ञानांशो वेनोऽप्य धिकार्थं भक्त्यादि गुणविस्ताराभिधेयं पृथुत्व मतर दाप्नोदिति । [3-]पापानूपाति[-3] रक्षतीति वा पिबति संहरतीति वा पापः। ब्रह्म वेद स्तदुक्तो दण्डो हिंसा यस्य पशोः स ब्रह्म दण्डः तं पशुं हन्तीति नान्य मविहितमिति ब्रह्मदण्डहतः । ''दण्डोऽस्त्री शासने राज्ञां हिंसायां लगुडे दमे'' (वैज.को.6-5-38) इति च ॥ ४५ ॥

---

1. A, B. T omit यः  2. A, B, T omit पुरूषाय  3--3. M, Ma पापान (न्न) पाति न र°

हिरण्यकशिपु रपि सनकादिशप्तो जयः श्रीहरिपार्षद स्तस्य तमोऽतिगमनं युक्त मन्यस्य तदाविष्टस्यासुरस्य तमोऽतिगमन मौपचारिक मर्थवादवत् ॥ ४६ ॥

एवं तृप्ताः सर्वे स्वमनोगतं विज्ञापयन्ति - **वीरवर्येति**। हे पृथ्व्याः पितः! पातृत्वा पितृत्वम्। ननु त्वयैव नाथेने त्युत्तरश्लोके पृथावपि भक्तेः कर्तव्यत्वं प्रतीयते, अतः[1] कथं भगवत्येव भक्तिः कर्तव्येति चेदुच्यते तत्र पुथुस्थपरमेश्वर मपेक्ष्यैव-कारेणान्ययोगव्यवच्छेदः क्रियते। "यो ब्रह्मक्षत्र माविश्य,,(भाग.4-21-52) इत्युत्तरत्र पृथुस्थत्व प्रतीतेः ॥ ४७ ॥

मुकुन्दो नाथो येषां ते तथा। अनेनाऽप्युक्तशङ्का पर्यहारि **व्यनङ्क्षि**[2]। अस्माभिरपृष्टा मपि कथां व्यक्तां करोषि ॥४८॥

तव भृत्याना मस्माक मनुशासनं नैकान्त नियत मित्याहु रित्याह - **नाऽत्यन्तिक**मिति ॥४९॥

उपासादितः प्रापितः। भ्राम्यता मेकत्राव स्थान मलभमानानाम् ॥५०॥

अहो वय मित्यत्रान्तर्याम्यपेक्षये त्युक्तं, तत्त्व ज्ञान मेषां सिद्धमिति भावेन तत्सिद्धान्तं प्रकटयति - **नम** इति। यो विष्णुः क्षत्रं राजकुलोत्पन्नं पृथु माविश्येदं ब्रह्म ब्राह्मणकुलं बिभर्तीत्यन्वयः ॥५१॥

इति श्रीमद्भागवते चतुर्थस्कन्धे
श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां
टीकायां एकविंशोऽध्यायः ॥ २१ ॥

---

1. A, B अथ 2. A, B व्यनक्षि

# द्वाविंशोऽध्यायः

## मैत्रेय उवाच

जनेषु प्रगृणत्स्वेवं पृथुं पृथुलविक्रमम्।
तत्रो पजग्मु र्मुनयश्चत्वारः सूर्यवर्चसः ॥ १ ॥

तांस्तु[1] सिद्धेश्वरान् राजा व्योम्नोऽवतरतोऽर्चिषा।
लोकानपापान् कुर्वत्या[2] सानुगोऽचष्ट लक्षितान् ॥ २ ॥

तद्दर्शनोद्गतान्[3] प्राणान् प्रत्यादित्सुरिवोत्थितः।
ससदस्यानुगो वैन्यः इन्द्रियेशो गुणानिव ॥ ३ ॥

गौरवाद्यन्त्रितः[4] सभ्यः[5] प्रश्रयानतकन्धरः।
विधिवत्पूजयाञ्चक्रे गृहीताध्यर्हणासनान्[6] ॥ ४ ॥

तत्पादशौचसलिलै र्मार्जितालकबन्धनः।
तत्र शीलवतां वृत्तमाचरन्मानयन्निव[7] ॥ ५ ॥

### श्री श्रीधरस्वामिविरचिता भावार्थदीपिका

द्वाविंशे तु परं ज्ञानं पृथवे हरिशासनात्। सनत्कुमारो भगवानुपादिशदितीर्यते ॥

[8-]जनेष्विति।[-8] मुनयः सनकादयः ॥ १ ॥

तानिति। अर्चिषा लक्षितान् सनकादय एत[9] इति ज्ञापितान्। अचष्टापश्यत् ॥२॥

तदिति। तेषां दर्शनेन उद्गतान् प्राणान्[10] प्राप्तुमिच्छुरिव। अयं भावः - "ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति[11]। त्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते" (मनु.स्मृ.2-120) इति स्मृतेः। प्राणास्तावत्तत्तेजसाक्षिप्तास्तान्प्रत्युद्गच्छन्ति अतः

1. W तान्स 2. M, Ma, V, W कुर्वन्त्या; I, Ms कुर्वाणान् 3. M, Ma °तप्रा° 4. M, Ma °द्यन्वितः 5. W सद्यः 6. M, Ma, Ms °र्घ्या°
7. M, Ma वृत्ति° 8--8. V omits 9. A, B, J, Va omit एत 10. A, Va omit प्राणान् 11. V आगतो

[1-]स्वयमनुद्गच्छतः[1] प्राणहानिः स्यादिति भयादिव ससम्भ्रमं प्रत्युद्गमं चकारेति सह सदस्यैरनुगैश्च वर्तमान इन्द्रियेशो जीवो गुणान् गन्धादीन् प्रति यथोद्गच्छतीत्यौ त्सुक्ये दृष्टान्तः ॥ ३ ॥

**गौरवादिति**। यन्त्रितो वशीकृतः गृहीत मध्यर्हमणमर्ध्यमासनं च यैस्तान् ॥४॥

**तत्पादेति**। मार्जितं क्षालितम् अलकबन्धनं [2-]केशबन्धनं[-2] यस्य मानयन्निव स्वयमाचचार[3] ॥५॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

यदुक्तं भगवता "ह्रस्वेन कालेन गृहोपयातान् द्रष्टासि सिद्धान्" (भग.4-20-15) इति। कुमारागमनं तैश्च तत्त्वोपदेश इति तद्विस्तरेण वर्णयितुं कुमारागमनमाह मुनिः - **जनेष्विति**। विपुलपराक्रमं पृथुं प्रति एवं जनेषु प्रगृणत्सु वदत्सु सत्सु सूर्यस्येव वर्चो येषां ते चत्वारो मुनयः तत्रोपजग्मुरित्यर्थः ॥ १ ॥

लोकानपापान् कुर्वत्या[4] अर्चिषा लक्षितान् सनकादय इति ज्ञापितान्[5] व्योम्नः आकाशादवरोहतः तान् सिद्धेश्वरान् सानुगः सभृत्यो राजा अचष्ट अद्राक्षीत् ॥ २ ॥

तेषां दर्शनेनोद्गतान् प्राणान् पुनः प्राप्तुमिच्छुरिव। "ऊर्ध्वं प्राणा ह्युत्क्रमन्ति यूनः स्थविर आयति। प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते" (मनु.स्मृ 2-120) इत्ययमर्थः सूचितः। प्राणास्तावत्तत्तेजसा क्षिप्ताः प्रत्युद्गच्छन्ति स्वयमननुगच्छतः प्राणहानिः स्यदिति भयादिव ससम्भ्रमः[6] सदस्यै रनुगैश्च यथा इन्द्रियेशः क्षेत्रज्ञः गुणान् शब्दादीन् उद्गच्छातीत्यौत्सुक्ये दृष्टान्तः। उत्थितः ॥ ३ ॥

गौरवात् यन्त्रितः वशीकृतः सद्यः प्रश्रयेण विनयेन (आ) नता कन्धरा यस्य स गृहीतमभ्यर्हणम् अर्घ्यमासनं च यैः तान् यथाविधि पूजयाञ्चक्रे ॥ ४ ॥

तत्पादानां शौचैः सलिलैः मार्जितं क्षालितम् अलकबन्धनं केशबन्धनं यस्य, शीलवतां वृत्तं मानयन्निव स्वयमाचरन् ॥ ५ ॥

## श्री विजयध्वजतीर्थ कृता पदरत्नावली

पृथुसनत्कुमार संवादापदेशेन सर्वस्मात् भिन्नमनुग्रहमन्तरेण दुर्ज्ञेयं भगवत्तत्वं निरूप्यते अस्मिन्नध्याये । तत्रादौ सनत्कुमारादिमुनीनामागतिं वक्ति - **जनेष्विति** ॥ १ ॥

1--1. B omits 2--2. A, B, J, Va omit 3. B, J, V, Va चचार 4. A, B, T कुर्वन्त्या 5. A, B, T लक्षितान् 6. A, B, T ससम्भ्रमं

अर्चिषा लक्षितान् लक्षणतो ज्ञातान् अचष्ट अद्राक्षीत् ॥ २ ॥

तेषां दर्शनेनोद्गतान् प्राणान् प्रदातुमिच्छुरिव । अयं भावः- "ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आगते (आयति) । प्रत्युत्थाना भिवादाभ्यां पुनस्तान् प्रतिपद्यते "(मनु 2-120)[1] इति स्मृतेः, प्राणास्तावत् तेजसा क्षिप्तास्तान् प्रत्यागच्छन्ति, अतः स्वयमनभिगच्छतः प्राणहानिः स्यादिति भयादिव ससम्भ्रमः प्रत्युद्गमनं चकारेति । इन्द्रियेशो जीवोगुणानिन्द्रियाणीव ॥ ३-५ ॥

**हाटकासन आसीनान् स्वधिष्ण्येष्विव पावकान् ।**
**श्रद्धा संयम[2]संयुक्तः प्रीतः प्राह भवाग्रजान् ॥ ६ ॥**

## पृथुरुवाच

**अहो आचरितं [3-]किं मे[-3] मङ्गलं मङ्गलायनाः ।**
**यस्य वो दर्शनं ह्यासीत् दुर्दर्शानां [4-]च योगिभिः[-4] ॥ ७ ॥**

**किं तस्य दुर्लभतर मिह लोके परत्र च ।**
**यस्य विप्राः प्रसीदन्ति शिवो विष्णुश्च सानुगः ॥ ८ ॥**

**नैव लक्षयते लोको लोकान् पर्यटतोऽपि यान् ।**
**यथा सर्वदृशं सर्व आत्मानं ये[5]ऽस्य हेतवः ॥ ९ ॥**

**अधना अपि ते धन्याः साधवो गृहमेधिनः ।**
**यद्गृहा ह्य[6]र्हवर्याम्बु तृण[7]भूमीश्वरा[8] वराः ॥ १० ॥**

**श्रीध. हाटकासन** इति। भवस्यापि अग्रजत्वेन मान्यान् । [9-]संयमः प्रश्रयः[-9] ॥ ६ ॥

प्रीतः प्राहेत्युक्तं तदेव प्रीतपूर्वकं वचनमाह **अहो** इति दशभिः । हे मङ्गलायनाः ! मङ्गलमयनं येषां ते । मया किं मङ्गलं [10]पुण्यमाचरितं, यस्य मे [11-]योगिभिरपि[-11] दुर्दर्शानां वो दर्शनमासीत् ॥ ७, ८ ॥

---

1. M. Ma श्रुतेः 2. M. Ma. Ms सम्पन्नः 3--3. M, Ma, Ms कृष्णे 4--4. M, Ma कुयोगिनः ; Ms कुयोगिभिः 5. W त्वस्य
6. M. Ma. Ms अर्ह 7. M, Ma. Ms भूमिसुवाग्धराः 8. W °पराः 9--9. B, J, V, Va omit 10. B, J, V, Va omit पुण्यं 11--11. V omits

दुर्दर्शत्वमेवाह - **नैवेति** । सर्वदृशमात्मानं यथा सर्वे दृश्या न लक्षयन्ते [1]येऽस्य विश्वस्य हेतवो महदादयो मन्वादयो वा । यद्वा, कथम्भूतान् ? येऽस्य सर्वदृगात्मदर्शनस्य हेतवस्तान्॥ ९ ॥

**अधना** इति । येषां साधूनां गृहा अर्हाणां पूज्यानां वर्या वरणीया : स्वीकारार्हा अम्ब्वादयो येषु तादृशाः । अम्बु च तृणं च भूमिश्च ईश्वरो गृहस्वामी चावरा भृत्यादयश्च ॥ १० ॥

**वीर.** हाटकासने स्वधिष्ण्ये वेदिकायां पावकानिव आसीनानुपविष्टान् श्रद्धासंयामभ्यां तद्वाक्यश्रवणत्वरातदुपयुक्तकरण नियमनाभ्यां संयुक्तः भवाग्रजान् रुद्रात्पूर्वजान् सनकादीन् प्राह ॥ ६ ॥

[2]उक्तिमेवाह - **अहो** इति दशभिः । हे मङ्गलायनाः ! मे मया किं मङ्गलं पुण्यम् अहो आचरितं कृतं, यतः यस्य मे योगिभिरपि दुर्दर्शानां दुःखेनापि द्रष्टुमशक्यानां वो युष्माकं दर्शनमासीत् । सुकृतमन्तरेण मादृशानां भवद्दर्शनं न सम्भाव्यम्[3] इत्यर्थः ॥ ७ ॥

किमस्मद्दर्शनसाध्यं तत्राह । यस्य पुंसः विप्रा भवादृशाः शिवो रुद्रो मङ्गलरूपो वा विष्णुश्च प्रसीदन्ति, तस्य इह परत्र वा लोके किं दुर्लभतरमस्ति सर्वं सुलभमेवेत्यर्थः ॥८॥

दुर्दर्शत्वमेवाह - **नैवेति** । लोकान् पर्यटतोऽपि यान् युष्मान् लोको नैव लक्षयते न पश्यति यथा सर्वदृशं सर्वज्ञमात्मानं [4-]परमात्मानम्[-4] अस्य विश्वस्य हेतुभूताः ब्रह्मादयः सर्वेऽपि न लक्षयन्ते तथेत्यर्थः । यस्य हेतव इति पाठे तु [5]हेतुभूताः ब्रह्मादयः सर्वे यस्य यत्सम्बन्धिनः यस्य शेषभूताः तं सर्वज्ञमात्मानं यथा न लक्षयन्ते तथेत्यर्थः ॥९॥

तद्दर्शनेन स्वस्य धन्यतामाविष्करोति **अधना** इति । गृहमेधिनः अधन्या अपि यदि साधवः तर्हि ते धन्या एव, हि यतः येषां गृहमेधिनां साधूनां गृहाः अर्हाः पूज्या भवादृशाः तैः वर्या वरणीयाः स्वीकार्याः, अम्बु जलं, तृणं, भूमिः, ईश्वरो गृहस्वामी अपरे गृहवासिनो भृत्यादयश्च येषु तथाभूता भवन्ति ॥ १० ॥

**विज.** हाटकासने सुवर्णपीठे स्वधिष्ण्येषु स्वस्थानेषु स्थितान् , संयमः प्रश्रयः, भवाग्रजान् शिवज्येष्ठान् तृतीयस्कन्धे हरात् पूर्वजातत्वोक्तेः । संसाराग्रजातत्वं तद्विरुद्धत्वा दुपेक्षणीयम् ॥ ६ ॥

संसारिणां सतां सन्दर्शनस्य दुर्लभत्वात् अतः पूर्वाचरितं मङ्गलं ममास्तीति ध्वनयन् विस्मयीकरोति **अहो** इति । कृष्णे कृष्णविषये ॥ ७ ॥

---

1. V omits ये 2. A, B, T उक्त° 3. A, B, T °ते 4--4. A, B, T omit 5. A, B, T हेतवः

नैतच्चित्रमित्याह - **किन्तस्येति**। अनुगेन प्राणेन सह वर्तत इति सानुगः ''कस्मिन्वहम्'' इति श्रुतिः ॥ ८ ॥

दुर्दर्शत्वमधिकदृष्टान्तत्वे नोपपादयति - **नैवेति**। लक्षयते लक्षणवत्तयापि भवद्विषयं ज्ञानं नाप्नोति। असम्भवपरिहाराय पर्यटत इति, सर्वो जनः सर्वदृशं साक्षित्वेन पश्यन्तमात्मानं परमात्मानं यथा न जानाति। ब्रह्मादीनां तद्विषयज्ञानसम्भवात् कथं सर्व इति सर्वं कवलीक्रियते इत्यत उक्तं य इति। ये च ब्रह्मादयोऽस्य जगतो हेतवः कारणभूताः तेऽपि न विदन्तीति। अत्रेदं तात्पर्यं - यथात्मानं स्वं हरिर्वेत्ति तथा न जानन्तीति। तदुक्तं - ''सर्वज्ञाश्च विरिञ्चाद्या न जानीयुर्हरिं परम्। हेतवो जगतोऽप्यस्य यथासौ वेद केशवः'' (तन्त्रसारे) इति। अनेन ''वेदाहमेतम्'' (पु.सू. 2-1) इत्यादेर्गतिरप्युक्ता भवति, दुष्टजनव्यामोहाय वा तद्विषयज्ञानस्य दुस्साध्यत्वज्ञापनाय वा अधिकदृष्टान्त प्रयोजनम्। किञ्च जगत्कारणतामाददानोऽयं हेतुशब्दो विरिञ्चादीनां सार्वज्ञ्यमप्याक्षिपन् न सर्वात्मना ज्ञानाभावो युक्त इति श्रीनारायणवत्तद्विषय ज्ञानाभाव एव उच्यत इति व्यनक्तीति ॥ ९ ॥

भवतां पुरुषेष्वनुग्राहकत्वे भगवद्भक्ति साम ग्रीमत्त्वमेव प्रयोजकं, न तु धनिकत्वादिकमित्याशयेनाह - **अधना अपीति**। अर्हवर्याः पूज्यश्रेष्ठाः तेभ्यो दत्तमम्बु च तृणं च भूमिश्च सुवाचश्चार्हवर्याम्बुतृणभूमि सुवाचस्ता धारयन्ति बिभ्रतीति तथोक्ताः ॥ १० ॥

**व्यालालय[1]द्रुमा [2]एतेऽप्यरिक्ताखिल सम्पदः।**
**यद्गृहास्तीर्थपादीय पादतीर्थविवर्जिताः ॥ ११ ॥**

**स्वागतं वो द्विजश्रेष्ठा यद्व्रतानि मुमुक्षवः।**
**चरन्ति श्रद्धया धीरा बाला एव बृहन्ति वै[3] ॥ १२ ॥**

**कच्चिन्नः कुशलं नाथा इन्द्रियार्थार्थवेदिनाम्।**
**व्यसनावाप एतस्मिन् पतितानां स्वकर्मभिः ॥ १३ ॥**

**भवत्सु कुशलप्रश्न आत्मारामेषु नेष्यते।**
**कुशलाकुशला यत्र न सन्ति मति वृत्तयः ॥ १४ ॥**

**तदहं कृतवि[4]स्रम्भः सुहृदो[5]ऽत्र तपस्विनाम्।**
**संपृच्छे भव एतस्मिन् क्षेमः केनाञ्जसा भवेत् ॥ १५ ।**

1. Ms °लयाः 2. A, B, G, I, J, T वै ते; M, Ma, Ms ह्येते 3. A, B, G, I, J, T च 4. A, B, G, I, J, M, Ma, T °श्र° 5. A, B, G, I, J, T °दो वस्त°

**श्रीध. व्यालेति।** व्यालानां [1-]दुष्टसर्पाणा[-1]मालया द्रुमा एव ते अरिक्ताः पूर्णा अखिलाः सम्पदो येषु तादृशा अपि [2]यद्गृहा ये गृहास्तीर्थपादीया वैष्णवास्तेषां पादतीर्थेन विवर्जिताः ॥ ११ ॥

**स्वागतमिति।** स्वागतं भद्रमागमनं जातम्। यद्यस्माद्बाला एव भवन्तो बृहन्ति व्रतानि चरन्ति। यद्वा येषां वो व्रतान्यन्ये बालाश्चरन्ति॥ १२ ॥

**कश्चिदिति।** [3-]इन्द्रियार्था विषया तानेवार्थं[-3] पुरुषार्थं ये वदन्ति तेषां नः [4-]कुशलं कच्चित्[-4] व्यसनानि [5]उप्यन्ते यस्मिन् तस्मिन् संसारे॥ १३ ॥

नन्वभ्यागतानां कुशलं [6]पृच्छ्यते लोके न त्वात्मनस्तत्राह - **भवत्स्विति**॥ १४ ॥

**तदिति।** तत्तस्मात् कृतविश्वासस्सन् तपस्विनां [7]सन्तप्तानां सुहृदो [8]वो युष्मान् पृच्छामि॥ १५ ॥

**वीर.** एवमन्वयमुखेन धन्यतामाविष्कृत्य व्यतिरेकमुखेनाप्याविष्करोति - **व्यालेति।** अरिक्ताखिल सम्पदः अरिक्तः पूर्णा अखिलाः सम्पदः येषु तादृशा अपि यद्गृहा गृहमेधिनां गृहाः यदि तीर्थपात् भगवान् तत्सम्बन्धिनः तीर्थपादीया भागवतास्तेषां पादतीर्थेन विवर्जिताः तर्हि एते गृहाः व्यालालयद्रुमाः सर्पावास चन्दनद्रुमप्रख्याः ॥ ११ ॥

एवमन्वयव्यतिरेकाभ्यां तदागमनेन स्वस्य धन्यतामभिधाय तेषां स्वागतप्रश्न पूर्वकं स्वाभाविकीं, धन्यतामाह - **स्वागतमिति।** हे द्विजश्रेष्ठाः ! वः [9]युष्माभिः स्वागतं कुशलमागतं, किं भवतामकुशलमस्तीत्यभिप्रायः। यत् यस्मात् बाला एव भवन्तः मुमुक्षवः, अत एव धीरा जितेन्द्रियाः सन्तः बृहन्ति व्रतानि चरन्ति। यद्वा येषां वो व्रतानि युष्माभिः दर्शितान्येवान्ये मुमुक्षवः बृहन्ति दीर्घकाल निर्वर्त्यानि निवृत्तिधर्मरूपव्रतानि चरन्ति॥ १२ ॥

काक्वा अभिप्रेतकुशलाभावमेव व्यङ्क्तं स्वस्य तावत् कुशलाभावं व्यनक्ति - **कच्चिदिति।** किमस्माकं कुशल मस्तीत्यर्थः, कथम्भूतानाम्? हे नाथाः ! इन्द्रियार्थान् शब्दादीनेवार्थान् पुरुषार्थरूपान् विदन्तीति तथा तेषाम्। अत एव यस्मिन्नुप्यन्ते बीजानि स आवापः क्षेत्रं व्यसनानामावापः संसारः तस्मिन् स्वकर्मभिः पतितानाम्॥ १३ ॥

नन्वभ्यागतानां नः कुशलं किं न पृच्छसि तत्राह - **भवत्स्विति।** भवत्सु कुशलप्रश्नः नेष्यते, तत्र हेतुः आत्मारामेषु

---

1--1. B, J, V, Va omit 2. V omits यद्गृहाः 3--3. V इन्दियार्थमेवार्थं 4--4. B, J, V, Va omit 5. A अवाप्यन्ते 6. B पृच्छन्ति 7. V सुतपसां 8. V omits वो 9. T °कं

ब्रह्मात्मकस्वात्मानुभवैकपरेषु। नन्[1] आत्मारामाणाम् अपि[2] कदाचिदकुशलसम्भावनया कुशलप्रश्न इष्यतां तत्राह। यत्र आत्मारामेषु कुशलाकुशल मति वृत्तयः एव न सन्ति कुशलाकुशल विषय चिन्तनरूपमति वृत्तयो हि सङ्गकामक्रोध सम्मोहादिजनन द्वारा सुखदुःखादिहेतवः। अतस्तासामेवाभावात् कुतो भवत्स्वकुशलसम्भावनेत्यर्थः। मतिवृत्तीनां च सङ्गादिद्वारा कुशलनिमित्तत्वं भगवता गीतम्- "ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते। सङ्गात्सञ्जायते कामः कामात् क्रोधोऽभिजायते। क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृति विभ्रमः। स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति" (भ.गी.2-62,63) इति॥ १४॥

तत्तस्मात् अहं कृतविश्वासस्सन् तपस्विनां तापत्रयातुराणामस्माकं सुहृदो युष्मान् एतस्मिन् संसारे वर्तमानस्य केन हेतुना क्षेमः सुखंमोक्ष इति यावत् अञ्जसासुखेन भवेदिति सम्पृच्छे[3]॥ १५॥

**विज.** तीर्थपादो विष्णुस्तस्य भक्ताः तीर्थपादीयास्तेषां पादतीर्थैर्वर्जिताः सम्पर्करहिताः, हिशब्दोयथाशब्दार्थे, यथा व्यालालया दुष्टसर्पाश्रया वृक्षा वर्ज्यास्तथा तादृग्गृहाः सम्पद्युक्तत्वेऽपि वर्ज्या इत्यर्थः॥ ११॥

किं बहुजल्पेनेति भावेन तदागमनं लालयति - **स्वागतमिति**। वो युष्माकं स्वागमनं सुष्ठु अस्माकं सुखहेतुत्वादिति शेषः, कथमस्मदागमनं सुखहेतुरत्राह यद्व्रतानीति। मुमुक्षवो धीराः श्रद्धया यद्व्रतानि चरन्ति ते यूयं वयो दर्शनेन बाला अपि बृहन्ति ज्ञानेन वर्धन्ते। ज्ञानवृद्धत्वादागमनं भद्रमित्यर्थः॥ १२॥

राजा स्वस्वागतवचनानन्तरं पृथुं प्रति तुभ्यं च स्वस्ति किमिति मुनिवचनात्पूर्वं स्वकुशलमाक्षिपति - **कच्चिदिति**। व्यसनबीजान्युप्यन्तेऽस्मिन्निति व्यसनावापः तस्मिन्नेतस्मिन् संसारे स्वकृतकर्मभिः पतितानां नः कुशलं कश्चित् किम् ? न किमपीत्यन्वयः। आत्मनो वा अनेन कुशलं पृच्छति अस्माकं कुशलं भविष्यति कच्चिदिति॥ १३॥

ननु अभ्यागतास्मत्कुशलप्रशंसामन्तरेण आत्मकुशलप्रश्नः कथं सङ्गाघरीतीति तत्राह - **भवत्स्विति**। इदं कुशलमकुशल मिति मतिवृत्तयो यत्र येषु भवत्सु न सन्ति अतो भवत्सुखप्रश्नो नेष्यते, कुतः आत्मना सह आरामो रमणं क्रीडा येषां ते तथा तेषु अतो भवत्सु कुशलप्रश्नांशा भावादौत्सुक्यादात्मकुशलप्रश्न इति भावः॥ १४॥

अस्तु तर्हि तव कुशलं भविष्यतीत्यभिमतं चेत् यतो वयमकुशलाब्धिमग्नास्तस्मादेतादृशानां केन प्रकारेण कुशलं स्यादिति तं प्रकारं पृच्छामीत्याह - **तदहमिति**। तपस्विनां सुहृदोऽत्र पूज्यान् भवे संसारे क्षेमः संसारोच्छेदलक्षणं मङ्गलम् अञ्जसा क्षिप्रं "स्तागझटित्यञ्जसाह्नाय" (अम.को.3.413) इत्यमरः॥ १५॥

---

1. W omits ननु 2. A, B, T omit अपि 3. A, B, T पृच्छामि

[1]व्यक्तमात्मवतामात्मा भगवानात्मभावनः ।
स्वानामनुग्रहायेमां सिद्धरूपी चरत्यजः ॥ १६ ॥

मैत्रेय उवाच

पृथोस्तत्सूक्तमाकर्ण्य सारं सुष्ठु मितं मधु ।
स्मयमान इव प्रीत्या कुमारः प्रत्युवाच ह ॥ १७ ॥

[2-]सनत्कुमार उवाच[-2]

साधु पृष्टं महाराज सर्वभूतहितात्मना ।
भवता विदुषा चापि साधूनां [3]गतिरीदृशी ॥ १८ ॥

सङ्गमः खलु साधूनामुभयेषां [4]च सम्मतः ।
[5]यत्सम्भाषणसम्प्रश्नः सर्वेषां वितनोति शम् ॥ १९ ॥

अस्त्येव राजन् भवतो मधुद्विषः पादार[6]विन्दस्य गुणानु[7]वादने।
रति[8-]स्सदा[-8] या विधुनोति नैष्ठिकी कामं कषायं मलमन्तरात्मनः ॥ २० ॥

श्रीध. न खल्वन्ययोगितुल्या यूयं किन्तु साक्षाद्भगवानेवेत्याह - व्यक्तमिति । व्यक्तं निश्चितमात्मवतां [9-]धीराणामात्मा[-9] तेषु आत्मत्वेन प्रकाशमानः आत्मानं भावयति प्रकाशयतीति तथा । [10-]अजः श्रीनारायण[-10] इमां पृथ्वीं चरति ॥ १६ ॥

पृथोरिति । सूक्तं शोभनं वचनम् । सारं न्याय्यम् । सुष्ठु गम्भीरार्थम् । मितमल्पाक्षरम् । मधु श्रोत्रप्रियम् । मुखप्रसत्त्या स्मयमान इव प्रतीयमानः ॥ १७ ॥

[11-]साध्विति । विदुषा जानतापि, ईदृशी[-11] परार्थैकपरा ॥ १८ ॥

स्यमपि पृथोः सङ्गममभिनन्दति - सङ्गम इति । उभयेषां वक्तॄणां श्रोतॄणां च येषां सम्भाषण सहितः सम्पन्नः सर्वेषां शं सुखं विस्वरयति ॥ १९ ॥

---

1. M, Ma, Ms व्यक्तं ह्यात्म॰ 2--2. W omits 3. A, B. G, I, J, T मति॰ 4. M, Ma सु 5. M, Ma सत्स॰ 6. M, Ma ॰विन्देऽस्य
7. M, Ma, Ms वादिनी 8. A, B, G, I, J, T ॰र्दुरापा 9--9. V omits 10--10. V omits 11--11. V omits

तदेवं सङ्गमं प्रश्नं चाभिनन्द्यानुवाद मुखेनैव मोक्षसाधनमुपदिशति - [1-]अस्त्थेवेति। गुणाना मनुवादने प्रश्नद्वारेणानुवाद[-1]प्रवर्तने [2]गुणश्रवण इत्यर्थः। आत्मनो मनसोन्तः अन्तस्थं कामात्मकं मलं विधुनोति कषायं धातुरागवदनिवर्त्यम्॥ २०॥

**वीर.** स्वभक्ताननुग्रहीतुं भगवानेव भवादृश रूपश्चरतीत्याह - **व्यक्तमिति**। आत्मवतां "प्रशंसायां मतुप्" (अष्टा.5-2-94 कारिका वार्तिकम्) प्रशस्तचित्तानां ज्ञानिनामात्मा निरतिशयप्रीतिविषयः प्रीतिमांश्च तथा हि गीतम् "प्रियो हि ज्ञानिनोऽत्यर्थ महं स च मम प्रियः" (भ.गी.7-17) इति। आत्मशब्देनात्मत्वप्रयुक्तं तदुभयं विवक्षितम्। आत्मा हि निरतिशयप्रीतिविषयः स्वशरीरे प्रीतिमांश्च, आत्मभावनः आत्मनः जीवान् भावयति स्वविषयज्ञान प्रदानादिना सत्तावतः करोतित्यात्मभावनः। स्वपरयाथात्म्य ज्ञानविधुरा हि जीवाःस्थावरपर्यन्तजन्मभिरसत्प्रायास्तानात्मवतः करोतीत्यर्थः। सिद्धाः ज्ञानिनः तद्रूपः तथा च गीतं भगवता - "ज्ञानीत्वात्मैव मे मतम्" (भ.गी.7-18) इति, अजो भगवान् स्वानां भक्तानामनुग्रहाय स्वाननुग्रहीतुमिमां पृथिवीं चरति, [3-]व्यक्तं निश्चितम्[-3]॥ १६॥

एवं पृथोः सूक्तं शोभनं [4]वचनं सारं न्याय्यं सुष्ठु गम्भीरार्थं मितमल्पं मधु श्रोत्रप्रियं श्रुत्वा प्रीत्या स्मयमान इव कुमारः [5-]सनत्कुमारः[-5] प्रत्युवाच॥ १७॥

तत्र सत्सङ्गेत्यादिप्रणाड्योत्तरोत्तर महरहरभ्या साधेयातिशय साधनसप्तकानुगृहीता प्रयाणानुवृत्त प्रीति रूपापन्नाविच्छिन्न प्रत्यक्षतापन्नपर भक्त्य परपर्याय भगवद्भक्तियोग एव क्षेमहेतुरिति विवक्षुस्तावत्प्रश्नमभिनन्दति - **साध्विति**। हे महाराज! भवता साधु सम्यक् पृष्टं, कथम्भूतेन? विदुषापि तत्त्वहित पुरुषार्थ ज्ञानवतापि सर्वभूतहितात्मना सर्वभूत हितकरण प्रवृत्तबुद्धिमताभूतहितार्थमेव त्वया पृच्छ्यते न तु स्वयं वेत्तुम्। स्वत एव ज्ञातत्वा दित्यर्थः। भूतहिताचरणमेव साधूनां स्वभाव इत्याह। साधूनां [6]साध्नुवन्ति परकार्यमिति साधवः तेषां गतिः प्रवृत्तिः॥ १८॥

[7]ईदृशी भूतहिताचरणरूपा सत्सङ्गतिस्तावन्मूलकारणमित्याह - सङ्गम इति। उभयेषां बुभुक्षूणां मुमुक्षूणां च स्वसमीहित भोगमोक्षादेः प्रथमं [8]साधनं साधूनां सङ्गम एवेति सम्मतः। सत्सङ्गमस्य भोगमोक्षसाधन त्वमुपपादयति। येषां साधूनां सम्भाषणसहितः सम्प्रश्नः सम्भाषणसम्प्रश्नः "शाकपार्थिवादित्वात्,(अष्टा 2-1-60 वार्तिकम्) [9]उत्तरपद[10]लोपी समासः। [11-]यद्वा[-11] सम्भाषणे सम्भाषणावसरे सम्प्रश्नः सम्यक् [12-]प्रणिपात सेवापूर्वकः[-12] स्वर्गापवर्ग साधन प्रश्नः सर्वेषामुभयेषां [13]शं स्वर्गा-पवर्गसुखं वितनोति। सति सम्प्रश्ने साधुभिर्भोगमोक्षसाधने उपदिश्यते इति साधून् प्रति सम्प्रश्नः शमपेक्षितं वितनोतीत्यर्थः॥ १९॥

---

1--1. V वादः प्रवर्तते 2. B, J, V, Va omit गुण 3--3. W omits 4. W वचः 5--5. A, B, T omit 6. A, B, T साधयन्ति 7. A, B, T °शभूत 8. A, B, T omit साधनं 9. T मध्यम 10. A, B, T लोपि 11--11. A, B, T omit 12--12. W omits 13. A, B, T omit शं

एवं सत्सङ्गस्य भोगमोक्षप्रथमकारणत्वमुक्तम् । तत्र भोगसाधनत्वमेवम् प्रथमं सत्सङ्गः, ततः सम्भाषणं, ततः प्रश्नः, ततस्तत्साधन यागाद्युपदेशः[1], ततः साधनोपसंहारेण यागाद्यनुष्ठानं, ततो भोग इति । इयं च प्रणाडी, मुमुक्षाधिकृतस्य, कर्मणामल्पास्थिर फलत्वनिर्णयपूर्वकानन्त स्थिर फलापात प्रतीतेः[2] पुरुषस्य न वक्तव्येति तामनादृत्य सत्सङ्गतेर्मोक्षसाधनत्वं प्रणाड्योपपिपादयिषु स्तावत् सत्सङ्गतिस्ततः सम्भाषणं ततः प्रश्नः ततो भगवद्गुणानुश्रवणं ततस्तत्रानुराग इत्येतत्पञ्चकं तावत् त्वयि सिद्धमेवेत्याह - **अस्त्येवेति** । हे राजन् ! मधुद्विषः पादारविन्दयोः ये गुणाः तेषामनुवादने अनुश्रवणे सदा रतिर्भवतोऽस्त्येव । रतिरस्त्येवेत्यनेन तत्पूर्वभाविसत्सङ्गत्यादि चतुष्टयमप्यस्तीत्यर्थादुक्तं भवति, तेन विना रत्यसम्भवात् अस्तीति सिद्धवन्निर्देशेनरत्यन्तं पञ्चकमवश्यं मुमुक्षूणां प्रथमं सम्पादनीयमित्युक्तं भवति । यतः रतिः सिद्धा ततो भक्त्यन्त रमुत्तरोत्तरसाध्यं सिद्धप्रायमेवेत्यभिप्रायेणाह **येति** । या नैष्ठिकी अव्यभिचरिता भगवद्गुणानुवादरतिः अन्तरात्मनो मनसः मलरूपं कषायं धातुरागवदनिवर्त्यं पुण्या पुण्यरूपं कर्म कामं भृशं विधुनोति क्षपयति ॥ २० ॥

**विज.** ननु मोक्षविषयप्रश्नपरिहारो दुरवबोधोऽतोयं सुशकं[3] पृच्छ "नचिकेतो मरणं मानुप्राक्षीः" (कठ.उ.1-25) इति श्रुतेरित्याशङ्क्य भवन्तो भगवद्विशेषसन्निधान पात्रत्वात् पृष्टार्थव्याख्यानसमर्था इत्यभिप्रत्याह **व्यक्तिमिति** । "व्यक्तं स्पष्टे बुधे तु ना" (वैज.को.6-5-72) इत्यभिधानात् । अत्र स्पष्टं व्यक्तमित्यर्थः । आत्मवतां ब्रह्मादियोगि नामात्माभीष्टवर्षी हि आत्मभावनो मनः प्रेरकश्चेतनानां सत्ताप्रदो जन्मादिरहितो भगवान् स्वभक्तानामनुग्रहायेमां भूमिं, सिद्धरूपी भवादृशाः सिद्धास्त एव रूपं प्रतिमाऽस्यास्तीति चरतीत्यन्वयः । "हरेस्तु प्रतिमाः प्रज्ञास्तत्रस्थः केशवः स्वयम् । ददाति ज्ञानमीशेशः परमात्मा स्वयं प्रभुः" (तन्त्रसारे ) इत्यतो ज्ञानिनां प्रतिमात्वं सिद्धम् अतोऽप्यत्राऽऽत्मवतां व्यक्तं स्पष्टमिति पुनरावृत्त्या योज्यम् ॥ १६ ॥

पृथोः कण्ठशोषणपर्यन्तं तदुक्तं श्रुत्वा निरपेक्षत्वादन्यतो गतं तैरिति शङ्का मा भूत् सूक्तत्वात् सारत्वात् कर्णसुखत्वात् प्रत्युत्तरयितुं शक्तत्वाच्चेति तत्र सनत्कुमारस्तं प्रत्याहेत्याह - मैत्रेय इति । "मधु नाम सुखं विन्द्यात्" इत्यादेः ॥ १७ ॥

किमाह - **साध्विति** । तथाहि साधूनां गतिः स्थितिरीदृशी स्वयं विद्वानपि लोकोपकाराय प्रवर्तित इति ॥ १८ ॥

न केवलं तवैवास्मद्दर्शनेन शम् अस्माक मपीति भावेनाह - **सङ्गम** इति । शं भगवन्निष्ठालक्षणं सुखम् ॥ १९ ॥

अत्र शिक्षणीयांशोऽस्माकं नास्तीति भावेनाह - **अस्त्येवेति** । भवतोऽस्य मधुद्विषः पादारविन्दे गुणानुवादलक्षणा रतिरस्त्येव । या रतिः कषायं मनःकलुषीकुर्वाणं कामं विषयतृष्णालक्षणं कषेण[4] कर्षणेन[5] गच्छतीति कषायं पापम् । एवमुभयविधमन्तरात्मना मल

1. A, B, T योगा° 2. A, B, T °तिः 3. A, B, T omit सुशंकं 4. Ma omits कषेण 5. Ma adds घर्षणेन

किट्टं विधुनोतीत्यन्वयः अनेन हरौ रतिरितरत्र हरिद्विष्यरति र्विरक्तिरिति द्वयं पुरुषार्थस्य मुख्यसाधनमुक्तमिति ज्ञेयम्। तदुक्तम् - "रतिः परात्मनि हरावन्यत्रारतिरेवच। पुमर्थसाधनं ज्ञेयं नाऽतोन्यन्मुख्यमिष्यते" (तन्त्रसारे) इति॥ २०॥

**शास्त्रेष्वियानेव सुनिश्चितो नृणां क्षेमस्य सध्र्यङ्[1] विमृशेषु हेतुः।**
**असङ्ग आत्मव्यतिरिक्त[2] आत्मनि [3-]दृढा रतिर्ब्रह्मणि निर्गुणे च या[-3]॥ २१॥**

**[4]सा श्रद्धया भगवद्धर्मचर्यया जिज्ञासयाऽऽध्यात्मिक योगनिष्ठया।**
**[5]योगेश्वरोपासनया च नित्यं पुण्यश्रवः कथया पुण्यया च॥ २२॥**

**अर्थेन्द्रियाराम[6]सगोष्ठ्यतृष्णया तत्सम्मतानामपरिग्रहेण च।**
**विविक्तरुच्या परितोष आत्मन् विना हरेर्गुणपीयूषपानात्॥ २३॥**

**अहिंसया पारमहंस्यचर्यया स्मृत्या मुकुन्दाचरिताग्र्य[7]शीधुना।**
**यमैरकामैर्नियमै[8]श्चाप्यनिन्दया निरीहया द्वन्द्वतितिक्षया च॥ २४॥**

**श्रीध.** चित्तशुद्ध्यैव बहिर्वैराग्य[9-]मात्मनि[-9] रतिश्च भवति न च ततोऽधिकं साधनमस्ति, शास्त्रेषु तयोरेव मोक्षहेतुत्वनिश्चयादित्याह - **शास्त्रेष्विति**। सध्र्यग्विमृशेषु सम्यग्विचारवत्सु शास्त्रेषु[10] क्षेमस्य हेतुः एतावानेव सुनिश्चितः कोऽसौ आत्मव्यतिरिक्ते देहादावसङ्गो वैराग्यमात्मनि च दृढा[11] रतिः प्रीतिः[12] आत्मनो विशेषणं निर्गुणे ब्रह्मणीति॥ २१॥

नन्वेतदेवातिदुर्लभमित्याशङ्क्योत्तमाधिकारिणः श्रवणमात्रेण भवति अन्यस्य तु चित्तशुद्ध्यनुसारेण साधनतारतम्यतो वर्धमानया भक्त्येत्यभिप्रेत्याह - **सेति** चतुर्भिः। सा ब्रह्मणि रतिरसङ्गश्च श्रद्धादिभिः स्यादिति चतुर्थेनान्वयः। जिज्ञासया तत्तद्विशेषबुभुत्सया पुण्यं श्रवो यशो यस्य तस्य हरेः [13-]पुण्यया कथया च[-13]॥ २२॥

**अर्थेति**। अर्थारामा [14-]अर्थो[-14] द्रव्यं [15]तन्निष्ठास्तामसा इन्द्रियारामाः कामनिष्ठा राजसाः तैस्सह या गोष्ठी तस्यामतृष्णया तेषां च ये सम्मता अर्थाः कामाश्च तेषामपरिग्रहेण [16]अनासक्तया विविक्ते विजने या रुचिः तथा [17]सा चात्मन्येव परितोषे सति स्यात् किन्तु हरेर्गुणपीयूषपानाद्विना तस्मिन् सति विविक्ते रुचिः न कार्या, न च आत्मनि परितोषः कार्य इत्यर्थः॥ २३॥

---

1. M, Ma, Ms सम्यक् 2. M, Ma, Ms वस्तुनि 3--3. W साक्षाद्दृढा ब्रह्मणि निर्गुणे रति 4. M, Ma, Ms तच्छ्र॰ 5. W ॰गी॰ 6. M, Ma, Ms गुणेष्व॰ 7. A, B, G, I, J, M, Ma, T, V सी॰ 8. M, Ma रभिध्यया; V ॰रनिन्दया 9--9. B, J, Va आत्मर॰ 10. V omits शास्त्रेषु 11. V omits दृढा 12. V omits प्रीतिः 13--13. V पुण्या या कथा तया च 14--14. B, J, V, Va omit 15. B, J, V, Va अर्थनिष्ठाः 16. V omits अनासक्तया 17. V omits सा च

**अहिंसयेति**। परमहंस्यचर्यया उपशमादि - प्रधानया वृत्त्या स्मृत्यात्महितानुसन्धानेन मुकुन्दाचरितमेवाग्र्यं सीधु श्रेष्ठममृतं तच्चरितस्मृतिसुखेनेत्यर्थः। मार्गान्तरस्थानिन्दया निरीहया योगक्षेमार्थक्रियाराहित्येन [1-]द्वन्द्वतितिक्षया[-1] शीतोष्णादिद्वन्द्व-सहनेन[2]॥ २४॥

**वीर.** रत्यनन्तरभाविसाधनजातं विवक्षुः साक्षान्मोक्षसाधनभूता उक्तविधा भक्तिरेवेत्याह - **शास्त्रेष्विति**। नृणां क्षेमस्य मोक्षस्य सध्र्यङ्[3] समीचीनः साधनविमर्शो येषु तेषु शास्त्रेषु साक्षान्निरपेक्षो हेतुः साधनम् इयानेव सुनिश्चितः, एवकारेण "तमेवं विद्वानमृत इह भवति, नान्यः पन्था अयनाय विद्यते", (पु. सू. 1-7) "तमेवं विदित्वातिमृत्युमेति" (श्वेत.उ.3-8; 6-15) इत्युक्तान्तरोपायत्वं विवक्षितम्। इयानित्युक्तः कौऽसौ तत्राह - निर्गुणे सत्त्वादिगुणत्रय[4]रहिते आत्मनि, किञ्जीवे, नेत्याह, ब्रह्मणि स्वरूपेण गुणैश्च बृहति ब्रह्मणीत्यनेनैव गुणत्रयराहित्य परत्वं निर्गुणशब्दस्य निश्चितम्। या दृढ रतिः यश्च आत्मव्यतिरिक्तेष्वसङ्गः सङ्गाभावश्चेतीयानेवेत्यर्थः। अत्ररतिशब्देनोत्तम विध परभक्ति साक्षात्कार लक्षण परज्ञानजन्यभगवत्प्रीत्यतिशयरूपा परमभक्तिः विवक्षिता। [5]तस्याः च दाढर्यं नाम चाञ्चल्यराहित्यं, चाञ्चल्यं च मध्ये मध्ये विषयान्तरानु चिन्तनरूपम्' तच्च विषयान्तरासक्तिजननद्वारा भक्तिविरोधीति चाञ्चल्यकार्यमपि निषिध्यते। असङ्ग आत्मव्यतिरिक्त इति[6], अत एवात्मव्यतिरिक्तासङ्गस्यापि पृथग्वा रत्या सह वा उपायत्व भ्रमो न कार्यः॥ २१॥

एवं विजातीयप्रत्ययान्तरा व्यवहितप्रीत्यतिशयरूपा[7]पन्ना परमभक्तिः कथं निष्पद्यत इति जिज्ञासायां तत्साधनान्युपदिशति - **सेति**। निर्गुणे ब्रह्मणि सा रतिः सदसत्यनात्मनि असङ्गश्च श्रद्धादिभिः स्यात् इति चतुर्थेनान्वयः। अत्र निर्गुण इत्यस्य पूर्ववदर्थः। अनात्मनि आत्मव्यतिरिक्ते शब्दादिविषये। तस्य सदसत्त्वं नाम सन्निहितासन्निहितत्वम्। यद्यप्यत्र श्रद्धादीना-मवश्यसम्पादनीयत्वाभिप्रायेण सम्भावितक्रमाणामपि क्रममनादृत्य ते कथिताः। तथापि क्रममाश्रित्यैव व्याख्यायते। तत्र प्रथमं नित्यं योगी[8]श्वरोपासनया योगी[9]श्वरा [10-]योगश्रेष्ठाः "योगिनामपि सर्वेषां मद्गतेनान्तरात्मना। श्रद्धावान् भजते यो मां स मे युक्त तमो मतः" इत्युक्तविधया युक्ततमाः[-10] भागवता स्तेषामुपासना सेवा तदानुकूल्येन वृत्तिः तया, ततः पुण्यश्रवः कथया पुण्यश्रवसः भगवतः कथया भगवत्पुण्य कथा श्रवणेनेत्यर्थः, आश्रयतः स्वतश्च पुण्यरूपत्वख्यापनाय पुण्यश्रवः कथया पुण्ययेत्युक्तम्॥ २२॥

ततः अर्थेन्द्रियारामसगोष्ठ्यतृष्णया अर्थारामाः अर्थपरायणाः [11-]इन्द्रियारामाः कामपरायणाः[-11] तैस्सह या गोष्ठी तस्यां या अतृष्णा

---

1--1. A, B, J, Va omit त 2. V adds इति 3. A, B, T omit सध्र्यङ् 4. A, B, T omit त्रय 5. A, B, T तस्यां च 6. A, B, T इति
7. A, B, T omit आपन्ना 8. A, B, T गे 9. A, B, T गे 10--10. W omits 11--11. A, B, T omit

अनासक्तिस्तया तेषामर्थेन्द्रियारामाणां सम्मता अर्थाः कामाश्च तेषामपरिग्रहेण भगवद्गुणानुश्रवणेन च भगवत एव पुरुषार्थरूपत्वम् अर्थकामयोस्तद्विपर्ययरूपत्वं च ज्ञात्वा तयोर्विरक्तिः स्यादिति गुणानुश्रवणतृष्णयोः पौर्वापर्यं युक्तम् । ततः जिज्ञासया तत्त्वहितपुरुषार्थविवित्सया ततः आचार्यवत्तयेत्यर्थसिद्धं पुमानाचार्यवानिति वक्ष्यमाणत्वात्। "आचार्यवान् पुरुषो वेद आचार्याद्ध्येव हि विदिता विद्या साधिष्ठं प्रापत्" (छन्दो. उ. 6-14-2, छान्दो. उ. 4-9-3) इति श्रुतेः आचार्यवत्ताया अपि साधनत्वनिश्चयात्। अनेन "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" (मुण्ड.उ. 1-2-12) इत्यन्तश्रुत्यर्थोऽनुसंहितः। तत आध्यात्मिकयोगनिष्ठया आचार्योपदिष्टो भगवदुपासनात्मको यः आध्यात्मिको योगः तस्मिन् या निष्ठा मननात्मिका तया ततः श्रद्धया आध्यात्मिकयोगानुष्ठानविषयया त्वरया, एवं पूर्वकालसाधनजातमुक्तम्। अथ समकालसाधनजातमुच्यते, अत्र तु न पौर्वापर्यं, सम्भूय सर्वेषामनुष्ठानविधानात्, ततः भगवद्धर्मचर्यया भगवद्धर्मा भगवदाराधनैकवेषाः पञ्चमहायज्ञादयो नित्यनैमित्तिकाः तेषां चर्या आध्यात्मिकयोगाङ्गत्वेनानुष्ठानं, तथा [1]तथा पारमहंस्या परमहंसानां सम्बन्धिनी या चर्या ब्रह्मात्मक स्वात्मयाथात्म्यानुभवरूपा तया आध्यात्मिकयोगस्य ज्ञानकर्मयोगाभ्यां निर्वर्त्यत्वात् विविक्तरुच्या आत्मन् आत्मनि च यः परितोषस्तेन आत्मानुभवजनितसन्तोषमात्रेणैव, न तु तद्व्यतिरिक्तसन्तोषेणेत्यर्थः, तर्हि किं भगवद्गुणानुभवजनित सन्तोषोऽपि निषिध्यते, ने त्याह, हरेर्भगवतो [2-]गुणपीयूष[-2] गुणानुश्रवणस्मरणरूपं पीयूषममृतं तस्य पानात् विना तदन्य विषयानुभवजातसन्तोषाभावेनेत्यर्थः ॥ २३ ॥

अहिंसया भूतसुहृत्त्वेन स्मृत्या भोजनाद्ययुक्तदशास्वपि शुभाश्रयसंशीलनरूपस्मृत्या तथा भोजनोत्तरादिदशासु मुकुन्दस्याचरितानि चेष्टितानि तान्येवाग्र्यं श्रेष्ठं सीधु अमृतं तच्चरितश्रवणश्रावणस्मरणरूपामृतसुखेनेत्यर्थः। यमैर्बाह्येन्द्रियनिग्रहैः अकामैरन्तरिन्द्रियनिग्रहैः शमैरित्यर्थः। नियमैः शौचाचारादिभिः अनिन्दया इतरसाध्यसाधनादीनाम निन्दया, तन्निन्दायां चित्तस्य तत्प्रावण्यप्रयुक्तं चाञ्चल्यं स्यादिति भावः, निरीहया देहधारणाद्यनुपयुक्तचेष्टाराहित्येन द्वन्द्वानां शीतोष्णाऽऽधि व्याध्यादीनां तितिक्षा सहिष्णुता तया ॥ २४ ॥

**विज०** एतदेव विशिनष्टि- **शास्त्रेष्विति**। सम्यग्विमृशेषु समीचीनविचारवत्सु कोऽसावित्यत आह- **असङ्ग** इति। आत्मनो व्यतिरिक्ते परमात्मनो भिन्ने ब्रह्मादितृणान्तवस्तुनि असङ्गो हेयलक्षणा बुद्धिर्ब्रह्मणि परिपूर्णे निर्गुणे सत्त्वादिगुणरहिते निर्णीतानन्दादिगुणेवा । " निर्निर्णयनिषेधयोः" (वैज.को.8-7-5) इत्यभिधानात् । हरौ या रतिः एतत् द्वयं मुख्यसाधनमित्यर्थः ॥ २१ ॥

1. A. B, T omit तथा 2--2. A, B, T omit

एतादृशं साधनं कथं स्यादिति तत्साधनान्याह **तच्छ्रद्धयेति**। तस्मिन् हरौ श्रद्धया भगवद्धर्माणां वर्णाश्रमादिविहितानां चर्यया चरणेन जिज्ञासया ब्रह्मविचारेण आध्यात्मिकयोगोऽष्टाङ्गयोगः तन्निष्ठया पुण्यश्रवाः हरिः तस्य कथया॥ २२॥

अर्थस्य देहस्य इन्द्रियाणां वा आरामेषु क्रीडावनेषु गुणेषु विषयेष्वतृष्णया हेयबुद्ध्या तेषां विषयाणां सम्मतानां स्रक्चन्दनवनितादीनामपरिग्रहेणास्वीकारेण आत्मन् देहभोगविषये परितोषोऽलम्बुद्धिः॥ २३॥

स्मृत्या जन्मजरादिचिन्तया सीधु सुधा पूर्वत्र, कथ वाक्यप्रबन्ध इति धातोः भगवद्गुणसन्दृब्ध शास्त्रेण, उत्तरत्र तत्कृतकंसवधादि पराक्रम लक्षण कर्मामृत पानेन। ''अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम्। क्षमा धृतिर्मिताहारः शौचं चैते यमा दश॥ कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा। अक्लेशजननं प्रोक्तमहिंसा त्विह योगिभिः॥ तपः सन्तोष आस्तिक्यं दानमीश्वरपूजनम्। सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो व्रतम्॥ एते तु नियमाः प्रोक्ता'' (याज्ञवल्क्ययोग- शास्त्रे) इति याज्ञवल्क्ययोगशास्त्रे अभिधानात्। अभिध्यया अखण्डस्मरणेन निरीहया अनिषिद्ध चेष्टया॥ २४॥

**हरे मुहुस्तत्परकर्णपूर[1] गुणाभिधानेन विजृम्भमाणया।**
**भक्त्या ह्यसङ्गः *सदसत्यनात्मनि[2]स्यान्निर्गुणे ब्रह्मणि चाञ्जसा रतिः॥ २५॥**

**यदा रतिर्ब्रह्मणि नैष्ठिकी पुमानाचार्यवान् ज्ञानविरागरंहसा।**
**दहत्यवीर्यं[3] हृदयं जीवकोशं पञ्चात्मकं योनिमिवोत्थितोऽग्निः॥ २६॥**

**दग्धाशयो मुक्तसमस्ततद्गुणो नैवात्मनो बहिरन्तर्विचष्टे।**
**परात्मनोर्यद् व्यवधानं पुरस्तात् स्वप्ने यथा पुरुषस्[4]तद्विनाशे॥ २७॥**

**आत्मानमिन्द्रियार्थं च परं यदुभयोरपि।**
**सत्याशय उपाधौ वै पुमान् पश्यति नान्यदा॥ २८॥**

**श्रीध०** कथयेत्यत्रोक्तमपि कथनं भक्तावन्तरङ्गत्वेन पुनरुच्यते - **हरेरिति**। तत्परा हरिभक्तास्तेषां कर्णपूराः कर्णालङ्कारभूता ये हरेर्गुणास्तेषामभिधानेन [5-]कीर्तनेन[-5] सदसति कार्यकारणरूपे॥ २५॥

---

1. M, Ma, Ms पूरया  * सदसत्परात्मन् इति विजयध्वजव्याख्यानुसारी पाठः  2. M, Ma, Ms °त्परात्मनि  3. M, Ma, Ms बीजं  4. Ma पू°
5--5. B, J, V, Va omit

भवत्वन्यत्रासङ्ग [1-]आत्मनि रतिश्च[-1] ततः किमत आह- **यदेति** । यदा निष्ठां प्राप्ता रतिर्भवति तदाचार्यवान् सन् ज्ञानवैराग्ययोर्वेगेनावीर्यं निर्वासनं सत् जीवस्य कोशमावरकम् [2]अहङ्कारं हृदयं पुमान् दहति । कथम्भूतम्? पञ्चमहाभूतप्रधानम्। यद्वा अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च, तदात्मकम् । उत्थितः प्रज्वलितोऽग्निः योनिमरणिमिव । यद्वा यदा रतिराचार्यानुग्रहश्च तदा [3] ज्ञानविरागयोः वेगेनोत्थितः साक्षात्कारोऽवीर्यं पुनः प्रोहक्षमं यथा न भवत्येवं हृदयं दहति । शेषं समानम् ॥ २६ ॥

ततः किमत आह- **दग्धाशय** इति । दग्ध आशयो हृदयमुपाधिर्यस्य । अत एव मुक्ताः समस्तास्तद्गुणाः कर्तृत्वादयो येन आत्मनः सकाशाद्बहिर्घटाद्यन्तः सुखदुःखादि नैव विचष्टे न पश्यत्येव । कुत इत्यपेक्षायां द्रष्टृदृश्यप्रतीतेरन्तः करणहेतुत्वादित्याह । परो दृश्य आत्मा द्रष्टा तयोर्यद्व्यवधानं भेदकं पूर्वमासीत् तस्य विनाशे सति यथा स्वप्ने राजाऽहमित्यारोपितं सैन्यादि द्रष्टारं दृश्यं सैन्यं च स्वप्नावस्थानाशे न पश्यति तद्वत् ॥ २७ ॥

द्रष्टृदृश्यभेदप्रतीतेरन्तः करणहेतुत्वमन्वयव्यतिरेकाभ्यामुपपादयति - **आत्मानमिति** । आत्मानं द्रष्टारमिन्द्रियार्थं दृश्यमुभयोस्तयोः परं सम्बन्धहेतुमहङ्कारं चाशयेऽन्तःकरणे सत्येव जाग्रत्स्वप्नयोः पश्यत्यन्यदा सुषुप्तौ न । तदुक्तम् - "दृश्यानुरञ्जितं द्रष्टृ दृश्यं द्रष्टॄनुरञ्जितम् । अहंकृत्योभयं रक्तं तन्नाशेऽद्वैततात्मनः ॥" (विवेकचूडामणिः) इति ॥ २८ ॥

**वीर०** हरेर्भगवतः तत्परा भागवता स्तेषां कर्णपूराः कर्णालङ्कार भूताः कर्णेषु प्रवाहरूपा वा ये गुणाः, गुणशब्दस्य सापेक्षत्वेऽपि सम्बन्धि शब्दत्वात् समासः, तेषामभिधानेन विजृम्भमाणया भक्त्या परभक्त्या भगवद्गुणश्रवणस्मरणादेरर्थ-कामवैतृष्ण्यात्[4] तत्त्वहितपुरुषार्थ विवित्साजननद्वाराऽऽचार्योपसत्तिहेतुत्वाभिप्रायेण पुण्यश्रवः कथया पुण्यया चेत्युक्तम् । उपासनद-शायामप्यानन्दकरत्वाभिप्रायेण मुकुन्दाचरिताग्र्यशीधुनेत्युक्तम् । अत्र तु आप्रयाणानुवर्तमानाहरहरभ्यासाधेयातिशय दर्शनसमानाकार ध्यानोपासनादि शब्दवाच्यपरभक्ते स्तज्जनितभगवत्स्वरूपसाक्षात्कारलक्षणपर ज्ञानजन्य भगवत्प्रीत्य तिशयरूप समाधिपरमभक्त्याद्यपरपर्याय रतिनिष्पादकत्वेऽनुग्राहकत्वाभिप्रायेण हरेर्मुहुस्तत्परकर्णपूरगुणाभिधानेनेत्युक्तमिति न पौनरुक्त्यम् ॥ २५ ॥

एवं श्रद्धादि सहकृत परभक्ति जन्य परज्ञानजन्यसमाध्यपरपर्यायरतेः क्षेमसाधनत्वमुपपाद्य केन प्रकारेण रतेः साधनत्वमिति विवित्सायामाह - **यदेति** । यदा च ब्रह्मणि नैष्ठिकी दृढा रतिः तदा आचार्यवान् आचार्यानुग्रहविषयः पुरुषः ज्ञानविरागयोः [5-]रंहसा विराग[-5] सहकृतरत्यात्मकज्ञानवेगेन उद्रिक्तरत्येत्यर्थः । हृदयं हृत्स्थानं प्राप्नुवन् जीवात्मा "हृदि ह्ययमात्मा" (प्रश्न. उ. 3-6) इति

---

1--1. B, J, V, Va आत्मरतिः 2--2. A, B, J, Va omit 3. V आत्मज्ञान 4. W °तृष्ण्यत° 5--5. A, B, T omit

श्रुतेः पञ्चात्मकं पञ्च भूतात्मकं जीवकोशं शरीरं अबीजं बीजरहितं भिन्नाज्ञानरूपमूलं यथा तथा, दहति सन्तापयति अज्ञानकृतपुण्यपापमूलो हि देहसम्बन्धः देहसम्बन्धनिमित्ताज्ञानमूलकपुण्यपापात्मकं कर्म निश्शेषं दहन्ती रतिः क्षेमसाधनमित्यर्थः। देहमाश्रित्य तिष्ठतो जीवस्य ज्ञानार्चिषः स्वाश्रयदेहदाहे दृष्टान्तमाह योनिमिवेति। उत्थितः ज्वलितोऽग्निः योनिमरणिमिवेत्यर्थः। दहत्यवीर्यमिति पाठेऽप्ययमेवार्थः, देहस्य वीर्यं बलं[1] हि पुण्यपापात्मकं कर्मैव॥ २६॥

एवं देहसम्बन्धनिमित्तं पुण्यपापरूपं[2] कर्म निश्शेषं दहन्त्या रत्या मुक्तस्य न पुनः पञ्चात्मकजीवकोशसम्बन्ध इत्याह- **दग्धाशय** इति। एवं दग्धाशयः दग्धशरीरः मुक्ताः समस्ताः तद्गुणा देहगुणा रागादयो येन सः आत्मनः बहिर्भूतं शरीरमन्तः अन्तर्भूतं रागादिदोषजातं च न विचष्टे न पश्यति न पुनर्देहादिसम्बन्धं प्राप्नोतीत्यर्थः। बहिरन्तश्च विशिनष्टि। तद्विनाशे देहविनाशे पुरस्तात्संसृतिदशायां ज्ञानच्यावकं भवति तच्छरीरं तज्जन्यरागद्वेषादिकं च न पश्यति परात्मनोः यद्व्यवधानं पुरस्तादित्यनेन मुक्तात् जीवपरयोः सम्बन्धज्ञानप्रच्यावो नेत्युक्तंभवति। स्वप्ने यथा देहं रागादिकं च न पश्यति तथेत्यर्थः। देहाद्यस्थिरत्वेश्वरसृष्टत्वज्ञापनाय स्वप्नदृष्टान्तः॥ २७॥

कुतो न पश्यति तत्राह - **आत्मानमिति**। आत्मानं देहं इन्द्रियार्थं शब्दादिकं उभयोर्देहेन्द्रियार्थयोर्यत्परमन्यत् भोगोपकरणभोगस्थानादिकं तत्सर्वमाशये वासनाख्ये उपाधौ सति पुमान् पश्यति नान्यथेत्यर्थः। वासना करणकलेवर भोग्य[3]भोगस्थानभोगोपकरणादिषु प्रावण्यम्॥ २८॥

**विज०** तत्परा हरिपरास्तेषां कर्णं पूरयतीति कर्णपूरणं कर्णाभरणं वा। यद्धरे र्मुहुर्गुणाभिधानं तेन, लिङ्गव्यत्ययश्छान्दसः। यद्वा हरेर्गुणाभिधानेन विजृम्भमाणया भक्त्या, कीदृश्या तत्परकर्णपूरया। एतैरुक्तैः साधनैः सदसत् कार्यकारणात्मक प्रपञ्चविषयेऽसङ्गः स्यात्, प्रथमा सप्तम्यर्थे। परमात्मनि मुक्तप्रपञ्चस्वामिनि निर्गुणे ब्रह्मणि च रतिः स्यादित्यन्वयः। यद्वा सदसतो जगतः परश्चात्मा चेति सदसत्परात्मा तस्मिन्॥ २५॥

अस्तु ब्रह्मण्यसङ्गनिशिता रतिस्ततः किं तत्राह- **यदेति**। यदा ब्रह्मणि नैष्ठिकी सर्वोत्कृष्टा रतिरपरोक्षज्ञानलक्षणा भवति तदाचार्यवान् तदुपदिष्टार्थसाफल्यात् तद्भक्तिमान् पुमान् ज्ञानवैराग्ययोः रंहसा उद्रेकेणाबीजं हृदयं स्वरूपोपाधिं विना ब्रह्मोपाधिं दहतीत्यन्वयः। किमनेन जीवस्येत्यत उक्तं जीवकोशमिति। जीवस्य गृहस्थानीयं, तर्हि तद्दाहे जीवोऽपि दग्धः स्यादित्य उक्तं पञ्चात्मकमिति। पञ्चभूतस्वरूपमत एव बाह्यमित्युच्यते "जीवोपाधिर्द्विधा प्रोक्तः स्वरूपं ब्राह्ममेव च। बाह्योपाधिर्लयं याति मुक्तावन्यस्य तु

---

1. A, B, T मलं 2. T पुण्यापुण्य 3. A, B, T omit भोग्य

तु स्थितिः। सर्वोपाधिविनाशे हि प्रतिबिम्बः कथं भवेत्। कथं चात्मविनाशाय प्रयत्नः सेत्स्यति क्वचित्॥ अपुमर्थता च मुक्तेः स्यादभावात्पुंस एव तु। ज्ञानज्ञेयाद्यभावाच्च सर्वथा नोपपद्यते। तस्मादेतन्मतं येषां तमोनिष्ठा हि ते मताः" (स्कान्दे.) इति वचनात् न स्वरूप बीजहृदयदाहोऽत्रार्थः, किन्त्वस्वरूपोपाधेरित्यभिप्रायः। तत्र दृष्टान्तमाहयोनिमिति। अरणेरुत्थितोऽग्निरिवेति॥ २६॥

बीजाशयनाशे तद्गुणानां ज्ञानादीनामपि नाशादात्मनो बहिरन्तरिति भेदं न विचष्टे न विपश्यति। अन्यदर्शनाभावेऽपि स्वात्मानं पश्यतीत्यत एव अन्धवद्दृष्ट्यभावात् न किञ्चिदपि पश्यतीत्यर्थः। कथं तर्हि संसारावस्थायामत्राह परात्मनोरिति। परस्येश्वरस्यात्मनो जीवस्य च यद्यदा पुरस्तात् संसारावस्थायां व्यवधानं जवनिकास्थानीयावस्था तदा यथा स्वप्ने सन्दिग्धज्ञानमेतावदज्ञानं भवतीति तत्र तद्विनाशे बीजहृदयनाशे त्वपुरुष एवात्मनाश एव। अतः स्वरूपज्ञाननाशात् संसारावस्थैवोत्तमा स्यात् किञ्चित् ज्ञानस्यापि सम्भवादित्यर्थः। उक्तादन्यथा स्वीकारे भिदा यदि न दृश्येत जीवात्मपरमात्मनोः मुक्तौ तदा विमोक्षाय को यत्नं कर्तुमर्हति। "मग्नस्य हि परे ज्ञाने किं न दुःखतरं भवेत्। प्रवृत्तिधर्ममेवाहं मन्ये भरतसत्तम!" (भारते मोक्षधर्मे) इति प्रमाणविरोध आपद्येत इति॥ २७॥

अतः फलितमाह - **आत्मानमिति**। आत्मानं जीवमिन्द्रियार्थं शब्दादिविषयं च यदप्युभयोरात्मेन्द्रियार्थयोः परमुत्तममीश्वरतत्त्वं तदपि[1] बीजाशयलक्षण उपाधौ सत्येव पुमान् पश्यति अन्यदा तदभावे न पश्यतीत्यन्वयः॥२८॥

**निमित्ते सति सर्वत्र[2] जलादा[3]वपि पूरुषः।**
**आत्मनश्च परस्यापि भिदां पश्यति नान्यदा॥ २९॥**

**इन्द्रियै विषयाकृष्टैराक्षिप्तं ध्यायतां[4] मनः।**
**चेतनां हरते बुद्धेः स्तम्ब[5]स्तोयमिव ह्रदात्॥ ३०॥**

**भ्रश्यत्यनु स्मृतिश्चित्तं ज्ञानभ्रंशः स्मृतिक्षये।**
**तद्रोधं कवयः प्राहुरात्मापह्नवमात्मनः॥ ३१॥**

**नातः परतरो लोके पुंसः स्वार्थव्यतिक्रमः।**
**यदस्त्यन्यस्य[6] प्रेयस्त्वमात्मनः स्वव्यतिक्रमात्॥ ३२॥**

श्रीध. एकस्मिन्नात्मनि दृश्यादिभेदप्रतीतिरौपाधिकीति दृष्टान्तेन स्पष्टयति - **निमित्त इति**। लोकेऽपि च सर्वत्रजलदर्पणादौ भेदानिमित्ते सत्येवात्मनो बिम्बभूतस्य परस्य प्रतिबिम्बस्य च भेदं पश्यति न तु जलाद्यभावे॥ २९॥

---

1. A, B, omit तदपि 2. W °स्मिन् 3. W °डा° 4. M, Ma, Ms °तो 5. M, Ma स्तुम्ब 6. A, B, G, I, J, T, V यदध्यन्यस्य; Ms यद्यस्त्यन्यस्य

तदेवं चतुर्भिरसङ्गात्मरत्योः मोक्षहेतुत्वमुक्तम्, इदानीमनात्मरतेः संसारहेतुत्वमाह - **इन्द्रियैरि**ति चतुर्भिः। ध्यायतां गुणारोपेण स्मरतां पुंसामिन्द्रियाणि स्मृतैर्विषयैराकृष्यन्ते तैश्च मन आकृष्यते विषयासक्तिं प्राप्यते। तच्च बुद्धेः सकाशात् तद्धर्मं[1] चेतनां विचारसामर्थ्यं हरति। एतच्चाविवेकिना न लक्ष्यत इति दृष्टान्तेनाह। तीरजः कुशादिस्तम्बो यथा मूलैस्तोयं ह्रदादपहरति तद्वत्॥ ३०॥

**भ्रश्यतीति**। चित्तं चेतनामनु तस्यामपहृतायां स्मृतिः पूर्वापरानुसन्धानं भ्रश्यति। एवं तद्रोधं ज्ञानभ्रंशमात्मन एव हेतोरात्मनोऽपह्नवं नाशं प्राहुः॥ ३१॥

एवम्भूतो नाशो भवन्तु ततश्च किमित्यत आह - **नात** इति। यदधि यमधिकृत्यान्यस्य विषयस्य प्रियतमत्वम्। "आत्मनस्तु कामाय सर्वं प्रियं भवति" (बृह.उ.2-4-5) इति श्रुतेः। तस्यात्मनः स्वेनैव यो व्यतिक्रमोऽपह्नवः तस्माद्यः स्वार्थनाशोऽतः परतरः स्वार्थनाशो नास्ति॥ ३२॥

**वीर.** एवं मुक्तावुपाध्यभावादौपाधिकदेहाद्यसम्बन्धः स्वाभाविक जीवपर[2] सम्बन्धज्ञान सद्भावश्चोक्तः संसृतावुपाधि-सद्भावाज्जीवपर[3]सम्बन्धज्ञानाभावमाह - **निमित्त** इति। जडं शरीरं सर्वस्मिन् जडादौ निमित्ते शरीराद्युपाधौ सति आत्मनः स्वस्य परस्य परमात्मनश्च भिदां सम्बन्ध विरहं पश्यति। अन्यदा उपाध्यभावे मुक्तावित्यर्थः न पश्यति। यद्वा भिदां वैषम्यं पश्यति नान्यदा शरीराद्युपाधिविगमे परमसाम्याविर्भावान्न वैषम्यं पश्यतीत्यर्थः॥ २९॥

अत्र दृढा रतिर्नैष्ठिकी रतिरिति अन्तरा विषयान्तरानुचिन्तनं रतिविरोधीत्यवगम्यते। तस्य च विरोधित्वं सङ्गादिजननद्वारेति सङ्गः प्रतिषिद्धः। असङ्ग आत्मव्यतिरिक्ते असङ्गः, सदसत्यनात्मनि ज्ञानविरागरंहसेति तद्विषयचिन्तनायाः सङ्गादिद्वारा रतिविरोधित्वमुपपादयति - **इन्द्रियैरि**त्यादिना। ध्यायतां विषयचिन्तनं कुर्वतां, विषयैः शब्दादिभिः आकृष्ठानि यानीन्द्रियाणि तैः मन अकृष्टं आक्षिप्तं सत् बुद्धेः पुरुषार्थतत्साधनव्यवसायात्मिकाया बुद्धेः चेतनां तत्सम्बन्धि ज्ञानं पुरुषार्थतत्साधनविषयां व्यवसायरूपां बुद्धिवृत्तिं हरते। तत्र दृष्टान्तः - स्तम्बः तीरस्थकुशादिस्तम्बः केन चिदाकृष्टो यथा तीरशैथिल्यहेतुतया ह्रदात्तोऽयमपि च्यावयति तद्वदिति। यद्वा स्तम्बो यथा मूले तोयं ह्रदादुपहरति, तद्वदिति[4] चिन्तनविषयशब्दादि विषयाक्षिप्तबाह्येन्द्रियाक्षिप्तमनसि शब्दादिविषयेषु अन्यपरे सति मोक्षतदुपायानव[5] सातुं बुद्धिः न शक्नोतीत्युक्तं भवति॥ ३०॥

एवं व्यवसाये भग्ने सति अनुस्मृतिरुपापासनंयोगकालानुसन्धानं भ्रश्यति। तदनुग्राहकं कालान्तरेषूपास्यसंशीलनरूपं चित्तं

---

1. V omits तद्धर्मं 2. A, B, T omit पर 3. A, B, T omit पर 4. A, B, T omit तद्वदिति 5. W °न् व्यवसितुं

च भ्रश्यति। एवं स्मृतिक्षये उपासनाक्षये सति ज्ञानभ्रंशः स्वपरयाथात्म्यज्ञानभ्रंशो भवति। तद्रोधं ज्ञानभ्रंशं कवयः सूरयः आत्मन एव हेतोः आत्मापह्नवम् आत्मनस्तिरोधानं प्राहुः। उपासनविच्छेदादात्म[1]स्वरूपस्य भगवच्छेषतया न विशदावभास इत्यर्थः। तथा चोक्तम् - "योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चौरेणात्मापहारिणा (महाभारते.उ.प) इति॥ ३१॥

एतदेवाह - **नात** इति। आत्मनः हेतोः स्वस्य व्यतिक्रमात् स्वस्वरूपातिलङ्घनात्स्वस्वरूपं विहायात्मनोऽन्यस्य प्रेयस्त्वं शब्दादिविषयप्रेयस्त्वं यदस्ति अतः परतरः, पुंसः स्वार्थव्यतिक्रमः स्वपुरुषार्थविरहः लोके नास्ति॥ ३२॥

**विज.** तत्र दृष्टान्तमाह - **निमित्त** इति। जीवात्मपरमात्मनोर्भेदस्यान्वयव्यतिरेक सिद्धत्वेन प्रामाणिकत्वात् तदपलापे महाऽसुरत्वमेव स्यादिति भावः॥ २९॥

जीवपरयोः सत्यभेदप्रतीतौ किं कारणमित्यशङ्क्याज्ञानमेव तत्र कारणं तदपि विषयातिसक्त्या स्यादित्याह - **इन्द्रियैरिति**। पुंसो मनो बुद्धेश्चेतनां बहुस्मरणशक्तिं हरत इत्यन्वयः "बहुस्मरणशक्तिस्तु चेतनेत्युच्यते बुधैः" (शब्दनिर्णये) इति वचनात्। मनसो हरणे कारणानीन्द्रियाणीत्याह - **इन्द्रियैरिति**। हरिकथाश्रवणादियोग्यैः श्रोत्रादीन्द्रियैराक्षेपे चायं हेतुरित्याह- **विषयाकृष्टैरि**ति। दृष्टान्तेन बुद्धयारूढं करोति स्तुम्ब इति, स्तुम्बो जलनिर्गमनद्वारम्॥ ३०॥

बुद्धेर्बहुस्मरणशक्तिभ्रंशे सर्वानर्था आपद्यन्त इत्याह - **भ्रश्यतीति**। भ्रष्टं चित्तमनु बहुस्मरणशक्तिभ्रंशानन्तरं स्मृतिरनेकशास्त्रय थार्थस्मरण सामर्थ्यं भ्रश्यति। स्मृतिक्षयेऽनेकशास्त्रयथार्थस्मरणशक्तिनाशे सर्वोत्तमः स्वतन्त्रः पञ्चविधभेदस्वामी मदादिसर्वं तदधीनमेनं भावं मरणेऽपि न मुञ्चामीति भगवत्पक्षपात लक्षणं ज्ञानं भ्रश्य ति। तदस्तु ततः किं तत्राह **तद्रोधमिति**। कवय आत्मनो ज्ञान स्वरूपस्य तस्य तादृशस्य ज्ञानस्य रोधं नाशमात्मनः स्वरूपस्या पह्नवं नाशं प्राहुरित्यन्वयः॥ ३१॥

अतश्च किमनिष्टमापन्नमत्राह - **नात** इति। पुंसः स्वार्थव्यतिक्रमः स्वप्रयोजनस्य व्यतिक्रमो नाशोऽतः स्वरूपभूतज्ञान-नाशात्परोऽन्यतमो नाशो लोके नास्तीत्यन्वयः। आत्मनो निरवयवत्वात् तन्नाश [2]अनवशेषः, घटादीनां सावयवत्वेन तन्नाशः सावशेषो दृष्ट इति विशेषद्योतनाय लोक इत्युक्तम्। ननु देहपुत्रादेरपि प्रेयस्त्वात्तन्नाशस्यापि महानाशत्वेन दुःखहेतु त्वात् किं ज्ञाननाशो वि[3]शिष्योच्यत इति तत्राह - यद्यस्तीति। आत्मनोऽन्यस्य देहपुत्रादेः यद्यपि प्रेयस्त्वमस्ति तथापि पुत्रादेरात्मशेषत्वेन प्रियत्वात्तन्नाशस्य स्वव्यतिक्रमात् स्वरूपज्ञाननाशादाधिक्यं नास्तीति पूर्वं नञध्याहारेणा न्वेतव्यमत एव नातः परतर इत्युक्तम्। केचिन्न ह्यस्तीति पठन्ति। तत्पक्षेऽध्याहारं विना अन्वयः कर्तव्यः॥ ३२॥

---

1. A, B, T omit स्व° 2. Ma नष्टावशेषः 3. M, Ma °शे°

**[1]अर्थेन्द्रियार्थाभिध्यानं सर्वार्थापह्नवो नृणाम्।**
**[2]भ्रंशितो ज्ञानविज्ञानाद्येनाविशति [3]मुख्यताम्॥ ३३॥**

**न कुर्यात्कर्हिचित्सङ्गं तमस्तीव्रं [4]तितीरिषुः।**
**धर्मार्थकाममोक्षाणां यदत्यन्त विधातकम्॥ ३४॥**

**तत्रापि मोक्ष एवार्थ आत्यन्तिकतयेष्यते।**
**[5]त्रैवर्ग्योऽर्थो यतो [6]नित्यं कृतान्तभयसंयुतः॥ ३५॥**

**[7]परावरे च ये भावा गुणव्यतिकरादनु।**
**न तेषां विद्यते [8]क्षेममीशविध्वंसिताशिषाम्॥ ३६॥**

**श्रीध.** कुत इत्यत आह - **अर्थेति**। अर्थस्याभिध्यानमिन्द्रियस्यार्थः कामस्तस्याभिध्यानं सर्वार्थनाशः ज्ञानं विज्ञानं च परोक्षापरोक्षं [9-]तस्मात्[-9]। येन ध्यानेन मुख्यतां स्थावरताम्॥ ३३॥

अनात्मरतेरनर्थहेतुत्वमुक्तं सङ्गस्याप्याह - **नेति**। यद्वस्तु धर्मादीनां विघातकं तस्मिन् सङ्गम्। तमः संसारम्॥ ३४॥

तुल्यवन्निर्देशात् पुरुषार्थसाम्यभ्रान्तिं वारयति - **तत्रापीति**। कृतान्तः कालः॥ ३५॥

भयसंयुतत्वमेवाह - **परे** इति। परे ब्रह्मादयोऽवरेऽस्मदादयो गुणक्षोभादनु पश्चाद्भवन्ति ईशः कालः तेन विध्वंसिता आशिषो येषाम्॥ ३६॥

**वीर.** विषयध्यानतत्सङ्गयोरनर्थकारितत्वमुपसंहरति - **अर्थेन्द्रियेति** द्वाभ्याम्। अर्थेन्द्रियाणि शब्दाद्यर्थविषयाणि श्रोत्रादीनि तेषामर्थस्य शब्दादेरभिध्यानं, नृणां सर्वार्थापह्नवः सर्वपुरुषार्थ विरोधीत्यर्थः। स्वर्गादिसाधन भूतयागादेरपि तदेकमनस्केन कार्यत्वात् सर्वपुरुषार्थविरोधीत्युक्तं, येन शब्दाद्यभिध्यानेन ज्ञानविज्ञानात् भ्रंशितः [10]ज्ञानं शास्त्रजन्यं, विज्ञानमुपासनात्मकं, तयोः समाहारद्वन्द्वः तस्मात् भ्रंशितः मुख्यतां स्थावरतामाविशति प्राप्नोति॥ ३३॥

तीव्रम् अनर्थकृत् तमः अज्ञानं तितीरिषुः तरितुमिच्छुः कर्हिचित् सङ्गं न कुर्यात्। यद्विषयासञ्जनं धर्मादीनामत्यन्त-विघातकम्॥ ३४॥

---

1. Ma, Ms, T अर्थेन्द्रिय 2. M, Ma, Ms भ्रंसितो 3. M, Ma, Ms मुग्धताम्। 4. M, Ma, Ms °र्षुणा; V °र्षुकः 5. M, Ma °र्ग्याऽर्थो; W °र्गोऽर्थो 6. V °त्यः 7. A, B, G, I, J, V परेऽवरे 8. M, Ma क्षेमी ईश; V, W क्षेम ईश 9--9. B, J, V, Va omit 10. T omits ज्ञानं

धर्मादिभिः साकं मोक्षस्य तुल्यवन्निर्देशात् तस्येतरपुरुषार्थसाम्यं वारयति - **तत्रापीति**। तत्रापि चतुर्णां मध्ये मोक्षरूप एव पुरुषार्थः आत्यन्तिकतया अन्तमतीत्य वर्तमानतया नित्ययेत्यर्थः, इष्यते इच्छाविषयो भवति। त्रैवर्ग्यरूपार्थः[1], कृतान्तः कालः तद्भयसंयुतः अनित्यः[2] ॥ ३५ ॥

अनित्यतामेवाह - परावरे उत्कृष्टापकृष्टरूपा ये भावाः पदार्थाः आब्रह्मस्तम्बपर्यन्ता गुणव्यतिकरात् गुणवैषम्यरूपसृष्टेः अनु पश्चाद्भवन्ति न तु प्रलये। अत एषाम् ईशेन कालरूपेण परमात्मना विध्वंसिता आशिषो येषां क्षेमो [3-]रक्षणं स्थिरत्वमित्यर्थः[-3] न विद्यते [4-]इत्यर्थः[-4] ॥ ३६ ॥

**विज.** अथ तस्मान्नृणामिन्द्रियार्थानां विषयाणामभिध्यानं निरन्तरं सञ्चिन्तनं सर्वार्थानां सर्वपुरुषार्थानामपह्नवो विनाशहेतुः येनेन्द्रियेणेन्द्रियार्थाभिध्यानेन ज्ञानविज्ञानात् सामान्यविशेषलक्षणज्ञानात् स्रंसितो भ्रंशितो मुग्धतां विवेकराहित्यमाविशति प्राप्नोतीत्यर्थः ॥ ३३ ॥

विषयाभिध्यानस्यापि दुष्टसंसर्गो मूलकारणं स विपश्चिता न कार्य इत्याह - **न कुर्यादिति**। धर्मादीनामत्यन्त-विघातकमिति यदतो विपश्चित् तीव्रतमस्तितीर्षुणा[5] मनसा कदापि दुष्टसङ्गं न कुर्यादित्यन्वयः। न कार्यः कर्हिचित्सङ्ग इति वा पाठः। तदाऽविपश्चितेति योज्यम् ॥ ३४ ॥

धर्मादिभिस्सह पाठात् मोक्षस्यापि तत्तुल्यता स्यादिति शङ्कां परिहरति - **तत्रापीति**। "स्वपक्षपात स्त्वभ्यासाद्भोगार्थं व्यापृतस्य तु। भवेत्त तोमनेकशास्त्र यर्थार्थस्मरणेशिता ॥ नाश्यत्यतः स्मृतेर्नाशाद्भगवत्पक्षपातिता। विनश्येत्तेन चैवास्य भवेज्ज्ञानविपर्ययः ॥ न च ज्ञानविपर्यासादन्यन्नाशकरं क्वचित्। सर्वस्यैतस्य मूलं हि दुष्टसंसर्ग एव तु। दुष्टसङ्गो विरक्तस्याप्यन्यथा ज्ञानकारणम्। दुष्टसङ्गाद्धि विष्णोश्च स्वात्मत्वं मन्यतेऽबुधः ॥ अभावं स्वात्मनोऽन्यस्य मुक्तिं चापि निरात्मताम् (स्कान्दे) इति समाख्यास्मृतिसिद्धत्वात् अयमेवार्थो न शुकतीर्था द्युक्तार्थो ग्राह्यः तमोहेतुत्वात्। मोक्षस्यात्यन्तिकत्वं कस्माद्विशिष्योच्यते[6] धर्मादेरपि पुरुषार्थत्वादित्यात्राह **त्रैवर्ग्य .ति**। त्रिवर्ग सम्बन्धि पुरुषार्थः कृतान्तस्य कालात्मनो हरे र्भ्रूविभ्रमजनितनाशलक्षणभयसंयुतो यतस्तस्मादिति शेषः, भविष्यन्नाशमवलोक्य नित्यमिति ॥ ३५ ॥

त्रैवर्ग्यार्थो ब्रह्मलोकादिसम्बन्धी नानित्य इति। तत्राह - **परावरे चेति**। गुणव्यतिकरान्मूल प्रकृतेरनु अनन्तरं ये भावाः

---

1. W वर्ता 2. A, B, T omit अनित्यः 3--3. W omits 4--4. W omits 5. Ma तीव्रं 6. M, Ma °शे°

पदार्थाः परावरे एष्य दतीतकाले ये वर्तमाना उत्कृष्टनिकृष्टलक्षणा वा ईशस्य कालनाम्नो हरे र्भ्रूविभ्रमण विध्वंसिताशिषां विनाशितशुभानां तेषां क्षेमी नित्यानन्दी नास्तीत्यन्वयः। अनेन ब्रह्मलोकादि प्राप्तिलक्षणः पुरुषार्थोऽपि न नित्य इत्युक्तं भवति ॥ ३६ ॥

***मनोमात्रमिदं विश्वं यथा स्वप्ने मनः क्रिया।**
**क्रिया च वासनामात्रं सा नीहायां प्रलीयते ॥ (क)**

**आत्मात्वनीहया साक्षात्स्वयंज्योतिः प्रसिध्यति।**
**एवं व्युदस्यात्ममायां जानंस्तूपरमेन्मुनिः ॥ (ख)**

**न यत्र निद्रा मूर्च्छा वा नार्यदृक् च मनोरथः।**
**नानुवृत्तिर्न प्रलयस्तद्ब्रह्म परमं विदुः ॥(ग)**

**तत्त्वं नरेन्द्र जगतामथ तस्थुषां च देहेन्द्रियासुधिषणात्मभिरावृतानाम्।**
**यः क्षेत्रवित्त[1]पतया हृदि विष्वगा[2]विः प्रत्यक् चकास्ति भगवांस्तमवेहि सोऽस्मि ॥ ३७ ॥**

**यस्मिन्निदं सदसदात्मतया विभाति माया विवेकविधुति स्रजि वाहिबुद्धिः।**
**तं नित्यमुक्तपरिशुद्ध[3] विबुद्धतत्त्वं प्रत्यूढकर्मकलिलप्रकृतिं प्रपद्ये ॥ ३८ ॥**

**यत्पाद पङ्कज पलाशविलासभक्त्या कर्माशयं[4] ग्रथितमुद्ग्रथयन्ति सन्तः।**
**[5-]तद्वन्न रिक्तमतयो यतयोऽपि रुद्ध[-5] स्रोतोग[6]णास्तमरणं भज वासुदेवम् ॥ ३९ ॥**

**कृच्छ्रो महानिह भवार्णवमप्लवेशाः[7] षड्वर्गनक्रमसुखेन तितीर्षयन्ति[8]।**
**तत्त्वं हरेर्भगवतो भजनीयमङ्घ्रिं कृत्वोडुपं व्यसनमुत्तर दुस्तरार्णम् ॥ ४० ॥**

**श्रीध. तत्त्वमिति।** यस्मात् अनात्मरतिरनर्थ हेतुः तत्तस्माज्जगतां जङ्गमानां तस्थुषां स्थावरणां च देहादिभिरात्मनाऽहङ्कारेण

---

* These three additional verses are found in M, Ma, Ms and the commentary of Vijayadhwaja on the same may be found in its proper place.
1. M, Ma, Ms वित्त्वमनयोः 2. M, Ma, Ms °धिः 3. B, I शुद्ध 4. M, Ma, Ms °यग्र° 5--5. M, Ma, Ms तत्त्वं न तद्विमतयोऽपि विरुद्धमार्ग° 6. M, Ma, Ms गुणा° 7. A, B, G, I, J, T, W °शां 8. A तितीरिषन्ति; B, J तितीरषन्ति; G, I तितीर्षन्ति

चावृतानां हृदि यश्चकास्ति प्रकाशते तमवेहि। [1-]कथं सोऽस्मीति[-1]। सोस्तीति पाठे स एवैकोस्ति ततोन्यदसदित्यर्थः। ननु जीव हृदि चकास्ति नान्यस्तत्राह। क्षेत्रविदं जीवं तपति नियमयतीति क्षेत्रवित्तपः तस्य भावस्तत्ता तयान्तर्यामिरूपेण। यद्वा क्षेत्रवित्ते अहम्ममतास्पदे पातीति क्षेत्रवित्तपस्तेन रूपेण जीवस्तु अहम्ममतास्पदे पातीति क्षेत्रवित्तपस्तेन रूपेण। जीवस्तु पारतन्त्र्यान्न पाति। ननु कर्म जीवं नियच्छति न आविः प्रत्यक्षः, [2-]कर्मतु न तथा[-2] तर्हि बुद्धिः न प्रत्यक् प्रतिलोमं चकास्ति, बुद्धिस्तु पराग्विषयाकारेण, तर्ह्यहङ्कारः न विष्वग्व्याप्तत्वेन, स तु परिच्छिन्नः। एवम्भूतो यो भगवान् तमवेहीति॥ ३७॥

स्थावरजङ्गमादीनां हृदि चकास्तीत्युक्त[3] तेषां सत्त्वं तत्सम्बन्धादीश्वरस्य मालिन्यं च प्रसक्तं निराकुर्वन्नुद्रिक्तभक्तया तं प्रणमति - **यस्मिन्निति**। यस्मिन्निदं विश्वं सदसदात्मतयोत्कृष्ट[4]निकृष्टभावेन, कार्यकारणभावेन वा मायैव विभाति तं प्रपद्ये। मायात्वे हेतुः - विवेकेन विधुतिर्निराकृतिर्यस्य तत्, स्रजि वेति वाशब्दो दृष्टान्ते। नित्यमुक्तम्। यतः परिशुद्धम्। तत्कुतः। विबुद्धं तत्त्वं सत्यमत एव [5-]प्रत्यूढा[-5]ऽभिभूता निरस्ता कर्मभिः कलिला मालिना प्रकृतिर्येन तम्॥ ३८॥

तमवेहीति ज्ञानमुपदिष्टं तस्य [6-]ज्ञानस्य[-6] दुष्करत्वेन भक्तिमुपदिशति - **यदिति** द्वाभ्याम्। यस्य पादपङ्कजयो पलाशानि [7-]दलानि[-7] अङ्गुलयस्तेषां विलासाः कान्तिस्तस्य भक्तया स्मृत्या कर्माशयमहङ्काररूपं हृदयग्रन्थिम्। कर्मभिरेव ग्रथितम्। रिक्ता निर्विषया मतिर्येषाम्। रुद्धः प्रत्याहृतः स्रोतोगणः इन्द्रियवर्गो [8-]यैस्ते,[-8] नोद्ग्रथयन्ति। अरणं शरणम्॥ ३९॥

ननु ''ब्रह्मविदाप्नोति परम्'' (तैत्ति.उ.2-1) इति श्रुतेः कथं यतयो नोद्ग्रथयन्तीत्युच्यते? तत्राह **कृच्छ्र** इति। [9-]अप्लवेशां न प्लवस्तरणहेतुरीट् ईशो येषां तेषां[-9], महानिह तरणे कृच्छ्रः क्लेशः, ते ह्यसुखेन [10]योगादिना [11-]षड्वर्गनक्रम्[-11] इन्द्रियषड्वर्गग्राहं भवार्णवं तितीर्षन्ति तत्तस्मात्, उडुपं प्लवं [12]कृत्वा [13-]दुस्तरार्णं[-13] दुस्तरार्णवमित्यर्थः। अर्णशब्दे वकाराभाव आर्षः। यद्वा दुस्तरोदकरूपं व्यसनमित्यर्थः॥ ४०॥

**वीर.** एवमचिद्विकाराणामनित्यत्वमुक्तम् अथ पारमहंस्यचर्ययेत्युपक्षिप्तं प्रकृति [14]प्राकृतविलक्षणस्य नित्यस्यात्मस्वरूपस्य भगवदात्मतत्त्वेनानुसन्धानमाह - **तदिति**। तत्तस्मात् हे नरेन्द्र! असवः प्राणाः धिषणात्मशब्देन ज्ञानद्वारभूतं मन उच्यते, देहेन्द्रियप्राणमनोभिरावृतानां देहाद्यात्मकानामित्यर्थः। तस्थुषां स्थावराणां, जगतां जङ्गमानां च, क्षेत्रविदः क्षेत्रज्ञाः, स्थावर जङ्गमान्त

---

1--1. Va omits 2--2. B, J, V, Va omit 3. A, B, J, V °क्ते 4. Va omits निकृष्ट 5--5. B, J, V, Va omit 6--6. A, B, J, Va omit 7--7. B, J, V, Va omit 8--8. A, B, J, Va omit 9--9. V अप्लवेशाः प्लवः तरणहेतुः ईशो येषां ते न भवन्तीति तथा। 10. V °व्य° 11--11. B, J, V, Va omit 12. B, J, V, Va omit कृत्वा 13--13. A, B, J, Va omit 14. A, B, T omit प्राकृत

स्था जीवाः, तपति अन्तरात्मतया नियच्छतीति तपः, तस्य भावस्तत्ता, तया जीवान्तरात्मतया यः हृदि स्थितः प्रत्यक् स्वस्मै भासमानः, अनेन पराचोऽचेतनाद्वैलक्षण्यम् [1]उक्तम्। विष्वगाविः विष्वक् सर्वतः आविः प्रकाशमानः स्वरूपेण गुणैश्च व्यापक इत्यर्थः, अनेन जीववैलक्षण्यमुक्तम्। भगवान् पूर्णषाड्गुण्यः, अनेनोभयवैलक्षण्यमुक्तं चकास्ति स भगवानहमस्मीत्यवेहि भगवदात्मकोऽहमस्मीति बुद्ध्यस्वेत्यर्थः। यद्वा देहेन्द्रियप्राणमनोभिरावृतानां स्थावरजङ्गमदेहस्थचेतनानां यः क्षेत्रवित्ते अहङ्कार ममकारास्पदे शरीरवित्ते ते पातीति क्षेत्रवित्तपः तस्य भावस्तत्ता, तस्य जीवनरूपतया परागर्थविलक्षणः प्रत्यग्भूतो हृदि चकास्ति तं जीवात्मानं स भगवानस्मीत्यवेहि भगवदात्म कोऽहमिति बुद्ध्यस्वेत्यर्थः, "तत्त्वमसि" (छान्दो.उ.6-8-7) "अयमात्मा ब्रह्म" (बृह.उ.2-5-19) इत्यादि-वदत्र सामानाधिकरण्येनानुसन्धाननिर्देशः शरीरविषयबुद्धिशब्दादीनां शरीरिपर्यन्तत्वमाकृतिनयेन खण्डो गौरित्यादिवद्बोध्यम्॥ ३७॥

ननु भगवतः क्षेत्रज्ञशरीरत्वेन तद्रूपतयावस्थितौ क्षेत्रज्ञगतदोषप्रसक्तिः, मैवमित्याह - **यस्मिन्निति**। यस्मिन् क्षेत्रज्ञरूपे मायाविवेकविधुतिः मायायाः सकाशाज्जीवपरयोः विवेकः, तस्य विधूननहेतुः विवेकज्ञानविरोधिसदसदात्मतया कार्यकारण रूपेण इदं देवमनुष्यादि नानाविधरूपजातं स्रजि [2-]सर्पबुद्धिरिव विभाति, स्रजि वा इत्यत्र वाशब्दः[-2] इवाऽर्थः, जीवतादात्म्येन प्रतिभातीत्यर्थः। तं नित्यमुक्तपरि[3]शुद्धविबुद्धतत्त्वं स्वतः प्रकृति[4]सम्बन्धरहितस्वप्रकाशस्वरूपं तथापि प्रत्यूढकर्मकलिलप्रकृतिं, प्रत्यूढम् अनादितया रूढमूलं, यत्कर्म तेन कलिला मिश्रा प्रकृतिर्यस्य तं स्वसंसृष्टकर्ममिश्रवासनमित्यर्थः प्रपद्ये अनुसन्दधे। यथा नृसिंहो भगवान् श्वेत इति नृसिंहमूर्तेः भगवतः श्वेतत्वं विग्रहद्वारकं न त्वव्यवधानेन एवं क्षेत्रज्ञरूपस्य भगवतः क्षेत्रज्ञद्वारैव कर्मसम्बन्धाज्ञानादिकं न त्वव्यवधानेनेत्यर्थः॥ ३८॥

एवं क्षेत्रज्ञशरीरत्वेनावस्थानं निर्दोषत्वं चोक्तम्, अथ स्वेन रूपेनावस्थितिमाह - **यत्पादेति**। यद्वा तुभ्यमु[5]पदिष्टं भगवद्भक्तियोगं सर्वेऽपि मुमुक्षवः अनुतिष्ठन्ति अतस्त्वमपि तमेवानुतिष्ठेत्याह - **यत्पादेति**। रिक्तेषु भगवद्व्यतिरिक्तेषु मतिः रिक्तमतिः अभगवदात्मकत्वबुद्धिर्वा, न विद्यते रिक्तमतिर्येषां ते न रिक्तमतयः, तमेव मन्वाना इत्यर्थः। निरुद्धस्रोतोगणाः निरुद्धः प्रत्याहृतः स्रोतोगणः इन्द्रियवर्गो यैस्ते, सन्तः साधवः यस्य भगवतः पादपङ्कजयोः पलाशानीवाङ्गुलयस्तेषां विलासः कान्तिः तस्य भक्त्या कर्म च आशयश्च कर्माशयं [6]आशयो वासना ग्रथितं स्वसम्बद्धमुद्ग्रथयन्ति [7]मोचयन्ति। तस्मात्त्वमपि तमेवारणम् ऋगतौ करणे ल्युट् स्वप्रापकमित्यर्थः। वासुदेवं भजस्व भगवद्भक्तिमन्तरेण संसारार्णवो दुस्तरः॥ ३९॥

---

1. A, B, T omit उक्तम्  2--2. A, B, T omit  3. A, B, T ॰शु॰  4. A, B, T add कर्म  5. A, B, T ॰षृ॰  6. A, B, T omit आशयो
7. A, B, T नाशयन्ति

अतस्तमेव भजस्वेत्युपसंहरति - **कृच्छ्र** इति। अप्लवेशा ईश्वराख्यप्लवरहिताः षड्वर्गनक्रं षडिन्द्रियवर्गग्राहं भवार्णवमिह दुःखेन ये [1]तितीर्षयन्ति [2-]तर्तुमिच्छन्ति[-2] तेषां महान् कृच्छ्रः क्लेशः तत्तस्मात् त्वं हरे भगवतः भजनीयं सुखाराध्यमङ्घ्रिमुडुपं प्लवं कृत्वा व्यसनं दुःखात्मकं दुस्तरार्णं तर्तुमशक्यं भवार्णवम् [3-]अर्णशब्दे वकाराभाव आर्षः[-3] उत्तरपारं गच्छ ॥ ४० ॥

**विज.** जगतो हरिणा बुद्धिपूर्वं सृष्टत्वात् तत्प्रसादेन तस्य बन्धनिवृत्तिः, अन्यथोक्तानर्थ एवेत्याहमनोमात्रमिति। इदं प्रत्यक्षप्रमाणसिद्धं, विश्वं ब्रह्मादिस्तम्बपर्यन्तं हरेर्मनसा मितं निर्मितं त्रातं रक्षितं मीयते संह्रियते "मी-हिंसायाम्" इति धातोः अमात्रे अपरिच्छिन्ने मनसि स्थितत्वाद्वा मनोमात्रम्। तदुक्तम्- "मनोमात्रं हरेर्यस्मान्मनसा मीयते जगत्" (तन्त्रसारे) इति। अत्र दृष्टान्तमाह- यथेति। केयं क्रिया नामेति तत्राह- क्रिया चेति। स्वप्ने हरेरिच्छया जाग्रद्दृष्ट करितुरगादिवासनया निर्मिता मात्रन्ति प्रवर्तन्ते इति वासनामात्रम्। "व्याप्ते मनसि विष्णोश्च स्थितत्वाद्वासनामयम्" (तन्त्रसारे) इति। वस-आच्छादन इति धातोः ईश्वरेच्छयाऽऽच्छाद्यमानत्वाद्वासनामयं "वस-आच्छादनेत्यस्माद्धातोर्वा वासनामयम्" (तन्त्रसारे) इति च। यत एवं हरेरिच्छाधीनं जगदतो हरेरनीहायां सृष्टिव्यापाराहित्यावस्थायां सत्त्वादिगुणसाम्यलक्षणायां लीयते। स्वस्वकारणानु-प्रवेशपूर्वकमव्यक्ततामाप्नोति, न तु शून्यतां तदेतदाह- अनीहायामिति। [4]यतो हरेरिच्छाधीना जगतः स्थितिः "अतो विष्णोरनीहायां लीयते सकलं जगत्" (तन्त्रसारे) इति च॥ (क)

ननु मुक्तैः कीदृशो विष्णुः प्राप्यत इति तत्राह- **आत्मेति**। स्वयंज्योतिः नित्याऽविलुप्तप्रकाशः साक्षात्तुर्य आत्मा जाग्रदाद्यवस्थानुभविनो जीवात्मनो भिन्नो विष्णुरनी[5]हया अवस्थितस्तु जाग्रद्व्यापारशून्य एव व्याप्तरूपो प्रसिध्यति प्राप्यते। मुमुक्षुभिरिति शेषः [6-]इत्यन्वयः[-6]। "अनीहावस्थ एवासौ मुमुक्षुभिरवाप्यते" (तन्त्रसारे) इति च। फलमाह- एवमिति। जीवपरयोरेव मुक्तवि[7]धया स्वस्वामिभावं जानन् मुनिः भिदापरपर्यायामात्ममायां बन्धशक्तिं व्युदस्य उपरमेत् हरिमुपगम्य सुखलक्षणां रतिं प्राप्य निर्मूलितसंसारो भवेदित्यर्थः। "एवं विद्वान् बन्धशक्तिं व्युदस्य हरिमाप्नुते"। (तन्त्रसारे) "प्रकृतिर्भिदा च माया च भ्रमश्च" (तन्त्रसारे) इत्यभिधीयते। "बन्धशक्तिर्यया लोको बंभ्रमीत्यनिशं भुवि" (तन्त्रसारे) इति च॥ (ख)

अनीहावस्थ एव मुमुक्षुभिः प्राप्य इत्युक्तं, तत् स्पष्टमाचष्टे - **न यत्रेति**। निद्रा सुषुप्तिः, मूर्च्छा मोहः, अर्थदृग् जाग्रत्, अनुवृत्तिर्जीवन्मुक्तिः "अनुवृत्तिरिति प्राज्ञैर्जीवन्मुक्तिरुदीर्यते" (शब्दनिर्णये) इति च। एताः निद्राद्यवस्थाः यत्र न सन्ति स्वशक्तिव्यञ्जिता न भवन्ति। तद्विजितात्मनो मनोजयवतो मुमुक्षोः प्राप्यं ब्रह्मेत्यन्वयः॥ (ग)

---

1. T तितीरिषन्ति 2--2. T omits 3--3. A, B, T omit 4. Ma omits यतो 5. Ma °हायां 6--6. A, B omit 7. A, B °धस्व

ननु जीवात्मा तदुपजीव्यः परमात्मा च कथं ज्ञातव्य इत्याशङ्क्य तत्तत्त्वं विविच्योपदिशन्नाह-तत्त्वमिति। हे नरेन्द्र! यस्त्वमनयोः स्थावरजङ्गमयोः मध्ये विष्वगाधिर्नानादुःखस्सन् "एको जीवोऽसि" "स दुःखी" इति श्रुतिः। तत्त्वं हृदि स्थितमवेहि, "हृदि ह्येष आत्मा" (प्रश्न. उ. 3-6) इति श्रुतिः। अनेन जीवात्मनो देहे कुत्रावस्थानमिति शङ्का परिहृतेति ज्ञायते त्वं क इति तत्राह - सोऽस्मीति। योऽहं तव सदृशो जीवोऽस्मि तं मां ज्ञानान्महान् भवामीत्यवेहि। अनेन तारतम्यज्ञानमावश्यकमित्युक्तं भवति। अथ जीवस्वरूपज्ञानानन्तरमीश्वरज्ञानं प्रददामीत्याह- अथेति। यः क्षेत्रवित् क्षेत्रज्ञः सर्वान्तर्यामी सर्वस्य प्रत्यक् चकास्ति आभिमुख्येन प्रकाशते दुर्भगशरीरस्थोऽपि तन्मलाद्यलिप्ततया जीवव्यतिरिक्तो जीवस्यात्यन्तोपकारित्वेन साक्षित्वेनावभासते स भगवान् तुभ्यं सुखादिप्रदः श्रीनारायण इत्यवेहि। तं विशिनष्टि जगतामिति। देहश्चेन्द्रियाणि चासवः प्राणाश्च धिषणा बुद्धिश्चात्माहङ्कारश्चेत्येतैरावृतानां जगतां जङ्गमानां तस्थुषां स्थावराणां च तत्त्वं सर्वसत्ताप्रदत्वात्, तदुक्तम् "सर्वसत्ताप्रदत्वात्तु सर्वतत्त्वं हरिः स्मृतः। सर्वत्र विततत्वाद्वा सोऽहं त्वमिति चोच्यते। सर्वान्तरात्मकत्वात्तु न जीवात्मतया हरिः" (निर्णये) इति च। "अभिमान स्त्वहङ्कार आत्मा चेत्यभिधीयते"(शब्दनिर्णये) इति वचनात् तत्रात्माऽहङ्कारः "व्यवधानेनान्वयोऽपि योग्यतापेक्षया भवेत्" (शब्दनिर्णये) इति वचनात् सात्त्विकानां जीवपरभेदज्ञाने विशिष्टमुक्तिसाधने योग्यतामपेक्ष्य व्यवधानेनान्वयो युक्तः। अनेनेतरेषामभेदज्ञाने तमःसाधने योग्यतेति यथास्थितान्वय इति दर्शितम्। किञ्च तत्त्वज्ञानस्य गोपनीयत्वेन परोक्षत्वस्य देवप्रीतिहेतुत्वात् "परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः" (बृह. उ. 4-2-2) इति श्रुतेः। अतो यथापाठमेवार्थं वदतोऽसुरप्रकृतित्वान्न मोक्षशास्त्राधिकारिण इति बुद्ध्वा सद्भिस्तत्सङ्गः परिहर्तव्यश्चण्डालसङ्गवदिति तात्पर्यम्॥ ३७॥

ननु मायाकल्पित पञ्चभूतात्मदेहे ब्रह्मैव सुखदुःखे अनुभवति ब्रह्मैव संसरति ब्रह्मैव मुच्यत इत्याचार्योक्तेः। "विमुक्तश्च विमुच्यते" (कठ. उ. 5-5-1) इति श्रुतेश्चातो न स्वामिभृत्यभावेनात्र द्वयाङ्गीकारो युक्त इति तत्राह - यस्मिन्निति। इदं सत् पृथिव्यादिकम् असद्गगनादिकं जगत्, यस्मिन् भगवति आत्मतया निजस्वरूपतया विभातीति योऽयमयोगिराद्धान्तः स मायाविवेकविधुतिः माययोर्ज्ञानप्रकृत्यभिधेययो र्विवेकात् विचिर्-पृथग्भावे इति धातोः ज्ञानदेहो हरिः पञ्चभूतदेहो जीव इति पृथङ् निश्चितज्ञानाद्विधुतिः विध्वंसो यस्यायोगिराद्धान्तस्य स तथोक्तः। एतदेव दृष्टान्तेन स्पष्टयति स्रजीति। स्रजि मालाकृतौ रज्जावहिबुद्धिर्वा। अयं भावः- यथा रज्जुतत्त्वाज्ञानाद्रज्जौ सर्पज्ञानमुत्पन्नं गुरूपदेशात् सर्पण दर्वीशिरोलक्षण फणाद्यभावज्ञानाद्वा स्पर्शकार्कश्य ज्ञानाद्वा विधूयते तथा प्रमाणबाहुल्यदर्शनात् तत्त्वज्ञानोपदेष्ट्राचार्य वाक्याद्वा ब्रह्मणो जगदात्मत्वं विधूयते नित्यमुक्तत्वादिलक्षणानामनन्यसाधारणानां सत्वान्न ब्रह्मणः संसारो युक्त इति स्पष्टयन् यच्छब्देनोक्तं तच्छब्देन परामृश्य प्रपद्य इति क्रियापदेनान्वेति-तमिति। जीवव्यावृत्त्यर्थं

नित्यशब्दः प्रत्येकमभि सम्बध्यते[1]- नित्यमुक्तं नित्यपरिशुद्धं च नित्यविबुद्धं च यत्तत्त्वमनारोपितं रूपं तद्यस्य स च अत एव प्रत्यूढे निरस्ते कर्म पुण्यपापलक्षणम् अदृष्टं सत्त्वादिगुणकलिला प्रकृतिश्च येन स तथा तं, "यत्स्वरूपतया भातमज्ञानां गगनादिकं विवेकज्ञानिना रज्जौ सर्पमावद्विधूयते "तं नित्यमुक्तभावेन निरस्तप्रकृतिं भजेत्" (ज्ञानविवेके) "नभ्रान्तिर्जगतो दृष्टिर्न भ्रान्तिर्हरिदर्शनम्। अन्योऽन्यात्मतया दृष्टिर्भ्रान्तिरित्यवधार्यताम्॥ (शब्दनिर्णये) मायेति ज्ञाननाम स्यान्मायेति प्रकृतिस्तथा। ज्ञानं स्वरूपं विष्णोस्तु प्रकृतिर्न हरेस्तनुः॥ एवं विवेकिनो विश्वं ब्रह्मरूपेण नेष्यते (वाराहे) पञ्चभूतात्मकं देहं विष्णोः पश्यन्त्ययोगिनः॥ तथा न योगिराद्धान्तो ज्ञानदेहो यतो हरेः" (षाड्गुण्ये) इति प्रमाणबाहुल्यान्मायादि-शब्दानामुक्त एवार्थो न दुर्वादिकल्पित इति निरवद्यम्। सर्पमावत् सर्पज्ञानवत्॥ ३८॥

एवं विध संसारोच्छेदे कारणं हरेः सर्वोत्तमत्वज्ञानं भक्त्यविनाभूतमतो भक्तिरेव प्रधानमित्याह-यत्पादेति। यस्य पादपङ्कजयोः पत्रायमाणास्वङ्गुलीषु तत्तत्त्वं नोद्ग्रथयन्ति, कुत इति हेतुगर्भविशेषणमाह- विरुद्धेति। विरुद्धमार्गाः स्रोतोगुणाः संसारगुणा येषां ते तथोक्ताः संसारगुणानां विरुद्धत्वेन हेयत्वेन प्रतीयमानत्वादित्यर्थः संसारगुणानां विरुद्धत्वेन प्रतीतौ किं कारणमिति चेन्न, नैजः सर्वगुणोत्कर्षस्वभावो दुस्त्यजः। तदुक्तम् - "नैजः सर्वगुणोत्कर्षः सर्वेभ्यो महदुच्यते" (शब्दनिर्णये) इति च। अनेन तत्त्वज्ञानिषु तत्तद्गुणोत्कर्षो महत्त्वकारणमित्युक्तं भवति, द्विमतौ च ज्ञानदौर्बल्यं कारणम्। "अनाद्यन्तं परं ब्रह्म न देवा ऋषयो विदुः। एकस्तद्वेद भगवान् प्रभुर्नारायणो विराट्॥" (मोक्षधर्मेषु) इति। अनेन श्रीनारायणादृते सर्वेषामिति द्वामत्यं सम्भाव्यत इति सूचितम्। अतस्त्वं तं वासुदेवमरणं शरणं व्रजेत्यन्वयः॥ ३९॥

संसारोत्तारहेतुत्वात् भक्तेरेव सर्व गुणोत्कृष्टत्वमित्यभिप्रेत्याह - कृच्छ्र इति। अप्लवेशा भक्तिलक्षणतरी रहिताः षड्वर्ग एव नक्रो यस्मिन् स तथा तं भवार्णवं ये तितीर्षन्ति तर्तुमिच्छन्ति तेषामिह महान् कृच्छ्र इति यस्मात्तस्मात्त्वं हरेर्भजनीयमङ्घ्रिमुडुपं नावं कृत्वा व्यसनं विविधाऽऽपद्युक्तं दुस्तरार्णवं, ज्ञाननावं विना तर्तुमशक्यं, संसारसमुद्रमुत्तरेत्यन्वयः॥ ४०॥

## मैत्रेय उवाच

**स एवं ब्रह्मपुत्रेण कुमारेणात्ममेधसा।**

**दर्शितात्मगतिः सम्यक्प्रशस्योवाच तं नृपः॥ ४१॥**

---

1. B, M. Ma सम्पद्यते

[1-]राजोवाच[-1]

**कृतो मेऽनुग्रहः पूर्वं हरिणाऽऽर्तानुकम्पिना।**

**तमापादयितुं ब्रह्मन् भगवन् यूयमागताः ॥ ४२ ॥**

**निष्पादितश्च[2] कार्त्स्न्येन भगवद्भिर्[3]घृणालुभिः।**

**[4-]साधूच्छिष्टं[-4] हि मे सर्वमात्मना सह किं ददे ॥ ४३ ॥**

**प्राणा दाराः[5] सुता ब्रह्मन् गृहाश्च[6] सपरिच्छदाः।**

**राज्यं[7] बलं मही कोश इति[8] सर्वं निवेदितम् ॥ ४४ ॥**

**श्रीध० स** इति। आत्ममेधसा ब्रह्मविदा, दर्शिता आत्मनो गतिस्तत्त्वं यस्मै सः ॥ ४१ ॥

**कृत** इति। ब्रह्मन्निति सम्बोधनं प्राधान्यादेकस्य। यूयमित्युक्तिः सर्वान् प्रति ॥ ४२ ॥

**निष्पादित** इति। आत्मना देहेन सह सर्वं राज्यादिकं मदीयं साधूच्छिष्टं साधुभिः स्वीयं सन् मह्यं प्रसादरूपेण दत्तमतस्तत्र मम स्वत्वाभावात् गुरुदक्षिणार्थं किं ददे। न हि पित्रा दत्तं मोदकादि तस्मै दानरूपेण प्रत्यर्प्यते ॥ ४३ ॥

निवेदनं तु तदीयस्यैव तस्मै[9] समर्पणं यथा भृत्यो राज्ञे सेवादिरूपेण[10] ताम्बूलादिकमर्पयति तथा मयापि सर्वं निवेदितं स्वीकुरुतेत्याह - **प्राणा** इति ॥ ४४ ॥

**वीर०** आत्ममेधसा ब्रह्मविदा, ब्रह्मपुत्रेण सनत्कुमारेण दर्शिता आत्मनो गतिस्तत्त्वं यस्य स नृपः पृथुः सम्यक् प्रशंसां कृत्वा तं कुमारमुवाच ॥ ४१ ॥

आर्तानां तापत्रयातुराणाम् अनुकम्पिना हरिणा पूर्वं मे मह्यमनुग्रहः कृतः। हे ब्रह्मन्! भगवन्! तमनुग्रहमापादयितुं निष्पादयितुं यूयमत्रागताः ॥ ४२ ॥

दयालुभिर्भवद्भिः [11-]युष्माभिः[-11] यत्समीहितं कार्त्स्न्येन निष्पादितं ब्रह्मोपदेष्ट्रे तुभ्यं मदीयं किं देयमस्तीत्याह- साधूच्छिष्टमिति।

---

1--1. M, Ma, Ms पृथुरुवाच 2. M, Ma, Ms °तच्च; V °तन्तु 3. W °द्भिः कृपां 4--4. M, Ma, Ms साधु दत्तं 5. W रायः 6. M, Ma, Ms ग्रहाः 7. M, Ma, Ms रायो 8. V °मिति 9. B, J, V, Va omit तस्मै 10. V सेवारू° 11--11. A, B, T omit

आत्मना देहेन सह[1] सर्वं मे मदीयं साधूनामुच्छिष्टं साधूनामनुग्रहलब्धमित्यर्थः। अतो भवदनुग्रहाल्लब्धं भवद्भ्यः किं ददे गुरुदक्षिणार्थं किं ददे? न ह्यनुग्रहीत्रा दत्तं पुनस्तस्मै दीयत इत्यर्थः ॥ ४३ ॥

यद्यप्येवं तथापि राज्ञे भृत्येनेव मया निवेदितं स्वीकुरुतेत्याह- **प्राणा** इति। प्राणाः असवः, रायः धनानि, सपरिच्छदाः सोपकरणा गृहा राज्यं बलं महीकोशः मह्यात्मकः कोशः पृथ्व्याः[2] पद्माकारत्वात् कोश इत्युक्तम्। यद्वा कोशः रत्नभाण्डादिरूपः, रैशब्दस्तद्व्यतिरिक्तधनपरः, इति शब्दः प्रकारे। एवं विधमन्यत्सर्वमपि निवेदितं तुभ्यं मयेति शेषः ॥ ४४॥

**विज.** इतः परमुपदेष्टव्यांशो नास्त्यतः परं राज्ञा किमुक्तमत्राह- **स एवमिति**। आत्मनो हरेर्मेधा ज्ञानं यस्य स तथा तेन मनोयोगवता वा॥ ४१ ॥

किमवोचत्तत्राह - **कृत** इति॥ ४२ ॥

तदपूरणे भगवदागमनेनापि किं प्रयोजनमिति शङ्कांशो नास्तीत्याशयेनाह - **निष्पादितमिति**। घृणालुभिः दयाशीलैः एवमुपकर्तृभ्यो युष्मभ्यं कापि गुरूदक्षिणा मया दातव्या तद्गुरुदक्षिणालक्षणं किं धनमात्मना देहेन सह ददे ददामि ? न मम किञ्चित्स्वाधीनमस्तीत्यर्थः। राज्यादिकमस्ति चेत्सर्वं तत्साधुभ्यो दत्तं तदधीनमहं कथं दास्यामि परकीयदानात् चौर्यमापद्यत इति भावेनोक्तं साधुदत्तमिति॥ ४३ ॥

ननु तथापि साधुभिरात्मसत्कृतं राज्यादिकं तद्दातव्यमिति चेत् सत्यं, तद्दातुं योग्यं चेद्दास्यामीत्याह - **प्राणा** इति। रायो वित्तानि॥ ४४॥

**सैनापत्यं[3] च राज्यं च दण्डनेतृत्वमेव च।**
**सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति॥ ४५ ॥**

***स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च।**
**तस्यैवानुग्रहेणान्नं भुञ्जते क्षत्रियादयः ॥ ४६ ॥**

**यैरीदृशी भगवतो गतिरात्मवादे एकान्ततो निगमिभिः प्रतिपादिता नः।**
**तुष्यन्त्वदभ्रकरुणाः स्वकृतेन नित्यं को नाम तत्प्रतिकरोति विनोदपात्रम्॥ ४७ ॥**

---

1. W omits सह 2. A, B, T omit पृथ्व्याः 3. M, Ma, V से° * This verse is not found in M, Ma

[1-]मैत्रेय उवाच[-1]

**त आत्मयोगपतय आदिराजेन पूजिताः ।**

**शीलं तदीयं शंसन्तः खेऽभूवन्मिषतां नृणाम् ॥ ४८ ॥**

**श्रीध.** आत्मनः स्वत्वाभावं प्रपञ्चयति - **सैनापत्यं चेति** द्वाभ्याम् । [2-]दण्डो दमः तन्नेतृत्वम्[-2] ॥ ४५ ॥

**स्वमिति** । वस्ते परिधत्ते अन्नमात्रं केवलं भुञ्जते न तु दाने स्वतन्त्राः ॥ ४६ ॥

सत्यपि स्वत्वे सर्वस्वेनापि न गुरोः प्रत्युपकर्तुं शक्यमित्याह - **यैरिति** । आत्मवादेऽध्यात्मविचारे एकान्ततः [3]निश्चयेन निगमिभिर्वेदविद्भिः ते नित्यमनल्पकरुणाः स्वकृतेनैव दीनोद्धरणकर्मणा तुष्यन्तु, को नाम तत्कृतमुपकारं प्रति स्वयमुपकरोत्युदपात्रमञ्जलिं विना । मया अञ्जलिरेव तेभ्यो बद्ध इत्यर्थः । यद्वा विनोदपात्र[4]मुपहासास्पदम् । प्रत्युपकारे प्रवृत्तो जनाना[5]मुपहासास्पदं भवेदित्यर्थः ॥ ४७ ॥

**त इति** । खेऽभूवन्नाकाश [6-]मार्गेणोद्गताः[-6] ॥ ४८ ॥

**वीर.** ननु मद्योग्यमेव मह्यं समर्पणीयं तत्राह । **सैनापत्यं** सेनानायकत्वं दण्डनेतृत्वं दण्डनायकत्वं तथा सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥ ४५ ॥

एतदेवोपपादयति । ब्राह्मणः स्वमेव स्वीयमेवान्नं भुङ्क्ते स्वीयमेव वस्त्रादिकं वस्ते परिधत्ते ददाति च क्षत्रियादिभ्यः तस्यैव ब्राह्मणस्यैवानुग्रहेण लब्धमन्नं क्षत्रियादयो भुञ्जते ॥ ४६ ॥

सत्यपि स्वत्वे सर्वस्वेनापि न गुरोः प्रत्युपकर्तुं शक्यमित्याह - **यैरिति** । आत्मवादे अध्यात्मविचारे एकान्ततो निश्चयेन निगमिभिः निगमानुसारिभिः यैर्युष्माभिः ईदृशी (गतिः) दुस्तरमहाव्यसनात्मकसंसारार्णवनिस्तरणोपायभूता नः अस्मभ्यं प्रतिपादिता ते नित्यमनल्पकरूणाः भवन्तः स्वकृतेन आर्तोद्धरणकर्मणा तुष्यन्तु । को नाम त्वत्कृतमुपकारं प्रति स्वयमुपकरोति उदपात्रं तोयाञ्जलिं विना उदकप्रदानपूर्वकमञ्जलिबन्धनमेव तस्य प्रत्युपकार इत्यर्थः ॥ ४७ ॥

आत्मयोगं पान्ति अनुष्ठानानुष्ठापनाभ्यामित्यात्मयोगपतयस्ते सनकादयः आदिराजेन पृथुना पूजितास्सन्तः तदीयं पृथोः सम्बन्धि शीलं प्रशंसन्तः नृणां मिषतां पश्यतां सतां खे अभूवन् आकाशमारूढा इत्यर्थः ॥ ४८ ॥

---

1--1. W omits 2--2. B, J, V, Va omit 3. A adds अपि 4. V °म° 5. V °म° 6--6. V मार्गे गताः

**विज.** युष्मभ्यं सर्वं निवेदितमिति मोहादुक्तं तत्क्षन्तव्यं सर्वस्य युष्मदीयत्वान्न मया दातव्यमित्याह- **सैनापत्य** मित्यादिना ॥ ४५,४६ ॥

किं बहुनानुलापेनेदमेव भवदर्हणमित्याह- **यैरीदृशीति**। निगमिभिः वैदिकैरात्मवादे वेदान्ते एकान्ततो मुख्यत्वेन निर्णीतत्वात् यैर्भवद्भिरीदृशी हरेर्गतिरस्माकं प्रतिपादिता ते यूयं स्वकृतेन तुष्यध्वमित्यन्वयः। किं नीरसमधुरवचनेनेत्युक्तं तुष्यन्त्विति ॥ ४७ ॥

तत्प्रियवचनान्ते तैः किमकारीत्यत्राह - **त आत्मेति**। आत्मयोगस्याध्यात्मयोगस्योपदेष्टृत्वेन पतयः, मिषतां पश्यतां, खे आकाशे ॥ ४८ ॥

**वैन्यस्तु[1] धुर्यो महतां संस्थित्याऽध्यात्मशिक्षया।**
**आप्तकाममिवात्मानं मेन आत्मन्यवस्थितः ॥ ४९ ॥**

**कर्माणि च यथाकालं यथादेशं यथाबलम्।**
**यथोचितं यथावित्तमकरोद् ब्रह्मसात्कृतम् ॥ ५० ॥**

**फलं ब्रह्मणि विन्यस्य[2] निर्विषङ्गः समाहितः।**
**कर्माध्यक्षं च मन्वान आत्मानं प्रकृतेः परम् ॥ ५१ ॥**

**गृहेषु वर्तमानोऽपि स साम्राज्यश्रियाऽन्वितः[3]।**
**नासज्जतेन्द्रियार्थेषु[4] निरहम्मतिरर्कवत् ॥ ५२ ॥**

**एवमध्यात्मयोगेन कर्माण्यनुसमाचरन्।**
**पुत्रानुत्पादयामास पञ्चार्चिष्यात्मसम्मितान्[5] ॥ ५३ ॥**

**विजिताश्वं[6] धूम्रकेशं[7] हर्यक्षं[8] द्रविणं वृकम्।**
**सर्वेषां लोकपालानां दधारैकः पृथग्गुणान्[9]।**
**गोपीथाय जगत्सृष्टेः काले स्वे स्वेऽच्युतात्मकः ॥ ५४ ॥**

1. V वैन्योऽपि 2. Ms, V सन्न्यस्य 3. V °या युतः 4. W नाऽम 5. A, B, G, I, J, M, Ma, Ms, T, V सम्म° 6. M, Ma धूम 7. Ms केतुं 8. V हर्यश्वं 9. A, B, G, I, J, T, V पृथु गुंणान्

**मनोवाङ्मूर्तिभिः**[1] **सौम्यै र्गुणैः संरञ्जयन् प्रजाः ।**
**राजेत्यधान्नामधेयं सोमराज इवाऽपरः ॥ ५५ ॥**

**सूर्यवद्विसृजन् गृह्णन् प्रतपंश्च भुवो वसु ।**
**दुर्धर्षस्तेजसेवाऽग्निः महेन्द्र इव दुर्जयः ॥ ५६ ॥**

**श्रीध० वैन्य** इति । धुर्यो मुख्यः अध्यात्मशिक्षया या संस्थिति रेकाग्रता तथाऽऽत्मनि [2-]स्वस्वरूपे[-2] अवस्थित स्सन् मेने ॥ ४९ ॥

**कर्माणीति** । ब्रह्मसात्कृतं ब्रह्मण्यर्पितं यथा भवति तथा ॥ ५० ॥

**फलमिति** । निर्विषङ्गः कर्मस्वनासक्तः कर्माध्यक्षं कर्मसाक्षिण मुदासीनं मन्वानोऽकरोदिति पूर्वेणैवान्वयः । नासज्जतेत्युत्तरेण वा ॥ ५१,५२ ॥

**एवमिति** । अर्चिषि भार्यायाम् ॥ ५३,५४ ॥

**मन** इति । सोमश्चाऽसौ राजा च स इव ॥ ५५ ॥

भुवो वसु धनं गृह्णन् विसृजंश्चासौ सूर्यवत् राज्ञः प्रतपन माज्ञाकरणम् । अग्निरिव [3]तेजसा दुर्धर्षः ॥ ५६ ॥

**वीर.** धुर्यः श्रेष्ठो वैन्य स्तु महतां सनत्कुमारादीना मध्यात्मशिक्षया हेतुभूतया या संस्थिति र्निष्ठा तथा आत्मन्येवा वस्थितः परमात्मोपासननिष्ठः आत्मान माप्तकामं अवाप्तसमस्तकाम मिव मेने ॥ ४९ ॥

तथा परमात्मोपासनाङ्गत्वेन देशकालादिक मनतिक्रम्य कर्माणि वर्णाश्रमोचितानि, ब्रह्मण्यर्पितं यथा भवति तथाऽकरोत् ॥ ५० ॥

एव मुपासनाङ्गत्वेन कर्मयोगमकरोदित्युक्तं, तच्च कर्मयोगं फलसङ्गकर्तृत्वत्यागात्मयाथात्म्यानुभवपूर्वक मकरोदित्याह - **फल** मिति । ब्रह्मणि फलं सन्न्यस्य फलस्य ब्रह्मायत्तता मनुसन्धाय न तु स्वानुष्ठीयमान कर्मायत्ततामित्यर्थः । तथा निर्विषङ्गः ममेदं कर्मेति मतिरहितः । अनेन सङ्गत्याग उक्तः । कर्माध्यक्षं कर्मसु कर्तृत्वाभिमानि न मात्मानं प्रत्यगात्मानं प्रकृतेः परं मन्वानः, कर्तृत्वाभिमानः प्रकृतिसंसर्गकृतो न तु स्वभावत इत्येवं[4] मन्वान इत्यर्थः । अकरोदिति पूर्वेणाऽन्वयः ॥ ५१ ॥

---

1. A, B, G, I, J, T वाग्वृत्तिभिः 2--2. B, J, V, Va omit 3. V omit तेजसा 4. T °व°

स पृथुः गृहेषु भोगस्थानेषु वर्तमानोऽपि साम्राज्यश्रियाऽन्वितोऽपि सन्निहित भोग्य[1] भोगोपकरणोऽपि निरहंमतिः देहात्मभ्रमरहितः अत एव इन्द्रियार्थेषु व्याप्नुवन्नपि[2] नाऽसज्जत नाऽसक्तोऽभूत्, यथा सूर्यः स्वप्रभया पङ्कादिषु व्याप्नुवन्नपि तैर्न लिप्त स्तथेत्यर्थः ॥ ५२ ॥

एव मध्यात्मयोगेन भगवद्भक्तियोगेन अध्ययनेन वसतीतिवद्धेत्वर्थे तृतीया, अध्यात्मयोगार्थ मित्यर्थः । यद्वा प्रकृतिविविक्तात्मयाथात्म्यज्ञानयोगपूर्वकं, कर्माणि अनु देशकालानुसारेण समाचरन् अर्चिषि अर्चिर्नाम्न्यां भार्याया मात्मसम्मिता नात्मतुल्यान्, सम्मताननितिपाठे आत्मानुकूलानित्यर्थः । पुत्रानुत्पादयामास ॥ ५३ ॥

पुत्रान्प्रति निर्दिशति - **विजिताश्व** मित्यर्धेन । विजिताश्वादीन् पुत्रा नित्यन्वयः । सर्वेषा मिन्द्रादीनां पृथक् प्रत्येकं योऽयोऽसाधारणो गुणः तान् सर्वानेक एव अच्युतात्मनः अच्युतस्य परमात्मनो या जगत्सृष्टिः तस्या गोपीथाय रक्षणाय स्वे स्वे काले उचितकाले दधार दधौ ॥ ५४ ॥

मनोवाक्कायैः सौम्यै र्गुणैश्च प्रजाः संरञ्जयन् राजेति नामधेय मधात् दधार । अपरः सोमराज इव सोमश्चाऽसौ राजा च सोमराजः स इव लोकरञ्जनात् सोमश्चन्द्रो राजेति नाम यथाऽधात् तथेत्यर्थः ॥ ५५ ॥

लोकपालासाधारणगुणान् उचितकालेष्वेक एवाधादित्युक्तम् । तदेवोपपादयति सूर्यवदित्यादिना यावदध्यायसमाप्ति । भुवः वसु धनं गृह्णन् विसृजन्नसौ सूर्य इव प्रातः प्रतपन् आज्ञां कुर्वन् तेजसा अग्नि रिव दुर्धर्षः परै रभिभूवितु मशक्यः महेन्द्र इव दुःखेनाऽपि जेतु मशक्यः ॥ ५६ ॥

**विज.** पृथुना तेभ्यः समग्रानुग्रहः प्राप्त इत्यस्य लक्षण माह - वैन्य इति । महतां धुर्यः धूर्वोढा संस्थित्या सम्पूर्णयाऽध्यात्म शिक्षया परमात्मतत्त्वज्ञानाऽऽदानलक्षणया, इव शब्द एवाऽर्थे ॥ ४९ ॥

तस्य कर्मकरणप्रकार माह - **कर्माणीति** ॥ ५० ॥

निर्विषङ्गः कर्मफलेष्वनासक्तः प्रकृतेः परमात्मानं श्रीहरिं कर्मणा मध्यक्षं साक्षिणं मन्वानः ॥ ५१-५२ ॥

विषयासक्त्या वर्तमानस्य पुत्रानुत्पादनेन स्वपुरराज्यरक्षणपुण्यप्राप्तिः कथ मत्राह - **एवमिति** । अर्चिषि भार्यायाम् ॥ ५३ ॥

---

1. A, T omit भोग्य 2. B, W omit व्याप्नुवन्नपि

एवं सन्न्यस्तसर्वकर्माऽपि राजा भगवदनुग्रहाऽविरोधेन तत्तत्कर्मणेन्द्रादि तत्तद्गुणान् दधारेत्याह - सर्वेषा मिति। जगत्सृष्टे र्गोपीथाय रक्षणाय अच्युते आत्मा मनो यस्य सोऽच्युतात्मकः ॥ ५४ ॥

राजशब्दं निर्वक्ति मनोवागिति। रञ्जना द्राजेति इन्द्रादिगुणधारणप्रकारं विविच्य वक्ति - **सोमराज** इत्यादिना ॥ ५५ ॥

वसु जलं "वसुरत्नं जलं रश्मि र्वसुर्देवो विभावसुः, इत्यभिधानम् ॥ ५६ ॥

**तितिक्षया धरित्रीव द्यौरिवाभीष्टदो नृणाम्।**
**वर्षति स्म यथाकामं[1] पर्जन्य इव तर्पयन् ॥ ५७ ॥**

**समुद्र इव दुर्बोधः सत्येनाऽचलराडिव[2]।**
**धर्मराडिव शिक्षाया मैश्वर्ये[3] मघवानिव ॥ ५८ ॥**

**कुबेर इव कोशाढ्यो गुप्तार्थो वरुणो यथा।**
**मातरिश्वेव सर्वात्मा बलेन महसौजसा[4] ॥ ५९ ॥**

**अविषह्यतया देवो भगवान् भूतराडिव।**
**कन्दर्प इव सौन्दर्ये मनस्वी मृगराडिव ॥ ६० ॥**

**वात्सल्ये मनुवन्नृणां प्रभुत्वे भगवानजः।**
**बृहस्पति र्ब्रह्मवादे आत्मवत्त्वे[5] स्वयं हरिः ॥ ६१ ॥**

***भक्त्या गोगुरुविप्रेषु विष्वक्सेनानुवर्तिषु।**
**ह्रिया प्रश्रयशीलाभ्या मात्मतुल्यः परोद्यमे ॥ ६२ ॥**

**कीर्त्योर्ध्व[6] गीतया पुम्भि स्त्रैलोक्ये तत्र तत्र ह।**
**प्रविष्टः कर्णरन्ध्रेषु स्त्रीणां रामः सतामिव ॥ ६३ ॥**

---

1. M, Ma, Ms कामैः, T कालं　2. A, B, G, I, J, Ms, T, V सत्त्वे°　3. A, B, G, I, J, M, Ma, Ms, T °माश्चर्ये हिमवानिव
4. A, B, G, I, J, T सहसौ°; M, Ma, Ms महतौ°　5. M, Ma, Ms त°　6. V °रु°
* विजय ध्वजीयव्याख्यानुसारेण "भक्त्या गोगुरु" इत्यारब्धः श्लोकार्धभागः एकश्लोकत्वेन मत्वा पृथकसंख्या दत्ता।

इति श्रीमद्भागवते महापुराणे अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
चतुर्थस्कन्धे द्वाविंशोऽध्यायः ॥ २२ ॥

**श्रीध.** तितिक्षयेति। द्यौः स्वर्ग इव ॥ ५७ ॥

**समुद्र इति।** समुद्रो यथा गाम्भीर्ये णैतावानिति न बुद्ध्यते तथाऽसौ अभिप्रायतो दुर्बोधः। अचलराट् मेरु रिव ॥ ५८ ॥

**कुबेर इति।** सर्वात्मा सर्वत्र सञ्चारशक्तिः बलादिभि र्मातरिश्वेव ॥ ५९ ॥

**अविषह्यतयेति।** भूतराट् श्रीरुद्रः ॥ ६० ॥

**वात्सल्ये इति।** अजो ब्रह्मेव। आत्मवत्त्वे जितेन्द्रियत्वे ॥ ६१ ॥

**भक्त्येति।** भक्त्यादिभिः परार्थोद्यमे चाऽऽत्मना स्वेनैव[1] तुल्यो निरुपमः ॥ ६२ ॥

**कीर्त्येति।** पुम्भिः सत्पुरुषैः रामः सीतापतिः यथा सतां कर्णरन्ध्रेषु प्रविष्टः ॥ ६३ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे
श्री श्रीधरस्वामिविरचितायां भावार्थदीपिकायां
व्याख्यायां द्वाविंशोऽध्यायः ॥ २२ ॥

**वीर.** तितिक्षया सहनेन धरित्रीव अपराधतितिक्षासमये धरित्रीतुल्यः नृणा मभीष्टदानावसरे द्यौः स्वर्ग इव पर्जन्य इव तर्पयन् नृणां कामान् वर्षति स्म ॥ ५६ ॥

समुद्र इव दुर्बोधः अपरिच्छेद्यः सत्त्वेन अचलराडिव मेरुरिव, शिक्षायां धर्मराडिव यम इव, ऐश्वर्ये हिमवानिव, हिम वान् हि रत्नाकरः। मघवानिवेति पाठे इन्द्रइव, वरुण इव गुप्तार्थः गुप्तमन्त्रः मातरिश्वा वायुरिव सर्वात्मा सर्वगः बलेन ओजसा महसा[2] च। बलं शरीरबलं, ओजः इन्द्रियबलं, महः देहकान्तिः ॥ ५८-५९ ॥

अविषह्यतया च भगवान् भूतराट् रुद्र इव सौन्दर्येण कन्दर्प इव मृगराट् सिंह इव मनस्वी स्वैरी ॥ ६० ॥

---

1. B, J, V, Va omit स्वेन  2. A, B, T omit महसा

मनुः स्वायम्भुवः, अजश्चतुर्मुखः, प्रभुत्वे ब्रह्मवादे वेदवादे बृहस्पति रिव आत्मवत्त्वे यदधीनं धनं स हि धनवान्, यदधीन आत्मा स आत्मवान् स्वाधीनत्वे इत्यर्थः ॥ ६१ ॥

गोषु गुरुषु विप्रेषु च विष्वक्सेनानुवर्तिषु च भक्तः ह्रियादिभिः परार्थोद्यमे आत्मतुल्यः निरुपमः ॥ ६२ ॥

त्रैलोक्ये तत्र तत्र पुरग्रामादि वासिभिः पुम्भिः ऊर्ध्वमुच्चैः गीतया कीर्त्या स्त्रीणां कर्णरन्ध्रेषु [1-]प्रविष्टः सतां कर्णरन्ध्रेषु[-1] रामः सीतापतिरिव ॥ ६३ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां द्वाविंशोऽध्यायः ॥ २२ ॥

**विज०** अचलराट् मेरुः ॥ ५७-५८ ॥

कोशाढ्यः धनाधिपतिः सर्वात्मा सर्वान्तरस्थः ॥ ५९ ॥

भूतराट् सदाशिवः, मृगराट् सिंहः ॥ ६० ॥

अजो ब्रह्मा आत्मतत्त्वे परमात्मतत्त्वज्ञाने अधिकदृष्टान्तोऽयम् ॥ ६१ ॥

अथाऽपि तमेवाह - भक्त्येत्यादिना। गवादिषु भक्त्या ॥ ६२ ॥

लज्जादिगुणेन पुम्भिः ऊर्ध्वगीतया उच्चैः कीर्तितया कीर्त्या स्त्रीणां कर्णरन्ध्रेषु प्रविष्टः, सतां कर्णरन्ध्रेषु प्रविष्टः परोद्यमे चाऽऽत्मतुल्यः स्वकार्यसमो राम इवे त्यन्वयः। "गुरुविषेषु भक्त्या च परेषां हितकृत्तया। प्रश्रयेण च कीर्त्या च पृथू राममनुव्रतः॥" (ब्रह्माण्डे) इति वचनात्। नेदं स्तुतिमात्रं, सत्य मित्यर्थः। "न गुरु र्नच धर्मोऽस्ति रामदेवस्य कुत्रचित्। तथाऽपि धर्मरक्षार्थं गुरुभक्तिमदर्शयत्॥ (वाराहे) इत्यतो रामस्य लोकसङ्ग्रहार्थं न त्वनवाप्तफल प्राप्त्यर्थं गुरु भक्त्यादिक मिति सन्तोष्टव्यम्॥ ६३ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां

टीकायां द्वाविंशोऽध्यायः ॥ २२ ॥

---

1--1. W omits

# त्रयोविंशोध्यायः

## मैत्रेय उवाच

दृष्ट्वाऽऽत्मानं प्रवयस मेकदा वैन्य आत्मवान्।
आत्मना वर्धिताशेष[1]स्वानुसर्गः प्रजापतिः ॥ १ ॥

जगत स्तस्थुष श्चाऽपि वृत्तिदो धर्मभृत्सताम्।
निष्पादितेश्वरादेशो यदर्थमिह [2]जज्ञिवान् ॥ २ ॥

आत्मजेष्वात्मजां न्यस्य विरहा द्रुदती मिव।
प्रजासु [3]विमनस्स्वेकः सदारोऽगात्तपोवनम् ॥ ३ ॥

[4]तत्राऽप्यदाभ्यनियमो वैखानस सुसम्मते।
आरब्ध [5]उग्रतपसि यथा स्वविजये[6] पुरा ॥ ४ ॥

कन्दमूलफलाहारः [7]शुष्कपर्णाशनः क्वचित्।
अब्भक्षः [8]कतिचित्पक्षान् वायुभक्ष स्ततः परम् ॥ ५ ॥

## श्री श्रीधरस्वामिविरचिता भावार्थदीपिका

त्रयोविंशे सभार्यस्य वने नित्यसमाधितः। विमान मधिरुह्याऽथ वैकुण्ठगति रीर्यते ॥

**दृष्ट्वेति** - प्रवयसं वृद्धं दृष्ट्वा तपोवन मगादिति तृतीयेनाऽन्वयः। [9]स्वकृतः अनुसर्गोऽन्नादिसर्गः पुरग्रामादिसर्गश्च वर्धितोऽशेष स्वानुसर्गो येन ॥ १ ॥

**जगत** इति। निष्पादित ईश्वरादेशः प्रजापालनादि र्येन जज्ञिवान् जातः ॥ २ ॥

**आत्मजा** मिति। आत्मजां पृथ्वीम्। विमनस्सु चिन्तातुरासु सदारः सभार्यः ॥ ३ ॥

---

1. M, Ma, V सा° 2. M, Ma जग्मि° 3. M, Ma विमनास्त्वेकः 4. M, Ma तत्रापाद्यात्मनियमो; Ms तत्राऽप्यध्यात्मनियमो; W तत्राऽप्युपात्त नियतो
5. W उग्रे 6. M, Ma, Ms °ष° 7. V तृण 8. V °चिन्मासान् 9. Va स्वी°

**तत्रेति** । अदाभ्या विघ्नै र्नाशयितु मशक्या नियमा यस्य, वानप्रस्थानां सुसम्मते उग्रे तपसि आरब्धः प्रवृत्तः, कर्तरि क्तः । यथा स्वस्य धरामण्डलस्य विजये पूर्वं महता यत्नेन प्रवृत्तः तथेति ॥ ४ ॥

उग्रं तपो दर्शयति - कन्दमूलेति त्रिभिः । क्वचित्कदाचित् ॥ ५ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं सर्वगुणसम्पन्नः [1]सम्पालितलोकः आसीदित्युक्तम् । अथात्मजेषु आरोपितराज्यभारः सभार्यः प्रविष्टतपोवनः कुमारोपदिष्टाध्यात्मयोगनिष्ठः प्राप्तपरमपुरुष आसीत् । तत्पत्नी तल्लोक मगादिति वदन् पृथुवृत्तान्त मुपसंहरति मुनिः **दृष्ट्वेति** । वैन्यः पृथुः आत्मवान् स्वर्गस्वाराज्यादीनां अल्पास्थिरत्व ज्ञानवान् आत्मानं प्रवयसं वृद्धं दृष्ट्वा तपोवन मगादित्युत्तरेणाऽन्वयः । आत्मना स्वेन वर्धितः अशेषः स्वानुसर्गः स्वविषयवर्त्यनुसर्गः व्यष्टिसर्गः यस्य ॥ १ ॥

जगतः जङ्गमस्य तस्थुषः स्थावरस्य चाऽपि वृत्तिदः जीविकाप्रदः सतां धर्मभृत् निष्पादितः ईश्वरादेशः प्रजापालनादिरूपो येन, यदर्थं यल्लोकपालनाद्यर्थं जज्ञिवान् जातः तत्सर्वं कृत्वेत्यर्थः ॥ २ ॥

आत्मजेषु आत्मजां पुत्रीकृतां भूमिं कथम्भूतां ? विरहा त्पृथो र्विश्लेषा द्रुदती मिव स्थितां विन्यस्य प्रजासु विमनस्सु चिन्तातुरासु सतीषु सदारः सभार्यः एकः असहायः ॥ ३ ॥

तत्र तपोवने उपात्ताः स्वीकृताः आत्मनो नियमाः शमदमादयो येन । 'अक्षोभ्यनियम, इति पाठे विघ्नै र्नाशयितु मशक्या नियमा यस्य । वैखानसानां वानप्रस्थानां सुसम्मते उग्रे तपसि आरब्धः प्रवृत्तः, कर्तरि क्तः । स्वस्य धरामण्डलस्य विजये पूर्वं यथा महता यत्नेन प्रवृत्तः ॥ ४ ॥

उग्रं तपो वर्णयति - **कन्दमूलेति** त्रिभिः । कन्दाद्यलाभे कदाचित्तृणा[2]द्यशनः, यद्वा कांश्चित्पक्षान् कन्दाद्याहारः, कांश्चिन् तृणाद्यशनः कांश्चिदब्भक्षः, ततः वायुभक्ष एव ॥ ५ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

योगेन देहत्यागप्रकारः पृथ्व्यादितत्त्वानां तदभिमानिदेवतानां च स्वस्वकारणप्रवेशलक्षणो लयश्च देहत्यागकाले चिन्तनीय

1. W omits सम्   2. A, B, T omit आदि

इति निरूप्यतेऽस्मिन्नध्याये। तत्रादौ पृथो स्तपसि प्रारम्भप्रकारं वक्ति - दृष्ट्वेत्यादिना। प्रवयसं गतवयसं स्थविर मात्मवान्, जितमनाः, सहितोऽनुसर्गः पुत्रपौत्रादिलक्षणो येन जनेन स सानुसर्गः, वधिताशेषः सानुसर्गः स्वराज्यकालीनजनो येन स तथा॥ १॥

आरामकरणेन स्थावरस्य वृत्तिदानम्॥ २॥

आत्मजां पृथिवीं राज्ञ एष्या द्वियोगा द्रुदती मिव स्थिताम्॥ ३॥

आत्मनियमः कन्दमूलाद्याहारः शरीर यात्रार्थ मापाद्यो येन स आपाद्यात्मनियमः, पुरा स्वविषये स्वराष्ट्रे उग्राणां दुष्टानां तपसि सन्तापे दण्डे यथा प्रारब्धः तथोग्रतपसि कायक्लेशादिलक्षणे प्रारब्ध इत्यर्थः॥ ४॥

आत्मनियमानाह - कन्देति॥ ५॥

**ग्रीष्मे पञ्चतपा[1] वीरो वर्षास्वासारषाण्मुनिः।**
**आकण्ठमग्नः शिशिरे उदके स्थण्डिलेशयः॥ ६॥**

**तितिक्षु र्यतवाग्दान्त ऊर्ध्वरेता जितानिलः।**
**आरिराधयिषुः कृष्ण मा[2]चरत्तप उत्तमम्॥ ७॥**

**तेन क्रमानुसि[3]द्धेन ध्वस्तकर्मामलाशयः।**
**प्राणायामैः संनिरुद्धषड्वर्गच्छिन्न[4]बन्धनः॥ ८॥**

**सनत्कुमारो भगवान् यदाहाऽध्यात्मिकं परम्।**
**योगं तेनैव पुरुष मभज त्पुरुषर्षभः॥ ९॥**

**भगवद्धर्मिणः साधोः श्रद्धया यततः सदा।**
**भक्ति र्भगवति ब्रह्मण्यनन्यविषयाऽभवत्॥ १०॥**

श्रीध. ग्रीष्मेति। चतुर्दिक्षु चत्वारोऽग्नय उपरि सूर्य इति पञ्चानां तपः सन्तापो यस्य सः पञ्चतपाः (पः) आसारं सहत इत्यासारषाट्, शिशिरऋतौ स्थण्डिलेशयो भूमिशयनः सर्वद्य॥ ६-७॥

1. W तपो 2. A, B, G, I, J, T, V, W °म° 3. Ms W रुद्धेन 4. W संशयः

**तेनेति**। तेन तपसा क्रमानुसिद्धेन शनैः प्राप्तेन ध्वस्तानि [1-]निरस्तानि[-1] कर्माणि यस्य अतः [2]अमल आशयः [3-]अन्तः करणं[-3] यस्य। छिन्नानि बन्धनानि वासना यस्य॥ ८-१०॥

**वीर.** ग्रीष्मे ऋतौ चतुर्दिक्षु चत्वारोऽग्नयः उपरि सूर्यः तेषां तप स्तापो यस्य, वर्षासु ऋतौ आसारं धारासम्पातं सहते इत्यासारषाट्, मुनिः सदा शुभाश्रयसंशीलनपरः शिशिरे ऋतौ [4]उदके आकण्ठमग्नः स्थण्डिलेशयः, दर्भादिभिः परिस्तृतभूमिशयः॥ ६॥

तितिक्षुः शीतोष्णादिसहः, यतवाक् मौनव्रतः दान्तः दमयुक्तः ऊर्ध्वरेता शान्तः, जितानिलः जितप्राणः एवम्भूतः कृष्णं भगवन्तं आरिराधयिषुः एवं विध मुत्तमं तप आचरत्॥ ७॥

क्रमानुरुद्धेन शनैश्शनैः प्राप्तेन [5]तेन तपसा ध्वस्तानि कर्माणि यस्य, प्राणायामैः अमल आशयोऽन्तः करणं यस्य, संनिरुद्धः प्रत्याहृतः षडिन्द्रियवर्गो येन, छिन्नानि बन्धनानि व्यसनानि यस्य॥ ८॥

सनत्कुमारोऽयं उत्कृष्टमाध्यात्मिकं योग माह तेनैव योगेन पुरुषर्षभः पृथुः पुरुषं परमपुरुषमभजत्॥ ९॥

भगवद्धर्मिणः निवृत्तिधर्मेण श्रद्धया यततः यत्नं कुर्वतः साधोः पृथोः भगवति पूर्णषाड्गुण्ये ब्रह्मणि अनन्यविषया अव्यभिचारिणी भक्ति रभवत्॥ १०॥

**विज.** चण्डतप आह - ग्रीष्म इति। पञ्च तपांस्यग्नयो यस्य सः, पञ्चतपाः। अत्रैकोऽग्नि रर्कः आसारषाट् निराश्रय तयोग्रवृष्टिसेवी शिशिरे हिमर्तौ स्थण्डिलेशयो निशि इति शेषः॥ ६॥

आरिराधयिषुः आराधयितुकामः तदर्थ मुग्रं तप आचरदित्यन्वयः॥ ७-८॥

योग मुपासनोपायम्॥ ९॥

भक्तिः प्रेमपूर्वं भजनं, अनन्य विषया भगवदेकविषया॥ १०॥

तस्यानया भगवतः [6-]परिकर्मशुद्ध[-6] सत्त्वात्मन स्तदनु संस्मरणानु[7]पूर्व्या। ज्ञानं विरक्तिमदभू[8]न्निशितेत येन चिच्छेद संशयपदं निजजीवकोशम्॥ ११॥

1--1. A, B, J, Va omit 2. V adds एव 3--3. B, J, V, Va omit 4. W omits उदके 5. W omits तेन 6--6. M, Ma, Ms शुद्धकर्म 7. M, Ma, Ms पूर्व्या 8. W °रुद°

छिन्नाऽन्यधी रधिगतात्मगतिर्निरीह स्तत्तत्त्यजेऽच्छिनदिदं वयुनेन येन।
तावन्न[1] योगगतिभिर्यतिर[2]प्रमत्तो यावद्गदाग्रज कथासु रतिं न कुर्यात्॥ १२॥

एवं सवीरप्रवरः संयोज्यात्मानमात्मनि।
ब्रह्मभूतो दृढं काले तत्याज स्वं कलेबरम्॥ १३॥

सम्पीड्यापायं पार्ष्णिभ्यां वायुमु[3]त्सारयञ्छनैः।
नाभ्यां कोष्ठेष्ववस्थाप्य हृदुरः कण्ठशीर्षणि॥ १४॥

उत्सर्पय[4]न्नसून् मूर्ध्नि क्रमेणाऽऽवेश्य निःस्पृहः।
वायुं वायौ क्षितौ कायं तेज स्तेजस्ययूयुजत्॥ १५॥

**श्रीध. तस्येति**। परिकर्मणा परिचर्यया शुद्धसत्त्वः आत्मा मनो यस्य, तस्य ज्ञान मभूत्। कीदृशम्? येन निजमुपाधिं जीवकोशं हृदयग्रन्थिं संशयानां [5-]असम्भवादीनां[-5]पदमाश्रयं चिच्छेद। कीदृशेन? अनया भक्त्या निशितेन [6-]तीक्ष्णेन[-6]। कथम्भूतया? तस्य भगवतः अनुसंस्मरणेन अनुपूर्तिः सम्पूर्तिः यस्याः तया निशितेन॥ ११॥

**छिन्नेति**। किञ्च छिन्ना अन्यधी र्देहात्मबुद्धिः यस्य, यतोऽधिगतात्मगतिः अत एव निरीहः प्राप्तासु सिद्धिषु निस्स्पृहः येन वयुनेन ज्ञानेन इदं संशयपदं चिच्छेद तत् तत्यजे त्यक्तवान्। तत्प्रयत्ना दप्युपररामेत्यर्थः, तस्य योगसिद्धिष्वपि निस्स्पृहत्वं युक्त मेवेत्याह तावन्नाऽप्रमत्तः किन्तु प्रमत्तो भवति, तस्य श्रीकृष्णकथारतत्वा न्न तासु लोभो जा[7]यत इत्यर्थः॥ १२-१३॥

देहत्यागप्रकार माह **सम्पीड्येति** पञ्चभिः। पायुं गुदं सम्पीड्येति, मुक्तासनं सूचितम्। "सम्पीड्य सी[8]वनीं सूक्ष्मां गुल्फेनैव तु मध्यतः। सव्ये दक्षिणगुल्फेन मुक्तासन मितीरितम्" इत्युक्तेः[9]। मूलाधारा द्वायु मुत्सारयन् ऊर्ध्वं नयन् नाभ्या मवस्थाप्य ततः कोष्ठेष्व वस्थाप्य अयूयुजदित्युत्तरेणाऽन्वयः, [10-]कोष्ठान्येवाह[-10] हृदादीनां द्वन्द्वैक्यं, शीर्षं भ्रूमध्यं तस्मिन्॥ १४॥

**उत्सर्पयन्निति**। तं वायुं। पाठान्तरे एव मसून् प्राणानुत्सर्पयन् क्रमेण मूर्ध्नि ब्रह्मरन्ध्रे चाऽऽवेश्य ततो देहारम्भक पञ्चभूतानि समष्टिभूतेषु[11] विलापितवान् तदाह - वायुं बाह्य[12]वायौ अयूयुजत् एकीकृतवान्। कायं देहगतं कठिनांशं क्षितौ॥ १५॥

---

1. M, Ma, Ms °त्तु 2. M, Ma, Ms प्रयत्नो 3. M, Ma, Ms °मुत्सर्प° 4. A, B, G, I, J, T °यंस्तु तं; W यंस्ततो 5--5. A, B, T असम्भावनादीनां 6--6. V omits 7. A, B, J, Va जात 8. V सीवनं सूक्ष्मं 9. B, J, Va omit इत्युक्तेः; V omits उक्तेः 10--10. J omits 11. Va °भूते वि° 12. A, B, J, Va omit बाह्य

**वीर.** भगवतः परिकर्मणा परिचर्यया शुद्धसत्त्वात्मनः शुद्धसत्त्वमनसः तस्य [1-]पृथोः, तस्य[-1] भगवतः संस्मरणं पूर्वोक्त परभक्तिः तस्यानुपूर्तिः परिपूर्णता तया जातं यत् परज्ञानं विरक्तिश्चोदभूत्, कीदृशं ज्ञानम् ? येन निशितेन ज्ञानेन संशयपदं संशयस्थानं निश्चेतु मशक्यस्वरूपं जीवकोशं प्रकृतितत्त्वं चिच्छेद स्वस्मिन्नसम्बद्ध मकरो त्तादृशं ज्ञानमुदभूदित्यर्थः ॥ ११ ॥

छिन्नाऽन्यधीः छिन्नप्रकृतिधीः देहात्म बुद्धिरहितः अधिगता आत्मगतिः आत्मस्वरूपयाथात्म्यं येन, अत एव निरीहः निर्व्यापारः येन, वयुनेन [2-]ज्ञानेन[-2] इदं प्रकृतिसम्बन्ध मच्छिनं त्तदपि ज्ञानं तत्यजे तत्याज। अनित्यं जडं शरीर मनुसन्धाय तदन्योऽस्मीति हि विवेकज्ञान मुदेति। तत्र शरीर मपि प्रतिसम्बन्धितया बुद्धिस्थं स्यात्। योगकाष्ठायां ब्रह्मात्म[3]स्वात्मनि साक्षात्कृते देहप्रतिसम्बन्धितया ज्ञानाभावात् तत्याज इत्युक्तम्। न हि केवलं घट इत्यनुभवे पटादन्य इति [4]पट प्रतिसम्बन्धितया ज्ञान मनुवर्तते तद्वदित्यर्थः। एव मेका ग्रतायां हेतु माह - तावदिति। भगवत्कथासु रतिं यावन्न करोति तावद्योगगतिभिः अप्रमत्तो न भवति। अश्रुतभगवत्कथानां प्रमादः स्यादेव, अस्य भगवत्कथारतित्वा न्न प्रमाद इत्यर्थः ॥ १२ ॥

स वीर[5]प्रेष्ठः पृथुः आत्मान मात्मनि परमात्मनि संयोज्य समर्प्य स्वतस्सिद्ध मपृथक्सिद्धसम्बन्ध मनुसन्धायेत्यर्थः । आविर्भूतगुणाष्टकतया ब्रह्मप्रकारं प्राप्तः [6]काले अभ्युपगतप्रारब्धावसानकाले स्वशरीरं तत्याज । ब्रह्मभावप्राप्तेः कलेबरत्यागानन्तरभावित्वेऽपि सिद्धवदभिप्रायकृतः पूर्वकालनिर्देशः ॥ १३ ॥

कलेबरत्यागपूर्वक ब्रह्मभावप्राप्तिप्रकारमेवोपपादयति - **सम्पीड्येति**। गुल्फाभ्यां पायुं गुदं सम्पीड्य सन्निरुद्ध्य मूलाधारा द्वायुं शनै रुत्सारयन् ऊर्ध्वं नयन् नाभ्यामवस्थाप्य सतः हृदयादिषु कोष्ठेषु स्थानेषु अवस्थाप्य हृदयादीनां द्वन्द्वैक्यं प्राण्यङ्गत्वात्। तत्र शीर्षं भ्रूमध्यम्। "भ्रुवो र्मध्ये प्राण मावेश्य सम्यक्, (भ.गी. 8-10) इति श्रुतेः ॥ १४ ॥

तं च ततः मूर्ध्नि ब्रह्मरन्ध्रे उत्सर्पयन् ऊर्ध्वं नयन् क्रमेण ब्रह्मरन्ध्रे चावेश्य निस्स्पृह अणिमाद्यैश्वर्यकैवल्यादिषु स्पृहारहितः, यद्यपेक्षा स्यात् योगिन स्तदैश्वर्यादिकमपि स्यात्; इति स्पृहा निषिद्ध्यते। वायुं स्वदेहस्थं वायौ महाभूते कायं देहरूपपृथिवीं क्षितौ महाभूते, एव मग्रेऽपि। अयूयुजत् लीन [7]मनुसंहितवान् ॥ १५ ॥

**विज.** भक्तेः फल माह - **तस्येति**। येन ज्ञानेन [8-]संशयपदं[-8] संशय विपर्यय ज्ञानस्थानं निजत्वेनाभिमतं[9] जीवकोशं बाह्यान्तः करणं लिङ्गशरीरं वा चिच्छेद छिनत्ति, तादृशं भगवतो ज्ञानं तस्य पृथो रभूदित्यन्वयः। तस्य हरे रनुस्मरणं निरन्तरध्यानं तत्पूर्वयाऽनया

---

1--1. A, B, T omit 2--2. W omits 3. A, B, T omit स्वात्म 4. A, B, T omit पट 5. A, B, T श्रे° 6. A, B, T omit काले 7. T °मभि
8--8. A, B omit 9. A °ते

भक्त्या परिशुद्धकर्मा सत्त्वगुणयुक्त आत्मा मनो यस्य स तथा तस्य अभूदित्यनेन भू- सत्तायामिति धातोः सत एव ज्ञानस्याविर्भाव उच्यते न तु प्रागसतः, तस्य ज्ञानित्वात् ज्ञानिनो ज्ञानस्याविर्भावः । न हि पुरोवर्ती घटः पटो वा आविरभवदिति व्यवहारो दृष्टचर इति चेन्न, बलवत्प्रतिबन्धकेन तिरोभावसम्भवात्, तदुक्तम् - "आविर्भावतिरोभावौ ज्ञानस्य ज्ञानिनोऽपि तु । अपेक्ष्याज्ञ स्तथा ज्ञानमुत्पन्न मिति चोच्यते ॥ " (तन्त्रसारे) ज्ञानिनोऽपि ज्ञानस्याविर्भावतिरोभावौ अपेक्ष्यासौ अज्ञः तथा तस्य ज्ञानं समुत्पन्न मिति व्यवहारो युज्यत इत्यर्थः ॥ ११ ॥

उत्पन्नज्ञानस्य स्थिति माह - छिन्नेति । येन वयुनेनेद मच्छिन्नतज्ज्ञानं तत्याज इत्यन्वयः । अन्यथा ज्ञानसम्भवे इदमुक्तं कथं युक्तं स्यादित्यत उक्तं छिन्नान्यधीरिति । निरस्ताऽन्यथाज्ञानः स्वरूपज्ञानाभावे कथ मिद मित्यत उक्तम् - अधिगतात्मगतिरिति । आत्मशब्देन स्वस्वरूपं परमात्माचोच्यते । अधिगतेऽपरोक्षीकृते परमात्मा स्वस्वरूपं च येन स तथा । अत एव तत्साधर्म्यमाह निरीह इति । ज्ञानोत्तरकालीन प्रवृत्तिमान् न तु पूर्ववद्विधिबद्ध इत्यर्थः । अत्र ज्ञानत्यागो नाम निर्लेपेन स्वरूपज्ञानेन करतलामलकवत् प्रत्यक्षत्वेन वृत्तिज्ञानस्य बाह्यान्तः करण जन्यस्य भेदनिरीक्षणं मद्भिन्न मिदं नश्वरमिति दर्शनं न त्वन्यः । तदुक्तम् - "अपरोक्षतया वृत्तिज्ञानभेदनिरीक्षणम् । स्वरूपज्ञानसंस्थित्यज्ञानत्याग उदीर्यते " (ब्रह्मतर्के) इति । अयं विशेषोऽपि तत्याज इति व्यत्यासेन सूचित इति कथमस्य स्वरूपज्ञान मस्तीति ज्ञायत इति तल्लक्षयति - तावदिति । यावद्गदाग्रजस्य श्रीनारायणस्य कथासु रतिं न कुर्यात्, तावद्यतिः निर्जितेन्द्रियग्रामोऽपि पुरुषो योगगतिभिः प्राणायामादिलक्षणैः योगसाधनै रप्रयत्नोऽनाविर्भूतस्वरूपज्ञानो भवति । अनेन भगवत्कथारतिः स्वरूपज्ञानेनेति लक्ष्यते । तदुप्युक्तं - "स्वरूपज्ञानतः सम्यग्रति विंष्णुकथासु च" (ब्रह्मतर्के ) इति । यद्वा योगादुत्पन्नैः गतिशब्दवाच्यै र्ज्ञानैः स्वरूपविषयै र्भगवत्तत्त्वं ब्रह्मादितारतम्यं पञ्चविधभेदं जीवस्वरूप मित्यादिविषयबाहुल्यात् स्वरूपज्ञानस्य बाहुल्यं प्रयत्नो न भवति ॥ १२ ॥

उपसंहरति - एव मिति । ब्रह्मभूतः ब्रह्मणि भूतः ब्रह्माधारतया स्थित इत्यन्वयः । काले प्रारब्धकर्मक्षयसमये तत्याजेत्यनेन स्वकलेबर मेवात्याक्षीन्नतु स्वरूपज्ञान मित्यवगन्तव्यम् ॥ १३ ॥

स्वच्छन्दमृत्यूनां योगिनां देहत्यागप्रकारं दर्शयितु मस्योत्क्रान्ति प्रकार माह - **सम्पीड्येति** । वज्रासनस्थितो वायु मुत्सर्पयन् ऊर्ध्वं नयन् मूलाधारा न्नाभ्यां हृद्युरसि कण्ठे च शीर्षणि भ्रूमध्ये चेत्येषु कोष्ठेषु स्थानविशेषेषु शनैः अवस्थाप्य ॥ १४ ॥

अनेन क्रमेणाऽसून् पञ्च वृत्त्या बहुवचनम् । मूर्ध्नि शिरोमध्यप्रदेशे आवेश्य निस्स्पृहः स्थिरचित्तः तिष्ठे दित्यन्वयः । देहे स्थितानां पञ्चभूतानां स्वस्वकारणेषु लयोऽनेनोच्यते । देहे वायुभागं तत्कारणेऽधिदैववायावयूयुजत् । अध्यात्मवायो रधिदैववायुः

कारणम्। तत्रैव लय इत्यचिन्तयदित्यन्वयः। तदुक्तम् - "अस्येदं कारण मिति ज्ञान मेव विलापनम्। समाधिकाले विज्ञेयं देहादे र्दर्शनात्पुनः" ॥ (ब्रह्मतर्के) इति एव मेवोत्तरत्राऽपि ज्ञातव्यम्॥ १५॥

**खान्याकाशे द्रवं तोये यथास्थानं विभागशः।**
**क्षिति मम्भसि तत्तेजस्यदो वायौ नभस्यमुम्॥ १६॥**

**इन्द्रियेषु[1] मन स्तानि तन्मात्रेषु[2] यथोद्भवम्।**
**भूतादि नामान्युत्कृष्य[3] महत्यात्मनि सन्दधे॥ १७॥**

**तं सर्वगुणविन्यासं[4] जीवे मायामये न्यधात्।**
**तं चानुशय मात्मस्थ मसावनुशयी पुमान्।**
**ज्ञानवैराग्यवीर्येण स्वरूपस्थोऽ[5]जहात्प्रभुः॥ १८॥**

**अर्चिर्नाम महाराज्ञी तत्पत्न्यनुगता वनम्।**
**सुकुमार्यतदर्हा च यत्पद्भ्यां स्पर्शनं भुवः॥ १९॥**

**अतीव भर्तुर्व्रत[6]धर्मनिष्ठया शुश्रूषया चार्ष[7]देहयात्रया।**
**नाऽविन्दतार्तिं परिकर्शिता[8]ऽपि सा प्रेयस्करस्पर्शन माननिर्वृतिः[9]॥ २०॥**

**श्रीध. खानीति।** खानि इन्द्रियच्छिद्राणि, द्रवांशं तोये। तदेवं देहं प्रविलाप्या द्वितीयात्म प्रतिपत्त्यर्थं[10] महाभूतानामपि लय माह। क्षितिम् अम्भस्येकीकृतवान्, तदम्भ स्तेजसि, अदस्तेजो वायौ; अमुं वायुं नभसि॥ १६॥

तदेवं तामसाहङ्कारकार्यस्याऽऽकाशपर्यन्तस्य लय मुक्त्वा। सात्त्विक राजसाहङ्कारकार्याणां लय माह - **इन्द्रियेष्विति**। इन्द्रियेषु मन इति देवाना मप्युपलक्षणम्। सविकल्पकज्ञानेमनसः इन्द्रियै राकर्षणात् तेषु लयाभिधानं, न तु कार्यत्वात्। तदुक्तं गीतासु - "इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते" (भगी. 2-67) इति। अत्र च - इन्द्रियै र्विषयाकृष्टै राक्षिप्यं ध्यायतां मन" (भाग. 4-22-30) इति च। इन्द्रियेषु नभ इति पाठेऽप्यय मेवाऽर्थः। भट्टादीनां मते नभ श्चाक्षुषं, केषाञ्चिन्मानसम्। आनुमानिकत्वमतेऽपीन्द्रिय-

---

1. M, Ma, Ms °याणि समस्तानि 2. M, Ma, Ms °त्राणि 3. A, B, G, I °नामून्युत्कृष्य ; J °नामून्युत्क्षिप्य; M, Ma, Ms °स्तान् समुत्क्षिप्य; T °नाऽमूल्युत्कृत्य; V नाऽर्थान्युत्क्षिप्य 4. W °सबीजे 5. M, Ma °स्थे व्याघात्; Ms °स्थो व्याघात् 6. W भर्तृव्रत 7. B, J चारष
8. M, Ma, Ms व्रत 9. M, Ma, Ms °ता 10. A, B, J, Va °मर्थः

व्यापारोऽस्त्येव। नभोगुणश्च शब्दः श्रोत्रग्राह्योऽत इन्द्रियग्राह्यत्वा दिन्द्रियेषु नभो विलापित मिति तानीन्द्रियाणि यथोद्भवम् उद्भवो[1]ऽत्रप्रवृत्तिलाभः स च विषयाधीन इति श्रोत्रादीनां विषयेषु शब्दादिषु लयः। यद्वा तन्मात्रकार्याण्येवेन्द्रियाणि, मनोऽप्यपञ्चीकृत[2] तन्मात्रकार्यम्। आहङ्कारिकत्वाभिधानम्। तदधीनत्वविवक्षये त्यविरोधः। भूतादिनाऽहङ्कारेण प्रागवशिष्टनभस्सहितानीन्द्रियाणि उत्कृष्य[3] परितोनीत्वा भूतादौ क्षिप्त्वा तेन सह महत्तत्त्वे सन्दध इत्यर्थः॥ १७॥

**तमिति**। सर्वेषां गुणानां कार्याणां विन्यासः स्थितिः यस्मिं स्तं महान्तं मायामये मायोपाधिप्रधाने जीवे तं चानुशय मुपाधिं यः पूर्वमनुशयी पुमान् जीवोऽसौ पृथु र्ब्रह्मणि स्थित स्सन् अजहादित्यर्थः॥ १८॥

वनप्रवेश मारभ्य राज्ञी[4]कथा माह - **अर्चिर्नामेति** चतुर्भिः। अनुगताऽनुजगाम, अतदर्हा तदपि नार्हति या। तत्[5]किं? पद्भ्यां भुवः स्पर्शनमिति यत्॥ १९॥

**अतीवेति**। भर्तुर्व्रतं यद्भूमिशयनादि तस्मिन् धर्मे या निष्ठा तया, ऋषीणामिय मार्षी देहयात्रा कन्द मूलादिवृत्तिः तथा च आर्तिं दुःखं न प्राप[6]। तत्र हेतुः प्रेयसः करेण स्पर्शनं मानश्च ताभ्यां निर्वृत्ति रा[7]नन्दो यस्याः॥ २०॥

**वीर.** खानि इन्द्रियाधिष्ठानानि देहविवराणि द्रवं देहस्थं जलं तोये महाभूते यथास्थानं यथाकारणं विभागशः असङ्करेण [8-]अयूयुजत्[-8], एवं देहस्थभूतांशानां महाभूतसमष्टितयाऽनुसन्धान मुक्तम्। अथ पृथिव्यादितत्त्वाना मुत्पत्तिक्रमेण लयानुसन्धान मुच्यते। क्षितिं भूत मम्भसि महाभूते अयूयुजदित्यनुषङ्गः। तत् अम्भः तेजसि अदस्तेजः वायौ, अमुं नभस्याकाशे॥ १६॥

तदेवं तामसाहङ्कारकार्याणा माकाशपर्यन्तं लय मुक्त्वा सात्त्विकाहङ्कारकार्याणां लयानुसन्धान माह - **इन्द्रियेषु** मन इति। सविकल्पकज्ञाने मनस इन्द्रियै राकर्षणात् तेषु लयानुसन्धान मुक्तम्, न तु तत्कार्यत्वात्, वैकारिकत्वा न्मनसः। यदुक्तं गीतासु - "इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते, (भ.गी.2-67) इति। अत्राऽपि "इन्द्रियै र्विषयाकृष्टैराकृष्टं ध्यायतां मन" (भाग. 4-22-30) इति। तानि इन्द्रियाणि तन्मात्रेषु अत्रापीन्द्रियाणां वैकारिकत्वेऽपि तेषां शब्दादितन्मात्रैराकर्षणात् तन्मात्रेष्वित्युक्तम्। अय मर्थः - तामसाहङ्कारकार्याणां पृथिव्यादीना माकाशपर्यन्तं लय मभिधाय तद्धर्माणां गन्धादितन्मात्राणामिन्द्रियाकर्षकत्वेन, इन्द्रियाणां च मनस[9] आकर्षकत्वेन च मन इन्द्रियार्थाना मुत्तरोत्तरानुवर्तित्वेन कार्यकारणयो रिव प्रदर्शयितुं लयानुसन्धानकीर्तनमिति परमार्थत इन्द्रियाणां वैकारिकेऽहङ्कारे आकाशस्य सशब्दस्य भूतादौ लय इति विवेकः। तैजसस्य तु अहङ्कारस्य वैकारिकभूताद्यो रनुग्राहकत्वमात्र मेव, न

1. A, B, Va वो वृ०; j ०वोऽत्र वृ० 2. V adds पञ्च 3. V उत्क्षिप्य 4. V ०ज्ञ्याः 5. B, J, V, Va omit तत् 6. Va आप 7. B, J, V, Va omit आनन्दः
8--8. A, B, T omit 9. W मन आ०

तु कार्यान्तर मस्ति इति न तत्कार्यलय उक्तः। यथोद्भवं यथाप्रवृत्ति। मन आदीना मुत्तरोत्तराधीन प्रवृत्तिकत्वात्। इन्द्रियेषु नभ इत्यपि पाठो दृश्यते। नभः आकाशं शब्दादि तन्मात्रेषु इन्द्रियविषयेषु विषये तद्वच्छब्द उपचारात्प्रयुक्तः। भूतानां तन्मात्रेषु यथोद्भवं लय इत्यर्थः। तानि तन्मात्राणि यथोद्भव मुद्भव मनतिक्रम्य, उद्भवत्यस्मादिति उद्भवः कारणे भूतादावित्यर्थः। भूतादिशब्दो वैकारिक तैजसयोरपि प्रदर्शनार्थः। [1-]अत एव बहुवचनं, तदयमर्थः[-1] [2-]भूतादिनामानि[-2] भूतादिवैकारिकतैजसनामानि उपसंहृतकार्याणि उत्कृष्य आत्मनि आत्मा चित्तं तदनुग्राहके महत्तत्वे सन्दधे अनुसंहितवान्। भूतादिना समुत्कृष्येति पाठे तानि तन्मात्राणि भूतादिना तामसाहङ्कारेण कारणभूतेन सह समुत्कृष्य तस्मिन् विलाप्य इत्यर्थः। लयस्य कारणवस्तुना सह संश्लेषरूपत्वा त्साहित्यविवक्षया तृतीया। तं भूतादिं महतीत्यन्वयः॥ १७॥

तं महान्तं सर्वगुणविन्यासबीजे गुणवैषम्य हेतुभूते मायामये प्रधाने न्यधात्, स्वार्थे मयट्। तं सर्वगुणविन्यासं जीवे मायामय इति पाठे तु तं महान्तं सर्वेषां गुणानां कार्याणां विन्यासः स्थिति र्यस्मिन्, तत् प्रधान मव्यक्तं प्रति न्यधात् प्रधाने न्यधादित्यर्थः। तच्चाव्यक्तं मायामये अचित्समष्टिसंसृष्टे जीवे न्यधादित्यर्थः। ''महानव्यक्ते लीयते अव्यक्तमक्षरे लीयते, (सुबा.उ. 2-2) इति श्रुत्यनुरोधात्। अनुशयो भुक्तशिष्टं कर्म, तद्वाननुशयी, पूर्वं संसृतिदशायामनुशयी क्षीणप्रायदोष इत्यर्थः पुमान् जीवः। असौ पृथुः त मचित्समष्टिसंसृष्ट मात्मस्थं स्वस्वरूपस्थं नितरां प्रकृति सम्बन्धवियुक्त मनुसंहितवानित्यर्थः। ततो ज्ञानवैराग्यबलेन अनुशयं भुक्तावशिष्टं पूर्वोत्तरभेदेन सञ्चितानभ्युपगतबुद्धिपूर्वकभेदेन च भिन्नं पुण्यपापात्मकं कर्म अजहात् अत्याक्षीत्। ततः प्रभु रकर्मवश्यो भूत्वा स्वरूपस्थः परमात्मात्मकाविर्भूत गुणाष्टक स्वस्वरूपेणाऽव स्थितोऽभून्मुक्तोऽभूदित्यर्थः॥ १८॥

अथाऽर्चिर्नाम्नी पृथोः पत्नी महाराजस्य स्त्री सुकुमारी अतदर्हा वनगमनादि क्लेश मनर्हन्त्यपि पति मनुसृत्य वनं गता प्रविष्टा अतदर्हत्व मेवाह- यस्या अर्चिषः पद्भ्यां भुवः स्पर्शनं पद्भ्यां भुवम[3]प्यस्पृशन्ती महाभोगशालिनी साक्षात् पद्भ्यां वनं प्रविष्टवती त्यतदर्हत्वमुक्तम्॥ १९॥

अतीव [4]यद्भर्तृव्रतं स्थण्डिलशयनादिरूपं [5-]तस्मिन्व्रते[-5] या निष्ठा तया [6-]भर्तृशुश्रूषया[-6] ऋषीणा मियमार्षी देहयात्रा कन्दमूलाद्याहाररूपा तया च कृशीभूताऽपि अर्तिं दुःखं नाऽविन्दत। यतः प्रेयसः प्रियतमस्य पृथोः करस्पर्शनादिरूपः यः सम्मानः तेन निर्वृता॥ २०॥

**विज.** छिद्रबहुत्वापेक्षया खानीति बहुवचनम्। ग्रन्थान्तरोक्ते र्यत्तदपेक्षया विभागश इति। इदानीं पञ्चभूतानां स्वकारणेषु लयध्यान माह क्षिति मिति॥ २६॥

---

1--1. W omits  2--2. A, B, T omit  3. W omits अपि  4. A, B, T भर्तुर्व्रतं  5--5. W तद्व्रते  6--6. A, B, T भर्तुः शुश्रूषया

इन्द्रियलयप्रकार ध्यान माह - **इन्द्रियाणीति**। समस्तानीन्द्रियाणि यथोद्भवं यथोत्पत्ति स्वस्वकारणेषु लीयन्त इति तन्मात्राणि शब्दादीनि च यथोद्भवं लीयन्त इति व्यचिन्तयदित्यन्वयः । अत्राऽयं विभागः - इन्द्रियाणि तैजसाहङ्कारे तदभिमानिदेवा वैकारिकाहङ्काराभिमानिषु, तेषां देहा वैकारिकाहङ्कारे पृथिव्यादयो गन्धादिभिः सह भूतादौ तामसाहङ्कारे लीयन्त इति। भूतादि रित्युपलक्षणम् । एवं त्रिविधाहङ्कार स्ता निन्द्रियादीन्समुत्क्षिप्य सम्भृत्य महत्यात्मनि महत्तत्त्वे तदभिमानिनि चतुर्मुखे च अहङ्काराभिमानी रुद्रो लीयत इति मन स्सन्दधे इत्यन्वयः ॥ १७॥

सर्वेषां गुणानां भक्तिज्ञानादीनां विशेषेण न्यासो निधानं यस्मिन् स तथा तम्। सत्त्वादिगुणै र्विविधा प्रपञ्च रचना येन स तथा तं वा तं महान्तं चतुर्मुखं तत्त्वलक्षणं जडं च मायामये मायाशब्दवाच्ये जीवे प्राणधारणशक्तिमति लक्ष्मीतत्त्वे न्यस्यति प्रविशतीति ध्यायेत्। अन्यन्तु जडप्रकृतौ जीवत इति जीवशब्दवाच्यत्वं च। चेतनशरीराकारतया परिणामा दुपचारः प्रलये केशव मनुशेते इत्यनुशयशब्दवाच्यत्वं पुंशक्तित्युक्तत्वात् त्पुल्लिङ्गशब्द वाच्यां प्रकृतिं च जगदादानादात्मशब्दाभिधेयस्य हरे राधारतया तिष्ठतीत्यात्मस्थ मचिन्तयत्। अनुशयी चित्प्रकृत्यधीनत्वात्तद्द्वारा गतत्वाद्वानुशयिशब्दवाच्योऽसौ पुमानित्युपलक्षणम्। चेतनराशिः अप्राकृतशरीरत्वा त्स्वरूपशब्दवाच्ये ब्रह्मणि चतुर्मुखेन सह तिष्ठतीति ध्यानं व्यधात्। प्रभुरित्यनेन मनोऽनुसन्धान मस्तीति ध्वनयति। केनैतत्सामर्थ्य मभूदित्यत उक्तं ज्ञानेति। यद्वा एवं विधोपासनाजनितसामर्थ्येन अनुशयी पृथुः स्वस्वरूपे ब्रह्मणि सायुज्य लक्षणं मोक्ष माप्तुं व्यधादित्यन्वय इति। "मायेति प्रकृति श्चेति माया जीवश्च कथ्यते। शेतेऽनुकेशवं यस्मात्तस्मादनुशयोऽपि च। एतैस्तुनामभि र्वाच्या श्रीर्विष्णोरनपायिनी। तथैवानुशयी जीवस्तथा बद्धो यतः सदा॥" (भागवततन्त्रे) "पुरुषः शयनात्पूर्षु तथाऽहाना दहं स्मृतः। अप्राकृततनुत्वात्तु स्वरूपं हरिरुच्यते। नित्यचिद्दर्शना न्नित्यं ब्रह्मपूर्णत्वतः सदा" (भागवत तन्त्रे) इति। समाख्यासिद्धत्वा दुक्त एवाऽर्थो, नाऽद्वैतवादि कल्पित इति सिद्धम्॥ १८॥

पत्याचैवं गते तत्र वनेऽर्चिषा भार्यया किमकारीति तत्राह - **अर्चिर्नामेति**। पद्भ्यां भुवः स्पर्शनं यत्तदनर्हा॥ १९॥

भर्तुर्व्रतं ग्राम्यवर्जनादि। तदेव स्वस्या अपि धर्मः। तत्र निष्ठया आर्षदेहयात्रया कन्दमूलफला द्यशनलक्षणया एवंविधानुष्ठानेन परिकर्शिताऽपि प्रेयसः पत्युः करस्पर्शलक्षणमानेन निर्वृता आनन्दाप्लुता आर्तिं व्रतानुष्ठाननिमित्त क्लेशं नाऽविन्दतेत्यन्वयः॥ २०॥

**देहं विपन्नाखिल चेतनादिकं पत्युः पृथिव्या दयितस्य चाऽऽत्मनः।**
**आलक्ष्य किञ्चिच्च[1] विलप्य सा सती चिता मथाऽऽरोपय दद्रिसानुनि॥ २१॥**

1. Ms °ञ्चित्प्रवि°

**विधाय कृत्यं ह्रदिनीजलाप्लुता[1]दत्त्वोदकं भर्तु रुदारकर्मणः ।**

**नत्वा दिवि[2]ष्ठां स्त्रिदशां स्त्रिः परीत्यविवेश वह्निं ध्यायती [3]भर्तृ[4]पादम् ॥ २२ ॥**

**विलोक्यानुगतां साध्वीं पृथुं वीरवरं पतिम् ।**

**तुष्टुवु र्वरदा देवै र्देव[5]पत्न्यः सहस्रशः ॥ २३ ॥**

**[6]कुर्वत्यः कुसुमासारं तस्मिन्मन्दरसानुनि ।**

**नदत्स्वमरतूर्येषु गृणन्ति स्म परस्परम् ॥ २४ ॥**

**[7-]देव्य ऊचुः[-7]**

**अहो इयं वधूर्धन्या या चैवं भूभुजां पतिम् ।**

**सर्वात्मना पतिं भेजे यज्ञेशं [8]श्रीवधूरिव ॥ २५ ॥**

**श्रीध. देहमिति ।** पृथिव्याः पत्युः दुहितृत्वं तु तस्या देवतारूपेण विपन्नं नष्ट मखिलं चेतनादिकं यस्मिं स्तथा भूतं देह मालक्ष्य तं देहं चिता मरोपयत् ॥ २१ ॥

**विधाय इति ।** कृत्यं तत्कालोचितं विधाय ह्रदिन्या जले आप्लुता स्नाता सती भर्तुरुदकं दत्वा दिव्यन्तरिक्षे स्थितान् [9]देवान्नत्वा वह्निं त्रिः प्रदक्षिणीकृत्य ॥ २२ ॥

**विलोक्येति ।** देवैः सहिताः ॥ २३ ॥

**कुर्वत्येति ।** गृणन्ति स्म अभाषन्त ॥ २४ -२५ ॥

**वीर.** आत्मनः स्वस्याः पृथिव्याश्च पत्युः पृथोः देहं विपन्नानि विगतानि [10-]अखिल चेतनादीनि[-10] [11-]अखिलानि[-11] बुद्धीन्द्रियप्राणादीनि यस्मिन् तथाभूत मालक्ष्य दृष्ट्वा किञ्चिद्विलप्य च सा सती अर्चिः [12]तं देहं अद्रिसानुनि चिता मारोपयत् ॥ २१ ॥

तत स्तत्कालोचितं कृत्यं च विधाय ह्रदिन्याः सरस्या जलेष्वाप्लुता सती उदारकर्मणो भर्तुः उदकं दत्वा दिवि[13]ष्ठान् त्रिदशान् नत्वा भर्तुः पादं ध्यायती चितां त्रिः परीत्य प्रदक्षिणीकृत्य वह्निं विवेश ॥ २२ ॥

---

1. M, Ma, Ms तिलोदकं; V कृत्वोदकं 2. A, B, G, I, J, M, Ma, Ms, T °स्थां° 3. Ma ब्रह्मपादम् 4. A, B, G, I, J, T पादौ 5. W वध्वः 6. M, Ma, Ms °न्त्यः 7--7. M, Ma omit 8. A, B, G, I, J, T श्रीर्व° 9. V omits देवान् 10--10. A, B, T °लानि चेतनादीनि 11--11. A, B, T omit 12. W तद्देहं 13. A, B, T °स्तान्

वीरश्रेष्ठं पतिं पृथु मनुसृत्य गतां साध्वीं विलोक्य वरदा देवपत्न्यः[1] देवैः सह सहस्रशः तुष्टुवुः ॥ २३ ॥

[2] तदा तस्मिन् मन्दरसानुनि कुसुमवर्षं कुर्वत्यः अमर तूर्येषु देवदुन्दुभ्यादिषु नदत्सु सत्सु परस्परं गृणन्ति स्म अभाषन्त ॥ २४ ॥

भाषण मेवाह - **अहो** इति । इयं वधूः अर्चिः धन्या कृतार्था, अहो इत्याश्चर्ये हर्षे वा । या वधूः भूभुजां राज्ञां पतिं, पतिं [3] स्वभर्तारं सर्वात्मना सर्वप्रकारेण भेजे प्राप्ता, यज्ञेशं भगवन्तं श्रीरूपिणी वधूरिव ॥ २७ ॥

**विज.** एवं तस्याः पृथोः पत्नीत्वयोग्यता मनुवर्ण्योत्तरक्रियां वक्ति - **देहमित्यादिना** । पृथिव्या आत्मनः स्वस्याश्च दयितस्य पत्युर्देहं विपन्नाखिलचेतनादिकं चैतन्यप्राणादिवृत्तिलक्षणरहित मालक्ष्य चितां शवदहनसाधनकाष्ठम् ॥ २१ ॥

ह्रदिनी नदी । त्रिः परीत्य प्रदक्षिणीकृत्य ॥ २२ ॥

सत्याः वनेऽपि राजस्त्रीभोगलक्ष्मीसामग्री समभूदित्याह - विलोक्येति ॥ २३ ॥

कुसुमासारं पुष्पवृष्टिम् ॥ २४ ॥

धन्या सर्वगुणैः पूर्णा ''अनपेक्षो गुणैः पूर्णो धन्य इत्युच्यते बुधैः,, (शब्दनिर्णये) इत्यभिधानम् ॥ २५ ॥

**सैषा नूनं व्रजत्यूर्ध्व मनुवैन्यं पतिं सती ।**
**पश्यता[4]ऽस्मानतीत्यार्चिर्दुर्विभाव्येन कर्मणा ॥ २६ ॥**

**तेषां दुरापं किन्त्वन्यन्[5]मर्त्यानां भगवत्पदम् ।**
**[6] भुवि लोलायुषो ये वै नैष्कर्म्यं साधयन्त्युत ॥ २७ ॥**

**स वञ्चितो बतात्मधृक् कृच्छ्रेण महता भुवि ।**
**लब्ध्वाऽपवर्ग्यं मानुष्यं विषयेषु वि[7]षजते ॥ २८ ॥**

### मैत्रेय उवाच

**स्तुवती[8]षु सुर[9]स्त्रीषु पतिलोकं गता वधूः ।**
**यं[10] वा आत्मविदां धुर्यो वैन्यः प्रापाऽच्यु[11]ताश्रयम् ॥ २९ ॥**

---

1. A, B, T वध्वः 2. A, B, T तथा 3. W omits स्व 4. W °तोऽ° 5. V किम्वाऽन्य°; W किम्वन्य° 6. M, Ma, Ms विद्यु ल्लो° 7. W °त° 8. M, Ma, Ms, V W °वन्ती° 9. A. B, G, I, J, M, Ma, Ms, T °ष्वमर 10. Ms सा 11. A, B, G, I, J, M, Ma, Ms, T °शयः

**इत्थम्भूतानुभावोऽसौ पृथुः स भगवत्तमः।**

**कीर्तितं तस्य चरित मुद्दामचरितस्य ते ॥ ३० ॥**

**श्रीध.** [1-]**सैषा** इति। असतीनां दुर्विभाव्येन कर्तु मशक्येन कर्मणा[-1] ॥ २६ ॥

**तेषा** मिति। भगवान् पद्यते गम्यतेऽनेनेति तथा। तन्नैष्कर्म्यं ज्ञानं ये चञ्चलायुषोऽपि साधयन्ति तेषा मन्यद्देवादिपदं किमुदुर्लभं ? न किञ्चिदित्यर्थः ॥ २७ ॥

**स** इति। अ[2]भक्तं शोचन्ति स वञ्चित इति, यत आत्मने द्रुह्यति, यो[3]ऽपवर्गसाधनं मानुष्यं लब्ध्वाऽपि विषयेष्वासक्तिं याति ॥ २८ ॥

[4-]अच्युते एवाशयो मनो यस्य[-4] ॥ २९-३० ॥

**वीर.** तस्मात् सैषा सती अर्चिः पश्यतो [5]अस्मान् [6]नभस्थानतीत्य दुर्विभाव्येन चिन्तयितु [7]मप्यशक्येन कर्मणा पतिपारार्थ्यादिना पतिं स्वभर्तारं वैन्यं पृथु मनुसृत्य ऊर्ध्वं व्रजति, नूनम् ॥ २६ ॥

भगवान् पद्यते गम्यतेऽनेनेति भगवत्पदं भगवत्प्राप्तिसाधनं नैष्कर्म्यं निवृत्तिधर्मं ये विद्यु[8]दिव चञ्चलायुषोऽपि साधयन्ति तेषां भगवद्भक्तानाम् अन्यद्देवादिपदं किमु दुर्लभं न किञ्चिदित्यर्थः ॥ २७ ॥

**अभक्तं शोचन्ति स** इति। यः पुमा नापवर्ग्यम् अपवर्गसाधनं मानुष्यं मनुष्यजन्म कृच्छ्रेण दुस्साधे[9]न महता कर्मपरिपाकेन भुवि लब्ध्वाऽपि विषयेषु [10]विषज्जते स वञ्चितो दैवेन बतेति खेदे ॥ २८ ॥

एवं सुरस्त्रीषु स्तुवन्तीषु (स्तुवतीषु) सतीषु वधूरर्चिः पतिलोकं गता प्राप्ता। कोऽसौ पतिलोकः ? आत्मवतां ज्ञानिनां धुर्यः श्रेष्ठः वैन्यः पृथुः अच्युताश्रयं भगवतो निवास भूतं वैकुण्ठाख्यं यं लोकं प्राप, तं लोकं गतेत्यर्थः ॥ २९ ॥

उपसंहरति [11-]**इत्थम्भूतानुभाव इति**[-11]। भगवत्तमः भगवताम् - "उत्पत्तिं प्रलयं चैव भूताना मागतिं गतिम्। वेत्ति विद्या मविद्याञ्च स वाच्यो भगवानिति। (वि.पु. 6-5-78) इत्युक्तविध भगवतां मध्ये श्रेष्ठः असौ पृथुरित्थंभूतानुभावः उक्तविधप्रभाव सम्पन्नः। उदारचरितस्य पृथोश्चरितं ते तुभ्यं मया कीर्तितम् ॥ ३० ॥

---

1--1. V omits 2. V अव्यक्तं 3. V omits यो 4--4. B, J, V, Va omit 5. A, B, T omit अस्मान् 6. W omits नभस्तान्
7. W omits अपि 8. A, B, T °द्वदतीव 9. A, B, T °ध्ये° 10. W °स° 11--11. A, B, T इत्थमिति।

**विज.** ये मर्त्या नैष्कर्म्यं मोक्षलक्षणं भगवत्पदं साधयन्त्युत विद्युद्वल्लोलानि चलान्यायूंषि येषां ते तथा तेषा मन्य दुरापं किं, न किमपीत्यर्थः ॥ २६-२७॥

आपवर्ग्यं मुक्तिसाधनकारणम् ॥ २८ ॥

पतिलोकं नाथवन्तं लोकमिति शङ्कानिवृत्त्यर्थं वैन्यो यं लोकं प्राप तं पतिलोकं गताऽभूदिति स्पष्टीकृतम्[1] ॥ २९ ॥

उपसंहरति - **इत्थमिति।** योऽसौ पृथु रित्थं भूतानुभावः (ईदृश) प्रभावः "अनुभावः प्रभावे स्या न्निश्चये भावसूचके" (वैज.को.8-1-8) इति यादवः। "भगो योऽन्यां भगो यत्ने यशो वीर्यार्क भूतिषु। कान्तीच्छाज्ञान वैराग्य धर्मैश्वर्य तपस्सु च। (वैज.को.6-5-58) इति वचनात्। सत्प्रयत्नादिगुणवता मतिशयेन प्रधानत्वात् भगवत्तमः ॥ ३० ॥

**य इदं सुमहत्पुण्यं श्रद्धयाऽवहितः पठेत्।**
**श्रावयेच्छृणुयाद्वाऽपि स पृथोः पदवी मियात् ॥ ३१ ॥**

**ब्राह्मणो ब्रह्मवर्चस्वी राजन्यो[2] जगतीपतिः।**
**वैश्यः[3] पठन् विट्पति[4] स्स्यात् शूद्रः उत्तमता[5] मियात्[6] ॥ ३२ ॥**

**त्रिकृत्व[7] इद माकर्ण्य नरो नार्यथवाऽऽदृता[8]।**
**अप्रजः[9] सुप्रजतमो निर्धनो धनवत्तमः ॥**
**अस्पष्टकीर्तिः सुयशा मूर्खो भवति पण्डितः ॥ ३३ ॥**

**इदं स्वस्त्ययनं पुंसा ममङ्गल[10] निवारणम्।**
**धन्यं यशस्य मायुष्यं स्वर्ग्यं कलिमलापहम् ॥ ३४ ॥**

**धर्मार्थकाममोक्षाणां सम्यक्सिद्धि मभीप्सुभिः।**
**श्रद्धयैत दनुश्राव्यं चतुर्णां कारणं परम् ॥ ३७ ॥**

---

1. M, Ma स्पष्टितम् 2. W क्षत्रियो 3. W विट्पति स्तु भवे द्वैश्यः 4. M, Ma, Ms विश्पति 5. A, B, G, I, J, T स° 6. W °ता लभेत्
7. I, J M, Ma, Ms, V, W त्रिः° 8. M, Ma, Ms °त. 9. A, B, G, I, J, M, Ma, Ms, T, V °जः 10. A, B, G, I, J, M, Ma, Ms, T, V °ल्य

सङ्ग्रामाभिमुखो[1] राजा श्रुत्वैत दभियाति यान्।

बलिं तस्मै हरन्त्यग्रे[2] राजानः पृथवे यथा॥ ३६॥

मुक्तान्यसङ्गो भगवत्यचलां[3] भक्तिमुद्वहन्।

वैन्यस्य चरितं पुण्यं श्रृणुया च्छ्रावये त्पठेत्॥ ३७॥

वैचित्र[4]वीर्याभिमतं[5] महन्माहात्म्यसूचकम्।

अस्मिन्कृतमति मर्त्यः पार्थवीं[6] गति माप्नुयात्॥ ३८॥

अनुदिन मिदमादरेण शृण्वन् पृथुचरितं प्रथयन्[7] विमुक्तसङ्गः।

भगवति भवसिन्धुपोत[8]पादो सच निपुणां लभते मतिं[9] मनुष्यः॥ ३९॥

इति श्रीमद्भागवते महापुराणे अष्टादश साहस्र्यां

श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां

चतुर्थस्कन्धे त्रयोविंशोऽध्यायः॥ २३॥

**श्रीध. ब्राह्मण** इति। विशां पश्वादीनां [10]वैश्यादीनां वा पतिः स्यात्। [11-]शूद्रः शृण्वन्निति शेषः। तस्य पाठानधिकारात्[-11]॥ ३१-३२-३३-३४-३५-३६॥

**मुक्तेति**। यद्यपि बहूनि फलानि भवन्ति, तथाऽपि मुक्ताऽन्यसङ्ग एव श्रवणादि कुर्यात्॥ ३७॥

**वैचित्रेति**। महतो भगवतो माहात्म्यस्य सूचकम्। पार्थवीं पृथुसम्बन्धिनीम्। पार्थिवीमिति वा पाठः॥ ३८॥

**अनुदिनमिति**। प्रथयन् कीर्तयन् भवसिन्धौ पोतो [12]नौका पादो यस्य॥ ३९॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीधरस्वामिविरचितायां भावार्थदीपिकायां

व्याख्यायां त्रयोविंशोऽध्यायः॥ २३॥

---

1. A, B, G, I, J, T, W विजयाभि 2. W °न्त्यन्ये 3. A, B, G, I, J, T, V °म° 4. W °त्र्य 5. A, B, G, I, J, M, Ma, Ms हितं
6. Ms, T, V, W °र्थि° 7. V °यंश्च मुक्त 8. M पारभूते 9. A, B, G, I, J, M, Ma, Ms, T रति° 10. V omits वैश्यादीनां 11--11. V omits
12. B, J, V, Va omit नौका

**वीर.** एतच्चरितकीर्तन श्रवण श्रावण फलमाह - **यइति** । यः पुमान् सुमहत् [1]पुण्यं पुण्यसाधन मिदं चरित मवहितमनाः समाहितचित्तः श्रद्धया पठेत् [2]श्रृणुयात् श्रावये द्वा स पृथोः पदवीं गति मियात् प्राप्नुयात् ॥ ३१ ॥

आनुषङ्गिकं फलमाह - **ब्राह्मण** इति । ब्राह्मणः ब्रह्मवर्चस्वी भवेत्, राजन्यः क्षत्रियः पठनादिकं कुर्वन् जगती पति र्भवेत्, वैश्य विट्पति· [3]वैश्यानां पतिः[-3] शूद्रः उत्तमतां [4]सजातीयेषु प्राप्नुयात् ॥ ३२ ॥

नरो नारी वाऽऽदृता [5]आदरण युक्ता त्रिः कृत्वः त्रिवार मिद माकर्ण्य अप्रजाः सुप्रजाः, विद्यारूपद्रविण बलादियुक्तपुत्रवान् भवेत्, निर्धनः धनवतां मध्ये श्रेष्ठः, अनभिव्यक्त कीर्तिः विपुलकीर्तिः, मूर्खः ज्ञानविधुरः पण्डितो भवेत् ॥ ३३ ॥

स्वस्ति मङ्गलं ईयतेऽनेनेति तथा अमङ्गलं निवारयतीति तथा धन्यं धनसम्पादकं यशस्कर मायुष्करं स्वर्गसाधनं कलिदोषहरम् ॥ ३४ ॥

धर्मादीनां सिद्धिं सम्यक् [6-]अभीप्सुभिः[-6] [7-]लिप्सुभिः[-7] चतुर्णां धर्मादीनां परं कारणं साधन मेतत् चरित्रं श्रद्धयाऽनुश्राव्यम् ॥ ३५ ॥

एतच्चरि[8]त्रं श्रुत्वा [9]राजा संग्रामाभिमुखो यान् याति, तस्मै अभियात्रे बलिं हरन्ति यथा राजान. पृथवे ॥ ३६ ॥

यद्यप्येवंविधानि बहूनि फलानि तथाऽपि त्यक्ताऽन्य फलसङ्ग· भगवति भक्तिमुद्वहन् कुर्वन् । वैचित्र्य [10]वीर्याणां विचित्रवीर्यशालिना मभिमतं महतो भगवतो माहात्म्यस्य सूचकं [11]पुण्यं वैन्यस्य चरितं श्रृणुयात् [12]श्रावयेत् पठेच्च । एवञ्चेदस्मिन् भगवति कृतमति मर्त्य [13]पार्थिवीं पृथुना लब्धां गति माप्नुयात् ॥ ३७ - ३८ ॥

य इदं पृथुचरित मत्यादरेण अनुदिनं श्रृण्वन् प्रथयन् कीर्तयन् विमुक्तान्यफलासङ्गः स मर्त्य· भवसिन्धौ[14] पोतौ प्लवरूपौ पादौ यस्य तस्मिन् भगवति निपुणां मतिं लभते ॥ ३९ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

वीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां त्रयोविंशोऽध्यायः ॥ २३ ॥

**विज.** फलमाह - **य** इति । पदवीं भक्तिज्ञानादिलक्षणाम् ॥ ३१ ॥

---

1. A, B, T omit पुण्य 2. W omits शृणुयात् 3--3. A, B, T omit 4. W स्व 5. A, B, T °रेण 6--6. W omits 7--7. A, B, T omit 8. A, B, T °तं 9. W राजन्य 10. A, B, T °त्र 11. A, B, T omit पुण्यं 12. A, T omit श्रावयेत् 13. A °र्थ° 14. W सिन्धो

वर्णभेदेन फलं विविनक्ति - **ब्राह्मण** इति ॥ ३२ ॥

श्रवणाद्यावृत्त्यासाधारणफलमाह - **त्रिःकृत्व** इति ॥ ३३ ॥

प्रतिपन्थिनिवारकं चे दभीष्टसिद्धिः स्या दनेन तत्कथं स्या दित्यत स्तद्विशिनष्टि - **इदमिति** ॥ ३४ ॥

व्याख्यातु र्विशेष फल माह - **धर्मार्थेति**। चरितस्य तादृक्सामर्थ्याभावे तदिच्छया किमित्यत उक्तं चतुर्णा मिति। एतत्सामान्य स्वभावे किमनेनेत्यत उक्तं - **परमिति**। परमुत्कृष्टम् ॥ ३५ ॥

असकृदावृत्त्या क्षिप्रं दिग्विजयफलमपि स्यादित्याह - **संग्रामाभिमुख** इति ॥ ३६ ॥

भगवद्भक्त्य विनाभावेन श्रवणादिकुर्वत उक्तं फलं स्यान्नाऽन्यथा इत्याह - **मुक्तेति** ॥ ३७ ॥

पुन स्तात्पर्या दस्मिन् भक्तिं ग्रन्थयति[1] - **वैचित्रवीर्येति**। हे विदुर ! पार्थवीं पृथो र्विद्यमानाम् ॥ ३८ ॥

तस्य चरितस्य शब्दादिविषयपरत्वे[2] कथं भागवतानामुपकारि अत इति तत्राह - **अनुदिनमिति**। प्रथयन् व्याख्यां कुर्वन् भवसिन्धोः संसारसमुद्रस्य पारभूते तीरान्तरीभूते निपुणां श्रीहरिप्रसादजननसमर्थाम् ॥ ३९ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे
श्रीविजयध्वजतीर्थ कृतायां पदरत्नावल्यां
टीकायां त्रयोविंशोऽध्यायः ॥ २३ ॥

---

1. A, B ग्रथ॰ 2. A, B शब्दवि॰

# चतुर्विंशोऽध्यायः

## मैत्रेय उवाच

विजिताश्वो[1]ऽधिराजाऽऽसीत् पृथुपुत्रः[2] पृथुश्रवाः।
यवीयो[3]भ्योऽददा[4]त्काष्ठा भ्रातृभ्यो भ्रातृवत्सलः॥ १॥

हर्यक्षा[5]याऽदिशत्प्राचीं धूम्रकेशाय दक्षिणाम्।
प्रतीचीं वृकसंज्ञाय तुर्यां द्रविणसे[6] विभुः॥ २॥

अन्तर्धानगतिं शक्राल्लब्ध्वान्तर्धान संज्ञितः।
अपत्यत्रयमाधत्त शिखण्डिन्यां सुसम्मत[7]म्॥ ३॥

पावकः पवमानश्च शुचिरित्यग्नयः पुरा।
वसिष्ठशापादुत्पन्नाः पुनर्योगगतिं गताः॥ ४॥

अन्तर्धानो नभस्वत्यां हविर्धानमविन्दत।
य इन्द्रमश्वहर्तारं विद्वानपि न जघ्निवान्॥ ५॥

## श्री श्रीधरस्वामिविरचिता भावार्थदीपिका

एकादशभिरध्यायैः पृथोश्चरितमीरितम्। चतुर्विंशे प्रपौत्रात्तु पृथोः प्राचीनबर्हिषः। प्रचेतसां जनिस्तेभ्यो रूपगीतं च वर्ण्यते॥

**विजिताश्व** इति। अधिराज आसीदित्यर्थः। यवीयोभ्यः कनिष्ठेभ्यः। काष्ठा दिशः॥ १॥

**हर्यक्षायेति**। तुर्यां चतुर्थीम् उत्तरां दिशम्॥ २॥

**अन्तर्धानेति**। शक्राल्लब्ध्वा पृथोः अश्वमेधे अश्वविजयावसरे॥ ३॥

अपत्यत्रयमेवाह - **पावक** इति। पुरा यः शापः तस्मात् मनुष्येषूत्पन्नास्सन्तः योगगतिम् अग्नित्वं[8] प्राप्ताः॥ ४॥

---

1. M, Ma, Ms °भ 2. V पृथोः 3. M, Ma, V °ये 4. M, Ma °द° 5. V °श्वा° 6. M, Ma °संज्ञके 7. M, Ma, Ms °तः 8. V गति°

**अन्तर्धान** इति। नभस्वत्याम् अन्यस्यां भार्यायाम्। अन्तर्धानस्य विशेषणं **य** इति। एतेन शक्रादन्तर्धानगतिलाभे कारणमुक्तम्॥ ५॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं कात्स्न्येन पृथुचरित्रमभिधाय तत्सन्ततिं तच्चरित्रं च अभिधातुमुपक्रमते मुनिः **विजिताश्व** इति। विजिताश्वः पृथोः पुत्रः विपुलकीर्तिः अधिराज आसीत्। भ्रातृवत्सलो विजिताश्वः यवीयोभ्यः कनिष्ठेभ्यः भ्रातृभ्यः, काष्ठा दिशः [1]अददात्॥ १॥

कां काष्ठां कस्मै अदात् इत्यत्राह - हर्यक्षाय प्राचीं दिशं, धूम्रकेशाय दक्षिणां दिशं, वृकसंज्ञाय प्रतीचीं दिशं, तुरीयाय चतुर्थीमुदीचीं दिशं, द्रविणसे विभुः विजिताश्वः अदिशत् अददात्॥ २॥

पृथोः [2-]अश्वमेधे[-2] अश्वविजयावसरे शक्रात् अन्तर्धानगतिं तिरोधानगतिं लब्ध्वा अन्तर्धानसंज्ञितः अन्तर्धानाख्योऽभूत्। विजिताश्वस्यैव अन्तर्धान इति नामान्तरमित्यर्थः। अन्तर्धानसंज्ञितो विजिताश्वः शिखण्डिन्यां सुसम्मतं अपत्यत्रयमाधत्त उत्पादयामास॥ ३॥

अपत्यत्रयमेवाह - **पावक** इति। पुरा यो वसिष्ठस्य शापः तस्मात् त्रयोऽग्नयः गार्हपत्याहवनीयदक्षिणाग्नयः पावकादिरूपेण मनुष्येषूत्पन्नास्ते पुनः योगगतिमग्नित्वं प्राप्ताः , आहवनीयत्वादेः संस्काररूपत्वात् तेषां मनुष्यरूपेणोत्पत्त्यनर्हत्वात् तदभिमानिदेवतानामुत्पत्तिरत्र विवक्षिता॥ ४॥

नभस्वत्याम् अन्यस्यां भार्यायाम् अन्तर्धानो विजिताश्वः हविर्धानं पुत्रं लेभे। अन्तर्धानं विशिनष्टि - यः अन्तर्धानोऽश्वहर्तारं विद्वान् जानन्नपि न जघ्निवान्। एतेन शक्रादन्तर्धानगतिलाभे कारणमुक्तम्॥ ५॥

## श्रीविजयध्वजतीर्थ कृता पदरत्नावली

''ईश्वराज्ज्ञानमन्विच्छेन्मोक्षमिच्छेज्जनार्दनात्'' (ब्रह्माण्डपुराणे) इत्यतो मोक्षसिद्धये रुद्रात् ज्ञानोपदेशप्रकारो ब्रह्मपदयोग्यानामृजूनां देवानामुत्तमाधिकारित्वं चेति द्वयमस्मिन् अध्याये निरूप्यते। तत्रादौ एतस्योपोद्घातमाह - **विजिताश्व** इति। काष्ठा दिशः॥ १॥

---

1. A, B, T प्रादात्   2--2. A, B, T omit

तुर्यां चतुर्थीमुत्तराम् ॥ २ ॥

अन्तर्धानगतिम् अदृश्यविद्याम् । नाम्ना शिखण्डिन्यां भार्यायाम् ॥ ३ ॥

पुरा पूर्वजन्मनि । अग्नीनां मनुष्ययोनौ उत्पत्तौ निमित्तमाह -- वसिष्ठेति । तत्कृत्यमाह -- पुनरिति ॥ ४ ॥

अन्तर्धानो विजिताश्व एव । तं विशिनष्टि -- य इन्द्रमिति ॥ ५ ॥

**राज्ञां वृत्तिं करादान[1]दण्डशुल्कादिदारुणा[2]म् ।**
**मन्यमानो दीर्घसत्त्रव्याजेन विससर्ज ह ॥ ६ ॥**

**तत्रापि हंसं पुरुषं परमात्मानमात्मदृक् ।**
**यजंस्तल्लोकतामाप [3]कुशलेन समाधिना ॥ ७ ॥**

**हविर्धानाद्धविर्धानी विदुरासूत षट् सुतान् ।**
**बर्हिष[4]दं गयं [5]शुक्लं कृष्णं सत्यं जितव्रतम् ॥ ८ ॥**

**बर्हि[6]षत् [7]सुमहा[8]भागो हाविर्धानिः प्रजापतिः ।**
**क्रियाकाण्डेषु निष्णातो योगेषु च कुरूद्वह ॥ ९ ॥**

**यस्येदं देवयजनमनु यज्ञं वितन्वतः ।**
**प्राचीनाग्रैः कुशैरासीदास्तृतं वसुधातलम् ॥ १० ॥**

**श्रीध. राज्ञामिति** । स चान्तर्धानो राज्ञां वृत्तिं कराऽऽदानादिभिः दारुणां परपीडात्मिकां मन्यमानो विससर्ज ह ॥ ६ ॥

**तत्रेति** । हन्ति स्वानां क्लेशमिति हंसः तं पुरुषं पूर्णम् । कुशलं पुण्यं तद्रूपेण समाधिना ॥ ७,८ ॥

**बर्हिषदिति** । हाविर्धानिः हविर्धानस्य पुत्रः योगेषु च प्राणायामादिषु ॥ ९ ॥

क्रियाकाण्ड निष्णातत्वमाह - **यस्येति** । इदं वसुधातलं देवयजनं यज्ञवाटं वितन्वतः यत्र एको यज्ञः कृतः तत्समीप एव यज्ञान्तरं कुर्वतस्सतः अत एव प्राचीनबर्हिः इत्युच्यते ॥ १० ॥

---

1. M, Ma °नं 2. M, Ma °णम् 3. M, Ma, Ms परमेण 4. M, Ma °ष्मन्तं; Ms, V °ष्मदं 5. W शुक्रं 6. M,Ma,Ms °ष्मत् 7. V स° 8. Ms, बाहो; V बाहुः

**वीर.** [1-]स च[-1] अन्तर्धानः राज्ञां वृत्तिं कराऽऽदानदण्डशुल्कादिभिः अतिदारुणं परपीडात्मिकां मन्यमानः दीर्घसत्त्रानुष्ठानव्याजेन विससर्ज। हेत्याश्चर्ये॥ ६॥

तत्रापि दीर्घसत्त्रेऽपि हंसं [2]स्वेषां क्लेशं हन्तीति हंसं शुद्धं वा, परमात्मानं [3]पुरुषं परमपुरुषम् आत्मदृक् प्रकृति विलक्षणब्रह्मात्मकस्वात्मयाथात्म्यज्ञानी सन् यजन्[4] कुशलेन विघ्नानुपहतेन समाधिना भगवल्लोकमवाप॥ ७॥

हे विदुर हविर्धानात् अन्तर्धानपुत्रात् हविर्धानी तद्भार्या बर्हिषदादीन् षट् [5]पुत्रान् असूत॥ ८॥

हे महाबाहो ! हाविर्धानिः हविर्धानस्यापत्यं बर्हिषत् प्रजापालनपरः क्रियाकाण्डेषु योगेषु च निष्णातः निष्ठितोऽभूत्। हे कुरूद्वह॥ ९॥

क्रियाकाण्डेषु निष्णातत्वमेवाह - **यस्येति**। इदं वसुधातलं देवयजनं यज्ञवाटं वितन्वतः यत्र देशे एको यज्ञः कृतः तत्समीपे एव देशे पुनर्यज्ञान्तरं कुर्वतः प्राचीनाग्रैः कुशैः कृत्स्नं वसुधातलमास्तृतमासीत्। अत एव प्राचीनबर्हिरित्युच्यते॥ १०॥

**विज.** कर्माधिकारे स्थितस्य तस्य सन्न्यासप्रकारं वक्ति - **राज्ञामिति**॥ ६॥

भगवदर्पणक्रियया क्रियमाणस्य कर्मणः उत्पन्नज्ञानफलमाह - **तत्रापीति**। हंसं निर्मलम्॥ ७,८॥

हविर्धानपुत्रो बर्हिष्मत् कर्मकाण्डेषु प्रवर्तमानो निवृत्तिमार्गाविरोधेन उभयत्र निष्णातोऽभूदित्याह - बर्हिषदिति॥ ९॥

तत्र क्रियाकाण्डनैष्णात्यं विशदयति - **यस्येति**। अनेन प्राचीनबर्हिरिति नाम ध्वनयति। देवयजनं यज्ञक्षेत्रम्॥ १०॥

**सामुद्रीं देव देवोक्ता मुपये मे शतद्रुतीम्।**
**यां वीक्ष्य चारु सर्वाङ्गीं किशोरीं सुष्ठ्वलङ्कृताम्।**
**[6]परिक्रमन्तीमुद्वाहे चकमेऽग्निः शुकीमिव॥ ११॥**

**विबुधासुरगन्धर्व मुनिसिद्ध[7]नरोरगाः।**
**विजिताः सूर्यया दिक्षु [8-]क्वणयन्त्यैव[-8] नूपुरैः॥ १२॥**

---

1--1. A, B, T omit 2. A, B, T स्वानां 3. W omits पुरुषं 4. W दीर्घानु॰ 5. A,B,T सुतान् 6. W तां 7. M, Ma, Ms महो॰ 8--8. Ms ॰न्त्या च नूपुरम्

**प्राचीनबर्हिषः पुत्राः शतद्रुत्यां दशाभवन्।**

**तुल्यनामव्रताः सर्वे धर्मस्नाताः प्रचेतसः ॥ १३ ॥**

**पित्राऽऽदिष्टाः प्रजासर्गे तपसे[1] वनमाविशन्।**

**दशवर्षसहस्राणि [2]तपसाऽऽर्चंस्तपस्पतिम् ॥ १४ ॥**

**यदुक्तं पथि दृष्टेन गिरिशेन प्रसीदता।**

**तद्ध्यायन्तो जपन्तश्च पूजयन्तश्च संयताः ॥ १५ ॥**

**श्रीध. सामुद्रीमिति।** समुद्रस्य कन्यां देवदेवेन ब्रह्मणोपदिष्टां शतद्रुतिं नाम किशोरीं बालां परिक्रमन्तीं प्रदक्षिणं गच्छन्तीम्। [3-]सुष्ठु प्रशस्तं यथा तथा अलङ्कृतां[-3] शुकीमिवेति। एवं ह्याख्यायते। सप्तर्षीणां सत्रे तद्भार्यादर्शनेन अग्निः कामसन्तप्तोऽभूत्। तं च तद्भार्या स्वाहा नाम सप्तर्षिभार्यारूपधारिणी सती रमयामास। गमयित्वा च तद्रेतः शुकीरूपेण शरस्तम्बे विधाय अगच्छत्। तां यथा सप्तर्षिभार्याभ्रान्त्या अग्निः कामितवान् तद्वदिति। स्तुकीमिवेति पाठे स्तोकघृतधारामिवेत्यर्थः ॥ ११ ॥

**विबुधेति।** सूर्यया नवोढयैव विबुधादयो विजिता अभिभूताः तच्च नूपुरैः पादौ क्वणयन्त्यैव [4]तद्ध्वनिमात्रेणेत्यर्थः ॥ १२ ॥

**प्राचीनबर्हिष इति।** तुल्यं नाम व्रतमाचाराश्च येषाम्। धर्मस्नाताः धर्मपारगाः ॥ १३ ॥

**पित्रेति।** तपसा तपसां पतिं हरिम् आर्चन् अर्चयामासुः ॥ १४,१५ ॥

**वीर.** स प्राचीनबर्हिः समुद्रस्य पुत्रीं देवदेवेन ब्रह्मणा उपदिष्टां शतदृत्याख्याम् उपयेमे। तां [5-]शतद्रुतिं[-5] विशिनष्टि -- किशोरीं बालां चारूणि सुन्दराणि सर्वाण्य[6]प्यङ्गानि यस्यास्तां, सुष्ठु अलङ्कृताम् उद्वाहे विवाहे परिक्रमन्तीमग्निं यां शतद्रुतिम् अग्निश्चकमे शुकीमिव। अयमर्थः - सप्तर्षीणां सत्रे तद्भार्यादर्शनेन अग्निः [7]कामाविष्टोऽभूत्। तं च तद्भार्या स्वाहा नाम सप्तर्षिभार्यारूपधारिणी सती रमयामास। रमयित्वा च तद्रेतः शुकीरूपेण शरस्तम्बे निधाय अगच्छत्। तां च यथा सप्तर्षिभार्याभ्रान्त्या अग्निः कामितवान् तद्वदिति। स्तुकीमिति पाठे [8]स्तोकस्तोकघृतधारामिवेत्यर्थः ॥ ११ ॥

सूर्यया नवोढयैव नूपुरैः क्वणयन्त्या शतद्रुत्या विबुधादयः सर्वे विजिताः वशीकृता मोहिता इति यावत् ॥ १२ ॥

---

1. A, B, G, I, J, M, Ma, Ms, T °सेऽर्णवमा° 2. M, Ma तपस्यन्तस्तपस्विनः 3--3. B, J, V, Va omit 4. V omits तद् 5--5. A, B, T omit 6. A, T omit अपि 7. A, B, T कामदष्टो° 8. A, B, T omit स्तोक

प्राचीनबर्हिषः सकाशात् शतद्रुत्यां दश पुत्रा अभवन् उदभवन् पुत्रान् विशिनष्टि - तुल्यं नाम व्रतमाचारो येषां ते, धर्मस्नाताः धर्मनिष्णाताः धर्मपारगा इति यावत्। निष्णातशब्दो हि सर्वत्र विवक्षितानुष्ठानानन्तरभाव्यवभृथस्नानस्थानीयमन्तगमन माह। प्रचेतसः प्रचेतोनामानः॥ १३॥

प्रजासर्गे पित्रा उपदिष्टाः प्रथमं तपश्चरितुं[1] वनमरण्यमाविशन्। दश संख्याकानि वर्षाणां वत्सराणां सहस्राणि तपसां पतिं भगवन्तं तपसा आर्चन् अर्चयामासुः॥ १४॥

पथि मार्गे दृष्टेन प्रसीदता गिरिशेन रुद्रेण यदुक्तमुपदिष्टं तद्ध्यायन्तः तदर्थं ध्यायन्तः तज्जपन्तश्च समाहितचित्ताः पूजयन्तश्च आर्चन्निति पूर्वेणान्वयः॥ १५॥

**विज.** अपत्नीकस्यास्य यज्ञकरणं कथमिति शङ्कां निवारयितुमाह - **सामुद्रीमिति**। समुद्रपुत्रीति वचनादयं विशेषो ज्ञातव्यः। देवदेवेन ब्रह्मणोक्तां तां विशिनष्टि - यामिति। शुकीमिव यथा नाम्ना शुकीं राजपुत्रीम् अग्निः प्रदक्षणीकुर्वाणां कामित्वातदादाय अन्तरधात् तथा याम् एनामप्यादातुं शक्यभावेऽपि अग्निश्चकमे इत्यन्वयः। "राजपुत्रीं शुकीमग्निः आवर्तन्तीं प्रदक्षिणम्। आदायाऽन्तरधाद्दानसमये मन्मथातुरः॥ (ब्राह्मे) इति वचनात् अयं विशेषो ज्ञातव्यः॥ ११॥

अग्निश्चकम इति यत् तत् च्चित्रमिति भावेनाह - **विबुधेति**। अग्नेरपि विबुधेष्वेकत्वात् सूर्या नवोढा। "सूर्यं विहर्तुं नासहा" इति श्रुतेः॥ १२॥

तुल्यं नाम व्रतं च येषां ते। तथा किं तत्तुल्यं नाम इत्यत्राह - प्रचेतस इति॥ १३॥

तत्कर्माऽऽह - **पित्रादिष्टा** इति॥ १४॥

एषां को गुरुः किं जप्यं किं ध्येयम्? अत्राह - **यदुक्तमिति**॥ १५॥

## विदुर उवाच

**प्रचेतसां गिरित्रेण यथाऽऽसीत्पथि[2] सङ्गमः।**
**यच्चाप्याह[3] हरः प्रीतस्तन्नो ब्रह्मन् वदार्थवत्[4]॥ १६॥**

---

1. A,B,T °श्चर्तुं 2. V °ति 3. A, B, G, I, J, T यदुताह; M, Ma, Ms यद्वाप्याह; V यदभ्याह 4. Ms °वित्

सङ्गमः खलु विप्रर्षे शिवेन[1] हि शरीरिणाम्।
दुर्लभो मुनयो दध्युरसङ्गाद्यमभीप्सितम्[2]॥ १७॥

आत्मारामोऽपि यस्त्वस्य लोककल्पस्य[3] राधसे।
शक्त्या युक्तो विचरति घोरया[4] भगवान् भवः[5]॥ १८॥

मैत्रेय उवाच

प्रचेतसः पितुर्वाक्यं शिरसाऽऽदाय[6] साधवः।
दिशं प्रतीचीं प्रययुः तपस्यादृतचेतसः॥ १९॥

समुद्रमुप विस्तीर्णमपश्यन् सुमहत्सरः।
महन्मन इव स्वच्छं प्रसन्न सलिलाशयम्॥ २०॥

श्रीध. सङ्गम इति। मुनयोऽपि सङ्गात् योगेनाप्तुमिष्टं यं दध्युरेवकेवलं न तु प्रापुः तेन शिवेन॥ १६,१७॥

ननु मुनीनां किं तद्ध्यानेन घोरत्वादित्याशङ्क्याह - आत्माराम इति। आत्मारामोऽपि[7] लोकरचनायाः पालनाय॥ १८॥

गुर्वाज्ञाकारिणां शिवदर्शनं स्वत एव भवतीत्याशयेनाह - प्रचेतस इति॥ १९॥

समुद्र इति। समुद्रमुप समुद्रात् किञ्चिन्न्यूनम्। "उपोऽधिके च" (अष्टा 1-4-87) इति कर्मप्रवचनीयः। प्रसन्नाः सलिलाशया मत्स्यादयो यस्मिन्॥ २०॥

वीर. गिरिशेनोक्तं ध्यायन्त इत्याद्युक्तम्। तत्र किमुक्तं गिरिशेनेति पृच्छति विदुरः। यदा यस्मिन् काले पथि गिरित्रेण सह प्रचेतसां सङ्गम आसीत्। हे ब्रह्मन्! प्रीतो हरः रुद्रः अर्थवत् पुरुषार्थसाधनं यदाह तन्नो अस्मभ्यं वद॥ १६॥

शिवसङ्गमस्य दौर्लभ्यमाह - हे विप्रर्षे! शरीरिणां नृणाम्[8] इह[9] संसारे शिवेन साकं सङ्गमो दुर्लभः दुःखेनापि लब्धुमशक्यः। मुनयः अभीप्सितं आप्तुमिष्टं[10] यं शिवमसङ्गात् विषयान्तरसङ्गत्यागात् दध्युरेव केवलं, न तु प्रापुः तेन शिवेन॥ १७॥

---

1. A, B, G, I, J, Ms, T, V °नेह 2. M, Ma °सङ्गाः सदभी° 3. W दीनलोकस्य 4. M, Ma, Ms तीव्रया 5. V हरः 6. M, Ma, Ms °साऽऽधाय; T, W °स्याधाय 7. V omits अपि 8. W omits नृणाम् 9. A, B, T omit इह 10. A, B, T प्रा°

ननु मुनीनां किं तद्ध्यानेन घोरत्वादित्याशङ्क्याह -- योऽयं भगवान् उत्पत्त्यादिज्ञानवान् हरः आत्मारामोऽपि आत्मारामत्वेन लोकसञ्चारप्रयोजनरहितोऽपीत्यर्थः। दीन लोकस्य राधसे सिद्धये दीनाननुग्रहीतुमिति यावत्। शक्त्या स्त्रिया सह युक्तः घोरया मूर्त्या उपलक्षितो विचरति ॥ १८ ॥

एवमापृष्टो मुनिः तत् यथावद्वक्तुमुपक्रमते - **प्रचेतस** इति। साधवः प्रचेतसः पितुः प्राचीनबर्हिषः वाक्यं प्रजाः सृजतेति वाक्यं शिरस्याधाय अतिगौरवेण शिरसाऽनुमोद्य सृष्ट्यर्थं तपस्यादृतचेतसः प्रतीचीं दिशं प्रति प्रययुः ॥ १९ ॥

समुद्रमुप समुद्रात् किञ्चिन्न्यूनम्। "उपोऽधिके च" (अष्टा. 1-4-87) इति कर्मप्रवचनीयत्वे तद्योगात् द्वितीया। समुद्रसमीपे वा विस्तीर्णं सुशोभनं महत् श्रेष्ठं सर अपश्यन्। महत्त्वमेव स्पष्टयति महतां ज्ञानिनां मन इव स्वच्छं निर्मलं प्रसन्नाः सलिलाशया ये मत्स्यादयः यस्मिन् ॥ २० ॥

**विज.** सङ्क्षेपेणोक्तं विस्तरतः श्रोतुं विदुरः पृच्छति - **प्रचेतसामिति**। यद्वा किं वा अर्थवत् प्रयोजनवत् ॥ १६ ॥

पथिकानां पुरुषाणां तत्र सङ्गमः सुलभः स्यात् अतः किं चोद्यमत्राह - **सङ्गम** इति। असङ्गा मुनयः सतामभीप्सितम् अदधुः तेन शिवेन सह सङ्गमः ॥ १७ ॥

जगतो निरोगत्वाय[1] विचरतोऽपि शिवस्य आत्मारामत्वेन निस्पृहस्य सङ्गमेऽपि सम्भाषणं न सम्भाव्यत इत्याशयेनाह - **आत्मारामोऽपीति**। यस्त्वस्य लोककल्पस्य जनस्य रोगान्मुक्तत्वस्य राधसे सिद्धये तीव्रया शक्त्या इत्यनेन सम्भाषणानुपपत्तिं सूचयति ॥ १८ ॥

सम्भाषणस्य योग्यावस्थां वक्ष्यन् मैत्रेयः प्रचेतसां कथां आदित आवर्तयति - **प्रचेतस** इति ॥ १९ ॥

समुद्रमुप समुद्रस्य समीपे, विस्तीर्णं दक्षिणोत्तरायतं महतः कण्वस्य मुनेः मन इव स्वच्छम्। यद्वा महतां श्रीनारायणस्य चरणारविन्दपरायणानां मनो यथा निर्मलं तथा ॥ २० ॥

**नीलरक्तोत्पलाम्भोजकल्हारेन्दीवराकरम्।**
**हंससारसचक्राह्व[2]कारण्डवनिकूजितम् ॥ २१ ॥**

**मत्तभ्रमरसौस्वर्य हृष्टरोमलताङ्घ्रिपम्।**
**पद्मकोशरजो दिक्षु विक्षिपत्पवनोत्सवम् ॥ २२ ॥**

---

1. A नी° 2. V °ङ्ग

**तत्र गान्धर्वमाकर्ण्य दिव्यमार्गमनोहरम्।**

**विसिस्म्यू[1] राजपुत्रास्ते मृदङ्गपणवाद्यनु[2]॥ २३॥**

**तर्ह्येव सरसस्तस्मान्निष्क्रामन्तं सहानुगम्।**

**उपगीयमानममरप्रवरं विबुधानुगैः॥ २४॥**

**तप्तहेम[3] निकायाभं शितिकण्ठं त्रिलोचनम्।**

**प्रसादसुमुखं वीक्ष्य प्रणेमुर्जातकौतुकाः॥ २५॥**

**श्रीध.** **नील** इति। नीलोत्पलादीनां आकरं जन्मस्थानम्। उत्पलाम्भोजकल्हाराणि रात्रिदिनसन्ध्याविकासीनि। इन्दीवरं नीलोत्पलम्। तस्य पुनरुक्तिः प्राचुर्यज्ञापनार्थम्। हंसादिभिः निकूजितम्॥ २१॥

**मत्तेति**। मत्तानां भ्रमराणां सौस्वर्येण हृष्टरोमाणो लताङ्घ्रिपा यस्मिन्। पद्मकोशरजो दिक्षु विक्षिपता पवनेन उत्सवो यस्मिन्॥ २२॥

**तत्रेति**। तत्र मृदङ्गपणवादिवाद्यम् अनु पश्चात् दिव्यैः [4-]मार्गैः स्वरभेदैः[-4] मनोहरं गान्धर्वं गानमाकर्ण्य [5-]विसिस्मुः[-5] विस्मयं प्राप्ताः। पाठान्तरे मृदङ्गपणवादि अवत् रक्षत् तेषां ध्वनिम् अतिरस्कुर्वदित्यर्थः॥ २३॥

**तर्हीति**। ते च त्रिलोचनं वीक्ष्य जाताश्चर्याः प्रणेमुरित्युत्तरेणान्वयः॥ २४॥

**तप्तेति**। तप्तहेमराशिसदृशकान्तिम्। शितिः नीलः कण्ठो यस्य तम्॥ २५॥

**वीर.** नीलोत्पलादीनामाकरं जन्मस्थानम् उत्पलानि रात्रिविकासीनि, अम्भोजानि दिनविकासीनि, कल्हाराणि सन्ध्याविकासीनि, इन्दीवरं नीलोत्पलं तस्य पुनरुक्तिः प्राचुर्यज्ञापनार्था। हंसादिभिः विकूजितं चक्राह्वाः चक्रवाकाः॥ २१॥

मत्ता ये भ्रमराः तेषां सौस्वर्येण मधुरस्वरेण हृष्टरोमाणो लताङ्घ्रिपा यस्मिन्, उपश्लिष्टलताग्रैः हृष्टरोमाण इव अङ्घ्रिपा यस्मिन् तदित्यर्थः। पद्मकोशेषु यद्रजः तत् कर्म दिक्षु विक्षिपता पवनेन उत्सवो यस्मिन्॥ २२॥

तत्र मृदङ्गादिभिरन्वितं दिव्यैः मार्गभेदैः प्रकारभेदैः मनोहरं गान्धर्वं गानमाकर्ण्य ते राजपुत्राः विसिस्मुः[6] [7-]विस्मयं प्राप्ताः[-7]॥ २३॥

---

1. V, W °स्मू 2. M, Ma °वाद्यवत्; W °वान्वितम् 3. M, Ma, Ms निकर्षाभं 4--4. B, J, V, Va मार्गभेदैः 5--5. A, B, J, Va omit
6. A, B, T °स्म्युः 7--7. W omits

तदैव तस्मात् सरसो विनिर्गच्छन्तं विबुधानुगैः गन्धर्वकिन्नरादिभिः उपगीयमानममरश्रेष्ठं सप्रमथगणम्॥ २४॥

तप्तहेमशशिसदृशकान्तिं नीलः कण्ठो यस्य तं, प्रसादाभिमुखं विलोचनं रुद्रं वीक्ष्य सञ्जातहर्षाः प्रचेतसः प्रणेमुः नमस्कृतवन्तः॥ २५॥

**विज.** कतिपयैः श्लोकैः सरसः सेवनीयत्वं वक्ति - **नीलेत्यादिना।** नीलोत्पलानां रक्तोत्पलानां अब्जानां अम्भोजानां इन्दीवराणां पद्मविशेषाणां कल्हाराणां सौगन्धिकानां आकरं उत्पत्तिस्थानम्। "मद्गुः कारण्डवः प्लवः" (अम.को. 2-251) इत्यभिधानम्॥ २१॥

मत्तभ्रमराणां सौस्वर्येण शोभनस्वरपरम्परया हृष्टरोमलतायुक्ता अङ्घ्रिपाः वृक्षाः यत्र तत्तथा तद्रोमलोमत्वमित्यर्थः। दिक्षु पद्मकोशरजो, विक्षिपतः प्रसारयतः पवनस्य उत्सवः शैत्यमान्द्यसौरभ्यलक्षणो यस्मिन् तथा तत्। "कोशोऽस्त्री मुकुले दिव्ये शास्त्रे" (वैज.को. 6-5-15) इति यादवः॥ २२॥

दिव्यो मार्गो येषां ते दिव्यमार्गाः देवाः तेषां मनोहरं, दिव्यमार्गमिति पाठे दिव्याः क्रीडादिके हेतवो मार्गाः सप्तस्वरभेदाः यस्मिन् तत्तथा तादृशं गान्धर्वं गानं, मृदङ्गादीनामनुकूलम्॥ २३, २४॥

तप्तहेमनिकर्षः तप्तसुवर्णकर्षणः पाषाणः तद्वन्निर्मलं, नैर्मल्ये दृष्टान्तोऽयं न तु धावल्ये, तप्तहेम निकर्षाभ इत्यतोऽन्यः कश्चिदित्यतः शितिकण्ठमिति। सोऽपि मयूरः किं न स्यादित्यतः त्रिलोचनमिति॥ २५॥

**स तान् प्रपन्नार्तिहरो[1] भगवान् धर्मवत्सलः[2]।**

**धर्मज्ञान् शीलसम्पन्नान् प्रीतान् प्रीत उवाच ह॥ २६॥**

**श्रीरुद्र उवाच**

**यूयं वेदिषदः[3] पुत्रा विदितं वश्चिकीर्षितम्।**

**अनुग्रहाय भद्रं व एवं मे दर्शनं कृतम्॥ २७॥**

**यः परस्तमसः[4] साक्षात् त्रिगुणाज्जीवसंज्ञितात्।**

**भगवन्तं वासुदेवं प्रपन्नः स प्रियो हि मे॥ २८॥**

---

1. V °न्नगिरिशो 2. T भक्त 3. M, Ma, Ms बर्हि° 4. A, B, G, I, J, T, V परं रंहसः; W परं तमसः

**स्वधर्मनिष्ठः शतजन्मभिः पुमान् विरिञ्चतामेति[1] ततः परं हि माम्।**
**अव्याकृतं भागवतोऽथ वैष्णवं पदं यथाऽहं[2] विबुधाः कलात्यये॥ २९॥**

**अथ भागवता यूयं प्रियाः स्थ भगवान् यथा।**
**न मे[3] भागवतानां च प्रेयानन्योऽस्ति कर्हिचित्[4]॥ ३०॥**

**श्रीध. यूयमिति।** वेदिषदो बर्हिषदः चिकीर्षितं भगवदाराधनं मया[5] विदितम्॥ २६, २७॥

अनुग्रहकारणमाह - **य** इति। यः साक्षाद्वासुदेवं प्रपन्नः स हि मे प्रियः। कथम्भूतं रंहसः सूक्ष्मात् त्रिगुणात्प्रधानात् जीवसंज्ञितात् पुरुषाच्च परम्। प्रकृतिपुरुषयोः नियन्तार मित्यर्थः॥ २८॥

तत्किम्? तस्य महत्तमत्वादित्याह - **स्वेति**। स्वधर्मनिष्ठः पुमान् बहुभिः[6] जन्मभिः विरिञ्चतां प्राप्नोति। ततोऽपि पुण्यातिशयेन मामेति। भागवतस्त्वथ देहान्तेऽव्याकृतं प्रपञ्चातीतं वैष्णवं पदमेति। यथाऽहं रुद्रो भूत्वाऽऽधिकारिकवत्[7] वर्तमानो, विबुधा देवाश्चाधिकारिकाः कलात्यये अधिकारान्ते लिङ्गभङ्गे सति एष्यन्ति॥ २९॥

**अथेति**। अथ भागवतत्वात् यूयं मे प्रियाः स्थ। भवद्भिरपि मयि प्रीतिः कार्येत्याशयेनाह - मत् मत्तः[8] अन्यो भागवतानाञ्च प्रेयान्नास्ति॥ ३०॥

**वीर.** स भक्तवत्सलो भगवान् गिरिशः प्रपन्नान् नमस्कुर्वाणान् धर्मज्ञान् विनयादि शीलसम्पन्नान् तान्[9] प्रचेतसः स्वदर्शनप्रीतान् स्वयमपि प्रीत उवाच॥ २६॥

उक्तिमेवाह - **यूयमिति** यावदध्यायसमाप्ति। यूयं वेदिषदः प्राचीनबर्हिषः पुत्राः वः युष्माकं चिकीर्षितं भगवदाराधनं च विदितं वः अनुग्रहाय युष्माननुग्रहीतुं मे मम दर्शनं कृतं कारितं मयेत्यर्थः॥ २७॥

अनुग्रहकारणमाह - **य** इति। त्रिगुणात्मकात् तमसः प्रधानात् [10-]जीवसंज्ञितात्[-10] क्षेत्रज्ञाच्च साक्षात्परं विलक्षणम्। सूक्ष्मादिति पाठे त्रिगुणात्कार्यावस्थात् सूक्ष्मात्कारणावस्थाच्च तमसः प्रधानात् क्षेत्रज्ञाच्च परमित्यर्थः। भगवन्तं प्रकृतिपुरुष-वैलक्षण्यापादकपूर्णज्ञानादिषाड्गुण्यं वासुदेवं यः प्रपन्नः स मे प्रियः, भगवद्भक्तस्य सर्वोत्कृष्टत्वादिति भावः॥ २८॥

---

1. W °ञ्चि° 2. M, Ma यथार्हं विविधैः 3. A, B, G, I, J, T, W मद्भा° 4. W कश्चन 5. B, J, V, Va omit मया 6. V बहुज° 7. V इव 8. B, J, V, Va omit मत्तः 9. A, B, T omit तान् 10--10. A, B, T omit

सर्वोत्कृष्टतामेवाह - **स्वधर्मनिष्ठ** इति। पुमान् शतजन्मभिः केवलस्ववर्णाश्रमधर्मनिष्ठः विरिञ्चितां विरिञ्चिसालोक्यं तत् साम्यं वा, एति मामित्यत्राप्येवम्। ततः परं ततः परस्तात् मामेति। अथाऽनन्तरं भागवतः निवृत्तिधर्मानुष्ठानपरं अव्याकृतं चक्षुराद्यनवगम्यं वक्तुमयोग्यं वा वैष्णवं विष्णुसम्बन्धि[1] पदं स्थानमेति। अहं, विबुधाः ब्रह्मेन्द्रादयश्च कलात्यये स्वस्वाधिकारान्ते यथा प्राप्नुवन्ति तथेत्यर्थः॥ २९॥

अथ ननु यूयं भागवताः स्थ भवथ, अतो मम भगवान् यथा प्रियः एवं यूयमपि प्रिया भवथ। भागवतानां भागवतेभ्यः मे अन्यः प्रियः कश्चिन्नास्ति॥ ३०॥

**विज.** प्रणतिफलमाह - **स तानिति**॥ २६॥

वो युष्माकमनुग्रहायैव एवंविधं भद्रं कल्याणं दर्शनं कृतमित्यन्वयः। अनेन तीव्रया शक्त्या विचरतीत्यस्य परिहारः उक्तो भवति। सम्भाषणयोग्यरूपदर्शनादिति॥ २७॥

विष्णुभक्तानस्मान् कथं भवान् अनुगृह्णाति इति चेत् तत्राह - **यः पर** इति। यो जीवसंज्ञितात् त्रिगुणात् तमसो लक्ष्मीतत्वात् साक्षात् परः तं भगवन्तं वासुदेवं शरणं प्रपन्नः। स मे प्रियो हि यस्मात्तस्मात् भवन्तो मदनुग्रहयोग्या इत्यर्थः। "स जीवमायां प्रकृतिं सिसृक्षतीम्" तम आसीत्तमसागूढमग्रे प्रकेतम्" (यजुरा. 2-8-9) इति वचनद्वयेन लक्ष्मीतत्त्वस्य जीवशब्दवाच्यत्वं तमश्शब्दवाच्यत्वं च सिद्धम्॥ २८॥

इतोऽप्यनुगृह्णामीति वक्तुमृजूनामपि बहुजन्मसाध्यो भगवत्प्रसादः किमुत अन्येषामिति ध्वनयन् विरिञ्चपदप्राप्तिसाधन-सामग्रीमाह - **स्वधर्मेति**। वैराग्यभक्तिज्ञानादयः स्वधर्माः तेषु निष्ठा नितरां स्थितिः यस्य स तथा, स ऋजुष्वेकः पुमान् शतजन्माभिः एकोन शतजन्मभ्यः पूर्वकालमारभ्य सञ्चीर्णहर्युपासनाजनित भगवत्प्रसादेन विरिञ्चतामेति। ब्रह्मपदं प्राप्नोतीत्यन्वयः। ततः परं, ब्रह्मपदानुभवानन्तरं मां श्रियमेति। हिशब्देन श्रीद्वारमात्रं ब्रह्मण इति सूचयति। "अव्याकृतं विशति यर्हि गुणत्रयात्मा। कालं परं स्वमनुभूय" (भाग. 3-32-9) इत्युक्तेरव्याकृतं निर्विकारं लक्ष्मीतत्त्वमित्यर्थः। "ऋजवो नाम ये देवा योग्या ब्रह्मपदस्य तु। त एव शतजन्मानि विशेषोपासका हरेः॥ प्राप्य ब्रह्मपदं पश्चात् श्रियं प्राप्यानुमोदिताः। तया ततो हरिं यान्ति वसन्ति हरिसन्निधौ। अनादिकालभक्ताश्च ज्ञानिनस्ते न संशयः। विशिष्टा ज्ञानभक्त्यादौ सर्वजीवनिकायतः। सर्वदापि विशेषेण शतजन्मप्रयत्नतः। स्वपदप्राप्तिरुद्दिष्टा ततो मुक्तिरवाप्यते॥" (षाड्गुण्ये) इति निर्णायकवचनात् उक्त एवार्थो नापरः। उक्तलयं विशिनष्टि-भागवत इति।

---

1. A. B, T विष्णोः

अथ श्रियं प्रविश्य भागवतो भगवद्भिः भाग्यवद्भिर्युक्तो ब्रह्मा यथार्हं यथायोग्यं विविधैः कार्यकारणसङ्घातैस्सह कलात्यये षोडशकलात्मकशरीरलयोपलक्षितजगत्प्रलये वैष्णवं पदम् अपरिच्छिन्नं भगवत्स्वरूपमेतीत्यन्वयः । अस्मदादयोप्यनेनैव व्याख्याताः, तथा हि यथा ऋजुष्वेकः पुमान् बहुलजन्मसञ्चीर्णपुण्यसञ्चयेन ब्रह्मपदं प्राप्य अनुभूय श्रीद्वारा सायुज्यलक्षणां मुक्तिमाप्नुते इति, तथाऽहं चत्वारिंशज्जन्मभिरार्जितैः सुकृतैः शैवं पदं समवाप्य अनुभूय तथेन्द्रोऽपि विंशद्भिर्जन्मभिः आपादितैः पुण्यैः ऐन्द्रपदं समेत्यानुभूय तथेन्द्रादन्ये दशभिर्जन्मभिः उत्पादितैः शुभैः स्वस्वयोग्यं पदं प्राप्य तत्तत्पदभोग्ययोग्यसुकृतं भुक्त्वा ब्रह्मणा सह विमुक्तिमाप्नुम इति । तदुक्तम् - ''तथैव चत्वारिंशद्भिः पदं शैवं च जन्मभिः । विंशद्भि रैन्द्रं दशभिरन्येषामप्युदीरितम्'' (षाड्गुण्ये) इति । यथाहमिति पाठे, यथाहं श्रीहरिप्रसादेन शैवं पदमाप्तोऽस्मि, तथा ऋजुष्वेकः पुमान् शतजन्मभिर्विरिञ्चतामेतीति योज्यं, ''विदेहि रुद्रो रुद्रियं महित्वम्'' इति श्रुतिश्च ॥ २९ ॥

ततः प्रकृते किं फलितमाह - **अथेति** । अथैवमुक्तप्रकारेणानादिकालमारभ्य भगवद्भक्तोऽहं यस्मात्तस्माद्भागवता भगवद्भक्तत्वाद्यूयं मे प्रियाः स्थ । यथा भगवानित्यधिकदृष्टान्तः । न केवलं यूयमेव मत्प्रियाः अन्येऽपि भगवद्भक्ता इत्याह - **न मे** इति । भागवतानां सकाशात् चशब्दात् प्रेम्णो निरुपमचरितत्वमाह । अनेनासुरेभ्यो वरदानेन तत्प्रीतिः औपचारिकीति दर्शितम् । यद्वा युष्माकमपि भागवत एव प्रियो नापरः, अन्यथा भागवतत्वहानिरित्याशयेनाह न मे इति । मम भागवतानां युष्माकं च भागवतादन्यः प्रेयान्नास्तीत्यन्वयः । अनेन युष्माकं च अहमपि प्रियः इति ध्वनितम् ॥ ३० ॥

**इदं विविक्तं जप्तव्यं पवित्रं मङ्गलं परम् ।**
**निःश्रेयसकरं चापि श्रूयतां यद्वदामि[1] वः ॥ ३१ ॥**

**मैत्रेय उवाच**

**इत्यनक्रोशहृदयो भगवानाह तान् शिवः ।**
**बद्धाञ्जलीन् राजपुत्रान्नारायणपरो वचः ॥ ३२ ॥**

**श्रीरुद्र उवाच**

**जितं[2] त[3] आत्मविद्धुर्यस्वस्तये[4] स्वस्तिरस्तु मे ।**
**[5]भवता राधसा राद्धं सर्वस्मा आत्मने नमः ॥ ३३ ॥**

1. A. B, G, I, J, T तº 2. M, Ma वः 3. M, Ma, M s ºविद्धुयोः 4. M, Ma, Ms वः 5. M, Ma, Ms भवतां राधसे राद्धं

**नमः पङ्कजनाभाय भूतसूक्ष्मेन्द्रियात्मने।**

**वासुदेवाय शान्ताय कूटस्थाय स्वरोचिषे॥ ३४॥**

**सङ्कर्षणाय सूक्ष्माय दुरन्तायान्तकाय च।**

**नमो विश्वप्रबोधाय प्रद्युम्नायान्तरात्मने॥ ३५॥**

**श्रीध. इदमिति**। अत इदं जप्तव्यम्। श्रूयतामिति। विविक्तमसङ्कीर्णं यथा भवति तथा[1]॥ ३१॥

**इतीति**। "सृष्ट्यादौ ब्रह्मणा सृष्ट्वा पुत्रेभ्यः प्रोक्तमिष्टदम्। स्तोत्रं प्राह प्रचेतोभ्यः कृपया भगवाञ्छिवः"॥ ३२॥

**जितमिति**। ते जितं तवोत्कर्षः आत्मविद्धुर्याणां [2-]ज्ञानिश्रेष्ठानां[-2] स्वस्तये शोभनसत्तायै स्वानन्दलाभायेत्यर्थः। अतो मे स्वस्तिः स्वानन्दसत्ताऽस्तु। ननु ममोत्कर्षो मदर्थ एव किं न स्यात्तत्राह। भवता राधसा स्वानन्दरूपेण राद्धं सिद्धम्। त्वं [3-]निरतिशय[-3] परमानन्दरूपेणैव नित्यं स्थित इत्यर्थः। अत एवम्भूताय आत्मने तुभ्यं नमः, सर्वस्मै सर्वरूपाय च॥ ३३॥

सर्वरूपत्वं प्रपञ्चयन् प्रणमति - **नम** इति सार्धैर्दशभिः। पङ्कजं लोकात्मकं नाभौ यस्य तस्मै कारणात्मने नमः। कारणत्वादेव सृज्यानां प्राणिनां ये उपाधयो भूतानि सूक्ष्माणि तन्मात्राणीन्द्रियाणि च तेषामात्मने नियन्त्रे अन्तः करणचतुष्टयाधिष्ठातृत्वेन प्रणमति चतुर्भिः श्लोकार्धैः। वासुदेवाय चित्ताधिष्ठात्रे, कूटस्थाय निर्विकाराय चित्तस्यैकरूपत्वात्॥ ३४॥

**सङ्कर्षणायेति**। सङ्कर्षणायाहङ्काराधिष्ठात्रे, सूक्ष्माय अव्यक्ताय, दुरन्तायानन्ताय, अन्तकाय मुखाग्निना लोकदाहकाय, विश्वस्य प्रकृष्टो बोधो यस्मात् अन्तरात्मने बुद्ध्य धिष्ठात्रे॥ ३५॥

**वीर.** तत इदं वक्ष्यमाणं जप्तव्यं श्रूयतामित्यन्वयः। जप्तव्यं विशिनष्टि। विविक्तमसङ्कीर्णं यद्वा विविक्तं कर्तरि क्तः। विवेचकं प्रकृतिपुरुषविलक्षणत्वेन परमात्मविवेचकमित्यर्थः, अत एव पवित्रमत एव मङ्गलं धर्मादिपुरुषार्थसाधनं, निःश्रेयसकरं मुक्तिसाधन मत एव परं वः युष्मभ्यं वदामि॥ ३१॥

इत्येवं वदामीति प्रतिज्ञापूर्वकमनुक्रोशहृदयः [4-]कृपायुक्तहृदयः[-4] भगवान्नारायण एव परः प्राप्यः प्रापकश्च यस्य सः शिवः बद्धानि अञ्जलिपुटानि यैस्तान् राजपुत्रान् प्रति वचः वाक्यमाह॥ ३२॥

---

1. A, B, J, Va omit तथा 2--2. B, J, V, Va omit 3--3. A, B, J, Va omit 4--4. A, B, T omit

स्वरूप[1]रूपस्वभावैस्तत्सर्वोत्कृष्टत्वं भक्तानुग्रहार्थमेव न स्वार्थमिति वदन् सर्वान्तरात्मत्वगुणविशिष्टं नमस्करोति - **जितमिति**। हे आत्मवद्धुर्य ! आत्मवतां ज्ञानिनां धुर्य ! रक्षक ! ते तव जितमुत्कर्षः स्वरूपेण गुणैश्च निरतिशयोत्कर्षः जितमिति भावे क्तः, स्वस्तये आत्मविदामिति शेषः । यद्वा आत्मविद्धुर्या योगीश्वरास्तेषां स्वस्तये सुखाय त्वामुपासीनानां निरतिशयानन्दावहाः तत्स्वरूपरूपगुणाः भक्तानुग्रहैकप्रयोजना इत्यर्थः[2]। अतो मे त्वामुपासीनस्य मम स्वस्तिः त्वदनुभूतिसम्भूतं सुखमस्तु। न त्वसत्तां प्राप्नुयादित्यर्थः। मे स्थायित्वेनावतिष्ठत्वित्यर्थः। ननु विषयानन्दवत् मदनुभूतिसम्भूतानन्दोऽपि क्षणिक एव स्यात्तत्राह। राधसा सिद्धरूपेण भवता सिद्धं संसिद्धं साध्यत्वेन विषयाणामस्थिरत्वात् तदनुभवसम्भूतानन्दोऽप्यस्थिरः तव तु सिद्धरूपत्वात् त्वां नित्यमनुभवतो मम त्वदनुभवसम्भूतानन्दः स्थायीति भावः। अत्र परमात्मानन्दसाधनभूततद्विषयभक्तेः स्थैर्यं प्रार्थ्यते। ननु मम कथं सर्वोत्कृष्टता ममापि देवादीनां मध्येऽन्यतमत्वादित्यत्राह सर्वस्मै आत्मने[3] इति। सर्वस्मै प्रपञ्चरूपाय, तत्र हेतुः आत्मन इति। यथा देवमनुष्यादिशरीरेष्वात्मतयाऽनुप्रविष्टो जीवः देवोऽयमिति देवादिसामानाधिकरण्येन व्यपदिश्यते तद्वत्परमात्मा। "यः पृथिव्यां तिष्ठन् य आत्मनि तिष्ठन्" (बृह.उ. 3-7-3) इति चिदचिदन्तरात्मतयाऽवस्थितः तद्व्यपदेशेन व्यपदिश्यते। तत्तदन्तरात्मत्वमेव तत्तद्व्यपदेशव्यपदेश्यत्वनिमित्तमिति युक्तमात्मत्वस्य सर्वत्वव्यपदेशहेतुत्वम्। यद्वा "आत्मनः आकाशः सम्भूतः" (तैत्ति.उ. 2-1-1) इत्यत्रेव आत्मशब्दः कारणात्मपरः, तथा चायमर्थः - कारणं हि मृद्द्रव्यं, कार्यात्मना परिणतं मृदयं घट इति कार्याभेदेन व्यपदिश्यते। तथा सूक्ष्मचिदचिद्विशिष्टः कारणभूतः परमात्मा स्थूलचिदचिद्विशिष्टब्रह्मरूपप्रपञ्चव्यपदेशव्यपदेश्यः इत्युक्तं कारणात्मत्वस्य सर्वत्वव्यपदेशहेतुत्वम्। एवं चेदृशं सर्वात्मत्वसर्वकारणत्वप्रयुक्तसर्वात्मकत्वं त्वय्येवैकान्तमिति त्वमेव सर्वोत्कृष्ट इति भावः[4] ॥ ३३ ॥

अन्यदप्युत्कर्षो[5]पपादकं गुणजातं वदन् तद्विशिष्टं नमस्करोति - **नम** इति। पङ्कजनाभाय लोकात्मकं पङ्कजं नाभौ यस्य तस्मै, एवं कार्यावस्थप्रपञ्चरूपत्वमुक्तम्। कारणावस्थप्रपञ्चरूपतामाह। भूतसूक्ष्माणामिन्द्रियाणां चात्मने आश्रयाय उभयनिर्वाहकमन्तरात्मत्वं तत्प्रयुक्तदोषास्पृष्टत्वं चाह। वासुदेवाय वासुश्चासौ देवश्च तस्मै। "सर्वत्रासौ समस्तं च वसत्यत्रैव वै यतः" (वि.पु. 1-2-12) इत्युक्त कर्त्रधिकरणव्युत्पत्तिनिरुक्तवासुशब्दवाच्यसर्वान्तरात्मत्वगुणविशिष्टाय तथापि देवाय त[6]द्व्याप्यगतदोषास्पर्शनेन देदीप्यमानाय, अत एव शान्ताय अशनायापिपासाशोकमोहजरामृत्युभिरूर्मिभिर्विरहिताय अत एव कूटस्थाय निर्विकाराय अत एव स्वरोचिषे नित्यासङ्कुचितापरिच्छिन्नस्वप्रकाशाय ॥ ३४ ॥

कारणावस्थप्रपञ्चात्मकत्वस्य प्रपञ्चसंहारपूर्वकत्वाज्जगत्संहर्तृत्वगुणविशिष्टतामाह - **सङ्कर्षणायेति**। सङ्कर्षणाय समित्येकीकारे

---

1. W omits रूप 2. W °ति भावः। 3. A, B, T add नमः 4. A, B, T omit भावः 5. A, B, T °कर्षापा° 6. W omits तत्

अविभक्तनामरूपत्वेन कर्षणाय कर्षयत्याकर्षयति स्वस्मिन् जगदुपसंहरति तथा तस्मै। केनाकारेण संहर्तृत्वम्? तत्राह - अन्तकाय। मुखाग्निना लोकदाहकाय, अत एव सूक्ष्माय नामरूपविभागानर्हसूक्ष्मचिदचिद्विशिष्टाय एवम्भूतायापि दुरन्ताय अन्तर्हिताय अनुपसंहार्यायेत्यर्थः। उपसंहारो[1] हि कार्यस्य कारणेन सह संश्लेषः, तस्य कारणान्तराभावेनानुपसंहार्यत्वात् कारणकाष्ठाभूतायेत्यर्थः[2] फलितः। एवं कार्यावस्थकारणावस्थप्रपञ्चरूपत्वतदनुगुणगुणयुक्तं नमस्कृत्य जगद्रक्षकत्वतदुपयुक्तगुणविशिष्टं नमस्करोति - नम इति। विश्वप्रबोधाय विश्वं प्रबोधयति धर्मादिपुरुषार्थतत्साधनप्रकाशक-वेदाख्यशास्त्रोपदेशेन वेदयतीति विश्वप्रबोधः तस्मै, विश्वोज्जीवयित्रे इत्यर्थः। न केवलमुपदेशमात्रेण अपि तु व्यूहविधावन्तर्यामित्वादिरूपेण विभवमूलत्वसाध्वसाधु निग्रहानुग्रहदेहेन्द्रियादिसञ्जीवयितृत्वादिभिश्चेत्याहप्रद्युम्नाय। दुष्कृन्निग्रहसाध्वनुग्रहैकप्रयोजनरामकृष्णादिविभव-[3] मूलप्रद्युम्नव्यूहाय अन्तरात्मने सर्वदेशकालावस्थासु युगपत्सर्वजगदन्तः प्रवेशपूर्वकं प्रशासनेन भर्त्रे ॥ ३५ ॥

**विज.** सुप्रसन्नेन भवता यत्किञ्चिदुपदिश्यते चेद्भवत्प्रियत्वमानुभाविकं[4] स्यादित्यस्य वाक्यस्यावसरं आददान आह - **इदमिति**। अनेन बहुपुनश्चरणमन्तरेण क्षिप्रं सत्यं फलतीत्युक्तं भवति॥ ३१ ॥

न केवलं प्रतिज्ञामात्रं किन्तूपदिष्टं चेत्याह - **इतीति**। अनुक्रोशेत्यादि विशेषणेनानुग्रहातिशयं द्योतयति। किञ्चोपदेशकाले शिष्याणामित्थं भावं च सूचयति॥ ३२ ॥

स्वोपदेशः फलितो युष्माकमिति भावेनाह - **जितमिति**। हे आत्मविद्धुर्याः! परमात्मज्ञानिषु श्रेष्ठाः! वो जितं सर्वमिति शेषः। कुतः? स्वस्तये भगवदुपासनाख्यसत्कर्मणे मयोपदिष्टमिति यत्तस्मादिति शेषः। "प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते" भ.गी. 17-26 इति स्मृतिः। किञ्च भगवति भवतां भक्तिरनुदिनमेधतामिति भावेनाह - स्वस्तिरिति। युष्माकं हरौ स्वस्तिः समीचीनसद्भावः सती भक्तिरस्तु। ततश्च तया भक्त्या भवतां राधसे सिद्धये भगवत्तत्त्वं राध्यं पूज्यं, कथम्? सर्वस्मै सर्वान्तर्यामिणे आत्मने स्वामिने नम इत्येतावदेवास्माकं शक्यम्। नातोऽन्यदिति सङ्कल्प्येत्यर्थः। "सर्वान्तर्यामिकत्वात्तु सर्वनामा जनार्दनः।[5] न तु सर्वस्वरूपत्वात्सर्वे शेशो हरिर्यतः" (ब्रह्मतर्के) इति वचनात् सर्वनामा, न जगदात्मत्वम् अनेनोच्यते इत्यर्थः॥ ३३ ॥

इदानीं ध्येयस्वरूपं दिशति - **नमः पङ्कजनाभायेत्यादिना**। भूतानि पञ्चभूतानि, पञ्चभूतसूक्ष्माणि शब्दादीनि। इन्द्रियाणि श्रोत्रादीनि, पतित्वात्सततं व्याप्य, तिष्ठतीति। अत- सातत्यगमने इति धातुः, तस्मै॥ ३४ ॥

---

1. W omits उप   2. A, B, T कारणानां   3. A, B, T omit **विभव**   4. A **भगव°**   5. A omits **शक्यं**

दुरन्ताय अन्तत्रयवर्जिताय विश्वप्रबोधाय पूर्णज्ञानाय विश्वस्य प्रबोधो यस्मादिति वा, स तथा तस्मै ॥ ३५ ॥

**नमो नमोऽनिरुद्धाय हृषीकेशेन्द्रियात्मने।**

**नमः परमहंसाय पूर्णाय नि[1]भृतात्मने ॥ ३६ ॥**

**स्वर्गापवर्गद्वाराय नित्यं शुचिषदे नमः।**

**नमो हिरण्यवीर्याय चातुर्होत्राय तन्तवे ॥ ३७ ॥**

**नम ऊर्ज इषे त्रय्याः पतये यज्ञरेतसे।**

**तृप्तिदाय च जीवानां नमः सर्वरसात्मने ॥ ३८ ॥**

**सर्वसत्त्वात्मदेहाय विशेषाय स्थवीयसे।**

**नमस्त्रैलोक्यपालाय सह ओजबलाय च ॥ ३९ ॥**

**अर्थलिङ्गाय नभसे नमोऽन्तर्बहिरात्मने।**

**नमः पुण्याय लोकाय अमुष्मै भूरिवर्चसे ॥ ४० ॥**

**श्रीध. नम** इति। हृषीकाणां [2-]चक्षुरादीनाम्[-2] ईशं यदिन्द्रियं मनः तदात्मने सूर्यरूपेण प्रणमति। परमहंसाय सूर्याय पूर्णाय तेजसा विश्वव्यापिने निभृतात्मने क्षयवृद्धिशून्याय ॥ ३६ ॥

**स्वर्गेति**। स्वर्गाप[3]वर्गयोर्द्वाराय च [4-]कर्मज्ञानफलभूतस्वर्गमोक्षयोः द्वारभूताय त्रयीमयत्वादित्यर्थः[-4]। शुचिनि अन्तःकरणे[6] [5]सीदति निषीदतीति शुचिषत् [6-]तस्मै। "हंसः शुचिषत्[-6]" (कठ.उ. 5-2) इति श्रुतेः। हिरण्यं वीर्यं यस्य तस्मै अग्निरूपाय। चतुर्होत्रं कर्म तस्मै तत्साधनायेत्यर्थः। कुतस्तन्तवे तद्विस्तारकाय ॥ ३७ ॥

**नम** इति। सोमत्वमाह - ऊर्जे पितृणात्मन्नाय इषे देवानामन्नाय यज्ञरेतसे सोमाय। स हि पितृणां देवानां चान्नम्। एवंरूपाय त्रय्याः पतये हरये नमः। सूर्याग्निसोमत्वेनैव तेजस्त्वमुक्तम्। जलत्वमाह - सर्वरसात्मने जलरूपाय ॥ ३८ ॥

**सर्वेति**। विशेषाय पृथ्वीरूपाय सर्वेषां सत्त्वानां प्राणिनां ये आत्मानस्तेषां देहाय स्थवीयसे विराड्देहाय च त्रैलोक्यपालाय वायवे सहादिरूपाय [7]स हि प्राणरूपेण त्रैलोक्यं पालय[8]ति [9-]अतस्तस्मै तद्रूपत्वम्[-9]। सह आदिधर्माय च ॥ ३९ ॥

---

1. W °वृं° 2-2. B, J, V, Va omit 3. V वर्गद्वा° 4--4. B, J, V, Va omit 5. A, B, J, Va omit सीदति 6--6. Va omit 7. V omit स 8. V °ते 9--9. B, J, V, Va omit

**अर्थेति।** नभसे आकाशायार्थानां लिङ्गाय ज्ञापकाय शब्दगुणत्वात्। अन्तर्बहिरात्मने अन्तर्बहिर्व्यवहारालम्बनाय, एवम् आकाशादि महाभूतरूपत्वमुक्तम्। अमुष्मै स्वर्गाय भूरिवर्चसे। ''एष वै ज्योतिष्मन्तं पुण्यं लोकं याति'' इति श्रुतेः ॥ ४० ॥

**वीर. नमसो** द्विरुक्तिः तत्तद्गुणविशेषविशिष्टत्वाभिप्रायतः कृता अनिरुद्धाय अनिरुद्धव्यूहाय, हृषीकाणामिन्द्रियाणां यदीशं मन इन्द्रियाणि च, तदात्मने तद्रूपाय, सर्वात्मकत्वेऽपि विशिष्य हृषीकेशेन्द्रियग्रहणमनिरुद्धोपासनस्थानकृतम्। तथा चोक्तं तृतीये ''यद्विदुर्ह्यनिरुद्धाख्यं हृषीकाणामधीश्वरम्। शारदेन्दीवरश्यामं संराध्यमृषिभिः शनैः'' (भाग.3-26-28) इति। उक्तस्य जगद्रूपत्वादेर्जीवस्य देवादिरूपत्वात् कर्मायत्तत्व शङ्कायामाह - परमहंसाय। हिनस्ति कर्माख्यं पुण्यापुण्यरूपं मलमाश्रितेषु स्वस्मिंश्चेति हंसस्ततः कर्मधारयाच्चतुर्थी, अपहतपाप्मने इत्यर्थः। पूर्णाय अन्तर्बहिश्च व्याप्यस्थिताय नित्यनिरुपाधिकान्तर्बहि र्व्याप्तिकृतं जगद्रूपत्वं न भवत औपाधिकं, जीवस्य तु देवादिशरीरेष्वभिव्याप्तिः ''पिप्पलं स्वाद्वत्ति'' (मुण्ड.उ. 3-1-1) इति श्रुतेः कर्मकृतेति। तस्य देवादिरूपत्वमौपाधिकमिति ततः परमात्मनो वैलक्षण्यसिद्धिः। यद्वा परमहंसाय अपहतपाप्मने अतएव निर्वृतात्मने शोकरहिताय। निभृतात्मने इति पाठे क्षयवृद्धिशून्याय, अत एव पूर्णाय सर्वदान्तर्बहिश्च व्याप्य स्थिताय। यद्वा पूर्णाय व्यापकाय। निभृतात्मने अवाप्तसमस्त कामाय। अयमपि जगद्रक्षणोपयुक्त एव गुणः। अवाप्तसमस्तकामोऽहि स्वाश्रितान् समीहितकामप्रदानेन सम्यक् पालयति न तु दरिद्रः ॥ ३६ ॥

अन्यदपि जगद्रक्षणोपयुक्तं गुणजातमाह। स्वर्गापवर्गयोः द्वाराय साधनभूताय। ''इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः'' (म.ना.उ. 1-6)। ''अमृतस्यैष सेतुः'' (मुण्ड.उ. 2-2-5) इत्यादिश्रुतेः सेतुरिव सेतुः लम्भकः प्रापकः। सेतुर्हि तीरान्तरप्रापकः। स्वर्गापवर्गद्वारत्वमेवोपपादयन्नमस्करोति नित्यं सदा शुचिषु योगिचित्तेषु सीदति रमत इति शुचिषत्। योगिभिः नित्यमुपास्यत्वेन तत्समीहितापवर्गप्रदात्र इत्यर्थः। हिरण्यं वीर्यं यस्य सोऽग्निस्तस्मै अग्निरूपाय। चतुर्णां होतृणामयं चातुर्होत्रः, चतुर्भिः होतृभिः साध्यः तस्मै, तन्तवे यज्ञाय तद्रूपायेत्यर्थः। यज्ञस्वरूपत्वयज्ञाराध्यत्वतत्फलदत्वादिभिः स्वर्गद्वारायेत्यर्थः ॥ ३७ ॥

ऊरुक् पितृणामन्नं, इट् देवानामन्नं, तद्रूपाय ऊर्गिडादिरूपेण पित्रादीनां तृप्तिमापादयन् तदन्तर्यामिरूपेण यः फलदः, तस्मै इत्यर्थः। त्रय्याः वेदस्य पतये रक्षकाय प्रतिपाद्याय च यज्ञस्य रेतः फलं, तद्रूपाय, अत्र हिरण्यरूपायेत्याहवनीयाद्यग्निरूपत्वमुक्तं, चातुर्होत्राय तन्तव इति द्रव्यक्रियामन्त्राद्यात्मकयज्ञरूपत्वम्, ऊर्ज इष इति यज्ञाराध्यदेवतारूपत्वं त्रय्याः पतय इति

स्वर्गापवर्गतत्साधनप्रकाशकवेदकारणत्वम्। एवं स्वर्गापवर्गद्वारत्वमुक्तम्[1]। स्वर्गद्वारशब्देन ऐहलौकिकसुखसाधनत्वमभिप्रेतं, तदुपपादयन् नमस्करोति जीवानां तृप्तिदाय शब्दस्पर्शादिविषयानुभवजसुखप्रदायेत्यर्थः। एतदुपपादकं सर्वरसात्मन इति। सर्वरसाः[2] कट्वाम्ललवणमाधुर्यादयः, तदात्मने तद्रूपायेत्यर्थः। कट्वादिरसानामगुणपरिणामरूपत्वात्। "रसोऽहमप्सु कौन्तेय" (भगी. 7-8) इति रसस्य तद्विभूतित्वगानात् सर्वरसात्मन इत्युक्तम्। इदं शब्दस्पर्शरूपात्मकत्वस्याप्युपलक्षणम्। स्थवीयसे स्थूलाय विशेषाय पृथिव्यात्मने गन्धरूपायेत्यर्थः। "पुण्यो गन्धः पृथिव्यां च" (भ.गी. 7-9) इति [3-]गीतावचनात्[-3]। एवं गन्धरसादिभोग्यरूपेण तृप्तिदत्वमुक्तम्। अथ भोक्तृभोगोपकरणभोगस्थानादिरूपेण तृप्तिदत्वमाह - **सर्व** इति। [4-]सर्वसत्त्वात्म देहाय[-4] सर्वमचेतनजातं भोगोपकरणभोगस्थानरूपं सर्वे आत्मानो भोक्तारो जीवाश्च देहश्शरीरं यस्य तस्मै, प्रकारान्तरेणापि तृप्तिदत्वमाह। सहः प्रवृत्तिसामर्थ्यमिन्द्रियशक्तिः, ओजस्तेजः, बलं धारण सामर्थ्यं देहशक्तिः तद्रूपायेत्यर्थः[5]। सह आदिरूपेणापि तृप्तिदायेत्यर्थः। एवमाकारेण जगद्रक्षकत्वमित्याह त्रैलोक्यपालाय, उक्त [6-]प्रकारेण[-6] त्रैलोक्यान्तर्भूत[7] कृत्स्नजगत्पालायेत्यर्थः ॥ ३८,३९ ॥

एवं जगदुपादानत्वतदन्तरात्मत्वतदन्यत्वतत्संहर्तृत्वादिभिः[8] तदेकासाधारणैः धर्मैः सर्वोत्कृष्टं नमस्कृत्य, अथ चिदचिदात्मकं सर्वमपि वस्तु त्वच्छरीरमेव। अतस्त्वत्तो नोत्कृष्टमस्तीत्यभिप्रायेण सर्वात्मकत्वेन नमस्करोति - **शब्दलिङ्गायेति**। शब्दः आकाशगुणः स लिङ्गं शरीरं यस्य तस्मै, नभसे आकाशगुणः स लिङ्गं शरीरं यस्य तस्मै, नभसे आकाशरूपाय च इदं वाय्वादितद्गुणशरीरकत्वस्याप्युपलक्षणम्। शब्दादिषु नियमनपूर्वकं व्याप्य त्वच्छरीरकत्वेन स्थितायेत्यर्थः, व्याप्तिश्च वेद्यामग्निरिव न बहिरेवतिलेषु तैलमिव नान्तरेव, किन्त्वन्तर्बहिश्चेत्याह - अन्तर्बहिरात्मन इति। अतति सन्ततमविच्छेदेन व्याप्नोतीत्यात्मा अन्तर्बहिश्च व्याप्य स्थितायेत्यर्थः। तथा च श्रूयते - "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" (म.ना.उ.9-5) इति। पुण्याय [9-]यज्ञदानादिरूप[-9] पुण्यशरीराय अमुष्मै तत्साध्यस्वर्गादिलोक रूपाय, लोकाय एतल्लोकरूपाय भूरिवर्चसे ज्ञानप्रचुरजीवरूपाय ॥ ४० ॥

**विज.** "हृषीकमिन्द्रियं (प्रोक्तम्)" (वैज.को. 3-6-103) इत्यतो हृषीकेशो जीवः, तस्येन्द्रियस्वामिने, किञ्च इन्द्रियम् इन्द्रस्य विद्यमानं यच्च किञ्च, तस्यात्मा स्वामी हृषीकेशश्चायमिन्द्रियात्मा चेति विग्रहः, तस्मै निभृतात्मने स्तिमितरूपाय ॥ ३६ ॥

शुचावग्नौ सीदति तिष्ठतीति शुचिषत् तस्मै "योऽग्नौ तिष्ठन्" (बृह.उ. 5-7-6) इति श्रुतेः, हिनोति दुःखं रतिं यापयतीति

---

1. A, B, T omit उक्तम्। 2. A, B, T सर्वे 3--3. W गानात् 4--4. T omits 5. A, B, T omit इत्यर्थः 6--6. A, B, T विधया
7. A, B, T °र्गत 8. A, B, T तत्त° 9--9. A, B, T यज्ञादि

हिरण्यं तादृशं वीर्यं यस्य स तथा तस्मै, स्वर्णवर्ण रेतस इति वा, चतुर्षु होतृषु स्थित्वा तैः क्रियमाणं यत्कर्म तत्कर्तृत्वाच्चातुर्होत्रः तस्मै तन्तवे व्याप्ताय, सन्ततिप्रवर्तकाय वा ॥ ३७ ॥

ऊर्जे पित्रन्नदात्रे, इषे देवान्नदात्रे, इच्छारूपाय वा यज्ञे रेतो रतिर्यस्य स तथा तस्मै, सर्वरसात्मने सर्वरसानां दात्रे ॥ ३८ ॥

सर्वसत्त्वानां सर्वप्राणिनां आत्मदा ईहाचेष्टा यस्य स तथा तस्मै, आत्मानं ददातीति आत्मदा "य आत्मदा" (तैति.सं. 4-1-8) इति श्रुतेः। सर्वप्राणिष्वात्मदेहः तत्तदङ्गुष्ठमात्रस्वरूपं यस्य स तथा तस्मै इति वा। विशेषाय विशिष्टाय पृथिव्यां स्थित्वा तस्याः सर्वस्माद्विशेषं करोतीति वा, गुणगुणिनोः अभेदाभिप्रायेण सह इत्याद्युक्तं सहः तितिक्षाशक्तिः, ओजोऽवष्टम्भशक्तिः, बलं बाह्वाद्यवयवशक्तिः ॥ ३९ ॥

अर्थ· शास्त्रं वेदाख्यं, लिङ्गं ज्ञापकं प्रमाणं यस्य स तथा तस्मै। अर्थस्य पुरुषार्थस्य लिङ्गं हेतुस्तस्मै इति वा। नभसे आकाशवदसङ्गाय नभस्यते प्रकाश्यते न ज्ञायते इति वा। भसभक्षणदीप्त्योरिति धातुः पुण्याय पुनानाय, लोकाय प्रकाशाय, अमुष्मै अधिदैववासिने पुण्याय लोकाय, स्वर्गादिलोकदात्रे वा ॥ ४० ॥

**प्रवृत्ताय निवृत्ताय पितृदेवाय कर्मणे।**
**नमोऽधर्मविपाकाय मृत्यवे दुःखदा[1]य च ॥ ४१ ॥**

**नमस्त आशिषामीश मनवे कारणात्मने।**
**नमो धर्माय बृहते कृष्णायाकुण्ठमेधसे ॥ ४२ ॥**

**पुरुषाय पुराणाय सांख्ययो[2]गेश्वराय च[3]।**
**शक्तित्रयसमेताय मं दुषेऽहं कृतात्मने।**
**चेत आ[4]कृतिरूपाय नमो वाचोविभूतये ॥ ४३ ॥**

**दर्शनं नो दिदृक्षूणां देहि भागवतार्चितम्।**
**रूपं प्रियतमं स्वानां सर्वेन्द्रियगुणाञ्जनम् ॥ ४४ ॥**

**स्निग्धप्रावृड्घनश्यामं सर्वसौन्दर्यसंग्रहम्।**
**चार्वायतचतुर्बाहुं सुजातरुचिराजनम् ॥ ४५ ॥**

---

1. Ms, Y °दायिने 2. W °गी° 3. V ते 4. A, B, G, I, J, M, Ma, Ms, T °कू°

**श्रीध. प्रवृत्तायेति**। प्रवृत्ताय च निवृत्ताय च कर्मणे पितृदेवाय यथाक्रमं पितृदेवप्राप्तिफलाय अधर्मफलरूपाय च मृत्यवे ॥ ४१ ॥

**नम** इति। हे ईश! आशिषां [1-]कामनानां[1] कारणात्मने सर्वकर्मफलदात्रे मनवे सर्वज्ञाय मन्त्रात्मकायेति वा। विष्णुत्वेन प्रणमति। बृहते धर्माय परमधर्मात्मने कृष्णाय ॥ ४२ ॥

**पुरुषायेति**। रुद्ररूपेण प्रणमति। मीढुषे रुद्राय अहङ्कृतमहङ्कारः तदात्मने। स च कर्तृकरणकर्मशक्तित्रयसमेतः तस्मै ब्रह्मत्वेन प्रणमति। चेतो ज्ञानम्, [2]आकृतिः क्रिया तद्रूपायाः, वाचः विविधा भूतिः सृष्टिः यस्मात् तस्मै ॥ ४३ ॥

एवं नमस्कृत्य दर्शनं प्रार्थयते - **दर्शनमिति** नवभिः। भागवतैः सत्कृतं दर्शनं देहीत्यस्य विवरणं रूपमित्यादि प्रदर्शयेत्यन्तम्। स्वानां भक्तानां प्रियतमं रूपं प्रदर्शयेति नवमेनान्वयः। [3-]सर्वेषामिन्द्रियाणां[-3] ये गुणाः विषयाः तेषां अञ्जनं व्यञ्जकम्। सर्वेन्द्रियविषयविषयिरूपमित्यर्थः। सर्वेन्द्रियाणि स्वगुणैरनक्ति रञ्जयतीति वा ॥ ४४ ॥

**स्निग्धेति**। स्निग्धः प्रावृषि यो घनः तद्वत् श्यामम्। सर्वेषां सौन्दर्याणां सङ्ग्रहो यस्मिन्। चारव आयताश्चत्वारो बाहवो यस्मिन्। सुजात यथोचितं सर्वावयवरुचिरमाननं यस्मिन् ॥ ४५ ॥

**वीर.** प्रवृत्ताय निवृत्ताय च कर्मणे, प्रवृत्तिनिवृत्त्यात्मककर्मरूपाय पितृदेवाय प्रवृत्तिकर्माराध्यतत्फलप्रदपितृदेवादिशरीराय धर्मविपाकाय धर्मोऽत्रानभिसंहितफलभागवदाराधनरूपः, तस्य विपाकः फलम्। तस्मै निवृत्तिधर्मपरफलरूपायेत्यर्थः। तथा मृत्यवे दुःखदाय दुःखप्रदमृत्युरूपाय ॥ ४१ ॥

हे आशिषामीश! यद्वा - हे ईश! आशिषां धर्मादीनां कारणात्मने फलप्रकाशकाय, मनवे सर्वज्ञाय स्वायम्भुवादिमनुरूपाय वा, मन्वन्तराधिदैवताय वा, मन्त्ररूपाय वा, एवं सर्वात्मकत्वेन नमस्कृत्य, साक्षान्नमस्करोति -- बृहते स्वरूपेण गुणैश्च निरतिशयबृहत्वाय, धर्माय, कृष्णाय, [4]कृष्णाख्यसिद्धरूपधर्माय - सिद्धरूपेऽपि धर्मशब्दः प्रयुज्यते तथा च श्रीमहाभारते ''ये च वेदविदो विप्राः, ये चाध्यात्मविदो जनाः। ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम्'' (भारते 3-86-22) इति। अकुण्ठमेधसे अप्रतिहतज्ञानाय ॥ ४२ ॥

**पुरुषायेति**। पुराणपुरुषाय कपिलाद्यंशावताररूपेण नमस्करोति सांख्येश्वरः कपिलः। [5]योगीश्वरो हिरण्यगर्भः तद्रूपाय, शक्तित्रयं

---

1--1. B, J, V, Va omit 2. A, B, J, Va आकूतिः 3--3. V सर्वेन्द्रियाणां 4. A, B, T omit कृष्णाख्य 5. A, B, T योगे°

सर्गादिसामर्थ्यं तद्युक्ताय, नव ब्रह्मेन्द्रकालरुद्ररुपायेत्यर्थः। मीढुषे "मिह-सेचने" वर्षप्रद[1]सूर्यात्मकपर्जन्यरूपाय[2] "तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च" (भ.गी.9-19) इति पर्जन्यस्यापि भगवद्विभूतित्वज्ञापनात्[3]। अहङ्कृतम् अहङ्कारतत्त्वं, तस्यात्मने चेत् आकृतिरूपाय, चेतसः आकृतिः स्वरूपं तदेव यस्य रूपं, स तथोक्तस्तस्मै। "यस्याहङ्कारश्शरीरं, यस्य मनश्शरीरम्" (सुबा. उ. 7) इति श्रुतेः। वाचो विभूतये वाक्प्रपञ्चाय, यद्वा चेतश्चाकृतिः शरीरं च यस्य रूपं स तथोक्तस्तस्मै। मनोवाक्कायरूपत्रयात्मने, मन आदिविषयरूपायेत्यर्थः। इदमनुक्तरूपत्वसङ्ग्राहकम्। किञ्चिद्धिवस्तु क्षीरशर्करादिगतमाधुर्यादिवत् एवंविधमपि वाचा वक्तुमशक्यमपि, मनसा चिन्तयितुं शक्यम्। किञ्चिच्च वस्तु दूरस्थमेर्वादिवत् चक्षुरादिभिरनुभवितुमशक्यमपि एवंविधमिति वाचा वक्तुं शक्यम्। किञ्चिद्धि कायेनानुभवितुं शक्यं, यथा सन्निकृष्टघटपटादिकं, एवंविधवस्तु शरीरायेत्यर्थः॥ ४३॥

एवं पारमैश्वर्यापादकगुणगणविशिष्टं भगवन्तं नमस्कृत्य, तदीयदिव्यमङ्गलविग्रहदर्शनं प्रार्थयमानः, विग्रहं च वर्णयति - **दर्शनमिति** नवभिः। भागवतैः अर्चितं ते रूपं दिदृक्षूणां द्रष्टुमिच्छूनां नोऽस्माकं दर्शनं देहीत्यन्वयः। रूपं विशिनष्टि। स्वानां भक्तानां प्रियतमं सर्वेषामिन्द्रियाणां ये[4] ये गुणा असाधारणधर्माः श्रवणस्पर्शनदर्शनाघ्राणादयः तैः अञ्जनम्, अभिव्यंग्यं यथा तथा, देहीति क्रियाविशेषणम्। यद्वा सर्वेषामिन्द्रियाणामप्राकृतानां तद्गुणानां शब्दादीनां च अञ्जनमभिव्यक्तिर्यस्मिन् तदिति "सर्व कर्मा सर्वकामः सर्वगन्धस्सर्वरसः" (छां.उ.3-14-4) इति श्रुतेः॥ ४४॥

स्निग्धः प्रावृषि वर्षर्तौ, यो घनः तद्वत् श्यामं, सर्वेषां सौन्दर्याणां सङ्ग्रहो यस्मिन्, चारवः सुन्दराः आयताः आजानुलम्बिनः चत्वारो बाहवो यस्मिन् सुजातं सुकुमारं, रुचिरं[5] सुन्दरम् आननं यस्मिन्॥ ४५॥

**विज.** प्रवृत्तिनिवृत्तिमार्गप्रवर्तकत्वात् तस्मै पितृदेवेषु च स्थित्वा तत्तद्योग्यकारणवत्वात् तत्तच्छब्दवाच्याय कर्मणे विषयाय क्रियारूपाय वा, धर्मविपाकाय पुण्यफलप्रदाय, मृतेरुद्गतः मृत्युः तस्मै, मृत्यौ स्थित्वा तत्करणाद्वा मृत्युः तस्मै दुःखदाय, असुरेभ्य इति शेषः। दुःखदायिन इति पाठे "दुरशोभनदुःखयोः" (वैज.को.8-7-4) इति यादवः। "खं सुखम्" इति श्रुतिः। दुःखं दायति शोषयतीति तस्मै इति वा। "दै- शोषणे" इति धातुः॥ ४१॥

मनवे मननशीलाय मन्त्रवाच्याय वा॥ ४२॥

सांख्यं यथार्थज्ञानं, योग उपायः अष्टाङ्गविशिष्टो वा तयोरीश्वराय शक्तित्रयसमेताय ज्ञानक्रियेच्छाशक्तियुक्ताय मीढुषे वीर्यवते

---

1. A, B, T omit वर्षप्रद 2. A, B, T omit रूपाय 3. A, B, T ॰नानात् 4. W omits ये 5. A, B, T omit रुचिरं

अभीष्टदात्रे वा। अहङ्कृते रुद्रे आत्मा यस्य स तथा तस्मै। चेतस आकूतिः अभिप्रायः तं रूपयति समर्थयति इति चेताकूतिरूपः तस्मै, वाचो विविधा भूतिः सृष्टिर्येन तस्मै॥ ४३॥

किमभिप्रेत्य स्तुतमिति तत्राह - **दर्शनमिति**। कीदृशं दर्शनम्? साकारविषयं निराकारविषयं वा। द्वितीये गगनवत् व्याप्तमुत घटाकाशवत् परिमितं पक्षद्वयमप्यनभीष्टम् अनधिकारात् तस्मात् प्रथम एव पक्षः तत्रापि रूपाणामानन्त्यात् ईदृशं रूपं प्रकाशयेत्याहुः - भागवतार्चितमिति। यदेतदीदृशं रूपं प्रदर्शयेत्यन्वयः॥ ४४॥

सर्वसौन्दर्याणां सङ्ग्रहं पात्रम्। "सुजातं कोमलं विदुः" इत्यभिधानम्॥ ४५॥

**पद्मकोशपलाशाक्षं सुन्दरभ्रु सुनासिकम्।**
**सुद्विजं सुकपोलास्यं समकर्ण विभूषणम्[1]॥ ४६॥**

**प्रीतिप्रहसितापाङ्गमलकैरुपशोभितम्।**
**लसत्पङ्कजकिञ्जल्क दुकूलं मृष्टकुण्डलम्॥ ४७॥**

**स्फुरत्किरीटवलयहारनूपुरमेखलम्।**
**शङ्खचक्रगदापद्ममालामण्युत्तमर्द्धिमत्॥ ४८॥**

**सिंहस्कन्धत्विषो[2] बिभ्रत्सौभगग्रीवकौस्तुभम्।**
**श्रियाऽनपायिन्याऽऽक्षिप्त[3]निकषाश्मोरसोल्लसत्॥ ४९॥**

**पूररेचकसंविग्न वलिवल्गु[4] दलोदरम्।**
**प्रतिसंक्रामयद्विश्वं नाभ्याऽऽवर्तगभीरया॥ ५०॥**

**श्रीध. पद्मेति**। पद्मस्य कोशे मध्ये यानि पलाशानि दलानि[5] तद्वदक्षिणी यस्मिन्। [6-]सुन्दरे भ्रुवौ यस्मिन्[-6]। सुकपोलमास्यं यस्मिन्। समौ कर्णौ विभूषणं यस्य, कुण्डलयोरग्रे वक्ष्यमाणत्वात्॥ ४६॥

**प्रीतीति**। प्रीत्या प्रहसिताविव[7] अपाङ्गौ यस्मिन्॥ ४७॥

---

1. M, Ma भूषितम्  2. M; Ma, Ms °मुरो  3. M, Ma °क्षिप्तं  4. M, Ma °मत्पल्लवो°  5. B, J, V, Va omit दलानि  6--6. A, B, J, Va omit
7. V omits इव

**स्फुरदिति** । स्फुरन्ति किरीटादीनि यस्मिन्, शङ्खादीनाम्[1] उत्तमर्धिर्लक्ष्मीः । यद्वा एतैरुत्तमा ऋद्धिरुत्कर्षो यस्यास्ति तत् ॥ ४८ ॥

**सिंहेति** । सौभगयुक्ता[2] ग्रीवा येन, सिंहस्य स्कन्धे परितः प्रसरन्तः केसरा एव त्विषः तादृशीस्सर्वतः त्विषो बिभ्रच्चाऽसौ सौभगग्रीवश्च कौस्तुभो यस्मिन् । यद्वा[3], सिंहस्येव यौ स्कन्धौ तयोस्त्विषः कुण्डलहारादिदीप्तीर्बिभ्रदिति पृथग्विशेषणम् । सौभगयुक्ता ग्रीवा येन स कौस्तुभो यस्मिन् । श्रिया हेतुभूतया क्षिप्तस्तिरस्कृतो निकषाश्मा स्वर्णरेखाङ्कितो निकषणपाषाणो येन, तादृशेनोरसा उल्लसच्छोभमानम् ॥ ४९ ॥

**पूरेति** । श्वासोच्छ्वासाभ्यां संविग्नाश्चञ्चलाः वलयः ताभिः वल्गु सुन्दरं[4] दलवदश्वत्थपत्रसदृशमुदरं यस्मिन् । [5-]आवर्तगभीरया दक्षिणावर्तेन निम्नया[-5] प्रतिसङ्क्राम यद्यतो[6] निर्गतं तेनैव द्वारेण पुनः प्रवेशयदिव ॥ ५० ॥

**वीर.** पद्मस्य कोशे मध्ये यानि पलाशानि तद्वदक्षिणी यस्मिन्, सुन्दरे भ्रुवौ यस्मिन्, शोभना नासिका यस्मिन्, शोभनाः द्विजाः दन्ताः यस्मिन्, सु कपोलम् आस्यं यस्मिन्निति [7-]बहुव्रीहिगर्भो[-7] बहुव्रीहिः, समौ कर्णाविव विभूषणं यस्मिन्, कुण्डलयोः अग्रे वक्ष्यमाणत्वात् ॥ ४६ ॥

प्रीत्या प्रहसिताविव अपाङ्गौ यस्मिन्, अलकैः कुन्तलैः उपशोभितं नूतनपङ्कजकिञ्जल्कवत्पिशङ्गं दुकूलं यस्मिन्, मृष्टे निर्मले कुण्डले यस्य ॥ ४७ ॥

स्फुरन्ति किरीटादीनि यस्मिन्, शङ्खादिभिः उत्तमर्द्धिर्लक्ष्मीः अस्मिन् अस्तीति तथा ॥ ४८ ॥

सिंहस्कन्धत्विष इति द्वितीयाबहुवचनम् । सिंहस्य[8] स्कन्धे परितः प्रसरन्तः केसरा इव सर्वतः या त्विषस्ताः ता बिभ्रती, या सौभगा ग्रीवा तस्यां कौस्तुभो यस्मिन्, यद्वा सिंहस्येव यौ स्कन्धौ तयोः त्विषः कुण्डलहारादिदीप्तीः बिभ्रदिति पृथग्विशेषणम् ।

सौभगयुक्तग्रीवायां कौस्तुभो यस्मिन्, सौभगा ग्रीवा यस्य स कौस्तुभो यस्मिन्निति बहुव्रीहिगर्भो वा बहुव्रीहिः श्रिया हेतुभूतया आक्षिप्तः तिरस्कृतो निकषाश्मा सुवर्ण रेखाङ्कितो निकषपाषाणो येन तादृशेन । उरसा उल्लसच्छोभमानं, यद्वा श्रिया उपलक्षितेन निकषोपरिर्युपरक्तसुवर्णरेखासदृशश्रिया, उपलक्षितेनेत्युरो विशेषणम्, आक्षिप्तः शङ्कितः निकषाश्मा येन तेन उरसा उल्लसत् शोभमानं लक्ष्मीसहितं श्यामं वक्षः कनकनिकषरेखान्वितमश्मानं शङ्कयतीत्यर्थः ॥ ४९ ॥

---

1. A, B, J, Va °दिमत्  2. Va युता  3. V omits यद्वा  4. V omits सुन्दरं  5--5. B, J, V, Va omits  6. V adds वि  7--7. A, B, T omit
8. W सिंहस्क°

पूरकरेचकाभ्यां श्वासोच्छ्वासाभ्यां संविग्नाश्चपला वलयस्ताभिः वल्गु सुन्दरं दलवदश्वत्थपत्रसदृशमुदरं यस्मिन्। यद्वा सृष्ट्या पूर्यते पाल्यते इति वा जगत् पूरं तत् रेचकं सम्पूरण समर्थं यस्मिन्, संविग्नाः सम्मर्दाः वलयो यस्मिन्, दलवदुदरं पूरकरेचकसंविग्नवलि वल्गु दलोदरं यस्मिन्निति त्रिपद[1] बहुव्रीहिः - पूर्वयोः कर्मधारये द्विपदो बहुव्रीहिः। यतो नाभिद्वारान्निर्गतं विश्वम् आवर्तवत् गभीरया नाभ्या प्रतिसङ्क्रामयत् पुनः प्रवेशयदिव स्थितं गम्भीरनाभिद्वारेण बहिष्ठं विश्वं अन्तर्निवेशयदिव स्थितमित्यर्थः ॥ ५० ॥

**विज.** सुजति कोमलं विदुरित्यभिधानंशोभनाः द्विजाः दन्ताः यस्य तत् सुद्विजम् ॥ ४६ ॥

कर्णाभरणानां बहुत्वद्योतनाय मृष्टकुण्डलमिति पुनर्वचनम् ॥ ४७ ॥

शङ्खादयो यस्मिंश्चिह्नितास्तच्छङ्खचक्रगदापद्ममालामणिना उत्तमा ऋद्धयोऽस्य सन्तीत्युत्तमर्द्धिमत् ॥ ४८ ॥

सौभगेत्युभयत्र सम्बध्यते। सौभाग्ययुक्तौ ग्रीवाकौस्तुभौ यस्मिंस्तत्, उरो बिभ्रद्विस्तीर्णमिति शेषः। संक्षिप्तमुरो विशिनष्टि - अनपायिन्येति। नित्यया श्रिया आक्षिप्तं सन्निहितं च निकषाश्मा स्वर्णघर्षणपाषाणः तद्वद्वर्तमानमुरः, आक्षिप्तनिकषाश्मोरः तेनोल्लसत् ॥ ४९ ॥

श्वासानां पूरकरेचकाभ्यां संविग्नाः सञ्चलिता वलयो रेखा अस्य सन्तीति पूरकरेचकसंविग्नवलिमत्, तच्च पल्लवेनाङ्कुरदलेन सदृशं तत्तथा। दक्षिणावर्तेन गभीरया निम्नया नाभ्या विश्वं प्रतिसङ्क्रामयत् ग्रसदिव स्थितम् ॥ ५० ॥

**श्यामश्रोण्यधिरोचिष्णु दुकूलस्वर्णमेखलम्।**
**समचार्वङ्घ्रिजङ्घोरू निम्नजानुसुदर्शनम् ॥ ५१ ॥**

**पदा शरत्पद्मपलाशरोचिषा नखद्युभिर्[2]नोऽन्तरघं विधुन्वता।**
**प्रदर्शय स्वीयमपास्तसाध्वसं पदं [3]गुरोर्मार्गगुरुस्तमोजुषाम् ॥ ५१ ॥**

**एतद्रूपमनुध्येयमात्मशुद्धिमभीप्सताम्।**
**यद्भक्तियोगोऽभयदः स्वधर्ममनुतिष्ठताम् ॥ ५३ ॥**

**भवान् भक्ति[4]मता लभ्यो दुर्लभः सर्वदेहिनाम्।**
**स्वाराज्यस्याप्यभि[5]मत एकान्तेनात्मविद्गतिः ॥ ५४ ॥**

1. A. B. T °दो 2. M. Ma. Ms र्नोतु° ; A, B, G, I, J, T °र्नोऽन्त° 3. A, B, G, I, J, T गुरो; मार्ग; M, Ma पुरो मार्ग° 4. M, Ma, Ms °तां
5. M. Ma °मता

**तं[1] दुराराध्यमाराध्य सतामपि दुरापया।**

**एकान्तभक्त्या को वाञ्छेत्पादमूलं विना बहिः ॥ ५५ ॥**

**श्रीध. श्यामेति**। श्यामश्रोण्यधिकं रोचिष्णु यत् पीतं दुकूलं तत्र स्वर्णमयी मेखला यस्मिन्। अङ्घ्री च जङ्घे च ऊरू च निम्ने अनुन्नते जानुनी च समैश्चारुभिरेतैः शोभनं दर्शनं यस्य, समाश्च ऊरवः अङ्घ्र्यादयो यस्मिन्, निम्ने जानुनी यस्मिन्, शोभनं दर्शनं यस्येति पदत्रयं वा ॥ ५१ ॥

**पदेति**। पदा दीपस्थानीयेन। यद्वा एवम्भूतेन पदा उपलक्षितं रूपं पदं[2] शरणं प्रदर्शयेत्यर्थः। शरदियत्पद्मंतस्य पलाशं तद्वद्रोचिः यस्य तेन, नखदीप्तिभिः अन्तर्भवमधमस्थानं विधुन्वता स्वीयं[3] पदं[4] शरणं प्रदर्शय। अपास्तं प्रह्लादादीनां साध्वसं येन तत्, हे गुरो! यतस्त्वमेवतमोजुषामज्ञानामस्माकं मार्गप्रदर्शको गुरुः ॥ ५२ ॥

अतिदुर्लभमिदं मया प्रार्थितमिति स्तोतैवाह - **एतदिति**। एतद्रूपमनुध्येयं ध्यानर्हमेव न तु प्रत्यक्षतः प्राप्यमित्यर्थः ॥ ५३ ॥

तर्हि किं केनाऽपि न प्राप्यते, तत्राऽऽह - **भवानिति**। दुर्लभत्वमेवाऽऽह - स्वर्गे राज्यं यस्य तस्याप्यभिमतः स्पृहणीयः। किञ्च एकान्तेन य आत्मवित्तस्याऽपि गतिर्गम्यः ॥ ५४ ॥

अतस्त्वद्व्यतिरेकेण न किञ्चिद्वाञ्छामीत्याह - **तमिति**। तं त्वामेकान्तभक्त्या आराध्य, बहिः स्वर्गादिसुखम् ॥ ५५ ॥

**वीर.** श्यामयोः श्रोण्योर्नितम्बयोरधिकं रोचिष्णु यत् पीतं दुकूलं तत्र स्वर्णमयी मेखला यस्मिन्, अङ्घ्री च जङ्घे च ऊरू च निम्ने अनुन्नते जानुनी च समैश्चारुभिः जान्वादिभिश्शोभनं दर्शनं यस्य ॥ ५१ ॥

एवं विग्रहमनुवर्ण्य तद्दर्शनं प्रार्थयते - **पदेति**। शरदि च यत्पद्मं तस्य यानि पलाशानि तद्वद्राचिर्यस्य तेन पदा चरणेन नोऽस्माकम् अन्तरघम् अन्तस्स्थितं पापहेतुमज्ञानं नखकान्तिभिः विधुन्वता अपनयता शरत्पद्मस्थानीयचरणस्य पलाशस्थानीयाङ्गुलि-स्थनखरोचिर्भिः, अघं विधुन्वता पदा अपास्तं निरस्तं साध्वसं भक्तानां भयं यस्मिन् तत् स्वीयं पदं रूपं, यद्वा उक्तविधेन पदा उपलक्षितः त्वम् अपास्तसाध्वसं स्वीयं पदं पद्यते अवगम्यत इति पदं रूपं प्रदर्शय यतः त्वमेव तमोजुषामज्ञानिनां गुरोर्मार्गगुरुः गुरुमार्गप्रदर्शको भवसि ॥ ५२ ॥

ननु "न मांसचक्षुरभि वीक्षते तम्", "न चक्षुषा पश्यति कश्चनैनं हृदा मनीषा मनसाभिक्लिप्तः" (कठ.उ. 6-9) इति प्राकृत

1. M, Ma, Ms त्वां  2. V omits पदं  3. J, V add रूपं  4. V च°

चक्षुरादिभिरग्राह्यं योगपरिशुद्धमनोग्राह्यमप्राकृतं मदीयरूपम् अपरिशुद्धमनसस्तव कथं प्रदर्शयेति प्रार्थयस इत्याशङ्कायामाह - **एतदिति**। एतदुक्तविधं तव रूपम् आत्मशुद्धिमन्तःकरणनैर्मल्यम् अभीप्सतामस्माकं केवलमनुध्येयमेव, एतद्रूपस्य ध्यानविषयत्वमेव प्रदर्शयेति प्रार्थ्यते, न तु साक्षात्कार इति भावः। किं ध्यानविषयत्वमात्रसाध्यं तत्राह-यतः ध्यानविषयात् त्वद्रूपात् ध्यानयोगाङ्गत्वेन स्ववर्णाश्रमोचितधर्ममनुतिष्ठतां पुंसाम् अभयदः साक्षान्मोक्षसाधनभूतो भक्तियोगः परमभक्तियोगो भवति ध्यानयोगोऽपि परज्ञानप्रणाड्या परमभक्तियोगरूपेण परिणमत[1] इत्यर्थः ॥ ५३ ॥

परमभक्तिमता तु भवान् लभ्य इत्याह - भवानिति। सर्वदेहिनां दुर्लभोऽपि भवान् भक्तिमता प्रशंसायां मतुप् परमभक्तिमता लभ्य एव। दुर्लभत्वमेवाह - स्वाराज्यस्येति। आत्मविदां उक्तभक्तियोगनिष्ठायां गतिः प्राप्यस्त्वं[2] स्वाराज्यस्य स्वेन राजत इति स्वराट् तस्य भावः स्वाराज्यं कैवल्यम् अपादानस्य सम्बन्धमात्रविवक्षया षष्ठी, स्वाराज्यादपि अभिमतः स्पृहणीयः, स्वाराज्यं हि सर्वस्मात् अभिमतं, ततोऽप्यभिमतस्त्वमित्यर्थः ॥ ५४ ॥

अतोऽतीव स्पृहणीयात्[3] त्वत्तोऽन्यन्न किञ्चिद्वाञ्छामीत्याह - **तमिति**। तं दुराराध्यम् उपायान्तरैराराधयितुमशक्यं भवन्तं सतामपि दुरापया दुस्साधया एकान्तभक्त्या अव्यभिचारिण्या भक्त्या आराध्य त्वत्पादमूलं विना बहिरन्यत् स्वर्गादिसुखं को वा वाञ्छेत् न कोऽपीत्यर्थः ॥ ५५ ॥

**विज.** समानानि चारूणि अङ्गयादीनि यस्मिन् तत्तथोक्तम्। सुदर्शनं सुचक्षुः ॥ ५१ ॥

नखद्युभिः नखानां तेजोभिः नोतुः स्तोतुरघं पापं विधुन्वता नाशयता पदा उपलक्षितः पुरोमार्गगुरुरुत्क्रान्तस्यार्चिरादिमार्गोपदेष्टा त्वम्। कीदृशानां नः? तमोजुषामज्ञानिनां पुर इत्यस्मत्पदान्वयो वा। अस्माकं पुनः प्रदर्शयेति ॥ ५२ ॥

विनियोगमाह - **एतदिति**। आत्मनः स्वस्य शुद्धिः संसारमुक्तिलक्षणा तामिच्छतामितोऽन्ययाऽस्मच्छुद्धिः न स्यादित्यतो ध्येयमिति वर्णाश्रमादिविहितस्वधर्म एव मुक्तिसाधनमिति भ्रान्तिं निवारयति - यद्भक्तियोग इति। वर्णाश्रमादि विहितस्वधर्मं कुर्वतां पुंसां भगवद्भक्तियोगो नित्याभयप्रद इति यत् ॥ ५३ ॥

तस्मादभक्तिमतां दुर्लभो भवान् सर्वदेहिनां भक्तिमतां लभ्य इति न केवलं मुक्त्यर्थमस्मदादेर्ध्येयं किन्तु इन्द्रादेर्वापीत्यभिप्रेत्याह - स्वाराज्यस्येति। स्वः स्वर्गे राज्यं यस्य इन्द्रादेः आत्मवित् आत्मज्ञः परमात्मा तदात्मानमेव वेद "अहं ब्रह्मास्मि" (बृह. उ. 1-4-10)

---

1. A, B, T °ति 2. A, B, T add स्वाराज्यस्याप्यभिमतः 3. A, B, T °यत्वात्

इति श्रुतेः। तस्य गतिर्मुक्तिलक्षणा एकान्तेन नियमेनाभिमता अविप्रतिपन्ना मुक्त्यर्थमेव भक्तिर्न स्वर्गाद्यर्थमित्यतो वाह - स्वाराज्यस्येति। इन्द्रादेरित्यध्याहार्यम्। इन्द्रादेः स्वाराज्यस्यावाप्तावपि आत्मवित् परमात्मा गम्यते अनयेति आत्मविद्गतिः भक्तिः या त्वेकान्तेन अभिमतेत्यन्वयः। यद्वा आत्मविदां [1-]परमात्मज्ञानिनां[-1] गतिरूपा या भक्तिः यादृशी तादृशीति। "भक्त्या त्वनन्यया शक्य" (भ.गी. 11-54) इति स्मृतेः॥ ५४॥

भगवदिच्छाऽविनाभूतत्वात् इन्द्रादिना स्वर्गादिकं तद्भक्त्या कामितं न स्वतः अतः बुद्धिमान् न स्वातन्त्र्येण अन्यत् ज्ञायत इति भावेनाऽऽह - त्वां दुराराध्यमिति। सतामपि दुरापया बहिः ऐहिकम्॥ ५५॥

**यत्र निर्विष्ट[2]मरणं कृतान्तो नाऽभि[3]मन्यते।**
**विश्वं विध्वंसयन्[4] वीर्यशौर्यविस्फुरित[5]भ्रुवा॥ ५६॥**

**क्षणार्धेनापि तुलये न स्वर्गं[6] नापुनर्भवम्।**
**भगवत्सङ्गिसङ्गस्य मर्त्यानां[7] किमुताशिषः॥ ५७॥**

**अथानघाङ्घ्रे[8]स्तव कीर्तितीर्थयो रन्तर्बहिः स्नानविधूतपाप्मनाम्।**
**भूतेष्वनुक्रोशसुसत्वशीलिनां स्यात्सङ्गमोऽनुग्रह एष न स्तव॥ ५८॥**

**न यस्य चित्तं[9] बहिरर्थविभ्रमं तमो[10]गुहायां च वि[11]शुद्ध[12]माविशत्।**
**यद्भक्तियोगानुगृहीतमञ्जसा मुनिर्विचष्टे ननु तत्र ते गतिम्[13]॥ ५९॥**

**यत्रेदं[14] व्यज्यते विश्वं विश्वस्मि[15]न्नवभाति यत्।**
**तत् त्वं ब्रह्म परं ज्योतिराकाशमिव विस्तृतम्॥ ६०॥**

**श्रीध. यत्रेति।** तत्र हेतुः - यत्र पादमूले शरणं प्रविष्टं कृतान्तः कालो ममाऽयं वश्य इति [16-]नाभिमन्यते[-16] नाऽभिमानं करोति। किं कुर्वन्? वीर्यं प्रभावः, शौर्यमुत्साहः ताभ्यां विस्फूर्जितया क्षुभितया भ्रुवा विश्वं विध्वंसयन्नपि॥ ५६॥

---

1. A omits 2. W प्रविष्ट 3. M, Ma, Ms नाऽव 4. M, Ma, Ms विष्टम्भयन् 5. A, B, G, I, J, T, V °स्फूर्जित 6. M, Ma स्वर्ग्यं 7. W मुख्य
8. M, Ma, Ms °ह्र्यो 9. V सत्त्वं 10. M, Ma, Ms मनो 11. M, Ma, Ms निविष्ट 12. M, Ms °शेत् 13. M, Ma, M s पदम्
14. Ms यु° 15. Ms °न्न च 16--16. A, B, J, Va omit

त्वत्पादमूले प्रविष्टस्य कृतान्तभयाभावः कियानयं लाभो यतस्त्वद्भक्तसङ्ग एव सकलपुरुषार्थश्रेणि शिरसि[1] नरीनर्त्तीत्याह - **क्षणार्धेनेति**। भगवतस्तव सङ्गिनां सङ्गस्य क्षणार्धेनाऽपि स्वर्गं न तुलये समं न गणयामि न च अपुनर्भवं मोक्षम्, मर्त्यानामाशिषो राज्याद्याः किमुत? ॥ ५७॥

**अथेति**। अथ अतो हेतोः अनघौ अघहरौ अङ्घ्री यस्य तस्य तव कीर्तिः यशः तीर्थं गङ्गा तयोः क्रमेण अन्तर्बहिः स्नानाभ्यां विधूतः पाप्मा येषाम्। अत एव भूतेष्वनुक्रोशः[2] कृपा [3-]सुसत्वञ्च रागादिरहितं चित्तं[-3] शीलञ्चाऽऽर्जवादि विद्यते येषां तेषां सङ्गमः अस्माकं स्यात्। एष एव नः तवाऽनुग्रहः ॥ ५८॥

तत्त्वज्ञानञ्च त्वद्भक्तसङ्गादेव भवतीत्याह - **न यस्येति**। येषां सतां भक्तियोगेनाऽनुगृहीतं विशुद्धं सत् यस्य चित्तं[4] बाह्यार्थ विक्षिप्तं न भवति तमोरूपायां गुहायां च नाऽविशत् लयं न प्राप। तत्र तदा सः[5] मुनिस्तव गतिं तत्त्वं पश्यति ॥ ५९॥

कीदृशं तत्त्वं, तदाह - यत्रेति ॥ ६०॥

**वीर.** तत्र हेतुः - यत्र पादमूले अरणं शरणं प्रविष्टं, पादमूले शरणं गतमित्यर्थः। कृतान्तः कालो मयाऽयं[6] वशीकृत इति नाभिमानं करोति। किं कुर्वन् वीर्यं प्रभावः शौर्यमुत्साहः ताभ्यां विस्फूर्जितया क्षुभितया भ्रुवा विश्वं विध्वंसयन् नाशयन् ॥ ५६॥

त्वत्पादमूलं प्रपन्नस्य कृतान्त भयाभावः कियानयं लाभः? यावता त्वद्भक्तसङ्ग लेश एव सकलपुरुषार्थश्रेणीशिरस[7] उपरि वर्तत इत्याह - **क्षणार्धेनेति**। भगवतस्तव सङ्गिनां त्वद्भक्तानामित्यर्थः। तेषां सङ्गस्य क्षणार्धेनापि न स्वर्गं तुलये न समानं गणयामि। न वा अपुनर्भवं मोक्षं भागवतसङ्गस्य स्वर्गमोक्षौ न सदृशौ। किं पुनर्मरणशीलानाम् आशिषः आशीर्विषयपुत्रपश्वन्नादय इत्यर्थः ॥ ५७॥

एवं निरतिशयगुणवत्तरत्वात् भागवतसङ्गस्य। अथ अतो हेतोः अनघौ अघहरौ अङ्घ्री यस्य तस्य तव कीर्तिः यशः तीर्थं गङ्गा। तयोः क्रमेणान्तर्बहिस्नानाभ्यां विधूतः पाप्मा येषाम्। अत एव भूतेष्वनुक्रोशः कृपा, सुसत्त्वं, सत्त्वोत्तरं चित्तं, शीलम् आर्जवादिकं च येषां सन्ति तेषां सङ्गमोऽस्माकं स्यात्। एषः नोऽस्माकं त्वदनुग्रहः [8-]त्वत्कृतोऽनुग्रहः[-8] ॥ ५८॥

त्वज्ज्ञानमपि भागवतसङ्गादेव भवतीत्याह - **नेति**। येषां भागवतानां भक्तियोगेन अनुगृहीतं विशुद्धं सत्त्वं प्रवणं सत् यस्य

---

1. V व॰ 2. V adds तेन 3--3. V सुशुद्धं रागादिरहितं सत्त्वं चित्तं 4. V adds सत्त्वं 5. A, B, J, Va omit सः 6. A, B, T omit अयं
7. A, B,T ॰सि 8--8. A, B, T omit

पुंसः चित्तं, बहिरर्थाः शब्दादिबाह्यविषयाः तेषु, विभ्रमं न भवति प्राप्यता भ्रान्तिमत् न भवति। तम[illegible]यां गुहायां च नाविशत् न लीनं स्यात्, तदा स मुनिः ते गतिं स्वरूपम् अञ्जसा सुखेन विचष्टे जानाति॥ ५९॥

गतिं [1]विशिंषन् प्रपद्यते - यत्रेति द्वाभ्याम्। इदं [2]कृत्स्नं चिदचिदात्मकं विश्वं यत्र आधारभूते त्वत्स्वरूपे व्यज्यते व्यक्तं [3]भवति। यच्च त्वत्स्वरूपं विश्वस्मिन् कृत्स्नप्रपञ्चे अवभाति प्रकाशते व्याप्नोति। तदेव [4]परब्रह्माख्यं [5]तत्त्वमित्यर्थः। यत्रैदमित्यनेन आधारत्वमुक्तम्। कथम् अमूर्तस्य आधारत्वम् इति शङ्कायां अभिव्यापकत्वरूपमाधारत्वं इत्याशयेन विश्वस्मिन् अवभाति। यदित्युक्तम्- आधारो हि त्रिविधः। औपश्लेषिकः, वैषयिकः, अभिव्यापकश्चेति। सर्वं व्याप्यावस्थितस्यापि व्याप्यवस्तुगतदोषास्पर्शदृष्टान्तमाह- ज्योतिराकाशमिव विस्तृतमिति। विस्तृतम् आकाशमिव, ज्योतिस्सूर्यादिरिवेति दृष्टान्तद्वयमभिप्रेतम्। तथा ह्युभयं दृष्टान्तीकृतमभियुक्तैः "आकाशमेकं हि यथा घटादिषु पृथक् पृथक् तथात्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान्" इति। अयमभिप्रायः। [6]घटकरकादिषु यथा वृद्धिह्रासभाक्षु पृथक् पृथक् संयुज्यमानमप्याकाशं दोषहेत्वभावात् वृद्धिह्रासादिदोषैः न स्पृश्यते। यथा च जलाधारेषु [7]विषमेषु वस्तुतोऽनवस्थितः। तत्र दृश्यमानोऽपि अंशुमान् दोषहेत्वभावात् तत्तद्गतवृद्धिह्रासादिभिः न स्पृश्यते तद्वदिति॥ ६०॥

**विज.** पादमूलं विशिनष्टि - **यत्रेति**। अरणं शरणं वीर्यशौर्याभ्यां विस्फूर्जितया [8-]स्फुरितया[-8] भ्रुवा विश्वं विष्टम्भयन् वशे कुर्वन्॥ ५६॥

भक्त्या यत्फलं स्वर्गादिकं न तु लय इत्यन्वयः। भागवतसङ्गलब्धया भक्त्या मुक्तावानन्दोद्रेकलाभाभिप्रायेणेति तात्पर्यम्। तदुक्तं - "सङ्गो भागवतैर्भूयानपुनर्भवमात्रतः। यतो विशिष्टमानन्दं मुक्तौ जनयति स्फुटम्" (ब्रह्मतर्के) इति॥ ५७॥

ननु सत्सङ्ग एवम्फलोऽस्तु ततो युष्माकं किमपेक्षितमत्राह - **अथेति**। यस्मात् त्वद्भक्तानां सङ्ग एवम्विधफलोऽथास्मात्तवाऽङ्घ्रयोर्जातयोः कीर्तितीर्थयोः भागवतादिशास्त्रश्रवणलक्षणा कीर्तिः तीर्थं विष्णुपाद्यादि तयोरन्तर्बहिस्स्नानाभ्यां विधूतपाप्मनां अत एव भूतेषु अनुक्तोशसुतत्त्वशीलिनां सात्त्विकस्वभावानां सतां सङ्गमो नोऽस्माकं स्यात्। अतोऽनेन वयं कृतार्था इत्यत उक्तम् - अनुग्रह इति॥ ५८॥

**सत्सङ्गयाञ्चायाः** कोऽभिप्राय इत्यत आह - **न यस्येति**। यद्यदा सत्सङ्गमस्तत्र तदा सत्सङ्गमे भक्तियोगेनानुगृहीतं यस्य पुंसश्चित्तं स्मृतिकारणमन्तः - करणं बहिरर्थेषु शब्दादिषु विभ्रमं विविधभ्रमणं नाविशेत् न गच्छति। यस्य मनश्च गुहायां हृदये

---

1. W विशिष्यन् 2. W कृत्स्नचि० 3. A, B, T omit भवति 4. A, B, T omit पर 5. A, B,T add तव 6. A, B, T घटादिषु 7. A, B, T विषयेषु
8--8. A omits

निविष्टमात्मानमाविशति स मुनिः ते तव पदं स्वरूपं अञ्जसा विचष्टे पश्यति नन्वित्यन्वयः। सत्सङ्गत्या समुत्पन्नभगवद्भक्त्या वैराग्य दृढया प्रबलीकृतया भगवदुपासनया परोक्षज्ञानं भवतीत्यभिप्रायः। "भक्त्या त्वनन्यया" (भ.गी.11-54) इत्यादेः॥ ५९॥

सत्सङ्गतिः सर्वथा सम्पाद्येति प्रतिपाद्य अधुना भक्तिविषयतत्त्वं निर्दिशति - **यत्रेति**। केचित् जगत् ब्रह्मा ज्ञानकल्पितमिति सङ्गिरन्ते, अन्ये शून्यमेव संवृत्या सदिवाभातीति, अपरे तत्परिणतमिति, इतरे प्रागसतः सत्तासमवायि येन जातमित्यदृष्टत्वान्नेश्वरोप्येक इति तान् सर्वानपि निरस्यतीत्यतो वाऽऽह - यत्रेति। यत्र यदाधारतया व्यज्यते इत्यनेनैते पक्षाः प्रतिक्षिप्ताः, पूर्वं सत एव व्यक्तिसम्भवात् तदनुगतपञ्चविधभेदानां [1-] व्यक्तत्वेन [-1] सत्यत्वसिद्धेः, विश्वस्मिन् स्थितमप्यज्ञानां न भातीत्युक्त्या सुतरामीश्वरसद्भावो दर्शितः, ब्रह्मतत्त्वमित्यनेन सुतरां परं ज्योतिरित्यनेनाज्ञानसम्पर्का भावः स्पष्टः। आकाश इवेति निराकारपक्षोऽपि निरासीति ज्ञायते। अपरिच्छिन्नत्वे एवाऽऽकाशदृष्टान्तो न शून्यत्वे इति ग्रन्थ प्रपञ्चतया उपरम्यत इति॥ ६०॥

**यो माययेदं पुरुरूपया[2]ऽसृजद् बिभर्ति भूयः क्षपय[3]त्यविक्रियः।**
**यद्भेदबुद्धिः सदिवात्म[4]दुःस्थया तमात्मतन्त्रं भगवन् प्रतीमहि॥ ६१॥**

**क्रियाकलापैरिदमेव योगिनः श्रद्धान्विताः साधु यजन्ति सिद्धये।**
**भूतेन्द्रियान्तःकरणोप[5]लक्षणं वेदे च तन्त्रे च त एव कोविदाः॥ ६२॥**

**त्वमेक आद्यः पुरुषः सुप्तशक्ति स्तया रजः सत्त्वतमो विभिद्यते।**
**महानहं खं मरुदग्निवार्धराः सुरर्षयो भूतगणा इदं यतः॥ ६३॥**

**सृष्टं स्वशक्त्येदमनुप्रविष्टश्चतुर्विधं पुरमात्मांशकेन।**
**अथो विदु[6]स्तं पुरुषं सन्तमन्[7]तः भुङ्क्ते हृषीकैर्मधु सारघं [8]यः॥ ६४॥**

**[9]स एष लोकानतिचण्डवेगो विकर्षसि त्वं खलु काल[10]यानः।**
**भूतानि भूतैरनुमेयतत्त्वो घनावली र्वायुरिवाविषह्यः॥ ६५॥**

**श्रीध.** जगत उपादानत्वेन तत्त्वं लक्षितम्। निमित्तत्वेनाऽपि तदेव लक्षयन्नाऽऽह - **य इति**। **य इदं विश्वं सदि**[illegible] ार्थमिव

---

1--1. A omits 2. W या सृजन् 3. M, Ma °येद° 4. M, Ma, Ms संस्थया 5. A, B, G, I, J, T लक्षितं 6. M. [illegible] Ms °स्त्वां 7. M, Ma °मत्र 8. M, Ma, Ms यतः 9. W य 10. V °यन्नः

मायया असृजत्। कथम्भूतया ? यया भेदबुद्धिरन्येषां भवति तया आत्मनि त्वयि दुःस्थया स्वकार्यं कर्तुमसमर्थया। तं त्वां निरस्त भेदं प्रतीमहि जानीमः ॥ ६१ ॥

यद्यपि त्वमेव निर्भेदं ब्रह्म तथापि प्रागुक्तं साकारमिदं[1] तव रूपं ये यजन्ति त एव वेदागमतत्त्वज्ञा इत्याह - **क्रियेति**। क्रियाकलापैः [2-]स्वकर्मभिः ये योगिनः[-2] पूजयन्ति, त एव कोविदाः, न त्वेतदनादृत्य केवलज्ञाने प्रवृत्ताः। तन्त्रे आगमे, कथम्भूतमिदम् ? भूतेन्द्रियान्तःकरणैरस्वतन्त्रैः यदुपलक्ष्यते नियन्तृरूपं तत् ॥ ६१ ॥

नन्वभिन्ने मयि भेदं कुर्वन्तस्सन्तः कथं ते[3] कोविदाः, न हि तै भेदः[4] क्रियते, किन्तु त्वयैव क्रीडार्थं चेतनाचेतनात्मको भेदः कृत इत्याह - **त्वमिति**। आद्यस्त्वमेक एव। सुप्ता मायाख्या शक्तिर्यस्य , पश्चात्तया शक्त्या रजस्सत्त्वतमसां द्वन्द्वैक्यम्। यतो रज आदेः महानहङ्कारः, खं च मरुदग्निवार्धराश्च वाः उदके सुराश्च ऋषयश्च भूतगुणाश्च, एवमिदं जगद्यतो भवति त[5]द्विभिद्यत इत्यन्वयः ॥ ६३ ॥

एतदुपपादयति - **सृष्टमिति**। जरायुजाण्डजस्वेदजोद्भिज्जरूपेण चतुर्विधं स्वांशेन प्रविष्टः। अयो इति हेतोः, पुरस्याऽन्तः सन्तमंशं चिदाभासं, पुरि शयनात् पुरुषं विदुः। तर्हि किमीश्वरमेव संसारिणं विदुः ? नेत्याह। सरधा मधुमक्षिकाः ताभिः सृष्टं मध्विव क्षुल्लकं विषयसुखमविद्यावृतस्सन् यो भुङ्क्ते तं जीवं विदुः। तथा च श्रुतिः - "तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति (मुण्ड.उ.3-8) "गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्" (ब्र.सू. 1-2-11) इत्यत्र ॥ ६४ ॥

तव तु सर्वनियन्तुः कुतस्संसार इत्याह - स इति। यः स्वशक्तभेदं सृष्टवान् स एष त्वं खलु भूतैरेव[6] भूतानि मेघपङ्क्तीर्वायुरिव कालयन्विचालयन् लोकान् विकर्षसि संहरसि। अनुमेयतत्त्वो लक्ष्यस्वरूपः ॥ ६५ ॥

**वीर.** एवं विश्वाधारत्वमुक्तम्। अथ विश्वस्य निमित्तमुपादानं च कारणं त्वमेव इत्याह - **य इति**। यो भवान् इदं स्वात्मकं विश्वं बहुरूपया बहुधा परिणामशीलया मायया सृजन् बिभर्ति पुनः क्षपयति संहरति, तथापि अविक्रियः, निर्विकारः। कथम्भूतया मायया? आत्मदुस्थया आत्मसु जीवेषु दुस्थया, दुष्टं यथा भवति तथा स्थितया, सं[7]सारिरूपेणानर्थकारित्वेन स्थितयेत्यर्थः। यया आत्मदुस्थया मायया। यद्यस्मादीश्वरात् भेदबुद्धिः स्वनिष्टबुद्धिः सदिव, सदर्थ विषयज्ञानमिव भवति। तं त्वाम्, आत्मतन्त्रं स्व[8]तन्त्रं प्रतीमहि प्रपद्येमहीत्यर्थः। अ[9]त्र आत्मदुस्थयेति जीवेषु दुस्थत्व कथनेन परमात्मन्यनर्थकारित्वमुक्तम्। यद्भेदबुद्धिः स दिवेति [10-]स्वतन्त्रात्मभ्रमहेतुत्वमुक्तम् इदं देहात्मभ्रमहेतुत्वस्यापि[-10] उपलक्षणम्। अविक्रिया इत्यनेनोपादानत्वमुक्तं निषेधो हि प्रसक्तिपूर्वकः,

---

1. V omits इदं 2--2. A, B, J, Va ये कर्मयोगिनः 3. V omits ते 4. A, B , J, Va omit किन्तु 5. V तर्हि भि० 6. V adds अनवहितं
7. A, B, T संसाररूपान० 8. A, B, T omit स्वतन्त्रं 9. A, B, T तत्र 10--10. W omits

प्रसक्तिश्च उपादानत्वेन निमित्तस्य विकारप्रसक्त्यभावात्। भाव्यवस्था विशेषवतः प्रगवस्थायोगो हि उपादानत्वम्। ततश्चावस्थायोगित्व प्रयुक्त विकार प्रसक्तौ तन्निषेधो युक्तः विकारस्य स्वापृथक्सिद्धविशेषणी, भूतचेतना चेतनगतत्वाद्विशेष्य विकाराभावात् अविक्रिय इत्युक्तम्। ननु निमित्तकारणस्यापि कुलालादेः श्वेदश्रमादि विकार दर्शनात् तद्वत्परस्मिन्नपि निमित्तत्व प्रयुक्त विकारोऽनिषिद्ध इति चेत् न। "तदैक्षत बहु स्यां प्रजायेय" (छान्दो. उ. 6-2-3) इति, "तत्तेजोऽसृजत" (छान्दो.उ.6-2-3) इति सङ्कल्पमात्रेण जगत्सृजतो विकार प्रसक्त्यभावात् सृजन्निति निमित्तत्वमुक्तम्। कर्तृत्वमेव हि निमित्तत्वम्। तत्र विशिष्टत्वाकारेणोपादानत्वं निष्कृष्टविशिष्याकारेण निमित्तत्वम्, इति विवेकः। बिभर्ति क्षपयतीति रक्षितृत्वं[1] संहर्तृत्वं च, तस्यैव इत्युक्तं भवति। आत्मतन्त्रमित्यनेन अकर्मवश्यत्वम् उक्तम्। अनेन श्लोकद्वयेन "ब्रह्मवनं ब्रह्म स वृक्ष आसीत्। यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा बिभ्रवीमि वो यदध्यतिष्ठद्भुवनानि धारयन् (वृत्ति.ब्रा 2-8-9-6) इति श्रुत्यर्थः उक्तः। अत्र किंस्विद्वनमित्यादिना वृक्षशब्दोपलक्षितमुपादानं वनशब्दोपलक्षितमाधारः यदध्यतिष्ठदिति निमित्तं च, किमिति प्रश्नपूर्वकं ब्रह्मण एवोपादानत्वनिमित्तत्वाधारत्वादीति नामस्येति प्रतिज्ञापूर्वकोत्तरपरत्वम्[2] अस्य वाक्यस्यावगम्यते। यतः वृक्षशब्दोपलक्षितोपादानाद् ब्रह्मणः द्यावापृथिव्युपलक्षितं कृत्स्नं जगत् निष्टतक्षुः निष्टतक्ष ससर्जेत्यर्थः ॥ ६१ ॥

ईदृशभगवत्स्वरूपविषयकं भक्त्यात्मकं ज्ञानं भागवतसङ्गादेव लभ्यत इत्युक्तम्। इदानीं भागवतसङ्गवत् स्ववर्णाश्रमोचितानभिसंहित धर्मानुष्ठानमात्मयाथात्म्यज्ञानयोगश्च भक्त्यङ्गमित्याह - **क्रियाकलापैरिति**। ये योगिनः प्रकृति विविक्तात्मयाथात्म्यज्ञानयोगः येषामस्तीति योगिनः श्रद्धायुक्तास्सन्तः क्रियाकलापैः स्ववर्णाश्रमोचित कर्मकलापैः[3] अनभिसंहितफलैः इदमेव उक्तविधमेव भगवत्स्वरूपसिद्धये मुक्तये साधु सम्यक् यजन्ति आराधयन्ति। इदं कथम्भूतम्? भूतेन्द्रियादिभिः[4] अप्राकृतैः शुद्धसत्त्वमयैः उपलक्ष्यत इत्युपलक्षणम्। अप्राकृतोक्तविध दिव्यमङ्गलविग्रहविशिष्टमित्यर्थः। त एव योगिनः वेदे कर्मयोग प्रकाशके तन्त्रे आत्मयाथात्म्यज्ञान योग प्रकाशके सांख्ये तन्त्रे च कोविदाः कुशलाः भवन्ति॥ ६२॥

अविक्रिय इत्यनेन उपादानकारणत्वमुपक्षिप्तम्। बिभर्तीति भर्तृत्वं, क्षपयतीति संहर्तृत्वं च[5] इति तदेवोपपादयति - **त्वमिति** चतुर्भिः। तत्र त्वमित्युपादानमुपपादयति त्वमुक्तविधस्वरूप रूप[6] गुणविभूतिस्त्वं पुरुषः आद्यः आदौ सृष्टेः पूर्वं भवः आद्यः सृष्टेः पूर्वं प्रलयदशायामासी रित्यर्थः। कथम्भूत आसम्? इत्यत्राह - सुप्तशक्तिः सुप्ताः स्वस्मिन् लीनाः शक्तयः चिदचिदादिशक्तयः यस्य, अतएव एकः असहायः, वक्ष्यमाणनामरूपविभागनिबन्धनबहुत्वप्रतिसम्बन्धि नामरूपविभागानर्हसूक्ष्म चिदचिद्विशिष्टत्वेना-सहाय

---

1. A. B. T omit एव 2. A.B,T omit पर 3. A, B, T कर्मभिः 4. A, B, T भूतादिभिः 5. W च तमुप० 6. A, B, T omit रूप

एवावस्थित इत्यर्थः । ततः तया स्वापृथक्सिद्ध विशेषणभूतया शक्त्या रजस्सत्वतमाइति द्वन्द्वैक्यं, तदपेक्षया विभिद्यत इत्येकवचन रजस्सत्वतमांसि विभिन्नानि विभक्तान्यभूवन् । यतो रज आदे र्महान् महतोऽहङ्कार स्त्रि विधः । ततो भूतादिभ्यः क्रमेण खमाकाशः, ततोमरुद्वायुः ततोऽग्निः ततो वाः आपः ततो धरा पृथ्वी, तेभ्यः खादिभ्यः पञ्चीकृतेभ्यः अण्डोत्पत्तिद्वारा सुरा ब्रह्मादयः, ऋषयो मरीच्यादयः, अन्ये[1]ऽभूवन् । मनुजातिर्यागादयः अभूवन् । सृष्टेः पूर्वं स्वस्मिन् उपसंहृतचिदचिच्छक्तिर्नाम-रूपविभागानर्हसूक्ष्म-चिदचिच्छरीरकस्त्वमेक एव कारणतया अवस्थितोऽपेक्षितकर्तृकरणा[2]धिकरणाद्युपकरणजातस्सर्वज्ञः सर्वशक्तिः स्वलीलैकप्रयोजनस्स्वात्मिकां मायां जीवद्वाराऽनुप्रविश्य मायाशरीरकं स्वात्मानमेव सङ्कल्पमात्रेण महदादिपृथिव्यन्तसमष्टिरूपेण देवादिचतुर्विधव्यष्टिभूतरूपेण च परिणमय्य स्वपर्यन्त तत्तन्नामरूपविभागाऽऽसी[3]दित्यर्थः ॥ ६३ ॥

त्वं पुरुष इत्युक्तम् । तत्र पुरुषशब्दप्रवृत्तिनिमित्तं दर्शयन् पुरुषशब्दवाच्यतामाह - **सृष्टमिति** । यतः यो भगवान् स्वशक्त्या प्रकृतिरूपया सृष्टमिदं चतुर्विधं देवमनुष्यतिर्यक् स्थावरभेदेन च[4]तुर्विधं पुरं शरीरम् आत्मनोंऽशकेन अंशभूतेन जीवेन जीवान्तरात्मतया पुरमनुप्रविष्टः अथो अतः तं भगवन्तम् अन्तः पुरस्यान्तः जीवान्तरात्मतया सन्तं पुरुषं विदुः, पुरुषशब्दवाच्यं विदुः । तथा चोक्तम् - "पूस्संज्ञे वै शरीरेऽस्मिन् शयनात्पुरुषो हरिः । शकारस्य ष कारोऽयं व्यत्ययेन" इति । कोऽसावात्मनोंऽशः यदन्तरात्मतया पुरमनुप्रविष्टः तत्राह - यो जीवः हृषीकैरिन्द्रियै सारधं सारधाः मधुमक्षिकाः, सारं पुष्पादिगतं घ्नन्ति गच्छन्ति प्राप्नुवन्तीति व्युत्पत्तेः । अत्र सारधशब्दस्तदुपार्जितमधुनि लाक्षणिकः, मधुकरोपार्जितमध्विव मधुकरस्थानीयेन्द्रियोपार्जित शब्दादिभोग्यजातं भुङ्क्ते अनुभवति स इत्यर्थः । अत्र जीवान्तरात्मतया अनुप्रवेशकथनं नियतदेशकालकर्माद्यानुगुण्येन जगद्रक्षणार्थानुप्रवेशाभिप्रायकम् ॥ ६४ ॥

अथ संहर्तृत्वमुपपादयति - य एष कालशरीरकस्त्वं अत्युग्रवेगः कालवेगमनुसन्धदतामायुः क्षयनिमित्तभयोत्पादात् अलक्ष्यमाणरूपः अविषह्यवेगो वायुः मेघपङ्क्तीरिव भूतैरेव भूतानि कालयानः पीडयन् विकर्षसि संहरसि ॥ ६५ ॥

**विज.** यत्रेत्यधिकरणनिर्देशात् शुक्तिकायां रजतव्यक्तिवत् यस्मिन् कल्पितत्वात् मिथ्याभूतं जगदिति भ्रान्तिं निराचष्टे - **यो मायय़ेति** । यो हरिः पुरुरूपया शुक्ललोहितकृष्णभेदेन बहुरूपया मायया प्रकृत्येदं जगदसृजत् बिभर्ति पुनः संहरति । अत्र प्रकृतेरेव महदाद्यात्मना विकारो न तु परमात्मन इत्याशयेनोक्तम् - अविक्रिय इति । अनेन शुक्त्यज्ञानविकारो रजतमित्यपास्तम् । एवमपि परमात्मा जीवादिभ्यो भिन्नतया सम्यक्किमिति न प्रतीयत इत्याशङ्क्य सा प्रतीतिः सम्यक् ज्ञानिविषयेत्याह - यद्भेदेति । यस्य होर्जीवादिभ्यो भेदबुद्धिः सदिवानिर्दोषज्ञानविषयैवेत्यर्थः । दिनवाचिना दिवाशब्देन कथं ज्ञानार्थतोच्यते प्रसिद्ध्यभावादिति न वाच्यम् ।

1. A, B, T omit अभूवन्   2. A, T omit अधिकरण   3. A, B, T omit वि   4. A, B, T omit चतुर्विधं

"रात्रिरज्ञानमुद्दिष्टं सम्यक् ज्ञानं दिवा स्मृतः" (शब्दनिर्णये) इति वचनात्। शुक्तिरजतज्ञानवन्नेदं पुरुषार्थोपयोगीति चेन्न। "जीवेभ्योजडतश्चैव भेदज्ञानं हरेः सदा। वास्तवं ज्ञानमुद्दिष्टं तेन मुक्तिरवाप्यते" (षाड्गुण्ये) इति वचनात्। तत्र युष्मत्प्रतीतिः कीदृशीति तत्राह - आत्मसंस्थयेति। यया स्वाधीनया प्रकृत्या निर्विकारः सृष्ट्यादि करोति तयाऽऽत्मसंस्थया परमात्मव्यवस्थयास्थितं त्वां प्रतीमहि विजानीमहे। स्वाधीनामपि प्रकृतिं विहाय सृष्ट्यादि कर्तुं समर्थ इति द्योतनाय आत्मतन्त्रमिति। अत एव भगवन्निति सम्बोधयाम्बभूवुरिति॥ ६१॥

अस्तु सृष्ट्यादि कर्तृ ब्रह्म, "स्वर्गकामो यजेत" इत्यादि वाक्यप्रमाणेनेज्यमिन्द्रादिकं स्यात् तादृक् प्रमाणसम्भवादिति तत्राह - **क्रियाकलापै** रिति। इदं प्रेत्यापि न मुञ्चामीति श्रद्धयाऽन्विता ये कर्मयोगिनः क्रियासमूहैः ज्ञानसिद्धये इदं जगत्कर्तृब्रह्मैव साधु यजन्ते नेन्द्रादिकम्। त एव "स्वर्गकामो यजेत" इत्यादि। वेदे "शुद्ध स्फटिकसङ्काश वासुदेवं निरञ्जनम्" इत्यादि, तन्त्रे च कोविदाः तद्धृदयज्ञाः इत्यर्थः, न केवलं श्रुतिस्मृतिभ्यां ज्ञात्वा यजति, किन्त्वनुमानेनापीति भावेनाह - भूतेति। भूतेन्द्रियान्तःकरणैरुपलक्ष्यते ज्ञायत इति भूतेन्द्रियान्तःकरणोपलक्षणम्। भूतादीनामचेनत्वेन स्वतः प्रवृत्त्यसम्भवात्तत्प्रेरकोऽन्यः चेतनोऽस्ति। स चेश्वर एव अन्यस्य अन्वयव्यतिरेकाभ्यां शक्त्यदृष्टेरिति। यद्वा वेदे तन्त्रे च श्रद्धान्विता ये योगिन इदं यजन्ति त एव कोविदाः कर्मकाण्डसारस्य ज्ञानपटव इति अनेनेन्द्रादिकं यजन्तो वेदादितात्पर्यार्थं न जानन्तीति ज्ञापितम्॥ ६२॥

ननु जीवादिदं जगत् केचित् सङ्गिरन्ते, इदं निपुण प्रणीतं विशिष्टकार्यत्वात् चित्रादिकार्यवदित्यनुमानम्। "जीवाद्भवन्ति भूतानि" इति कानिचिद्वाक्यानि चोदाहरन्ति अत इदं लक्षणमतिव्याप्तमिति शङ्कानिरासायाह - त्वमेक इति। आद्यः प्रपञ्चोत्पत्तेः पूर्वभवः। पुरुषस्त्वमेक एवाऽभूदित्यन्वयः। "ब्रह्मैवेदमग्र आसीत्" इत्यादेः। पुरुष इत्यनेन " कर्तारमीशं पुरुषं ब्रह्मयोनिम् " (मुण्ड.उ. 3-1-3) इति वाक्यं सूचितम्। अनेन जीवश्च व्यावृत्तोऽस्य ब्रह्मयोनित्वोक्तेः। लक्ष्मीतत्त्वस्य द्वितीयस्य विद्यमानत्वात् कथमेक इति। विशेष्टुं शक्यत इति तत्राह - सुप्तेति। अत्र सुप्तेत्यनेन प्राप्तिरुपलक्ष्यते। "यदाऽयं पुरुषः स्वपिति नाम सता सौम्य तदा सम्पन्नो भवति" इति श्रुतेः। स्वात्मन्येवाप्तशक्तिः मुख्यार्थाङ्गीकारेऽज्ञत्वापत्तेरन्यैः अदृष्टत्वमङ्गीकर्तव्यम्। "प्रकृतेः स्वाप उद्दिष्टहर्यन्यत्र त्वदर्शनम्" इति वचनात्। एवं प्रलयावस्थां संक्षिप्य सृष्ट्यवस्थामाह - तयेति। या प्रलये हरावेव रता सृष्टिकाले प्राप्ते हरेः कटाक्षेण सिसृक्षुत्वविशेषमाप्तया तया शक्तिशब्दशब्दितया प्रकृत्या साम्यावस्थाम् आप्तया विभिद्यते विषमावस्थामापद्यते। सृष्टिक्रममपेक्ष्य रजस्सत्वम इति व्यत्यस्योक्तम्। स्थित्यादेः सृष्ट्यनन्तरत्वात् रजस्सृष्टौ, सत्त्वं स्थितौ, तमः संहृतौ चेति भिद्यते। रजः सत्त्वतमोभ्यां विभिद्यते, सत्त्वं रजस्तमोभ्यां, तमश्च सत्त्वरजोभ्यामित्ययं भेदः प्रमाणान्तरत्वात् तत्कार्यस्वभावदर्शनादवगन्तव्यः। उक्तं भेदं विशिनष्टि - महानहमिति। ततो गुणवैषम्यात् सत्त्वप्रधानं महत्तत्वं तदभिमानी ब्रह्मा चाभूदिति बोद्धव्यम्। तत्राहङ्कारं त्रिविधा (त्रिधा) भिन्नम्

(विभिन्नम्)। तामसाहङ्कार त्वादि। वैकारिकाहङ्कारादिन्द्रियाभिमानिनो देवाः। तैजसाहङ्कारात् ज्ञानहेतुत्वादृषिशब्दवाच्यानीन्द्रियाणि स्वादिभ्यः सुरनरतिर्यगादिभूतगणाः अभूवन्। किं बहुनोक्तेन ? इदं चराचरं जगद्यतो यस्मादुत्पन्नं तदेवं विभिन्नमिति ज्ञातव्यम्। "आत्मन आकाशः सम्भूतः' (तैत्ति.उ. 2-1-1) इत्यादि श्रुत्यनुगृहीतं मानमस्मिन्नर्थे॥ ६३॥

अचेतनस्य स्वतः प्रवृत्त्यनुपपत्तेः चेतनप्रकृतौ अस्वातन्त्र्यप्रतीतेर्विचित्रप्रपञ्चरचनाऽन्यथाऽनुपपत्त्या विशिष्टचेतनसिद्धिः, स चेश्वर एवार्थापत्तेरन्यथासिद्धिपरिहारायाह - सृष्टमिति। अनुप्रविश्येत्यनेनार्थापत्तेः अन्यथासिद्धिः परिहृतेति। प्रपञ्चस्तु ग्रन्थाधिक्यात् प्राज्ञानां सुबोधत्वाच्च उपरम्यते। आत्मांशकेन स्वरूपांशेन "तत्सृष्ट्वा" (तैत्ति.उ. 2-6) इत्यादि श्रुतेः। जरायुजादिभेदेन चतुर्विधं पुरं प्रविश्य हृषीकैर्जीवेन्द्रियैः सारधं सारमात्रं मधु सुखं भुङ्क्ते यस्मादतो तस्मात्। अत्र पुरे सन्तं त्वां पुरुषं विदुरित्यन्वयः। तदस्यास्तीत्यस्मिन् अर्थे उषच् प्रत्ययः। सन्तमित्यनेन निर्दोषत्वं सूचयति। "अवधारणे घशब्दः स्यात्" (शब्दनिर्णये) इति वचनात्। पुनर्मधु नाम सुखं विन्द्यात् केवलं सारमेव भुङ्क्ते न त्वसारमित्याशयेन "सारवत्सारमात्रं तु सारधं" (शब्दनिर्णये) इत्यतोऽपि कथित एवार्थः॥ ६४॥

संहर्तृलक्षणस्य कालाधीनतया प्रतीयमानत्वात् तत्र अतिव्याप्तमिति तत्राह - **स एष** इति। योऽग्रतः सृष्ट्वा स एव लोकान् कालयानः "कल-द्रावणे" इति धातुः। कालरूपी भूत्वा त्वं भूतैः करणैः यमादिभिः भूतानि विचकर्षसि संहरिष्यसि इत्यन्वयः। अविषह्यः अपरिहार्यः। अत्र हेतुं ध्वनयति - अतिचण्डेति। अत्रानुमानं मानमित्याह - अनुमेयेति। उदाहरणमाह - घनावलीरिति। चलन्तीर्घनावलीर्दृष्ट्वा चलनं वायुकर्तृकमिति यथा कल्प्यते तथाऽत्रापीति॥ ६५॥

**प्रमत्तमुच्चैरिति कृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम्।**
**त्वमप्रमत्तः सहसाभिपद्यते क्षुल्लेलिहानोऽहिरिवाखुमन्तकः॥ ६६॥**

**कस्त्वत्पदाब्जं विजहाति पण्डितो यस्तेऽ[1]वमानव्ययमानकेतनः।**
**विशङ्कयास्मद्गुरुरर्चति स्म यद् विनोपपत्तिं[2] मनवश्चतुर्दश॥ ६७॥**

***यत्स्पृष्टोऽहरहर्मुक्तक्लेशश्शेतेऽमृताम्बुधौ।**
**तावद्वेदाऽथ तत्तेङ्घ्रिं जनोऽनुस्मरते च तत्॥**

**अथ त्वमसि नो ब्रह्मन् परमात्मन् विपश्चिताम्।**
**विश्वं रुद्रभयध्वस्तमकुतश्चिद्भया गतिः॥ ६८॥**

1. M, Ma, Ms यत्ते पुमानप्ययमब्जकेतनः 2. W °त्तिः
* This additional verse is found in M, Ma, Ms and the commentary on the same by Vidjayadhwaja be found in its proper place.

**इदं जपत भद्रं वो विशुद्धा[1] नृपनन्दनाः ।**

**स्वधर्ममनुतिष्ठन्तो भगवत्यर्पिताशयाः ॥ ६९ ॥**

**तमेवात्मानमात्मस्थं सर्वभूतेष्ववस्थितम् ।**

**पूजयध्वं गृणन्तश्च ध्यायन्तश्चासकृद्धरिम् ॥ ७० ॥**

**श्रीध.** विकर्षणप्रकारमाह - **प्रमत्तमिति** । इति कृत्यमेवमेवमिदं कर्तव्यमिति चिन्तयोच्चैः प्रमत्त[2-]मनवहितम्[-2] । तत्र हेतुः - विषयेषु लालसमतिकामुकम् । प्राप्तेऽपि[3] विषये प्रवृत्तलोभम् । अन्तकस्त्वभिपद्यसे आक्रामसि । क्षुधा लेलिहानो जिह्वया ओष्ठप्रान्तौ स्पृशन् सर्पो मूषकमिव ॥ ६६ ॥

**क इति** । अतः कस्तव पदाब्जं त्यजेत् पण्डितश्चेत् ? कथम्भूतः ? यस्तवावमानोऽनादरस्तेन व्ययमानम् - [4-]अयगतौ । व्ययं प्राप्नुवत्[-4], केतनं शरीरं यस्य सः । यदस्माकं गुरुर्ब्रह्माऽर्चति स्म इति सर्वेषां स्तोतॄणां वाक्यम् । विशङ्कया [5]नाशशङ्कया विनोपपत्तिमिति । [6-]अस्मादेतत्फलं भवतीत्युपपत्त्यपेक्षायां विनाऽपि स्वभावत एव[-6] दृढविश्वासेन मनवश्चतुर्दश अर्चन्ति स्म ॥ ६७ ॥

उपसंहरति **अथेति** । [7]विश्वं रुद्रभयेन ध्वस्तम् । [8]अथ अतो न कुतश्चिद्भयं यस्यां तादृशी गतिरस्ति ॥ ६८-७० ॥

**वीर.** विकर्षणप्रकारमेवाह - **प्रमत्तमिति** । इतिकृत्यमेवं कर्तव्यमिति चिन्तयोच्चैः भृशं प्रमत्तं विषयेषु शब्दादिषु लालसमतिकामुकं, प्राप्तेऽपि विषये, प्रवृद्धलोभं जनमप्रमत्तः कालरूपस्त्वं सहसा बलादन्तकोऽभिपद्यसे प्राप्नोति यथा क्षुधा लेलिहान· जिह्वया ओष्ठप्रान्तौ स्पृशन् सर्पो मूषकमि[9]वेत्यर्थः ॥ ६६ ॥

[10-]एवं सत्त्वोत्कृष्टत्वात् कृत्स्नजगदुदयविभवलयलीलत्वात् त्वामेव भजामीति सनिदर्शनमाह - **क इति** । कथम्भूतः ? य· तव अवमानेन अनादरेण व्ययमानं क्षीयमाणं केतनं ज्ञानं यस्य सः । त्वत्परिचर्यां विना वृथैव शरीरं मन्वानः इति भावः । त्वदवमानादिना लीनचैतन्य इत्यर्थः । एवंविधोऽपि यो देवात् पण्डितो बुद्धिमान् भवेत् तर्हि को वा त्वत्पादाब्जं विजहाति, न कोऽपीत्यर्थः । अत एवास्मद्गुरुः निश्शङ्कया त्वत्पादाब्जमेवार्चति आराधयति स्म, कौऽसौ तव गुरुर्यो मामर्चयति यस्य ब्रह्मणो दिनोपपत्ति र्दिवसनिष्पत्तिर्नाम चतुर्दश मनवः चतुर्दश मनवो यस्य दिवसनिष्पत्तिरूपाः स ब्रह्मैव अस्मद्गुरुः पितेत्यर्थः[-10] ॥ ६७ ॥

---

1. M, Ma, Ms विस्रब्धः; V विस्रब्धा· 2--2. B, J, V, Va omit 3. V omits अपि 4--4. J, V, Va omit 5. V विना°

6--6. B, J, V, Va omit 7. B, J, V, Va omit विश्वं 8. B, J, V, Va omit अथ 9. W omits इव 10--10. A, B, T एवं सर्वोत्कृष्टत्वात् पण्डितो बुद्धिमान् भवेत् तर्हि को वा त्वत्पदाब्जं विजहाति न कोऽपि इत्यर्थः । कथम्भूतः ? यः एव अवमानः अनादरः तेन व्ययमानं केतनं शरीरं यस्य, त्वत्परिचर्यां विना वृथैव शरीरं मन्वानः इति भाव. । अत एव अस्मद्गुरुः निश्शङ्कया त्वत्पदाब्जमेवार्चयति आराधयति स्म । कोऽसौ तव गुरुः यो मामर्चयति स्म तमाह - यदिति । यस्य दिनोपपत्तिः दिननिष्पत्तिर्नाम चतुर्दश मनवो यस्य दिवसनिष्पत्तिरूपास्सन्ति । स ब्रह्मैव अस्मद्गुरुः पितेत्यर्थः ॥ ६७ ॥

अतस्त्वमेव प्राप्य इति वदन्नुपसंहरति - **अथेति**। हे ब्रह्मन्! परमात्मन्! कृत्स्नं विश्वं रुद्रभयात् त्वदात्मकस्य रुद्रस्य भयात् ध्वस्तं [1-]नाशं प्राप्तं[-1] त्वन्तु विपश्चितां नः अकुतश्चिद्भया नास्ति कुतोऽपि भयं यस्मास्सा अकुतश्चिद्भया गतिरसीति [2-]कृत्स्नं विश्वं[-2] रुद्रभयादिति परोक्षनिर्देशो रुद्रान्तरसामन्याभिप्रायकः ॥ ६८ ॥

एवं स्वस्मै ब्रह्मोपदिष्टस्तोत्रेण भगवन्तं प्रस्तूय तेभ्यः प्रचेतोभ्यो उपदिश्य तस्मिन् स्तोत्रे तदर्थे च तान् रोचयन्नाह रुद्रः - **इदमिति**। हे नृपनन्दनाः! विस्तब्धाः विश्वासयुक्ताः कर्तरि क्तः। इदं भगवत्स्तवनं जपत अर्थत श्शब्दतश्च अनुसन्दध्वम्। अनेन जपेन वः युष्माकं भद्रं मङ्गलं भविता तथा स्वधर्मं स्ववर्णाश्रमोचितं धर्ममनुतिष्ठन्तः भगवत्यर्पितान्तःकरणाः [3-]सन्तः इत्यर्थः[-3] ॥ ६९ ॥

असकृत् पौनः पुन्येन हरिं ध्यायन्तो, गृणन्तः स्तुवन्तः तमेव सर्वभूतेष्ववस्थितम् आत्मस्थं पूजकान्तरात्मतयाऽवस्थितं [4-]भगवन्तं[-4] पूजयध्वम्। [5-]सर्वभूतेष्ववस्थितमित्यनेन "ऐतदात्म्यमिदं सर्वम्" (छां.उ. 6-8-7) इति श्रुत्यर्थोऽनुसन्धीयते। आत्मान मित्यनेन "तदात्मा" इति श्रुत्यर्थः। आत्मस्थमित्यनेन "तत्त्वमसि" (छां.उ. 6-8-7) इति श्रुत्यर्थोऽनुसंहितः। अत एव "तत्स्थत्वात् अनुपश्यन्ति यत एव हि साधवः" इति श्रुत्यर्थः उक्तः[-5] ॥ ७० ॥

**विज.** अवान्तर संहारस्त्वदन्येन किं न स्यादत्राह - **प्रमत्तमिति**। क्षुधा लेलिहानः पुनः पुनर्जिह्वयासृक्किणी लिहन् ॥ ६६ ॥

एवं भगवतः स्वरूपं निरूप्य तदुपासनात्यागी असुर एव न विद्वानिति भावेनाह - क इति। पण्डितं एवं ज्ञातेश्वरतत्त्वः पुमान् कस्त्वत्पादाब्जं त्यजति "यद्यदाचरति श्रेष्ठः" (भ.गी. 3-21) इत्येतावदेतत् ध्वनयति - त्यजति चेत्सुरेतरः। इतोऽपि मोक्तुं निमित्तं नास्तीत्याह - यत्र इति। अयमब्जकेतनः पुमानपि विगतशङ्कया ते तव यत् पदाब्जम् अर्चति [6]स्म स्मरते इत्यन्वयः। "स्मृतौ वृत्ते निषेधे स्म" (वैज.को. 8-7-7) इति यादवः। कोऽयमब्जकेतनः इत्यतोऽस्मद्गुरुरिति, जनकत्वाज्ज्ञानोपदेष्टृत्वाच्च गुरुरिति। अनेन ततः परं हि मामित्यत्र श्रीरेवोच्यते न रुद्र इति निरणायि इत्यतो मायावादिनां व्याख्यानं पूर्वापरविरुद्धत्वादुपेक्षणीयमित्यस्माभिः तन्मतनिरासाय प्रयासो न क्रियत इति इतोऽपि तत्पादसेवा न हातव्येत्याह - यद्विनेति। चतुर्दश मनवोऽस्मदेतत्फलं भवतीत्युपपत्त्यपेक्षां विनापि यच्चरणारविन्दमर्चन्ति ॥ ६७ ॥

अनुदिनं सुप्तिदशायां श्रीनारायणस्पर्शेन परमानन्दोऽनुभूयते, किमुत कैवल्ये इति वेदयन् तस्य दौर्लभ्यमाह - **यत्स्पृष्ट** इति। येनाङ्घ्रिणा स्पृष्टोऽहरहर्मुक्तक्लेशो जनोऽमृताम्भोधौ परमानन्दसमुद्रे शेते यावत्तावत्तदानीं वेद सुखं वेत्ति अथोत्थानानन्तरं तेऽङ्घ्रिं वेद

---

1--1. W omits 2--2. W omits 3--3. W omits 4--4. W omits 5--5. W omits 6. A omits स्म

नु किमित्याक्षेपः, तत्सुखं स्मरते च। यद्यपि सुखमहमस्वाप्समिति परामृशति, तथाऽपि तवाङ्घ्रिं न वेत्ति स्मरतीति भावः। अनेन तादृश· पुरुषो दुर्लभ इति सूचितम्। विचित्रे जगति कश्चिद्धीरोऽस्मदभयदः किं न स्यादिति शङ्कां विहायैवं प्रार्थनीय इति वक्ति - **अथेति**। विश्वं रुद्रभयध्वस्तमिति यस्मात्। अथ तस्मादेवं विपश्चितां नः त्वमकुतश्चिद्भयागतिरसि इत्यन्वयः। ब्रह्मन्! परमात्मन् इति पदद्वयेन बहिरन्तश्च त्वां विनाऽन्योऽभयदो नास्तीति सूच्यते॥ ६८॥

ध्येयस्वरूपं निरूप्य अधुना पूर्वोक्तं जाप्यं[1] विधाय उपसंहरति - **इदं जपतेति**। सर्वात्मा आत्मने नमः इत्यारभ्य वाचो विभूतयः इत्यन्तं यदुक्तं तदिदं जपतेत्यन्वयः॥ ६९॥

आत्मस्थमित्युपदिश्य सर्वभूतेष्ववस्थितमिति वचनं परिच्छिन्नत्वपरिहारायोक्तमिति ज्ञायते॥ ७०॥

**योगादेशमुपासाद्य धारयन्तो मुनिव्रताः।**
**समाहितधियः सर्व एतदभ्यसतादृताः॥ ७१॥**

**इदमाह पुराऽस्माकं भगवान् विश्वसृट्पतिः।**
**भृग्वादीनामात्मजानां सिसृक्षुः संसिसृक्षताम्॥ ७२॥**

**ते वयं चोदितास्सर्वे[2] प्रजासर्गे प्रजेश्वराः।**
**अनेन ध्वस्ततमसः सिसृक्ष्मः[3] विविधाः प्रजाः॥ ७३॥**

**अथेदं नित्यदा[4] युक्तो जपन्नवहितः पुमान्।**
**अचिराच्छ्रेय[5] आप्नोति वासुदेवपरायणः॥ ७४॥**

**श्रेयसामिह[6] सर्वेषां ज्ञानं निःश्रेयसं[7] स्मृतम्।**
**सुखं[8] तरति दुष्पारं ज्ञाननौर्व्यसनार्णवम्[9]॥ ७५॥**

**य[10] इमं[11] श्रद्धया युक्तो मद्गीतं भगवत्स्तवम्[12]।**
**अधीयानो दुराराध्यं हरिमाराधयत्यसौ॥ ७६॥**

---

1. A जप्य 2. A, B, G, I, J, T नो° 3. A, B, G, I, J, T सिसृक्ष्मो 4. V युक्तो यो 5. G, I, J, M, Ma, T °यमा° 6. W °मपि 7. A, B, G, I, J, T, W परम्
8. W तरन्ति 9 W °नो व्य° 10. M, Ma, Ms, V इदं 11. V प्रयतो नित्यं 12. V °त्सखम्

**विन्दते पुरुषोऽमुष्माद्यद्यदिच्छत्यसत्वरम्[1]।**

**मद्गीतगीतात्सुप्रीताच्छ्रेयसामेकवल्लभात् ॥ ७७ ॥**

**इदं य कल्प[2] उत्थाय प्राञ्जलिः श्रद्धयान्वितः।**

**श्रृणुयाच्छ्रावयेन्मर्त्यो मुच्यते कर्मबन्धनैः ॥ ७८ ॥**

**गीतं मयेदं[3] नरदेवनन्दनाः परस्य पुंसः परमात्मनः स्तवम्।**

**जपन्त एकाग्रधियस्तपोमहत् चरध्वमन्ते तत आप्स्यथेप्सितम् ॥ ७९ ॥**

इति श्रीमद्भागवते महापुराणे अष्टादश साहस्र्यां

श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां

चतुर्थस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥

**श्रीध. योगेति।** योगादेशं नाम एतत्स्तोत्रमुपासाद्य पाठतः मनसा धारयन्तोऽभ्यासेन जपत[4] ॥ ७१ ॥

**इदमिति।** विश्वसृजां पतिः ब्रह्मा ॥ ७२ ॥

**त इति।** सिसृक्ष्मः सृष्टवन्तः ॥ ७३ ॥

**अथेति।** युक्तः एकाग्रचित्तः ॥ ७४ ॥

**श्रेयसामिति।** ज्ञानमेव नौर्यस्य ॥ ७५ ॥

**य इति।** योऽधीयानो भवति [5-]असौ हरिमाराधयति[-5] ॥ ७३ ॥

**विन्दत इति।** असौ[6] अमुष्माद्धरेः असत्वरन् स्थिरस्सन् मद्गीतं स्तोत्रं तेन गीतात् स्तुतात् [7-]यद्यदिच्छति तत्तद्विन्दते[-7]। एक एव वल्लभः प्रियः आश्रयः तस्मात् ॥ ७७ ॥

**य इति।** कल्ये[8] उषसि ॥ ७८ ॥

---

1. M, Ma, Ms °तिसत्वरम् 2. M, Ma कल्पः; Ms, V काल्य 3. V मयैतं 4. A जपन्तः अभ्यस्त ॥ ७१ ॥ ; B, Va जपन्तः 5--5. V omits
6. A, B, J, Va omit असौ 7--7. V omits 8. V काल्ये

**गीतमिति**। [1]तपश्चरत तपसोऽन्ते ईप्सितं प्राप्स्यथ॥ ७९॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्री श्रीधरस्वामि विरचितायां भावार्थ दीपिकायां

व्याख्यायां चतुर्विंशोऽध्यायः॥ २४॥

**वीर.** योगादेशं नाम एतत्स्तोत्रम् [2]उपासाद्य पाठतः प्राप्य मनसा धारयन्तः समाहितचित्ताः मौनव्रतनिष्ठाः आदृताः आदरयुक्ताः सर्वे यूयमभ्यसत॥ ७१॥

स्तोत्रस्य साम्प्रदायिकत्वमाह - **इदमिति**। विश्वसृजां मरीच्यादीनां पतिर्विश्वसृड्ब्रह्मा आत्मजानां प्रष्टुमिच्छतां भृग्वादीनां अस्माकं पुरा आह उपदिष्टवान्॥ ७२॥

ते उपदिष्टस्तोत्राः वयं प्रजासर्गे निमित्ते प्रचोदितास्सन्तः अनेन स्तोत्रेण निरस्ताज्ञानाः विविधाः प्रजा सिसृक्ष्म[3] सृष्टवन्तः॥ ७३॥

पुमान् समाहितचित्तः, वासुदेवः परमयनं प्राप्यं प्रापकमाधारश्च यस्य, तथाभूतः इदं नित्यदा जपन् आशु स्वसमीहितं श्रेयः [4]आप्नोति॥ ७४॥

श्रेयसामपि मध्ये ज्ञानस्यैव निरतिशयपुरुषार्थरूपमोक्षसाधनत्वेन निरतिशयश्रेयस्त्वं वदन् तत्साधनतामस्य स्तोत्रस्याह - **श्रेयसामिति द्वाभ्याम्**। सर्वेषामपि श्रेयसां मध्ये ज्ञानं भगवद्भक्त्यात्मकं ज्ञानमेव निःश्रेयसं नितरां श्रेयः स्मृतम्। कुतः ? [5]यतः ज्ञानिनो भगवद्[6]भक्त्यात्मकज्ञानवन्तः उपायान्तरैर्दुस्तरमपि व्यसनार्णवं दुःखसागरात्मकं संसारं तरन्ति॥ ७५॥

यः पुमान् मया गीतमिदं स्तोत्रं श्रद्धया युक्तः अधीयानः अध्ययनं कुर्वाणः उपायान्तरैः दुराराध्यमपि हरिमाराधयति हरिविषयां भक्तिं लभत इत्यर्थः॥ ७६॥

ततो मया यद्गीतं [7]स्तोत्रं तस्य गीतात्, भावे क्तः। गानाद्धेतोः सुप्रीतात् श्रेयसां स्र्वपुरुषार्थानां वल्लभात् प्रभोः अमुष्माद्भक्त्याऽऽराधितात् परमपुरुषात् यद्यच्छ्रेय इच्छति असत्वरन् स्थिरस्सन् तत्सर्वं विन्दते लभते॥ ७७॥

---

1. V तापश्चरध्वं 2. A, B, T omit उप 3. A, B, T °क्ष्मः 4. A, B, T प्रा° 5. A, B, T omit यतः 6. A, B, T °द्भक्तियाथात्म्यज्ञा°
7. A, B, T omit स्तोत्रं

यः पुमानिदं कल्ये उषसि उत्थाय प्राञ्जलिः श्रुणुयात् अन्यान् श्रावयेद्वा स मर्त्यः सर्वैः कर्मरूपैः बन्धनैः मुच्यते मुक्तो भवति ॥ ७८ ॥

हे नरदेवनन्दनाः ! मया गीतम् इदं परमपुरुषस्य स्तवं जपन्तः समाहितचित्ताः तपश्चरध्वं कुरुध्वम्, अन्ते तपसोऽन्ते ततः तस्मादीप्सितम् आप्स्यथ[1] ॥ ७९ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे
श्री वीरराघवविदुषा लिखितायां भागवत चन्द्रचन्द्रिकायां
व्याख्यायां चतुर्विंशोऽध्यायः ॥ २४ ॥

**विज.** श्रद्धां जनयति - **इदमाहेति**। विश्वसृक्पतिः ब्रह्मा ॥ ७१, ७२ ॥

नेदं श्रवणमात्रं किन्त्वनुभवसिद्धमित्याह - **ते वयमिति** ॥ ७३ ॥

ने केवलमिदं युष्माकमेव अन्येषामपि श्रेयस्करमित्याह - **अथेति** ॥ ७४ ॥

तत्किं श्रेय इति तदाह - **श्रेयसामिति**। श्रेयसामस्यैव प्रधानश्रेयः त्वमित्याह - सुखं तरतीति ॥ ७५ ॥

न केवलम् अनेनाऽऽपवर्गिकं फलं, किन्तु अपेक्षितं चेत् ऐहिकमपि स्यादित्याह - **य इदमिति** ॥ ७६ ॥

मद्गीतमित्यनेन गान्धर्वं न स्तवमिति अस्मत्सेविनो मूढा इति द्योतनाय श्रेयसामित्युक्तम् ॥ ७७ ॥

फलविशेषार्थं कालविशेषमाह - **कल्य** इति। कल्ये[2] उषसि ॥ ७८ ॥

श्रद्धातिशय जननार्थं पुनरुक्तिं करोति - **गीतं मथेति**। एकाग्रधियः ध्येयादनन्यविषया धीर्येषां ते तथोक्ताः अग्रे जगदादावेक एव यः स एकाग्रः तत् हरावेव धीर्येषां ते तथेति वा। अन्ते देहान्ते युष्मद्धिताय इदमुक्तमिति प्रकाशनाय चरध्वमिति आत्मनेपदप्रयोगः ॥ ७९ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे
श्री विजयध्वजतीर्थकृतायां पदरत्नावल्यां
टीकायां चतुर्विंशोऽध्यायः ॥ २४ ॥

---

1. W adds प्राप्स्यथ 2. A, B कल्ये

# पञ्चविंशोऽध्यायः

## मैत्रेय उवाच

इति सन्दिश्य भगवान् [1]बार्हिषदैरभिपूजितः ।
पश्यतां राजपुत्राणां तत्रैवान्तर्दधे हरः ॥ १ ॥

रुद्रगीतं भगवतः स्तोत्रं सर्वे प्रचेतसः ।
जपन्तस्ते तपस्तेपुर्वर्षाणामयुतं जले ॥ २ ॥

प्राचीनबर्हिषं क्षत्तः कर्मस्वासक्त[2]मानसम् ।
नारदोऽध्यात्मतत्त्वज्ञः कृपालुः प्रत्यबोधयत् ॥ ३ ॥

[3-]नारद उवाच[-3]

श्रेयस्त्वं कतमद्राजन् ! कर्मणाऽऽत्मन ईहसे ।
दुःखहानिस्सुखावाप्तिः श्रेयस्तन्नेह चेष्यते ॥ ४ ॥

[4-]प्राचीनबर्हिरुवाच[-4]

न जानामि महाभाग ! परं कर्मापविद्धधीः ।
ब्रूहि मे विमलं ज्ञानं येन मुच्येय कर्मभिः ॥ ५ ॥

## श्री श्रीधरस्वामिविरचिता भावार्थदीपिका

प्रचेतस्सु तपस्यत्सु तत्पित्रे नारदो घृणी । प्राचीनबर्हिषेध्यात्मं पारोक्ष्येणाऽऽह पञ्चभिः ॥ पुरञ्जनकथाव्याजात् पञ्चविंशे तु नारदः । आत्मनो बुद्धिसङ्गेन विविधा माह संसृतिम ॥ प्रचेतस्सु तपस्तीव्रं तप्यमानेषु नारदः । पुरञ्जनकथाकूटं प्राह प्राचीनबर्हिषे ॥

प्रचेतस्सु तपश्चरत्सु नारदः प्राचीनबर्हिषं [5-]पुरञ्जनकथाकूटेन[-5] बोधितवान् । अत प्रचेतसां कथा मसमाप्यैव तत्पितुर्वृत्तमाह - **प्राचीन बर्हिष** मिति ॥ १-२-३ ॥

---

1. Ms बार्हिष्मदैर°; T बर्हिषदैर°; V बार्हिषैर°   2. V चेतसम्   3--3. A, B, G, I, J, T, V, W omit   4--4. A, B, G, I, J, T, V, W राजोवाच
5--5 B, J, V, Va omit

**श्रेय** इति । [1-]हे क्षत्तः ।[-1] [2-]धर्मादिषु कतमत्[-2] श्रेयः फल मीहसे इच्छसि । [3-]ननु मोक्षदो स नेत्याहदुःखहानिरिति शेषदुःखनिवृत्तिः निरतिशयानन्दावाप्तिश्चेति यत् तदुभयं मोक्षाख्यं श्रेयः[-3] इह कर्मणि तदुभयं नेष्यते विचारकैः ॥ ४ ॥

**नेति** । परं श्रेयो मोक्षः । कर्मभि रपविद्धा [4]विक्षिप्ता धीर्यस्य ॥ ६ ॥

## श्रीवीरराघव विदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं रुद्रोपदिष्टभगवत्स्तोत्रतदाराधनप्रकारेषु प्रचेतस्सु तपश्चरत्सु प्राचीनबर्हि नारदोप[5]दिष्टाऽऽध्यात्म्य पारोक्ष्यः पुत्रेष्वारो पितमहीभारो भगवन्त मुपास्य तल्लोक मगादित्याह मुनिः पञ्च भिरध्यायैः । इति उक्तप्रकारं सन्दिश्य उपदिश्य भगवान् रुद्रः बार्हिषदैः सम्यक् पूजितः राजपुत्राणां प्रचेतसां पश्यतां सतां तत्रैवान्तर्हितवान् ॥ १ ॥

तत इदं रुद्रेण गीतं भगवतः स्तोत्रं जपन्तः प्रचेतसो वर्षाणा मयुतं दशसाहस्र[6]वर्षपर्यन्तं जले तप स्तेपुः, पाकं पचतीति वन्निर्देशः । तपश्चक्रुरित्यर्थः ॥ २ ॥

**प्राचीनबर्हिष** मिति । हे क्षत्तः ! [7]विदुर ! तत आत्मवित् नारदो भगवान् आगत्य केवलं कर्मस्वेवासक्त चित्तं प्राचीनबर्हिषं बोधितवान् ॥ ३ ॥

बोधनप्रकारमेवाह - **श्रेय** इति । अत्र प्रचेतसां कथा मसमाप्यैवान्तरा प्राचीनबर्हिषः कथाऽवशिष्टा प्रस्तूयते इत्यवगन्तव्यम् । हे राजन् ! आत्मने स्वस्मै कर्मणाऽनुष्ठीय मानेन यज्ञादिकर्मणा कतमत् श्रेयः ? किं वा श्रेयः ? साध्यमीहसे इच्छसि, दुःखनिवृत्तिः [8]सुखावाप्तिश्चे दिष्यते तर्हि इह कर्मणि तदुभयं नेष्यते, केवल कर्मणा तदुभयं न साध्यत इत्यर्थः ॥ ४ ॥

एवं केवलकर्मणा मपुरुषार्थसाधनतां प्रतिबोधितः उद्विग्नमना राजाह - **नेति** । हे महाभाग ! कर्मभि राक्षिप्ता धी र्यस्य सोऽहं परं श्रेयो न जानामि । अतस्त्वं विमल मन्तः करणनैर्मल्यापादकं ज्ञानं मे मह्यं ब्रूहि उपदिश, येन ज्ञानेनाऽहं कर्मरूपात् बन्धनात् बन्ध [9]हेतोः मुच्येय मुक्तो भवेयम् ॥ ५ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अध्यात्मगर्भपुरञ्जनोपाख्यानप्रकथनेन संसारसागरे दुराग्रहग्राहदुरवरोहे निमज्जतां दूरीकृतसत्सङ्गानां हरिचरणारविन्द

---

1-1. B, J, V, Va omit 2--2. B, J, Va omit 3--3. A, B, J, Va omit 4. V omits वि 5. A, B, T दिष्टाऽऽध्यात्म° 6. W omits वर्ष 7. W omits विदुर ! 8. W सुखप्राप्ति श्चेदीह्यते 9. A, B, T पाशात्

मकरन्दसेवानभिज्ञानां गमागमादि नानाव्यसन भराक्रान्त शिरोधराणां शिशुकलभाषणाहतश्रवणानां कुटुम्ब भरणातिवाहित दिनकरगमागमानां पुरुषाणां वैराग्यरसानुभावित निपुण बलभक्तिप्रदीपानुगृहीतापवर्गलक्षणपुरुषार्थसाधन भगवद परोक्षज्ञानललना कटाक्ष प्रसन्नमुरमथन प्रसाद परशु मन्तरेण संसारतरुच्छेदो न स्यादिति तादृशी साधनसामग्री निरूप्यते पञ्चस्वध्यायेषु। तत्रोपोद्धातं रचयति - **इतीति**॥ १॥

रुद्रान्तर्धानानन्तरं प्रचेतोभिः किमकारीति तत्राह - **रुद्रगीतमिति**॥ २॥

एतदन्तरे श्रोतुं योग्यां कथां वद, तत्कथाशेषं तदनन्तरं श्रोष्याम इति क्षत्तु रान्तरीं शङ्कां मैत्रेयः परिहरतीत्याह - **प्राचीनबर्हिष मिति**। "स्यात्कृपालुः कारुणिकः", (अम.को) इति वचना त्साधु रयं शब्दः॥ ३॥

ईहया कर्मणा श्रेयसा मवाप्ति रिष्यते, त्वं तत्र श्रेयसां कतमच्छ्रेय आत्मन ईहसे कर्मणेच्छसि, एतदेव विशिनष्टि - दुःखहानिरिति। अत्राऽयं भावः - पुरुषार्थिना पुरुषेण प्रार्थ्यानि श्रेयांसि बहूनि सन्ति। तेषां कतमच्छ्रेयो दुःखहानिलक्षण मुत सुखावाप्ति मथवा उभयम्; अथान्यत्सदपत्यादिलक्षण मिति। इह कर्मणि तदुभयं न॥ ४॥

अत्र राजा सर्वश्रेयोऽवाप्तौ मुख्यसाधनं ज्ञानमेवेति नारदस्य हार्दं विद्वान् तदेव भवतोपदेष्टव्य मिति प्रार्थयते - **न जानामीति**। [1]नारदेन सह उत्तरप्रत्युत्तरायासान्न जानामीति वाक्यं सुख मिति मन्वानेन तत्तथोक्तम्॥ ५॥

**गृहेषु कूटधर्मेषु पुत्रदारधनार्थधीः।**
**न परं विन्दते मूढो भ्राम्यन् संसार वर्त्मसु॥ ६॥**

**[2-]नारद उवाच[-2]**

**भो भोः प्रजापते राजन् पशून् पश्य त्वयाऽध्वरे।**
**संज्ञापिताञ्जीवसङ्घा न्निर्घृणेन सहस्रशः॥ ७॥**

**एते त्वां सम्प्रतीक्षन्ते स्मरन्तो वैशसं तव।**
**सम्परेत मयःकूटै श्छिन्दन्त्युत्थितमन्यवः॥ ८॥**

**अत्र ते कथयिष्ये[3]ऽह मितिहासं पुरातनम्।**
**पुरञ्जनस्य चरितं निबोध गदतो मम॥ ९॥**

---

1. M, Ma, Ms add नारद उवाच   2--2. M, Ma, Ms omit   3. A, B, G, I, J, T, V °ष्येऽमु°; Ms °ष्यामि इ°

**आसीत्पुरञ्जनो नाम राजा राजन् बृहच्छ्रवाः ।**

**तस्याविज्ञातनामाऽऽसी त्सखा विज्ञातचेष्टितः ॥ १० ॥**

**श्रीध. गृहेष्विति** । किं च गृहेषु स्थितः पुत्रा दिष्वेव पुरुषार्थधीर्यस्य ॥ ६ ॥

कर्मफलेषु वैराग्य मुत्पाद्य ब्रह्मविद्या मुपदेष्टुं योगानुभावेन यज्ञपशून् प्रत्यक्षं प्रदर्श्य[1] न्नाह - **भो भो** इति । [2-]पशुरूपाञ्जीवसंघान्[-2] संज्ञापितान् मारितान् ॥ ७ ॥

**एते** इति । एते त्वां सम्परेतं मृतं सम्प्रतीक्षन्ते वैशसं त्वत्कृतां पीडां स्मरन्तः ततश्चायः कूटैःले हयन्त्रमयैः शृङ्गैः छिन्दन्ति छेत्स्यन्ति ॥ ८ ॥

**अत्रेति** । अत्र अस्मिन् सङ्कटे निस्तारकममुमितिहासं कथयिष्यामि ॥ ९ ॥

तत्र जीवस्य विषयासक्त्या संसारः, स चेश्वरानुग्रहेण निवर्तत इति वक्तुं विपर्ययगृहीतस्य साक्षाद्बोधयितु मशक्ते राजवृत्तान्त मिवाह - **आसीदिति** । पुरञ्जनादीन् स्वय मेवेतः पञ्चमेऽध्याये व्याख्यास्यति । तथाऽपि तावत्[3] सुखग्रहणाय यथोपयोगं किञ्चित्[4] किञ्चिद्व्याख्यास्यामः । तत्र स्वकर्मभिः पुरं शरीरं जनयतीति पुरञ्जनो जीवः न विज्ञातं नाम यस्य न च विज्ञातं चेष्टितं यस्य स ईश्वर स्तस्य सखा; यद्वा विज्ञातं चेष्टितं जीवप्रेरणादिलक्षणं यस्य, जीवपारतन्त्र्यस्यानुभवसिद्धत्वात् ॥ १० ॥

**वीर.** कूटधर्मेषु अतिबाल्यधर्मेषु अवर्जनीय प्रवृत्तिधर्मेष्विति यावत्; अत एव संसारद्वारेषु भ्राम्यन् ममतां कुर्वन् पुत्रादिषु अर्थधीः पुरुषार्थबुद्धिः, अत एव मूढो मादृशः परं श्रेयो न विन्दते ॥ ६ ॥

कर्मफलेषु वैराग्य मुत्पाद्य ब्रह्मविद्या मुपदेष्टुं योगानुभावेन यज्ञपशून् प्रत्यक्षं प्रदर्श्याह - **भो भो** इति । [5]हे हे प्रजापते ! राजन् ! अध्यात्मतत्त्व श्रोतृलाभप्रयुक्ताऽऽदरात् सम्भ्रमाद्वा भो भो इति द्विरुक्तिः यद्वा हे प्रजापते ! हे राजन् ! इति विशेषणद्वयाभिप्रायेण द्विरुक्तिः निष्करुणेन त्वयाऽध्वरे संज्ञापितान् मारितान् जीवसङ्घरूपान् पशून् सहस्रशः पश्य ॥ ७ ॥

एते पशवः तव वैशसं त्वत्कृतां पीडां स्मरन्तः त्वां सम्परेतं मृतं प्रतीक्षन्ते, कदाऽयं मरिष्यतीति प्रतीक्षन्त इत्यर्थः । यदा च त्वं मरिष्यसि तदैते पशव उत्थितमन्यवः सञ्जातक्रोधा अयःकूटै ले हेवदविशीर्णैः शृङ्गैः त्वां छिन्दन्ति छेत्स्यन्ति ॥ ८ ॥

ननु "न वा उ वोतन्म्रियसे न रिष्यसि देवान् (ऋक्सं. 1-162-21) इदेषि पथिभिः सुगेभिः । " यत्र यन्ति सुकृतो नाऽपि

1. A, B, J, Va °र्श्या ह 2--2. B, J, V, Va omit 3. B, J, V, Va oit तावत् 4. A, V omit किञ्चित् 5. A, B, T omit हे

दुष्कृतः तत्र त्वा देवः सविता दधातु''(ऋक् सं.-1-162-21) इति यागीय संज्ञपनस्य हिंसात्वाभावश्रवणात् तादात्विकदुःखजनकत्वेऽपि निहीनपशुजन्मनिवर्तनद्वारा स्वर्गोपभोगभोग्य सुन्दरतरजन्म सम्पादकत्वेन तादात्विक दुःखादिजनकौषधपान कर्णच्छेदन[1] क्षौरादिकर्म कारयितृ चिकित्सक पित्रादिवद्धितकारिणि संज्ञपितरि पशूनां क्रोधासम्भवाच्च कथमेव मुच्यते इति चेन्न, कर्मफलेषु वैराग्यजननार्थत्वेनान्यपरत्वा त्तदुक्तेः । अत एव वैराग्योदयायान्यापदेशमुखेन अध्यात्मोपदेशात्मकेतिहासं प्रस्तोतुं प्रतिजानीते **अत्रेति** । अत्र निरतिशयपुरुषार्थ तत्साधनाद्यज्ञानरूपे सङ्कटे तत्त्वहित पुरुषार्थ निश्चायकं पुरातनं पुरञ्जनाख्यराजचरित्रात्मक मितिहासं ते तुभ्यं कथयिष्ये । गदतः इतिहासं सम्यक् कथयतः मम मत्तः सकाशात् निबोध अवहितमनाः श्रुणु ॥ ९ ॥

एवं प्रतिज्ञायेतिहासं प्रस्तौति - **आसीदिति** । अत्रान्यापदेशमुखेनाध्यात्मोपदेशः क्रियते । ननु साक्षादेवाध्यात्मोपदेशः किं न क्रियते ? साक्षात्तदुपदेशेऽपि वैराग्योदय सम्भवात् ; उच्यते - देहात्माभिमानस्वतन्त्रात्माभिमान ग्रस्तस्य तत्त्वहितपुरुषार्थाद्यनभिज्ञस्य वैषयिक मेव सुखं परमं पुरुषार्थ मभिमन्यमानस्य हठात्तत्त्वोपदेशः क्रियमाणोऽपि न सुप्रतिष्ठितः स्या दित्यालोच्य चिरमभ्यस्तस्त्रीपुंनपुंसक गर्भजन्मजरामरण जाग्रत्स्वप्नसुषुप्त्याद्यात्मक संसार मनुवर्ण्य तत्र दोषानुद्धाट्य हेयताबुद्ध्युत्पादनद्वारा क्रियमाणस्तत्त्वोपदेशः सुप्रतिष्ठितः स्या दिति । तत्र जीवो राजत्वेन शरीरं पुरत्वेन परमात्मा सखित्वेन बुद्धि र्भार्यात्वेनेति[2] रूप्यते । तत्र पुरञ्जनादीन् स्वयमेवेतः पञ्चमाध्याये व्याख्यास्यति, तथाऽपि सुखग्रहणाय [3-]यथोपदेशात्[-3] किञ्चिद्व्याख्यास्यामः । तत्र हे राजन् ! पुरं [4]शरीरं व्यनक्ति जनयति निर्मापयतीति पुरञ्जनः। कश्चिद्राजा स्वकर्मभिः पुरस्स्थानीय शरीरोत्पादक जीवस्थानीयो विवक्षितः। आसी दित्यनेन [5]रूपणीये जीवेऽनादिसत्ता विवक्षिता । तं विशिनष्टि - [6-]बृहच्छ्रवाः[-6] बृहद्विस्तृतं श्रवः कीर्तिं र्यस्या ''निर्वाणमयमेवाऽयमात्मा'' (वि.पु.6-7-22) [7-]प्रजापतिवाक्ये[-7] ''अपहतपाप्मा विजरो विमृत्यु र्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः ॥'' (छा.उ.8-7-1) ''अच्छेद्योऽयमदाह्योऽय मक्लेद्योऽशोष्य एव च। नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥'' (भ.गी. 2-24) इत्यादिश्रुतिस्मृति प्रसिद्ध कल्याणगुण[8]गणविशिष्ट इत्यर्थः । तस्य पुरञ्जनस्य अविज्ञातं नामधेयं यस्य स तथाभूतः कश्चिद्विज्ञातचेष्टितः सखा आसीत् । अत्र परमात्मस्थानीयं मित्रं विवक्षितम् । परमात्मा हि जीवस्य मित्रं श्रूयते ''माता पिता भ्राता निवासः शरणं सुहृद्गति श्च नारायणः'', (सुबा. उ. 6-1) इति । एवं हिताचरणशीलं सखायं परमात्मानं तदाज्ञामतिलङ्घ्यायं [9]संसारी जीवः नामतोऽपि न जानाति । किमुत स्वरूपरूपगुणविभूतिभि रिति ख्यापनाय अविज्ञातनामेत्युक्तम् ।

1. W भेदेन 2. A, B, T °न च नि° 3--3. A, B, T omit 4. W omits शरीरं 5. A, B, T निरू° 6--6. A omits 7--7. W omits 8. W omits गण 9. W °रजीवः

यद्वा सखेत्यनेनाभिप्रेतं यद्दोषानवेक्षणेन हिताचरणशीलत्वं तत्स्थापयितु मविज्ञातनामेत्युक्तम् । अविज्ञात इति "गतिबुद्धि शब्दार्थेभ्यश्च" (अष्टा. 3-2-188) इति कर्तरिक्तः, अविज्ञातेत्यर्थः । "अविज्ञाता सहस्रांशुः, (विष्णुसहस्रनामस्तोत्रे) इत्यविज्ञातृशब्दो हि नामसहस्रे भगवन्नामतया विनियुक्तः । तत्र स्वाश्रितान् स्वसमत्वेन अनुसन्धाय तद्धितैषणपरोऽपारकारुण्यपरवश आश्रितदोषा न्न जानातीत्यविज्ञातेत्यभियुक्तैर्व्याख्यातम् । एवञ्च विपुलाप राधवत्त्वेऽपि संश्रयणमात्ररूप किञ्चिदानुकूल्येन रिरक्षिषु रित्यर्थः । इह तु अविज्ञातशब्दः कर्तृसाधनः क्तान्त इति विशेषः । अविज्ञातचेष्टित इति च्छेदे जीवेनाविज्ञातं चेष्टितमन्तः प्रविश्य नियमनादिरूपं यस्य स इत्यर्थः । कथा पक्षे तु अन्यै रविज्ञातचेष्टित इत्यर्थः । विज्ञात चेष्टित इति च्छेदे तु प्रसिद्धं जगद्व्यापाररूपं चेष्टितं यस्य सः । यद्वा, विज्ञातं चेष्टितं जीवप्रेरणादिलक्षणं यस्य सः । जीवपारतन्त्र्यस्य अनुभवसिद्धत्वादिति भावः । कथा पक्षे तु राजवत्सखाऽपि[1] विपुलकीर्तिरित्यर्थः ॥ १० ॥

**विज.** काम्यधर्ममयेषु गृहाश्रमेषु पुत्रादिरेवार्थ इति धीर्यस्य स तथा ॥ ६ ॥

यद्यपि कर्म ज्ञानोत्पत्तौ सहकारि, तथाऽपि कर्तु मसुशक मिति मत्वा निन्दति - भो भो इति । "यथावत्कर्मकर्तु स्तु ज्ञानसाहाय्यकारकम् । अन्यथा कुर्वतः कर्म निरयाय भविष्यति । तथाऽपि कर्म निन्दन्ति न यतः कर्तु मञ्जसा । शक्यं ज्ञानफलस्याऽपि बहुत्वा न्मोहनाय वा ॥ , (ब्रह्माण्डे) इति वचना न्निन्दनं युक्तम् । तस्मा त्कर्मविधानं च न व्यर्थ मिति तात्पर्यार्थः इति निरणायि । संज्ञापितान् हिंसितान् ॥ ७ ॥

सम्प्रति तेभ्य उपद्रवाभावेऽपि परत्रास्तीत्याह एते त्वा मिति । वैशसं शस्त्रेण छेदनं, सम्परेतं मृतम् अयोनिर्मिता आयुधविशेषाः कूटाः । "कूटोऽस्त्री मुञ्जमायाद्येष्व द्रिशृङ्गेषु भेदयोः" (वैज.को 6-5-13) इति यादवः ॥ ८ ॥

अत्र इममर्थ मितिहासेन बोधयिष्यामीत्याह -- अत्रेति । पुरे शरीरे अतति सततं विषयीकृत्य वर्तत इति, पुरातन मध्यात्मविषय मित्यर्थः । "अत-सातत्यगमने, इति धातुः । अन्यथा "इतिहासः पुरावृत्तम्" (वैज.को 2-4-38, अम.को 1-161) इति वाक्यात् पुनरुक्तं स्यात्, कर्माधिकृत्य वर्तत इत्यत्र उक्तं पुरञ्जनस्येति ॥ १ ॥

पुरञ्जनो नाम कः ? यमाश्रित्येयं कथा वर्तते । बृहच्छ्रवा इत्यनेन विशिष्टो जीवो भवतीत्युच्यते । अभिमानेन सर्वेषां जीवानां मुख्याभिमानी चतुर्मुखो ब्रह्मा, देवानां विशेषतः । अत्र पुरञ्जन स्तु जात्या क्षत्रियो मुक्तियोग्योऽसुरान् विना मनुष्यजीवाभिमानी,

---

[1] A, B, T कीर्त्यादियुक्तः इत्यर्थः ।

असुराणां कलिः। तत्र जीवसंसारज्ञप्त्यै श्रोतृणां पापपरिहाराय पुण्यवृद्धये च नारदेन पुरञ्जनस्य कथाप्रसङ्गोऽकारीति - तदुक्तं- ''देवजीवाभिमानी तु ब्रह्मैव तु चतुर्मुखः। मनुष्याणां तु जीवानामभिमानी पुरञ्जनः। स तु राजा हरेः पुत्रश्चासुराणां कलिः स्वयम्। जीवसंसृतिवत्तस्मात्पुरञ्जनकथाऽपि तु। तस्माज्जीवसृतिज्ञप्त्यै पुरञ्जनकथां मुनिः। नारदोऽश्रावय द्विद्वान् नृपं प्राचीनबर्हिषम्॥ प्रायस्तु तत्कथा जीवे स्थिता प्रत्येकशोऽपि तु। प्रत्येकं यत्तुयुज्येत तदुन्नेयं यथा तथा। उक्तं भगवतेऽप्येतत्पुराणे यावदिष्यते। प्रत्येकशस्तु जीवानां तदन्यत्तस्य केवलम्।,, (तन्त्रभागवते) इति। अतोऽत्र यथासम्भवं तत्तत्पदानि तत्तदर्थपरतया योज्यानीतितात्पर्यं ज्ञायते। पुरं स्वयोम्यानन्दपूर्तिं जनयिष्यति व्यक्तीकरिष्यतीति पुरञ्जनः। 'पु- पालनपूरणयोः,। अन्य स्तु कर्मभिः पुराणि शरीराणि चतुर्विधानि जनयतीति निर्वक्तव्यम्। ''आ चतुर्दशमाद्वर्षादित्यादेः, क्षत्रजातिज्ञापनाय राजेति। इतिहासत्वद्योतनायाऽऽसीदिति। तस्य पुरञ्जनस्य शरीरिणोऽपि नामरूपादिभिः स्वरूपं न ज्ञायत इत्यविज्ञातं नाम यस्येति सोऽविज्ञातनामा परमात्मा सखाऽऽसीदित्यन्वयः। ''द्वा सुपर्णा ,, (श्वेता. उ. 4-6 मुण्ड.उ. 3-1-1) इत्यादिश्रुतेः। अन्यस्तु प्रसिद्धः, तर्हि शून्य इत्यतो विज्ञातेति। विज्ञातं चेष्टितं जगत्सृष्ट्यादिलक्षणं यस्य स तथा। अन्यो नीतिशास्त्रप्रसिद्धव्यापारः॥१०॥

**सोऽन्वेषमाणः शरणं बभ्राम पृथिवीं प्रभुः।**
**नाऽनुरूपं यदाऽविन्ददभूत्स विमना इव॥ ११॥**

***न साधु मेने ताः सर्वा [1-]भूतले यावतीः[-1] पुरः।**
**कामान् कामयमानोऽसौ तस्य [2]तस्योपपत्तये॥ १२॥**

**स एकदा हिमवतो दक्षिणेष्वथ सानुषु।**
**ददर्श नवभि[3] र्द्वार्भिः[4] पुरं लक्षितलक्षणाम्[5]॥ १३॥**

**प्राकारापवनाट्टालपरिख[7] रक्षतोरणैः।**
**स्वर्ण[8]रौप्यायसैः शृङ्गैः सङ्कुलां सर्वतो गृहैः॥ १४॥**

**नीलस्फटिकवै[9]दूर्य मुक्तामरकतारुणैः।**
**क्लृप्तहर्म्यस्थलीं दीप्तां श्रिया भोगवतीमिव॥ १५॥**

---

* W प्रकाशने पूर्वार्धोत्तरार्धे व्यत्ययेन स्तः। 1--1. W यावत्यो भूतले 2. M, Ma तस्याभि° 3. M, Ma °द्वारैः 4. M, Ma पुरीं 5. W °णाम् 6. Ms °स्वाभिरलङ्कृताम् 7. M, Ma °रुच्च° 8. W रू° 9. Ms, T °दू°

**श्रीध. स इति** । शरणं भोगायतनं देहं पृथिवीं [1-] तदुपलक्षितं [-1] ब्रह्माण्डम् ॥ ११॥

**नेति** । यावत्यः पुरः ता स्तस्य [2] तस्य कामस्योपपत्तये [3] प्राप्त्यै [4] असौ साधु न मेने । गवादिदेहाना मैहिक पारलौकिक [5] भोगयोग्यत्वाभावात् । तथा च श्रुतिः - "ताभ्यो गामानयत्ता अब्रुव न्न वै नोऽयमलम्" (ऐत.उ 2-2) इति । "ताभ्योऽश्व मानय त्ता अब्रुव न्न वै नोऽय मलम्" (ऐत.उ. 2-2) इति ॥ १२ ॥

**स इति** । हिमवतो दक्षिणेषु सानुषु कर्मक्षेत्रे भारतवर्षे पुरं मनुष्यशरीरम् । लक्षितानि दृष्टानि सर्वाणि लक्षणानि यस्याम् । अन्धपङ्गुत्वादिदोषरहितामित्यर्थः ॥ १३ ॥

ता मनुवर्णयति - **प्राकारेति** त्रिभिः । अत्र [6] किञ्चित् किञ्चित्सादृश्य मवलम्ब्य कथासौन्दर्याय प्राकारादीनि वर्ण्यन्ते परिखैरिति । पुंस्त्व मार्षम् । अक्षाणि इन्द्रियाणि, गवक्षाः त्वगादयः शरीरावयवाः, प्राकारादि पुरावयवत्वेन निरूप्यन्ते । स्वर्णादि शृङ्गैः शिखरैर्युक्ता ये गृहा स्तैः सङ्कुलामिति । आधारादिचक्राणि गृहाः शृङ्गाणि च राजसादिस्वभावा विवक्षिताः ॥ १४ ॥

**नीलेति** । नीलादिभिः क्लृप्ता हर्म्यस्थली यस्याम् । अरुणं माणिक्यम्, स्थली हृदयम्, नाड्यो नीलादिभावेन निरूप्यन्ते तत्तद्विषयवासना वा । भोगवतीं नागानां पुरी मिव [7-] भोगसाधनभूता मिति [-7] वा ॥ १५ ॥

**वीर.** स पुरञ्जनः प्रभुः करणादिमत्वाच्छरणं भोगायतनं शरीरम् [8] कथापक्षे [9] निवासस्थान मन्वेषमाणः पृथिवीं कर्मफलोदय तद्भोगायतन प्रकृति परिणामरूपं ब्रह्माण्डं बभ्राम, देवादिस्थावरान्तशरीरेष्वनुप्रविष्टः प्रकृतिमण्डले समसरदित्यर्थः । कथापक्षे भूमण्डलस्य पुराण्यनुप्रविश्य तत्र [10] तत्र कञ्चित्कालं निवसन् कृत्स्नां पृथिवीं चचारेत्यर्थः । यदा च स्वस्यानुरूपं शरणं देवमनुष्यादिशरीरं नाविन्दत् नालभत, किन्तु तिर्यक्पादपादि शरीर मविन्दत् तदा विमना इव बभूव । पादपादिशरीरेषु चैतन्यानभिव्यक्ते र्विम ना [11] इवेत्युक्तनिश्चैतन्य इवाऽभूदित्यर्थः, न तु दुःखितमना इति देहात्माभिमानिनोजीवस्य निहीनशरीरस्याऽपि प्रीतिविषयत्वात् । कथापक्षे तु दुःखितमना [12] इवेत्यर्थः ॥ ११ ॥

कामान् भोग्यान् शब्दादीन् सर्वानपि कामयमानोऽसौ पुरञ्जनः तस्य तस्य शब्दादे र्विषयस्योपपत्तये लब्धये भूतले यावत्यः पुरः तास्सर्वाः पुरः साधु न मेने । शब्दादिसर्वविषयोपभोगोपयुक्तशरीराणि कामयमानः केषु चिच्छरीरेषु केषाञ्चिदिन्द्रियाणा मनभिव्यक्तत्वा दनभिव्यक्तकतिपयेन्द्रियशरीराण्यनुप्रविशन् तत्र सर्वविषयालाभात्तानि न साधुमेन इत्यर्थः । कथापक्षे तु तत्र [13] पुरि केषाञ्चिद्भोग्यवस्तूनां सत्त्वेऽपि सर्वेषा मभावा न्न साधु मेन इत्यर्थः ॥ १२ ॥

---

1--1. V omits 2. V omits तस्य 3. V प्राप्तये 4. V omits असौ 5. A, B, J, Va भो° 6. V omits किञ्चित् 7--7. B, J, V, Va omit 8. A, B, T add एकदा 9. A, B, T वास 10. A, B, T omit तत्र 11. W omits इव 12. W omits इव 13. W पुरे

[1]अथ एकदा सुकृतविशेषपरिपाकदशायां हिमवतो दक्षिणेषु सानुषु कर्म तत्फलोत्पत्तियोग्येषु कर्मक्षेत्रेषु भारतवर्षेषु इत्यर्थः, पुरं मनुष्यशरीरं लक्षितानि दृष्टानि सर्वाणि लक्षणानि यस्यां ताम् अन्धपङ्गुत्वादिदोषरहितामित्यर्थः । कथापक्षे वक्ष्यमाण प्राकारादिसर्वचिह्नोपयुक्तां नवभि र्द्वार्भिः नवभी रन्ध्रैः चक्षुर्द्वय श्रोत्रद्वय नासिका द्वय मुख पायूपस्थरूपै रुपलक्षितां, पक्षान्तरे स्पष्टम् । [2]ददर्श अभिव्यक्तसर्वेन्द्रिय सर्वविषयभोगोपयुक्तं मनुष्यशरीर मुपलब्धवानित्यर्थः ॥ १३ ॥

कानि लक्षणानि इति विवित्सायां तानि वदं स्तां पुरी मनुवर्णयति **प्राकारेत्यादि** त्रिभिः । यद्यप्यत्र प्राकारादिसाधर्म्येण रूपणीयाः पदार्थाः शरीरे न सन्ति, तथाऽपि किञ्चित् सादृश्य मवलम्ब्य कथासौन्दर्याय प्राकारादीन्यनुवर्ण्यन्ते । परिखैरिति पुंस्त्व मार्षम् । अन्यथा परवल्लिङ्गतायां परिखाभिरिति स्यात् । अक्षा गवाक्षाः, अत्र त्वगादयः प्राकारत्वेन रूप्यन्ते । रोमपंक्तिरूपवनम् । स्कन्धोपरिभागोऽट्टालः, रुधिरौघःपरिखा, नवरन्ध्राण्यक्षाः, अक्षि पक्ष्म तोरणं, स्वर्णादि शृङ्गैः शिखरैर्युक्ता ये ग्रहास्तैः सङ्कुलां व्याप्ताम्, अत्र मूलाधारादीनि षट्चक्राणि गृहत्वेन रूप्यन्ते । राज[3]सादि स्वभावाः शृङ्गत्वेन विवक्षिताः ॥ १४ ॥

नीलादिभिः क्लृप्ता हर्म्यस्थली यस्यां, हर्म्यस्थलीति हृदयं विवक्षितम् । हृदयगतैकशतनाड्यः केसरा वा नीलादिभावेन रूप्यन्ते । अत [4]एव नागाकार नाडीभिः व्याप्तत्वा द्भोगवतीं [5]नागानां पुरी मिव श्रिया दीप्ताम् ॥ १६ ॥

**विज.** स स्वर्गादिस्थाना दर्वाग्गतः कर्मणा शरणं सुखदुःखभोगयोग्यं शरीर मन्वेषमाणः पृथिवीं कर्मभूमिं बभ्राम । अन्यत्र पुरं प्रभवन्त्यस्मात्कर्माणीति प्रभुः, अन्यत्र परपापमर्दनसमर्थः अनुरूपं दुःखभोग मन्तरेण सुखभोग योग्यम्, अन्यत्र दुर्गादिलक्षणम् ॥ ११ ॥

यावती स्तिर्यगादिलक्षणाः पुरः शरीराणि । अभिपत्तये प्राप्त्यै "ताभ्यो गामानय त्ता अनुब्रुव न्न वैनोऽय मलम्" (ऐत.उ.2-2) इत्यादि श्रुतिः । अन्यत्र शत्रु साध्यत्वात् ॥ १२ ॥

एकदाऽभीप्सितशुभकर्म फलोदयसमये हिमवतो दक्षिणेषु सानुषु कर्मफल सम्भजन पटुषु । वन-षण सम्भक्तौ इति धातुः । भारतभूप्रदेशेषु प्रत्येकं यत्तु युज्येत तदुन्नेयम् यथा तथेत्युक्तत्वात् यथासम्भव मुन्नीयते । श्रोत्रादि नवद्वारै र्लक्षितलक्षणा मन्धपङ्गु बधिरत्वादि दुर्लक्षणशून्यां पुरीं पुरुषशरीरं ददर्श दृष्ट्वा प्राविश दित्यध्याहार्यम् । "ताभ्यः पुरुष मानयत् ता अब्रुवन् सुकृतं बत" (ऐत.उ. 2-3) इति श्रुतिः । अन्यत्र स्पष्टम् ॥ १३ ॥

---

1. A, B, T omit अथ 2. A, B, T रूपैर्ल॰ 3. A, B, T सत्त्वादि 4. A, B, T omit एव 5. A, B, T omit नागानां

पुरीमित्युपक्रान्तत्वा त्तदनुसारेण तद्वर्णनं क्रियते **प्राकारे**त्यादिना अध्यात्मान्तैः । शब्दाद्यै रस्थिनाड्यादयो यथाऽनुकूलं लक्षणीयाः । प्राकारो दुर्गभित्तिः, अट्टालो भित्त्यन्तर्भूप्रदेशः, परिखा दुर्गबहिः परितः खातनदी, स्वर्णादिभिः रचितैः शृङ्गैः शिखरैः, अन्यत्र सात्त्विक राजसतामसैः सङ्कुलाम् ॥ १४ ॥

नीलादिभि रिन्द्रनीलरत्नादिभिः क्लृप्ता विरचिता हर्म्यस्थल्यो यस्यां सा तथा तां भोगवतीं नागपुरीम् ॥ १५ ॥

**सभाचत्वररथ्याभि राक्रीडायतनापणैः ।**
**चैत्यध्वजपताकाभि र्युक्तां विद्रुमवेदिभिः ॥ १६ ॥**

**पुर्यास्तु बाह्योपवने दिव्यद्रुमलताकुले ।**
**नदद्विहङ्गालिकुल कोलाहल जलाशये ॥ १७ ॥**

**हिमनिर्झर विप्रुष्मत्कुसुमाऽऽकर[1] वायुना ।**
**चलत्प्रवालविटप[2] नलिनी तटसम्पदि ॥ १८ ॥**

**नानारण्यमृगव्रातै रनाबाधे मुनिव्रतैः ।**
**आहूतं मन्यते पान्थो यत्र कोकिलकूजितैः ॥ १९ ॥**

**यदृच्छयाऽऽगतां तत्र ददर्श प्रमदोत्तमाम् ।**
**भृत्यै र्दशभिरायान्ती मेकैकशतनायकैः ॥ २० ॥**

**श्रीध. सभाचत्वरेति** । सभा समाजस्थानम् । चत्वरं चतुष्पथः, रथ्या[3] राजमार्गः, आक्रीडायतनं द्यूतादिस्थानम्, आपणो हट्टः तैः[4], चैत्यं जनानां विश्रा मस्थानम्, ध्वजेषु पताकाः ताभिश्च युक्ताम् ॥ १६ ॥

अत्र च विषयनिष्ठ[5]बुद्धियोगेन जीवस्य देहसम्बन्ध इति विवक्षया विषयवर्गं बाह्योपवनत्वेन रूपयति[6] - **पुर्या** इति । तद्विशेषान् स्रक्चन्दनादीन् दिव्यद्रुमलतादिभा वेनेति[7] । शेषः कथालङ्कारः । बाह्योपवने प्रमदां ददर्शेति चतुर्थेनाऽन्वयः । [8-]दिव्यद्रुमैः लतादिभिश्च आकुले व्याप्ते[-8] नदतां विहङ्गालिकुलानां कोलाहलो नादो[9] येषु ते जलाशया यस्मिन् ॥ १८ ॥

1. W ⁰सार⁰ 2. M, Ma, Ms ⁰पि⁰ 3. V रथ्याः 4. V omits तैः 5. V युक्त 6. A, B, J, Va add नि⁰ 7. A. B. J, Va omit इति
8--8. A. B. J. Va omit 9. A, B, J, Va omit नादो

**हिमेति**। हिमनिर्झराणां[1] विप्रुषो बिन्दवः तद्वता कुसुमाकरसम्बन्धिना वायुना चलन्तः प्रवाला विटपाः शाखाश्च येषां तै र्वृक्षै र्नलिनीनां सरसीनां तटेषु सम्पत् समृद्धिः यस्मिन्॥ १८॥

**नानेति**। अनाबाधे [2-]आबाधा महती पीडा तत्कृतोपद्रवरहिते[-2] मुनिव्रतैः अहिंस्रैः। आत्मान माहूतं मन्यते यत्र॥ १९॥

तत्र प्रमदोत्तमां विषयविवेकवर्तीं बुद्धिं ददर्श। यदृच्छयाऽऽगतामिति तयोः सम्बन्धस्य दुर्निरूप्यत्वं दर्शयति। ता मनुवर्णयति - **यदृच्छयेति**। सार्धैश्चतुर्भिः। दशभि र्ज्ञानकर्मेन्द्रियैः एकैकं प्रत्येकं शत मनन्ता वृत्तयः तासां नायकैः पतिभि स्सह। पाठान्तरे नायिकाः स्त्रियो येषां तैः॥ २०॥

**वीर.** सभा समाजस्थानं, चत्वरं चतुष्पथः, रथ्या राजमार्गः, आक्रीडायतनं द्यूतादिस्थानम्, आपणो हट्टः, चैत्यं जनानां विश्रमस्थानं[3], ध्वजेषु पताकाः ताभि र्विद्रुमवेदिकाभिश्च युक्ताम्। अत्र हर्म्यस्थलीत्वेन रूपित मेव हृदयं पुनः[4] सभाचत्वर क्रीडायतनगुणयोगात् सभादिभावेन रूप्यते। "हृदि ह्यय मात्मा प्रतिष्ठितः" इति जीवस्य हृदयस्थानत्वश्रवणात् जीवाश्रितत्वाच्चेन्द्रियप्राणानां सर्वेन्द्रियकन्दर[5]रूपत्वात् हृदयस्य सभारूपत्वा त्तत एव च्चत्वररूपत्व मपि, परमात्मनः क्रीडास्थानत्वात् क्रीडायतनं च, चक्षुरादीन्द्रियस्थानानि हट्टः। तेभ्यो हि शब्दादीन्या कृष्या नुभवति पुरञ्जनः। सुषुम्णा रथ्या, राजव द्गच्छतो जीवस्य मुक्तिमार्गत्वात् सुषुम्णायाः पुरीतत् चैत्यं, जीवस्य सुषुप्तौ विश्रमस्थानत्वात्[6] आधारादिचक्रस्थाः कर्णिकाः विद्रुमवेदिकाः ध्वजपताकाः करतल पादतलानि॥ १६॥

एवं देहं पुरभावेन रूपयित्वा विषयवर्गं देहानुबन्धि कलत्रापत्यादिवर्गं बाह्योपवनत्वेन रूपयति - **पुर्या** इति। बाह्योपवने प्रमदां ददर्शेति चतुर्थेनाऽन्वयः। दिव्य द्रुमाश्लिष्ट लताभि राकुले नदतां विहङ्गकुलानां अळिकु लानां च कोलाहलो येषु ते जलाशया यस्मिन् तस्मिन्॥ १७॥

हिमनिर्झराणां विप्रुषः बिन्दवः तद्वता कुसुमा करसम्बन्धिना वायुना चलन्तः प्रवालविटपाः शाखा येषां तैः द्रुमैः नलिनीनां[7] तटेषु सम्पत् समृद्धिर्यस्मिन्॥ १८॥

नानाविधै र्वन्यमृगसमूहै रनाबाधे तत्कृतबाधा रहिते, तत्र हेतुः मुनिव्रतै रहिंस्रै र्यत्रोपवने कोकिलकूजितैः पान्थः स्वत्मान माहूत मिव मन्यते। एवं विषयवर्गो बाह्यो पवनत्वेन रूपितः, तस्य शरीरा द्बहिष्ठत्वात् कोलाहलशब्देन शब्दस्य, कुसुमाकर

---

1. V °रवि° 2--2. B, J, V, Va तत्कृतबाधारहिते 3. A, B, T °श्रा° 4. A, B, T omit पुनः 5. A, B, T कन्दरू° 6. A, B °श्रा°
7. A, B, T °नीत°

वायुशब्दाभ्यां गन्धस्पर्शयोः, चलप्रवालेति सौन्दर्यकथनेन रूपस्य जलाशय हिमनिर्झर नलिनीशब्दै रसस्य च प्रत्यभिज्ञानाच्च तद्विशेषाः स्रक्चन्दनादयो दिव्य लतादिभावेन रूप्यन्ते। यद्वा, देहानुबन्धिवर्गोऽत्र बाह्योप वनत्वेन रूप्यते। तत्र संसारी पुमान् द्रुमः, द्रुमवत्तद्भाव विकारात्मक देहसंसृष्टत्वात् तमाश्रिताः स्त्रियो लताः द्रुमस्य लता इति षष्ठीसमासः, तदाश्रिता न्यपत्यानि विहङ्गकुलं, योषि त्संगिनोऽलिकुल मपत्यादीनां मधुरालापाः कोलाहलः, वापीकुल्या तटाकादीन्याजीविकादिरूपाणि जलाशय हिमनिर्झरनलिन्यादिरूपेण रूप्यन्ते। कुसुमाकरशब्देन पुष्पवाटिकादीनि विवक्षितानि। चल त्प्रवालविटपे त्याम्र पनसादि फलजाति वृक्षाः विवक्षिताः। आरण्यक मृगव्रातै रित्यनेन श्याल श्वशुरादयो बान्धवा विवक्षिताः। ते ह्यारण्यकमृगवत्प्राणतुल्य धनापहारिणः, धनापहारित्व मपि तेषां न हिंसया, किन्तु सान्त्वनेनेति द्योतयितुं मुनिव्रतै रिति विशेषणम्। यत्र यस्मिन्नेवम्भूते बाह्योपवने कोकिल कूजित तुल्य कलत्रापत्यादिमधुरोक्तिभिः पान्थः निवृत्तिमार्गनिष्ठोऽपि स्वात्मान माहूत मिव देहानुबन्धिवर्गे आसक्तिं प्रापित मिव मन्यते॥ १९॥

तत्रोपवने आसक्तां बुद्धिं यदृच्छयोपगतां ददर्श। यद्यप्यत्र जीवस्य बुद्ध्या सह सम्बन्धदशायां बुद्धे र्बाह्योपवन रूप देहानुबन्धिवर्गसम्बन्धाभावेन बुद्धेः तदासक्ति र्नाऽस्ति। तथाऽपि भविष्यद्देहानुबन्धिवर्गासक्त्यभिप्रायेण कथासौन्दर्यायैवं वर्णित मित्यवगन्तव्यम्। यदृच्छयाऽऽगता मित्यनेन जीवबुद्ध्योः सम्बन्धो न स्वसङ्कल्पकृतः, किन्तु दैवकृत इति सूच्यते। या प्राकारादियुक्ता पुरी, यस्याः पुर्याः बाह्योपवने कोकिलकूजितैः पान्थः आत्मान माहूतं मन्यते, तां यदृच्छयाऽऽगतां पुरीं तत्रोपवने प्रमदां च ददर्शेति वाऽन्वयप्रकारः। अस्मिन्पक्षे मानुषदेहस्य दुर्लभत्वं सूचितं, कथा पक्षे तु स्पष्टोऽर्थः। प्रमदोत्तमां विशिनष्टि दशभिः ज्ञानकर्मेन्द्रियै रेकैकं [1] प्रत्येकं शत मनन्ता वृत्तयः तासां नायकैः पतिभिः भृत्यैः सहऽऽयान्ती मभि[2]मुखं गच्छन्तीम्॥ २०॥

**विज.** आक्रीडा क्रीडाभूमिः, आपणः क्रयस्थानं, चैत्यं वन्दनशाला। "वेदिः परिष्कृता भूमिः" (अम.को. 2-41) इत्यमरः॥ १६॥

स राजा विषयलक्षण ब्राह्योद्याने स्थितः तत्र यदृच्छयाऽऽगतां प्रमदोत्तमां ददर्शेति चतुर्थश्लोकेनाऽऽन्वयः॥ १७॥

हिमनिर्झराणां शीतलतुङ्गस्थलपतज्जलधाराणां विप्रुष्मता तोयबिन्दुमता कुसुमाकर सौरभवता वायुना चलन्तः प्रवाला येषु ते तथा ते च विटपिनः चलत्प्रवालविटपिनः। तैर्युक्तानां नलिनीतटानां पद्माकरतीराणां सम्पदो यस्मिं स्तत्तथा तस्मिन्॥ १८॥

"आबाधा महती पीडा" (हला.को. 2-4) इत्यभि धान मनाबाधे उपद्रवरहिते कोकिलकूजितानां मात्राविशेषै रेहि आविशेत्याहूत मात्मानं निरूपयति। अन्यत्र प्राकारो देहचर्म, उपवनं रोमादि, अट्टालं तन्मध्ये मेदोवसादि, परिखा मांसबहिस्त्वक्,

1. A, B, T omit प्रत्येकं 2. A, B, T omits मुखं

तोरणस्थानीयो बाहुः अङ्गुल्यः पताकाः पार्श्वद्वयस्थो ध्र्वमुखवंशस्यास्थि वा तोरणं शृङ्गं शृङ्गस्थानीयं कर्णादि गुहाः उदरादिप्रदेशाः, नीलवैदूर्याद्यै स्तोरणविशेषैः समलङ्कृतं हर्म्यस्थलीस्थानीयं चर्मादि, भोगसाधनत्वा द्भोगवती सभा हृदयं सर्वदेवानां निवासस्थानीयत्वात्, चत्वरं नाडीसन्धिः रथ्या ब्रह्मनाडी, आक्रीडा हस्तः, आयतनानि इन्द्रियगोलकानि आपणो वाक्, चैत्यं मस्तकं, ध्वजः केशपाशः, विद्रुमवेदी रत्नाद्यलंकृत कटिप्रदेशः। बाह्योपवनं देहबाह्यविषयोद्यानं, तस्य रमणीयतां वर्णयति दिव्येत्यादिना। वक्त्राद्यध्यात्मार्थो वर्णनीयः बाह्येत्युक्तत्वात्। प्रकर्षेण मदयन्तीति प्रमदाः वैषयिक्यो बुद्धयस्तासां मध्ये उत्कृष्टं तमः स्थानं पुरुषाणां यस्या स्सा प्रमदोत्तमा प्रधानेत्युक्ते आत्मानात्म विवेकविचक्षणा बुद्धिरित्यर्थः स्यात्, स चानुपपन्नः। तां बुद्धिं विहाय बैषयिकीं बुद्धिं प्राप्य मुग्धोऽभूदित्यर्थः अन्यथाप्रतीत एव। कीदृशीम् ? दशभि र्भृत्यैः ज्ञानकर्मेन्द्रियसंज्ञैः सह आगच्छन्तीमिति च। कीदृशाः एकैकस्य शतमित्यनन्ता अनन्ता या वृत्तयः तासां नायकाश्च केचन वृत्तिविशेषास्तै र्युक्तैः ॥ १९, २० ॥

***तेषां परिबृढो राजन् सर्वेषां बलि मुद्वहन्।**
**सस्त्रीकाणां सखा तस्या बहुरूपोऽग्रणीः स्त्रियः ॥**

**पञ्चशीर्षाहिना गुप्तां प्रतीहारेण[1] सर्वतः।**
**अन्वेषमाणामृषभ मप्रौढां कामरूपिणीम् ॥ २१ ॥**

**सुनासां सुदतीं बालां सुकपोलां[2] वराननाम्।**
**समविन्यस्त कर्णाभ्यां बिभ्रतीं कुण्डलश्रियम् ॥ २२ ॥**

**पिशङ्गनीवीं सुश्रोणीं श्यामां कनकमेखलाम्।**
**पद्भ्यां क्वणद्भ्यां चलतीं[3] नूपुरै र्देवता मिव ॥ २३ ॥**

**स्तनौ व्यञ्जितकैशोरौ समवृत्तौ निरन्तरौ।**
**वस्त्रान्तेन निगूहन्ती व्रीडया गजगामिनीम् ॥ २४ ॥**

**ता माह ललितं[4] वीरः सव्रीडस्मित शोभनाम्[5]।**
**स्निग्धेनाऽपाङ्गपुङ्खेन स्पृष्टः प्रेमोद्भ्रमद्भ्रुवा[6] ॥ २५ ॥**

---

* This additional verse is found in M, Ma, Ms and the commentary on the same is found in its proper place.

1. V ०ति० 2. Ms, V ०ल० 3. A, B, G, I, J, T चलन्तीं 4. M, Ma, Ms ०तां 5. M, Ma, Ms ०नीम् 6. M, Ma प्रेमभ्रमद्भ्र०; V प्रेम्णा भ्रमद्भ्रु०

**श्रीध. पञ्चशीर्षेति**। पञ्च शीर्षाणि वृत्तयो यस्य तेनाहिना प्राणेन प्रतीहारेण[1] पालकेन गुप्तां[2] रक्षिताम्। ऋषभं भर्तारम्, [3]अप्रौढां षोडशवार्षिकीम्॥ २१॥

गन्धज्ञानादिभिः[4] पृथ्व्यवयवैः सुनासत्वादि[5] रूप्यते - **सुनासा** मिति। समं विन्यस्तौ रचितौ कर्णौ ताभ्यां [6-]कुण्डलश्रियं[-6] कुण्डलशोभां दधतीम्॥ २२॥

**पिशङ्गेति**। [7-]पिशङ्गनीवीं पीतवस्त्राम्[-7]। "अन्न मयं हि सौम्य ! मनः इति यत्कृष्णं तदन्नस्य" (छान्द.उ. 6-5-4) इत्यादिश्रुत्यनुसारेण श्यामा मित्युक्तम्। नूपुरैः क्वणद्भ्याम्। नूपुरै रिति पादाङ्गुलीयकाना मप्युपलक्षणा द्बहुवचनम्॥ २३॥

**स्तनाविति**। व्यञ्जितं कैशोरं यौवनोपक्रमो याभ्यां तौ। समौ च वृत्तौ च, [8-]वस्त्रान्तेन[-8] निगूहन्तीम्॥ 24॥

**तामिति**। तामाहेति तयोः संवादोक्तिः सम्बन्धदार्ढ्याय। अपाङ्ग एव पुङ्खो मूलप्रान्तो यस्य कटाक्ष[9]रूपस्य बाणस्य तेन स्पृष्टो विद्धः प्रेम्णा उच्चै र्भ्रमन्ती भ्रूः धनु स्स्थानीया यस्मिं स्तेन॥ २५॥

**वीर.** पञ्च शीर्षाणि[10] वृत्तयो यस्य तेन अहिना प्राणेन प्रतिहारेण पालकेन, अहे र्वायु भक्ष्यत्वेन तत्प्रचु रत्वा दहिने त्युक्तम्, सर्वतो गुप्तां रक्षितां सर्वेषा मिन्द्रियाणां प्राणाधीनवृत्तित्वा दहिना गुप्ता मित्युक्तम्। ऋषभं पतिम् अन्वेषमाणाम्, अनेन चेतनैकधार्यत्वं तत्प्रवर्त्यत्वञ्च विवक्षितम्। अप्रौढा मिति बुद्धे श्चेतनेन सह सम्बन्धदशायां अप्रौढप्रम देव कार्याक्षमत्वेऽपि तद्योग्यताऽस्तीति सूचयति। कामरूपिणी मित्यनेन गन्धरसादिज्ञान भेदभिन्नतां सूचयति॥ २१॥

तदेव प्रपञ्चयति - **सुनासामिति**। बुद्धिवृत्तयो हि गन्धरसादिज्ञानभेदेन तदवान्तरभेदेन च बहुविधाः ताभि र्बुद्धिवृत्तिभि स्तस्याः सुनासत्वादि[11] रूप्यते। सुनासां शोभना नासा गन्धात्मिका घ्राणेन्द्रियवृत्तिः यस्या स्तां, एव मग्रेऽपि। दन्तकपोलानन श्रोणिपादस्तनादि [12-]व्यापार जन्यहर्षादीना मपि बुद्धिवृत्तित्वा त्ताभिः सुदन्तत्वादि रूपणं क्रियते। नासिका दन्तकपोलानन कर श्रोणि पादस्तनादि[-12] विशेषणभूतानां शोभनत्व समविन्यस्तत्वादीना मपि स्वविशेष्यभूतनासिकादे र्गन्धादिवृत्तिद्वारा बुद्धिविशेषणत्वं द्रष्टव्यम्। समं विन्यस्तौ रचितौ कर्णौ ताभ्यां कुण्डलशोभां दधतीम्। "अन्नमयं हि सौम्य ! मनः" (छान्द.उ. 6-5-4) इति "यत्कृष्णं तदन्नस्य" इत्यादि श्रुत्यनुसारेण श्यामा मित्यक्तम्। कुण्डलश्रीसम्बन्धः कुण्डलालङ्कृत कर्णाधिकरण श्रोत्रेन्द्रिय श्रवणवृत्तिद्वारा॥ २२॥

---

1. V °ति° 2. B, J, V, Va oit रक्षिताम् 3--3. V omits 4. A, B, J, Va बुध्य° 5. A, B, J, Va add नि 6--6. B, J, V, Va omit 7--7. A, B, J, Va omit 8--8. A, B, J, Va omit 9. B, J, V, Va omit रूप 10. A, B, T add पञ्च 11. B, W °न° 12--12. T omits

एवं पिशङ्गनीवी कनकमेखलासम्बन्धोऽपि स्तननाभि नितम्ब व्यापारजन्य हर्षादिवृत्तिद्वारेति द्रष्टव्यम्। नूपुरैः क्वणद्भ्यां पद्भ्यां -चलन्तीं नूपुरगमनसम्बन्धोऽपि पादेन्द्रियवृत्तिद्वारा, कथापक्षे स्पष्टम्। नूपुरै रिति बहुवचनं पादाङ्गुलीयकाना मुपलक्षण मन्यथा नूपुराभ्या मिति श्रूयेत॥ २३॥

व्यञ्जितं कैशोरं यौवनोपक्रमो याभ्यां समौ च तौ वृत्तौ च निर्गतावन्तरात् संश्लिष्टा वित्यर्थः। स्तनौ व्रीडया लज्जया वस्त्रान्तेन निगूहन्तीं [1]छादयन्तीं[1] गज इव गच्छतीति गजगामिनी ताम्॥ २४॥

व्रीडया सहितं यत् स्मितं तेन, शोभनां सुन्दरां प्रति वीरः पुरञ्जनः प्रेम्णोच्चै र्भ्रमन्त्यौ भ्रुवौ यस्मिंस्तेन स्निग्धेन, अपाङ्गः एव पुङ्खो मूलप्रान्तो यस्य कटाक्षबाणस्य तेन स्पृष्टो विद्धः सललितं यथा तथा आह। तयोः संवादोक्तिः संबन्धदार्ढ्यायेति ज्ञातव्यम्॥ २५॥

**विज.** अत्र पुरञ्जनस्य ये भृत्या याश्च भार्याद्या स्ते सर्वेऽपि मानुषेन्द्रियाभिमानिनः। गायत्र्याद्या देहिन्द्रिय तद्वृत्तीना मभिमानिन्य इति। तदुक्तम् - "ये पुरञ्जन भृत्याद्या भार्याद्याः सर्व एव च। तेऽपि मानुषबुद्ध्यादे र्विज्ञेया अभिमानिनः। गाय त्र्याद्या स्तु देवानां तेऽपि चैतेषु संस्थिताः। अलक्ष्मीद्वापराद्या स्तु आसुरा स्तेऽपि मानुषाः॥" (तन्त्रभागवते) इति। तेषां सर्वेषां परिबृढो मनोनामा जीवो वा तत्तद्विषयवैचित्र्य मपेक्ष्य मनसो बहुरूपत्वं जीवस्य तु योनीनां वैचित्र्यात्॥

पञ्चशीर्षाहिना प्राणादिपञ्चवृत्त्याख्यशिरसा मुख्यप्राणाख्य सर्पेण प्रतीहारेण द्वारपालकवद्वर्तमानेन ऋषभं पतिं स्वकृत्यनु कूलवृत्तिलक्षणं पुरुष मित्यर्थः, अत एवाप्रौढा मनूढा मपरि गृहीतपाणि मिव स्थिता मित्यर्थः, कामरूपिणीं विषयवैचित्र्या त्तत्तदाकारानुमिताऽऽकाराम्॥ २१॥

उन्नताभिमानलक्षणनासिकां सुदतीं विषयवृत्तिलक्षण दन्तां, बालां सुकुमारवृत्तिं बाह्याभ्यन्तरवृत्ति लक्षणाभ्यां शोभनाभ्यां वरं वरणीय माननं चेष्टा यस्या स्सा तथा ताम्। 'मन चेष्टायाम्, इति धातुः, समं यथा तथा विन्यस्ताभ्यां कल्पिताभ्यां बाह्यान्तः करणविशेषाभ्यां सङ्कल्पविकल्पभेदेन द्वाभ्यां मनोरूपाभ्यां कुण्डलश्रियं विषयेषु परिवर्तनश्रियं बिभ्रतीं वर्तयन्तीम्॥ २२॥

पिशङ्गा विषयोपरक्ता नीवी आच्छादनवृत्ति र्यस्याः सा तथा तां सुश्रोणीं सुष्ठ्वाश्रयवृत्तिमतीं श्यामां तमोगुणप्रचुरां, कनकमेखलां रजोगुणलक्षणसुवर्णकाञ्चीं पद्भ्यां रज स्तमोविकृतवृत्तिविशेषाभ्यां, नूपुरैः शिशुकलभाषणलक्षणैः क्वणद्भ्या मित्यादिप्रयोगात् लक्षणावृत्त्या ऊहनीयाः, न वाच्यवृत्त्या। क्वचि च्चानयेति क्वचित् सद्वृत्तिविषयत्वात् देवता मिवेति॥ २३॥

---

1--1. W omits

व्यञ्जितकैशोरौ अभिव्यञ्जितमध्यमावस्थौ "मध्यमां बुद्धिसंस्थाम्" इत्युक्तेः। "ध्वन-स्तन" शब्दे इति धातोः स्तनौ शब्दौ समवृत्तौ वर्णवृत्तलक्षणोपेतौ निरन्तरं एकस्मिन्नेव वृत्ते विद्यमानौ गुरुलघुभेदरहितौ इत्यर्थः। व्रीडया वृत्तिविशेषेण वस्त्रान्तेन 'वस-आच्छादने' इतिधातोः आच्छादनशीलवृत्तिभागेन निगूहन्तीम् अनभिव्यक्तिं कुर्वाणां गजगामिनीं गजवत् ऊर्ध्वमूलाधारात् आयान्तीं बुद्धिम्॥ २४॥

**ता माहेति**। स्वकार्यविषये प्रवर्तयितुम् अभिमुखीचकार। वीरो विशिष्टप्राणबलोपेतः सव्रीडस्मितशोभिनीं स्वकार्याभिमुखीम्। अपाङ्ग प्रेमेत्यादिनाऽपि तत्तद्योगवृत्तिविशेषं लक्षयति। प्रेम्णा भ्रमन्ती भ्रूः प्रेमभ्रमद्भ्रूः तया॥ २५॥

**का त्वं कञ्जपलाशाक्षि कस्यासीह कुतः सति।**
**इमा मुपपुरीं भीरु *किं चिकीर्षसि शंस मे॥ २६॥**

**क एतेऽनुपथा ये त एकादश महाभटाः।**
**एता वा ललनाः [1]सुभ्रु कोऽयं तेऽहिः पुरस्सरः॥ २७॥**

**त्वं ह्री र्भवान्यस्यथ वा ग्रमा पतिं विचिन्वती किं मुनिवद्रहो वने।**
**[2]त्वद[3]ङ्घ्रि कामाप्त समस्त [4]कामं क्व पद्मकोशः पतितः कराग्रात्॥ २८॥**

**नासां वरोर्वन्यत[5]माऽसि भूस्पृक् पुरी मिमां वीरवरेण साकम्।**
**अर्हस्यलङ्कर्तु मदभ्रकर्मणा लोकं परं श्रीरिव यज्ञ पुंसा॥ २९॥**

**यदेष मा पाङ्गविखण्डितेन्द्रियं सव्रीडभा[6]वस्मित विभ्र[7]मभ्रुवा।**
**[8]तवोपसृष्टो भगवान्मनोभवः प्रबाधतेऽथानुगृहाण शोभने॥ ३०॥**

**श्रीध. केति**। कुतः स्थानात् इहाऽऽगतासि। हेसति! पुर्याः समीपस्था उपपुरी भूः ता मालक्ष्य किंकर्तुमिच्छसीत्यर्थः॥ २६॥

**क इति**। ते तव येऽनुपथा अनुवर्तिन एते के ? एकादशो महान् भटो बृहद्बलत्वेन वक्ष्यमाणो येषु दशसु ते। बुद्धे र्मनसः पृथगुपादानं, बुद्धिपरिचारकेन्द्रियसहायतया तत्परिचारकत्वविवक्षया, [9-]एता ललनाः इन्द्रियवृत्तयः[-9]॥ २७॥

---

* The patern beginning with किं चिकीर्षसि (V in 26) ending with महाभाजयोऽ (V in 42) is missing in Ms Edition.

1. Ms शुभ्रूः 2. W य° 3. M, Ma साम्याप्त 4. M, Ma कामः 5. A, B, G, I, J, M, T °मा भुविस्पृक्; Ma °मा भुवित्वं; W मा भुवस्पृक्
6. M, Ma हारेक्षण वि° 7. A, B, G, I, J, T °मद्भुवा; M, Ma °मद्भुवः 8. A, B, G, I, J, T, V त्वयोप° 9--9. A, B, J, Va omit

त्वमिति। त्वं ह्रीः किं पतिं धर्मं विचिन्वती ? अथवा[1] भवानी पतिं शिवं विचिन्वती ? अथवा किं[2] वाक् सरस्वती पतिं ब्रह्माणम् ? किं रमा लक्ष्मीः[3] वा[4] पतिं विष्णुं मुनि रिव संयता सती। [5-]कथम्भूतं पतिं[-5] ? त्वदङ्घ्रिकामेनैव त्वत्कृतया त्वदङ्घ्रिकामनयैव प्राप्ताः समस्ताः कामा येन तम्॥ २८॥

**नेति**। हे वरोरु ! आसां [6-]ह्रीप्रभृतीनां[-6] मध्ये त्वमन्यतमा नाऽसि न भवसि[7] यतो भुविस्पृक्। न हि देवता भुवं स्पृशन्ति। वीरवरेण मया। [8-]ननु त्व मकर्मा कथं त्वया सह अलङ्करोमीति चेत्तत्राह - अदभ्र मनल्पं कर्म त्वत्सङ्गात् यस्य मम तेन स्वतोऽकर्मत्वेन त्वत्सङ्गात् सकर्मा भवामीत्यर्थः[-8]। परं वैकुण्ठम्॥ २९॥

**यदिति**। यत् यस्मात् तव अपाङ्गेन विखण्डितमिन्द्रियं मनो यस्य तं, मा[9] मां मनोभवो बाधते अत तस्मात् अनुगृहाण सव्रीडं यद्भावेन प्रेम्णा स्मितं तेन विभ्रमन्ती या भ्रूः तया उपसृष्टः प्रेरितः॥ ३०॥

**वीर.** हे पद्मदललोचने ! का त्वं ? किंजातीयकेति प्रश्नः कस्य सम्बन्धिनी पुत्री असि ? कुतः स्थाना दिह आगतासि ? हे सति ! इमा मुपपुरीम् अस्याः पुर्याः समीपे किं कर्तु मिच्छसि ?॥ २६॥

एतेऽनुपथा अनुवर्तिनः, क एते एकादश महाभटाः बुद्धिमनसो वृत्ति कृत[10] मेव भेदं आश्रित्य मनसा सह इन्द्रियाणां एकादशत्वात् एकादशो महाभटो मनोरूपो येषां ते। क एत इत्युक्तम्। हे सुभ्रु[11] ! एता ललनाः का इति वृत्त्यभिप्रायेण प्रश्नः, तासां आनन्त्यात् एता इति निस्संङ्ख्याको निर्देशः। पुरस्सरति गच्छतीति पुरस्सरोऽहिः सर्पः कः ? प्राणे व्याप्रियमाणे तदनु सर्वेन्द्रिय व्यापारात् पुरस्सर इत्युक्तम्। बुद्धिस्वरूप तत्कारण तत्सम्बन्धकारण तत्कार्य विवित्सु प्राचीनबर्हिरादि लोकाभिप्रायकं कात्वमिति प्रश्नकथनम्। [12-]ज्ञानकर्मोभयेन्द्रियाणां प्रवृत्तिः बुद्ध्यायत्ता उत स्वत इति संशयं निरास चिकीर्षाभिप्रायकम्। क एते अनुपथा इति प्रश्नकथनम्[-12]। बुद्धिरपि प्राणायत्तप्रवृत्ति ख्यापनाय कोऽयं तेऽहिः पुरस्सर इति प्रश्नोक्तिः॥ २७॥

**त्वं ह्रीरिति**। यस्याः तवाङ्घ्रिकामनयैव आप्ताः समस्ताः कामा यस्य तं पतिं मुनिवद्वने रहः एकान्ते विचिन्वती, त्वं वराहं विचिन्वती ह्रीः भूमिः, उत शङ्करं विचिन्वती भवानी, आहोस्वित् ब्रह्माणं विचिन्वती वाक् सरस्वती, अथवा विष्णुं विचिन्वती रमालक्ष्मी असि[13] ! यदि रमा तर्हि पद्मकोशः कराग्रात् क्व पतितः ? कराग्रे पद्मकोशाभावात् न रमेत्यर्थः। एवं रमादिरूपेण उत्प्रेक्षोक्तिः रमादीनां विष्ण्वादिभिरिव अनादिदृढतर सम्बन्ध ख्यापनाय कथासौन्दर्याय वा। एव मग्रेऽपि, अनुपयुक्तं कथासौन्दर्ययि[14]ति द्रष्टव्यम्॥ २८॥

---

1. V omit अथवा 2. A, B, J, Va omit किं 3. B, J, V, Va omit लक्ष्मीः 4. A, B, J, Va omit वा 5--5. V omits 6--6. B, J, V, Va omit 7. A, B, J. Va add सम् 8--8. V omits 9. A, B, J, Va omit मा 10. A, B, T कृतभेदं 11. B सुभ्रूः ! 12--12. T omits 13. W omits असि 14. W तत्सौ°

एवं ह्याद्यन्यतमत्वेन सम्भाव्य आसां मध्ये काऽपि त्वं[1] न भवसि इत्याह - **नेति**। हे वरोरु ! आसां ह्री भवानीवाग्रमाणां मध्ये अन्यतमा नाऽसि न भवसि। तत्र हेतुः [2-]यतस्त्वं[-2] [3-]भूस्पृक्[-3] भुवं स्पृशतीति भूस्पृक्। नहि रमादीनां अन्यतमा देवता भुवं स्पृशतीति भूस्पृक्। नहि रमादीनां अन्यतमा देवता भुवं स्पृशतीति भावः। [4-]अतो मत्प्रार्थितं कुर्वि[-4]त्याह - अर्हसीति। अदभ्रकर्मणा अनल्पकर्मणा वीरवरेण [5-]वीरश्रेष्ठेन[-5] मया साकं सह इमां पुरीं नवमुखीं अलङ्कर्तुं [6-]शोभयितुम्[-6] अर्हसि। परं लोकं वैकुण्ठं यज्ञपुंसा विष्णुना सह श्रीः लक्ष्मी रिव [7-]मया सह पुरीं प्रविश्य सुखमनुभवेत्यर्थः[-7] ॥ २९ ॥

यत् यस्मात् तव अपाङ्गेन विखण्डितम् इन्द्रियं मनो यस्य तं, मां सव्रीडं यद्भावेन प्रेम्णा स्मितं तेन विभ्रमा या भ्रूः तयोपसृष्टः [8]प्रेरितः एष मनोभवः कामः प्रबाधते। अथ [9]अतः अनुगृहाण हे शोभने ! ॥ ३० ॥

**विज.** 'का त्वं, इत्यादि लोकानुकारवचनं, भ्रान्त्या प्रलापो वा, उपपुरी मित्यनेन ज्ञायते। अन्यथोपपुरीति ह्रस्वत्वेन प्रयोगः स्यात्। देहसमीपे वर्तमानाम् ॥ २६ ॥

अनुपथाः स्वमार्गमनुवर्तमाना ये इमे मनसा सह एकादश भटा एते 'लल-विलासे, इति धातोः ललना विलासो पेता वृत्तिविशेषाः। 'हि - गतौ, इति धातोः अहि रगतः सह व्रजः, पुरःसरो नासिकारन्ध्रचरः श्वासः ॥ २७ ॥

त्वं ह्रीः इत्यादिक मनुकरणम्। लज्जावृत्तिविशिष्टत्वात् ह्रीः। सङ्कल्पवृत्त्या भवानीति, वचनवृत्त्या वाक्, रमणवृत्त्या रमा पतिं देहस्वामिनं, वने देहलक्षणे वासनावने, मुनिवत् मनोवत् त्वदंघ्रिसाम्येन आप्ताः समस्ताः कामा येन सः तथा। 'अघि रघि लघि-गत्यर्थाः, इति धातोः यथा अङ्घ्रो र्गतिसाधनत्वं तथा मनसोऽपि, मनसा सङ्कल्प्य पुरुषस्य विषयोपगमनात्। पद्मकोशः कन्दुकलक्षणं मनः, कराग्रात् वृत्तिविशेषात् पतितो गतः क्व? कां वृत्तिं उपगत इति, बाह्यार्थः स्पष्टः ॥ २८ ॥

हे वरोरू ! यदित्त्वं आसां ह्रीमुखानां वृत्ति विशेणाणा मन्यतमा वृत्ति विशिष्टा नासि। किन्तु स्थिरवृत्तिविशिष्टाऽसि। भुवि सत्कर्मणि स्पृक् आशावती तर्हि अदभ्र कर्मणा महापराक्रम वता वीरवरेण मया साकं इमां पुरीं देहलक्षणां- अलङ्कर्तुं मर्हसि। कथमिव ? यज्ञपुंसा श्रीनारायणेन सह श्रीः परं लोकं वैकुण्ठाख्यं इवेत्यन्वयः। अदभ्रकर्मणेति कर्माऽऽनन्त्यं लक्षयति।

हे शोभने ! व्रीडया सहितो हासः व्रीडाहास स्तेन युक्तेन ईक्षणेन विभ्रमन्त्यौ भ्रुवौ यस्याः सा तथा, तस्याः तव सकाशात् उपसृष्टः प्राप्त एष मनोभवो मनसो जातो रागलक्षणो वृत्तिविशेषो भगवान्, ताभिः पूज्यो मा मां प्रबाधते स्वानुकूलकर्मणा यः सन्नद्धं

---

1. W omits त्वं 2--2. W omits 3--3. A, B, T भुवस्स्पृक् 4--4. W omits 5--5. W omits 6--6. W omits 7--7. W omits
8. A, B, T omit प्रेरितः 9. A, T omit अतः

करोति। यद्यस्मात् अथ तस्मात् अनुगृहाण इत्यन्वयः। कथम्भूतं माम् ? अपाङ्गेन शरीररहितेन वृत्तिविशेषेण विखण्डितानि इन्द्रियाणि यस्य स तथा तम्॥ ३०॥

[1]त्वदाननं सुभ्रु सुतारलोचनं व्यालम्बिनीलालकबृन्दसंवृतम्।
उन्नीय मे दर्शय वल्गुवाचकं यद्व्रीडया नाऽभिमुखं शुचिस्मिते॥ ३१॥

[2]नारद उवाच

इत्थं पुरञ्जनं नारी याचमान मधीरवत्।
अभ्यनन्दत[3] तं वीरं हसन्ती वीर मोहिता[4]॥ ३२॥

न विदाम वयं सम्यक्कर्तारं पुरुषर्षभ!
आत्मनश्च परस्यापि गोत्रं नाम च यत्कृतम्॥ ३३॥

इहाद्य सन्तमात्मानं न विदाम ततः परम्।
येनेयं निर्मिता वीर पुरी शरण मात्मनः॥ ३४॥

एते सखायः सख्यो मे नरा नार्यश्च मानद।
सुप्तायां मयि जागर्ति नागोऽयं पालयन् पुरीम्॥ ३५॥

श्रीध. त्वदिति। यद्व्रीडया सम्मुखं न भवति तत् त्वदानन[5] मुन्नीय मे दर्शय। शोभने भ्रुवौ यस्मिन् सुतारे शोभनकनीनिके लोचने यस्मिन् व्यालम्बिनो दीर्घा ये नीला[6] अलका स्तेषां बृन्देन संवृतम्। वल्गूनि वाचकानि वाक्यानि यस्मिन्॥ ३१॥

इत्थमिति। हे वीर! हे राजन्[7] [8-]वीरं प्रत्यगात्मानं मोहयितुं शीलं यस्याः[-8], साऽपि तं दृष्ट्वा मोहिता सती तमाह॥ ३२॥

यत्पृष्टं "कस्यासीत्यनेन कस्य पुत्री किं[9] गोत्रजेति का त्वमिति च किं नामाऽसीति तत्राह - नेति। आत्मनो मम परस्य त्वाऽपि कर्तारं सम्यक् न विद्मः। गोत्रं नाम च यत्कृतं भवति तं च [10-]न विदाम[-10] न विद्मः॥ ३३॥

[11-]तर्हि किं वेत्ति[-11], तदाह - इहेति। हे वीर[12]! आत्मनो मम शरण मियं पुरी येन निर्मिता तं च न विद्मः॥ ३४॥

---

1. B तदा°; W त्वमा° 2. A, B, G, I, J, T add नारद उवाच 3. M, Ma °भाषत 4. M, Ma °नी 5. A, B, J, Va omit त्वत् 6. B, J, Va omit नीला 7. B, J, V, Va omit हे राजन्! 8--8. A, B, J, Va omit 9. B, J, V, Va omit किं 10--10. B, J, V, Va omit 11--11. A, B, J, Va omit 12. B, J, V, Va omit हे वीर

यत्पृष्टं ''क एतेऽनुपथा,, इति तत्राह - एत इति ॥ ३५ ॥

**वीर.** यन्मुखं व्रीडयाभिमुखं न भवति तत् स्वमानन मुन्नीय मह्यं दर्शय । आननं विशिनष्टि - शोभने भ्रुवौ यस्मिन्, सुत सुकनीनिके लोचने यस्मिन् व्यालम्बिनो दीर्घा ये नीलालका स्तेषां बृन्देन संवृतं, वल्गूनि वाचकानि वाक्यानि यस्मिन्, शुचि स्मि यस्मिन् । शुचिस्मिते इति पाठे सम्बोधनम् ॥ ३१ ॥

एव मधीरव दविजितेन्द्रियवत् याचमानं पुरञ्जनं नारी प्रमदा वीरं तं दृष्ट्वा मोहिता सती वीरं मोहयन्ती अभ्यनन्दत, अने अन्योन्यपारतन्त्र्यं सूच्यते ॥ ३२ ॥

यत्पृष्टं ''कस्यासीति अनेन कस्य पुत्री जातेति का त्वमिति किम्स्वरूपा किन्नामासीति तत्राह - नेति । आत्मनो मम पर तवाऽपि कर्तारं स्रष्टारं सम्यक् न विद्मः । कर्तारं विशिनष्टि - गोत्रं नाम च यत्कृतं येन कर्त्रा कृतं भवति ॥ ३३ ॥

इहास्यां पुर्यां अधुना सन्तं वसन्त मात्मानं पुरी मन्तः प्रविश्य नियन्तारं त्वां जानीमः, ततः आत्मनः त्वत्तः मत्तश्च प विलक्षणं पुरुषं न विदामः । कोऽसौ परः यं न विद्मः इति वदसि तत्राह - हे वीर ! आत्मन स्तव मम च शरण मियं पुरी येन निर्मि तमित्यर्थः । इहाद्य सन्त मात्मानं विदाम इत्यनेन केवलसंसारिणो जीवस्य बुद्धिः, तत्स्वरूप मविशदावभासं गृह्णाति न तु याथात्म्ये त्युक्तम् । ''न विदाम वयं वीर ! कर्तारं, ''न विदाम ततः परं (भाग. 4-25-33,34) येनेयं निर्मिता वीर ! पुरी'' त्यनेन जीव करणकलेबरादिसम्पादनचतुरं कृत्स्न जगदुदयविभवलयलीलं प्रकृति पुरुषविलक्षणं परमपुरुष मापाततः तत्त्वतश्च न विषयीकरो त्युक्तम् ॥ ३४ ॥

यत्पृष्टं 'क एतेऽनुपथा, इति तत्राह - **एत** इति । [1-] एते नराः [-1] एकादश महाभटाः नार्यश्च[2] मे मम सखायः सख्य श्चानुवर्तिनो भृत्य इत्यर्थः । अनेनेन्द्रियाणां तद्वृत्तीनां च बुद्ध्येकायत्तत्व मुक्तम् । यत्पृष्टं ''कोऽयं तेऽहिः पुरस्सरः, इति तत्राह - मयि सुप्तायां सत्या म नागः पुरीं पालयन् जागर्ति । अनेन बुद्धीन्द्रियमन आदिषु सर्वेषु सुप्तौ निर्व्यापारेषु सत्स्वपि प्राणव्यापारोऽस्तीति सर्वापेक्षया प्राण प्राधान्य मुक्तम् ॥ ३५ ॥

**विज.** हे शुचिस्मिते ! निर्मलविलासे ! त्वदाननं [3] तव चेष्टाविशेषं मे दर्शये त्यन्वयः । सुभ्रु शोभना भ्रूः र्भ्रमणशीलं विषयेषु यस त तथा, सुतरां शोभनं लोचन मालोचनं यौक्तिकं ज्ञानं यस्य तत्तथा, तत स्तर्हि किमिति न प्रकाशत इत्यत उक्तं - व्यालम्बीति

---

1--1. A, B, T omit 2. A, B, T ता ललनाश्च 3. A omits तव

न्यालम्बिना मविस्रंसिनां चञ्चलानां नीलालकोपमवर्णानां तामसानां वृत्तिविशेषाणां बृन्देन संवृतं गूढं तस्मान्न प्रकाशत इत्यर्थः। तर्हि कथं दर्शनमिति तत्राह - उन्नीयेति। तामसवृत्तिविशेषान् पृथक्कृत्य पुनरपि कीदृशम्? वल्गुसुन्दरं वाचकं वक्त्रं वाक्यं यस्य तत्तथा, यदाननं व्रीडया वृत्तिविशेषेण ममानभिमुखं न सम्मुखं तदिति शेषः॥ ३१॥

नरः पुरुषः तत्सम्बन्धिनी नारी वैषयिकी बुद्धिः, हसन्ती उल्लसन्ती, विशिष्ट ईरो ज्ञानं यस्य स वीरः, तमपि मोहयितुं शील मस्या अस्तीति वीरमोहिनीति॥ ३२॥

यदुक्तं कस्यासीति तत्राह - **नेति**। हे पुरुष श्रेष्ठ! कर्तार मुत्पादकं भर्तारं पोषकं वा, सम्यक् लक्षण वत्तया न विदाम न जानीमहे। गुणवदाश्रयः कश्चिदस्तीति सामान्य मेव न तु विशिष्ट मित्यतः सम्यगिति। किञ्चात्मनो मम परस्योत्पादकस्यापि यथा नाम कृतं यच्चगोत्रं तदपि न जानीमहे इत्यन्वयः। "अनामगोत्रम्, (मुक्ति.उ. 2-72) इति श्रुतेः॥ ३३॥

तर्हि किमपि न वेत्सि चेत् बुद्धित्वहानिरिति तत्राह - **इहेति**। इह सन्त मात्मानं मा मह मित्यद्य इदानीं जानीमहे, उत्तरकाले सन्देहः कर्मवशात् ततः परं ततोऽन्यत्किमपि न विदाम इत्यन्वयः। तस्मात्पर मीश्वरं न विदाम, येनेश्वरेण मम शरणं निवासयोग्या इयं पुरी विरचितेति वा॥ ३४॥

के तेऽनुपथा इति तत्राह - एत इति॥ ३५॥

**दिष्ट्याऽऽगतोऽसि भद्रं ते ग्राम्यान् कामा[1] नभी[2]प्स्यसि[3]।**
**उद्वहिष्यामि तां स्तेऽहं स्वबन्धुभि ररिन्दम॥ ३६॥**

**इमां त्व मधितिष्ठस्व पुरीं नवमुखीं विभो!**
**मयोपनीतान् गृह्णानः कामभोगान् शतं समाः॥ ३७॥**

**कं[4] नु त्वदन्यं रमये[5] ह्यरतिज्ञ मकोविदम्।**
**असा[6]म्परायाभिमुख मश्वस्तनविदं पशुम्॥ ३८॥**

**धर्मो ह्यत्रार्थकामौ च प्रजानन्दोऽमृतं यशः**
**लोकाविशोका विरजा यान् न केवलिनो विदुः॥ ३९॥**

---

1. M, Ma भोगान॰ 2. W ॰नवाप्स्यसि 3. A, B, G, I, J, M, Ma, T ॰से 4. M, Ma का 5. M, Ma ॰येद॰ 6. A, B, G, I, J, T ॰स॰

**पितृदेवर्षि मर्त्यानां भूताना मात्मनश्च ह ।**
**क्षेम्यं[1] वदन्ति शरणं भवेऽस्मिन् यद्गृहाश्रमम्[2] ॥ ४० ॥**

**श्रीध. दिष्ट्येति** । आस्तां तावत्[3] नामगोत्रादि यदत्राऽऽगतोऽसि एतद्दिष्ट्या भद्रं जातम् । ग्राम्या निन्द्रिय ग्रामार्हान् उद्वहिष्यामि सम्पादयिष्यामि स्वबन्धुभिः सखिभिश्च[5] ॥ ३६ ॥

**इमामिति** । समाः संवत्सरान् मनुष्य देहप्रवेशाच्छत मित्युक्तम् ॥ ३७ ॥

[6-]संसारिणो जीवस्य[-6] प्रवृत्तिस्वभावत्वा न्निवृत्ति निन्दापूर्वकं तत्सङ्ग मभिनन्दति - **कमिति** पञ्चभिः । त्वत्तोऽन्यं कं नु रमये अरतिज्ञं नैष्ठिकम् । अकोविद मनिषिद्धसुखत्या गिनम् । सम्परायो मृत्यु स्तदनभिमुखं परलोकचिन्ताशून्यम् । अश्वस्तनविदं श्व इदं कर्तव्य मितीहलोक चिन्ताशून्यम्, अत एव पशुतुल्यम् ॥ ३८ ॥

**धर्म** इति । अत्र गार्हस्थ्ये प्रजानन्दः पुत्रसुखम् अमृतं मोक्षः केवलिनो यतयः ॥ ३९ ॥

**पितृदेवेति** । गृहाश्रम इति यदेतत्क्षेमार्हं शरण माश्रयं वदन्ति ॥ ४० ॥

**वीर.** आस्तां नाम गोत्रादि दिष्टया पुरी[7] मागतोऽसि, अनेन मनुष्यदेहसम्बन्धो दैवकृतो दुर्लभ इत्युक्तम् । अत स्ते भद्रं ताव द्ग्राम्या निन्द्रियग्रामार्हशब्दादीनवाप्स्यसि । हे अरिन्दम ! अहं स्वबन्धुभिः सखीभिः इन्द्रियै स्सहेत्यर्थः । तान् ग्राम्यान् भोगां स्ते तुभ्यं उद्वहिष्यामि सम्पादयिष्यामि ॥ ३६ ॥

हे विभो ! नवद्वारा मिमां पुरीं त्वं शतं समाः संवत्सरान् मया उपनीतान् प्रापितान् कामान् गृह्णानः अधितिष्ठस्व । मनुष्य देह प्रवेशाभिप्रायेण शत मित्युक्तम् ॥ ३७ ॥

संसारिणो जीवस्य प्रवृत्तिस्वभावत्वा न्निवृत्तिनिन्दा पूर्वकं तत्सङ्ग मभिनन्दति - **कं न्विति** पञ्चभिः । त्वत्तोऽन्यं कं रमये क्रीडयामि । अनेन निवृत्तिमार्गनिष्ठो न बुद्ध्यधीन इत्युक्तम् । तत्र हेतुः अरतिज्ञं नैष्ठिकं विरक्त मित्यर्थः । अत एवा कोविद मनि पुण मनिषिद्ध[8-] सुखस्याऽपि[-8] त्यागिन मसाम्परायाभिमुखं[9] साम्परायो[10] मृत्युः, तदनभिमुखं मरणाभीरु मिति वा । "कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रिय मिवातिथिम्" इत्युक्तेः, अश्वस्तनविदं श्वो भवं श्वस्तनं कालान्तरानुभाव्यं स्वर्गादि भोग्यत्वेन न वेत्ती त्यश्वस्तनवित्

---

1. W क्षेमं 2. A, B, G, I, J, T. V °मः 3. A. B. J, Va omit तावत् 4. A, B. J. Va तावत् 5. A adds सखीभिः सह;B, J. Va add सखीभिः
6--6. A. B, J, Va omit 7. A. B, T पुर्यां 8--8. A, B, T °द्धस्यापि सुखस्य 9. A, B. T °स° 10. A, B . T स°

ः ।। "एते वै निरयास्तात स्थानस्य परमात्मनः" (भार. 12-191-6) इति। "वासुदेवे मनो यस्य जपहोमार्चनादिषु। तस्यान्तरायो त्रय देवेन्द्रत्वादिकं फलम्" (विष्णु.पु. 2-6-41) इति स्वर्गादिसुखस्य मुमुक्षो र्हेयत्वा दित्यर्थः। पशुं पशुतुल्य मिति निन्दति ॥ ३८॥

एवं निवृत्तिधर्मस्थं निन्दित्वा प्रवृत्तिस्वभावं स्तौति - **धर्म** इति। अत्र प्रवृत्तिमार्गे धर्मः स्वर्गादिसाधनो यागादि रूपो धर्मः थाऽर्थकामौ प्रजानन्दः पुत्रसुखम्। अमृतं मोक्षः यशः[1] कीर्तिः विशोकाः निर्दुःखाः विरजाः निर्मला लोका पुण्यलोकाश्च सिद्ध्यन्तीति षः। लोकान् विशिनष्टियान् लोकान् केवलिनो निवृत्तिधर्मस्था न विदुः ॥ ३९॥

किञ्च अस्मिन् भवे, गृहाश्रम[2]मिति यत् एतत्पि त्रादीनां क्षेमार्हं शरण माश्रयं वदन्ति। पित्रादीनां गृहाश्रमिणमारा[3]धक ाश्रित्यावस्थानात् ॥ ४०॥

**विज.** स्वबन्धुभि रिन्द्रियैः ॥ ३६॥

हस्तपादयो रेकत्वेन नवत्वं मुखानि द्वाराणि शतं समा इत्यनेन "शतायु र्वै पुरुषः" इति श्रुतेः। मनुष्याणां शतायुष्ट्वनिर्देशा नुष्यशरीर मिहाऽभि प्रेतम् ॥ ३७॥

तत्र हि ज्ञानोत्पत्तिः कुत इति तत्राह - का न्विति। का बुद्धि स्त्वन्यं मनुष्यशरीरप्रविष्टं चेतनं विहायाऽन्यं पश्वादिशरीरगतं येत् सुखिनं कुर्या दित्यन्वयः। कुत इत्यत उक्तम् - अरतिज्ञ मिति। "यस्त्वात्म रतिरेव स्या दात्मतृप्त श्च मानवः" (भ.गी. 3-17) ते स्मृतेः। परमात्मरतिज्ञानरहितं शब्दादिविषय रतिज्ञानहीनं वा। तदपि कुत इत्यत उक्तम् - अकोविद मिति। अपण्डितत्वादित्यर्थः। ाण्डित्याभावः कथ मित्यत्राह - असाम्परायेति। साम्परायो मोक्षः तत्राभिमुखो न भवती त्यसाम्परायाभिमुखः तं, युद्धाभिमुख ामो न ज्ञानाभिमुखत्वं (सुखः, तत्) कथ मित्यत उक्तम् अश्वस्तनविद मिति। श्वं स्तनं भविष्य न्न वेत्तीति अश्व स्तन वित् तं न ादुः। "श्वस्तनं न लोकालोकौ" इति श्रुतिः। श्वस्तनं त्वमपि ईदृशमिति न वेतीति अश्वस्तनवित् तं वा। कोऽसा वेवंविध इत्युक्तं ।ुमिति। तत्त्वज्ञान रहितम्, अत्र सद्बुद्ध्यसद्बुद्धी द्वे यथा सम्भवं विशेषणैः तत्तदर्थतया ज्ञातव्ये। असद्बुद्धि विवक्षायां पाशुपतागमज्ञान ्यम्, अन्यत्रोक्तार्थः। असद्बुद्धिपक्षेऽपि स्वमतानुसारेण मोक्षादिकं स्वस्यैवार्थत इदं समस्त मुपपन्न मिति ॥ ३८॥

इतोऽपि श्वस्तनोऽपि नाऽस्त्येवे त्याह - **धर्म** इति। अत्र भवति धर्मादयः सन्तीति हि यस्मा त्तस्मा त्प्रजानन्दः पुत्रसुखं, मृतं मोक्षः, अन्योन्य मविरोधेन धर्माद्यनुष्टानं न सुशक मिति भावेनाह - यानिति। केवलिनो निष्किञ्चना उदरम्भरिजना वा ॥ ३९॥

---

W omits यशः 2. A, B, T °म इति 3. A, B, T °णा

सर्वाश्रमाणा मुपजीव्यत्वात् गृहाश्रम एव ज्याया नित्याह - **पितृदेवेति**। आत्मनोऽस्य देहस्य क्षेम्यं मोक्षयोग्यं शरण्यं वदन्तीति यत् तस्मादिति शेषः ॥ ४० ॥

**का नाम वीर विख्यातं वदान्यं प्रियदर्शनम्।**
**न वृणीत पतिं[1] प्राप्तं मादृशी त्वादृशं[2] स्वयम् ॥ ४१ ॥**

**कस्या मन स्ते[3] भुजगेन्द्र भोगयोः स्त्रिया न सज्जे द्भुजयो र्महाभुज।**
**योऽनाथवर्गाधिमलं घृणोद्धत स्मिता वलोकेन चरत्य[4]पोहितुम् ॥ ४२ ॥**

**नारद उवाच**

**इति तौ दम्पती तत्र समुद्य[5] समयं मिथः[6]।**
**तां प्रविश्य पुरीं[7] राजन् मुमुदाते शतं समाः ॥ ४३ ॥**

**उपगीयमानो ललितं तत्र तत्र च गायकैः।**
**क्रीडन् परिवृतः स्त्रीभि र्ह्रा[8]दिनी माविशच्छुचौ ॥ ४४ ॥**

**सप्तोपरि कृता द्वारः पुर स्तस्या स्तु द्वे अधः।**
**पृथग्विषयगत्यर्थं तस्यां[9] यः कश्चनेश्वरः ॥ ४५ ॥**

**श्रीध. कस्या इति**। भोगिभोगयोः सर्पदेहाकारयो स्तव भुजयोः यन्न सज्जेत्[10] एवम्भूतं कस्याः स्त्रियः मन स्स्यान्न कस्या अपि। यो भवान् अनाथवर्गाः दीनस्तोमा स्तेषा माधिं मनोदुःखम्[11] अल मत्यर्थ मपोहितुं सर्वत्र चरति। केनापोहितुम् ? घृणयोद्धतोऽतिशयितो यः स्मितपूर्वकोऽवलोक स्तेन ॥ ४१-४२ ॥

**इतीति**। समुद्य समुदीर्य समाः संवत्सरान् ॥ ४३ ॥

तत्र जाग्रदवस्थां संक्षेपेणाह - **उपगीयमान** इति। [12-]जाग्रदवस्थायां तत्र प्रतीन्द्रियविषयं गायकैः विषयशब्दादिभिः उपगीयमानः सेव्यमानः स्त्रीभि र्मनोवृत्तिभिः सह क्रीडन्[-12]। सुषुप्त्य[13]वस्था माह। ह्रा[14]दिनीं हृदयाकाशं स्वापस्थानम्। शुचौ निदाघे ॥ ४४ ॥

1. A, B, G, I, J, T प्रियं 2. A, B, G, I, J, T पतिम् 3. A, B, G, I, J, T ⁰स्ते भुवि भोगिभो⁰; V ⁰स्स्यात्तव भोगिभो⁰ 4. M, Ma, Ms, V ⁰स्य⁰
5. M, Ma सम्मुह्य 6. W पुः 7. V पुरं 8. V ⁰र्ह्रा⁰ 9. V तस्या 10. V सज्जते 11. B, J, V, Va omit मनोदुःखं 12--12. A, B, J, Va omit
13. A, J, Va ⁰प्ता⁰ 14. A, B, J, Va ह्र⁰

इदानीं नवद्वार प्रदर्शनपूर्वकं[1] जाग्रदवस्थां प्रपञ्चयति सप्तेति यावदध्यायसमाप्ति। तस्याः पुर उपरि कृता द्वाराः सप्त। वृता इति पाठेसंवृताः। नेत्रे नासिके श्रोत्रे मुखं चेति सप्त। अधो द्वे द्वारौ गुदलिङ्गे। यः कश्चनेति। आत्मनः सम्यगविज्ञाना दनियतत्वाच्च॥ ४५॥

**वीर.** हे वीर! विख्यातं कामित्वेन प्रसिद्धं वदान्यं त्यागिनं कामार्थं[2] विहित मपि त्यजन्त मित्यर्थः। अत एव प्रियेषु शब्दादि कामेषु[3] दर्शनं दृष्टि र्यस्य तं, कथा पक्षे विख्यातं यशस्विनं वदान्यं दानशीलं प्रियदर्शनं सुन्दर मित्यर्थः। ईदृशं त्वादृशं निस्समं पतिं दैवा त्प्राप्तं मादृशी निस्समाना का वा स्वयं न वृणीत वृणुया देवेत्यर्थः॥ ४१॥

हे महाभुज! भुजगेन्द्रभोगयोः सर्पदेहाकारयोः तव भुजयोः कस्याः स्त्रिया मनः न सज्जेत् नासक्तं भवेत् यो भवान् अनाथवर्गाः दीनस्तोमाः[4] तेषा माधिम् अल मत्यर्थ मपोहितुं सर्वत्र चरति। केन हेतुनाऽपोहितुम्? घृणयो द्धतः अतिशयितो यः स्मितपूर्वकोऽवलोक स्तेन॥ ४२॥

एवं सम्बन्ध दार्ढ्यख्यापनाय तयोः संवादमभिधायो पसंहरन् तयो र्व्यापार माह नारदः। तौ दम्पती पुरञ्जन पुरञ्जन्यौ मिथोऽन्योन्यं समयं सङ्केतं समुद्य समुदीर्य दैवा दन्योन्यं दृढतरं संबध्येत्यर्थः। हे राजन्![5] प्राचीनबर्हिः! तां पुरीं प्रविश्य शतं समाः संवत्सरान् मुमुदाते॥ ४३॥

एवं जीवबुद्ध्यो र्जीवकर्मानुरूप दैवाख्य परम पुरुष सङ्कल्पायत्त दृढतर सम्बन्धं तत्प्रयुक्तं देहसम्बन्धं च पारोक्ष्यरूपेणाभिधाय शुश्रूषोः प्राचीनबर्हिषः प्राप्य परब्रह्म व्यतिरिक्त वैतृष्ण्यजननार्थं प्राप्यतृष्णाजननार्थं संसरतो जीवस्य जाग्रत्स्व प्नसुषुप्तिमरणावस्थासु दोषा नुद्घाटयितुं जाग्रदाद्यवस्थाः प्रतिपिपा दयिषुः कथाव्याजेन तावत्समासतः सुषुप्त्यवस्था माह - **उपगीयमान** इति। ललितं यथा भवति तथा गायकै रूपगीयमानः[6-6] पुरञ्जनः स्त्रीभिः परिवृतः तत्र तत्र क्रीडन् शुचौ आषाढे क्रीडानिमित्तश्रमा पनोदनाय हृदिनीं सरसी माविश दिति कथापक्षेऽर्थः॥ पक्षान्तरेतु जाग्रदवस्थायां स्त्रीभिः इन्द्रियवृत्तिभि स्तत्र तत्र क्रीडन् शब्दादिविषया ननुभवन् व्यापृतकरणत्वा त्तत्प्रयुक्त श्रमनिर्हरणाय शुचौ ह्रादिनी माविशत्। [7-]हृदिनीशब्देन पुरीतदाख्यनाडी विवक्षिता। शुचिशब्देन शुचौ ब्रह्मणि आविश्य तद्द्वारा ह्रादिनी माविशत्[-7] इत्यर्थः। प्रासादखट्वापर्यङ्कव त्समुच्चयेन नाडी पुरी तत्, बह्मणि हि जीवस्य सुषुप्तिस्थानं न तु विकल्पेन। अथ यत्रैत त्सुषुप्तः समस्त सम्प्रसन्नः स्वप्नं न विजानात्याशु तदा नाडीषु सुप्तो भवति। अथ यदा सुषुप्तो भवति, यदा न कस्य चन वेदहितो नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात् पुरीतत मभिप्रतिष्ठन्ते, ताभिः प्रत्युपसृत्य पुरीतति शेते" (बृह.उ. 2-1-19)

1. V omits प्रदर्शन 2. A, B, T °र्थं° 3. A, B, T विषयेषु 4. A, B, T दीनानां स्तोमाः 5. T omits राजन्! 6--6. W omits
7--7. A,T omit

इति, तथा "यत्रैतत्पुरुषः स्वपिति नाम सता सौम्य ! तदा सम्पन्नो भवति" (छांद.उ. 6-8-1) इति। त्रयाणा मपि सुषुप्ति स्थानत्वश्रवणात्कार्यभेदेन समुच्चये सम्भवति, पाक्षिक बाधगर्भ विकल्पस्य अन्याय्यत्वात्, सम्भवति च प्रासादखट्वापर्यङ्क-वन्नाड्यादीनां कार्यभेदः। तत्र नाडीपुरीततौ प्रासादखट्वास्थानीयौ ब्रह्म च पर्यङ्कस्थानीयं, ततो ब्रह्मैव साक्षात्सुषुप्तिस्थानम्॥ ४४॥

इदानीं जाग्रदवस्थां प्रतिपादयति - **सप्तेत्यादि**[1] यावदध्यायसमाप्ति। तत्र नवभि र्द्वार्भिः पुरीं लक्षितलक्षणामिति द्वारत्वेन रूपितानां चक्षुरादीन्द्रियस्थानाना मिन्द्रियाणां च गौणनामानि तत्कार्याणि तद्विषयां श्च कथयन्नाह - सप्तेति। तस्याः पुरः पुर्याः सप्त द्वारः उपरि कृताः चक्षुर्द्वयं श्रोत्रद्वयं नासिकाद्वयं मुखञ्चेति। द्वे द्वारा वधः कृते कल्पिते गुदं लिङ्गञ्चेति। किमर्थ मेवं कल्पिता इत्यत्राह। तस्याः पुर्याः यः कश्चन ईश्वरः तस्य[2] पृथगसङ्करणेन[3] विषयान् शब्दादीन् प्रति गत्यर्थं विषया नवगन्तु मित्यर्थः। संसारिणो जीवस्य स्वपरयाथात्म्यज्ञानाभावात् मनुष्यशरीरस्या नियतत्वाच्च यः कश्चनेत्युक्तम्; कथा पक्षे विषयशब्दो देशपरः, देशान्प्रति गत्यर्थ मित्यर्थः॥ ४५॥

**विज.** किं बहुनोक्तेन फलितं वक्तीत्याह - **का नामे** ति। पुत्र कलत्राद्यभीष्टदानशीलं स्वयं प्राप्तत्वात्॥ ४१॥

त्वादृश मित्युक्तं किञ्चिद्विशिनष्टि - **कस्या मन** इति। अनाथवर्गस्या स्मदादे राधिं मनोदुःखं मल मपोहितुं चरसि घृणया दयया उद्धृत मुज्जृम्भितं यत् स्मितं तत्पूर्वको योऽवलोक स्तेन दर्शनेन कस्याः स्त्रियाः॥ ४२॥

परमफलित माह- **इतीति**। समयं प्रमाणपूर्वकं समुद्य[4] संवादं कृत्वा, देहप्राप्तेः पूर्वं तदनन्तरं वा बाह्यार्थ विवक्षयैतद्वचः, पुरीं देहं शतं समा इति, "शतं वर्षाण्यभ्याच्छर्त्" इति श्रुते रर्थ मनुकरोति। मुद-हर्षे, इति धातोः हर्षशोकयोः सुखदुःखवत् बन्धुत्वा दुभयं पर्यायेण बुद्धिपुरुषौ प्राप्तवन्तावित्यर्थः॥ ४३॥

तत्र प्रथमं मोदप्रकार माह - **उपगीयमान** इति। जाग्रदाद्यवस्थायां तत्र तत्र प्रतीन्द्रियविषयं गायकलक्षणैः शब्दादिभि र्विषयै रुपगीयमानः सेव्यमानः स्वप्नावस्थायां स्त्रीभिः केवलं मनोवृत्ति लक्षणाभिः परिवृतः "स्त्रीभिर्वायानैर्वा" (छांद.उ. 8-12-3) इति श्रुतेः। शुचौ तन्निमित्ते शोके प्राप्ते शीतला मगाधतोयदारामिव सुषुप्तिकाले सच्छब्दवाच्यां ब्रह्मस्वरूप स्थिति माविशत्। सुप्तावस्थाया मभूदित्यन्वयः[5]। ललितं यथा तथा अन्यत्र शुचौ ऋतुविशेषे "सता सोम्य ! तदा सम्पन्नो भवति" (छान्दो.उ. 6-8-1) इति श्रुतेः। सत्पुरुषः स्त्री शब्दवाच्यैः भक्त्यादिभिः परिवृतः, क्रीडन् विहरन् कालं यापयन्, हृदिनीं हृदिन्यां ब्रह्मनाड्यां हृदयस्थानेऽष्टदलपद्मे स्थितं श्री नारायणम् आविश दध्यायदित्यर्थः॥ ४४॥

---

1. W °ति 2. A, B, T omit तस्य 3. A, B, T °रेण 4. B समुद्य; M, Ma सम्मुद्य 5. A, B °त्यर्थः

देहाख्यं पुरं प्रसिद्धपुरसाम्येन वर्णयति - **सप्तेति**। तस्याः पुरः उपरि सप्त द्वारः कृताः, द्वेनेत्रे, द्वेनासिके, कर्णौ वदनं चेति अधो द्वे पायूपस्थे इति। कृत्य माह - विषयगत्यर्थ मिति। रूपादिविषयज्ञानार्थं निर्मिता इत्यर्थः। तस्यां पुर्यां कश्चने श्वरः अनामरूपो लोकविलक्षणः श्रीनारायणोऽस्तीत्यन्वयः। जीवो वा जगत्सामर्थ्योपेतत्वा दीश्वर इत्युच्यते, देहस्वामित्वाद्वा। अल्प शक्त्यादिमत्वात्तुच्छत्वेन यः कश्चनेति॥ ४५॥

**पञ्च द्वारस्तु पौरस्त्या दक्षिणैका तथोत्तरा।**
**पश्चिमे द्वे अमूषां ते नामानि नृप वर्णये॥ ४६॥**

**खद्योताऽऽविर्मुखी च प्राग्द्वारा वेकत्र निर्मिते।**
**विभ्राजितं जनपदं याति ताभ्यां द्युमत्सखः॥ ४७॥**

**नलिनी नालिनी च प्राग्द्वारा वेकत्र निर्मिते।**
**अवधूतसख स्ताभ्यां विषयं याति सौरभम्॥ ४८॥**

**मुख्या नाम पुरस्ता द्द्वा स्तयाऽऽपणबहूदनौ।**
**विषयौ याति पुरराड्रसज्ञ विपणान्वितः॥ ४९॥**

**पितृहू[1] र्नाम पुर्या द्वा[2] र्दक्षिणेन पुरञ्जनः।**
**राष्ट्रं दक्षिणपा[3]ञ्चालं याति श्रुत[4]धरान्वितः॥ ५०॥**

**श्रीध. पञ्चेति**। तासु सप्तसु पञ्च द्वारः, पौरस्त्याः पूर्वदिग्भवाः॥ ४६॥

**खद्योतेति**। खद्योतवत् अल्पप्रकाशा वामनेत्ररूपा आविः प्रकटं मुखं यस्या स्सा, बहुप्रकाशा दक्षिणनेत्रलक्षणा। "तस्माद्दक्षिणोऽर्थ आत्मनो वीर्यवत्तरः, इति श्रुतेः। स्वानुभवाच्च तत्र प्रकाशाधिक्यम्। एकत्र [5]निर्मिते संलग्ने विभ्राजितं रूपम्। द्युमत्सख[6]श्चक्षुस्स[7-]हितः[-7]। पुरञ्जन इति शेषः॥ ४७॥

**नलिनी** इति। नलनालशब्दौ छिद्रवचनौ, तद्वती नलिनी नालिनी च वामदक्षिणनासिके। अत्रापि संज्ञा भेदादेव [8]कार्ये न्यूनाधिक्यं पूर्ववत् ज्ञेयम्। अवधूतो वाय्वधिष्ठितः प्राणः, सौरभं गन्धम्॥ ४८॥

---

1. A, B, G, I, J, T °हू र्नृप; M, Ma °भूर्नृप 2. M, Ma द्वाद° 3. A, B, G, I, J, T प° 4. W °ति 5. A, B, J, Va omit निर्मिते 6. A चक्षुरिन्द्रियस°
7--7. A, B, T, Va omit 8. V कार्यन्यू°

**मुख्येति**। मुख्या प्रधानम् आस्यम्। आपणो भाषणम्। बहूदन श्चित्र मन्नम्। बह्वोदन इत्यनुक्तिः परोक्षवादत्वाय। रसज्ञं रसनेन्द्रियं, विपणो वागिन्द्रियं ताभ्यामन्वितः। [1-]'पण-व्यवहारे'[-1] (इतिधातुः)॥ ४९॥

**पितृहूरिति**। दक्षिणेनेति न तृतीया, किन्तु दक्षिणस्यां दिशि इत्यस्मिन्नर्थे अव्ययसंज्ञः। [2-]तद्धित (एनप्) प्रत्ययान्तोऽयम्।[-2] एव मुत्तरेणेति। अयमर्थः - पञ्चानां विषयाणा मन्यतोऽनवगतानां प्रकाश[3]नायालमिति पञ्चालं शास्त्रं श्रवणकाले च बलाधिक्यात् दक्षिणः कर्णः प्रथमं प्रवर्तते, शास्त्रे च प्रथमं श्रोतव्यं कर्मकाण्डमित्येतावता साम्येन प्रवृत्तसंज्ञस्य कर्मकाण्डस्य दक्षिणकर्णेन श्रवण मिष्यते। [4]अतः तदर्थमनुष्ठाय पितृभिः आहूतः पितृलोकप्रापकं पितृयानं प्रपद्यते। तदनेन प्रकारेण पितृणामाह्वान मनेन भवतीति पितृहूर्दक्षिणकर्णः। एवं तद्वैपरीत्येनोत्तरः कर्णो देवहूः। तथा च व्याख्यास्यति - "पितृहू र्दक्षिणः कर्णः उत्तरो देहहूः स्मृतः। प्रवृत्तं च निवृत्तं च शास्त्रं पञ्चालसंज्ञि[5]तम्॥ पितृयानं देवयानं श्रोत्राच्छ्रुतधरा द्व्रजेत्॥" (भाग 4-29-12,13) इति॥ ५०॥

**वीर. पञ्चेति**। तत्र तासु सप्तसु द्वार्षु पञ्च द्वारः पौरस्त्याः पूर्वदिग्भवा, एका दक्षिणा, तथा एका उत्तरा, द्वे पश्चिमे पश्चिमदिग्भवे। हे नृप! ते तुभ्य ममूषां द्वारां नामानि गुणनामानि वर्णये॥ ४६॥

खद्योता खद्योतवदल्पप्रकाशा वामनेत्ररूपा, आविः प्रकटं मुखं यस्या स्सा बहुप्रकाशा दक्षिणनेत्ररूपा, स्वानुभवा च्च तत्र प्रकाशाधिक्य मवगन्तव्यम्। एते द्वारा वेकत्र निर्मिते लग्ने ताभ्यां खद्योताऽऽविर्मुखीभ्यां द्वाभ्यां द्युमत्सखः द्युमान् सूर्यस्तदधिष्ठेयं चक्षरिन्द्रियमपि द्युमत्, तदेव सखा यस्य सः। यद्वा, द्युमतः सखा द्युमत्सखः "राजाहस्सखिभ्यः, (अष्टा. 4-5-91) इति टच्, चक्षुषा सहित इत्यर्थः। विभ्राजित मालोकादिना प्रकाशितं रूपं जनपदं विषयं याति अवगच्छति। कथापक्षे तु खद्योतादिशब्दा अश्वकर्णादिशब्दवत् केवलसंज्ञाशब्दा इत्यवगन्तव्यम्। जनपदं देशं याति गच्छतीत्यर्थः॥ ४७॥

नलनालशब्दौ छिद्रवचनौ। नलमस्या अस्तीति नलिनी [6-]एवं नालिनी,[-6] वामदक्षिणनासिके। अत्राऽपि संज्ञाभेदादेव कार्यन्यौ[7]नाधिक्यं पूर्ववत् ज्ञेयम्। अवधूनयति कम्पयतीत्यवधूतो वायु स्त त्सखो वाय्वधिष्ठितो घ्राणः, ताभ्यां [8-]नलिनी नालिनीभ्यां[-8] द्वाभ्यां सौरभं गन्धं विषयं याति॥ ४८॥

**मुख्येति**। मुख्या प्रधाना आस्यरूपा द्वाः पूर्वदिग्भवा तया मुख्यया द्वारा पणः पणनं व्यवहारः भाषणं, बहूदन श्चित्रमन्नं बह्वोदनं इत्यनुक्तिः परोक्षवादत्वाय, पणबहूदनौ विषयो पुरराट् पुरञ्जनः [9]रसज्ञः रसनेन्द्रियं विपणो वागिन्द्रियं, ताभ्या मन्वितो याति॥ ४९॥

---

1--1. B, J, V, Va omit 2--2. A, B, J, Va तद्धितोऽय मेनप् प्रत्ययः 3. A, B, J, Va °शाय 4. V ततः 5. V कम्। 6--6. T omits
7. A, B, T न्यू° 8--8. A, B, T omit 9. A, B, T omit रसज्ञः

पुर्या दक्षिणेन दक्षिणस्यां दिशि एनबन्ताव्ययं, पितृहू र्नाम द्वाः पितॄन् जिहीते गच्छत्यनयेति पितृहूः "ओहाङ् गतौ" इत्यस्मात् "नृतिशृध्योः" (उणादि. सू. 91) इति कूप्रत्ययो बाहुल कात् पितृलोक प्राप्तिसाधनभूता यागादिक्रिया तदवबोधिनी त्रयी पूर्वभक्तिश्च पितृहूशब्दार्थः। तत्र दक्षिणकर्णस्य बलाधिक्या च्छ्रोतॄणां प्रथमं त्रिवर्गप्रावण्याच्च प्रवृत्तिशास्त्रप्रवणे प्रवर्तत इति। प्रथमं श्रोतव्यपितृलोकप्राप्ति साधन कर्म प्रकाशक प्रवृत्तिशास्त्रश्रवणसाधनत्वात् दक्षिणकर्णः पितृहूः । अनन्तरं श्रोतव्य ब्रह्मप्राप्तिफलनिवृत्ति धर्मप्रकाशकोत्तरशास्त्रश्रवणसाधनत्वा द्वामकर्णो देवहूः। ननु उत्तर भाग तदर्थश्रवणादा वपि बलाधिक्या द्दक्षिणकर्ण एव प्रथमं प्रवर्तत [1]इति कथ मेत दुच्यते[1] इति चेत्, एवं तर्ह्यत एव गुणनामधेय बला त्पूर्वभाग तदर्थानां शास्त्रप्राधान्येन दक्षिणकर्णश्रवणविधानम् उत्तरभागतदर्थानां तु वामकर्ण प्राधान्येन श्रवणविधानं चानुमीयते, यथा "दक्षिणं दीक्षितः पूर्व माङ्क्ते, सव्यं हि मनुष्या अञ्जते" इत्यत्र दृष्टार्थत्वात् मनुष्याः सव्यनय नाञ्जनं पूर्वं कुर्यु रित्येवं प्रमाणान्तरेणा प्राप्तस्य सव्य नयनाञ्जनस्य सिद्धवन्निर्देशानुपपत्तौ सव्य नयनस्य प्रथम मञ्जनेन दृष्टविशेषालाभा त्प्रसिद्धवन्निर्देशानुपपत्त्या मानुषीभि रवश्यं प्रथमं सव्यनयनाञ्जनं कर्तव्य मिति विधि रनुमीयते, तद्वत् यथा वा तस्मादपि वध्यं प्रपन्नं न प्रति प्रयच्छन्तीति शरणागतस्य प्रत्यर्पणं प्रमाणान्तरेणा प्राप्तमपि तस्मादिति प्रसिद्धवन्निर्देशा नुपपत्त्या शरणागतो न प्रत्यर्पणीय इति विधि रनुमीयते। तद्वत् पूर्वोत्तरभागयोः यथाक्रमं दक्षिणोत्तरकर्णप्राधान्येन श्रवण मन्यतोऽप्राप्त मप्यनेनैव सिद्धवन्निर्देशगुणनामधेयबलेन विधीयत इति निरवद्यम्। पुरञ्जनः पितृहूद्वारा श्रुतिधरः श्रोतेन्द्रियं श्रवणविषयं शब्दं धरत्य वगच्छतीत्यनेनेति व्युत्पत्तेः, तेनान्वितो युक्तः दक्षिणपाञ्चालं दक्षिण द्वारगम्यं पाञ्चालं पञ्चते व्यक्तीकरोतीति पाञ्चालं, पच्यते व्यक्तीक्रियत इति वा पाञ्चालं, पचि व्यक्तीकरणे इत्यस्मात् "तमि विशिबिडि मृणि कुलि कपि पलि पञ्चिभ्यः कालच्" (उणादि.सू. 115) इत्यौणादिक कालच्प्रत्ययान्तः पाञ्चालशब्दः, ततः प्रज्ञादित्वा त्स्वार्थेऽण्, प्रवृत्ति धर्मप्रकाशकशास्त्रात्मकं राष्ट्रं याति॥ ५०॥

**विज.** तत्राऽपि विभाग माह - **पञ्चेति**। तासा मुपरि द्वारां मध्ये पौरस्त्याः पुरस्ताद्भवाः पञ्च द्वारो नेत्रादय इत्यर्थः। पश्चात् द्वे एका दक्षिणकर्णलक्षणा दक्षिणा, तथोत्तरा वामकर्णलक्षणा पश्चिमे द्वे अधोभागे द्वे पायूपस्थे अमूषां नव द्वाराम्॥ ४६॥

खे आकाशे सति द्योतते रूपं गृह्णातीति खद्योता, खद्योतवत् द्योतत इति वा। दक्षिणचक्षुर्लक्षणा आविः प्रकाशे सति मुखय त्यभिमुखीभवतीति साऽऽविर्मुखी प्रकाशमुखी न तमोमुखी तमसि रूपग्रहणाभावा दिति वामचक्षुर्लक्षणा। ताभ्यां विभ्राजितं प्रकाशितं जनस्य द्रष्टुः पद मालम्बनं रूपाख्यं याति विषयीकरोति गृह्णातीत्यर्थः। कथम्भूतः ? द्युमानादित्य श्चक्षुर्लक्षणः सखा यस्य स तथा चक्षुरिन्द्रियसहित इत्यर्थः। द्युमानादित्य स्तस्याऽऽवासहेतुत्वाच्चक्षुषोऽपि तन्नाम "आदित्य श्चक्षुर्भूत्वाऽक्षिणी प्राविशत्" (ऐत.उ. 2-4) इति श्रुतेः। "आदित्यो ह वै चक्षु स्तेनाऽनुगृहीतं रूपं गृह्णाति" इति च॥ ४७॥

1--1. A omits

नलो नाम श्वासः, सोऽस्या अस्तीति नलिनी, नालो दस्त्राभिधेयोऽस्या विद्यत इति नालिनी, नलनालौ श्वासोच्छ्वासौ, तयोः सञ्चारे हेतुत्वान्नलिनी नालिनीति द्वे गोलके नासिकारन्ध्रे अर्वा गुपरि तिर्यक् धुनोतीत्यवधूतो वायुः घ्राणेन्द्रियाभिमानी, तेन प्रेर्यमाणं घ्राणेन्द्रिय मपि तच्छब्दवाच्यं, तदेव सखा यस्य स तथा घ्राणेन्द्रियसहित इत्यर्थः। सौरभं विषयं गन्धलक्षणं गृह्णाति ॥ ४८ ॥

पुरस्ता न्मुख्या नाम द्वाः आस्य च्छिद्रलक्षणाऽस्ति। पुरराट् पुरञ्जनः तया द्वारा आपणबहूदनौ "पण-व्यवहारे" इति धातोः आपणो वदनव्यापारः, बहूदनो नानाविधभोज्यजातं तौ याति व्यवहरति अभ्यवहरति च रसज्ञो जिह्वेन्द्रियं, विपणो वागिन्द्रियं, ताभ्या मन्वितः ॥ ४९ ॥

नाम्ना पितृभूः पातृत्वात् पितरो देवाः प्रिया भवन्त्यस्य यजमानस्य दक्षिणकर्णलक्षणा शरीरलक्षणायाः पुर्या द्वारस्थितेन दक्षिण कर्णलक्षणेन द्वारेण उत्क्रान्तः पुरञ्जनो यजमानो दक्षिणपाञ्चालं दक्षिणानां देवानां लोकलक्षणं राष्ट्रं याति प्राप्नोति। पञ्चेन्द्रियाण्यलं याति भूषयति। 'अलभूषणे, इति धातोः पञ्चेन्द्रियाणा मलम्बुद्धिहेतुत्वा दिति वा पुरं ब्रह्म लक्षणं जनयति प्रादुर्भावयति प्रकाशयतीति पुरञ्जनः तत्त्वज्ञानी, दक्षिण पाञ्चालं निवृत्तिशास्त्रं यात्यवगन्तु मिति वा। दक्षिणः तत्त्वज्ञापनसमर्थः। इतिहासादिना सह पञ्चसङ्ख्योपेतो वेदः स एवाऽलं तत्त्वज्ञानाय नाऽन्या पेक्षेति कृत्वा मध्यमपुरञ्जनो दक्षिणपाञ्चालं पञ्चविषय संज्ञं राष्ट्रं याति रन्तु मिवाऽयम्। पञ्चानां शब्दानां समूहः पाञ्चः स एवालं भोक्तुमिति बुद्धिहेतुत्वा दिति कृत्वा सर्वत्राप्यऽय मेव सखेत्याह - श्रुत धरेति। श्रुतं लोकं शास्त्रं वा विषयं वा धारयतीति श्रुतधरः श्रोतेन्द्रियं तेन सख्या सहितः ॥ ५० ॥

**देवहू[1] र्नाम पुर्या द्वा उत्तरेण[2] पुरञ्जनः।**
**राष्ट्र मुत्तरपाञ्चालं[3] याति श्रुतधरान्वितः[4] ॥ ५१ ॥**

**आसुरी नाम पश्चात् द्वास्तया याति पुरञ्जनः।**
**ग्राम्यकं[5] नाम विषयं दुर्मदेन समन्वितः ॥ ५२ ॥**

**निर्ऋति र्नाम पश्चा द्वा स्तया याति पुरञ्जनः।**
***वैशसं नाम विषयं लुब्धकेन समन्वितः ॥ ५३ ॥**

**अन्धा वमीषां पौराणां निर्वाक्पेशस्करा[6] वुभौ।**
**अक्षण्वता मधिपति स्ताभ्यां याति करोति च ॥ ५४ ॥**

1. M, Ma °भू 2. A, B, G, I, J, M, Ma, T उ° 3. A, B G, I, J, T प° 4. W °ति 5. A, B, G, I, J, T, V °म° * The second half of the 53 verse is missing in T Edn. 6. A, B, G, I, J, T निर्वाक्पेशस्कृता°; M, Ma, Ms निर्वाक्योपस्करा

स[1] यर्ह्यन्तः पुरगतो विषूचीन[2] समन्वितः ।
मोहं प्रसादं हर्षं वा याति जायात्मजोद्भवम् ॥ ५५ ॥

एवं कर्मसु संसक्तः[3] कामात्मा वञ्चितोऽबुधः ।
महिषी यद्यदीहेत तत्तदेवान्ववर्तत ॥ ५६ ॥

क्वचित्पिबन्त्यां पिबति मदिरां मदविह्वलः ।
अश्नत्यां[4] क्वचिदश्नाति जक्षत्यां[5] सह जक्षिति[6] ॥ ५७ ॥

क्वचिद्गायति गायन्त्यां[7] रुदत्यां[8] रोदिति[9] क्वचित् ।
क्वचिद्धसन्त्यां हसति जल्पन्त्या मनु जल्पति ॥ ५८ ॥

श्रीध. आसुरी इति । असुरा इन्द्रियारामाः तेषा मिय मासुरी शिश्नद्वाः ग्रामकं ग्रामस्थं[10] जनानां कं सुखं व्यवायं दुर्मदेन गुह्येन्द्रियेण ॥ ५२ ॥

निर्ऋतिरिति । निर्ऋति र्नाम गुदो मृत्युद्वारत्वात् । वैशसं [11-]मलविसर्गलक्षणं विषयम्[-11] लुब्धकेन पायुना तेन उत्क्रान्तस्य दुःखप्राप्ते र्लुब्धकसाम्यम् ॥ ५३ ॥

अन्धाविति । अमीषां मध्ये निर्वाक् पादः पेशस्कृत् हस्तः तावुभौ अन्धौ छिद्राभावात् स्वतो ज्ञानक्रियाशक्त्यभावाच्च । अक्षण्वता मिन्द्रियवतां देहाना[12] मधिपतिः पुरञ्जनः त्वगिन्द्रियस्या नुक्तिः सर्वेष्वन्तर्भावात् ॥ ५४ ॥

स इति । अन्तः पुरं हृदयं गतः विषूचीनं सर्वतोमुखं मनः मोहप्रसादहर्षाः तमस्सत्त्वरजः कार्याणि, जाया बुद्धिः आत्मजा इन्द्रियपरिणामाः तदुद्भवम् ॥ ५५-५६ ॥

क्वचिदिति । जक्षत्यां भक्षयन्त्याम् ॥ ५७, ५८ ॥

वीर. एवं पुर्या उत्तरेण[13] उत्तरस्यां दिशि देवहू र्नाम द्वाः तया पुरञ्जनः श्रुतधरान्वितः उत्तरपाञ्चालं याति । यद्यपि प्रवृत्ति

---

1. M, Ma, Ms स्वयं त्वन्तः 2. J °चीनं; M, Ma °चिना 3. V °यु° 4. A, B, G, I, J, M, Ma, Ms, T, V °न्त्यां 5. V °न्त्या 6. A, J, M, Ma, Ms, T, V, W °क्ष° 7. Ms °त्यां 8. M, Ma, Ms, V, W °न्त्यां 9. A, B, G, I, J, M, Ma, T रुदति 10. A, B, J, Va °स्थज° 11--11. B, J, V, Va मलविसर्गम् 12. V देवा° 13. A, T omit उत्तरेण

निवृत्त्यनवबोधिनः शब्दा स्सन्ति संसारिणो जीवस्य श्रोतव्याः, तथाऽपि श्रोतव्यानां मध्ये प्रवृत्त्यवबोधि शास्त्रात्मकशब्दस्यैव श्रोतव्यत्वाभिप्रायेण दक्षिणपाञ्चाल मुत्तरपाञ्चाल मित्युक्तम्। एवं पूर्वत्राऽपि याति सौरभ मित्यादिषु द्रष्टव्यम्॥ ५१॥

पुर्याः पश्चा दासुरी नाम द्वाः अस्यते क्षिप्यतेऽनेनेन्द्रिय मित्यसुरं मेढ्रं, ततः स्वार्थेऽण् ''टिड्ढाणञ्'' (अष्टा. 4-1-15) इत्यादिना ङीप्, तया पुरञ्जनः दुर्मदेन दुरुद्धरः मदो यस्य तेन, उपस्थेन्द्रियेण समन्वितं ग्राम्यकं[1] ग्राम्यजनानां कर्म मैथुनादिकं याति॥ ५२॥

पुर्याः पश्चात् [2-]निर्ऋति र्नाम द्वाः[-2] निर्ऋति र्नामः मृत्युद्वारत्वात्, गुदं निर्ऋतिः तया पुरञ्जनः लुब्धकेन पाय्विन्द्रियेण तेजोत्क्रान्तस्य दुःखप्राप्ते र्लुब्धकसाम्यं तेन समन्वितः वैशसं नारकं दुःखं याति॥ ५३॥

अमीषां पौराणां पुर्याः सम्बन्धिनां द्वाराणां मध्ये उभौ द्वौ पादपाणी अधावङ्गौ निर्वाक्पेशस्कृतौ, वाक्शब्देनाऽत्र वागिन्द्रियाधिष्ठानं मुखरूपं छिद्रं लक्ष्यते निश्छिद्रपेश स्कृत्साम्या न्निर्वाक्पेशस्कृता वित्युच्येते। पेशस्कृन्नामा हि कीटविशेषः स्वापाना न्निस्सृतै स्तन्तुभिः स्वनिवासभूतं करण्डं निर्माय स्वनिर्ग मनद्वारं तन्मुखमप्यज्ञानेन पिधाय तत्रैव विनश्यति। तद्वत्पाणि पादयो र्निश्छिद्रत्वात् ज्ञानाभावाच्च तौ निर्वाक्पेशस्कृता वित्युच्येते। ताभ्यां द्वाभ्यां मक्षण्वता मिन्द्रियवतां देहाना मधिपतिः पुरञ्जनः याति गच्छति करोति कर्म करोति च॥ ५४॥

अन्तः पुरं हृदयं गतः[3] प्रविष्टः ''हृदि ह्ययमात्मा प्रतिष्ठितः'' (प्रश्न.उ. 3-6) इति श्रुतेः। य पुरञ्जनः यदा विषूचीनेन मनसा, विष्वगञ्चति सर्वतोव्याप्रियत इति विषूचीन मिति व्युत्पत्तेः, समन्वितो भवति तदा जाया बुद्धिः आत्मजा इन्द्रियवृत्तयः ताभ्यः उद्भवं मोहादीना मन्यतमं याति [ मोहप्रसादहर्षाः तमस्सत्त्व रजः कार्याणि मनोगुणाः। अत्र त्वगिन्द्रियस्यानुक्तिः सर्वेष्वन्तर्भावात्॥ ५५॥

एवमिन्द्रियस्थानविषयाणां गौणनामानि कार्याणि चाभिधाय मनः पर्यन्त सर्वेन्द्रिययुक्तस्य जीवस्य[4] बुद्धिपारवश्य माह - **एवमिति**। अज्ञ : अत एव काम प्रवणम्[5] आत्मा मनो यस्य, कर्मसु कामसाधनेषु कर्मस्वासक्तः, अत एव दैवेन वञ्चितः, महिषी बुद्धिः यद्यदीहेत व्याप्रियेत यद्यच्छब्दादिविषयं प्रति इन्द्रियाणि प्रवर्तयतीत्यर्थः। तत्त देवान्ववर्तत अनुवृत्तवान्[6]॥ ५६॥

अनुवर्तनमेवोपपादयति - **क्वचिदिति** चतुर्भिः[7]। पिबन्त्यां पाने व्यापृतवत्यां[8] बुद्धौ पिपासा मुत्पादयन्त्यां सत्या मित्यर्थः। मदविह्वलः [9-]मदपरवश स्सन्[-9] मदिरां पिबति, एव मुत्तरत्राऽपि द्रष्टव्यम्। अश्नत्यां भुञ्जन्त्यां, [10-]जक्षत्यां चर्वन्त्याम्[-10]॥ ५७-५८॥

---

1. A, B, T ग्रामकं 2--2. W omits 3. W omits गतः 4. A, B, T omit जीवस्य 5. A, B, T ⁰णः 6. W ⁰वर्तितवान 7. W omits चतुर्भिः 8. A, B, T व्याप्रियन्त्यां 9--9. W omits 10--10. W भक्षयन्त्यां चरन्त्याम्

**विज.** पुर्या वामकर्णलक्षणा देवभू र्नाम द्वाः स्थिता, प्रजादिरूपेण क्रीडादिगुणोपेतत्वा द्देवः पितृगणः प्रियो भवत्यस्य श्राद्धा दिकर्तुरिति तेनोत्तरेण वामकर्णलक्षणद्वारेणो त्क्रान्तः पुरञ्जनः उत्तरपाञ्चाल मूर्ध्वलोकप्राप्तिहेतुत्वा दुत्तारः उत्तरन्ति वितरन्ति ददती त्युत्तराः पितर स्तेषां लोकलक्षणं राष्ट्रं याति। अत्राऽपि पूर्वोक्तेन सह्वयोपेतः पुत्रलक्षणं पुरं जनयतीति पुरुषप्रजननकर्मा लोको जीवः उत्तर मुत्कृष्टं पाञ्चालं प्रवृत्तिशास्त्रमिति वा, अन्यस्तु पूर्वोक्त एव। किमेत त्प्रतीतार्थं परित्यज्य व्यत्यस्य कथने कारण मिति चे दुच्यते- ''दक्षिण श्रोत्रमार्गेण देवलोकं व्रजत्यसौ। वाम श्रोत्रेण पितॄणा मिति वेदविदो विदुः'' (प्रवृत्तितन्त्रे) इति प्रमाणम्॥ ५१॥

असुरजनहितत्वा दासुरी नाम पश्चात् द्वाः शिश्नलक्षणाऽस्ति, तया द्वारा ग्राम्यकं नाम मैथुनकं सुखं विषयं याति अनुभवति। दुष्टो मदो यस्य स तथा तेन, उपस्थेन्द्रियेण सहितः असूना मिन्द्रियाणां रतिहेतुत्वा दासुरीति वा, सुखहेतुत्वा द्वा (अ) सता मपि ग्राह्यम्॥ ५२॥

निर्गच्छत्यस्मा त्पुरीषलक्षणमलमिति निर्ऋति र्नामाऽधो द्वाः गुदलक्षणं छिद्रम्, वैशसं पुरीषोत्सर्गलक्षणं विषयं पापं हिंसालक्षणनरकं वा। लुब्धकेनाऽर्वागिन्द्रियेण कृच्छ्रेण मलमोचना देषा संज्ञा॥ ५३॥

अमीषां द्वाराणां मध्ये उभौ निर्वाक्पेशस्करौ पादो हस्त श्चान्धौ ज्ञानशून्यौ भवतः। निर्गतं वाक्यं यस्मात् स निर्वाक्यः पादः, कर्तुः पुरुषस्यो पकरण भूतत्वा दुपस्करो हस्तः 'हस-आदान' इति धातो रादातृत्वात्। अक्षाणीन्द्रियाणि विद्यन्ते येषां तेऽक्षण्वन्तो जीवा स्तेषां पतिः पुरञ्जन स्ताभ्यां [1-]पादहस्ताभ्यां[-1] याति करोति चे त्यन्वयः॥ ५४॥

क्वचित् हृदयाख्यान्तः पुरं गतो विष्वक् सर्वतोऽञ्च तीति विषूचि मन स्तेन सहितः स्वयं पुरञ्जनो जायात्मजेभ्य उद्भवो जन्म यस्य स तथा, तमो मोहाद्यन्यतमं याती त्यन्वयः। जाया भक्ति रात्मजो ज्ञानं भक्तिज्ञाने तज्ज्ञानादुत्पन्नं प्रसीदत्यनेनेति प्रसादः परमानन्दः मुह्यत्यनेनेति मोहो निरयः, हृष्यत्यनेनेति हर्षः स्वर्ग स्तान्॥ ५५॥

इदानीं मसद्बुद्धेः प्रकारं दर्शयति - **एव** मिति। ग्राम्यकर्मसु काम्यन्त इति कामा विषया स्तेष्वात्मा मनो यस्य स तथा वञ्चितो देवेनेति शेषः। अबुधो विवेकशून्यः महिषी बुद्धिलक्षणा मतं हिनस्तीति महिषी, अन्यत्र मतं ददातीति महिषी। यद्यत्कर्म कारयितु मीहेत तत्तत्कर्मान्ववर्तत अन्वकरो देव॥ ५६॥

तत्किम्? तदाह - **क्वचिदि**ति। पिबन्त्यां पातुमिच्छन्त्या मित्याद्यूह्यम्। अनेन सद्बुद्धि रपि ध्वनितेति ज्ञातव्यम्॥ ५७-५८॥

1--1. A omits

**क्वचि द्वावति धावन्त्यां तिष्ठन्त्या मनुतिष्ठति।**

**अनुशेते शयानाया मन्वास्ते क्वचि दासतीम्॥ ५९॥**

***क्वचिच्छ्रुणोति शृण्वन्त्यां पश्यन्त्या मनुपश्यति।**

**क्वचि जिघ्रति जिघ्रन्त्यां स्पृशन्त्यां स्पृशति क्वचित्॥ ६०॥**

**[1]क्वचिच्च शोचतीं जाया मनुशोचति दीनवत्।**

**अनु [2]हृष्यति [3]हृष्यन्त्यां [4]मुदिता मनुमोदते॥ ६१॥**

**विप्रलब्धो महिष्यैवं सर्वप्रकृतिवञ्चितः।**

**नेच्छन्ननुकरो त्यज्ञः क्लैब्या त्क्रीडामृगो यथा॥ ६२॥**

इति श्रीमद्भागवते महापुराणे अष्टादश साहस्र्यां

श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां

चतुर्थस्कन्धे पञ्चविंशोऽध्यायः॥ २५॥

**श्रीध. क्वचिदिति।** आसतीम् आसीनाम्॥ ५९, ६०, ६१॥

**विप्रलब्ध इति।** सर्वा असङ्ग[5]त्यादिलक्षणा प्रकृतिः स्वभावो वञ्चितो यस्य, सर्वया प्रकृत्या वञ्चित इति वा, नेच्छन्ननिच्छन्, क्लैब्यात् [6-]पारवश्यात्[-6] [7-]क्रीडामृगो गृहमर्कटः[-7]॥ ६२॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीश्रीधरस्वामि विरचितायां भावार्थदीपिकायां

व्याख्यायां पञ्चविंशोऽध्यायः॥ २५॥

**वीर.** आसती मासीना मासिषां जनयन्ती मनुसृत्याऽऽस्ते॥ ५९॥

एवं शोचती मनुशोचतीत्यादे रर्थः॥ ६०-६१॥

---

* This verse is not found in Ms, W Edns. 1. V कर्हिचित् 2. M, Ma घृष्टति संघृष्टां 3. V संदृष्टां 4. W स्पृशन्त्यां स्पृशति क्वचित्।
5. A, B, J, Va °त्वा° 6--6. V omits 7--7. B, J, V, Va omit

एवं महिष्या बुद्ध्या विप्रलब्धः विशेषेण विमोहितः, अत एव सर्वा प्रकृति रक्रोधाद्यात्मस्वभावः वञ्चिता यस्य सः, त्यक्तस्वभाव इत्यर्थः, नेच्छन्ननिच्छन्नपि क्लैब्यात् पारवश्यात् अनुकरोति, यथा क्रीडार्थो मृगः ॥ ६२ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवत चन्द्रचन्द्रिकायां

व्याख्यायां पञ्चविंशोऽध्यायः ॥ २५ ॥

**विज.** तथा हि महोऽस्याऽस्तीति महि ब्रह्म तस्मिन् नित्योत्सवसमुद्रे हरौ सीदति विषयीकृत्य वर्तत इति महिषी सद्बुद्धि स्तया विशेषेण प्रलब्धः प्राप्ताभीष्टकार्यलाभः सर्वप्रकृतिवञ्चितसर्वस्त्रीजनस्वभावः अं विष्णुं जानाती त्यज्ञः, सदबुद्ध्यधीनत्वात् क्रीडामृगत्वमपि युक्तम् ॥ ५९, ६०, ६१, ६२ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां

टीकायां पञ्चविंशोऽध्यायः ॥ २५ ॥



# षड्विंशोऽध्यायः

**नारद उवाच**

**स एकदा महेष्वासो रथं पञ्चाश्व माशुगम्।**
**[1] द्वीषं द्विचक्रमेकाक्षं त्रिवेणुं पञ्चबन्धुरम्॥ १॥**

**एकरश्म्येकदमन मेकनीडं द्विकूबरम्।**
**पञ्चप्रहरणं सप्तवरूथं पञ्चविक्रमम्॥ २॥**

**[2] हैमोपस्कर मारुह्य स्वर्णवर्माक्षयेषुधिः।**
**एकादशचमूनाथः पञ्चप्रस्थ मगाद्वनम्॥ ३॥**

**चचार मृगयां तत्र दृप्त आत्तेषुकार्मुकः।**
**विहाय जाया मतदर्हां मृगव्यसनलालसः॥ ४॥**

**आसुरीं वृत्ति माश्रित्य घोरात्मा निरनुग्रहः।**
**न्यहनन्निशितैर्बाणै र्वनेषु वनगोचरान्॥ ५॥**

## श्री श्रीधरस्वामिविरचिता भावार्थदीपिका

षड्विंशे मृगयाव्याजा त्स्वप्नजागरणोक्तितः[3]। सद्बुद्धित्यागयोगाभ्यां संसृति स्सा प्रपञ्च्यते॥

तदेव मात्मन उपाधिकृतां सुषुप्तावस्थां जाग्रदवस्थाञ्चोक्त्वा इदानीं स्वप्नावस्था माह - **स एकदेति** दशभिः। महानिष्वासो धनुः कर्तृत्वभोक्तृत्वाद्यभिनिवेशो यस्य सः, रथ मारुह्य पञ्चप्रस्थं वन मगादिति तृतीयेनाऽन्वयः। रथं तदानीमेव विधृतं स्वप्नदेहम्। जाग्रद्देहस्य शतसंवत्सरोपभोग्यपुरत्वे नोक्तत्वात्। पञ्च ज्ञानेन्द्रियाण्यश्वा यस्य, आशुगं शीघ्रगतिम्। द्वे अहन्ताममते ईषे दण्डिके यस्य, द्वे पुण्यपापे चक्रे यस्य, एकं प्रधान मक्षो यस्य, त्रयो गुणा वेणवो ध्वजा यस्य; पञ्च प्राणा बन्धुराणि बन्धनानि यस्य॥ १॥

---

1. M, Ma, Ms द्विकर्मच॰ 2. M, Ma, Ms हे॰ 3. V ॰भिः

**एकेति**। एकं मनो रश्मिः प्रग्रहो यस्य, एकाबुद्धि र्दमनः सूतो यस्य, एकं हृदयं नीडं रथिन उपवेशस्थानं यस्मिन्, [1-]द्वौ शोकमोहौ कूबरौ युगबन्धनस्थानं यस्य,[-1] पञ्च शब्दादयो विषयाः प्रहियन्ते प्रक्षिप्यन्ते यस्मिन्। अस्य व्याख्यानं भविष्यति- पञ्चे-न्द्रियार्थप्रक्षेप इति। सप्त धातवो वरूथा रक्षार्थं चर्माद्यावरणानि यस्य, पञ्च कर्मेन्द्रियाणि विक्रमा गति प्रकारा यस्य॥ २॥

**हैमेति**। हैमोपस्करं सौवर्णाभरणम्। स्वर्णवर्मा, वर्मकवचम्। रजोगुणावृतः। अक्षयेषुधिः। इषुधि र्निषङ्गः। अनन्तवासना [2]युक्ताहङ्कारोपाधिः। एकादशोमनोरूपश्चमूनाथः सेनापति र्यस्य। वासनामयस्य मनसः [3]प्रग्रहत्वात्सङ्कल्पविकल्पात्मकस्य बृहद्बलत्वेन वक्ष्यमाणस्य चमूनाथत्व मिति [4]भावः। पञ्चशब्दादयो विषयाः प्रस्था स्सानवो यस्मिन् तद्वनं भजनीयं देश मगात्॥ ३॥

**चचारेति**। आत्त,गृहीता इषवो राग[5]द्वेषादिरूपाः कार्मुकञ्च भोगाद्यभिनिवेशरूपं येन, जायां विवेकवतीं बुद्धिं विहाय अतदर्हां त्यागानर्हाम्। त्यागे हेतुः मृग्यन्त इति मृगा विषयाः तेषु व्यसनं भोगासक्तिः तेन लालसा अतिस्पृहा यस्य॥ ४॥

**आसुरी** मिति। बाणै रागादिभिः वनेषु भजनीयदेशेषु वनगोचरान् भजनीयविषयान् न्यहनत्। आत्मसात्कृतवान्। [6-]आसुरीं राजसीम्।[-6] कथापक्षेतु स्पष्टमेव॥ ५॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं सुषुप्त्यवस्थां [7-]जाग्रदवस्थां[-7]चाऽभिधाय इदानीं स्वप्नावस्थामाह- स इतिदशभिः। स पुरञ्जन एकदा सुषुप्त्यनन्तरं महानिष्वासो धनुः कर्तृत्वभोक्तृत्वाद्यभिनिवेशो यस्य सः, रथ मारुह्य पञ्चप्रस्थं वन मगा दिति तृतीयेनाऽन्वयः। रथ शब्देनाऽत्र शरीरं विवक्षितम् "आत्मानं रथिनं विद्धि शरीरं रथ मेव च बुद्धिन्तु सारथिं विद्धि मनः प्रग्रह मेव च॥ इन्द्रियाणि हयानाहुः" (कठ .उ.3.3) इत्यादिश्रुत्या उपासननिर्वृत्तौ शरीरादीनां रथादि भावेनाऽन्यत्र निरूपितत्वात्। तच्च शरीरमात्रौचित्या त्स्वाप्नं विवक्षितम्। तद्धि तदानीमेव स्वप्नद्रष्टृपुण्यपापानुरोधेनेश्वरसृष्टं भवति। जाग्रद्देहस्य तु शतसंवत्सरोपभोग्यपुरत्वेनोक्तत्वात्। रथं विशिनष्टि। [8]पञ्चाश्वं पञ्चज्ञानेन्द्रियाणि [9-]चक्षुरादीनि[-9] अश्वा यस्य तम्। आशुगं शीघ्रगम्। अनेनाऽपि स्वाप्न मेव शरीर मत्र विवक्षितमित्यवगम्यते। जाग्रद्देहस्याऽऽशुगत्वासम्भवात्।[10] द्वावहङ्कारममकारौ ईषे दण्डिके यस्य तम्। द्वे पुण्यपापे चक्रे यस्य तम्। [11]तथैकं प्रधानमक्षो यस्य, त्रयो गुणाः सत्त्वादयो वेणवो ध्वजा यस्य तम्। पञ्चप्राणा बन्धुराणि बन्धनानि यस्य।[12]॥ १॥

---

1--1. Va omits 2. B, J, V, Va omit युक्त 3. A, B, J, Va °त्वं 4. A, B, J, Va विभागः 5. A, B, J, Va omit द्वेष 6--6. B, J, V, Va omit
7--7. W omits 8. W omits पञ्चाश्वं 9--9. W omits 10. A, B, T add इति भावः 11. W omits तथा 12. A, B, T add तथाभूतम्

[1-]पुनः कीदृशम्[-1] ? एकं मनो रश्मिः प्रग्रहो रज्जुर्यस्य तम्। एका बुद्धि र्दमन स्सारथि र्यस्य, एकं हृदयं नीडं रथिन उपवेशस्थानं यस्य, द्वौ शोकमोहौ कूबरं युगबन्धनस्थानं यस्य, पञ्च शब्दादयो विषयाः, प्रह्रियन्ते प्रक्षिप्यन्ते आपात्यन्ते यस्मिन् तम्। सप्त धातवो वरूथाः चर्मांद्यावरणानि यस्य तम्। पञ्च कर्मेन्द्रियाणि विक्रमा गतिप्रकारा यस्य[2]॥ २॥

हैमोपस्करं सुवर्णाभरणं स्वर्णाभरणविशिष्टस्वाप्नदेहसंसृष्टिसम्भवाभिप्रायेण हैमोपस्कर मित्युक्तम्, कथासौन्दर्याय वा। एव मनुपयुक्तं कथा सौन्दर्यायेति द्रष्टव्यम्। स्वर्णमयं वर्म कवचं रजोगुणवृत्ति र्यस्य, अक्षयेषुभिः इषवो बाणा धीयन्तेऽस्मि न्निति इषुधिः निषङ्गः अक्षय इषुधि रनन्तवासनाश्रयोऽहङ्कारो यस्य सः तत्र अबुद्धिपूर्वकप्रवृत्तिहेतुः संस्कारविशेषो वासना। सा च अज्ञानवासना, कर्मवासना, प्रकृतिसम्बन्धवासना चेति त्रिप्रकारा। अविद्या नाम ज्ञानानुदयान्यथाज्ञानविपरीतज्ञानरूपेण त्रिविधमज्ञानम्। प्रकृतिसम्बन्धः स्थूलसूक्ष्मरूपाचित्सम्बन्धः। स च देवमनुष्यादिदेहभेदेन बहुविधः। सजातीयकर्मारम्भेच्छा रुचिः। सा च विषयभेदा द्बहुप्रकारा। पुण्यापुण्यरूपेण द्विविधं कर्मेति ज्ञेयम्। एकादशेन्द्रियवृत्त्यात्मकसेनापतिः। पञ्च शब्दादयो विषयाः, प्रस्थाः सानवो यस्मिन् तद्वनं भोगस्थानमगात्॥ ३॥

तत्र वने दृप्तः गर्वितः स्वाप्नदेहपरवश इत्यर्थः। आत्ताः स्वीकृता इषवः वासनारूपाः कार्मुकं[3] कर्तृत्वाद्यभिनिवेशो यस्य, अतदर्हां त्यागानर्हां जायां ध्या[4]त्मिकां सात्त्विकीं बुद्धिं विहाय। त्यागे हेतुः - मृग्यन्ते इति मृगाः शब्दादिविषयाः तेषु, यद्व्यसन मलाभनिमित्तं दुःखं तेन लालसः अन्वेषणासक्तः॥ ४॥

आसुरीं तामसीं वृत्तिं बुद्धि माश्रित्य घोरात्मा घोर आत्मा चित्तं यस्य सः, रजोगुणकार्यक्रोधाविष्टः का[5]मादिविरोधिषु क्रुद्धचित्त इत्यर्थः। अत एव निरनुग्रहः विरोधि ष्वनुग्रहरहितः निशितैः कार्यक्षमैः विषयसान्निध्यापादकैरिति यावत्। बाणैः कर्म वासनारूपैः शरैः वनेषु भोगस्थानेषु वनगोचरान् वनगोचरमृगतुल्यान् दैवोपसादिता नित्यर्थः। न्यहनत् आत्मसा त्कृतवान् कथापक्षेतु स्पष्ट मेव॥ ५॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अधुना जाग्रदवस्थाप्रकारकथनेन संसारप्राप्तिं कथयन् जाग्रदवस्थाप्रवेशं तावदाह- **स एकदेति**। स पुरञ्जनः एकदा स्वप्नविषय भोगप्रापककर्मक्षये जाग्रद्भोगप्रापककर्मागमने सति पञ्चेन्द्रियद्वारेण सूनार्थ मात्मा प्रतिष्ठते यस्मिन्निति पञ्चप्रस्थं वनं जाग्रद्विषय लक्षणकान्तार मगा दनुबभूवे त्यग्रेणान्वयः। किं कृत्वा ? कथम्भूत इति तदाह- महेष्वास इति। मह्यत इति महः प्रणवः, स

1--1. W omits 2. A, B, T add तथाभूतम् 3. T omits कार्मुकं 4. A, B, T विवेकात्मिकां 5. A, B, T omit स आदि

एवेष्वासो धनु र्यस्य स तथा ; यथार्थकथन मेतत्। अन्यत्र महांश्चाऽसौ इष्वासोयस्येति स्वर्णवर्णलक्षणं रजोगुणाख्यं कर्म यस्य स तथा। अक्षये प्रवृत्तिनिवृत्तिलक्षणे इषुधी यस्य स तथा। एकादशेन्द्रियलक्षणायाश्चम्वा नाथः पञ्चेन्द्रियाण्येव अश्वा यस्य त तथा, तम्। आशु गच्छति अस्ति जायते इत्यादिविकारं परिणामलक्षण मित्याशुग स्तम्, द्वे पुण्यपापलक्षणे कर्मणी एव चक्रे यस्य स तथा तम्, एकः सूत्रात्मा वायुरक्षो यस्य स तथा तम्, त्रयः सत्त्वादिगुणा एव वेणवो ध्वजा यस्य स तथा तम्, पञ्च प्राणा एव विनतोन्नत प्रदेशा बन्धुराख्या यस्य स तथा तम्। अनेन प्राणसञ्चारहेतवो नाडीविशेषाः कथ्यन्ते आधारो वा॥ १॥

एको मन आख्यो रश्मिः प्रग्रहो यस्य स च एको बुद्ध्याख्यो दमन स्सारथिर्यस्य स चैकरश्म्येकदमनः तम्। ''बुद्धि न्तु सारथिं विद्धि मनः प्रग्रहमेव च (कठ.उ) प्राणा बन्धुर मुद्दिष्टा गुणास्सत्त्वादयो ध्वजाः। मूलवायु रक्षसंज्ञश्चक्रे द्वे पुण्यदुष्कृते इन्द्रियाण्यश्वसंज्ञानि हृदयं नीड मुच्यते। शीतोष्णलक्षणौ द्वौतु कूबरौ शब्दपूर्वकम्। पञ्चप्रहरणं सप्तत्वगाद्या गुप्तयः स्मृताः। पृथिव्याद्या विक्रमाख्या देहाख्यो रथ उच्यते ''(अध्यात्मयोगे) इत्यध्यात्मयोगे। एकं हृदयलक्षणं नीडं यस्य स तथा तम् द्वौ शीतोष्णलक्षणौ कूबरौ युगन्धरौ यस्य स तथा तम्, पञ्चाना मिन्द्रियाणां पञ्चशब्दादिविषयाणां च सन्निकर्षलक्षणानि प्रहरणानि यस्मिन् स तथा तम्। पञ्चसूना साधनानि प्रहरणानि यस्मि न्निति वा। सप्त त्वगाद्या धातवो वरूथो गुप्ते र्यस्य स तथातम्, पञ्चानां भूतानां विक्रमः प्रभावो यस्मिन् स तथा तम्॥ २॥

हैमोपस्करं मुकुटकुण्डलाभरणैः स्वर्णविकारै र्भूषितं रथं, रथ गता विति धातोः, ज्ञान लक्षणगमनसाधनं देहे मारुह्याधिष्ठायेति, अक्षयेषुधि रनन्तवृत्त्याऽऽलम्बमानान्तः करणो पाधिरिति वा। इषून् रागादीन् अस्यति निरस्यति ग्लापयतीति इष्वासो ज्ञानलक्षणः, स च महान् यस्य स इति वा॥ ३॥

इषवश्च कार्मुकञ्च आत्तं गृहीतं येन स तथा, रागाद्या इषवः कार्मुकं विवेककार्यं स्वकृत्यं मुञ्चत्यनेनेति निरुक्त्या। तत्र जाग्रद्विषयकानने मृगयां शब्दादिभोगलक्षणां चचार बुभुज इत्यन्वयः। अतदर्हां त्यागायोग्यां सुद्बुद्धिलक्षणां विहाय असद्बुद्धिलक्षणाञ्च आदाय इति शेष इति विवेकः। मृग्यन्त इति मृगाः विषयाः तेषां व्यसने भोगलक्षणे लालस उत्सुकः, अन्यत्र हरिणानां हिंसनाय उत्कटव्यापारवान्॥ ४॥

आसुरीं हिंसालक्षणां वृत्तिं घोरात्मा विषयप्रसङ्गनिमित्तसंसारभयरहितः निर्गतोऽनुग्रहो दयालक्षणो यस्मात्स तथान्यहनत्, हन हिंसागत्योरिति, नितरा मगच्छ दसेवतेत्यर्थः। निशितै र्बाणैः कपटमनोवृत्तिभिः वनेषु जाग्रद्विषयप्रदेशेषु वनगोचरान् तत्रत्यशब्दादि विषयलक्षणान् मृगान्॥ ५॥

तीर्थेषु[1] प्रतिदृष्टेषु राजा[2] मेध्यान् पशून् वने।
यावदर्थमलं लुब्धो हन्या दिति नियम्यते ॥ ६ ॥

य एवं कर्म नियतं विद्वान् कुर्वीत[3] वा न वा।
कर्मणा तेन राजेन्द्र ज्ञानेन न स लिप्यते ॥ ७ ॥

अन्यथा कर्म कुर्वाणो[4] मानाऽऽरूढो[5]ऽनुबध्यते।
गुणप्रवाहपतितो नष्टप्रज्ञो व्रजत्यधः ॥ ८ ॥

तत्र निर्भिन्नगात्राणां चित्रवाजै श्शिलीमुखैः।
विप्लवोऽभू दुःखितानां दुस्सहः करुणात्मनाम् ॥ ९ ॥

शशान् वराहान् महिषान् गवयान् रुरुशल्यकान्।
मेध्या[6] नन्यांश्च विविधान् विनिघ्नन् श्रम[7]मध्यगात् ॥ १० ॥

**श्रीध०** नन्वासुरीं वृत्ति माश्रित्येति किमिति मृगया निन्द्यते? कथापक्षे ताव द्राज्ञो विहितैव सा। अध्यात्मपक्षेऽपिजीवस्य विषयभोगो विहित एव, [8-]अन्यथा शरीरनिवहोऽपि न स्यात्[-8] इत्याऽऽशङ्क्याऽऽह- **तीर्थे**ष्विति त्रिभिः। अयं भावः - न हि मृगया विधीयते रागप्राप्तत्वात्। किन्तु नियम्यते, प्रवृत्तिः सङ्कोच्यते। नियममेवषड्विधं दर्शयति। यद्यल मत्यर्थं लुब्धो [9-]रागासक्तः[-9] हन्या त्तर्हि तीर्थेषु श्राद्धादिष्वेव, तत्राऽपि राजैव, मेध्यानेव, वन एव, यावदुपयोग मेवेति। एवं जीवस्य विषयसेवाऽपि यावदुपयोगं न यथेष्टमिति नियम एवेत्यर्थः ॥ ६ ॥

अतो नाऽऽवश्यकत्व मित्याह - **य** इति। एवं नियमं कर्मविद्वान् तेनेत्युपलक्षणम् तेनाऽन्येनवाकर्मणैव मनुष्ठितेन यज्ज्ञानं भवति, तेन ज्ञानेन हेतुना सोऽनुष्ठाता न लिप्यते ॥ ७ ॥

**अन्यथेति** - अन्यथा नियमोल्लङ्घनेन अन्तः करण शुद्ध्यभावात् कर्तृत्वाभिमान मारूढः कर्मभिरनुबध्यते। ततश्च गुणप्रवाहे पतितोऽधो व्रजति ॥ ८ ॥

---

1. Ma, Ms श्रुति 2. M, Ma, Ms मेध्यप॰ 3. A, B, G, I, J, T, V मानवः 4. M, Ma, Ms णः कामरू॰ 5. A, B, G, I, J, M, Ma, Ms, T ॰ढो नि॰ 6. V ॰नन्या नमेध्यांश्च 7. V ॰मध्य॰ 8--8. B, J, V, Va omit 9--9. A, B, J, Va रागी सन्।

प्रासङ्गिकं परिसमाप्य पुनर्मृगया मेवाऽनुवर्णयति - **तत्रेति**। चित्रावाजाः पक्षा येषां तैः विप्लवो नाशः करुणात्मनां कृपालूनां दुस्सहः॥ ९,१०॥

**वीर०** नन्वासुरीं वृत्तिमाश्रित्येति मृगयानिन्दा न युक्ता, कथापक्षे राज्ञ स्तस्याः विहितत्वात्। अध्यात्मपक्षेऽपि दैवोपसादितविषयभोगो विहित एवे त्यत्राऽऽह - **तीर्थे** ष्विति त्रिभिः। मृगयाया रागप्राप्तत्वान्न सा विधीयते; किन्तु नियम्यते मृगयाप्रवृतिः सङ्कोच्यते इत्यर्थः नियम मेव षड्विध मुपदर्शयति- लुब्धोरागीसन् यदि निहन्यात्, तर्हि तीर्थेषु[1] श्राद्धादिष्वेवनिमित्तेषु, तत्राऽपि प्रतिदृष्टेषु विहितमांसकेष्वेवेति। तत्राऽपि राजैव, मेध्यानेव, वन एव, यावदुपयोगमेवेति। अध्यात्मपक्षेऽपिजीवस्य यावदुपभोग मेव विषयभोगो नियम्यत इति भावः॥ ६॥

य एवं विद्वान् हिंसाया विषय भोगस्य च रागप्राप्ततां तन्नियमञ्च विद्वान् कुर्वीत। हिंसा विषयभोगञ्च कुर्यान्न वा कुर्याद्वा रागप्राप्तत्वेनाऽऽवश्यकत्वाभावा दिति भावः। रागप्राप्तस्य [2]नियमेन हि पक्षे प्रत्यवायाभावमात्रं क्रियते नाऽदृष्टम्। अतः सुतरां रागप्राप्तस्यत्यागे न प्रत्यवाय इति नवेत्युक्तम्। तेनैवं नियतेन कर्मणा ज्ञानेन एवं कृत्नेन कर्मणा यज्ज्ञानं भवति तेन हेतुना स कर्ता न लिप्यते, पापै रिति शेषः। यद्वा स विद्वान् ज्ञानेन रागप्राप्तानां त्याज्योपादेयादिविवेकज्ञानरूपेण हेतुना कर्मणा अनादिपापरूपकर्मणा न लिप्यते॥ ७॥

अन्यथा अनियतंकर्म कुर्वाणः अहम्ममाभिमानारूढः कर्मभि रनादि पुण्यापुण्यकर्मभि रनुबध्यते वशीक्रियते ततः कर्म पारवश्यात् गुणप्रवाहे संसारे पतितः नष्टदेहात्मविवेकः अधोनरकं व्रजति॥ ८॥

एवं प्रासङ्गिकं परिसमाप्य प्रकृतां मृगया मनुवर्णयति **तत्रेति**। चित्रवाजाः नानाविधवासनारूपा विचित्रपक्षाः येषां तैः वासनाभि रुपोद्वलितै रित्यर्थः। शिलीमुखैः पुण्यापुण्यकर्मभिर्हेतुभूतैः निर्भिन्नानि अनुभवेन जीर्णानि गात्राण्यवयवा येषां तेषां मृगाणां विषयाणां विप्लवो नाशः करुणात्मनां कृपालूनां दुस्सहोऽभूत् कर्मभिरनुजीर्णावयवान् विनष्टान् शब्दादिविषया ननुसन्दधतां सर्वभूतसुहृदां ज्ञानिनां विषयविप्लवो मनसाऽपि स्मर्तुमसह्योऽभूदित्यर्थः। कथापक्षे स्पष्टोऽर्थः॥ ९॥

**शशान् वराहा** नित्यादिकथनं शब्दादिभेदेन [3-]तदवान्तरभेदेन[-3] विषयवैचित्र्यज्ञापनाय। कथापक्षेतु तत्सौन्दर्याय। मेध्यान् विहितान् अन्यानविहितांश्च विषयान् विनिघ्न न्नात्मसा त्कुर्वन् व्यापृतकरणत्वाच्च श्रम मध्यगात् प्राप्तवान्॥ १०॥

---

1. A, B, T °षु तान्नि° 2. A, B, T omit नियमेन 3--3. A, B, T omit

**विज०** ननु राज्ञो हि मृगया [1-]निष्ठात्मया पशु[-1] हिंसया न दोषः ''राजा मृगार्थी मृगयांचरन् दोषैर्न लिप्यते'' इति, ''अग्नीषोमीयं पशुमालभेत'' इत्यादौ विहितत्वात् कथ मासुरीं वृत्ति माश्रित्येति निन्द्यते इति तत्राऽऽह **तीर्थे ष्विति**। श्रुतिदृष्टेषु श्रुतिस्मृतिविहितेषु तत्तत्स्थानेषु राजा स्वविहिताचारनिष्ठया शोभमानो मेध्यान्पशून् अजमृगप्रभृतीन् यावदर्थं यावत्प्रयोजनं लुब्धः फलार्थीहन्यादित्यलं नियम्यते, विधिवाक्यै रिति शेषः। अध्यात्मेति प्रमाणकेषुतीर्थेषु शास्त्रेषु विहिता न्मेध्यान् मेधयोग्यान् ज्ञानयोग्यान् पशून् गोसधर्मान् रमणीयान् विषयान् वने विषयव्यवहारेवर्तमानो लुब्धो गृघ्नुः यावता देहावस्थितिः तावन्मात्रम्, अलमत्यर्थं हन्या द्रच्छेत्, सेवार्थ मिति शेषः, इति नियम्यते शिक्षाविषयीक्रियते इति। अल मिति विशेषणात् अलुब्धो लोकोपकारार्थं पशून् घ्नन् आत्मार्था दधिक मपि हनन मपि कुर्वन्न दुष्यतीति तात्पर्यं ज्ञायते। तदुक्तम् - ''उपकारः सतां येन तत्कृत्वानैव दुष्यति। अतीव निन्दित मपि बहुहिंसायुगेव वा'' (अध्यात्मे) ''अथवा ज्ञानिनः कर्म न दुष्टमपि लिप्यते'' (अध्यात्मे) इति॥ ६॥

ननु नियतकर्माकरणे ज्ञानिनोऽपि दुष्कर्मलेपः स्या दिति तत्राऽऽह - **य एवमिति**। यो नियत मनियतं वा विद्वान् जानन् एवं विविधं पुण्यं पापं वा कर्म कुर्वीत, न वा कुर्वीत स [2]ज्ञानी तेनोभयविधेन कर्मणा न लिप्यते। केन निमित्तेनेत्यत उक्तं - ज्ञाने नेति। कर्मलोपाभावे ज्ञानं कारण मित्यर्थः। तद्यथा- ''पुष्करपलाशे आपोन श्लिष्यन्ते। एव मेवंविदि पापं कर्म न श्लिष्यते (छान्द. उ.4-17-3) इति श्रुतेः। ''अथवा ज्ञानिनः कर्म न दुष्टमपि लिप्यते'' (अध्यात्मे) इति स्मृतेश्च॥ ७॥

अन्यपक्षे बाधक माह- **अन्यथेति**। अन्यथा ज्ञानाभावे अनर्थोऽपि भवतीत्याह- गुणप्रवाह इति॥ ८॥

एवं प्रासङ्गिकीं कथां समाप्य प्रकृत मनुसरति - **तत्रेति**। [3]तत्र विषयलक्षणे वने चित्रवाजैः अनेकाङ्कुरमुखाख्यपक्षोपेतैः शिलीमुखैः शिलावत् दृढमुखैः लम्पटेन्द्रियमनोवृत्तिविशेषै र्निर्भिन्नगात्राणां मृदितनानावयवानां करुणात्मनां पापनिमित्तेन मुक्ताना मस्माकं परलोकेऽपि न गति रस्तीति रुदिताना मिव स्थितानां यथाशास्त्रमुक्तानां विषयाणां विप्लवो विनाशः समाप्तिलक्षणोऽभूदित्यन्वयः। अन्य[4]च्च व्यक्तम्॥ ९॥

शशान् वराहा निति। मेध्यान् महिषा नित्यादिना तु अमेध्यान् शशा नतिशायितानन्दलक्षणान् वरणीयत्वेनाहेयान् महिषान् महितं ददातीति निरुक्त्या। सन् दान इति धातुः, तस्य ड प्रत्ययः। सकारस्य मूर्धन्यादेशः। गवयान् गतवयसः जरसं गतानिति शेषः। रुरून् रोदनहेतून्, शं सुखं विलापयतीति शल्यकान् इत्येवमादिविषयान् निघ्नन् गच्छन् भुञ्जान इत्यर्थः॥ १०॥

---

1--1. A, B सञ्जातपशुः, Ma निष्ठोत्तमादिषु 2. A, B ज्ञाता 3. A omits तत्र 4. B, M, Ma ०त्र

[1]ततः क्षुत्तृट्परिश्रान्तो निवृत्तो गृह मेयिवान्।
कृतस्ना[2]नोचिताहारः संविवेशगतक्लमः ॥ ११ ॥

आत्मान मर्हयाञ्चक्रे धू[3]पालेपस्रगादिभिः ।
साध्वलङ्कृतसर्वाङ्गो महिष्या मादधे मनः ॥ १२ ॥

तृप्तो हृष्ट स्सुदृप्तश्च कन्दर्पाकृष्टमानसः ।
न व्यचष्ट वरारोहां गृहिणीं गृहमेधिनीम् ॥ १३ ॥

अन्तः पुरस्त्रियोऽपृच्छद्विमना इव वेदि[4]षन्।
अपि वः कुशलं रामाः सेश्वरीणां यथा पुरा ॥
न तथै[5]तर्हि [6]रोचन्ते गृहेषु गृहसम्पदः ॥ १४ ॥

यदि न स्या द्गृहे माता पत्नी वा पतिदेवता ।
व्यङ्गे रथ इव प्राज्ञः को नामाऽऽसीत दीनवत् ॥ १५ ॥

**श्रीध०** तदेवं स्वप्नावस्था दर्शिता। इदानीं पुनरपि विवेकवत्या बुद्ध्या रममाणस्य पुत्रादि[7]सम्पत्तिं प्रपञ्चयिष्यन् कथासौन्दर्याय तस्याः प्रणयकुपिताया अनुनयं प्रस्तावसहित माह- **तत** इत्या[8]ऽऽरभ्य यावदध्याय समाप्ति। एयिवान् आगतः कृतं स्नान मुचि[9]त आहारश्च येन। संविवेश शय्या माश्रितः ॥ ११, १२ ॥

**तृप्त** इति। [10-]कथम्भूतः? तृप्तः बाह्येच्छारहितः, हृष्टः सन्तोषं प्राप्तः, अतएव सुष्ठु दृप्तः आत्मान मन्यं वा न जानाति सन्तोषे कारण माह- कन्दर्पेति कं स्वरूपसुखं दर्पयति प्रकटयतीति कन्दर्पः स्वापः तेनाऽऽकृष्टं मानसं यस्य स त[-10]था। गृहमेधिनीं [11-]विवेक[-11]वतीं सात्त्विकीं बुद्धिं राजस्यां बुद्ध्यां वर्तमानो नाऽपश्यत् ॥ १३ ॥

**अन्तःपुरेति**। हेवेदिषत् हे प्राचीनबर्हिः ! अन्तः पुरस्त्रियः त्वत्सखीः सेश्वरीणां स्वामिनीसहितानाम्। यथापुरेत्यादि पृथग्वाक्यम् ॥ १४ ॥

**यदीति**। व्यङ्गे चक्राद्य[12]ङ्गहीने ॥ १५ ॥

---

1. V ततस्तूरुपरि 2. W ०तो० 3. W ०प० 4. A, B, G, I, J, Ms, T ०षत् 5. V ०व हि 6. W शोभन्ते 7. A, B, J, Va सन्तति०
8. V omits आरभ्य 9. V ०ता हा० 10--10. A, B, J, Va omit 11--11. B, J, V, Va omit 12. B, J, V, Va omit अङ्ग।

**वीर०** एवं राजस्या बुद्धेः कार्यंभूतां जाग्रदवस्थां तामस्या बुद्धेः[1] कार्यभूतां स्वप्नावस्थाञ्चाऽभिधाय इदानीं विद्वान् कुर्वीतेति सूचित विवेकः कथमुदेतीति विवित्सायां प्रणयकलहनिमित्तक्रोधाविष्टप्रियानुनयकथनव्याजेन[2] संसारिणो जीवस्य विवेकात्मकसात्त्विकबुद्धेर्दौर्लभ्यं द्योतयन् "प्रवृत्तिञ्च निवृत्तिं च कार्याकार्ये भयाभये। बन्धं मोक्षञ्च या वेत्ति बुद्धिस्सा पार्थ, सात्त्विकी (भ.गी.18-30) इत्युक्तसात्त्विक बुद्ध्यलाभदशायां दैवा त्तदलाभनिमित्तपरितापोदयं ततस्तल्लिप्सां तत स्तदुचितसाधनै स्तल्लब्धिञ्च द्योतयन् कथापक्षे तत्सौन्दर्याय तां बुद्धिं महिषीत्वेन इन्द्रियवृत्ती रन्तः पुरस्त्रीत्वेन परिकल्प्य तदनुनयप्रकारमाह- **तत** इत्यादिना। क्षुत्तृड्भ्यामशनायापिपासाभ्यां परिश्रान्तः स्वाप्नशरीरेऽपि क्षुत्तृषो रनुवृत्ते रेव मुक्तम्। ततः स्वाप्नविषयानुभवरूपमृगयाया निवृत्तः गृहं पुरत्वरूपितजाग्रद्देहगतहृदयस्थान मेयिवान् प्राप्तः। ततः कृतं स्नान मुचित आहारश्च येन सः, अतएव गतश्रमः सम्य गुपविष्टवान्॥ ११॥

ततो धूपादिभि रात्मान मर्हया ञ्चक्रे ततः साधु सम्यगलङ्कृतानि सर्वाण्यङ्गानि येन सः, महिष्यां मन आदधे। कृतस्नानो चिताहार इत्यनेन सुखजनक विवेकात्मक सात्त्विकबुद्ध्युत्पत्ति प्रारम्भावस्थायाः सुखकरत्वं सूच्यते। स्नानाऽऽहारधूपालेपनस्रग्भूषणाद्यलङ्कारै र्जातानन्द इव महिष्यां विवेकात्मिकायां बुद्धौ मन आदधे निहितवा नित्यर्थः। कथापक्षे तु स्पष्टोऽर्थः॥ १२॥

उचिताहारेणतृप्तः धूपालेपस्रगादिभिर्हृष्टः सुदृप्तः[3] तृप्तिवृष्टिभ्यां सुतरां दृप्तः अत एव च कन्दर्पेणाऽऽकृष्टं वशीकृतं मानसं यस्य सः, गृहमेधिनः स्वस्य सम्बन्धिनीं गृहिणीं गृहमस्या अस्तीति गृहिणी[4], तां स्वाश्रय एव स्थितां वरारोहां[5] वरस्त्रियं न व्यचष्ट न ददर्श यथा कामपरवशः स्वगृहे एव क्वचिदन्तर्हितां प्रियां नाऽपश्य त्तथाऽयं जीवोविवेकात्मक बुद्धिलिप्सापरवश स्तां स्वाऽऽश्रयस्थितां न लब्धवा नित्यर्थः॥ १३॥

हेवेदिषन्![6] हे प्राचीनबर्हिः! विमना इव दुःखितमना इव अन्तः पुरस्त्रियः तत्सखी रपृच्छत् पुरञ्जनः। तदलाभनिमित्तवैमनस्यः बुद्धिमूलकेन्द्रियवृत्तीः पप्रच्छ कथा इन्द्रियवृत्त्या बुद्धिः सात्त्विकी स्या दिति परिशीलितवानित्यर्थः[7]। प्रश्नमेवाऽऽह - अपीति त्रिभिः। हे रामाः स्त्रियः! सेश्वरीणां स्वामिनीसहितानां वः युष्माकम् अपि कुशलम्? अपिशब्दः प्रश्ने कुशलप्रश्ने हेतुः हि यस्मात् गृहेषु पुरा महिष्या व्यापारदशायां गृहसम्पदः यथैव रोचन्ते, न तथेदानीं रोचन्ते। विवेकाभावेन न कोऽपि पुरुषस्य गुणः प्रकाशते, अतो विवेकः किमुदेष्यतीति चिन्तितवा नित्यर्थः॥ १४॥

---

1. W omits बुद्धेः 2. W °यनक° 3. W omits सुदृप्तः 4. A, B, T omit गृहिणी 5. W omits वर 6. A, B, T °षत्। 7. A, T शोधिता

गृहे माता वा पति र्देवता यस्या स्सा पत्नी वा यदि न स्यात् तर्हि व्यङ्गे चक्राश्वादिरहिते रथे इव प्राज्ञः बुद्धिमान् को नाम पुरुषो दीनव दासीत निवसे दित्यर्थः। विवेकाभावे देहत्यागोवर मिति भावः॥ १५॥

**विज०** जाग्रद्विषया ननुभूय सुषुप्ति प्राप्ति[1]प्रकार माह - **तत** इति। ततो जागरणान्निवृत्तः क्षुत्तृल्लक्षणमनोवृत्तिभ्यां व्याप्तः श्रान्तः हृल्लक्षणनाडीविशेषं प्राप्तः कृतं जाग्रद्विषयभोगरजोमार्जनलक्षणं स्नानं येन सः, उचितआहारः स्वरूपसुखावाप्तिलक्षणो यस्य स तथा, संविवेश सुप्तोऽभू दित्यन्वयः॥ ११॥

स्वापात्पूर्वव्यापार माह- **आत्मान** मिति। महिष्यां बुद्धौ अथवा धूपादिलक्षणवृत्तिभि रात्मान मन्तर्यामिलक्षणं ब्रह्मस्वरूप मर्हयाञ्चक्रे सम्पत्तिलक्षण मलङ्कार मकरोत्। ''सता सोम्य तदा सम्पन्नो भवति'' (छान्द. उ. 6-8-1) इति श्रुतेः। सम्पत्तिलक्षणालङ्कारयुक्तसर्वावयवः हृष्ट इत्यादिना सुप्तावस्थाविशिष्ट उच्यते। अनेन स्वप्नप्राप्ति रपि निरूप्यते इति ज्ञातव्यम्, तदा वृत्त्याद्यवस्थानुभवः स्पष्ट एव। स्वप्नप्रापककर्मोद्रेके सति महिष्यां बुद्धौ मन आदधे इत्युपपद्यते। कं स्वरूपसुखं दर्शयति प्रकटयतीकन्दर्पः स्वापः तेनोत्कृष्टं मानसं यस्य स तथा, स्वाप्नावस्थाया मपि स्वापस्य सत्त्वात्॥ १२॥

बुद्ध्याहितमनाः किमकृतेति तत्राऽऽह- **नव्यचष्टेति**। गृहमेधिनी मुपात्तज्ञानवतीं गृहिणीं नानावासनाकारमनोवृत्तिमतीं वरस्य हरे रारोहो विषयतया यस्यास्सा वरारोहा तां शास्त्रीयां बुद्धिं न व्यचष्ट। दर्शनं नाम निश्चयज्ञानं नोपैतीति ज्ञातव्यम्। स्वप्नस्य वासनात्मकत्वात् निर्णयज्ञानवान्नाऽभूदित्यर्थः। हे वेदिषन्! प्राचीनबर्हिः! अन्तः पुरस्त्रियः इन्द्रियवृत्तीः मनोवृत्तीर्वा अपृच्छत् स्वप्नव्यापार मकरोत्॥ १३॥

हे रामाः! इति वृत्तय स्सम्बोध्यन्ते। ईश्वरी बुद्धिः गृहसम्पदः शरीरेन्द्रियादिशोभाः बुद्धौ विद्यमानायां रेचन्ते नाऽन्यदेति॥ १४॥

व्यङ्गे चक्राश्वादिरहिते रथे प्राज्ञो बुद्धिमान् रथी अ[2]ङ्गलक्षणेन प्राणेन हीने देहे प्राज्ञः सुषुप्तिप्रवर्तकः परमात्मा॥ १५॥

**क्व वर्तते सा ललना मज्जन्तं व्यसनार्णवे।**
**या मा मुद्धरति[3] प्राज्ञा[4] दीपयन्ती[5] पदे पदे॥ १६॥**

**रामा ऊचुः**

**नरनाथ न जानीम स्त्वत्प्रिया यद्व्यवस्यति।**
**भूतले निरवस्तारे शयानां पश्य शत्रुहन्! ॥ १७॥**

1. A omits प्राप्ति 2. A अन्न 3. A, B, G, I J, T, W °ते 4. A, B, G, I, J, M, Ma, Ms, T प्रज्ञां° 5. V बोध

[1-] नारद उवाच [-1]

पुरञ्जनः स्वमहिषीं निरीक्ष्यावधुतां भुवि।
तत्सङ्गोन्मथितज्ञानो वैक्लब्यं परमं ययौ ॥ १८ ॥

सान्त्वयन् श्लक्ष्णया वाचा हृदयेन विदूयता।
प्रेयस्याः [2]प्रेमसंरम्भलिङ्गमात्मनि [3]नाऽभ्यगात् ॥ १९ ॥

अनुनिन्येऽथ शनकै र्वीरोऽनुनयकोविदः।
पस्पर्श पादयुगल माहचोत्सङ्गलालिताम् ॥ २० ॥

**श्रीध०** *क्वेति। पदे पदे क्षणे क्षणे कर्ता भोक्ता सुख दुःखयोरिति प्राज्ञा मत्स्वरूपं दर्शयन्ती या मा मुद्धरति ॥ १६ ॥

**नरनाथेति**। निरवस्तारे आस्तरणरहिते ॥ १७ ॥

**पुरञ्जन** इति। अवधुतां त्यक्तदेहादराम्। तत्सङ्गेनोन्मथितं व्याकुलं ज्ञानं यस्य ॥ १८ ॥

**सान्त्वय** न्निति। [4]प्रेमसंरम्भः प्रणयकोपः, तस्यलिङ्गं कुटिलदृष्ट्यादि [5]आत्मानि स्वस्मिन् [6]न लब्धवान् ॥ १९ ॥

**अनुनिन्य** इति। उत्सङ्ग [7]मङ्क मारोप्य लालिताम् ॥ २० ॥

सा ललना क्व वर्तते ? कथम्भूता ? [8]या ललना व्यसनार्णवे दुःखार्णवे मज्जन्तं मां पदे पदे [9]स्वयं [10]प्राज्ञा दीपयन्ती बोधयन्ती सती [11]उद्धरति व्यसनार्णवात् यथा विरहशोकातुरं पुमांसं प्रौढा प्रिया तदनुकूलाचरणहितोपदेशादिना शोक मपनुद्य सुखयति तद्वद्विवेकात्मिका बुद्धिरपि पदे पदे हिताहितं प्रकाशयन्ती पुमांस मुद्धरति। [12]ईदृशी बुद्धिः क्व वर्तत इति [13-]प्रश्ने तल्लिप्सा[-13] व्यज्यते ॥ १६ ॥

हे नरनाथ ! त्वत्प्रिया यद्व्यवस्यति निश्चिनोति तन्नजानीमः ; यदर्थं वैमनस्य मापन्ना तद्वैमनस्यहेतुं न जानीमः, त्वत्प्रियान्तु जानीम इत्याहुः। हे शत्रुहन् ! निरवस्तारे आस्तरणरहिते भूतलेऽवधुतां शयानां पश्येति कथापक्षेऽर्थः। अथात्मपक्षे त्वबाधितेन्द्रिय

---

1--1. V, W omits 2. A, B, G, I, J, T स्नेह 3. V चाऽध्यगात्। * The commentary on 16th verse is not found in A. B, J, Va Edns
4. A, B, T Va स्नेह 5. A, B, J, Va omit आत्मनि 6. V omits न 7. A, B, J, Va omit अङ्कम् 8. A, B, T omit या 9. A, B,T add क्षणे क्षणे
10. A, B, T प्रज्ञा॰ 11. A. B, T ॰ते 12. W ॰शा॰ 13--13. A, B, T omit

वृत्तीनां सर्वासां निश्चयात्मिकबुद्धिमूलकत्वात् कयापीन्द्रियवृत्त्या सा नोदेतीत्यालोच्य यदनादरवशात् प्रियानादृता सतीव मद्विमुखी अभू दित्यनुसंहितवानित्यर्थः। आदरो बुद्धेः शिक्षणम्॥ १७॥

पुरञ्जनो भुवि पतितां महिषीं निरीक्ष्य तत्सङ्गेनोन्मथितं व्याकुलं ज्ञानं यस्य सः परमं भृशं वैक्लब्यं शोकपारवश्यं ययौ। अहो मदीयेयं बुद्धिः एतावन्तं काल मेवं विपरीताऽभूदिति वैक्लब्यं यया वित्यर्थः॥ १८॥

तत. श्लक्ष्णया मृद्व्या वाचा विदूयता परितप्तेन हृदयेन मनसा सान्त्वयन् अनुनयन् प्रेयस्याः प्रियायाः प्रेमसंरम्भः प्रणयेन स्वस्मिन् यः कोपः तस्य लिङ्गं कारण मात्मनि मनसि नाऽध्यगात् न निश्चितवान्। विवेकोदयसाधनभूतस्वादरणं मन्विच्छन् ताव देतावत्कालं तदनुदये कारण मन्वेषय न्नपि तन्नाऽध्यगादित्यर्थ·। तस्य दैवायत्तत्त्वा दिति भावः॥ १९॥

**वीर०** पुरञ्जनः अनुनये सान्त्वने कोविदः कुशलः अनुनयकोविदैरिति तृतीयान्तपाठे तु वाक्यै रिति विशेष्यम् अध्याहार्यम्। शनकै र्महिषी मनुनिन्ये सान्त्वयामास। अनुनयप्रकारमेवाऽऽह - पादयुगलं पस्पर्श प्रियाया· पादौ गृहीतवान्। तत उत्सङ्गारोपणादिना[1] लालिता माह। अध्यात्मपक्षे त्वनुनये स्ववशीकारे कोविदै र्निपुणै रुपायैः स्ववशा मनुनिन्ये। पस्पर्श पादयुगल मित्यनेन अद्यप्रभृति विवेकात्मिकां बुद्धि मनुसृत्यैव वर्तेयेति प्रतिज्ञातवा नित्युक्तं भवति। उत्सङ्गलालिता माहेत्यनेन स्ववशीकृतया विवेकात्मिकया बुद्ध्या एव मनुसंहितवा नित्युक्तम्॥ २०॥

**विज०** पदे पदे अनुक्षणं मम प्रज्ञां दीपयन्ती भगवद्विषयज्ञान मुद्बोधयन्ती यामामुद्धरति, संसारादिति शेष·। सा ललना शोभना बुद्धिः क्व वर्तत इत्यन्वयः॥ १६॥

बाह्यकथा मनुसृत्य उत्तरकथा प्रत्युत्तर माह - **नरनाथेति**। यद्व्यवस्यति यन्निश्चित्य तिष्ठति तन्न जानीम इत्यन्वयः। निरव स्तारे आस्तरणरहिते भूतले पूर्णे भगवत्पादमूले शयानां विषयीकुर्वाणाम् यथार्थवर्णनमेतत्॥ १७॥

इदानी मसद्बुद्धिनिमित्त प्रवृत्तिप्रकार माह - **पुरञ्जन** इति। प्राचीनकर्मवैचित्र्यात् प्रतिक्षणं वृत्तिभेदोऽपि प्रामाणिक एवेत्यत एतद्वचन मुपपद्यत इति। अवधुतां सद्वृत्तिभि रिति शेषः। तस्या वैषयिक्या बुद्धेः सङ्गेन स्वीकारेण तादृशकर्मणा प्राप्तेनोन्मथितं नष्टं ज्ञानं यथार्थलक्षणं यस्य स तथा॥ १८॥

प्रेयस्या बुद्धेः प्रेम्णा संरम्भो हिंसालक्षणो नाशो यस्तस्य लिङ्गं कारणमात्मनि स्वस्मिन्नाऽध्यगात् न ज्ञातवान्। रजसाऽऽकुलितान्तरत्वात्। रम्भ हिंसायाम्॥ १९॥

---

1. A, B °पादिना

**अनुनिन्य** इत्यादिकथालङ्कारः। अनुनयनं नाम विषयबुद्धिवश्यत्वप्रकटनं, बुद्धे र्मनआदिचत्वारः पादाः तेष्वंशद्वयं पस्पर्श स्वीकृतवान्, मनोलक्षण [1]उत्सङ्गे सम्भाविताम् इद मेव स्वीकरणम्॥ २०॥

**[2-]पुरञ्जन उवाच[-2]**

**नूनन्त्वकृतपुण्यास्ते भृत्या येष्वीश्वराः शुभे।**

**कृतागः स्वात्मसात्कृत्वा शिक्षादण्डं न युञ्जते॥ २१॥**

**परमो[3]ऽनुग्रहो दण्डो भृत्येषु प्रभुणार्पितः।**

**बालो न वेद तत्तन्वि बन्धुकृत्य ममर्षणः॥ २२॥**

**सा त्वं मुखं सुदति सुभ्र्वनुरागभार व्रीडाविलम्बविलसद्धसितावलोकम्।**

**नीलालकालिभि रुपस्कृत मुन्नसं नः स्वानां प्रदर्शय मनस्विनि वल्गुवाक्यम्॥ २३॥**

**तस्मिन्दधे दममहं तव वीरपत्नि! योऽन्यत्र भूसुरकुलात्कृतकिल्बिष स्तम्।**

**पश्ये न वीतभय मुन्मुदितं त्रिलोक्यां[4] क्रुद्धस्य वै[5] मुररिपोरितरत्र दासात्॥ २४॥**

**वक्त्रं न ते वितिलकं मलिनं विहर्षं संरम्भभीममविमृष्ट मपेतरागम्।**

**पश्ये स्तनावपि शुचो [6]पहतौ सुजातौ बिम्बाधरं विगतकुङ्कुमपङ्करागम्॥ २५॥**

**तन्मे प्रसीद सुहृदः कृतकिल्बिषस्य स्वैरं गतस्य मृगयां व्यसनातुरस्य।**

**को देवरं वशगतं कुसुमास्त्रवेग विस्रस्त पौंस्न[7] मुशती न भजेत कृत्ये॥ २६॥**

इति श्रीमद्भागवते महापुराणे अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
चतुर्थस्कन्धे पुरञ्जनोपाख्याने षड्विंशोऽध्यायः॥ २६॥

**श्रीध० नून** मिति। कृतमागोऽपराधो यै स्तेषु आत्मसात्कृत्वा अस्मदधीनोऽय मिति मत्वा शिक्षार्थं दण्डं न कुर्वन्ति ते भृत्या मन्दभाग्याः॥ २१॥

---

1. A सम्मानितां 2--2. M, Ma, V, W omit 3. M, Ma ⁰मा नु⁰ 4. A, B, G, I, J, T ⁰क्यामन्यत्र; W ⁰क्या अन्यत्र। 5. V मे 6. M, Ma ⁰हृ⁰ 7. M, Ma, W ⁰स्य⁰; V ⁰स्क⁰।

**परम** इति। यतः परमोऽनुग्रहो दण्डः। यस्तु द[1]ण्डितो विषीदति सोऽज्ञ इत्याह- बाल इति। बन्धुकृत्यं शिक्षाकरणम् अमर्षणः क्रोधी॥ २२॥

**से** ति। हे सुदति, हे सुभ्रु! हे मनस्विनि! सा त्व मस्माकं स्वामिनी, अतः स्वानां न[2]ः मुखं प्रदर्शय। कीदृशम्? अनुरागभरेणव्रीडया च यो विलम्बो मन्थरता तेन विलसन् हसितावलोको यस्मिन्। [3]नीला अलका एवाऽलयः तैरुपस्कृतं भूषितम्। उ[4]न्नतनासिकम्। वल्गुवाक्यं यस्मिं स्तत्॥ २३॥

तस्मिन्निति। हे वीरपत्नि! वीरस्य मम भार्ये! यस्ते कृतापराधः तस्मिन्नहं ब्राह्मणकुला दन्यत्र अन्यस्मिन् प्रा[5]णिनि मुररिपोर्दासात् [6-]भगवद्भक्तात्[-6] दमं दधे दण्डं करोमि। किन्तु तं विगतभय मुच्चै र्मुदित ञ्च त्रिलोक्या मन्यत्र वै लोकत्रयाद्बहिरपि न पश्यामि [7-]यस्तेऽपराधी स यत्र कुत्राऽपि गतो[-7] मद्भयादेवाऽसौ मरिष्यतीत्यर्थः॥ २४॥

**वक्त्र** मिति। ते वक्त्र मितः पूर्वं कदाचिदपि वितिलकं न पश्यामि। संरम्भेण कोपावेशेन भीमं भयङ्करम्, अविमृष्टमनुज्ज्वलम्। अपेतरागं स्नेहशून्यं, तथा ते सुजातौ शोभनौ स्तनावपि शोकाश्रुभि रुपहतौ* न पश्यामि। तथा बिम्बफलाकार मधरञ्च विगतः कुङ्कुमपङ्कतुल्यरागः ताम्बूलरागो यस्मात् तादृशं न पश्यामि। इदानीं कुत एवं जात मिति शेषः पाठान्तरे एवम्भूतं मुखं स्तनौ च पश्यन् शं न विन्दामीत्यन्वयः। विगतः कुङ्कुमपङ्करागो याभ्यामिति स्तनयो र्विशेषणं वा[8]॥ २५॥

**तदिति**। तत्तस्मात्कृतं किल्बिषमपराधो येन तस्य। किल्बिष मेवाऽऽह स्वैरं स्वातन्त्र्येण त्वामपृष्ट्वा मृगयां गतस्य [9-]देवो देवनं[-9] क्रीडा तां राति ददातीति देवरः कान्तः तम्। कामवेगेन विम्रस्तं गतं[10] पौ[11]स्नं पौरुषं धैर्यं यस्य तम्। उशती कामयमाना कृत्ये कर्तुं योग्येऽर्थे का न भजेत॥ २६॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्री श्रीधरस्वामि विरचितायां भावार्थदीपिकायां

व्याख्यायां षड्विंशोऽध्यायः॥ २६॥

---

1. A, B, J, Va दण्डतः 2. A, B, J, Va omit नः 3--3. V लीलालका 4. V उच्च 5. B, J, V, Va omit प्राणिनि 6--6. A, B, J, Va omit 7--7. B, J, V, Va omit * पश्यं स्तनावपि शुचोपहतौ सुजातौ, विन्दामि शं विगतकुङ्कुमपङ्करागौ - This is the reading found in Jf. 8. A, B, J, Va omit वा 9--9. V दिवो देवः सा 10. A, Va omit गतं 11. V णौरंकं

**वीर०** हे शुभे ! ईश्वराः स्वामिनः येषु कृतापराधेषु भृत्येषु आत्मसात्कृत्वा मदधीना एते, अतो नैते दण्डनीया इति मत्वा शिक्षार्थं दण्डं न कुर्वन्ति ते भृत्या मन्दभाग्या इत्यर्थः ॥ २१ ॥

कुतः? यतः प्रभुणा भृत्येष्वर्पितो दण्डः परमोऽनुग्रहः भृत्यानां हितायैव भवतीत्यर्थः । यस्तु दण्डितो विषीदति, सोऽज्ञ इत्याहबाल इति । अमर्षणः दण्डं न मृष्यती त्यमर्षणः । हे तन्वि ! तद्बन्धोः स्वामिनः कृत्यं शिक्षाकरणं न वेद अनुग्रह इति न वेद स बालो मूर्खः अज्ञ इत्यर्थः । अतो मम शिक्षार्थमेव स्वामिनीत्वं विमुख्यभू रित्यर्थः । अध्यात्मपक्षेतु स्वामिनीवत् मद्रक्षणैकान्त्या बुद्ध्या विवेकात्मिकाया इतः पूर्व मनुदयोऽस्मदनुग्रहार्थ एव, यतो हमिदानीं विवेकालाभनिमित्तपरितापयुक्तः तामेव । अतीव आदृत वा नित्यनुसन्दध इत्यर्थः ॥ २२ ॥

हे सुदति ! हे सुभ्रु ! हे मनस्विनि ! सा त्व मस्माकं स्वामिनी अतः स्वानां नो मुखं प्रदर्शय । कीदृशम् ? अनुरागभारेण व्रीडया च यो विलम्बो मन्थर स्तेन विलसन् हसितावलोको यस्मिन्, नीलालका एवाऽलयः, तै रुपस्कृतं भूषितं उच्चनासिकं वल्गु वाक्यं यस्मिन्, निरतिशयसौन्दर्ययुक्तायाः प्रियाया उक्तविधमुखावलोकनसञ्जात मानन्द मनुभव न्निवाऽहं स्थिरे निरतिशय सुखापादक विवेकोदये सुखीत्यनुसंहितवानित्यर्थः ॥ २३ ॥

हे वीरपत्नि ! वीरस्य मम भार्ये ! यस्ते तुभ्यं कृतकिल्विषः कृतापराधः तस्मिन्नहं ब्राह्मणकुला दन्यत्र कुलेऽपि मुररिपुदासा दितरत्र[1] दमं दण्डं दधे करोमि । मे त्वत्सहायस्य मम क्रुद्धस्य सतः, त्रिलोक्या[2] बहि रपीति शेषः । त्रैलोक्या द्बहिश्चाऽन्तश्च उच्चै र्मुदितं विगत भयञ्च तं[3] पुरुषं न पश्यामि यदीयं व्यवसायात्मिका बुद्धि र्मम सुप्रतिष्ठिता[4] स्यात्तदा तत्सहायोऽहं तद्विरोधिनो निरस्यामि विवेकिना मया असाध्यं किमपि त्रिलोक्या अन्तर्बहिश्च न विद्यते । मुररिपुदासादय स्तु विवेकिनो ममाऽनुकूला एवेत्यनुसन्दधे ॥ २४ ॥

ते[5] तव वक्त्र मितः पूर्वं कदाचिदपि वितिलकं तिलकरहितं न पश्यामि । इदानीन्तु मलिनं विगतहर्षं, संरम्भेणक्रोधावेशेन भीमं भयङ्करम् अविमृष्ट मनुज्ज्वल मपेतरागं स्नेहशून्यं तथा ते सुजातौ शोभनौ[6] स्तनावपि शोकाश्रुभिरुपहतौ च तथा बिम्बफलाकार मधर ञ्च विगतः कुङ्कुमपङ्कतुल्यः ताम्बूलरागो यस्मिन् तादृशं पश्यामि । कुत एवं जात मिति शेषः । व्यवसायात्मकबुद्धे रभिव्यक्तेः प्रारम्भदशाया मविशदत्वात् तादृशावस्थांतां प्रियानादरनिमित्त क्रोधेनाऽऽत्मान मनलङ्कुर्वतीं शोचन्तीं स्त्रियमिवोत्प्रेक्षते[7] इत्यर्थः ॥ २५ ॥

तस्मात्कृतं किल्बिष मपराधो येन तस्य । किल्बिषमेवाऽऽहस्वैरं स्वातन्त्र्येण त्वा मपृष्ट्वा मृगयाङ्गतस्य मे प्रसीद प्रसन्ना भव । देवं

1. A, B, T ॰दन्यत्र 2. A, B, T त्रैलोक्यात् 3. A, B, T omit तं 4. A, B, T सम्प्र 5. W omits ते 6. A, B, T omit शोभनौ
7. W adds स्म

देवनं क्रीडां राति ददातीति देवरः कान्त स्तं कामवेगेन विस्रस्तं गतं पौंस्नंपौरुषं धैर्यं[1] यस्य तम्, अत एव वशङ्गतं का स्त्री कामयमाना कृत्ये कर्तुं योग्येऽर्थे[2] न भजेत? भजेतैवेत्यर्थः। विवेकाभावा दप्रसन्नस्य मम स्वप्नावस्थाऽभूत्। अतो विवेकात्मकबुद्धियुक्तो ऽहं प्रसन्नो वर्तेय। एव महम्ममाभिमानौ विहाय वशङ्गतं कार्यापादकं मां व्यवसायात्मिका बुद्धिरपीहानुवर्तिष्यत इत्यनुसंहितवा नित्यर्थः ॥ २६ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवत चन्द्रचन्द्रिकायां

व्याख्यायां षड्विंशोऽध्यायः ॥ २६ ॥

**विज०** ये येषु कृतापराधेषु शिक्षालक्षणं दण्डं न कुर्वते नूनं तेऽकृतपुण्या इत्यन्वयः ॥ २१ ॥

दण्डस्य निग्रहलक्षणत्वात् कथं प्रार्थ्यत इत्यत आह - **परम** इति। तर्हि लोकः कथं दुःखं मन्यत इति तत्राऽऽह- बाल इति। दण्डस्य पापप्रायश्चित्तरूपत्वात् न जानातीत्यर्थः। अनुतापादिवृत्तिविशेष इति ज्ञातव्यम् ॥ २२ ॥

उपस्कृतं मण्डितम् ॥ २३ ॥

भूसुरकुलात् ब्रह्मकुलात् क्रुद्धस्य मे सकाशा द्वीत भयं नष्टभयं तं न पश्ये ॥ २४ ॥

इतः पूर्वं वक्त्रादिकं विगततिलकादिकं न पश्यामीत्यन्वयः। शुचा शोकाश्रुणोपहतौ, सुजातौ कौमलौ ॥ २५ ॥

कुसुमास्त्रस्य कामस्य वेगेन विस्रस्तं श्लथितं पौंस्नं[3] पौरुषं यस्य स तथा तं देवं रतिक्रीडादिकं राति ददातीति देवर पति त, कृत्ये प्रयोजननिमित्ते प्राप्तु मुशती कामयमाना का स्त्री न भजेत ॥ २६ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीविजयध्वजतीर्थ कृतायां पदरत्नावल्यां

टीकायां षड्विंशोऽध्यायः ॥ २६ ॥



1. A, B, T omit धैर्यं  2. A, B, T योग्यार्थे  3. A, B पौस्नं।

# सप्तविंशोऽध्याय:

## नारद उवाच

इत्थं पुरञ्जनं [1]सध्र्य ग्वश मानीय विभ्रमैः ।
पुरञ्जनी [2]महाराजरेमे रमयती पतिम् ।। १ ।।

स राजा महिषीं राजन् [3]सुस्नातां [4]रुचिराननाम् ।
कृतस्वस्त्ययनां तृप्ता मभ्यनन्द दुपागताम् ।। २ ।।

तयोपगूढः परिरब्ध कन्धरो रहोऽनुमन्त्रै रपकृष्टचेतनः ।
न कालरंहो बुबुधे दुरत्ययं दिवा निशेति प्रमदापरिग्रहः ।। ३ ।।

शयान उन्नद्धमदो महामना महार्हतल्पे [5]महिषीभुजोपधिः ।
[6]ता [7]मेव वीरोऽमनुत व्यवायत स्तमोऽभिभूतो न निजं परं [8]च [9]तत् ।। ४ ।।

तयैवं रममाणस्य कामकश्मलचेतसः ।
क्षणार्धमिव राजेन्द्र व्यतिक्रान्तं नवं वयः ।। ५ ।।

## श्री श्रीधरस्वामिविरचिता भावार्थदीपिका

सप्तविंशेप्रियापुत्राद्यासक्त्याविस्मृतात्मनः । कालकन्याद्युपाख्यानै र्जरारोगाद्युदीर्यते ।।

तदेवं जीवस्यानुनयादिकथासौन्दर्येण अत्यन्तमुपाधि वश्यत्व मुक्त्वा तन्निमित्तां संसारपरम्परां निरूपयितु माह- **इत्थमिति।** अत्र च प्रतिपदं कथञ्चिदध्यात्मपक्षेऽपि योजयितुं शक्यमेव । श्रीनारदेन तु जीवस्य स्त्रीपुं[10]सवासनादार्ढ्येन विचित्रा संसृति र्भव तीत्येतावदेव कथातात्पर्यं दर्शितम् । "क्वचि त्पुमान्क्वचिच्चस्त्री क्वचिन्नोभय मन्धधीः । देवो मनुष्य स्तिर्यग्वा यथाकर्मगुणं भवः" (भाग. 4-29-29) इति वदता तत्राऽऽदौ पुंस्त्वेन संसृति रध्यायत्रयेणोक्ता, ततश्चैकेनाध्यायेन स्त्रीत्वेन संसृतिं प्रदर्श्य, ईश्वर प्रसादलब्धज्ञानेन मोक्ष इत्युक्तम् । तत स्तदेव यथोपयोगं व्याख्यात मिति पञ्चा[11]ध्याय्यर्थः प्रतीयते । प्रतिपदमध्यात्मयोजना तु दुर्घटा [12]प्रायशो निष्प्रयोजनाचेति स्वप्रौढि [13]प्रख्यापन मनादृत्य यथोपयोगमेव व्याख्यास्यामः । सध्र्यक् सम्यक् [14]विभ्रमै र्विलासैः ।। १ ।।

---

1. J सम्यग्व⁰ 2. V राज्ञी; W राजं 3. M, Ma, Ms रुचिराम्बरसंवृताम् 4. V ⁰राम्बराम् 5. M, Ma, Ms ⁰धे। 6. W ⁰क 7. A, B, G, I, J, T मनुते परं यतः 8. M, Ma, Ms हि 9. A, B, G, I, J, T, V यत् । 10. A, B, J, Va पुरुष 11. A, B, J, Va ⁰ध्याय्यारम्भः 12. B, J, V, Va omit प्रायशः 13. A, B, J, Va omit प्र 14. V omits विभ्रमैः

**स** इति। कृतं स्वस्त्ययनं मङ्गलं कुङ्कुमसिन्दूरादिभिः यस्यास्ताम्॥ २॥

**तथेति**। उपगूढः परिरब्धः। परिरब्धा कन्धरा तस्या येन। रह एकान्ते अनुमन्त्रै रनुकूलै गुह्यभाषणैः अपकृष्टा चेतना विवेको यस्य। कालरंह[1] आयु[2-]र्व्ययः[-2]। दिवानिशम् अहर्निशम् प्रमदैव परिग्रहो, न ज्ञानसाधनं यस्य॥ ३॥

**शयान** इति। महार्हतल्पे उत्कृष्टशय्यायां शयानः महिष्या भुजा उपधिः उपधान मुच्छीर्षकं यस्य। अविसर्गपाठे शयनक्रियाविशेषणम्। तां महिषीमेव परं पुरुषार्थममन्यत, नतु यन्निजं रूपं ब्रह्म तत् तमसा अज्ञानेनाऽभिभूतो यतः॥ ४॥

***तयेति**। नवं वयः परिशुद्धज्ञानानन्द स्वरूपं व्यतिक्रान्तं गतप्रायमासीत्॥ ५॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं जाग्रत्स्वप्न सुषुप्त्यादिभिः अवस्थाभिस्संसरतो जीवस्य दुर्लभोऽपि कदाचिद्दैवा त्सञ्जातपरितापस्य विवेकात्मकबुद्ध्युदयः उक्तः[3]। इदीनी मेवं सञ्जातविवेकमपि अनन्तवासनारुचिप्रकृति सम्बन्धादियुक्तं पुमांसं "यया धर्म मधर्म ञ्च कार्य ञ्चाकार्य मेव च। अथयावत्प्रजानाति बुद्धिस्सापार्थ! राजसी॥, अधर्मं धर्ममिति या मन्यते तमसा वृता। सर्वार्थान्विपरीतांश्च बुद्धिस्सा पार्थ! तामसी" (भ.गी. 18-31,32) इत्युक्तविधरजस्तमः प्रचुरा सती बुद्धिः पुनः प्रसह्य स्ववशीकृत्य संसारयामासेत्याह- **इत्थमिति**। हे महाराज! इत्थं दैवात्कदाचित् सञ्जातविवेकमपि पुरञ्जनं विभ्रमैः धर्माधर्म कार्याकार्यादिविषयकै र्विभ्रमैः, भ्रमजननद्वारेत्यर्थः। सध्र्यक् सम्यक् शनैः स्ववश मानीय पुरञ्जनी रजःप्रचुरा बुद्धिः पतिं रमयती स्वकार्यप्रवणं कुर्वती स्वयं रेमे व्यापृतवती। कथापक्षे तु सम्यग्विभ्रमैः विलासैः, अन्यत् स्प ष्टम्। केचिदत्र "प्रतिपदं कथञ्चिदध्यात्मपक्षे योजयितुं शक्य मेव, श्रीनारदेन तु जीवस्य स्त्रीपुरुषवासनादार्ढ्येन विचित्रा संसृति र्भवती त्येतावदेव कथातात्पर्यं दर्शितम् - "क्वचित्पुमान् क्वचिच्च स्त्री क्वचिन्नोभय मन्धधीः। देवो मनुष्य स्तिर्यग्वा यथाकर्मगुणं भवः" (भाग. 4-29-29) इति वदता तत्राऽऽदौ पुंस्त्वेन संसृतिरध्यायत्रयेणोक्ता, ततश्चैकेनाध्यायेन स्त्रीत्वेन संसृतिं प्रदर्श्य ईश्वरप्रसादाल्लब्धज्ञानेन मोक्ष इत्युक्तं, तत स्तदेव यथोपयोगं[4] व्याख्यात मिति पञ्चाध्याय्यर्थः प्रतीयते। प्रतिपद मध्यात्म योजना तु दुर्घटा निष्प्रयोजना चेति स्वप्रौढि ख्यापन मनादृत्य यथोपयोगमेव व्याख्यास्यामः" - इत्याहुः। तत्र प्रतिपदमध्यात्मयोजन मनुपयुक्तञ्चेत् किमर्थं तत्कथन मिति प्रष्टव्यम्[5]। न च कथासौन्दर्यायेति वक्तुं शक्यम्। अध्यात्मोपयुक्तांशकथनेनैव तत्सौन्दर्यलाभात्, अन्यथा कथासौन्दर्यार्थं मनुपयुक्तांशानां बहूनां सत्त्वेन तेषामपि कथनापत्तेः। यदपि क्वचित्पुमा नित्यादि, तन्न, क्वचित्पुमानित्यादिग्रन्थस्य

1. A. B, J, Va °यम्  2--2. B, J, V, Va omit  * The commentary on the 5th verse is not found in A, B, J, Va.  3. A, B, T omit उक्तः
4. W °देशं  5. A, B, T द्र°

क्वचित्पुमानित्यादिग्रन्थस्य निगमनपरत्वेन प्रधानप्रतिपाद्यस्यैव निगमनीयत्वेन तस्य प्रतिपद मध्यात्मयोजनाभावे प्रमाणत्वाभावात्। नहि यावन्तोऽर्थाः कथिताः ते सर्वे निगमनीया इत्यस्ति नियमः । यदपि यथोपदेशं व्याख्यात मित्यादि, तदपि न, अप्रसिद्धपदव्युत्पत्तिकथनेन तदनुकूलतया प्रसिद्धव्युत्पत्तीनां पदानां व्याख्यातुं शक्यत्वेन तावन्मात्रव्युत्पत्ति प्रदर्शनात्। यदपि चोक्तं प्रतिपदमध्यात्मयोजना दुर्घटा निष्प्रयोजना चेति ; तत्र निष्प्रयोजनत्वं यथोपदेशं व्याख्यातेषु पुरञ्जनादिष्वप्यविशिष्टं, जीवस्य स्त्रीपुरुषवासनादार्ढ्येन विचित्रा संसृति र्भवति। ईश्वरप्रसादलब्धज्ञानेन मोक्ष इत्युक्त्यैव चारितार्थ्येन पञ्चाध्याय्या वैयर्थ्यस्य स्पष्टत्वात्। दुर्घटा चेति परमवशिष्यते। तत्राऽत्यन्तदुर्घटं यत्पद मध्यात्मपक्षे, तद्विहाय अन्यानि पदानि सर्वाणि तत्पक्षे व्याख्येयान्येव। अनुपयुक्तं पद मगत्या कथासौन्दर्यायेति वक्तुं युक्तम्। यत्र श्लोकस्थानां सर्वेषामपि पदानां दौर्घट्यं "सा त्वं मुखं सुदति सुभ्र्वनुरागभार" (भाग.4-26-23) इत्यादौ तत्र पदसङ्घातात्मकवाक्यार्थ द्योत्यत्वस्य कस्यचिदुपयुक्तार्थस्य योजना कर्तव्या॥ १॥

तथा हि हे राजन् ! स राजा पुरञ्जनः सुस्नातां कृतमङ्गलस्नानां रुचिर मुज्ज्वल मम्बरं यस्याः, कृतं स्वस्त्ययनं मङ्गलं कुङ्कुमसिन्दूरादिभिर्यस्या स्तां, तृप्तां स्वाद्वन्नपानादिभिः उपागतां समीप मागतां महिषी मभ्यनन्दत्। सुस्नातां रुचिराम्बरादिभिः सुन्दरतरां महिषी मभि[1]नन्दन्निव राजसीं बुद्धि मनुकूला ममन्यतेत्यर्थः॥ २॥

तथा महिष्या उपगूढः आश्लिष्टः परिरब्धा आश्लिष्टा महिष्याः कन्धरा येन सः। अनेन जीवबुद्ध्योरन्योन्यं दृढतरसम्बन्धः [2]सूचितः, एकत्वेनानुसन्धानञ्च व्यज्यते। रह एकान्ते अनुकूलैर्गु[3]प्त भाषणैः शब्दादिविषयचिन्तनैः अपकृष्टा चेतना विवेको यस्य प्रमदेव प्रमादालस्यकारिणी बुद्धि रेव परिग्रहो न विवेको यस्य सः॥ ३॥

महार्हतल्पे उत्कृष्टशय्यायां हृदये शयानः अधितिष्ठन् [4-]कालरंहः कालवेग मा[-4]युष्यं दुरत्ययं संसारिणोऽवर्जनीयं दिवा निशेत्येवं रूपेण न बुबुधे नाऽनुसंहितवा नित्यर्थः। कथापक्षे तु [5]स्पष्टोऽर्थः। महार्हतल्पे [6-]उत्कृष्टशय्यायां[-6] हृदये महिष्या भुज एव उपधिः, उपधीयतेऽस्मिन् शिरइत्युपधि रुपधान मुच्छीर्षकं यस्य सः शयानः। अनेन बुद्धिपारवश्यं सूचितम्। व्यवायतः विषयभोगात्तमोऽभिभूतः अज्ञानतिरोहितः तामेव महिषी मेव बुद्धिसङ्गकृतं वैषयिकसुख मेव पुरुषार्थ ममनुत न तु निजं स्वरूपं तत्परं परमात्मस्वरूपञ्च नाऽन्वमन्यत इत्यर्थः॥ ४॥

तया महिष्या एवं तत्पारवश्येन रममाणस्य संसरतः अत एव कामैः शब्दादिभि रनुभूयमानैः कश्मलं मलिनं चेतो यस्य। हे राजेन्द्र ! नवं नूतनं वयः क्षणार्धमिव व्यतिक्रान्तं देहविशिष्टस्यैव भोक्तृत्वा द्देहाभिप्रायेण नवं वयः [7]व्यतिक्रान्त मित्युक्तम्। पक्षान्तरेऽप्ययमेवार्थः॥ ५॥

---

1. A, B, T °नन्दयन् स्त्रिय मिव 2. W omits सूचितः 3. W °ह्य° 4--4. W omits 5. W स्पष्टम् 6--6. W omits 7. W अति°

## श्रीविजयध्वजतीर्थ कृता पदरत्नावली

पुरञ्जननाम्न। जीवस्य जाग्रत्स्वप्नयो रन्यस्या मवस्थायां विषयप्रसरण माह- **इत्थ मिति**। विभ्रमै र्वृत्तिविशेषैः रेमे विषयेषु व्यावृत्तवत्यां जयलक्षणवृत्त्यां सुषुप्तजनव त्स्थितम्॥ १॥

रुचिरेण कमनीयेन अम्बरेण नानावसनेन संवृतां, कृतं स्वस्त्ययनं स्वस्त्याशीर्वचनस्य अयनं वृत्तिविशेषो यस्याः सा तथा तां, तामसानां तामससङ्गमोऽसुखकारण इति द्योतनायैव मुक्तिः॥ २॥

कया चि द्वृत्त्या परिरब्धः वृत्त्यन्तराख्यकन्धरः "कण्ठो ग्रीवा कन्धरा च" इत्यभिधानम्। रहोऽनुमन्त्रैर्भणितादिलक्षणवृत्तिभि रपकृष्टं चेतनं स्वरूप ज्ञानं यस्य स तथा। इदं दिवा ज्ञानम्, इयं निशा अज्ञान मिति कालरंहो ज्ञानाज्ञानविशेषावस्थां, प्रमदा वैषयिकबुद्धिरेव परिग्रहो यस्य स तथा॥ ३॥

शयान स्तत्त्व मजानन् महार्हतल्पे ज्ञाननाशिनि वृत्ति विशेषे महिषीभुजोपधे बुद्धे रहङ्काररलक्षणवृत्तिशिरोऽधिष्ठाने तामेवाऽमनुत कर्ता भोक्ता सुखीदुःखीति तद्धर्मा नात्मन्यमन्यत। तत्रा कारण माह- व्यवायंत इतिमैथुनलक्षणाज्ञानवृत्तिविशेषात्, इदमेवाऽह- तम इति। निज मात्मानं तत्परं ब्रह्मलक्षणं तत्त्वं नाऽमन्यत। "निज मात्मीय नित्ययोः (म्)" (वैज.को.6-4-9) इत्यभिधानम्॥ ४॥

वयः शुद्धज्ञानानन्दरूपलक्षणं व्यतिक्रान्तं गत प्राय मासीत्॥ ५॥

**तस्या[1] मजनय त्पुत्रान् पुरञ्जन्यां पुरञ्जनः।**
**शतान्येकादश विराडायुषोऽर्धमथाऽत्यगात्॥ ६॥**

**दुहितृ र्दशोत्तरशतं पितृभ्रा[2]तृयशस्करीः।**
**शीलौदार्यगुणोपेताः पौरञ्जन्यः प्रजापते॥ ७॥**

**स[3] पाञ्चालपतिः पुत्रान् पितृवंशविवर्धनान्।**
**दारै स्संयोजयामास दुहितृः सदृशैर्वरैः॥ ८॥**

**पुत्राणाञ्चाऽभवन्पुत्रा एकैकस्य शतं शतम्।**
**यै वै पौरञ्जनो वंशः पा[4]ञ्चलेषु समेधितः॥ ९॥**

---

1. V °मजीजनत्पु° 2. A, B, G, I, J, T, W °मातृ 3. A, B, G, I, J, प° 4. A, B, G, I, J, T प°

**तेषु तद्रिक्थ हारेषु गृहकोशानुजीविषु।**

**निरूढेन ममत्वेन विषयेष्वन्वबध्यत॥ १०॥**

**श्रीध० तस्या**मिति। पुत्रानिन्द्रियपरिणामान्, दुहितृ स्तदनन्तर बुद्धिवृत्तीः [2] इयं पुत्रसंख्या च बाहुल्यमात्रविवक्षया, दुहितृसंख्या तु पुत्रेभ्यो न्यूनत्वेन गार्हस्थ्य सौन्दर्यार्थ[3]मेव। विराट् सम्राट् आयुषोऽर्ध मित्याद्यपि कथासौन्दर्यार्थमेव। पुरञ्जनकन्यात्वात् पौरञ्जन्यः। हे प्रजापते!॥ ६,७॥

**स** इति। दारैः परिणामानन्तरं हिताहितचिन्ताभिः वरै रुचित विषयभोगैः॥ ८॥

**पुत्राणा** मिति। पुत्राणांपुत्राः कर्माणि [4]पाञ्चालेषु शब्दादिविषयेषु॥ ९॥

**तेष्विति**। तेषुपुत्रादिषु तेषामपि ये रिक्थहाराः पुत्राः, तेषु च॥ १०॥

**वीर०** तस्यांमहिष्यां पुरञ्जनः पुत्रा निन्द्रियपरिणामरूपान् एकादश शतानि अजीजनदुत्पादयामास। हे विराट्! इति सम्बोधनम्। आयुषः [5-]पुरुषायुषः[-5] शतसंवत्सरात्मकस्याऽर्धं पञ्चाशद्वर्षात्मक मतिक्रान्त मभूत्। इदमपि देहाभिप्रायेणोक्तम्॥ ६॥

दुहितृ रिन्द्रियपरिणामानन्तर भाविनी र्बुद्धिवृत्तिरूपाः दशाधिकशतं पित्रो र्जीवबुद्ध्योः भ्रातृणा मिन्द्रियपरिणामानाञ्च यशस्करीरनुकूलाः। अनुकूलो हि यशस्करो न तु प्रतिकूलः। शीलं राजसतामसस्वभावः अनन्तसुखाभिव्यक्तिजनकत्वरूप मौदार्यरूपश्च यो गुणः, तेनोपेताः युक्ताः अजीजन दित्यनुषङ्गः। सर्वा अपि दुहितरो दशाधिकशतं पौरञ्जन्यः, पुरञ्जनस्याऽपत्यत्वात्पौरञ्जन्य इत्युच्यन्ते। हे प्रजापते! अत्र पुत्रसंख्या बाहुल्यमात्राभिप्राया, दुहितृसङ्ख्या च पुत्रेभ्यो न्यूनत्वेन गार्हस्थ्यसौन्दर्यार्था॥ ७॥

स पाञ्चालपतिः। पञ्चन्ति विषया न्व्यक्तीकुर्वन्ति अनुभावयन्तीति पञ्चालाः इन्द्रियाणि। [6]पञ्चाला एव पाञ्चालाः, प्रज्ञादित्वात् स्वार्थेऽण्, तेषां पतिः करणाधिपो जीव इत्यर्थः। पित्रोर्वंशं विशेषेण वर्धयन्तीति तान् इन्द्रियपरिणामरूपान्, दारै र्हिताहितचिन्तारूपाभिर्भार्याभिः संयोजयामास। तथा दुहितृः वरै रुचितै र्विषयभोगरुपैः पतिभि स्संयोजयामास॥ ८॥

पुत्राणां पुत्राः पुण्यापुण्यकर्मरूपा एकैकस्य शतं शतं, शत शब्दो बाहुल्याभिप्रायकः, अभवन्। पौत्रा न्विशिनष्टि - यैः पौत्रैः पौरञ्जनोवंशः संसारः पाञ्चालेषु शब्दादिविषयेषु निमित्तेषु। निमित्तमिहफलम्, शब्दादिविषयभोगार्थ मित्यर्थः। समेधितः संवर्धितः। यद्वा वंश इन्द्रिय परिणाम तदनन्तरबुद्धिवृत्तिरूपपुत्रपुत्र्यादि रूपो वंशः शब्दादिविषयेषु कर्मभिरेव समेधित इत्यर्थः॥ ९॥

---

1. M, Ma °गू° 2. B, J, V, Va omit इयं 3. Omits एव 4. A, B, J, Va प° 5--5. W omits 6. A, B. T ते

तेषु तस्य पुरञ्जनस्य रिक्थहारेषु पुत्रेषु गृहं शरीरं कोशः अहम्ममाभिमानाश्रयोऽहङ्कारः अनुजीविन इन्द्रियप्राणादयः तेषु निरूढेन रूढमूलेन ममत्वेन ममकारेण[1] विशेषेणाऽऽसक्त न प्राबुध्यत, स्वस्वरूपपरमात्मस्वरूपे इति शेषः ॥ १० ॥

**विज०** अभिभूतनिजज्ञानस्य तस्य विषयबुद्धे र्नानावृत्त्युत्पत्तिप्रकारमाह- **तस्या** मिति । चक्षुरादीनि मनोन्तानीन्द्रियाणि एकादश संज्ञानि विषयीकृत्य शत मनन्ताः परिणामा वृत्तयो भवन्ति, ताः शतान्येकादश पुत्रा उच्यन्ते । बाल्यावस्थायां बुद्धिविस्ताराभावात् यौवनावस्थायां तत्सम्भावन मपेक्ष्य आयुषोऽर्ध मगा दित्युच्यते । विषयमेव राजयतीति विराट् ॥ ६ ॥

परिणामानन्तरं बुद्धिवृत्तयो दुहितृ[2] रित्युच्यन्ते । पितृशब्दवाच्याना मिन्द्रियाणां परिणामानां भ्रातृशब्दवाच्यानां ज्ञानानन्दलक्षणयशसो नाशिनीः, कृ[3] विक्षेपे इति धातुः स्वजातिप्रसिद्धशीलौदार्यगुणयुक्ताः बाह्यविवक्षया संख्याकथन मन्तस्त्वनेकत्वसंख्यैव, पौरञ्जन्योऽनेकदेहजननहेतवः । हे प्रजापते ! ॥ ७ ॥

पुत्रान् बुद्धिपरिणामान् दारैः परिणामानन्तरचेष्टाभिः संयोजनं दुहितॄ बुद्धिवृत्तीः सदृशै र्वरैः वृत्तियोग्य विषयैः ॥ ८ ॥

पुत्राणां पुत्रा अभवन्निति परिणतवृत्तिभ्यो वृत्त्यन्तराणीति । पाञ्चालेषु विषयेषु ॥ ९ ॥

तस्य रिक्थं विषयधनं हरन्तीति तद्रिक्थहारा स्तेषु नानावासना गृह्णातीति गृहं, तच्च कोशो मनः तदुपजीव्य वर्तन्त इति गृहकोशानुजीविनः तेषु निगूढेन प्रविष्टेन, ममैते परिणामादय इति कल्पितेन ममत्वेन विशेषेण सक्तोनाऽऽत्मानं परञ्चजानातीत्यन्वयः ॥ १० ॥

**ईजे च क्रतुभि र्घोरै र्दीक्षितः पशुमारकैः ।**
**देवान्पितॄन्भूतपतीन् नानाकामो यथा भवान् ॥ ११ ॥**

**युक्तेष्वेवं[5] प्रमत्तस्य[6] कुटुम्बाऽऽसक्तचेतसः ।**
**आससाद स वैकालो योऽप्रियः प्रिययोषिताम् ॥ १२ ॥**

**चण्डवेग इति ख्यातो गन्धर्वाधिपति र्नृप !**
**गन्धर्वा स्तस्य बलिनः षष्ट्युत्तरशतत्रयम् ॥ १३ ॥**

**गन्धर्व्य स्तादृशी[7] रस्य मैथुन्यश्च सितासिताः ।**
**परिवृत्त्या विलुम्पन्ति सर्वकाम[8]विनिर्मिताम् ॥ १४ ॥**

---

1. A, B, T °णासक्तः 2. A दुहितर इत्युच्यन्ते । 3. B कृ 4. M, Ma °र्विप्रै° 5. Ma, M s गृहेष्वेवं 6. W प्रसक्तस्य
7. M, Ma Ms °स्तावती रस्य 8. M, Ma, Ms कामान् विनिर्मितान्

**ते चण्डवेगानुचराः पुरञ्जनपुरीं[1, 2] यदा।**

**हर्तुमारेभिरे तत्र प्रत्यषेध त्प्रजागरः ॥ १५ ॥**

**श्रीध० *ईज** इति। भूतपतीन् भैरवादीन् ॥ ११ ॥

**युक्तेष्विति**। युक्तेष्वात्महितेषु कर्म स्वनवहितस्य [3-]यः कालः अप्रियोभवति तेषां प्रियाः योषितो येषां तेषां कामिना मित्यर्थः।[-3] सवै कालो जरासमयः ॥ १२ ॥

**चण्डवेग** इति। चण्डवेगः संवत्सरेण आवर्तमानेन उपलक्षितः, गन्धर्वाः दिवसाः ॥ १३ ॥

**गन्धर्व्य** इति। गन्धर्व्यो रात्रयः तादृशी स्तादृश्यः मैथुन्यो दिवसैः[4] मिथुनीभूय स्थिताः सिताश्चाऽसिताश्च शुक्लकृष्णपक्षीयाः परिभ्रमणेन[5] सर्वैः कामै स्सह विनिर्मितां पुरीम् अपहरन्ति ॥ १४ ॥

**त** इति। प्रजागरः प्राणः ॥ १५ ॥

**वीर०** नानाकामः नानाभूतान् शब्दादिविषयान् कामयमानः पशुमारकैः हिंसागर्भैः अतएव घोरैः क्रतुभिः कर्मेन्द्रियव्यापाररूपैः दीक्षितः कृतसङ्कल्पः कर्मेन्द्रियव्यापार रूपान् क्रतू नारभ्येत्यर्थः। तेषां प्रायशः पञ्चसूनादिहिंसागर्भत्वात् पशुमारकै रित्युक्तम्। देवादीन् ईजे इष्टवान्। देवशब्दो देवाधिष्ठितेन्द्रियपरः। इन्द्रियाण्यतार्प्सी दित्यर्थः। पितॄन् भूतपतीनिति दृष्टान्ताभिप्रायकम्। यथा भवान् देव पितृभूतपती नीजे तथाऽयं देवा नीजे इत्यर्थः ॥ ११ ॥

युक्तेषु दृढतराभिसन्धियुक्तेषु कर्मसु प्रसक्तस्य नितरा मासक्तस्य कुटुम्बे बुद्धितद्वृत्त्यादा वासक्तचित्तस्य सवै कालः जरासमयः आससाद प्राप्तः। देहदृष्ट्येदमुक्तम्। कालं विशिनीष्ट - यः कालः प्रिययोषितां परस्पर मप्रियकरः ॥ १२ ॥

चण्डवेग आशुवेगः संवत्सररूपः कालः[6] ख्यातः प्रसिद्धः। स हि गन्धर्वाणां - गन्धर्वाश्च गन्धर्व्यश्च। "पुमान् स्त्रिया" (अष्टा० 1-2-67) इत्येकशेषः। तेषामधिपतिः। तस्य बलिनः प्रसह्याऽऽयुर्हरतः चण्डवेगस्य भृत्याः षष्ट्यधिकशतत्रयदिवसात्मकाः गन्धर्वाः परोक्षमायारूपधनाप हारित्वात् गन्धर्वत्वेन रूप्यन्ते ॥ १३ ॥

तथा तादृशीः अस्य चण्डवेगस्य सम्बन्धिन्य स्तादृश्यः आर्षत्वा न्व्यत्ययेन द्वितीया। षष्ट्युत्तरशतत्रयसंख्याका गन्धर्व्यः

1. A, B, G, I, J, T पुरं 2. V यथा * The commentary on 11th verse is not found in B, J, V, Va 3--3. A, B, J, Va omit 4. V adds एव 5. V adds एव 6. W omits कालः

रात्र्यात्मिकाः मैथुन्यः दिवसैरेव मिथुनीभूय स्थिताः। सिताश्चाऽसिताश्च शुक्लकृष्णपक्षीयाः परिवृत्त्या परिभ्रमणेन सर्वैः कामैः[1] शब्दादिभिः तत्करणैश्च विनिर्मितां पुरीं शरीरं विलुम्पन्ति अपहरन्ति अपहर्तुमारेभिरे इत्यर्थः। जराप्राप्त्यनन्तरं मृतिदिवसाः[2-2] प्राप्ता इत्यर्थः। एतत्सर्वं देहदृष्ट्योक्त मिति द्रष्टव्यम्॥ १४॥

चण्डवेगस्याऽऽनुचरा स्ते गन्धर्वाः पुरञ्जनस्य पुरीं यदा हर्तुमारेभिरे आरब्धवन्तः तत्र पुर्यां यः प्रजागरः प्राणः सुषुप्त्यवस्थाया मपि प्राणव्यापारात् प्रजागर इत्युक्तम्। प्रत्यषेधत् न्यवारयत्। यावत् प्राणव्यापारः तावच्छरीरस्याऽवैकल्येनाऽवस्थानात् प्रत्यषेध दित्युक्तम्॥ १५॥

**विज०** देवान् काम्यफलदान्, भूतपतीन् भैरवादीन्॥ ११॥

एवंविधया क्रियया युक्तेषु काम्येषु, सक्तस्येति शेषः। हरौ मनोयोगवत्सु ज्ञानेषु एव मुक्तप्रकारेण प्रमत्तस्य तद्वार्तारहितस्येति वा। प्रिया हृद्या योषितो येषां ते तथा, तेषां विषयिणा मपि योऽप्रियोऽनपेक्षितः॥ १२॥

गन्धर्वाणां कलाकाष्ठादीनां स्वावयवानामधिपतिः चण्डोवेगो यस्य स तथेति ख्यातः स काल आससादेत्यन्वयः। गन्धर्वादिवसाः॥ १३॥

गन्धर्व्यो रात्रयः तावती स्तावत्यः मिथुनीभूय वर्तमाना मैथुन्यः सिता दिवसाः, असिता रात्रय इति सितासितपरिवृत्त्या परिभ्रमणेन पुनः पुन रावर्तनेन कामान् विलुम्पन्ति क्षपयन्तीत्यन्वयः॥ १४॥

हर्तुं जीर्णबलां कर्तुं, प्रजागरः प्राणः, "प्राणाग्नय एवैतस्मिन्पुरे जाग्रति" (प्रश्न. उ. 4-2-37) इति श्रुतेः। प्राणबलाद्व्यापाराय प्रवर्तत इत्यर्थः॥ १५॥

**स सप्तभिश्शतै[3]रेको विंशत्या[4] च शतं समाः।**
**पुरञ्जनपुराध्यक्षो गन्धर्वैर्युयुधे बली॥ १६॥**
**क्षीयमाणे स्व[5] सामर्थ्ये एकस्मिन्[6] बहुभि र्युधि[7]।**
**चिन्तां परां जगामार्तः[8] सराष्ट्रपुरबान्धवः॥ १७॥**

---

1. A, B, T omit कामैः 2--2. A, B, T omit 3. W °रै° 4. M, Ma °केन 5. A, B, G, I, J, T सम्बन्धे; W सम्बन्धिन्ये° 6. M, Ma, Ms °स्य 7. A, B, G, I, J, T °धा 8. W °माथ

**स एव पुर्यां मधुभु[1]क्पाञ्चालेषु स्वपार्षदैः ।**
**[2]उपानीतं बलिं गृह्णन् स्त्रीजि[3]तो नाऽविदद्भयम् ॥ १८ ॥**

**कालस्य दुहिता काचित् त्रिलोकीं वर मिच्छती ।**
**पर्य[4]टन्तीं न बर्हिष्मन् प्रत्यनन्दत कश्चन ॥ १९ ॥**

**[5]दौर्भाग्येनाऽऽत्मनो लोके विश्रुता दुर्भगेति सा ।**
**[6]या तुष्टा [7]राजऋषये [8]वृताऽदात्पूरवे वरम् ॥ २० ॥**

**श्रीध०** **स** इति । विंशत्या च सह ॥ १६ ॥

**क्षीयमाण** इति । स्वसम्बन्धे स्वसम्बन्धिनि प्राणे ॥ १७ ॥

**स** इति । स एव मधुभुक् क्षुद्रसुखभोक्ता, स्वपार्षदै रिन्द्रियेः नाऽविदत् नाऽऽलोचितवान् ॥ १८ ॥

**कालस्येति** । कालस्य दुहिता जरा [9]अस्ति तां न प्रत्यनन्[10]दत नैच्छत् । बर्हिष्मन् ! हे प्राचीनबर्हिः ! ॥ १९॥

[11]दौ र्भाग्येति । पूरवे ययाति पुत्राय तेनवृता सती वर मदात् । ययातिः शुक्रशापा ज्जरां प्राप्य पुत्रा नुवाच इमां गृह्णीतेति तां ज्येष्ठाश्चत्वारो न ज गृहुः । पुरु स्तुजगृहे । ततो ययाति स्तस्मै राज्यं ददा विति, जरैवाऽदा दित्युक्तम् ॥ २० ॥

**वीर०** स एकः प्रजागरः सप्तभि विंशत्या सप्तविंशति संख्याकै र्भूतपञ्चक तन्मात्रपञ्चक ज्ञानेन्द्रियपञ्चककर्मेन्द्रियपञ्चकापानादि प्राण चतुष्टय मनोबुद्ध्यहङ्कारात्मकैः शरैः, शतं समा इति प्रारब्धोपलक्षणं, यावत् प्रारब्धावसानं पुरञ्जनपुरस्याऽध्यक्षः पालकः बली गन्धर्वै स्सहयुयुधे युद्धञ्चकार शरीरं [12]विप्लावयामासेत्यर्थः ॥ १६ ॥

बहुभि स्साकं युधि [13-]एकस्मिन् स्वसम्बन्धि[-13]नि स्वसामर्थ्ये शीर्यमाणे सति शतवत्सरावसान इत्यर्थः । राष्ट्रादिभि स्सहितः प्रजागरः परां चिन्तामवाप शरीरं [14]कथं प्राणयामीति चिन्तामवापेत्यर्थः ॥ १७ ॥

स पुरञ्जनः मधुभुक् स्वपार्षदैरिन्द्रियैः पाञ्चालेषु शब्दादिविषयेषु मध्ये उपानीतं प्रापितं बलिं शब्दाद्यन्यतमं विषयं गृह्णन् अनुभवन् स्त्रिया बुद्ध्या जितो वशीकृतः भयं मृत्युभयं नाऽविन्दन्नाऽलोचितवान् ॥ १८ ॥

---

1. A, B, G, I, J, T ⁰प⁰ 2. A, B, G, I, J, Ms, T उप⁰ 3. W ⁰क्यां⁰ 4. Ms ⁰टत्तां 5. V दुर्भगे⁰; W ⁰दौर्भगे 6. M, Ma, Ms यां तुष्टे
7. A, B, G, I, J, T राजर्षये तु 8. M, Ma, M s पिताऽ⁰ 9. V स्त्री 10. A, V ⁰त् 11. V दुर्भगेनेति । 12. A, B, T, विस्माप⁰
13--13. A, B, T omit 14. A, B, T omit कथं

[1]काचित् कालस्य दुहिता जरारूपा काचिदस्ति। सा त्रिलोक्यां वरं पति मिच्छन्ती पर्याटत्। हे बर्हिष्मन्! तां कालकन्यां कोऽपि पुमान् न प्रत्यनन्दत नाऽवृणोत्॥ १९॥

अनभिनन्दने हेतुं वदन् तन्निमित्तं गुणनामधेय माह। दौर्भगेन दुष्टं भगं सौन्दर्यं यस्माद्भवति सदुर्भगः। स एव दौर्भग स्तेनाऽऽत्मना स्वरूपेण लोके दुर्भगेति विश्रुता प्रख्याता तां विशिनष्टि। या कालकन्या ययातिपुत्रेण पूरुणा वृता सती तुष्टा तस्मै राजर्षये पूरवे वरं राजाऽऽसनरूप मदात्। ययाति र्देवयानीगमने[2] क्रुद्धशुक्रशापाज्जरां प्राप्य पुत्रा नुवाच इमां जरां गृह्णीतेति। ताश्च ज्येष्ठाश्चत्वारः न जगृहुः। पूरु स्तुजगृहे। ततो ययाति स्तस्मै राज्यं ददाविति, जरैवाऽदादित्युक्तम्॥ २०॥

**विज०** स सप्तभिः शतै र्विंशद्भिश्च अहोरात्रैः शतं समाः शतवर्षपर्यन्तं युयुधे। तेषां पराक्रमं निरुध्यस्वयं प्राणबलात् देह मपालय दित्यर्थः॥ १६॥

राष्ट्रेण विषयेन पुरेण देहेन, बान्धवै रिन्द्रियैः सह वर्तमानः॥ १७॥

स्त्रीजितो बुद्ध्याऽविवेकं प्राप्तः विषयेषु स्वपार्षदै रिन्द्रियैरुपनीतं बलिरूपादिविषयं गृह्णन् मधुभुक् कर्मफलभुक् कालनिमित्तं भयं नाऽज्ञासी दित्यन्वयः॥ १८॥

अस्ति जायते परिणमते वर्धते इति चतुरूर्मिप्रकारप्राप्तिं निरूप्य प्रक्षीयते विनश्यतीत्येत दुक्तंजराप्राप्तिमाह- कालस्येति। कालाज्जरा जायत इति कालस्य दुहितेति। विशेषनामा श्रवणात् काचिदिति॥ १९॥

या सा आत्मनः शरीरस्य दौर्भाग्यत्वेन सौन्दर्याभावेन लोके दुष्टो भगो यस्या स्सा तथेति विश्रुता, यां जरां तुष्टः पिता ययातिः राजश्रेष्ठाय पूरवे वर मदात्, तां कश्चन न प्रत्यनन्दते त्यन्वयः॥ २०॥

**कदाचि दटमाना सा ब्रह्मलोका न्महीं गतम्।**
**वव्रेबृहद्व्रतं मान्तु जानती काममोहिता॥ २१॥**

***प्रत्याख्याता मया सातु कालकन्या विशांपते!**
**मयि संरभ्य विपुल मदाच्छापं सु[3]दुस्सहम्।**
**स्थातु मर्हसि नैकत्र मद्याच्ञाविमुखो मुने॥ २२॥**

---

1. A, T omit कचित् 2. A, T °नानुक्रुद्ध; B °न मनुक्रुद्ध।

* This half verse is found in V edition and the commentary of Veera Raghava in A, B & T Edns. 3. V दुस्तरम्

**ततो विहतसङ्कल्पा कन्यका यवनेश्वरम्।**

**मयोपदिष्ट मासाद्य वव्रे नाम्ना भयं पतिम्॥ २३॥**

**ऋषभं यवनानां त्वां वृणे वीरेप्सितं पतिम्।**

**सङ्कल्प स्त्वयिभूतानां कृतः किल न रिष्यति॥ २४॥**

**द्वा विमा वनुशोचन्ति बाला वसदवग्रहौ।**

**यल्लोकशा[1]स्त्रोपनतं न राति न तदिच्छति॥ २५॥**

**[2]अथो भजस्व मां भद्र [3]भजन्तीं मे दयां कुरु।**

**एतावान्पौरुषो धर्मो यदार्ता ननुकम्पते॥ २६॥**

**श्रीध०** [4-]**कदाचिदिति**[-4]। सा जरा ब्रह्मव्रतं नैष्ठिकम्॥ २१॥

**मयीति** प्रत्याख्यातवति मयि संरभ्य क्रोधं कृत्वा, नैकत्र स्थातु मर्हसीति शाप मदात्॥ २२॥

**तत** इति। आधयोव्याधयश्च, यवना स्तेषा मीश्वरं भयनामानं [5-]मृत्युरूपं[-5] पतिं वव्रे॥ २३॥

**ऋषभ** मिति। हे वीर! त्वा मीप्सितं पतिं वृणे। न रिष्यति [6-]न नश्यति[-6]॥ २४॥

**द्वाविति**। लोकतो वेदतश्च यद्देयत्वेन ग्राह्यत्वेन चोपनतं प्राप्तं तद्याच्यमानं यो न ददाति, यश्च दीयमानं नेच्छति न गृह्णाति इमौ द्वौ कर्मभूतौ, अनुशोचन्ति सन्तः॥ २५॥

**[7]अथो** इति। पुरुषेण कर्तव्यो धर्मः पौरुषः॥ २६॥

**वीर०** कदाचि त्सा कालकन्या [8]भूलोके पर्यटन्ती ब्रह्मलोका त्सत्यलोकात् महीं भूमिं गतं प्राप्तं मां बृहद्व्रतं नैष्ठिकं जानत्यपि काममोहिता [9]सती वव्रे॥ २१॥

(भाग. 4-27-22) "[10-]प्रत्याख्याता मया सा तु कालकन्या विशाम्पते[-10]"॥ [11]ततो [12-]मयिप्रत्याख्यातवति[-12] मयि संरभ्य क्रोधं

---

1. V °वेदोप° 2. V अतो 3. J, M, Ma भजतीं°; V भजन्त्या। 4--4. V omits 5--5. B, J, V, Va omit 6--6. A omits 7. V अत। 8. A, B, T भूर्लोके 9. W omits सती 10--10. W omits 11. A, B, T यतो 12--12. A, B, T मया प्रत्याख्याता

कृत्वा विपुलं महान्तं दुस्सहं[1] दुरतिक्रमणीयं शाप मदात्। शापमेवाह-हे मुने! त्वं यतो मद्याच्ञाविमुखः तत एकत्र चिरेण स्थातुं नाऽर्हसीति॥ २२॥

ततो विहतसङ्कल्पा [2-]भ्रष्टमनोरथा[-2] कालकन्यका आधयो व्याधयश्च यवनाः तद्वत्पीडाकारित्वात्, तेषा मीश्वरं मया उपदिष्टं नाम्ना भयं भयनामानं पति मासाद्य वव्रे॥ २३

वरणप्रकारमेवाऽऽह - **ऋषभ** मिति। हे वीर! यवनानामृषभ मीश्वरं त्वा मीप्सितं पतिं[3] वृणे, त्वयि कृतो भूतानां सङ्कल्पः न रिष्यति न नश्यति॥ २४॥

त्वयाऽहं न प्रत्याख्येया- इत्याह- **द्वाविति**। लोकतोवेदतश्च यद्देयत्वेन ग्राह्यत्वेन चोपनतं प्राप्तं तद्याचमानाय यो न ददाति, यच्च दीयमानं यो नेच्छति न गृह्णाति इमौ द्वौ असदवग्रहौ असन् व्यर्थः अवग्रहोऽभिमानः, आग्रहो वा ययोस्तौ, अत एव बालौ अज्ञौ कर्मभूतौ अनुशोचन्ति इमौ प्रति अनुशोचन्ति, सन्त इत्यर्थः॥ २५॥

हे भद्र! भजन्तीं मां भजस्व मयि दयांकुरु पौरुषः पुरुषेण कर्तव्यो धर्मः एतावानेव किं तत्? यदार्तानुकम्पते॥ २६॥

**विज०** तुशब्दः अप्यर्थे। या मां बृहद्व्रतं ब्रह्मचरिणं जानन्त्यपि ब्रह्मलोकात् मही मागतं वव्र इत्यन्वयः। तत्र हेतुः काममोहितेति॥ २१॥

ततः किमभूदिति तत्राऽऽह - **मयीति**॥ २२॥

सा कन्या यवनेश्वरं नानाव्याधीनां स्वामिनं नाम्ना भयं मृत्युं पतिं वव्र इत्यन्वयः॥ २३॥

न रिष्यति न दह्यति॥ २४॥

असन् अवग्रह आग्रहो ययौ स्तौ तथा बालौ स्वकार्याज्ञौ। अनुशोचन्ति, सर्व इति शेषः। कौ तौ? यौ लोकशास्त्रयो रविरोधतयोपनतं प्राप्तं अर्थिभ्यो न राति न ददाति, दायं स्वीयं नेच्छति ता वितिशेषः। नन्वनेन लोकविद्विष्टं चेत् शास्त्रीय मपि न कर्तव्य मित्यायतम् समत्वेन सहोक्तेन। "तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ"॥ (भ.गी.16-24) इत्यादिविधानं व्यर्थमितीयं शङ्का "अलौकिकश्च शास्त्रीयं कर्तव्यं लौकिकं कुतः? लोकार्थं शास्त्रहा याति निरय न्वितरः सुरान्"॥ (पाद्मे) इत्यनेन परिहर्तव्या। तस्माच्छास्त्रानुसारि लौकिकं कर्तव्यं, नेतर दिति तात्पर्यम्। इतरः शास्त्रानुकूललौकिकं कुर्वाणः सुरान् याति स्वर्गादिपुरुषार्थ माप्नोतीत्यर्थः॥ २५॥

---

1. W दुस्तरं 2--2. W omits 3. A, B, T omit पति०।

उपसंहरति - **अथो** इति। यस्मा दिदं शास्त्रीयम्। अथोतस्मात् संक्षिप्य स्वकार्यस्य कर्तव्यतामाह- **एतावा** निति। पौरुषः पुरुषनिष्ठः॥ २६॥

**कालकन्योदित[1] वचो निशम्य यवनेश्वरः।**
**चिकीर्षु[2] र्देव[3]गुह्यं स सस्मितं ता मभाषत॥ २७॥**

**मया निरूपित स्तुभ्यं पति रात्मसमाधिना।**
**नाऽभिनन्दति लोकोऽयं त्वा मभद्रा मसत्त[4]माम्॥ २८॥**

**[5]त्व मव्यक्तगति र्भुङ्क्ष्व लोकं कर्मविनिर्मितम्।**
**या हि मे पृतनायुक्ता प्र[6]जा नाशं प्रणेष्य[7]सि॥ २९॥**

**प्रज्वारोऽयं मम भ्राता त्वञ्च मे भगिनी भव।**
**चरा म्युभाभ्यां लोकेऽस्मिन्नव्यक्तो भीमसैनिकः॥ ३०॥**

इति श्रीमद्भागवते महापुराणे अष्टादशसाहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
चतुर्थस्कन्धे पुरञ्जनोपाख्याने सप्तविंशोऽध्यायः॥ २७॥

**श्रीध० कालकन्येति**। देवगुह्यं मरणम्, तद्धि प्राणिनां वैराग्यानुदयाय देवैर्गोप्यते॥ २७॥

**मयेति**। तुभ्यं तव आत्मसमाधिना ज्ञानदृष्ट्या याच्यमानोऽयं लोकस्त्वां नेच्छति॥ २८॥

**त्वा मिति**। अतोऽव्यक्तगतिः कुतः प्राप्तेत्यलक्षितगतिस्सती लोकमाक्रम्य भुङ्क्ष्व। एवं सर्वोऽपि लोकस्तव पति [8]र्गतिश्च स्या दित्यर्थः। न चैवं त्वया शङ्कनीयं, प्रतिकूलां मां लोको हनिष्यतीति, यस्मात्त्वमेव प्रजानाशं करिष्यसीत्याह- याहीति। या मदीया यवनपृतना तया युक्ता॥ २९॥

---

1. M, Ma, Ms °तां वाचं 2. चिकीर्षती° देवगुह्यं 3. Ms °र्षन्देवं 4. A, B, G I, J, M, Ma, Ms, T °सम्मताम् 5. M, Ma त्वमज्ञात; W अतोऽव्यक्त
6. M, Ma सोऽप्रज त्वां 7. M, Ma °ति। 8. A, B, J, Va omit गतिश्च।

किञ्च **प्रज्वार** इति। प्रज्वार इति मारको वैष्णवोज्वरः, माहेश्वरस्य व्याध्यन्तः पातित्वात्, भीमाघोराः सैनिका यस्य॥ ३०॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्री श्रीधरस्वामिविरचितायां भावार्थदीपिकायां

व्याख्यायां सप्तविंशोऽध्यायः॥ २७॥

**वीर०** कालकन्ययोदितं वचः श्रुत्वा स यवनेश्वरो भयनामा देवगुह्यं मरणं, तद्धि प्राणिनां वैराग्यानुदयाय देवै र्गोप्यते। कर्तु मिच्छुः, स्मितेन सहितं यथा तथा समभाषत॥ २७॥

तुभ्यं मया आत्मसमाधिना चित्तैकाग्र्येण बहुधा विचार्येत्यर्थः। लोकरूपः पति र्निरूपितो निश्चितः। कोऽसौ इत्यत्राऽऽहयाच्यमानो[1]ऽयं लोक स्त्वा मभद्रा मसत्तमां नेच्छति॥ २८॥

अतोऽव्यक्तगतिः कुतः प्राप्ते त्यलक्षितगतिस्सती कर्मनिर्मितं लोकमाक्रम्य भुङ्क्ष्व। एवं सर्वोऽपि हि लोकः तव पतिः स्या दित्यर्थः। न चैवं त्वया शङ्कनीयं, मां प्रतिकूलां [2-]लोको हनिष्यतीति[-2] यस्मात्त्वमेव लोकस्यनाशं करिष्यसीत्याह- याहीति। या मदीया पृतनायवनानां सेना तया युक्ता याहि॥ २९॥

प्रज्वारो वैष्णवज्वरः त्वां प्रणेष्यति लोकं प्रति प्रापयिष्यति। अत्र प्रज्वार इति मारकोवैष्णवज्वरो विवक्षितः, न माहेश्व[3]रज्वरः [4-]माहेश्वरस्य[-4] व्याध्यन्तः पातित्वेन मारकत्वा भावात्। प्रज्वारो मम भ्राता [5]भवति त्वञ्च मे भगिनी स्वसा भव। उभाभ्यां प्रज्वारकालकन्याभ्यां युवाभ्यां सह अहं भीमसैनिकः यवन सेना नायकः अव्यक्तगति स्सन् लोके चरामि। अत्र कालस्य दुहिता काचिदित्यादिश्लोकत्रयेण नारदस्य जरानाक्रान्तत्व मुक्तम्। एतच्च, नैष्ठिकसनकादीना मप्युपलक्षणम्। स्वस्य शापग्रस्तत्वकथनं तस्यावर्जनीयत्वाभिप्रायकम्। ततो विहत सङ्कल्पेत्यादिना जराधिव्याधिप्रज्वारभयानां [6]पूर्वपूर्वस्य उत्तरोत्तरहेतुत्वम्, अन्योन्यसहित्येन मरणहेतुत्व ञ्चोक्तम्। जरादीनां परस्परभाषणादिकथनं तेषां मूर्तिमत्त्वाभिप्रायेण तदधिष्ठातृदेवताभिप्रायेण वा उपपन्नम्॥ 30॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषालिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां सप्तविंशोऽध्यायः॥ २७॥

---

1. A, B, T omit अयं 2--2. W लोका हनिष्यन्तीति 3. A, B, T °श्वरः 4--4. A, B, T तस्य 5. A, B, T omit भवति 6. A, B, T omit पूर्व

**विज०** तस्मात् दुर्भगत्व मनपेक्ष्य तद्वचनस्याऽऽदरप्रकारमाह- **कालकन्येति**। देवस्य विधातु र्गुह्यं रहस्यं वक्ष्यमाणमर्थं सस्मित मभाषतेत्यन्वयः ॥ २७ ॥

तत्र भोगोपाय मुपदिशति- **नाऽभिनन्दतीति**। अयं लोकोऽसम्मतां त्वां नाऽभिनन्दतीति यस्मात्।। २८ ॥

तस्मा त्त्व मज्ञातगति र्लोकं भुङ्क्ष्व ॥ २९ ॥

योऽयं मम भ्राता प्रज्वारः शैववैष्णवोभयलक्षणः सोऽप्रजोऽनपत्य स्त्वां प्रणेष्यति ग्रहीष्यती त्यन्वयः। भीमा भयङ्कराः सैनिकाः सेनापतयो यस्य स तथा सः ॥ ३० ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीविजयध्वजतीर्थ कृतायां पदरत्नावल्यां

टीकायां सप्तविंशोऽध्यायः ॥ २७ ॥



# अष्टाविंशोऽध्यायः

## नारद उवाच

सैनिका भयनाम्नो ये बर्हिष्मन्[1]दिष्टकारिणः।
प्रज्वार काल कन्याभ्यां विचेरू रवनी मिमाम्॥ १॥

त एकदा तु [2]रभसा पुरञ्जनपुरीं नृप।
रुरुधु र्भौमभोगाढ्यां जरत्पन्नगपालिताम्॥ २॥

काल कन्याऽपि बुभुजे पुरञ्जनपुरं[3] बलात्।
ययाऽभिभूतः पुरुष स्सद्यो निस्सारता मियात्॥ ३॥

तयोपभुज्यमानां वै यवना स्सर्वतोदिशम्।
द्वार्भिः प्रविश्य सुभृशं प्रार्दयन् सकलां पुरीम्॥ ४॥

तस्यां [4]प्रपीड्यमानायां अभिमानी पुरञ्जनः।
अवापोरुविधां स्तापान् कुटु[5]म्बी ममताऽऽकुलः॥ ५॥

## श्री श्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टाविंशे तु वैदर्भ्याऽऽख्यानेन स्त्रीविचिन्तया। स्त्रीत्वं प्राप्तस्य दैवेन कदा चिन्मुक्ति रुच्यते॥

इदानीन्तु पुरञ्जनस्य पुंदेहत्याग[6]प्रकारपूर्वकं स्त्रीत्वप्रकार माह - सैनिका इत्यादि राजसिंहस्य वेश्मनीत्यन्तेन। दिष्टं दैवं कुर्व[7]न्त्यधिकुर्वन्तीति तथा। मृत्यो रादेशकारिण इति वा॥ १॥

त इति। [8-]प्रारब्धकर्मक्षये सैनिका व्याधयः रुरुधुः भौमभोगाढ्यां स्वादनपानादिना स्थूला, यौवने इति शेषः।[-8] जरत्पन्नगेन जीर्णप्राणेन पालिताम्॥ २॥

---

1. M, Ma. Ms °न्नि° 2. W °सात् 3. M, Ma पुरीं 4. V °विश्य° 5. W °म्बे 6. B, J, Va omit प्रकार 7. V omits अधिकुर्वन्ति
8--8. A, B, J, Va omit

*कालेति। यौवनानन्तरं जरा प्रविवेशेत्यर्थः ॥ ३ ॥

**तयेति**। [1-]जराव्याप्तां तनुं यवनाः व्याधयः[-1]। द्वार्भिः चक्षुरादिभिः रोगरूपेण प्रविश्य ॥ ४,५ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं जरादीनां उत्तरोत्तरहेतुत्वं सम्भूय मृतिहेतुत्वञ्च अभिधाय इदानीं एते सर्वे पुरञ्जनपुरी माविश्य पीडयन्तः विप्लावयामासुः इति वदन् ''यं यं वाऽपि स्मरन् भावं त्यजेदन्ते कलेबरम्। तंतमेवैति कौन्तेय सदा तद्भावभावितः'' (भ.गी.8-6) इत्युक्तरीत्या कथापक्षे पुरञ्जनस्य राज्ञः स्त्रीचिन्तया स्त्रीजन्मप्राप्तिं कथनव्याजेन अध्यात्मपक्षेऽपि जीवस्य कर्मवशात् स्त्रीत्वप्राप्तिं तत्र पुन रदृष्टविशेषात् भागवतसङ्गतिं ईश्वरप्रसादञ्चाऽऽह [2]अष्टाविंशेन नारदः। हे बर्हिष्मन् भयनाम्नो ये सैनिकाः सेनायां भवा स्सैनिकाः, दिष्टकारिणः आदेशकारिणः, ईश्वरस्य इति शेषः। प्रज्वार कालकन्याभ्यां सह इमां भूमिं विचेरुः पर्यटुः ॥ १ ॥

ते सैनिकाः कदाचिद्देहारम्भकप्रारब्धावसाने जरत्पन्नगेन जीर्णप्राणेन पालितां, भौमैः भूम्यां भवैः भोगैः शब्दादिविषयभोगैः, आढ्यां पुरञ्जनपुरीं रुरुधुः ॥ २ ॥

कालकन्या जरा [3]पुरञ्जनपुरीं बलात् बुभुजे पुरञ्जनपुरं जराव्याध्यादिग्रस्तं अभूदित्यर्थः। कालकन्यां विशिनष्टि- यया कालकन्यया अभिभूतः पुरुषः निस्सारतां प्राप्नुयात् ॥ ३ ॥

तया कालकन्यया उपभुज्यमानां सकलां पुरञ्जनपुरीं यवनाः सर्वतोदिशं द्वार्भिः प्रविश्य चक्षुरादिषु रोगरूपेण प्रविश्य भृशम् अधिकं प्रार्दयन् पीडितवन्तः ॥ ४ ॥

तस्यां पुर्यां यवनादिभिः प्रपीड्यमानायां ममेयं पुरी इत्यभिमानी पुरञ्जनः कुटुम्बे बुद्धीन्द्रियमन [4]आदिरूपे या ममता तया आकुलः आक्षिप्तचित्तः बहुविधान् तापान् क्लेशान् प्राप ॥ ५ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

ईश्वरेच्छोपनतकर्मवशात् शरीर मनुविश्य स्थितस्य जीवस्य जाग्रदाद्यवस्थाभेदं प्रतिपाद्य, अधुना शरीरवियोगलक्षणामवस्थां वक्तुमुपक्रमते - **सैनिका** इत्यादिना। वातादिव्याधिसमूहा इमां अवनिं विचेरुः इत्यनेन जरादिव्याधयोऽस्मिन्प्रपञ्च एव नाऽन्यत्रेति ज्ञायते ॥ १ ॥

---

* The commentary on verse 3 is not found in A, B, J, Va

1--1. A, B, J, Va omit 2--2. W omits 3. A, B, T add अपि 4. A, B, T रूपेण

भौमभोगाः अशन पानवसनलक्षणाः। रुरुधुः शरीरं विविशुः। जरत्पन्नग इति प्राणबला च्चेष्टाल्पत्वंलक्ष्यते नतु प्राणस्य तस्य निस्सीमबलत्वात्॥ २॥

कन्याऽपि बुभुज इति यौवनानन्तरं विवेश॥ ३॥

प्रार्दय न्निति जराग्रस्तस्य पलितस्य अक्षिमान्द्यं.बधिरत्वं, दन्तभङ्गः, क्षामाकुलत्वं, अग्निदौर्बल्यं.कण्ठे घुरुघुरुत्वं इत्यादिनानाव्याधयो दृश्यन्ते इति॥ ४,५॥

**कन्योपगूढो नष्टश्रीः कृपणो विषयात्मकः।**
**नष्टप्रज्ञो [1]हृतैश्वर्यो गन्धर्वयवनै र्बलात्॥ ६॥**

**विशीर्णां स्वपुरीं वीक्ष्य प्रतिकूला ननादृतान्।**
**[2]पुत्त्रपौत्त्रानुगामात्या ञ्जाया ञ्च गतसौहृदाम्॥ ७॥**

**आत्मानं कन्यया[3] ग्रस्तं [4]पाञ्चाला[5]नरिदूषितान्।**
**दुरन्तचिन्तामापन्नो न लेभे तत्प्रतिक्रियाम्॥ ८॥**

**कामानभिलषन्दीनो यातयामांश्च कन्यया।**
**[6]विगतात्म[7]गतिस्नेहः पुत्त्रदारांश्च लालयन्॥ ९॥**

**गन्धर्व यवनाक्रान्ता कालकन्यापमर्दिताम्।**
**हातुं प्रचक्रमे राजा तां पुरी मनिकामतः॥ १०॥**

**श्रीध० कन्येति**। कन्यया जरयोपगूढस्सन् तत्प्रतिक्रियां न लेभे + इति तृतीयेनाऽन्वयः। हृतैश्वर्यः उत्थानादि ष्वशक्तः॥ ६॥

**विशीर्णा** मिति। प्रतिकूला ननपेक्षितविषय प्रापणान् अनादृतान् आदर मकुर्वाणान्, स्वाधीनत्वा भावात्। अनुगा इन्द्रियाणि अमात्याः इन्द्रिय[9]देवाः। गतसौहृदाम्, अध्यवसायाभावात्॥ ७॥

**आत्मान** मिति। [10-]कन्यया जरया ग्रस्तम् पञ्चालान्[-10] विषयान्। अरिभिः [11]व्याध्यादिभि र्दूषितान्॥ ८॥

---

1. A, B, G, I, J, T, V हृ° 2. A, B, G, I, J, T पुत्रान्पौ° 3. V °काग्र° 4. A, B, G, I, J, T प° 5. W °लाश्चारि° 6. M, Ma, Ms गतात्मसंविन्निस्स्नेहः 7. V गतिस्स्नेहात् 8. W नैर्भुग्नं 8. V देवताः 10--10. V omits 11. V विघ्नादिभिः

**कामा निति** । कालकन्यया हेतुभूतया यातयामान् निस्सारानपि कामा नभिलषन्, विगता आत्मनो गतिः पार लौकिकी ऐहिकः पुत्रादिस्नेहश्च यस्य सः । [1]विगतात्म[2]गतिः स्नेहा दितिवा पाठः । [3]तदा विगता आत्मगतिः यस्य इत्येव विसर्गान्तपदपाठे विग्रहः । स राजा पुरञ्जनो हातुं [4]त्युंकुं प्रचक्रमे उपक्रान्तवानिति द्वयो रन्वयः । अनिकामतोऽनिच्छयाऽपि ॥ १० ॥

**वीर०** कन्यया बुद्ध्या उपगूढः दृढतरं संश्लिष्टः विषयेष्वेव आत्मा चित्तं यस्य । अतः कृपणः, अत एव [5]नष्टप्रज्ञः नष्टविवेकः नष्टा श्रीः [6]भोगात्मिका यस्य यवनैः बलात् हृतमैश्वर्यं उत्थानादिशक्तिरूपं यस्य सः । तत्प्रतिक्रियां न लेभे इति तृतीयेनाऽन्वयः ॥ ६ ॥

विशीर्णं शिथिलं स्वपुरं तथा प्रतिकूलान् अनपेक्षितविषयप्राणान्, अनादृतान् आदर मकुर्वाणान् स्वाधीनत्वा भावात् पुत्रान् इन्द्रियपरिणामरूपान्, पौत्रान् पुण्यापुण्यकर्मरूपान् तदनु[7]गान् इन्द्रियाणि अमात्यान् इन्द्रियदेवताः गतं सौहृदं स्नेहः यस्या स्तां जायां तस्या अपि स्वाधीनत्वाभावात् ॥ ७ ॥

कन्यया जरया ग्रस्त मात्मानं शरीर मरिभिः विघ्नादिभिः दूषितान् पाञ्चालान् विषयांश्च वीक्ष्य दृष्ट्वा अपारचिन्तामापन्नः तस्य पुरादिविशीर्णत्वादेःप्रतिक्रियां प्रति[8]कारं परिहारोपायं न लेभे ॥ ८ ॥

कालकन्यया हेतुभूतया यात यामान् निस्सारानपि कामान् अभिलषन् दीनः कृपणः विगता आत्मनो गतिः पारलौकि[9]की ऐहिकः पुत्रादिस्नेहश्च यस्य पुत्रदारान् इन्द्रियपरिणामबुद्धीः लालयन् उपच्छन्दयन् ॥ ९ ॥

गन्धर्वैः अहोरात्ररूपैः [10-]भुग्नां कुटिलां[-10] कालकन्यया अवमर्दितां पीडितां पुरीम् अनिकामतः अनिच्छयाऽपि, राजा पुरञ्जनो हातुं त्यक्तुं, प्रचक्रमे उपक्रान्तवान् ॥ १० ॥

**विज०** पुत्रान् गोलकलक्षणान् पौत्रानिन्द्रियाणि अमात्यान् अमा सह वर्तनीयाः अमात्याः इन्द्रियाभिमानिनो देवाः तांश्च, "अत-सातत्यगमने" इति धातुः । बुद्धेरपि पूर्ववद् अतिशयो नास्तीति गतसौहृदाम् ॥ ६,७ ॥

कन्यया जरसा पाञ्चालान् विषयान् अरिदूषितान् विघ्नप्रतिहतान् ॥ ८ ॥

यातयामान् गतयामान् गतात्मसंविन्नष्टपरमात्मज्ञानः । अत एव निःस्नेहः परमात्मनि भक्तिरहितो विरुद्धस्नेहो वा ॥ ९ ॥

अनिकामतः अनिच्छातः ॥ १० ॥

---

1. B, J, V, Va omit विगतात्मा 2. V omits गतिः 3-3. B, J, V, Va omit 4. B, J,V,Va omit त्यक्तुं 5. W omits नष्टप्रज्ञः 6. A, B, T ज्ञानात्मिका 7. A, B, T ०गानि 8. W कार्यं 9. W ०कः 10--10. A, B, T यवनैः आध्यादिभिश्चाक्रान्तां

**भयनाम्नोऽग्रजो भ्राता प्रज्वारः प्रत्युपस्थितः ।**
**ददाह तां पुरीं कृत्स्नां भ्रा[1]तुः प्रियचिकीर्षया ॥ ११ ॥**

**तस्यां सन्दह्यमानायां सपौरः सपरिच्छदः ।**
**कौटुम्बिकः कुटुम्बिन्या उपातप्यत सान्वयः ॥ १२ ॥**

**यवनोपरुद्धायतनो ग्रस्तायां कालकन्यया ।**
**पुर्यां प्रज्वारसंस्पृ[2]ष्टः पुरपालोऽन्वतप्यत ॥ १३ ॥**

**न [3]शशाकोषितुं तत्र पुरुकृच्छ्रोरुवेपथुः ।**
**[4]गन्तुमैच्छत्ततो वृक्षकोटरादिव [5]सानलात् ॥ १४ ॥**

**शिथिलावयवो यर्हि गन्धर्वै[6]र्हृतपौरुषः ।**
**यवनै[7]र्बलिभी राजन् उपरुद्धो रुरोद ह ॥ १५ ॥**

**श्रीध०** **तस्यामिति** । सपरिच्छदो भृत्यवर्गसहितः । कुटुम्बेन दीव्यतीति कौटुम्बिकः, कुटुम्बिन्या [8]सह । सन्धिर्नात्र विवक्षितः। सान्वयः पुत्रादिसहितः ॥ ११, १२ ॥

**यवनेति** । यवनैः [9]व्याधिभिः उपरुद्धानि [10-]आयतनानि[-10] नाडीप्रभृतीनि यस्य स पुरपालः ॥ १३ ॥

**नेति** । पुरु बहु कृच्छ्रं [11]क्लेशस्तेन उरुः वेपथुः यस्य, वृक्षकोटरादिव सर्पः ॥ १४ ॥

**शिथिलेति** । कण्ठे उपरुद्धो रुरोद, [12]घुर्घुरध्वनिं चकार ॥ १५ ॥

**वीर०** भयनाम्नो योऽग्रजो भ्राता प्रज्वारः स उपस्थितः पुरञ्जनपुरीम् अधिष्ठितः, भ्रातुर्भयनाम्नः प्रियं कर्तुमिच्छया कृत्स्नां तां पुरीं ददाह । प्रज्वाराख्यो वैष्णवज्वरः शरीरं प्रविश्य भृशं तेपे इत्यर्थः ॥ ११ ॥

तस्यां पुर्यां नितरां प्रज्वारेण तप्यमानायां भार्यासहितः भृत्यवर्गसहितश्च कुटुम्बेन सह दीव्यतीति कौटुम्बिकः । कुटुम्बिन्या सह [13-]महिष्या सह[-13] सान्वयः पुत्रादिसहितः उपातप्यत ॥ १२ ॥

---

1. W तृप्रि० 2. A, B, G, I, J, T, W ०सृ० 3. A, B, G, I, J, T शेके सोऽवितुं; M, Ma शेके सेवितुं; Ms शेक उषितुं 4. V यातु० 5. Ms, V सोऽहिराद् 6. Ms ०र्हत 7. A, B, G, I, J, M, Ma, Ms, T ०ररिभी 8. B, J, Va omit सह; V सहितया 9. B, J, V, Va omit व्याधिभिः 10--10. B, J, V, Va omit 11. B, J, V, Va omit क्लेशः 12. V घुरुघुरु 13--13. W omits

कालकन्यया पुर्यां ग्रस्तायां सत्यां यवनैः उपरुद्धानि आयतनानि यस्य सः, पुरपालः प्रजागरः प्रज्वारेण संस्पृष्टः अन्वतप्यत। स पुरपालः प्राणः[1] ॥ १३ ॥

पुरु बहु कृच्छ्रं दुःखं तेन उरुर्वेपथुः यस्य, पुरे[2] इति पाठे पुर्याम् उषितुम् अवस्थातुं न शशाक नाशक्नोत्। किन्तु ततः पुर्याः अग्निसहितात् वृक्षकोटरात् सर्प इव गन्तुमैच्छत् ॥ १४ ॥

यदा गन्धर्वैः शिथिला अवयवा यस्य, हृतं पौरुषं सामर्थ्यं यस्य, तदाऽयं हे राजन्! यवनैः शत्रुभिः[3] उपरुद्धः रुरोद व्याध्यादिभिः निरूद्धमार्गः घुर्घुरध्वनिं[4] चकार[5] ॥ १५ ॥

**विज०** प्रज्वारः पुरीं ददाहेति शरीरे च ज्वरः, प्रवृत्त इत्यर्थः। भ्रातुः मृत्युनाम्नो हितकरणेच्छया ॥ ११,१२ ॥

यवनैः व्याधिभिः उपरुद्धमायतनं पत्तनं शरीरनाडीलक्षणं यस्य स तथा, पुरपालः प्राणः, अनुतापो जीवक्लेशं प्रेक्ष्य ॥ १३ ॥

साऽनलात् अग्निवृतात् गृहबिलादिव ॥ १४, १५ ॥

**दुहितॄः पुत्रपौत्रांश्च जामिजामातृपार्षदान्।**
**स्वत्वावशिष्टं[6] यत्किञ्चित् गृहकोशपरिच्छदम् ॥ १६ ॥**

**अहं ममेति स्वीकृत्य[7] गृहेषु कुमतिर्गृही।**
**दध्यौ प्रमदया दीनो विप्रयोग उपस्थिते ॥ १७ ॥**

**लोकान्तरं गतवति[8] मय्यनाथा कुटुम्बिनी।**
**वर्तिष्यते कथं त्वेका[9] बालकाननुशोचती ॥ १८ ॥**

**न मय्यनाशिते[10] भुङ्क्ते नास्नाते स्नाति मत्परा।**
**मयि रुष्टे[11] सुसन्त्रस्ता[12] भर्त्सिते यतवाग्भयात् ॥ १९ ॥**

**प्रबोधयति माऽविज्ञं[13] व्युषिते शोककर्शिता।**
**वर्त्मैतत् गृहमेधीयं वीरसूरपि नेष्यति ॥ २० ॥**

---

1. W omits प्राणः 2. A, B, T पुरि 3. A, B, T omit शत्रुभिः 4. A, B, T घर्घर० 5. A, B, T add इत्यर्थः 6. M, Ma सत्त्वा०; Ms स्मृत्वा० 7. V सात्कृत्वा 8. Ms पुरञ्जनः 9. A, B, G, I, J, M, Ma, T ०षा 10. M, Ma, Ms ०न० 11. M, Ma, Ms तुष्टे सुसन्तुष्टा 12. W तु 13. M, Ma मां नित्यं

**श्रीध० दुहितॄरिति।** दुहित्रादीन् दध्यावित्युत्तरेणान्वयः। जामयोऽत्र स्नुषाः, स्वत्वमात्रेण अवशिष्टम्। भोगस्तु प्रागेव क्षीणः ॥ १६,१७॥

ध्यानमेवाह- [1]**लोकान्तरमिति** [2]चतुर्भिः ॥ १८॥

**नेति।** अनाशितेऽभोजितेभर्त्सिते भर्त्सने कृते यतवाग्भवति॥ १९॥

**प्रबोधयतीति।** अविज्ञम् अविवेकिनं माम्। व्युषिते देशान्तरं गते, गृहमेधीयं वर्त्म गृहधर्ममपि किं नेष्यत्यनुवर्तयिष्यति। [3-]णीञ्-प्रापणे[-3] (इति धातुः)। युक्तमेतत् यतो वीरसूः पुत्रवती। किं वा मद्विरहम् असहमाना मरिष्यत्येवेत्यर्थः॥ २०॥

**वीर०** दुहित्रादीन् दध्यौ ध्यातवान् इत्युत्तरेणान्वयः। दुहितॄरिति देहानुबन्धि चिन्ताभिप्रायकम्। जामयोऽत्र स्नुषाः ताश्च जामातरः दुहितॄणां पतयः, पार्षदा भृत्याश्चेति द्वन्द्वः, तान् स्वत्वमात्रेणावशिष्टं, भोगस्तु प्रागेव क्षीणः, यत्किञ्चित् गृहादिरूपं वस्तु॥ १६॥

तच्च अहम्ममाभिमानविषयं कृत्वा गृहेषु दारेषु कुमतिः कुत्सिता मतिः यस्य, आसक्तबुद्धिर्गृही पुरञ्जनः प्रमदया सह विप्रयोगे विश्लेषे उपस्थिते प्रतीते सति दध्यौ बुद्ध्यात्मिकां प्रमदां विहाय गमिष्यामि उत सहैवेति चिन्तामकरोत्[4]॥ १७॥

ध्यानमेवाह - मयि लोकान्तरं प्रति गतवति सति इयमनाथा कुटुम्बिनी बालकान् प्रति अनुशोचन्ती कथं वर्तिष्यते॥ १८॥

मय्यनाशिते अभोजिते न भुङ्क्ते एवमुत्तरत्रापि। भर्त्सिते भर्त्सने कृते भयाद्यतवाक् नियता वाक् यस्याः सा, मौनं बिभर्तीत्यर्थः॥ १९॥

अविज्ञमविवेकिनं मां प्रबोधयति [5-]विवेचयति[-5] व्युषिते देशान्तरं गते शोकेन कर्शिता गृहमेधीयं वर्त्मतत् गृहस्थधर्मं किं नेष्यत्यनुवर्तिष्यते। युक्तमेतद्यतो वीरसूः पुत्रवती। किं वा मद्विरहमसहमाना मरिष्यति॥ २०॥

**विज०** अधुना कामिनां मरणव्यवस्थां दर्शयति - **दुहितॄरिति।** अत्र प्रवृत्तिमन्तरेण बाह्यदुहित्रादयोऽपि ग्रहीतुं शक्यन्ते॥ १६॥

विप्रयोगे मरणलक्षणे , प्रमदया बुद्ध्या अन्यया च॥ १७॥

लोकान्तरं गतवतीत्यादि कथालङ्कारः॥ १८॥

अनशिते अभुक्ते भर्त्सिते भर्त्सने कृते, यतवाक् तूष्णीम्भावमाश्रिता॥ १९॥

---

1. V omits लोकान्तरमिति 2. B, J, V, Va omit चतुर्भिः 3--3. B, J, V, Va omit 4. A, B, T add इत्यर्थः। 5--5. W omits

व्युषितेऽन्यत्र स्थिते नेष्यति अनुवर्तयिष्यति किम् ॥ २० ॥

**कथं नु [1]दारका दीना [2]दारकीर्वा परायणाः ।**
**वर्तिष्यन्ते मयि गते भिन्ननाव इवोदधौ ॥ २१ ॥**

**एवं कृपणया बुद्ध्या शोचन्तमतदर्हणम् ।**
**ग्रहीतुं कृतधीरेनं भयनामाऽभ्यपद्यत ॥ २२ ॥**

**पशुवद्[3]यवनैरेष नीयमानः [4]स्वकं क्षयम् ।**
**अन्वद्रवन्ननुपथाः शोचन्तो भृशमातुराः ॥ २३ ॥**

**पुरीं [5]विहायोपगत उपरुद्धो [6]भुजङ्गमः ।**
**[7]यदा तमेवानुपुरी विशीर्णा प्रकृतिं गता ॥ २४ ॥**

**विकृष्यमाणः प्रसभं यवनेन बलीयसा ।**
**[8]नाविन्दत्तमआविष्टः सखायं [9]सुहृदं पुरः ॥ २५ ॥**

**श्रीध० कथमिति** । न विद्यते परमयनमाश्रयो येषां ते अपरायणाः पुत्राः कन्याश्च । यद्वा पराश्रयाः कन्याः । भिन्ना नौर्येषाम् ॥ २१ ॥

**एवमिति** । अतदर्हणं वस्तुतस्तस्य ब्रह्मत्वात् ॥ २२ ॥

**पशुवदिति** । एष यदा क्षयं स्थानं नीयमानः तदा अनुपथाः प्राणा इन्द्रियाणि च । तथा च श्रुतिः - "तमुत्क्रामन्तं प्राणोनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" (बृह. उ. 4-4-3) इति ॥ २३ ॥

**पुरीमिति** । [10-]यवनैरुपरुद्धो भुजङ्गमः यदा पुरं विहायापगतः तदानीमेव प्राणमनु पुरी विशीर्णा[11] प्रकृतिं पञ्चभूतात्मतां गतेत्यर्थः[-10] प्रकृतिं महाभूतात्मताम् ॥ २४ ॥

**विकृष्यमाण इति** । नाविन्दत् न सस्मार [12]पुरा पूर्वं सखायं सन्तमीश्वरम् ॥ २५ ॥

1. M, Ma, Ms दारिका 2. A, B, G, I, J, T दारकीर्वाऽप°; M, Ma, Ms दारका मत्प° 3. M, Ma °नेनैष; Ms, V °नैरेवं 4. W यथा स्वकम् । 5. Ms, V °यापगत; W °थैव गत 6. M, Ma विहङ्गमः; W भुजङ्गवत् 7. M, Ma, Ms तदा 8. A, B, G, I, J, M, Ma, T °मसाऽऽविष्टः 9. M, Ma, Ms परम्; V पुरा 10--10. A, B, J, Va omit 11. V adds महाभूतानि गता पञ्चभूतेभ्योऽमी उत्पन्नाः 12. A, B, J, Va पुरः

**वीर०** दारकाः पुत्राः, दारिका दुहितरश्च, अपरायणाः न विद्यते परमयनमाश्रयो येषां ते अपरायणाः। मयि गते सति कथं नु वर्तिष्यन्ते भिन्ना नौर्येषां ते पुरुषाः उदधौ समुद्रे इवेति। अत्र लोकान्तरं गतवतीत्यनेन सर्वेन्द्रियपरिणामहेतुभूता जीवैकायत्ता बुद्धिर्लोकान्तरं गच्छता जीवेन सह गच्छति उत नेत्याशङ्कोत्थापिता वर्त्मैतत् गृहमेधीयमित्यर्द्धेन सहैव गच्छतीत्युक्तम्। तथा कथं दारका इत्यनेन परिणामपरिणामितदन्तबुद्धिवृत्ति [1]करणानि इन्द्रियाण्यपि किं सहैव गच्छन्तीति उत नेति संशय्य सहैव गच्छन्तीत्युक्तं भवति। एतदेव कथासौन्दर्याय परोक्षमभिधीयते। तथा च गीतं भगवता "मनः षष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति। शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः॥ गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात्" (भ.गी. 15-7,8) इति। बुद्धेर्मनोवृत्तिविशेषमात्रत्वेन मनसः सह गमनकथनेन बुद्धेरपि गमनं गीतं भवति हति गम्यते॥ २१॥

एवं कृपणया बुद्ध्या शोचन्तम् अतदर्हणं शोकानर्हं वस्तुतः [2]तस्य अपहतपाप्मत्वादि गुणाष्टक विशिष्टत्वात् एवं पुरञ्जनं ग्रहीतुं पुरात् विश्लेषयितुं, कृतधीः [3-]निश्चितबुद्धिः[-3] भयनामा मृत्युः प्राप्तः॥ २२॥

यथा स्वकं स्वकीयकर्मानुगुणं स्थानं प्रति यवनैः पशुवन्नीयमानः तदाऽनुपथाः प्राणा इन्द्रियाणि च शोचन्तः यवनैः पीडिता अत एवाऽऽतुराः शोचन्तोऽन्वद्रवन् अनुसृत्य गतवन्तः। तथा च श्रुतिः "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनुत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" (बृह.उ.4-4-3) इति प्राणो [4]ज्येष्ठ प्राणः सर्वे प्राणा इन्द्रियाणि इत्यर्थः॥ २३॥

यवनैः उपरुद्धः पुरीं स्थूलशरीरं तु विहायैव गतः भुजङ्गवत्, दह्यमानं वृक्षकोटरं विहाय यथा [5]भुजङ्गमो गच्छति तद्वदित्यर्थः। यदा गतस्तदा तमेव तद्गमनानन्तरमेव पुरी विशीर्णा शिथिला सती प्रकृतिं महाभूतात्मतां गता प्राप्तवती। कथा पक्षे तु दारापत्यादयः सर्वे पुरञ्जनविश्लेषमसहमानाः तेनैव सह विनष्टा अभूवन् पुरी च विनष्टा अभूदित्यर्थः॥ २४॥

बलीयसा यवनेन प्रसभं पुरः पुर्या विकृष्यमाणः तमोऽज्ञानमाविष्टः सखायं स्वेन सह वर्तमानं, सहवृत्तिर्हि सख्युः धर्मः, सुहृदं विपुलापराधत्वेऽपि किञ्चित् आनु[6]कूल्येन रिरक्षयिषा बुद्धिमन्तं परमात्मानं नाविन्दत् न सस्मार॥ २५॥

**विज०** भिन्ना नौः येषां ते भिन्ननावः॥ २१॥

अतदर्हणं शोकायोग्यं मरणायोग्यमिति वा॥ २२॥

स्वकं क्षयं कर्मणा शरीरान्तरम् अनुपथाः प्राणेन्द्रियादयः॥ २३॥

---

1. A, B, T का० 2. A, B, T omit तस्य 3--3. W omits 4. A, B, T ०ष्ठः प्राणः 5. W ०ङ्गो 6. A ०षया

यदा विहङ्गमो भुजङ्गमः, पुरीं विहाय उपगतः तदा तमनु शरीरं च विशीर्णं प्रकृतिं पञ्चभूतात्मतां गतं पञ्चभूतेभ्यः उत्पन्नं पुनस्तदवशेषमापेत्यर्थः ॥ २४ ॥

तम आविष्टः अज्ञाननिमित्तमोहं प्राप्तः, सखायं परं, सदा, सहवर्तमानं परमात्मानम्। सुहृदमनिमित्तबन्धुं, नाविदत् नास्मरत् इत्यन्वयः ॥ २५ ॥

**तं यज्ञपशवोऽनेन संज्ञप्ता येऽदयालुना ।**
**कुठारै श्छिच्छिदुः क्रुद्धाः स्मरन्तो[1] ह्यात्मवैशसम् ॥ २६ ॥**

**अनन्तपारे तमसि मग्नो नष्टस्मृतिः समाः ।**
**शाश्वतीरनुभूयाऽऽर्तीः[2] प्रमदासङ्गदूषितः ॥ २७ ॥**

**तामेव मनसा गृह्णन् बभूव प्रमदोत्तमा ।**
**अनन्तरं विदर्भस्य राजसिंहस्य वेश्मनि ॥ २८ ॥**

**उपयेमे वीर्यपणां वैदर्भीं मलयध्वजः ।**
**युधि निर्जित्य राजन्यान् पाण्ड्यः परपुरञ्जयः ॥ २९ ॥**

**तस्यां स[3] जनयाञ्चक्र आत्मजामसितेक्षणाम् ।**
**यवीयसः सप्त सुतान्[4] सप्त द्रविडभूभृतः ॥ ३० ॥**

**श्रीध० तमिति।** अदयालुना काम्यकर्मसु ये संज्ञप्ता हताः। अमीवं पापं क्रौर्यं वा ॥ २६ ॥

**अनन्तेति।** शाश्वतीः समा आर्तिमनुभूय ॥ २७ ॥

**तामिति।** अन्तकाले तां भार्यामेव मनसा गृह्णन् स्मरन् अनन्तरं विदर्भस्य वेश्मनि प्रमदोत्तमा बभूव। अतः परमस्मिन् प्रकरणे एतावदेव प्रकृतोपयोगि विवक्षितम्। स्त्रीध्यानेन स्त्रीत्वप्राप्तावपि पतिव्रताध्यानेन पूर्वादृष्टेन च धार्मिकात् विदर्भा ज्जन्माऽभूत्। धार्मिकसङ्गेन च विशुद्धस्य भागवतेन मलयध्वजेन सङ्गोऽभूत्। ततो विष्णुभक्तिस्ततो वैराग्यं ततः तमेव भर्तृरूपं गुरुं पातिव्रत्यधर्मेण भजतो

1. A, B, G, I, J, T, V °न्तोऽमीवमस्य तत्; M, Ma, Ms °न्तो वैशसं तु तत् 2. A, B, G, I, J, T, V °र्तिं 3. M, Ma, सञ्ज° 4. V पुत्रान्

भगवत्प्रसादलब्धज्ञानेन[1] मोक्ष इति । अन्यत्तु कथालङ्कारमात्रं, तथापि किञ्चित् वृत्तिसाम्येन[2] इह योजयिष्यामः । विदर्भस्य विशिष्टदर्भोपलक्षितस्य कर्मठस्य राजसिंहस्य धर्मेण हि प्रजापालनेन यज्ञादिना च क्षत्रिया राजन्ते तेषु राजश्रेष्ठस्य[3] वेश्मनि ॥ २८ ॥

**उपयेम** इति । मलयोपलक्षिते दक्षिणदेशे ध्वज इव दर्शनीयः स हि श्रीविष्णुभक्तिप्रधानो[4] देशः, तत्र मुख्यो महाभागवत इत्यर्थः । पण्डा निश्चयबुद्धिः तामर्हतीति पाण्ड्यः स उपयेमे । पुरञ्जनो भागवतसङ्गं प्राप्त इत्यर्थः ॥ २९ ॥

**तस्यामिति** । आत्मजां श्रीकृष्णसेवारुचिम् । तत्सङ्गेन भगवद्धर्मे रुचिरभूदित्यर्थः[5] । असितस्य श्रीकृष्णस्य ईक्षणं यया ताम् । यवीयसः सप्त सुतान् "श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यम्" (भाग. 7-5-23) इति सप्त[6] भक्तिप्रकरान् सख्यात्मनिवेदनयोः त्वम्पदार्थज्ञानोत्तर कालत्वात् तस्य च भगवतैव[7] उत्तरत्रोपदेक्ष्यमाणत्वात् इदानीम् अनुत्पत्तेः सप्तेत्युक्तम् । भगवद्धर्मरुच्या तच्छ्रवणकीर्तनादिकं जातमित्यर्थः । द्रविडभूमिपालकान् । द्रविडभूमिर्हि श्रवणादिभक्तिभिरेव सुरक्षिताऽस्तीति प्रसिद्धम् ॥ ३० ॥

**वीर०** अदयालुना दयारहितेन अनेन पुरञ्जनेन यज्ञे कर्मेन्द्रियव्यापाररूपे यज्ञे ये पशवः संज्ञप्ता हिंसिताः, ते पशवः आत्मवैशसं स्वविषये कृतं द्रोहं स्मरन्तः अत एव क्रुद्धाः कुठारसदृशैः श्रृङ्गैरेनं चिच्छिदुः ॥ २६ ॥

अनन्तपारेऽपारे तमसि नरके मग्नः अत एव गतविवेकः शाश्वतीः समाः संवत्सरान्, "कालध्वनोरत्यन्तसंयोगे" (अष्टा० 2-3-5) इति द्वितीया । आर्तिं दुःखमनुभूय प्रमदासङ्गदूषितः प्रमदासङ्गेनदूषितचित्तः इत्यर्थः, प्रमदाऽत्र देहानुबन्धिनी भार्या विवक्षिता, न तु बुद्धिरूपा, बुद्धिसङ्गस्याऽऽसंसार मनुवर्तमानत्वेन सर्वेषां सर्वदा स्त्रीजन्मापत्तेः ॥ २७ ॥

तामेव[8] भार्यामेव मनसा गृह्णन् अन्तकाले स्मरन् अनन्तरं राजसिंहस्य विदर्भस्य वेश्मनि प्रमदोत्तमा बभूव इत्यन्वयः[9] । एवं तिर्यगादिरूपेण संसरतो जीवस्य अदृष्टविशेषपरिपाकवशात् मनुष्यजन्म प्राप्तस्य तत्रापि जाग्रत्स्वप्नसुषुप्त्यवस्थासु[10] दोषाननुकीर्त्य पुनर्दैवात् कदाचित् सञ्जातविवेकस्यापि प्रबलकर्मरूपप्रतिबन्धवशात् रजस्तमः प्रचुरबुद्धिपारवश्ये[11] स्वदेहदेहानुबन्धिविषय अहम्ममाभिमानग्रस्तस्य जरामरणाद्यवस्थासु दोषान् अभिधाय इदानीं देहावसाने देहानुबन्धिप्रमदास्मरणनिमित्तस्त्रीजन्मप्राप्तिं, तत्रापि प्राक्तन कादाचित्कयादृच्छिकपुण्यवशात् सत्कुलप्रसूतिं, ततो महाभागवतभर्तृसम्बन्धं, तत्सेवाप्रकारं, ततः तेन तुष्टस्य भगवतः प्रसादात् ज्ञानोदयञ्चाह । तत्र कथापक्षे विदर्भादिपदानां श्रौत एवार्थः । अध्यात्मपक्षे तु विदर्भस्य विशिष्टं दर्भोपलक्षितं कर्म यस्य तस्य

1. V ज्ञाने 2. A. B, J, Va सामान्येन 3. A, B, J, V omit राज 4. A, B, J, Va भक्त 5. A °रभवदि° 6. A, B, J, Va omit सप्त 7. V adds भगवत्वेन
8. A. B, T omit एव 9. W omits इत्यन्वयः । 10. A, B, T °पुप्ता° 11. A, B, T वश्येन दे°

राजन्ते सत्कर्मानुष्ठानेनेति[1] राजानः सत्कर्मानुष्ठानपराः तेषां मध्ये सिंहस्य श्रेष्ठस्य वेश्मनि गृहे प्रमदा बभूव पुरञ्जनः कर्मविशेषेण विशिष्टकुले स्त्रीत्वं प्राप्त इत्यर्थः ॥ २८ ॥

तां वैदर्भीं विदर्भस्य दुहितरं वीर्यं भगवद्भक्ति योगानुष्ठानसामर्थ्यमेव[2] पणः शुल्कबन्धनं यस्यास्तां भागवतमेव वृणवानीत्येवं सङ्कल्पवतीं मलयध्वजः मलयपर्वतोपलक्षितो दक्षिणदेशः तत्र ध्वज इव दर्शनीयः, स हि विष्णुभक्तिप्रधानो देशः तत्र मुख्यो भागवत इत्यर्थः । तथा पाण्ड्यः[3] पण्डा बुद्धिर्निश्चयात्मिका तामर्हतीति पाण्ड्यः । परस्य परमात्मनः पुरं पुरवद्वासस्थानं शरीरम् । ''अथ यदिदमस्मिन् ब्रह्मपुरम्'' (छन्दो उ. 8-1-1) इति श्रुतेः । तज्जयतीति पुरञ्जयः देहगुणाद्यजित इत्यर्थः । युधि इन्द्रियजयरूपे युद्धे राजन्यान् जितेन्द्रियान् निर्जित्य जितेन्द्रियश्रेष्ठोऽभूदित्यर्थः । उपयेमे, यद्यप्यत्र ''राज्ञो जातावेवेति वाच्यम्'' (अष्टा.वार्तिकम् 1635) इति जातौ नियमितोऽयं यत्प्रत्ययः तदन्तो राजन्यशब्दः क्षत्रियजातीयवचनस्तथाऽपि अत्र गौण्या वृत्त्या जितेन्द्रियपरः। क्षत्रियजातीयो हि जयेन राजत इति जयगुणयोगाज्जितेन्द्रिये तस्य वृत्तेः सम्भवात् ॥ २९ ॥

स मलयध्वजस्तस्यां वैदर्भ्याम् [4-]असितेक्षणा[-4] असिते श्रीकृष्णे ईक्षणं दृष्टिर्यया तां श्रीकृष्णसेवारुचिरूपाम् आत्मजां जनयाञ्चक्रे वैदर्भ्याः भागवतसङ्गेन भगवत्सेवारुचिरभूदित्यर्थः । तथा यवीयसः आत्मजाया अनु[5] जातान् सप्तसुतान् ''श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यम्'' (भाग.7-5-23) इत्येवं रूपान् । सख्यात्मनिवेदनयोस्तु भगवदनपायित्व तच्छेषतैकानुसन्धानरूपयोः भगवतैव उत्तरत्रोपदेक्ष्यमाणयोः इदानीमनुत्पत्तेः सप्तेत्युक्तम्[6] । भगवद्धर्मरुच्या तच्छ्रवणकीर्तनादिकं जातमित्यर्थः । द्रविडभूमिपालकान्, द्रविडभूमिर्हि श्रवणादिभिरेव सुरक्षिता अस्तीति प्रसिद्धम् ॥ ३० ॥

**विज०** अदयालुना क्रूरेण, हिंसाकर्मरतेन इत्यर्थः । तुशब्देन ब्रह्मार्पणबुद्ध्याऽननुष्टानं सूचयति ॥ २६ ॥

अनन्तपारेऽवसानरहिते, तमसि निरये, प्रमदासङ्गेन विषयबुद्धिस्वीकारेण दूषितोऽशुद्धः ॥ २७ ॥

तां विषयबुद्धिमेव, उत्तमा उद्गततमा प्रगतमदा मदरहिता, बुद्धिरभूत् । अत्र मरणजनने कथालङ्कारार्थे, अध्यात्मार्थस्य मण्डूकप्लुतिन्यायेन ''पदाक्षिप्तस्यापि सम्भवात् वाच्यमपच्युत्'' इति वचनात् ॥ २८ ॥

उपयमनं नाम स्वाधीनताकरणं वीर्यपणां ब्रह्मचर्यादिसाधनसाध्यां वैदर्भीं निशितां क उपयेमे, मलं यापयतीति मलयः । शान्तमनःसंस्कारः स एव ध्वजो यस्य स तथा । हरिसेवादिना संस्कृतमना इत्यर्थः । रूपकमात्रस्य लिङ्गव्यत्ययो न दोषाय । ''मनसा

---

1. B, W omit सत् 2. W °नमेव 3. A, B, T omit पाण्ड्यः 4--4. A, B, T omit 5. W अनुजान् 6. A, B, T सप्तैवेत्यु°

. वा अग्रे संकल्पयत्यथ वाचा व्याहरति'' (ऐत.उ. 1-1-2) इति श्रुतेः। मनसोऽपि बुद्ध्यधीनकरण शक्तिः उपपत्तिमतीति बोद्धव्यं, किंकृत्वा युधि यमनियमादिलक्षणे युद्धे, राजन्यान् 'राजृ-दीप्तौ+'।

इति धातोः दीपकानीन्द्रियाणि वशीकृत्य चञ्चलस्य मनसो बुद्ध्यधीनकरणशक्तिः कथमिति तत्राह- पाण्ड्य इति। पाण्डोर्धर्माज्जातं विवेकज्ञानं तेन सम्पन्नः। तत् कुत इति तत्राह- परेति। परेषामिन्द्रियाणां विषयलक्षणं पुरं जयतीति आत्माऽनभिमतमार्गगन्तृत्वादिन्द्रियाणां परत्वं तदभावे सुहृत्वमेव, ''मननात् मन उद्दिष्टम्''।

इति मनश्चेतनो वा। बाह्यार्थस्तु एवं, पुरञ्जनः पुरञ्जनीसङ्गेन तद्वासनादूषितो नाम्ना वैदर्भी प्रमदोत्तमाऽभूत्, पुरञ्जनी तत्पुरञ्जनसङ्गातिशयेन वासनावशात् नाम्ना मलयध्वजः पुमानभूत्। विषयसङ्गातिरेकलक्षणकारणात् पुंसः स्त्रीत्वं, स्त्रियाः पुंस्त्वं च, ततः स्त्रीत्वमेव अवशिष्यते। विषयसंगातिरेको न कर्तव्य इति शिक्षणार्थं च इदमुक्तम् इति तात्पर्यं ज्ञातव्यम्॥ २९॥

तस्यां बुद्धौ, असितो नित्यमुक्तो हरिः, तस्येक्षणं, यया भवति असितेक्षणाम् आत्मजा विष्णुभक्तिः, विरागविनयदानधैर्याऽस्पर्धन विवेकदमाः सप्त संख्याताः। बुद्धेः जातत्वात् सुता इत्युच्यन्ते, विष्णु भक्त्यनन्तर काले स्पष्टत्वात् यवीयस इति सप्तयाजय वपा बन्धो लक्ष्यते, सम्बन्धो द्रविलः, प्राप्तगर्भलक्षणगतिः तस्य जीवस्य भूः स्थानं मुक्तिलक्षणं, बिभ्रति उत्पाद्य ददतीति, सप्तद्रबिडभूभृतः। ''डलयोरभेदः मृलाजरित्र'' इति दर्शनात् सप्तेन्द्रियाणि वा अनेनोच्यन्ते, रागादिभ्यो मुक्ताः प्रकाशितरूपाः सुता इति उच्यन्ते॥ ३०॥

**एकैकस्याऽभवंस्तेषां[1] राजन्नर्बुदमर्बुदम्।**
**भोक्ष्यते यद्वंशधरैः[2] मही मन्वन्तरं परम्॥ ३१॥**

**अगस्त्यः प्राग्दुहितरमुपयेमे धृतव्रताम्।**
**यस्यां दृढच्युतो[3] जात इध्मवाहात्मजो[4] मुनिः॥ ३२॥**

**विभज्य तनयेभ्यः क्ष्मां राजर्षिर्मलयध्वजः।**
**आरिराधयिषुः कृष्णं स जगाम कुलाचलम्॥ ३३॥**

**हित्वा गृहान् सुतान्[5] भोगान् वैदर्भी मदिरेक्षणा।**
**अन्वपद्यत[6] पाण्ड्येशं ज्योत्स्नेव रजनीकरम्॥ ३४॥**

1. A, B, G, I, J, M, Ma Ms, T ०भवत्तेषां 2. A, B, G, I, J, M, Ma, Ms, T, W धरैः 3. W ०व्रतो 4. M, Ma, Ms ०सा० 5. W सुखान् 6. A, B, G, I, J, M, Ma, T ०धावत; Ms, V ०गच्छत

**तत्र चन्द्र[1]मसा नाम ताम्रपर्णी [2]वटोदका।**
**तत्पुण्यसलिलैर्नित्यमुभयत्रात्मनो मृजन्॥ ३५॥**

**श्रीध० एकैकस्येति**। अर्बुदमिति। श्रवणादीनां प्रत्येकमने[3]के प्रकारा अभवन्नित्यर्थः। तदुक्तम् - "भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते" (भाग०3-29-7) इति। येषां वं[4]शधर्मैः यतः प्रवृत्तैः सम्प्रदायभेदैः, कृत्स्ना मही मन्वन्तरं ततः परं च भोक्ष्यतेऽविद्याकामकर्मभ्योऽपि रक्षिष्यते॥ ३६॥

**अगस्त्य** इति। अगस्त्यः अगानि निष्क्रियाणि गात्राणि स्त्यायति सङ्घातयतीत्यगस्त्यो मनः। स प्राक् प्रथमजातां दुहितरं कृष्णसेवारुचिम् उपयेमे, [5]तस्याः मनः कृष्णे दृढां रतिं बबन्धेत्यर्थः। धृतानि शमदमादीनि व्रतानि यया तां रतिम्। दृढेभ्यः सत्यलोकादि भोगेभ्योऽपि च्युतस्तद्रहितः कृष्णरतौ [6]सत्यां इहामुत्र च भोगविरागो जात इत्यर्थः। स एवोपशमात्मकत्वात् मुनिः। कथम्भूतः ? इध्मवाह आत्मजो यस्य सः। "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" (मुण्ड.उ.1-2-12) इत्यादि श्रुतिप्रसिद्धा समिद्वहनोपलक्षिता गुरूपसत्तिः वैराग्यात् अभूदित्यर्थः, न हि अविरक्तस्य गुरूपसत्तिः सम्भवति। कथापक्षे यथाश्रुतमेव॥ ३२॥

**विभज्येति**। क्ष्मां विभज्य तत्र श्रवणादिभक्तिभेदं व्यवस्थाप्य॥ ३३॥

इदानीं पुरञ्जनस्य स्त्रीभावं प्राप्तस्य सर्वतो विरक्तस्य "पतिरेव गुरुः स्त्रीणाम्" इति वचनात् पतिसेवया गुरुशुश्रूषा प्रकारं दर्शयितुमाह- **हित्वेत्या**दिना मनो दग्ध इत्यन्तेन ग्रन्थेन। मदयतीति मदिरम् ईक्षणं यस्याः॥ ३४॥

**तत्रेति**। तत्र चन्द्र[7]मसाद्या नद्यः [8]प्रसिद्धाः तासां पुण्यैः सलिलैः उभयत्र अन्तर्बहिश्च आत्मनो [9]मृजन् [10]मलं क्षालयन् तप आस्थित इत्युत्तरेणान्वयः॥ ३५॥

**वीर०** हे राजन्! तेषां पुत्राणाम् एकैकस्य अर्बुदम[11]र्बुदं पुत्रा अभवन्। श्रवणकीर्तनादीनां प्रत्येकमनेकप्रकारा अभवन्नित्यर्थः। येषां वंशधरैर्यतः प्रसूतैः सम्प्रदायभेदैः मन्वन्तरम् अतः परं च मही भोक्ष्यते अनुभूयते श्रवणकीर्तनादिसम्प्रदाय भेदैर्मही व्याप्ता इत्यर्थः॥ ३१॥

[12]अगस्त्यः अगस्त्योपलक्षितो मुमुक्षुः दृढव्रताम् अव्यभिचारिणीं दुहितरं भगवत्सेवारुच्यात्मिकामुपयेमे स्वीकृतवान्। दुहितरं

1. A, B, G, I, J, T °वसा; M, Ma, Ms °वदा 2. M, Ma, Ms वरो°; V नवो° 3. V °कप्र° 4. A, B, J, Va धरैः 5. A, B, J, Va तस्य
6. A, B, J, Va omit सत्यां 7. A, B, J, Va °व° 8. A, B, J, Va omit प्रसिद्धाः 9. B, J, V, Va omit मृजन् 10. A adds मनो
11. W omits अर्बुदं 12. A, B, T omit अगस्त्यः

विशिनष्टि-- यस्यां दुहितरि इध्मवाहात्मजः इध्मवाहः समित्प्रापणं तेन तत्पूर्वकगुरूपसत्तिः लक्ष्यते ''गुरुमेवाभिगच्छेत् सामत्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्'' (मुण्ड.उ.1-2-12) इति श्रुति प्रसिद्ध समिद्वाहपूर्वकगुरूपसादात् जातो ब्रह्मोपदेशात्मको मुनिः उपदिष्टस्य अर्थस्य मननप्रचुरत्वात् मुनिः, दृढं व्रतं श्रवणोपयुक्तशमदमात्मकं व्रतं यस्य सः ''प्रशान्तचित्ताय शमान्विताय'' (मुण्ड.उ.1-2-13) इति श्रुतेः। उपासनोपयुक्तशमादीनां श्रवणकालेऽभावाच्च जातः बभूव॥ ३२॥

तनयेभ्यः श्रवणकीर्तनादिभ्यः पुत्रेभ्यः क्ष्मां स्वोपजीव्यां भगवद्भक्त्यात्मिकां पृथ्वीं विभज्य श्रवणकीर्तनादिसाध्यामनुसन्धाय स मलयध्वजः कृष्णमाराधयितुमिच्छुः कुलाचलं मलयपर्वतं प्रति जगाम गतः[1]॥ ३३॥

गुरूपसत्तिपूर्वक शमादियुक्त श्रवणमननादिपूर्विकां श्रवणकीर्तनादिसाध्य[2]भगवत्सेवारुचिं वैदर्भ्यामुत्पाद्य तया सह भगवन्तमाराधयितुं विविक्तं पुण्यदेशं ययावित्युक्तम्, अथ मलयध्वजस्य महाभागवतस्य अष्टाङ्गयुक्तभगवद्भक्तियोगानुष्ठान प्रकारं वैदर्भ्याः पत्युः परिचर्याप्रकारं च आह - **हित्वेत्यादिना मनो दध** इत्यन्तेन ग्रन्थेन। मदिरं भगवत्सेवाहर्षरूपमीक्षणं ज्ञानं यस्याः सा वैदर्भी सुखान् सुखप्रदान्, गृहान् सुखशब्दः तत्साधनेषु उपचारात्प्रयुक्तः। अत एव पुंस्त्वम्। त्यक्त्वा[3] पाण्ड्येशं मलयध्वजमन्वधावत अनुसृत्य गतवती, यथा रजनीकरं चन्द्रं ज्योत्स्ना चन्द्रिका॥ ३४॥

तत्र कुलाचले चन्द्रमसा[4] ताम्रपर्णी प्रसिद्धा नदी, तस्याः पुण्यैः सलिलैः आत्मनः स्वस्य उभयत्र अन्तर्बहिश्च मलं मृजन् स्नानपानादिभिः शोधयन् तप आस्थित इत्युत्तरेणान्वयः॥ ३५॥

**विज०** अर्बुदमर्बुदमित्यनेन सत्यो वृत्तयो गृह्यन्ते। मही शास्त्रविरुद्धविषयलक्षणा मन्वन्तरं मनुष्यजीवनावधिपरं शतवर्षं प्रारब्धपुण्यवशात् बुद्ध्यावरणादिभिः प्राणैः इन्द्रियैरेव विषयान् भुङ्क्ते इत्यर्थः॥ ३१॥

''स्त्यै ष्ट्यै शब्दसङ्घाते'' इति धातोः, अगं भगवन्तं, स्त्यायति शब्दसमूहेन स्तुतिं करोतीति अगस्त्यो भक्तः। प्राञ्चं पुरातनं, श्रीनारायणं दोग्धीति दुहिता भक्तिः तामुपयेमे संसारनिवर्तने शक्तिमत्तया अचलामकरोदित्यर्थः। कीदृशीं ब्रह्मचर्यादिव्रतसाध्यां, दृढं च्युतः पुत्रादिस्नेहो यस्मात् स दृढच्युतः, पूर्वस्मात् विरागो दृढतरोऽभूदित्यर्थः। इध्मवासो गुरुकुलवास एव आत्मजो यस्य स तथा। वैराग्यादेव गुरुकुलवासो भवति। ''परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन तद्विज्ञानार्थं स गुरुमेव अभिगच्छेत्'' (मुण्ड. उ. 1-2-12) इति श्रुतेः। ''सौम्येमाः समिध आहर'' इति च॥ ३२॥

---

1. W omits गतः 2. A, T °ध्यां भ° 3. A, T omit त्यक्त्वा 4. A, B, T °व°

वैराग्यादिसम्पत्त्या राजत इति राजा, विवेकित्वात् ऋषिः। राजा चासावृषिश्चेति राजर्षिः। वैराग्यविवेकज्ञानसम्पन्नः। शुद्धवासनाङ्कितः पुरुषः तनयस्थानीयेभ्यो विरागादिभ्यः इन्द्रियेभ्यो वा, क्ष्मां शास्त्रलक्षणां भोग्यलक्षणां वा, विभज्येदं श्रोतव्यं नेदमिति विविच्य अयं विषयः सेवनीयो नायमिति, कुलाचलं निश्चलं वासार्थं गुरुकुलं जगाम। वैराग्यादिगुणसम्पन्नः शरीर यात्रानिर्वाहकविषयभोगी गुरुकुलसन्निधिम् अवात्सीदित्यर्थः। कृष्णं पूर्णानन्दमाराध्य अपरोक्षी कर्तुकामः इत्यर्थः॥ ३३॥

मदिः दृष्टिः तां रातीति मदिरं, तादृश मीक्षणं ज्ञानं यस्यां सा तथा शुद्धज्ञाना, विषयानुषङ्गं विहाय तदनुसारिणी बभूवेति पाण्ड्येशं अन्वपद्यत इत्यभिप्रायः। अत्र सुतशब्देन रागादयो लक्ष्यन्ते, तान् अविहायेत्यर्थः। मुक्तावपि बुद्ध्यात्मनो राहित्यं नास्तीति दर्शयितुं ज्योत्स्नेवेति॥ ३४॥

[1]तत्र गुरुकुलवासे चन्द्रवदाह्लादकं निर्मलं च वदति ज्ञापयतीति वेदान्तशास्त्रम्। ययौ चन्द्रमदेति पाठे "शसाविति" सूत्रात् वकारस्य मकारः, चन्द्रबिम्बं विषयीकरोतीति [2]वा नाम लोकप्रसिद्धम्, "पर्ण-आच्छादने" इति धातोः, ताम्रं, रजस्तमश्च, पर्णयति आच्छादयति परिभवतीति ताम्रपर्णी वेदान्तव्याख्या। तश्चामरश्चेति ताम्रं, ब्रह्म पृणातीति प्रकाशलक्षणं दानं करोतीति वा "पृण-दाने" इति धातोः। नदीवत् पदवर्णस्वरूपलक्षणप्रवाहात् श्रोतृणाम् उदकवत् आह्लादजननाद्वा वरोदका तस्या व्याख्यायाः प्रकाशितैः पुण्यैः, शोधकैः सलिलैः युक्तिलक्षणैः आत्मनोऽन्तःकरणस्य उभयत्र प्रतिवादिनिमित्तबाह्यं दुर्युक्तिमलं संशयाद्यान्तरमलं मृजन् शोधयन्॥ ३५॥

**कन्दा[3]ष्टिभिर्मूलफलैः पुष्पपर्णैस्तृणोदकैः।**
**वर्तमानः शनैर्गात्र[4]कर्शनं तप आस्थितः॥ ३६॥**

**शीतोष्णवातवर्षाणि क्षुत्पिपासे प्रियाप्रिये।**
**सुखदुःखे इति द्वन्द्वान्यजयत्समदर्शनः॥ ३७॥**

**तपसा विद्यया पक्वकषायो नियमैर्यमैः।**
**युयुजे ब्रह्म[5]णाऽऽत्मानं विजिताक्षानिलाशयः॥ ३८॥**

**आस्ते स्थाणुरिवैकत्र दिव्यं वर्षशतं स्थि[6]रः।**
**वासुदेवे भगवति नान्यद्वेदोद्वहन् रतिम्॥ ३९॥**

1. Ma adds सः 2. Ma omits वा 3. M, Ma, Ms °दि° 4. B, W कर्षणं 5. A, B, G, I, J, T °ण्या° 6. M, Ma, Ms °तः

**सव्यापकतयाऽऽत्मानं व्यतिरिक्ततयाऽऽत्मनि।**
**विद्वान् स्वप्न इवामृश्य[1] साक्षिणं विरराम ह॥ ४०॥**

**श्रीध० कन्देति।** अस्यते भूमौ क्षिप्यत इत्यष्टिर्बीजम्॥ ३६, ३७॥

**तपसेति।** विद्ययोपासनया पक्वकषायो दग्धकामादिवासनः। युयुजे आत्मनो ब्रह्मतां भावयामास। अक्षाणीन्द्रियाणि, अनिलः प्राणः, आशयश्चित्तम्। विजिता अक्षादयो येन॥ ३८॥

**आस्त** इति। आस्ते स्म वर्षशतमिति ज्ञानस्य दुस्साधनतां दर्शयति। अत एव हरौ भक्तिं कृतवानित्याह। वासुदेवे रतिम् उद्वहन् सन्[2] अन्यत् देहादिकं न वेद॥ ३९॥

**स** इति। स एवं वर्तमानस्सन्[3] आत्मनि आत्मानं विद्वान् अन्यस्मादुपरराम। कथं विद्वान्? व्यतिरिक्ततया देहादिव्यतिरिक्तत्वेन, कुतः? व्यापकतया, देहादिप्रकाशकत्वेन। ननु देहाद्याकारो विमर्श एतत्प्रकाशयति न तु निराकार आत्मा अत आह- आमर्शस्यापि साक्षिणम्। अयम्भावः- अमर्शो नाम अन्तः करणवृत्तिः, सा च जडत्वात् आत्मप्रकाशस्यैवेति। यथा स्वप्ने ममेदं शिरः छिन्नमित्यादिप्रतीतौ तद्व्यतिरिक्तमात्मानं [4-]छिन्नशिरस्कस्य प्रकाशकं[-4] वेत्ति तद्वत्॥ ४०॥

**वीर०** कन्दाष्टयः कन्दबीजानि कन्दाष्ट्यादिभिः पूर्वपूर्वालाभे उत्तरोत्तरैः वर्तमानः देहधारणं कुर्वाणः पश्चाच्छनैः गात्रकर्शनं[5] शरीरशोषणं तप अनशनतप आस्थित इत्यर्थः[6]॥ ३६॥

ततः समदर्शनः शीतोष्णादिनिमित्तचित्तविकाररहितः शीतोष्णादिद्वन्द्वान्यजयत्॥ ३७॥

तपसा कर्मयोगेन विद्यया ज्ञानयोगेन च पक्वः निरस्तः कषायः धातुरागवदनिवर्त्यं पुण्यापुण्यात्मकं पापं यस्य स, यमैर्नियमैश्च विजितान्यक्षणीन्द्रियाणि अनिलः प्राणः, आशयोऽन्तः करणं च येन सः। ब्रह्मणा परमात्मना आत्मानं प्रत्यगात्मानं युयुजे। अधिकरणस्यैव करणत्वविवक्षया तृतीया। ब्रह्मण्यात्मानं युयुजे ब्रह्मात्मकं स्वात्मानमनुसंहितवानित्यर्थः॥ ३८॥

स्थाणुरिव एकत्र देशे दिव्यं वर्षशतं निश्चलः आस्ते उपविष्टवान्। भगवति वासुदेवे रतिमनुरागात्मिकां भक्तिमुद्वहन् कुर्वन् अन्यच्छरीरादिकं न वेद न सस्मार॥ ३९॥

---

1. A, B, G, I, J, T, V °मर्श 2. B, J, V, Va omit सन् 3. A, B, J, Va omit सन् 4--4. B, J, V, Va omit 5. B, W कर्षणं 6. W omits इत्यर्थः

स मलयध्वजः साक्षात् द्रष्टारमात्मानं परमात्मानमात्मनि जीवात्मनि व्यापकतया विलक्षणतया व्यापकत्वरूपवैलक्षण्येनेत्यर्थः। विद्वान् स्वप्न इवाऽऽमृश्य स्वप्न इवानित्यं देहवृत्तान्तमामृश्य तस्मात् विरराम केवलपरमात्मानुसन्धानपरोऽभूदित्यर्थः ॥ ४० ॥

**विज०** ''मूल-प्रतिष्ठायाम्'' इति धातोः मूलं जगदाधारं ब्रह्म फलन्ति निष्पादयन्तीति मूलफलानि तैः, कं सुखं ददातीति कन्दं मिताशनं तदादिर्येषां मितस्वापादीनां तानि कन्दादीनि योगसाधनानि तैः। ''नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः'' (भ.गी.6-16) इति स्मृतेः। पुष्पवत् मृदुलैः पर्णैः आच्छादनैः उद्गतमकं दुःखं येभ्यस्तानि उदकानि तृणानि आस्तरणानि तैरेतैश्च वर्तमानः शरीरयात्रां कुर्वाणः *गं ज्ञानं गमयतीति गात्रमज्ञानं कर्शयत्यल्पीकरोतीति गात्रकर्शनम्। ''तप- आलोचने'' इति धातोः आलोचनं मननमनुतिष्ठन् ॥ ३६ ॥

शीतोष्णादीनि द्वन्द्वान्यजयत् सहमानो वर्तत इत्यन्वयः। शीतोष्णादिशब्दैः कामादयो लक्ष्यन्ते इति ज्ञातव्यम्, उभयेषां शरीराधिकरणत्वात् ॥ ३७ ॥

तपसा मननलक्षणेन जातया विद्यया ज्ञानेन नियमादिभिश्च पक्वकषायः शिथिलीकृतपाप आत्मानमन्तःकरणं ब्रह्मणा युयुजे विषयेभ्यः आनीय श्रीनारायणेन सह वर्तमानमकरोत् तदेकनिष्ठमकुरुतेत्यर्थः। यद्वा आत्मानमन्तर्यामिरूपं ब्रह्मणा व्याप्तरूपेण युयुजे एकत्वेन दध्यावित्यर्थः। विजिताक्षानिलाशयो वशीकृतेन्द्रियप्राणान्तःकरणः, आशयो अभिलाषो वा ॥ ३८ ॥

स्थाणुरिव स्थितः एकत्र गुरुकुले श्रुतमतशास्त्रे बुद्धिप्रसादजनके विविक्तस्थाने वा दिव्यं वर्षशतं बहुकालमुपासीन आस्त इत्यन्वयः। मुक्तिसाधनं भक्तिरेव नान्यदिति तस्या अतिशयफलमाह- वासुदेव इति। उपासको वासुदेवे भगवति वेदान्तविचारनिर्णीतगुणरत्नाकरे हरौ उपासनालक्षणां रतिमुद्वहन् कुर्वन् अन्यत् स्वतन्त्रं वस्तु न वेद, किन्तु सर्वं तदधीनमेव ज्ञातवानित्यर्थः ॥ ३९ ॥

ननु ब्रह्मव्यतिरिक्तस्य वस्तुनोऽभावात् ''एकमेवाऽद्वितीयम्'' (छान्दो.उ. 6-2-1) इति श्रुतेः एतदेव नान्यत् वेदेति प्रतीत एवार्थः किं न स्यादिति तत्राह- **स व्यापकतयेति**। स आमृश्य विचार्याऽऽत्मनि जीवे स्थितं साक्षिणं ''स्वप्नेन शारीरमभिप्रहत्या सुप्तः सुप्तानभिचाकशीति'' (बृह.उ. 4-3-11) इति श्रुतेः। साक्षात् द्रष्टृत्वेन वर्तमानं स्वप्ने यथा परतन्त्रतया जीवं पश्यति तथा अन्यदपीति विद्वान् तथात्मानं परमात्मानं व्यापकतया सर्वव्यापित्वेन चेतनाचेतनात्मक जगद्व्यतिरिक्ततया च विद्वान् विरराम

* Mf, Bf गं ज्ञानम् अत्राति न त्रातीति गात्रमिति पाठः सम्यक्।

संसारात् विरक्तो जीवन्मुक्त्यवस्थामापेत्यन्वयः । यद्वा आत्मानं व्यापकतया आत्मनि जीवे व्यतिरिक्ततया च विद्वान् स्वप्न इव स्वतन्त्रं साक्षिणं जीवं परतन्त्रम् आमृश्य निश्चित्य विररामेति । हेत्यनेन जीवस्य अस्वातन्त्र्ये हरेस्तदन्यत्वे "स्वप्नो यतो न स्वतन्त्रस्ततः तद्दर्शकः परः । जीवादन्यस्तु विज्ञेयः स विष्णुरवधार्यताम्" (वाराहे) इति प्रसिद्धिः सूच्यते ॥ ४० ॥

**साक्षाद्भगवतोक्तेन गुरुणा हरिणा नृप ।**
**विशुद्धज्ञानदीपेन स्फुरता विश्वतोमुखम् ॥ ४१ ॥**

**परे ब्रह्मणि चात्मानं परं ब्रह्म तथाऽऽत्मनि ।**
**वीक्षमाणो[1] विहायेक्षामस्मादुपरराम ह ॥ ४२ ॥**

**पतिं परमधर्मज्ञं[2] वैदर्भी मलयध्वजम् ।**
**प्रेम्णा पर्यचरद्धित्वा भोगान् सा पतिदेवता ॥ ४३ ॥**

**चीरवासा व्रतक्षामा वेणीभूतशिरोरुहा ।**
**बभावुपपतिं शान्ता शिखा शान्तमिवानलम् ॥ ४४ ॥**

**अजानती प्रियतमं यदोपरतमङ्गना ।**
**सुस्थिरासनमासाद्य यथापूर्वमुपाचरत्[3] ॥ ४५ ॥**

**श्रीध०** केन विद्वान् तत्राह - **साक्षादिति** । साक्षात् [4]भगवान् हरिरेव यो गुरुः तेनोक्तेन सर्वतोमुखं यथा तथा स्फुरताऽनवच्छिन्नेन, [5-]विशुद्धेन[-5] [6]ज्ञानदीपेन ॥ ४१ ॥

तदेवाह- **पर** इति । ब्रह्मैवाहं न संसारीति ब्रह्मणि आत्मनि ईक्षणे शोकादि निवृत्तिः अहमेव ब्रह्मेत्यात्मनि ब्रह्मण ईक्षणे ब्रह्मपारोक्ष्यनिवृत्तिः । अतो व्यतिहारेणेक्षमाणोऽस्मात्संसारात् उपरराम । नन्वेवमपि जीवस्य कुतो ब्रह्मत्वा[7]पत्तिः ईक्षणस्यैव व्यवधायकत्वात् इत्याशङ्क्याह - ईक्षां विहाय [8]दग्धेन्धनाऽनलवत् तस्याः स्वयमेव उपशान्तेरिति भावः ॥ ४२,४३ ॥

**चीरेति** । उपपतिं [9-]पत्युः समीपे । यद्वा[-9]पत्युः किञ्चिन्मात्रं न्यूना तत्समाना सती बभावित्यर्थः । "उपोऽधिके च" (अष्टा.1-4-87)

1. Ms, W ई° 2. V °ज्ञा 3. Ms °मिवा° 4. B, J, V, Va omit भगवान् 5--5. B, J, V, Va omit 6. B, J, V, Va ज्ञानेन ॥ ४१ ॥ 7. V °ता°
8. V adds यत् 6. V °शान्ति° 9--9. B, V omit

इति कर्मप्रवचनीयः। तद्योगे द्वितीया। शान्तमङ्गारावस्थं[1-] ज्वालाया अधः स्थितम्[-1] अनलं शान्ता शुद्धा निर्धूमा[2] ज्वाला यथा भवति तद्वत्॥ ४४॥

**अजानतीति**। तदानीमपि सुस्थिरमासनं यस्य, अत एव अजानती [3-]पत्युः किञ्चिन्मात्रम् औदासीन्यं[-3] [4]यथा तथा यथापूर्वम् असेवत॥ ४५॥

**वीर०** साक्षात् भगवान् हरिरेव गुरुः तेनोक्तेन सर्वतोमुखं स्फुरता अकुण्ठितेन विशुद्धज्ञानदीपेन स्वपर याथात्म्यज्ञानदीपेन॥ ४१॥

आत्मानं प्रत्यगात्मानं परे ब्रह्मणि, परं ब्रह्म प्रत्यगात्मनि च ईक्षमाणः उपासनेन[5] साक्षात्कुर्वन्नित्यर्थः। परे ब्रह्मणीति धारकत्वमुक्तं, परं ब्रह्मेति व्यापकत्वमुक्तम्। ततः ईक्षां विहाय उपरराम उपासनात्मकं ज्ञानं हित्वा उपरराम। यावत् उपरमम् आमरणमुपासितवानित्यर्थः॥ ४२॥

वैदर्भी भोगान् हित्वा पतिरेव देवता यस्याः सा भगवदाराधनरूपसर्वोत्कृष्टधर्मनिष्ठं मलयध्वजं पतिं प्रेम्णा पर्यचरत् [6-]परिचर्यां चक्रे[-6]॥ ४३॥

चीरं वासो वस्त्रं यस्याः सा, व्रतेन अनशनादिना क्षामा वशीभूता, वेणीभूता जटीभूताः शिरोरुहाः केशाः यस्याः सा, उपपतिं पत्युः समीपे यद्वा पत्युः किञ्चिन्मात्रं न्यूना तत्समाना सतीत्यर्थः। "उपोधिके च" (अष्टा. 1-4-87) इति कर्मप्रवचनीयत्वेन[7] तद्योगे द्वितीया शान्तमङ्गारावस्थमनलं शान्ता निर्द्धूमा शुद्धा[8] शिखा ज्वाला यथा भाति तथा[9] बभौ॥ ४४॥

यदा पतिरुपरराम तदानीमपि सुस्थिरमासनमासाद्य आबध्य अत एवोपरतं मृतं प्रियतमं पतिम् अजानती अङ्गना वैदर्भी यथापूर्वं पत्युरङ्घ्री उपाचरत् पर्यचरत्॥ ४५॥

**विज०** तर्ह्यभेदश्रुतेः कोऽभिप्राय इत्याशङ्क्य जीवान्तर्यामिणो हरेः "ब्रह्मविदाप्नोति परम्" (तै.ति. 3-2-1) इति श्रुतिप्रतिपाद्यस्य व्याप्तस्यापि न कश्चित् भेदोऽस्तीत्यर्थः इत्यभिप्रेत्याह- साक्षादिति॥ ४१॥

आत्मानं जीवान्तर्यामिणम्, ईक्षां तयोर्भेददर्शनम्, अस्माच्छरीरात्। हेत्यनेन इह[10] अस्य प्रामाणिकत्वं द्योतयति॥ ४२॥

पतिं स्वाश्रयमिन्द्रियद्वारेण भोगान् विहाय, परिचरणं नाम तस्य हितप्रेरकत्वम्॥ ४३॥

---

1--1. B, J, V, Va omit 2. B, J, Va omit निर्धूमा 3--3. A, B, J, Va omit 4. A, B, J, Va यदा तदा 5. A, T ०ने सा० 6--6. W परिचरितवती 7. W ०त्वे त० 8. A, B, T omit शुद्धा 9. A, B, T तद्वत् 10. A, B, M omit इह

चीरवासाः सत्वगुणलक्षणवेणी चक्षुषि शिरोरुहलक्षणा वृत्तयो यस्याः सा तथा, उपपतिं पत्युः स्वमनसः समीपे। शान्तमित्यनेन धूमराहित्यं न तु निर्वाणत्वं, न हि नष्टस्याग्नेः शिखा। कथापक्षे यथास्थित एवार्थः अभूतदृष्टान्तस्य[1] सम्भवात्। तस्मिन् निर्धूमतया ज्वलतोऽग्नेः शिखेव निर्मलतया श्रेयसोऽन्तरङ्गमित्यर्थः ॥ ४४ ॥

इदानीं बुद्धेः वृत्तिविशेषान् लक्षयति - **अजानतीति**। अङ्गना भगवज्ज्ञानसाधना, उपरतं जीवन्मुक्त्यवस्थाप्राप्तं, प्रियतमं स्वस्था आत्यन्तिकं प्रियं तम्, अजानती बाह्यवृत्तिविशिष्टा सुस्थिरासनं तदेकवृत्तिनिष्ठालक्षणं पीठमाप्य पूर्वसंस्कारवशात् यथापूर्वम् उपाचरत् शुभकर्मणि प्रेरयामास ॥ ४५ ॥

**यदा नोपलभेताङ्घ्रावूष्माणं पत्युरर्चती।**
**आसीत्संविग्नहृदया यूथभ्रष्टा मृगी यथा ॥ ४६ ॥**

**आत्मानं शोचती दीनमबन्धुं[2] विक्लबाश्रुभिः।**
**स्तनावासिच्य विपिने[3] सुस्वरं प्ररुरोद ह[4] ॥ ४७ ॥**

**उत्तिष्ठोत्तिष्ठ राजर्षे इमामुदधिमेखलाम्।**
**दस्युभ्यः क्षत्रबन्धुभ्यो बिभ्रतीं पातुमर्हसि ॥ ४८ ॥**

**एवं विलपती[5] बाला विपिने[6]ऽनुगता पतिम्।**
**पतिता पादयोर्भर्तू रुदत्य[7]श्रूण्यवर्तयत् ॥ ४९ ॥**

**चितिं दारुमयीं चित्वा तस्यां पत्युः कलेबरम्।**
**आदीप्य[8] चानुमरणे विलपन्ती मनो दधे ॥ ५० ॥**

**श्रीध० यदेति**। पत्युरङ्घ्रिम् अर्चयन्ती सेवमाना[9] यदा तस्मिन् अङ्घ्रौ ऊष्माणं नापश्यत् ॥ ४६ ॥

**आत्मानमिति**। अबन्धुं पतिरहितम्। अश्रुभिः आसिच्य ॥ ४७ ॥

**उत्तिष्ठेति**। क्षत्रबन्धुभ्योऽधार्मिकक्षत्रियेभ्योऽपि ॥ ४८ ॥

---

1. A, B °त् दृ° 2. M, Ma, Ms °बन्धुर्वि° 3. W °जने 4. A, B, G, I, J, M, Ma, Ms, T सा 5. G, I °पन्ती 6. W °जने 7. B, M, Ma, Ms °न्त्य° 8. M, Ma सन्दीप्य 9. B, J, V, Va omit सेवमाना

**एवमिति।** अवर्तयत् प्रवर्तयामास ॥ ४९ ॥

**चितिमिति।** तस्यां निधाय अग्निदानेन आदीप्य च ॥ ५० ॥

**वीर०** यदा चार्चन्ती[1] पत्युरङ्घ्रौ ऊष्माणं नोपलभेत नोपलब्धवती तदा संविग्नहृदया दुःखितचित्ता आसीदभूत्। यूथात् स्वसमूहात् भ्रष्टा वियुक्ता मृगी हरिणी तद्वत् ॥ ४६ ॥

अबन्धुं पतिरहितमत एव दीनमात्मानं शोचन्ती विक्लबाश्रुभिः शोकोद्गतनेत्रजलैः स्तनावासिच्य एकान्ते सुस्वरं प्ररुरोद। हेति खेदे ॥ ४७ ॥

तदेवाह - हे राजर्षे ! जितेन्द्रियश्रेष्ठ ! उत्तिष्ठोत्तिष्ठ, क्षत्रबन्धुभ्योऽधार्मिकक्षत्रियेभ्यः, अत एव दस्युरूपेभ्यः केवलत्रिवर्ग निष्ठेभ्यः इत्यर्थः। बिभ्यतीं भयं प्राप्नुवतीं[2] निवृत्तिमार्गलोपेन बिभ्यतीमित्यर्थः। इमामुदधिमेखलां समुद्रवेष्टितां भूमिं पातुं सम्यक् निवृत्तधर्मप्रवर्तनेन रक्षितुमर्हसि ॥ ४८ ॥

पतिमनुसृत्य विजनेऽरण्ये गता बाला वैदर्भी एवं विलपन्ती भर्तुः पादयोः पतिता रुदन्ती[3] अश्रूण्यवर्तयत् प्रवर्तयामास ॥ ४९ ॥

दारुमयीं चितिं कृत्वा विरचय्य तस्यां चित्यां पत्युः कलेबरं शरीरम्[4] आदीप्य प्रज्वाल्य विलपन्ती, अनुमरणे सहगमने मनो दधे धृतवती ॥ ५० ॥

**विज०** यदैवं प्रेरयति च यदा पत्युरङ्घ्र्यवयवैकदेशे ऊष्माणमौष्ण्यं नोपलभेत शुष्कजलनारिकेलफलवत् देहाभिमानं विहाय स्थितत्वादौष्ण्यानुपलभः तस्या इति, ततोऽपि वृत्त्यन्तरवैशिष्ट्यमाह- आसीदिति। तदा संविग्नहृदया वृत्त्यन्तरविशिष्टाऽऽसीत्, मिश्रबुद्धिमपहाय स्वरूप बुद्ध्याऽवतिष्ठते, तदेवम् अवस्थाविशेष इति तात्पर्यं ज्ञातव्यम् ॥ ४६ ॥

बन्धुः स्वामी तदनुमानराहित्यात् अबन्धुः शोचन्ती प्रकाशयन्ती। विक्लबेत्यादिना प्रतिक्षणमनन्तबुद्धिवृत्तयो लक्ष्यन्ते। विपिने देहलक्षणे स्थिता सुस्वरं प्ररुरोदेति इदं बुद्धे र्लक्षणमस्याः मुक्तिकाले नाशात् चिदचिद्बुद्ध्या व्यापारविशेषाल्लक्षणवैलक्षण्यं प्रतिक्षणं ज्ञातव्यम् ॥ ४७ ॥

उदधिः कर्म तदेव मेखलास्थानीयं यस्याः सा तथा तां, दस्युभ्योऽहङ्कारादिभ्यः क्षत्रबन्धुभ्यो मिथ्याज्ञानादिभ्यो बिभ्यतीं मां रक्षितुमर्हसि। त्वदनुगृहीतया बुद्ध्याऽज्ञानादयो निवर्तन्त इत्यर्थः ॥ ४८ ॥

---

1. A, B, T °ती 2. W °म° 3. A, B, T °ती 4. W omits शरीरम्

विपिने वासनावने विलपतीव धावतीव दर्शयती, भर्तुः पादयोः पतिता स्वामिनं विहाय स्थिता अश्रूण्यवर्तयत् मुग्धेवा भवत् ॥ ४९ ॥

दारुमयीं भेदविषयां चितिं संविदं कृत्वा, प्रकाश्य तस्यां संविदि पत्युः कलेबरं संसारकारणमादीप्य दग्ध्वा, अनुमरणे अनुस्यूतदोषनाशे, मनो दधे तादृशीं वृत्तिं प्राकाशयत् ॥ ५० ॥

**तत्र पूर्वतरः कश्चित्सखा ब्राह्मण आत्मवान् ।**
**सान्त्वयन् वल्गुना साम्ना तामाह रुदतीं प्रभो ॥ ५१ ॥**

**[1-]ब्राह्मण उवाच[-1]**

**का त्वं कस्यासि को वाऽयं शयानो यस्य शोचसि ।**
**जानासि किं [2]सखाऽयं मां येनाग्रे [3]विचचर्थ ह ॥ ५२ ॥**

**अपि स्मरसि चात्मानमविज्ञातसखं सखे ।**
**हित्वा मां पदमन्विच्छन् [4]भौम भोगरतो गतः ॥ ५३ ॥**

**हंसावहं च त्वं चार्य सखायौ मानसायनौ ।**
**[5-]अभूतामन्तरा वौकः[-5] सहस्रपरिवत्सरान् ॥ ५४ ॥**

**स त्वं विहाय मां [6]बन्धो गतो ग्राम्यमतिर्महीम् ।**
**विचरन् पदमद्राक्षीः कयाचिन्निर्मितं स्त्रिया ॥ ५५ ॥**

**श्रीध० तत्रेति** । पूर्वतरोऽनादिरीश्वरः [7]कश्चित् सखा "द्वा सुपर्णा सयुजौ" (मुण्ड.उ० 3-1-1) इति श्रुतेः । साम्ना प्रियवाक्येन सम्बोधयन् ॥ ५१ ॥

**केति** । यस्य यं शोचसि अग्रे सृष्टेः पूर्वं [8]येन विचचर्थ [9]ह, मयि स्थितत्वेन [10]विविधं सख्यसुख मनुभूत [11]वत्यसि ॥ ५२ ॥

[12-]ननु नाहमावयोः सख्यं सहचरत्वं च जानामीति चेत्, तत्राह[-12] - **अपीति** । यद्यपि मां न जानासि तथाप्यात्मानं त्वाम्

1--1. M, Ma, V. omit 2. Ms सहायं 3. W °चकर्थ 4. W ग्राम्य 5--5. M, Ma, Ms अवात्स्व रमणौ चोभौ 6. Ms बद्धो; W बन्धुं 7. A, B. J, Va omit कश्चित् 8. B. J, V, Va omit येन 9. V omits ह 10. A, B, J, Va omit विविधं 11. A, B, J, Va °वानसि 12--12. V omits

अविज्ञातसखमविज्ञातः कश्चिन्मे सखा आसीदित्येवं किं स्मरसि? सखे इति पुंस्त्वनिर्देशः प्राक्तनपुंस्त्वस्मरणाय। सख्यं स्मारयन् स्ववियोगकृतमनर्थमाह[1] हित्वेति सार्धैः षड्भिः। पदं स्थानम्॥ ५३॥

**हंसाविति**। हंसौ शुद्धौ मानसं हृदयमयनं ययोः। कथापक्षे मानससरसि स्थितौ पक्षिणावभूतां जातौ। ओकोगृहम्। अन्तरा विनैव। वा शब्द एवार्थे। सहस्रपरिवत्सरान् महाप्रलयो यावत्॥ ५४॥

**स** इति। हे बन्धो ग्राम्ये[2] विषयसुखे मतिर्यस्य। स्त्रिया मायया॥ ५५॥

**वीर०** तत्र तस्मिन्नवसरे पूर्वतरः पुरातनः ईश्वररूपः कश्चित् सखात्मवान् ब्राह्मणः आगत्य वल्गुना मधुरेण साम्ना सामवाक्येन सान्त्वयन् उपलालयन् रुदन्तीं प्रत्याह- हे प्रभो! निरुपाधिकसखः! यादृच्छिकसुकृतमात्रसन्तुष्टो भगवान् ब्राह्मणरूपेणागत्य वैदर्भीं सान्त्वयन्नाह भागवतसम्बन्धमात्रतुष्टो भगवान् वैदर्भीम् अनुजग्राहेति यावत्॥ ५१॥

उक्तिमेवाह - **का त्वमि**त्यादिना तथैवान्तरमावयोरित्यन्तेन। का त्वमिति कथं जातीयकेति प्रश्नः। कस्यासि कस्य सम्बन्धिन्यसि, को वायमित्यपि, तथा यस्य शोचसि यदर्थं शोचसि शयानस्य स्वस्य च स्वरूपमुभयोः सम्बन्धं देहप्रयुक्तमविदित्वा किं वृथा शोचसीत्यभिप्रायः। सखायं मां जानासि किम्? स्वस्वरूपमेव अजानती त्वं कथं मत्स्वरूपं जानासीत्यर्थः। तत्र हेतुः येन मया हेतुनाग्रे सृष्ट्यादौ विचकर्थ विकृतवानसि अनादित्वत्कर्मानुगुणमत्सङ्कल्पेन स्वपरस्वरूपं विस्मृत्य देवमनुष्यादिविकारं प्राप्तोऽसीत्यर्थः॥ ५२॥

यद्यपि मां न जानासि तथाप्यात्मानं त्वामविज्ञातसखमविज्ञातः कश्चिन्मे सखा आसीदिति किं स्मरसि। हे सखे! इति पुंस्त्वनिर्देशः। प्रकृतिविलक्षणपुरुषस्वरूपस्मरणाय सख्यं स्मारयन् स्ववियोगकृतमनर्थमाह- हित्वेति सार्धैः षड्भिः। मामन्तरात्मभूतं हित्वा ग्राम्यभोगः शब्दादिविषयानुभवः तस्मिन्नासक्तः पदं भोगस्थानं देवमनुष्यादिशरीरमन्विच्छन्, गतः मद्वियोगं प्राप्तः स्वपरयाथात्म्यज्ञानविधुरो जात इत्यर्थः॥ ५३॥

हे आर्य! त्वं चाहं च सहस्रपरिवत्सराननन्तकालम् अन्तरा वोकः शरीररूपगृहमध्य एव अन्तरेति मध्येऽव्ययम्, वा शब्दः एवार्थः, ओको गृहम्। मानसायनौ हृत्पद्मगृहगतौ सखायौ हंसावभूताम्। सखिशब्दार्थसामानाधिकरण्यात् 'शेषे प्रथमः' (अष्टा.1-4-108) इति प्रथम पुरुषः। अत्र हंसत्वविधानाय युष्मदस्मदर्थयोः सखित्वमुद्दिश्यते उद्देश्यानुगुणा च सर्वत्र तिङ् विभक्तिः प्रयुज्यते, तद्यथा

1. V omits हित्वेति 2. B, J, Va omit विषय, V स्वेरे

''त्वं वाऽहमस्मि भगवो देवते, अहं वै त्वमसि भगवो देवते, तत्त्वमसि'' इति। अत्र सखित्वं न विधेयं युष्मदस्मदर्थोद्देश्येन अत्र पूर्वतरः कश्चित् सखा अविज्ञात सखं सखे इत्यनेनैव प्राप्तत्वात्। हंसत्वं तु अप्राप्तम्। हंसत्वं शुद्धत्वं, हिनस्ति निरस्यति विकारानिति हंसः। ततश्च अयमर्थः अपास्तमरणौ स्वतो निरस्तविषयसुखाविति। औपाधिको हि जीवस्य विषयभोगः। कथापक्षे मानससरसि स्थितौ पक्षिणावभूताम्॥ ५४॥

स त्वं हंसः त्वं, बन्धुं सखायं मां विहाय विस्मृत्य, ग्राम्येषु शब्दादिषु मतिर्यस्य सः, महीं प्रकृतिमण्डलं गतः[1] प्राप्तः[2] तत्रापि पदं वासस्थानं[3] विचरन्[4] विचिन्वन् यद्वा मह्यां विचरन् कदाचित् पदमद्राक्षीः इत्यन्वयः। पदं विशिनष्टि- स्त्रिया प्रकृत्या निर्मितम्॥ ५५॥

**विज०** तत्र तस्याम् अवस्थायां कश्चित् वेदान्तवाक्यार्थो हितोपदेष्टृत्वेन सखिधर्मे वर्तमानो ब्राह्मणो ब्रह्मसम्बन्धी निर्दोषशब्दलक्षणागमसम्बन्धी वा आत्मवान् परमात्मगुणप्रतिपादनपरः साम्ना अखिलार्थप्रकाशनेन सान्त्वयन् प्रतिपदं दर्शितान्वयः बुद्धिमाह- अबोधयदिति। कथापक्षे प्रतीत एवार्थः॥ ५१॥

तदनुकरणतया बोध्यत इत्याह- **केति**। का किं जातिविशिष्टा? न कापि। किञ्च कस्यासि ? कं पुरुषमाश्रित्य तिष्ठसि, न कमपि। सर्वचेतनानुस्यूतत्वात् न विशेष्टुं शक्यते। यस्य शोचसि यद्यहमिति प्रकाश्य वर्तसे अयं शयानः शरीरलक्षणः पदार्थः कः? पाञ्चभौतिकत्वात् तव चास्य न कोऽपि सम्बन्धः किन्तु चेतनस्यैवेत्यर्थः। त्वं का? नामतो गोत्रतो लिङ्गतश्च, न तव त्रयमप्यस्ति। कस्यासि? पुत्री भार्या वा, न कस्यापीत्यर्थः। को वाऽयं शयानस्तव ? निरूपिते सति अनेन सम्बन्धः, यस्य मरणं शोचसि स इति वा। अग्रे पूर्वकाले येन मया विचचर्थ विचारितवानसि, [5-]वेदान्तवाक्यमिति शेषः[-5]। विचार्य मां ज्ञातवानसि, तं सखायं त्वया सह वर्तमानं मां जानासि किं, सखित्वात् ज्ञातुं प्राप्तिरस्तीत्येत्रद्धशब्देनाह॥ ५२॥

किञ्च हे सखे ! अविज्ञातः परमात्मा सखा यस्य स तथा तमात्मानं त्वं स्मरस्यपि? न स्मरसि चेत् तं स्मरेति चार्थः। चिद्बुद्ध्याऽऽत्मनोः अभेदादिदम् उभयविषयमिदानीं ज्ञानात्मानं चेतनमविभज्येवाह- हित्वेति। विषयभोगगतः तदर्थं भोगस्थानमन्विच्छन् मृगयन् मां हित्वा गतः पृथक्कृत इव। अग्रत इति पाठे पदमन्विच्छन् अभूदित्यन्वयः॥ ५३॥

वाक्यार्थाभिमानी कश्चिच्चेतनः स्वात्मनो [6-]रूपं बोध्यस्वरूपं[-6] च तत्त्वत उपदिशति - **हंसाविति**। आर्य ! प्राज्ञ ! अहं च त्वं च हंसौ, स्वतो निर्लोपौ, मानसं ज्ञानमयनं ययोस्तौ तथा, सहस्रपरिवत्सरान् बहुकालं रमणौ[7] रममाणौ अवात्स्व। अन्यत्र मानससरोवराश्रयौ हंसौ प्रसिद्धौ प्राक् चीर्णपुण्य निचयादवाप्तजातिस्मृती॥ ५४॥

---

1. A, B, T omit गतः 2. W omits प्राप्तः 3. A, B, T निवास 4. A, B, T omit विचरन् 5--5. A, B, omit 6--6. A, B omit 7. A, B omit रमणौ

पुनः प्रारब्धकर्मवशात् ग्राम्यमतिर्मां विहाय कर्मभूमिं गतो, विचरन् पर्यटन्, किञ्चित्पदं भोगस्थानम् अद्राक्षीः, स्त्रिया विषयबुद्ध्या रचितम् ॥ ५५ ॥

**पञ्चारामं नवद्वारमेकपालं त्रिकोष्ठकम् ।**
**षट्कुलं[1] पञ्चविपणं पञ्चप्रकृतिस्त्रीधवम् ॥ ५६ ॥**

**पञ्चेन्द्रियार्था आरामा [2-]द्वारो घ्राणादयः प्रभो[-2]।**
**तेजोऽबन्नानि कोष्ठानि [3]कुलमिन्द्रियसङ्ग्रहः ॥ ५७ ॥**

**विपण[4]स्तु क्रियाशक्ति र्भूतप्रकृतिरव्यया ।**
**शक्त्यधीशः [5]पुमानत्र प्रविष्टो नावबुध्यते ॥ ५८ ॥**

**तस्मिं स्त्वं [6]रामया स्पृष्टो रममाणो[7] गतस्मृतिः ।**
**तत्सङ्गादीदृशीं प्राप्तो दशां पापीयसीं [8]विभो ॥ ५९ ॥**

**न त्वं विदर्भदुहिता नायं [9]वीरः सुहृत्तव ।**
**न पतिस्त्वं पुरञ्जन्या रुद्धो नवमुखे यया ॥ ६० ॥**

**श्रीध० पञ्चाराममिति** । पञ्च शब्दादय आरामा उपवनानि यस्मिन्, नव द्वाराणि प्राणाच्छिद्राणि यस्मिन्, एकः प्राणः पालो यस्मिन् । त्रीणि पृथिव्यप्तेजांसि कोष्ठानि प्राकारा यस्मिन्, षट् ज्ञानेन्द्रियमनांसि कुलानि अभीष्टविषयसमर्पका वणिजो यस्मिन्, पञ्च विपणाः हट्टाः कर्मेन्द्रियाणि यस्मिन्, पञ्च भूतानि प्रकृतिः उपादानकारणं यस्य, स्त्री बुद्धिरेव, धवः पतिः स्वामिनी यस्मिन् । स्वयमेव इमं श्लोकं व्याचष्टे पञ्चेन्द्रियार्था इति षट्कुलमिति - [10-]षट्, पञ्च[-10], एकपालमिति च स्पष्टत्वात् न व्याख्यातम् ॥ ५६,५७ ॥

**विपण इति** । भूतान्येवाव्यया प्रकृतिः उपादानं यस्य, स्त्रीधवमित्यस्य व्याख्यानं शक्तिः [11]बुद्धिः अधीशा यस्य तद्वशः सन्नित्यर्थः ॥ ५८ ॥

---

1. M, Ma, Ms °कूलं 2--2. A, B, G, I, J, T द्वारः प्राणा नव प्रभो; W द्वारः प्राणायना नव । 3. M, Ma, Ms गोलकेन्द्रिय 4. W °णा°
5. A, B, G, I, J, T पुमांस्त्वत्र 6. Ma मायया 7. A, B, G, I, J, T, V °णोऽश्रुत°; M, Ma, Ms °णो हत° 8. A, B, G, I, J, T, V प्रभो
9. Ms वीरपतिः प्रभो ! 10--10. A, B, J, Va षट्त्वं 11. B, J, V, Va omit बुद्धिः

**तस्मिन्निति** । स्पृष्टोऽभिभूतः, अतो न विद्यते श्रुते ब्रह्मत्वे स्मृतिर्यस्य ॥ ५९ ॥

तत्त्वमुपदिशति - **न त्वमिति** चतुर्भिः । सुहृत् पतिः नवद्वारे पुरे यया रुद्धोऽसि तस्याः ॥ ६० ॥

**वीर०** [1-]पञ्चारामं[-1] पञ्च आरामा उपवनानि यस्मिन्, नव द्वाराणि छिद्राणि यस्मिन् , एकः पालः पालको यस्मिन्, त्रीणि कोष्ठानि प्राकारा यस्मिन्, षट् कुलानि अभीष्टविषयसमर्पकाणि यस्मिन्, पञ्च विपणाः हट्टाः यस्मिन्, पञ्च प्रकृतिरुपादानकारणं यस्य, स्त्री [2-]भार्या एव[-2] धवा स्वामिनी यस्मिन् तत् ॥ ५६ ॥

स्वयमेव श्लोकं व्याचष्टे - **पञ्चेति** । पञ्चेन्द्रियार्थाः शब्दादयः, आरामाः प्राणायनाः प्राणाधीना इन्द्रियाणि चक्षुरादीनि तेषां प्राणायत्तप्रवृत्तित्वात् तदाश्रयत्वाच्च । नेत्रद्वयश्रोत्रद्वयादिरूपच्छिद्राणि[3] नव द्वारः एकः प्राणः पालो यस्मिन्निति स्पष्टत्वात् न व्याख्यातम् । तेजोऽबन्नानि तेजश्चापश्चान्नं पृथिवी च एतानि कोष्ठानीत्यर्थः । इन्द्रियसङ्ग्रहः मनसा सह ज्ञानेन्द्रियषट्कसमुदायः प्रत्येकं कुलवदभीष्टप्रापकत्वात् कुलमि[4]त्यर्थः ॥ ५७ ॥

क्रियाशक्तिः कर्मेन्द्रियाणि पञ्च विपणाः पञ्च प्रकृतीत्यस्य व्याख्यानं भूतप्रकृतिरिति । भूतानि पञ्च पृथिव्यादीन्येव अव्यया नित्या प्रकृतिरुपादानकारणम् । अत्र भूतान्तर्गतानां तेजोऽबन्नानां त्रयाणां देहारम्भकत्वात् प्रकृतित्वम् । कोष्ठस्थानीयास्थिरुधिरमांसरूपेण परिणामात् । तेजोऽबन्नानि कोष्ठानीत्युक्तम् । तथा च श्रूयते - ''अन्नमशितं त्रेधा विधीयते, तस्य यः स्थविष्ठो भागः तत्पुरीषं, यो मध्यमः तन्मांसम् । आपः पीतास्त्रेधा विधीयन्ते, तासां यः स्थविष्ठो भागः तन्मूत्रं, यो मध्यमस्तल्लोहितम्, तेजोऽशितं त्रेधा विधीयते, तस्य यः स्थविष्ठो भागः तदस्थि'' (छा.उ. 6-5-1) इति । यद्यपि कोष्ठस्थानीयत्वेन परिणतेषु तेजोऽबन्नेषु पञ्चीकरणप्रक्रियया वाय्वाकाशावपि प्रविष्टौ, तथापि भूतत्रयांशानां बाहुल्यात् त्रिकोष्ठमित्युक्तम् । भूतात्मकोपादानस्य प्रतिक्षणपरिणामशीलत्वेऽपि अवस्थावद् द्रव्यस्य प्रधानाख्यस्य नित्यत्वादव्ययेत्युक्तम् । तथा च श्रुतिः ''गौरनाद्यन्तवती'' (मन्त्रि.उ. 4) इति, ''अजामेकाम्'' (मना. 5-8-4) इति च । स्मर्यते च ''प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि'' (भा.गी. 13-19) इति । स्त्रीधवं इत्यस्य व्याख्या शक्त्यधीश इति । शक्तिः बुद्धिरधीशा यस्य, तद्वशस्सन् इत्यर्थः । पुमान् भवान् तत्र पदे प्रविष्टः नावबुध्यते स्वात्मानं मां च न जानाति ॥ ५८ ॥

तस्मिन् पदे त्वं रामया स्त्रिया बुद्ध्या स्पृष्टोऽभिभूतः रममाणः विषयाननुभवन् अत एव गता स्मृतिः स्वपरयाथात्म्यज्ञानरूपा यस्य सः, तत्सङ्गात् बुद्धिनिमित्तदेहानुबन्धिस्त्रीसङ्गात् पापीयसीम् ईदृशीं स्त्रीयोनिरूपां दशां प्राप्तः । हे विभो ! धर्मतो व्यापकस्वभाव! ॥ ५९ ॥

---

1--1. W omits 2--2. W omits 3. A, B, T add नवद्वारः प्राणायनाः इन्द्रियस्थानानि गोलकानि च्छिद्राणि इति यावत् 4. W omits इत्यर्थ

एवं स्ववियोगनिमित्तप्रकृतिपरिणामरूपबुद्धिपारवश्यनिमित्तेयं संसृतिरूपानर्थ परम्परेत्यभिधाय सर्वं प्रकृतिपरिणामरूपवैचित्र्यं नात्मनो धर्मः, किन्तु बुद्धिसङ्गनिमित्तः औपाधिक आत्मनि प्रतीयत इति वदन् प्रकृति विलक्षणब्रह्मात्मकप्रत्यगात्मयाथात्म्यमुपदिशति - **नेति**। त्वं विदर्भस्य दुहिता न भवसि, अयं वीरो मलयध्वजस्तव पतिरपि न भवति, नवद्वारे पुरे यया बुद्ध्या रुद्धोऽसि, तस्याः पुरञ्जन्यास्त्वं पतिरपि न भवसि। विदर्भदुहितृत्वादीनां देहाकारत्वेनात्माकारत्वाभावादिति भावः ॥ ६० ॥

**विज०** एकः पालः प्राणो यस्मिन् तत्तथा तत्, स्त्री धवः पतिः स्वामी यस्मिन् तत् स्त्रीधवम् ॥ ५६ ॥

पञ्चारामार्थमाह - **पञ्चेति**। इन्द्रियार्थाः शब्दादयः। नवद्वारमित्यस्य अर्थमाह- द्वार इतिं। घ्राणादयो द्वार इत्युच्यन्ते। त्रिकोष्ठमाह- तेन इति। षट् कूलमाह[1] - गोलकेति। गोलकेष्विन्द्रियाणि गृह्यन्त इति गोलकेन्द्रिय सङ्ग्रहः ॥ ५७ ॥

विपणो व्यवहारः, क्रियाशक्तिः कर्मेन्द्रियशक्तिः पञ्चप्रकृतीत्येतदाह- भूतेति। पञ्चभूतानां या प्रकृतिः मूलकारणं सा पञ्चप्रकृतिरित्युच्यते, अव्यया नित्या। स्त्रीधवमाह- शक्तीति। शक्तिर्बुद्धिः सैवाधीशा पुरोपभोगे कारणं यस्य स शक्त्यधीशः। अन्यत्र कोष्ठानि भाण्डागारस्थानानि, कूलानि बहिष्ठपदार्थदर्शनाय निर्मितस्थानानि ॥ ५८ ॥

रामया विषयबुद्ध्या, स्पृष्टो वशीकृतः, हतस्मृतिः शास्त्रज्ञानरहितः, विषयबुद्धिसङ्गफलं नरकादि भवतीत्यर्थः ॥ ५९ ॥

**न त्वमित्यादि** विषयवैराग्यमुच्यते ॥ ६० ॥

**माया ह्येषा मया सृष्टा यत्पुमांसं स्त्रियं सतीम्[2]।**
**मन्यसे नोभयं यद्वा[3] हंसौ[4] पश्याद्य[5] नौ गतिम् ॥ ६१ ।**

**अहं भवान्न चान्यस्त्वं त्वमेवाहं विचक्ष्व भो[6]!**
**न नौ पश्यन्ति कवयश्छिद्रं जातु मनागपि ॥ ६२ ॥**

**यथा पुरुष[7] मात्मानमेकमादर्शचक्षुषोः।**
**द्विधाभूतम[8]वेक्षेत तथैवान्तरमावयोः ॥ ६३ ॥**

**एवं स[9] मानसो हंसो हंसेन प्रतिबोधितः।**
**स्वस्थस्तद् व्यभिचारेण नष्टामाप पुनः स्मृतिम् ॥ ६४ ॥**

---

1. A, B कुलं 2. M, Ma, Ms पतिम्। 3. A, B, G, I, J, M, Ma, Ms, T यदज्वै 4. M, Ma, Ms हंसं 5. A, B, G, I, J, T पश्यावयोर्गतिम्; M, Ma, Ms पश्यात्मनोर्गतिम् 6. A, G, I, T, W भोः 7. A, B, G, I, J, M, Ma, Ms, T ०ष आत्मा० 8. M, Ma, Ms ०मि० 9. Ms adds श्रीनारदः

**बर्हिष्मन्नेतदध्यात्मं पारोक्ष्येण प्रदर्शितम् ।**
**यत्परोक्षप्रियो देवो भगवान् विश्वभावनः ॥ ६५ ॥**

इति श्रीमद्भागवते महापुराणे अष्टादश साहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
चतुर्थस्कन्धे अष्टाविंशोऽध्यायः ॥ २८ ॥

**श्रीध० मायेति** । पुमांसं पूर्वजन्मनि यदमन्यथाः, इदानीं च सतीं श्रेष्ठां स्त्रियं यन्मन्यसे, एषा माया यत उभयमपि वस्तुतो नास्ति यस्मादावां हंसौ शुद्धौ । नौ आवयोः वक्ष्यमाणां गतिं स्वरूपं पश्य ॥ ६१ ॥

तत्त्वं पदार्थयोश्चिदंशेन ऐक्यमाह- **अहमिति** । अहमेव भवान् । उपचारं वारयति न चान्य इति व्यवहारोपदेश उक्ताभिप्राय [1] एव, छिद्रमन्तरम् ॥ ६२ ॥

तर्हि कथमावयोः अज्ञत्वसर्वज्ञत्वादि धर्मभेदः, तत्राह- **यथेति** । आत्मानं देहम्, आदर्शे निर्मलं महान्तं स्थिरं च अवेक्षेत । परस्य चक्षुषि च तद्विपरीतम् । विद्याऽविद्योपाधिकृतो धर्मभेदः, [2-] न तु वास्तवः [-2] इत्यर्थः ॥ ६३ ॥

[3-] **एवमिति** । एवममुना प्रकारेण स मानसो हंसः क्षेत्रज्ञः, हंसेन परमात्मना बोधितस्सन् स्वस्य आत्मनि स्थितस्सन् चिरं ध्यात्वा तद्व्यभिचारेणेश्वरवियोगेन विषयाभिलाषबुद्ध्या नष्टां स्मृतिमहं ब्रह्मास्मीति ज्ञानं पुनः प्राप्तवान् [-3] ॥ ६४ ॥

कथामात्र [4] येतदिति बुद्धिं वारयति - **बर्हिष्मन्निति** । पारोक्ष्येण राजकथामिषेण । तत्र हेतुः [5] यद्यस्मात् हे बर्हिष्मन् प्राचीनबर्हिः ! एतद्राजकथामिषेणात्मकथा प्रदर्शिता । यस्माद्देवः श्रीनारायणः परोक्षप्रियः । [6-] तथा च श्रुतिः ''परोक्षप्रिया इव हि देवाः'' (ऐत.उ. 3-14) इति [-6] । साक्षादात्मज्ञानकथनेन तव चेतसि कथा नायातीति भावः ॥ ६५ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे
श्री श्रीधरस्वामि विरचितायां भावार्थदीपिकायां
व्याख्यायां अष्टाविंशोऽध्यायः ॥ २८ ॥

---

1. B, J, V, Va omit एव । 2--2. B, J, V, Va omit 3--3. V तद्व्यभिचारेण ईश्वरवियोगेन ॥ ६४ ॥ 4. B,J,V,Va omit एतत् । 5. V यद्यस्मात् ॥६५॥
6--6. B, J, Va omit

**वीर०** यत् यस्माद्धेतोः पूर्वजन्मनि पुमांसमिदानीं सतीं श्रेष्ठां स्त्रियं मन्यसे एषा हेतुभूता मया सृष्टा मायैव। अतः उभयमपि आत्मनि न वस्तुतोऽस्ति। हि यस्मादावां, हंसौ शुद्धौ, नौ आवयोः, अद्य अधुना, गतिं वक्ष्यमाणं स्वरूपं पश्य विमर्शयेत्यर्थः॥ ६१॥

[1-]किञ्च वक्ष्यमाणमेवाह[-1]-- अहं भवान् भवच्छरीरकः त्वमेवाहं त्वद्रूप एवाहं त्वं कदाचिदपि न मच्छरीरत्वरहितः। अहं तव सदा आत्मा त्वं तु मम सदा शरीरभूत[2] इत्यर्थः। न च अन्यस्त्वमतो न [3-]त्वं मदन्यः[-3] न मत्सम्बन्धविधुर इत्यर्थः। विचक्ष्व विमर्शय। नौ आवयोः, च्छिद्रं सम्बन्धवैधुर्यं, मनागीषदपि, [4-]जातु कदाचित्[-4] कवयो [5]विद्वांसः, न पश्यन्ति। एवं सम्बन्धनियमकथनेन अपृथक्सिद्धजातिगुणप्रभादिविशेषणविशिष्टव्यक्तिगुणिमण्यादिवज्जीवेश्वरात्मकं वस्तु विशिष्टरूपेणैकमेवेत्युक्तं भवति। [6-]भो इत्यव्ययं सम्बुद्धौ[-6]॥ ६२॥

एतदेव दृष्टान्तेन दर्शयति - **यथेति**। पुरुषं पुरुषाकारमात्मानं स्वम् आदर्शे महत्युपाधौ, चक्षुषि परस्य चक्षुष्यल्पे उपाधौ, द्विधाभूतं वृद्धिभाक्त्वेन ह्रासभाक्त्वेन च [7]द्वेधाभूतं यथाऽवेक्षेत पश्येत् तथा आवयोरप्यन्तरं यथा जातिगुणाद्यपृथक्सिद्धविशेषणविशिष्टं पुरूषाख्यं मांसपिण्डं तत्तद्विशेषणव्युक्तमेकमेव विशिष्टं वस्त्वादर्शचक्षुराद्युपाधिप्रयुक्तवृद्धिह्रासादिगुणविशिष्टमवेक्षेत। एवं शरीरात्मभावेन नियतविशेषणविशेष्यभूतं जीवेश्वरात्मकं विशिष्टमेकमेव वस्तु स्थूलसूक्ष्मशरीरेषु अनुप्रविष्टमुपाधिवशात् नानाभूतमिव पश्यतीत्यर्थः। पुरुषमवेक्षेत इत्यनेन अयमर्थोऽवगम्यते - पुरुषो हि जातिगुणाद्यनेकविशेषणविशिष्टः जातिव्यक्त्योरिव, गुणगुणिनोरिव, प्रभाप्रभावतोरिव, शरीरात्मनोरावयोर्भेद इति भावः। बिम्बप्रतिबिम्बयोरिव जीवेश्वरयोरौपाधिको भेदः न स्वाभाविक इति तु नार्थः। आदर्शचक्षुषोरित्युपाधिद्वित्वकथनादादर्श चक्षुर्गतयोः प्रतिबिम्बयोः बिम्बेन साकम् अभेदेऽपि तयोः परस्परं भेदसद्भावावगमात्। न ह्यादर्शप्रतिबिम्बात् चक्षुः प्रतिबिम्बोऽनन्यः। बिम्बप्रतिबिम्बयोरभेदं वदताप्यवश्यं प्रतिबिम्बानां भेदोऽभ्युपगन्तव्यः। अन्यथा बिम्बप्रतिबिम्बयोरिव तेषु वैलक्षण्यं न प्रतीयेत अभेदसाधकसामग्र्यभावाच्च। न ह्येकप्रतिबिम्बत्वं साधकं प्रतिबिम्बाणां बिम्बावस्थात्वेन तासां भिन्नत्वात्, अत एव हि पिण्डत्वघटत्वकपालत्वाद्यवस्थानां परस्परभेदः[8] एकमृद्द्व्यावस्थात्वमात्रेणाभेदाभ्युपगमः प्रतीतिपराहतः। तस्मात् नात्र बिम्बप्रतिबिम्बयोः औपाधिकभेदप्रतिपादन परोऽयं श्लोकः, किन्तु यथोक्तार्थपर एव। अस्तु वा अत्र बिम्बप्रतिबिम्बयोरेव दृष्टान्तत्वं तथापि तयोर्यत् साधर्म्यं तदेवात्र दृष्टान्तीकृतं, न तु तादात्म्यमपि, अविरुद्धोपयुक्तांशमात्रेण दृष्टान्तसम्भवात्। जीवब्रह्मणोस्तादात्म्यं तु एतत्प्रकरणविरुद्धम्। स्वपरयाथात्म्यज्ञानाभावनिमित्त [9-]देहात्मभ्रम स्वतन्त्रात्म[-9] भ्रमवतः तन्निवृत्तये क्रियमाणे अस्मिन् तत्त्वोपदेशप्रकरणे जीवपरयोः पारमार्थिकसखित्वप्रतिपादनात्। सखित्वं हि

1--1. W omits 2. W °रम् 3. W त्वमन्यः 4--4. W omits 5. W omits विद्वांसः 6--6: W omits 7. T. W द्विधा 8. A. B, T भेदाः 9--9. T omits

पदार्थद्वयनिरूपितम्। न च सखित्वमपि स्त्रीपुंसभावादिवत् औपाधिकमेव अत्र उपदिश्यत इति वक्तुं शक्यम्। तत्सहोपदिष्टानां हंसत्वादीनामपि औपाधिकत्वप्रसङ्गात्। "माया ह्येषा मया सृष्टा" (भा.ग 8-28-61) इति ईश्वरस्य संसारयितृत्वावगमाच्च। न हि सर्वज्ञईश्वरोऽनुन्मत्तः स्वानर्थरूपं संसारं स्वस्मिन्नारोपयतीति युक्तिमत्। किञ्च "येनाग्रे विचकर्थ" (भाग. 4-28-52), "माया ह्येषा मया सृष्टा" (भाग.4-28-61) इति प्रष्टृत्वाक्षिप्तसर्वज्ञत्वादिगुणविशिष्ट परमात्मवाचिनोऽहंशब्दस्य बोधनार्हतोपयोग्यज्ञत्व, संसारित्वविशिष्टजीववाचिनो भवच्छब्दस्य च मुख्यार्थपरित्यागेन चैतन्यमात्रैक्य प्रतिपादनपरत्वमस्वरसमिति दिक्। विस्तरस्तु तत्त्वमस्यादिवाक्यस्य जीवब्रह्मतादात्म्यपरत्वे भाष्योक्तदूषणानुसारेणानुसन्धेयः। स्वपक्षे उपपत्तिरपि तदुक्तरीत्या एव अनुसन्धेया॥ ६३॥

सख्योः संवादमुपसंहरति - **एवमिति**। हंसेन परमात्मना एवं[1] प्रतिबोधितः आवेदितस्वपरयाथात्म्यो, मानसः मनसा सह वर्तमानो जीवः, तदव्यभिचारेण पूर्वं स्वपरयाथात्म्यज्ञानाभावेन नष्टां स्मृतिं पुनराप स्वात्मनो भगवच्छेषतैकरसतामनुसन्दधानो मुक्तो बभूवेति भावः॥ ६८॥

उपाख्यानमुपसंहरति - हे बर्हिष्मन्! एतद्वृत्तान्तम्, अध्यात्ममात्मानमधिकृत्य प्रवृत्तं, पारोक्ष्येणान्यापदेशमुखेन प्रदर्शितमतो न त्वया केवलकथामात्रबुद्धिः कर्तव्येति भावः। पारोक्ष्येण किमर्थमुपदिष्टं तत्राह। यत् यस्मात् विश्वस्य कारणभूतो भगवान् परोक्षप्रियः। "परोक्षप्रिया इव हि देवाः" (एते. 3-3-14) इति श्रुत्या देवानां परोक्षप्रियत्वावगमात् देवतासार्वभौमो भगवान् परोक्षवादेन नितरां तुष्यतीति एवमुक्तमित्यर्थः। इदं श्रोतुरस्मिन् श्रद्धाद्रढिम्ने उक्तम् - परोक्षप्रिया इव हि देवाः इत्यस्य अर्थवादत्वादन्यथा इति। साक्षात्कृतैः श्रवणकीर्तनादिभिः भगवतः तोषाभावप्रसङ्गाच्च। तस्मात् पारोक्ष्यकीर्तनं श्रोतुं बुद्ध्यवतरणार्थमेवेति[2] द्रष्टव्यम्॥ ६५॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां अष्टाविंशोऽध्यायः॥ २८॥

**विज०** प्रारब्धकर्मणा एवंविधफलानुभवार्थं मया मदन्तर्यामिणा हरिणा सृष्टा संकलृप्तैषा माया बन्धकशक्तिरिच्छा वा। सा च अचिन्त्यमहिमेत्याह- यदिति। तर्हि किं तत्त्वज्ञानमिति तद्विविच्याह - हंसमिति। तत्त्वतो नाम गोत्रादिराहित्येन चेतनं हंसं निर्मलं पश्य, आत्मनो मम गतिं त्वां प्रबोध्य गच्छतो मम यात्रां पश्येति वा। अनेन बोध्यबोधकयोः अनुभवसिद्धत्वात् अबाधितो भेद इति ज्ञातव्यम्॥ ६१॥

---

1. W omits एवं 2. A, B, T °धानार्थं

ननु ''कर्माणि विज्ञानमयश्चात्मा परेऽव्यये सर्वएकीभवन्ति तत्त्वमस्यहं ब्रह्मास्मि'' (मुण्ड. 5.3-2-7) इत्यादिश्रुतिभिरैक्यस्य प्रतिपाद्यत्वात् कथं भेदोऽबाधित इति ज्ञायते ? न चेदम् औपचारिकं गुरुशिष्योपदेशत्वात् विप्रलम्भानुपपत्तेः इत्याशङ्क्य जीवसत्ताप्रदत्त्वात् चेतनत्वेन सत्सदृशत्वाच्च अभेदव्यपदेशः। ''तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्'' (ब्र.सू. 2-3-29) इति सूत्रात् ''जीवसत्ताप्रदत्वात्तु सदृशत्वाच्च केशवः। कथ्यते तदभेदेन न तु जीवस्वरूपतः'' (वाराहे) इति प्रमाणविरोधबाहुल्यात् ''यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्'' (बृह. उ. 4-5-15) इति। दूषितत्वाच्चाभेदस्येत्यभिप्रेत्याह- अहमिति। भवानहं, त्वं मत्तोऽन्यो न च, त्वन्तु अहमेवेति विचक्ष्व पश्य। अत्र प्रमाणमाह- नेति। कवयः तत्त्वदर्शिनः, क्वचिन्मनागल्पमपि नावयोः छिद्रमन्तरं पश्यन्ति। ''द्रव्यं कर्मच कालश्च'' (भाग. 2-10-12) इति वाक्यार्थं पश्यन्तोऽस्मदन्तर्यामिणमन्तरेणावयोः सत्तापि नास्ति। किमुत इष्टानिष्टप्राप्ति परिहारलक्षणप्रवृत्तौ शक्तिरित्यतः शून्यदेशीययोः अन्तर्यामिणः तप्तखर्पराग्न्योरिव भेदं पश्यन्तोऽपि न पश्यन्तीत्यभिप्रायः। भवदन्तर्यामी मदन्तर्यामी च अन्यो न भवतिं, किन्तु त्वमेवाहम् एक एवेति जानीहि, त्वयि स्थितस्त्वमित्यसाविति प्रमाणयतां कवीनां दर्शनादिति वा अहं भवान्न, किन्तु त्वमन्यः, अतस्त्वं त्वमेव अहमहमेवेति विचक्ष्व, अन्यथा न पश्य, कुतः? नौ मनाक् छिद्रं कियानेव विशेष इति न पश्यन्ति किन्तु महान्तं भेदं पश्यन्तीति वा॥ ६२॥

जीवसत्ताप्रदत्वात् जीवेनाभेदः परस्येत्यत्र दृष्टान्तमाह - **यथेति**। आदर्शचक्षुषोः प्रतीयमानस्य प्रतिबिम्बस्य सत्तादेर्द्रष्टुर्बिम्बाधीनत्वात् तदेवेदमितिवत् आवयोरन्तरं मत्सत्ताया अप्यस्मात् स्वाम्यधीनत्वात् आवां तदभिन्नाविति व्यवहारः, यथा दर्पणाद्युपाधिष्वेकम्, आत्मानं बहुधा पश्यन्ति तथा आवयोरन्तर्यामिणोरन्तरमिति वा॥ ६३॥

उपसंहरति - **एवमिति**। तद्व्यभिचारेण विषयबुद्धिप्रसङ्गातिशयेन नष्टां तिरोहितां स्मृतिं शास्त्रविषयामापेत्यन्वयः॥ ६४॥

कथा बाह्याध्यात्मपक्षभेदेन निरूप्यते इत्येतत् कथमवगतमिति, तत्राह - **बर्हिष्मन्निति**। परोक्षेणान्यापदेशेन एवं कथने किं कारणं तत्राह- यत्परोक्षेति। ''परोक्षप्रिया इव हि देवाः'' (एते. उ. 3-14) इत्यादिश्रुतिः। अनेनाहं भवान् इत्यादेरपि अस्मदुक्त एवार्थो न प्रातीतिक इत्येतत् सुतरामबोधि॥ ६५॥

इति श्रीमद्भाग ग त्तुर्थस्कन्धे

श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां

टीकायां अष्टाविंशोऽध्यायः॥ २८॥

# एकोनत्रिंशोऽध्यायः

## प्राचीनबर्हिरुवाच

भगवंस्ते वचोऽस्माभिर्न सम्यगवगम्यते।
कवयस्तद्विजानन्ति न वयं कर्ममोहिताः ॥ १ ॥

## नारद उवाच

पुरुषं पुरञ्जनं विद्याद्[1]यद्[2] व्यनक्त्यात्मनः पुरम्।
एकद्वित्रिचतुष्पादं बहुपाद[3]मपादकम् ॥ २ ॥

योऽविज्ञाता[4]हृतस्तस्य पुरुषस्य सखेश्वरः।
यन्न विज्ञायते पु[5]म्भिः नामभिर्वा क्रियागुणैः ॥ ३ ॥

[6]यदा जिघृक्षन् पुरुषः कार्त्स्न्येन प्रकृतेर्गुणान्।
नवद्वारं द्विहस्ता[7]ङ्घ्रि[8]तत्रामनुत साध्विति ॥ ४ ॥

बुद्धिं तु प्रमदां विद्यान्ममाहमिति यत्कृतम्।
यामधिष्ठाय देहेऽस्मिन् पुमान् भुङ्क्तेऽक्षि[9]भिर्गुणान् ॥ ५ ॥

## श्री श्रीधरस्वामिविचचिता भावार्थदीपिका

ऊनत्रिंशे परोक्षार्थव्याख्याने नोपसंहृतम्। स्त्रीसङ्गतो भवस्त्वीशसङ्गान्मुक्तिरि[10]ति स्फुटम्।

**भगवन्निति**। कवयोऽध्यात्मविदः ॥ १ ॥

**पुरुषमिति**। व्यनक्ति लिम्पति चेतनीकरोतीत्यर्थः। यद्वा व्यनक्ति प्रकटयति ततश्च स्वकर्मणा पुरं जनयतीति पुरञ्जनपदं व्याख्यातं भवति। एकद्व्यादयः पादा यस्य ॥ २ ॥

---

1. W °द्यो 2. Ms, W °ना 3. W °मयापदम् 4. M, Ma, Ms °हृय° 5. M, Ma, Ms रूपैः 6. T, V यदाऽजिघृक्षत्
7. B, M, Ma. Ms. V W °ङ्घि° 8. M, Ma पुरं मनुत; Ms, V तत्रामन्यत 9. A, B, G, I, J, T °क्ष° 10. V °रुदीर्यते

**य** इति। अविज्ञातशब्देनाऽऽहूतो व्याहृत उक्तो यः स ईश्वरः। अविज्ञातनामनिरुक्तिः यद्यस्मात् पुम्भिः नामादियोगेन न विज्ञायते॥ ३॥

**यदेति**। तत्र तेषु पुरेषु मध्ये॥ ४॥

**बुद्धिमिति**। [1]अक्षिभिरिन्द्रियैः॥ ५॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एतदध्यात्मं पारोक्ष्येण प्रदर्शितमित्युक्तम्। तत्र अध्यात्मत्वे कथं पुरञ्ज[2]नादि पदव्युत्पत्तिरिति विवित्[3]सया राजा पृच्छति- **भगवन्निति**। हे भगवन्! अध्यात्मविदुत्तमस्य [4]ते तव वचः परोक्षरूपं वाक्यमस्माभिः केवलं देहात्मबुद्धिभिः सम्यक् [5-]नावगम्यते[-5] नावबुध्यते। अध्यात्मविदस्तु त्वद्वचो जानन्ति, [6]कर्मण्येव यज्ञादावे[7]व मोहिताः। यद्वा कर्मणा पुण्यापुण्यादिकर्मणा तिरोहितस्वपरयाथात्म्याः वयं कथं जानीमः?॥ १॥

एवमापृष्टो भगवान्नारदः पुरञ्जनादीनि पदान्यध्यात्मपक्षानुकूलतया व्युत्पादयति - **पुरुषमित्या**दिना। पुरुषं क्षेत्रज्ञं पुरञ्जनं पुरञ्जनशब्दबोध्यं विद्यात्। पुरुषे पुरञ्जनपदप्रवृत्तौ निमित्तमाह- यः पुरुषः आत्मना मनसा सह पुरं शरीरं व्यनक्ति दृढतरं सम्बध्नातीति पुरञ्जनः। पूश्शब्दे उपपदे अञ्जेर्ल्युट्। पूश्शब्दस्तु शरीरे गौण्या वृत्त्या प्रयुज्यते, न ह्यत्र सर्वाणि पदानि मुख्यार्थान्येवेत्याग्रह इति भावः। पुरं विशिनष्टि। एकद्वित्र्यादयः पादा यस्य, बहवः पादा यस्य, न विद्यन्ते पादा यस्य तत्॥ २॥

योऽविज्ञातशब्देनाहृत उक्तः, तस्य पुरञ्जनाख्यस्य पुरुषस्य सखा स ईश्वरः, तस्मिन्नविज्ञातशब्दप्रवृत्तिनिमित्तमाह। यत् यस्मात् पुम्भिर्नामादिभिर्न विज्ञायते इत्यविज्ञातः। यद्यपि हरिविष्ण्वादिनामभिः, जगद्व्यापारादिक्रियाभिः, सत्यज्ञानादिगुणैश्च शास्त्रतो ज्ञायत एव, तथापीयत्तया न ज्ञायते नामक्रियागुणानामानन्त्यादिति भावः। न विज्ञायते इति कर्मणि व्युत्पत्तिः, कर्तरि व्युत्पत्तेरप्युपलक्षणं सा च दर्शिता पुरस्तात्॥ ३॥

यदायं पुरुषः क्षेत्रज्ञः प्रकृतेर्गुणान् ज्ञानकर्मोभयेन्द्रियविषयान् कात्स्न्र्येन अजिघृक्षत् ग्रहीतुमैच्छदनुभवितुमैच्छदित्यर्थः। **तदा** नव द्वाराणि छिद्राणि यस्य, द्वौ हस्तौ पादौ च यस्य, तन्मनुष्यशरीरं साधु समीचीनमित्यमनुत। तिर्यगादिशरीरेषु सर्वेन्द्रियाणामनभिव्यक्तेः सर्वविषयानुभवासम्भवात् मनुष्यशरीरमेव सर्वविषयानुभवयोग्यं मत्वा दैवात्तदुपलभ्य साध्वित्यमनुतेत्यर्थः। अनेन "**सोऽन्वेषमाणः** शरणम्" (भाग० 4-25-11) इत्या[8]दिना, "कोकिलकूजितैः" (भाग० 4-25-19) इत्यन्तं व्याख्यातम्॥ ४॥

---

1. A, J, Va अक्ष० 2. A, B, T omit आदि 3. A, B, T ०त्सायां 4. W omits ते तव 5--5. W omits 6. A, B,s T कर्मस्वेव
7. W omits एव 8. W ०दि

''बुद्धिं तु प्रमदां विद्यात्'' (भाग० 4-29-5) तत्र प्रमदाशब्दप्रवृत्तौ निमित्तमाह। यद्यया बुद्ध्या ममाहमिति कृतं मदः चित्तविकारः अहम्ममाभिमानरूपमदहेतुत्वात् बुद्धिः प्रमदेत्युच्यत इत्यर्थः। किञ्च यां बुद्धिमधिष्ठायाक्षि[1]भिरिन्द्रियैःगुणान् शब्दादीन् [2]विषयानस्मिन् देहे भुङ्क्ते गुणानुभवजन्यमदहेतुत्वाच्च प्रमदा बुद्धिरित्यर्थः॥ ५॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

भक्तिजनितज्ञानमेव हरेः प्रसादजनकं न कर्मादिकं तत्र साधनमित्येतदस्मिन्नध्याये निरूप्यते। तत्रादौ प्राचीनबर्हिः स्वयं विद्वानपि लोकोपकाराय सम्यक् पृच्छति - **भगवन्निति**। नारदस्य हर्षार्थं भगवन्निति सम्बोधनमस्माभिरस्मादृशैः प्रवक्तृबोधकशक्त्य-भावपरिहारार्थं सम्यगिति। तत्र किं कारणम्? तत्राह- न वयमिति। कवीनां कर्माभावेन विविदिषन्ति यज्ञेन दानेनेत्यादि विधानं व्यर्थमितीयं शङ्का कवय इत्यनेन पर्यहारि, कर्मणा शुद्धान्तः करणस्य हर्युपासनासाध्यप्रकारेणातिक्रान्तदर्शनस्य कवित्वात्॥ १॥

व्यनक्तीत्यनेन पुरञ्जनपदं निरुक्तं, पुरस्य देहस्याञ्जनं यस्मात् स पुरञ्जन इत्यर्थः। 'अञ्जू-व्यक्तीकरणे' इति धातुः, पुरञ्जनयति प्रकाशयतीति वा पुरञ्जनः, 'जनी-प्रादुर्भावे' इति धातुः। पुरमपिनैकविधमित्याह- एकेति। एकपदादिजातिजन्तुशरीरापेक्षया पिशाचशरीरमपेक्ष्य वा द्वौ पादौ मनुष्यादेः, त्रयः पादा ज्वरादेः, चत्वारः पादाः पश्वादेः, बहवः पादाः सहस्रपादादेः, अपादकं सर्पादि॥ २॥

ननु परमाणोरप्यविज्ञाततत्वात् किं विशिष्योच्यत इति तत्राह- यन्नेति। अनेन भक्तानुग्रहार्थं नामरूपादिग्रहणं न स्वतोऽस्ति, न तथा परमाणोः शुक्लभा[3]सुरमपाकजमित्यादि निरूपितत्वादित्यादि प्रदर्शितम्॥ ३॥

यदा प्रकृतेर्गुणान् जिघृक्षन् स्रक्चन्दनादिविषयानादातुमिच्छति तदा नवद्वारादिलक्षणं साधु तत्साधनमिति न्यरूपयत्॥ ४॥

अधिष्ठाय ''खमक्षमिन्द्रियं स्रोतः'' (हला. को. 2-380) इत्यभिधानादक्षभिरिन्द्रियैः चक्षुषा रूपं दृष्ट्वाऽनन्तरमन्येन्द्रिय प्रवृत्तिरिति चक्षुषः प्राधान्यद्योतनायाक्षैरित्युक्तिं विहायाक्षिरिति ; गुणान् विषयान्॥ ५॥

**सखाय इन्द्रिय[4]गणो ज्ञानं कर्म च यत्कृतम्।**
**सख्यस्तद्वृत्तयः प्राणः पञ्चवृत्तिर्यथोरगः॥ ६॥**

---

1. A. T $^{0}$क्ष$^{0}$ 2. W omits विषयान् 3. A. B $^{0}$स्व$^{0}$ 4. A. B, G, I, J. T गणाः; Ms. V गुणाः

**बृहद्बलं[1] मनो विद्यादुभयेन्द्रियनायकम् ।**
**पाञ्चालाः[2] पञ्च विषया यन्मध्ये नवखं पुरम् ।। ७ ।।**

**अक्षिणी नासिके कर्णौ मुखं शिश्नगुदाविति ।**
**द्वे द्वे द्वारौ बहिर्याति यस्तदिन्द्रियसंयुतः[3] ।। ८ ।।**

**अक्षिणी नासिके आस्यमिति[4] पञ्च पुरस्कृताः[5] ।**
**दक्षिणा दक्षिणः कर्ण उत्तरा चोत्तरः स्मृतः ।। ९ ।।**

**पश्चिमे इत्यधोद्वारौ गुदशिश्नाविहोदितौ[6][7] ।**
**खद्योताऽऽविर्मुखी चात्र नेत्रे एकत्र निर्मिते ।। १० ।।**

**श्रीध० सखाय** इति । पञ्चवृत्तित्वात् पञ्चशिराः सर्प इव प्राणः ।। ६ ।।

एकादशमहाभट इत्यनेन एकादशो महाभटो नायक इत्युक्तं सन्दर्शयति - **बृहदिति** । बृहत् बलं यस्य, तन्मनः नव खानि द्वाराणि यस्य तत् ।। ७ ।।

द्युमत्सख इत्यादेरर्थं संक्षेपेणाह - **अक्षिणी** इति । यस्तदिन्द्रियसंयुतः स आत्मा ताभिर्द्वार्भिर्बहिर्यातीति ।। ८ ।।

**अक्षिणी** इति । पुरः पूर्वभागे कृताः ।। ९, १० ।।

**वीर०** भृत्यैर्दशभिरायान्तीमित्यर्थस्यार्थमाह[8] - **सखाय** इति । इन्द्रियगणः[9] ज्ञानकर्मोभयेन्द्रियगणः[10] सखायः भृत्याः[11] । तत्र सखिशब्दप्रवृत्तिनिमित्तमाह । तद्वृत्तय इन्द्रियवृत्तयः, ज्ञानं शब्दादिविषयकं ज्ञानं, व्यवहृत्यादानगत्यादिरूपं कर्म च बुद्धिसाध्यम् । यत्कृतं येनेन्द्रियगणेन कृतं सह प्रवृत्तिमत्त्वेऽन्योन्यापेक्षत्वरूपं सखित्वमत्र विवक्षितम् । एकैकशतनायकैरित्यस्यार्थमाह - [12- सख्य इति -12]। तद्वृत्तयः इन्द्रियवृत्तयः सख्यः भवन्ति[13] । पञ्चशीर्षाहिनेत्यस्यार्थमाह- प्राण इति । पञ्चवृत्तित्वात् पञ्चशिराः सर्प इव प्राणः ।। ६ ।।

अन्यत्सुगममित्यभिप्रेत्य एकादशमहाभटा इत्यनेनोक्तमेकादशमहाभटमाह । स्वविषयेषु प्रसह्य प्रवर्तकत्वात् बृहद्बलं तत्

---

1. M, Ma, Ms °द्वनं  2. A, B, G, I, J, M, Ma, T प°  3. M, Ma, Ms तत्त°  4. V चा°  5. A, B, G, I, J, T, W पुरः कृताः ।
6. A, B, G, I, J, T गुदं शिश्नमिहोच्यते  7. M, Ma, Ms °ते  8. W omits आयान्तीम्  9. A, T गणाः  10. A, T गणाः  11. W omits भृत्याः
12--12. W omits  13. W omits भवन्ति

अत एव ज्ञानकर्मोभयेन्द्रियाणां नायकं मन एकादशो महाभट इत्यर्थः । अत्र प्रकरणे पाञ्चालशब्दो बहुष्वर्थेषु प्रयुक्तः, दक्षिणपाञ्चालमुत्तरपाञ्चालमित्यत्र शास्त्रे, स पाञ्चालपतिरित्यत्रेन्द्रियेषु, पौरञ्जनो वंशः पाञ्चालेष्विति विषयेषु । तत्र मुख्यार्थमाह - पञ्चशब्दादयो विषयाः पञ्चालाः, पञ्च्यन्ते व्यक्ती क्रियन्ते इति व्युत्पत्तेः, तत्सम्बन्धिषु लाक्षणिकप्रयोगः अनेकार्थकल्पनायोगादिति भावः । सप्तोपरिकृता द्वार इत्यादेरर्थमाह । यत्पुरं मध्ये यस्य पुरस्य मध्ये, नवानां खानां[1] द्वाराणां समाहारः नवखमक्षिनासिकादिरूपमित्यर्थः । यद्वा पुरं मध्ये यन्नवखं यानि नव द्वाराणि तत्र द्वे अक्षिणी द्वे नासिके द्वौ कर्णौ शिश्नगुदौ द्वौ इत्येवं द्वे द्वे द्वारौ मुखमेकमिति मिलित्वा नवखमित्यन्वयः । द्युमत्सख इत्यादेरर्थं संक्षेपेणाह । यस्तदिन्द्रियसंयुतः अक्ष्यादिच्छिद्रगतेन्द्रिययुक्तः स आत्मा ताभिर्द्वार्भिर्बहिर्याति बहिष्ठान् शब्दादिविषयान् अनुभवति ॥ ७, ८ ॥

पञ्चद्वारस्तु पौरस्त्या इत्यस्यार्थमाह - अक्षिणी, नासिके, आस्यं, मुखमित्येवं पञ्चद्वारः पूर्वभागे कृताः । अत्र व्याख्यायां क्रमो न विवक्षितः । दक्षिणोत्तरद्वारावाह - दक्षिणो[2] दक्षिणः कर्णः । अत्र दक्षिणेति प्रतीकोपादानं दक्षिणः कर्ण इति तस्य व्याख्यानम्, एवमग्रेऽपि ॥ ९ ॥

पश्चिमे द्वे इत्युक्ते पश्चिमे द्वारावाह- पश्चिम इतीति । तत्र पश्चिमे इति प्रतीकग्रहणं तस्याधो द्वाराविति व्याख्यानम् । ते चाधोद्वारौ के ? इत्यत्राह गुदशिश्नाविहोदिताविति । इहास्मिन् प्रकरणे उदितौ कथितौ । खद्योताविर्मुखीत्यादेरर्थमाह- खद्योतेति । एकत्र निर्मिते लग्ने ये खद्योताविर्मुखीशब्दविवक्षिते द्वारौ ते अत्र प्रकरणे नेत्रे इत्यर्थः । अत्र नेत्र इति व्याख्यानं शेषः प्रतीकः ॥ १० ॥

**विज०** यत् येनेन्द्रियगणेन तेषामिन्द्रियाणां विषयेषु वृत्तयो व्यापारः पुररक्षणे यथोरगो निरूपितस्तथा देशरक्षणे, ''उरस्तु वक्षसि श्रेष्ठे'' (वैज.को-6-3-3) इत्यभिधानात् उरः श्रेष्ठश्च गमको ब्रह्मप्रापकश्चेत्युरगो मुख्यप्राणः श्रेष्ठश्च स एतान् ब्रह्म गमयतीति सूत्रश्रुत्योरयमर्थः । अन्यत्र उरसा वक्षसा गच्छतीत्युरगः सर्पः, पञ्चधा वृत्तिर्यस्य स पञ्चवृत्तिः, विस्तृतव्यापारो वा । फणोत्क्षेपणं, फणाया भूमावाक्षेपणं, मण्डलीकरणमाकुञ्चनं, मण्डलमोक्षः प्रसारणं दीर्घीभूय गमनमिति पञ्च (विधा) वृत्तिः नागस्य ॥ ६ ॥

''मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति'' (ऐत. उ. 1-1-2) इति श्रुतेः ज्ञानकर्मेन्द्रियाणां विषयं प्रति नेतृत्वादुभयेन्द्रियनायकमित्युक्तम् । एषां विषयाणां मध्ये नव खानि द्वारलक्षणानि छिद्राणि यस्य तत्तथोक्तं, तत्पुरं शरीरम् ॥ ७ ॥

तत्तदिन्द्रियसंयुतः अक्षादिद्वारेण बहिर्विषयबुभुक्षो सति, नेत्रादीन्द्रियेण विषयं भुङ्क्त इत्यर्थः ॥ ८ ॥

1. A, T omit खानां 2. A, T omit दक्षिण:

अक्षिणी इत्यादिना द्वे द्वे द्वार इत्युक्तं तद्विवेचयति अक्षिणी इति ॥ ९ ॥

पश्चिमे द्वे इत्युक्तं तत्राह - **पश्चिम** इति । खद्योतेत्याद्युक्तं विवृणोति - खद्योतेति ॥ १० ॥

**रूपं विभ्राजितं ताभ्यां विचष्टे चक्षुषेश्वरः ।**
**नलिनी नालिनी नासे गन्धः सौरभ उच्यते[1] ॥ ११ ॥**

**घ्राणोऽवधूतो मुख्यास्यं विपणो वाग्रसविद्रसः[2] ।**
**आपणो व्यवहारोऽत्र चित्रमन्धो बहूदनम् ॥ १२ ॥**

**पितृहूर्[3]दक्षिणः कर्ण उत्तरो देवहूः[4] स्मृतः ।**
**संवत्सरश्चण्डवेगः कालो येनोपलक्षितः ॥ १३ ॥**

**तस्याहानीह गन्धर्वा गन्धर्व्यो रात्रयः स्मृताः ।**
**हरन्त्यायुः परिक्रान्त्या[5] षष्ट्युत्तरशतत्रयम् ॥ १४ ॥**

**कालकन्या जरा साक्षाल्लोकस्तां नाभिनन्दति ।**
**स्वसारं जगृहे मृत्युः क्षयाय यवनेश्वरः ॥ १५ ॥**

**श्रीध० रूपमिति** । खद्योतेति, नेत्रे इति, रूपमिति, चक्षुषेति खद्योतादीनां व्याख्यानम् । शेषेऽनुवादः । ईश्वरः पुरञ्जनः । **नासे** इति व्याख्या ॥ ११ ॥

**घ्राण** इति । अवधुनोतीति अवधूतो वायुस्तदात्मकेनोच्छ्वासेन सहैकस्थानत्वात् घ्राणोऽवधूतः । आस्यमिति व्याख्या । "रसज्ञविपणान्वितः" (भाग. 4-25-49) इत्यत्र रसज्ञशब्दनिर्दिष्टस्य रसविदित्यनुवादः । रस इति व्याख्या रसनेन्द्रियमित्यर्थः । विपणो वाग्रसविद्रस इत्येव पाठः । आर्षत्वान्न दोषः । [6-]अक्षराधिक्यम्[-6] । अन्धोऽन्नम् ॥ १२, १३ ॥

**तस्येति** । [7]परिक्रान्त्या परिभ्रमणेन ॥ १४ ॥

**कालकन्येति** । स्वसारमिति । भगिनीत्वेन जगृहे लोकानां क्षयाय ॥ १५ ॥

---

1. V °मु  2. M, Ma, Ms रस°  3. M, Ma °भू°  4. M, Ma भूः  5. V परीवृत्त्या  6. A, B, J, Va omit  7. V परीवृत्त्या

**वीर०** एवं विभ्राजितमित्यस्य व्याख्यानं **रूपमिति**। शेषः प्रतीकः। ईश्वरः पुरञ्जनः। खद्योतादिशब्दास्तु गौणाः, अतोऽत्र न प्रवृत्तिनिमित्तमुक्तम्। नासे गन्ध इति च व्याख्यानम्। शेषः प्रतीकः॥ ११॥

घ्राण इति व्याख्यानमवधूत इति प्रतीकः। मुख्येति प्रतीकस्तस्य व्याख्यानमास्यमिति। रसज्ञविपणौ व्याचष्टेविपणो वागिति। विपण इति प्रतीकः वागिन्द्रियमिति व्याख्या। रसविदित्यर्थतः प्रतीकः रसज्ञविपणान्वित इति मूलात्। रसः रसनेन्द्रियमिति व्याख्यानम्। आपणबहूदनौ व्याचष्टे। आपण इति प्रतीकः। व्यवहारः वाग्व्यवहार इति व्याख्या। बहूदनमिति प्रतीकः। चित्रमन्धः अन्नमिति व्याख्या॥ १२॥

पितृहूरित्यनुवादः दक्षिणकर्णाविति व्याख्यातम्। दक्षिणा दक्षिणः कर्ण इत्यनेन दक्षिणैका तथोत्तरेति व्याख्यातम्। पितृहूर्दक्षिणः कर्ण इत्यनेन तु पितृहूर्नाम पुर्या द्वाः, देवहूर्नाम पुर्या द्वारित्युक्तगुणनामविषयौ दक्षिणोत्तरकर्णावेवोच्यत इति भेदः। क्रममनादृत्य तृतीयाध्यायोक्तचण्डवेगादिपदार्थानाह- सार्धैस्त्रिभिः। चण्डवेग इति प्रतीकः संवत्सर इति विवरणम्। तत्र तत्प्रवृत्तौ निमित्तमाह- कालः पुरुषायुषरूपः[1] कालः येन संवत्सरेण चक्रवत्तूर्णं भ्रमतोपलक्षितः ज्ञापितः परिच्छिन्नः चक्रवत्तूर्णं वेगेन पुरुषायुषस्य परिच्छेदकत्वात् चण्डवेग इत्युच्यत इत्यर्थः॥ १३॥

तस्य चण्डवेगस्य सम्बन्धिनो गन्धर्वा गन्धर्व्यश्च यथाक्रमं अहानि रात्रयश्च स्मृता इत्यर्थः। तत्र गन्धर्व पद[2]प्रवृत्तौ निमित्तमाह। यतः षष्ट्युत्तरशतत्रयमहानि रात्रयश्च परिक्रान्त्या परिवर्तनेन गन्धर्ववत् परोक्षेपणः आयुः पुरुषायुषं हरन्ति, अतो गन्धर्वगुणयोगात् तत्पदबोध्या इत्यर्थः॥ १४॥

कालकन्येत्यस्य व्याख्या **जरेति**। कालस्य पुरुषायुषं हरतः दुहितृवज्जरायाः प्रीत्यावहत्वात्सा कालदुहितेत्युच्यते। त्रिलोक्यां वरमिच्छन्तीत्यादेः। प्रज्वारस्त्वां प्रणेष्यतीत्यस्य सङ्ग्रहेणार्थमाह - लोकस्तां नाभिनन्दतीति। प्रज्वारोऽयं ममेत्यस्यार्थः स्वसारमिति सार्धेन, क्षयाय लोकस्येति शेषः॥ १५॥

**विज०** नलिन्याद्याह- नलिनीति॥ ११॥

अवधूतमाह- **घ्राण** इति। "मुख्या नाम पुरस्ताद्वा" (भाग.4-25-49) इत्यस्यार्थमाह- मुख्येति। या मुख्या नाम द्वाः आस्यं, "रसज्ञविपणान्वित' इत्येतदाह विपण इति। विपणो वागिन्द्रियं, रसवित् रसज्ञः, रसो रसनेन्द्रियम्, आपणं व्याचष्टे- आपण इति। चित्रमन्ध इत्यादौ बहूदनमित्यस्य विविधौदनः॥ १२॥

---

1. T omits रूपः 2. A, B, T omit पद

येन संवत्सरेण द्विपरार्धायुर्लक्षणः कालः ॥ १३ ॥

परिक्रान्त्या परिवृत्या पुनः पुनरावर्तनेनेत्यर्थः ॥ १४ ॥

क्षयाय, जगत इति शेषः ॥ १५ ॥

**आधयो व्याधयस्तस्य सैनिका यवनाः[1] खलाः ।**
**भूतोपसर्गा[2] अरयः प्रज्वारो[3] विविधो ज्वरः ॥ १६ ॥**

**प्रवृत्तं च निवृत्तं च शास्त्रं[4] पाञ्चालसंज्ञितम् ।**
**पितृयानं देवयानं श्रोत्रा[5]च्छ्रुतधराद् व्रजेत् ॥ १७ ॥**

**आसुरी[6] मेढ्रमर्वाग्द्वाः व्यवायो ग्रामिणां रतिः ।**
**उपस्थो दुर्मदः प्रोक्तो निर्ऋतिर्गुद उच्यते ॥ १८ ॥**

**वैशसं[7] नारकं पायुर्लुब्धकोऽन्धौ तु मे श्रृणु ।**
**[8]हस्तपादौ पुमांस्ताभ्यां युक्तो याति करोति च ॥ १९ ॥**

**अन्तःपुरं च हृदयं विषूचि[9]र्मन उच्यते ।**
**तत्र मोहं प्रसादं वा हर्षं[10] प्राप्नोति तद्गुणैः ॥ २० ॥**

**श्रीध० आधय** इति । चराः सञ्चारिणः भूतानामुपसर्गे पीडायामाशु शीघ्रो मृत्युहेतू रयो वेगो यस्य, प्रज्वार इति प्रज्वारशब्दस्य व्याख्या ।[11] अरय इति । पाठान्तरे भूतकृता[12] उपसर्गाः अरयः, अनेन च अरिभिरुपरुद्ध[13] इत्यरिपदं व्याख्यातम् । द्विविधः शीतोष्णरूपेण[14] [15]प्रवेशनिर्गमभेदात् ॥१६,१७॥

**आसुरीति** । ग्रामकमित्यस्यानुवादो ग्रामिणां रतिरिति, तस्य व्याख्या व्यवाय इति ॥ १८,१९ ॥

**अन्तःपुरमिति** । विषूचीनपदार्थानुवादो विषूचिरिति । तद्गुणैर्मनोगुणैः तमस्सत्वरजोभिः ॥ २० ॥

---

1. A, B, G, I, J, T, V चराः 2. A, B, G, I, J, T, V ०र्गाशु रयः 3. A, B, G, I, J, T, V द्वि० 4. A, B, G, I, J, V प० 5. M, Ma, Ms श्रोत्रं श्रुतधरो व्रजेत् । 6. M, Ma, Ms महेनार्थं द्वाः 7. W न० 8. W पाणि 9. Ms, V ची० 10. Ms वा० 11. B, J, V, Va omit अरय इति । 12. A, B, J, Va omit उपसर्गाः 13. V omits अरि 14. V भेदेन 15. V omits निर्गम

**वीर०** भीमाः सैनिका यस्येति, बहुव्रीह्यर्थं प्रत्युपसर्जनीभूत [1]भीमसैनिकानाह। आधयः मनःपीडाः व्याधयो देहपीडाः [2-]तस्य भयनाम्नः सैनिकाः एते भूतानामुपसर्गाश्च, खला दुष्टाः यवनाः[-2] दुर्यवनवद्विधंस्रत्वाद्यवनाः अतीव दुःखावहत्वादरयः। उपसर्गाः सुखदुःखरागद्वेषभयाभिमानप्रमादोन्मादशोकमोहलोभमात्सर्येर्ष्यावमानक्षुत्पिपासाधिव्याधिजन्मजरामरणादयः। तत्राधिव्याधीनां भीमसैनिकत्वरूपणात् मृत्योस्तस्येति प्राधान्येन निर्देशात् तद्व्यतिरिक्तपर उपसर्गशब्दः। प्रज्वारपदार्थमाह विविधो ज्वर इति॥ १६॥

एवं क्रममनादृत्य तृतीयाध्यायस्थपदानि व्याख्याय सिंहावलोकनन्यायेन पुनरेतदध्यायस्थपदान्येवावशिष्टानि व्याख्येयानि व्याचष्टे- **प्रवृत्तं चेति**। दक्षिणपाञ्चालमुत्तरपाञ्चालमित्युक्तपाञ्चाल शब्दार्थमाह। प्रवृत्तं प्रवर्तकं, कर्तरि क्तः, त्रिवर्गतत्साधक-स्वरूपावबोधनेन प्रवर्तकं शास्त्रं प्रवृत्तमित्युच्यते। निवृत्तं, निवर्तकं त्रिवर्गतत्साधनेभ्यस्तन्निवृत्तं त्रिवर्गस्यास्थिर फलत्वोपदेशपूर्वकं ततो निवृत्याऽनन्तस्थिरफलब्रह्मोपासनतत्स्वरूपरूपगुणादिप्रकाशकं शास्त्रं निवृत्तमित्युच्यते। तदेवं शास्त्रद्वयं पाञ्चालसं[3]ज्ञितमित्यर्थः। पञ्चते व्यक्तीकरोति त्रिवर्गतत्साधनतन्निवृत्तीः इति व्युत्पत्तेः। एवं पाञ्चालशब्दस्य प्रवृत्तिनिवृत्त्यात्मक शास्त्रद्वयपरत्वं सामान्येनाभिधाय तस्य दक्षिणोत्तराभ्यां विशेषितस्य प्रवृत्ते निवृत्ते च क्रमेण प्रवृत्तौ निमित्तमाह पितृयानमिति। पितरो हि दाक्षिणात्याः तान् यान्त्यनेनेति पितृयानं प्रवृत्तशास्त्रोदितकर्मणा दाक्षिणात्यान् पितृनाराध्य तान् प्राप्नुवन्तीति दाक्षिणात्यपितृप्राप्ति साधनप्रकाशकत्वात् पितृयानं शास्त्रम्, दक्षिणपाञ्चालमित्युच्यते। एवं देवयानमुत्तरपाञ्चालमिति, श्रुतधरान्वित इत्युक्तश्रुतधरपदार्थमाह- श्रोत्रादिति। श्रोत्रेन्द्रियात् श्रुतधरादिति प्रतीक । श्रोत्रादिति व्याख्यानं, तत्रान्वित इत्युक्तोऽन्वयः, किं रूपं इति विवित्सायां हेतुत्वेनेति द्योतनाय हेतुपञ्चमी प्रयुक्ता , किं प्रति हेतुत्वमिति विवित्साशान्तये व्रजेदित्युक्तं, क्षेत्रज्ञ इति शेषः। व्रज-गतौ सर्वे गत्यर्था ज्ञानार्था इति न्यायेन पितृयानदेवयानाऽपर पर्यायि दक्षिणोत्तरपाञ्चाले शास्त्रे श्रोत्रेन्द्रियेण साधनरूपेण हेतुना अवगच्छति क्षेत्रज्ञ इत्यर्थः॥ १७॥

"आसुरी नाम पश्चाद्वाः" (भाग. 4-25-52) इत्यस्यार्थमाह - **आसुरी मेढ्रमिति**। आसुरीति प्रतीकः, मेढ्रमिति व्याख्या, पश्चादित्यस्य व्याख्या अर्वागिति, आसुरपदप्रवृत्तिनिमित्तं तु उक्तं पुरस्तादत्र अनुक्तिस्तु स्पष्टत्वात्। ग्राम्यकमित्यर्थतोऽनुवदति, ग्रामिणां रतिः तस्य, व्याख्या व्यवाय इति, मैथुनमित्यर्थः। दुर्मदशब्दानुवादेन तदर्थमाह उपस्थ इति। [4-]निर्ऋतिर्नामेत्यस्यार्थमाह[-4]। निर्ऋतिरिति प्रतीकः, गुद इति व्याख्या॥ १८॥

वैशसशब्दानुवादेन तदर्थमाह- **वैशसं नारकमिति**। नरके भवं नारकं, दुःखमित्यर्थः। लुब्धक इति प्रतीकः, पायुरिति व्याख्या। अन्धावमीषामित्यस्यार्थमाह - अन्धौ त्विति। मे मत्तः अन्धशब्दार्थौ श्रृणु पाणिपादान्धौ इति प्रतीकः, पाणिपादाविति व्याख्या, जातिपरोऽयं निर्देशः पाणी पादौ चेति विवक्षितोऽर्थः। अन्धपदप्रवृत्तिनिमित्तं तु निर्वाक्पेशस्करत्वं पूर्वमेवोक्तं शेषोऽनुवादः॥ १९॥

---

1. T omits भीम 2--2. W omits 3. A, B, T ॰ज्ञक॰ 4--4. W omits

स यर्हि इत्यस्यार्थमाह - **अन्तः पुरमिति** । अन्तःपुरमित्यनुवादः, हृदयमिति व्याख्या विषूचीनमित्यस्यार्थतो[1]ऽनूद्यते विषूचीरिति मन इति तदर्थः, शेषोऽनुवादः, [2-]तद्गुणैः सङ्कल्पविकल्पादिभिः[-2] ॥ २० ॥

**विज०** भूतोपसर्गाः ग्रहोपद्रवाः ॥ १६ ॥

पाञ्चालशब्दस्यार्थान्तरमाह - **प्रवृत्तमिति** । श्रुतधरेत्यस्य श्रोत्रमिति, तेनोत्क्रान्तः पितृयानादिमार्गं व्रजति ॥ १७ ॥

आसुर्याः कृत्यमाह - मेहनार्थमिति । मेहनं, पुरीषोत्सर्जनं, ग्रामिणां रतिर्मैथुनम् ॥ १८, १९ ॥

तद्गुणैः मनोगुणैर्बुद्धिगुणैर्वा ॥ २० ॥

**[3]यथा यथा विक्रियते गुणाक्तो विकरोति वा ।**
**[4]तथा तथोपद्रष्टाऽऽत्मा तद्वृत्ती[5]रनुकार्यते ॥ २१ ॥**

**देहो रथस्त्विन्द्रियाश्वः संवत्सर[6]रयोऽगतिः ।**
**द्विकर्मचक्रस्त्रिगुणध्वजः पञ्चा[7]ऽसुबन्धुरः ॥ २२ ॥**

**मनोरश्मिर्बुद्धिसूतो हृन्नीडो द्वन्द्वकूबरः ।**
**पञ्चेन्द्रियार्थप्रक्षेपः सप्तधातु वरूथकः ॥ २३ ॥**

**[8]आकूतिर्विक्रमो बाह्यो मृगतृष्णां प्रधावति ।**
**एकादशेन्द्रियचमूः पञ्चसूनाविनोदकृत् ॥ २४ ॥**

**एवं बहुविधैर्दुः[9]खैर्दैवभूतात्मसम्भवैः ।**
**क्लिश्यमानः शतं [10]वर्षं देहे देही तमोवृतः ॥ २५ ॥**

**श्रीध०** ''महिषी यद्यदीहेत'' (भाग. 4-25-56) इत्यादेः अर्थं सङ्गृह्याह - **यथेति** । यथा यथा बुद्धिः स्वप्ने विक्रियते, जाग्रति विकरोति वा, इन्द्रियाणि परिणमयति तस्या गुणैः अक्तो लिप्तः आत्मा तथा तथा तस्या वृत्तीर्दर्शनस्पर्शनाद्याः केवलमुपद्रष्टैव सन् बलादनुकार्यते ॥ २१ ॥

---

1. A, B, T °स्यार्थोऽ° 2--2. W omits 3. W यदा यदा 4. W तदा तदा 5. M, Ma, Ms °त्तिरिति कीर्त्यते 6. M, Ma, Ms वयो गतिः; V, W रयो गतिः 7. W °न° 8. V आसुरी वि° 9. B, J, V, W °र्दै° 10. V वर्षान्

आशुगमित्येतद्व्याचष्टे - **देह** इति। संवत्सरस्येवाप्रतिहतो रयो वेगः प्रतीतो यस्य स संवत्सररयः, वस्तुतस्त्वगतिः स्वप्नशरीरादेर्बुद्धावेव वृत्तित्वेन[1] देशान्तरगत्यभावात्। पाठान्तरे संवत्सरश्च तत्कृतं वयश्च ताभ्यां गतिर्यस्येति। द्वीषमित्यस्य व्याख्या [2]नारदेन न कृता[2]। द्विचक्रमित्यस्य व्याख्या द्विकर्मचक्रः। त्रिगुणध्वज इति त्रिवेणुपदव्याख्या॥ २२॥

**मन** इति। पञ्चप्रहरणमित्येतद्व्याचष्टे - पञ्चेन्द्रियार्थप्रक्षेप इति॥ २३॥

**आकूतिरिति**। पञ्चेन्द्रियैः [3]सूनाविनोदमिव हिंसाविनोदमिव अन्यायेन[3] विषयसेवां करोतीति पञ्चसूनाविनोदकृत्। अनेन ''चचार मृगयां तत्र'' (भाग. 4-26-4) इत्यादि व्याख्यातम्॥ २४॥

एवं परोक्षत्वेनोक्तमर्थं व्याख्याय सर्वकथातात्पर्यमाह - **एवमित्यादि** विरमक्रमेणेत्यन्तेन। आधिदैविकादिभिर्दुःखैः क्लिश्यमानो ममाहमिति देहे शतं वर्षाणि शेते वर्तत इति द्वयोरन्वयः॥ २५॥

**वीर०** एवं कर्मस्वित्यादेः सङ्ग्रहेणार्थमाह - **यदेति**। यदा स्वप्ने विक्रियते, कर्मणि लकारः, बुद्धिरिति शेषः। यदा च जाग्रति विकरोतीन्द्रियाणि परिणमयति, तदा तदा स्वप्नजाग्रदवस्थयोस्तस्या गुणैः अक्तो-लिप्त आत्मा स्वभावतः उपद्रष्टापि तस्याः वृत्ती दर्शनश्रवणाद्याः प्रत्यनुकार्यते [4]बलादनुवर्त्यते[4]॥ २१॥

एवं प्रथमाध्यायस्थपदानि व्याख्यातानि अथ[5] द्वितीयाध्यायस्थ पदानि व्याचष्टे - देह इति त्रिभिः। यो रथ उक्तः स देह , ये चाश्वे उक्तास्ते इन्द्रियरूपा एवाश्वाः, आशुगमित्यत्र विवक्षिता गतिः संवत्सररयः संवत्सरवेगतुल्या तूर्णप्रतिपत्तिः, स्वाप्नदेहप्रतिपत्तिर्हि[6] तत्कालमात्रावसायित्वेनातितूर्णात्, द्वे पुण्यापुण्यरूपे कर्मणी चक्रे यस्य सः, पुण्यापुण्यकर्मणी एव द्विचक्रमिति चक्रशब्देन विवक्षिते इत्यर्थः। त्रिवेणुमित्यत्र विवक्षिता वेणवो ध्वजाः , सत्वरजस्तमोगुणा इत्यर्थः। पञ्च अनाः प्राणाः ''एतदनमनग्नं कुरुते'' (बृह.उ. 6-1-14) इति श्रुतेः। बन्धुरा बन्धनानि यस्य, बन्धुरत्वेन विवक्षिताः पञ्च प्राणा इत्यर्थः। पञ्चासुबन्धुर इत्यपपाठ व्याख्यायां विशेषानवगमात्॥ २२॥

रश्मिः प्रग्रहत्वेन यो विवक्षितः सः, मनः यः सूत उक्तः, स बुद्धिः यन्नीडं रथिन उपवेशनस्थानं, तद्धृत् हृदयस्थानं, द्वन्द्वं शोकमोहौ, कूबरं युगबन्धनस्थानं, यस्य, द्विकूबरमित्युक्तौ द्वौ पदार्थौ द्वन्द्वात्मकशोकमोहावित्यर्थः। पञ्चप्रहरणमित्युक्तानि पञ्चप्रहरणानि अनुभाव्याः पदार्थाः, पञ्चेन्द्रियार्थाः शब्दादय इत्यर्थः। पञ्चेन्द्रियार्थाः प्रक्षेपा यस्येति बहुव्रीहिः। सप्तधातवः वरूधाः स्वर्णाद्यावरणानि यस्य, सप्तवरूधमित्यत्र वरूधत्वेन रूपिताः सप्त पदार्थाः सप्त धातव इत्यर्थः॥ २३॥

---

1. A, B, J, Va विवृतत्वेन 2--2. V omits 3--3. B, J, Va सूनाविनोदमिव अन्यायेन; V सूना हिंसा तया 4--4. W omits 5. A, T अद्य
6. A, T स्वप्न

पञ्च विक्रममित्यत्र विक्रमत्वेन गतिप्रकारत्वेन विवक्षिता आकूतिः, पञ्च कर्मेन्द्रियाणीत्यर्थः । बाह्यः बहिष्ठविषयासक्तः एकादशेन्द्रियाण्येव चमूः सेना यस्य स, पञ्चसूना हिंसा एव विनोदस्तं करोतीति तथा, मृगतृष्णां मरीचिकावत्सुखाभासरूपविषयानुभूतिं करोतीत्यर्थः । अत्र "स एकदा महेष्वासो रथं पञ्चाश्वमाशुगम्" (भाग. 4-26-1) इत्यादीनां दशानां श्लोकानां स्वप्नावस्थापरत्वेन पूर्वैर्व्याख्यातत्वादस्माभिरपि स्वप्नावस्थापरत्वेनैव व्याख्याताः । तद्व्याख्यारूपमिदं "देहो रथस्त्विन्द्रियाश्वाः" (भाग. 4-29-18) इति श्लोकत्रयं च तदनुरोधेन व्याख्यातम् । वस्तुतस्तु, दशश्लोकी[1] जाग्रद्देहतद्व्यापार परत्वेनैव व्याख्येया[2], व्याख्यानस्वारस्यात् । व्याख्याने हि संवत्सररयो गतिरित्युक्तं, न हि स्वाप्नदेहस्य संवत्सरवेगात्मकगतिः सम्भवति, तस्य तत्कालमात्रावसायित्वात्तस्य तत्सदृशप्रतीतिमात्रपरत्वे स्वारस्यमेकादशेन्द्रियचमूपतिरित्युक्तत्वाच्च । न हि स्वाप्ने एकादशेन्द्रियाणां व्यापृतिः सम्भवति तत्सम्बन्धमात्रविवक्षायामस्वारस्यं, पञ्चसूनाविनोदकृदित्युक्तत्वान्न हि पञ्चसूनानां स्वाप्नदेहनिष्पाद्यत्वं युक्तं, तस्मादिदं जाग्रद्देहतद्व्यापारपरमेव व्याख्येयम् । तथा हि भोगायतनत्वख्यापनाय पूर्वं पुरवनरूपितं जाग्रदवस्थमनुष्यशरीरमेवेदानीं रथत्वेन रूप्यते, देही रथित्वेन इन्द्रियादयोश्वाऽदित्वेन । किमर्थमेवं रूपणमिति चेदुच्यतेरयोहि स्वाभिमतदेशान्तर प्रापणसमर्थः तद्वन्मनुष्यशरीरमपि वैष्णवपदप्राप्तिसाधनानुष्ठानोपयोगीति ज्ञापनाय रथभावेन रूप्यते । तथा हि कठवल्लीष्वाम्नायते -- "आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हया न्याहुर्विषयांस्तेषु गोचरान् ॥ आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः । (कठ.उ. 3-3,4) यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः ॥ (कठ.उ. 3-7) न स तत्पदमाप्नोति यस्मात् भूयो न जायते । विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः ॥ सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" (कठ.उ.3-7, 9) इति । एतच्छ्रुत्यर्थ एवात्रोपबृंह्यत इति श्रुत्या रथादिभावेन रूपितानामेव देहादीनामत्रापि तद्भावरूपणरूपसंवादात् । तर्हि श्रुतौ मृगया नोक्ता अत्र तूच्यते इति चेत् विवक्षिता मृगया श्रुतावप्युक्तैव "यस्त्वविज्ञानवान् भवत्यमनस्कः" (कठ.उ. 3-7) इत्यत्र परब्रह्मप्राप्तिसाधनोपसंहारोप युक्तशरीरं दैवाल्लब्धवतः क्षेत्रज्ञस्य ब्रह्मस्वरूपतदुपासनादिप्रकाशकवेदशास्त्रोल्लङ्घनेन पुनरनादिदुरित निमित्ताविवेकादिना निषिद्धकामचारो ह्यत्र मृगया विवक्षिता । सा च मुक्तिमार्गविरोधिनीति विवेकलब्धिप्रार्थनयाऽवगम्यते, एतदेव यस्त्वविज्ञानवानित्यादिनाऽवगम्यते । अविज्ञानवान् विविच्य ज्ञानं विवेकः सोऽस्यास्तीति विज्ञानवान्, स न भवतीत्यविज्ञानवान्, विवेकात्मकसात्त्विकबुद्ध्या विरहित इत्यर्थः, न विद्यते शुचिः कामचारादिना यस्य सोऽशुचिरित्यर्थावगमात्, श्लोकार्थस्तु पूर्वोक्त एव । न चैवं पृथक्स्वप्नावस्था न कथिता स्यात्ततश्च तद्गतदोषाननुकीर्तनेन श्रोतुर्वैराग्यादयो न स्यादिति वाच्यं, जाग्रदवस्थाप्रपञ्चेनैव स्वप्नावस्थाप्येवंविधेति ज्ञातुं शक्यत्वेन तस्याः पृथगवक्तव्यत्वात् । अत एव हि मूर्छावस्था पृथक् नोक्तेति सङ्ग्रहः ॥ २४ ॥

---

1. A, B, T °काः 2. A, B, T °याः

एवं परोक्षेणोक्तमर्थं व्याख्याय कृत्स्नकथातात्पर्यमाह - **एवमित्यादिना**। त्रिभिस्तापैस्तदवान्तरभेदेन बहुविधैर्दुःखैः एवं शतं वर्षं यावच्छरीरं क्लिश्यमानः देही क्षेत्रज्ञः तमोवृतस्तमसाऽज्ञानेन वृतोऽभिभूतः ॥ २५ ॥

**विज०** एतदेव प्रतिपादयति - **यथेति**। स्वप्नकाले करितुरगादिदृष्टश्रुतवस्तुवासनावासितं मनो बुद्धिर्वा विक्रियते, दैवेनेति शेषः। बहुसंस्काराधिवासितत्वादन्यत्र प्रवाहमन्तरेणैव स्वयं वा विकरोतीत्याह - गुणेति। यथा यथा विषयविकारेण परिणमते तथा तथा स्वप्नादेरुपद्रष्टात्मा जीवस्तद्वृत्तिर्बुद्धिर्मनोवृत्तेरनुकूलवृत्तिरिति कीर्त्यते यथा यथा मनो विक्रियते गुणान् कामात्मना गुणरूपिता [1-]बुद्धिस्तथा विकरोति[-1], बुद्धिः यथा विकरोति तथात्मापीति वा, उभयेन्द्रियनायक इत्युक्तेर्मनोविकारानुकारि बुद्ध्यनुकारि प्रवृत्तिमत्त्वमात्मनो युज्यते ॥ २१ ॥

इन्द्रियाण्येवाश्वा यस्य स तथा, संवत्सरेत्युपलक्षणं दिनरात्रि पक्षमास संवत्सरेत्युपलक्षणैर्वयोभिः गतिर्यस्य स तथा। द्विकर्मेत्यादिषु बहुव्रीहिः। पञ्चासु बन्धुरः पञ्चासवः प्राणा एव बन्धुरो यस्य स तथा ॥ २२ ॥

एक रश्म्येकदमनमित्यस्यार्थमाह - **मन** इति। पञ्चप्रहरणमित्यस्यार्थमाह - पञ्चेति ॥ २३ ॥

प्रतीतितः सुखम् अनुभवे यद्दुःखं सा मृगतृष्णिका ताम्। तदुक्तम् - "सुखवत् दूरतो दृश्यं तत्काले दुःखमेव यत्। मृगतृष्णेत्यतः प्राहुर्भोगं वैषयिकं बुधाः" (शब्दनिर्णये) इति। पञ्चेन्द्रियद्वारेण विषयसेवालक्षणहिंसाकालविनोदं करोतीति पञ्चसूनाविनोदकृत् ॥ २४ ॥

अधुना लक्षणया वृत्त्या उक्तमर्थं विवृत्यर्थं प्रत्यक्षमाह - एवमिति। दैवभूतात्मसम्भवैरधिदैवाधिभूताध्यात्मविषयतथा जातैरेवं बहुविधैर्दुःखैः क्लिश्यमानस्तमोवृतस्तत्परिहारोपायमजानन् देही शेते इति श्लोकद्वयेनान्वयः। कियन्तं कालम्? शतवर्षं, क्लृप्तत्वात् "शतायुर्वै पुरुषः" इति न्यूनातिरेकसम्भवेऽप्येवमुक्तम्। दुःखोत्पत्तौ कारणमाह - कामेति। प्राणधर्मानशनपिपासादीनिन्द्रिय-धर्मानन्धत्वादीन् मनोधर्मान् शोकमोहादीनात्मनि स्वस्मिन्न[2]ध्यास्यारोप्य बुभुक्षितः पिपासितोऽहमन्धः काणोऽहं शुष्कोऽहं मुग्धोऽहमिति निर्गुणश्चेतनत्वेन स्वतो गुणरहितः। ननु शरीरकारणक्षये मोक्षसम्भवात् क्लेशानुभवोऽप्युपकाराय स्याद्देहिन इत्यत्राह - कर्मकृदिति। "आचतुर्दशमाद्वर्षात्कर्माणि नियमेन तु। दशावराणां देहानां कारणानि करोत्ययम्" इत्यादेर्न कर्मक्षयान्मुक्तिः। नन्वस्तु कर्मकर्तृत्वं हर्यर्पणेन क्रियमाणानां न दुःखदातृत्वमित्यत्राह - ममेति ॥ २५ ॥

**प्राणेन्द्रियमनोधर्माना[3]त्मन्यध्यस्य निर्गुणे[4]।**
**शेते काम[5]लवान्ध्यायन्ममाहमिति कर्मकृत् ॥ २६ ॥**

---

1--1. A omits 2. B. M. Ma °ध्यस्य 3. Ma °ना° 4. A. B. G. I. J. M. Ma. Ms. T °णः 5. M. Ma लवं ध्या°

**यदात्मानमविज्ञाय भगवन्तं परं गुरुम् ।**
**पुरुषस्तु विषज्जेत गुणेषु [1]प्रकृतेस्स्वदृक् ।। २७ ।।**

**गुणाभिमानी स तदा कर्माणि कुरुतेऽवशः ।**
**शुक्लं कृष्णं लोहितं वा यथा[2]कर्माभिजायते ।। २८ ।।**

**शुक्लात्[3]प्रकाशभूयिष्ठान् लोकानाप्नोति कर्हिचित् ।**
**दुःखोदर्कान् [4]क्रियाऽऽयासान् तमश्शोकोत्कटान् क्वचित् ।। २९ ।।**

**क्वचित् पुमान् क्वचिच्च स्त्री क्वचिन्नोभयमन्धधीः ।**
**देवो मनुष्यस्तिर्यग्वा यथाकर्मगुणं भवः ।। ३० ।।**

**श्रीध० प्राणेति** । अशनयापिपासादीन् प्राणधर्मान् अन्धत्वादीनिन्द्रियधर्मान् कामादीन् मनोधर्मांश्च निर्गुणेऽप्यात्मन्यध्यस्य कामलवान् विषयसुखलेशान् ध्यायन् कर्मकृत् ।। २६ ।।

ततः किमत आह - **यदेति** द्वाभ्याम् । स्वदृक् स्वप्रकाशस्वभावोऽपि ।। २७ ।।

**गुणेति** । शुक्लं सात्विकम् । कृष्णं तामसम् । लोहितं राजसम् । यथा कर्म तथा जायते ।। २८ ।।

तदेवाह - **शुक्लादिति** द्वाभ्याम् । प्रकाशो भूयिष्ठो येषु । दुःखमुदर्क उत्तरफलं येषु, क्रियया आयासो येषु तान्, लोहितात् । तमश्शोकावुत्कटौ येषु तान् कृष्णादिति ज्ञेयम् ।। २९ ।।

**क्वचिदिति** । नोभयं नपुंसकम् । यथाकर्मगुणं कर्मगुणावनतिक्रम्य ।। ३० ।।

**वीर०** प्राणादिधर्मानात्मन्यध्यस्य पिपासुरहं, बुभुक्षुरहं, काणोऽहं, बधिरोऽहं, दुःख्यहं, सुख्यहमित्येवं प्राणादेर्धर्मानात्मन्यारोप्य सुखलेशान् चिन्तयन्नहम्ममाभिमानाभ्यां पुनर्देहान्तर प्राप्तिहेतुभूतकर्माणि कुर्वन् शरीरे वसति ।। २६ ।।

कुतोऽयं संसार इति विवित्सायां स्वपरयाथात्म्यरूपोपासनापन्नज्ञानाभावादेवेत्याह - **यदेति** । स्वात्मानं हितोपदेष्टारं प्रकृतिपुरुषविलक्षणं षाड्गुण्यपूर्णं परमात्मानं चाज्ञात्वा क्षेत्रज्ञः स्वभावतः स्वदृक् स्वानुभवपरोऽपि प्रकृतेर्गुणेषु शब्दादिषु यदा विषज्जेत नितरां सक्तो भवेत् ।। २७ ।।

---

1. M. Ma. Ms प्राकृतेष्वदृक् 2. W °स्वामभि° 3. M. Ma °न्प्र° 4. W क्रियायास्तान्

गुणेष्वेव शब्दादिष्वभिमानी भोग्यताबुद्धिमान्, अत एव विषयपरवशः विषयलाभसाधनतया शुक्लं सात्विकं, कृष्णं तामसं, लोहितं राजसमित्येवं रूपेण त्रिविधानि कर्माणि कुरुते। तदा यथास्वम्[1] स्वस्वकर्मानुसारेणाभिजायते[2] पुनर्जन्मान्तरं प्रतिपद्यते॥ २८॥

तदेवाह - शुक्लात्सात्विकात् कर्मणो हेतोः प्रकाशभूयिष्ठान् प्रकाशः भूयिष्ठ : प्रचुरो येषु तान् लोकान्[3] देहान् कर्हिचित् प्राप्नोति। कर्हिचिदित्यनेन सात्विकं कर्म, तत्प्रयुक्तः सात्विको देहश्च दुर्लभ इत्युक्तम्। क्रियायाः राजसात्कर्मणः दुःखोदर्कम् उत्तरं येषां तान्, दुःखपरम्परासम्पादकानित्यर्थः, तान् लोकान्। तमस्तामसात् कर्मणः, विभक्तिलुगार्षः। यद्वा तमश्शोकौ अज्ञानशोकौ उत्कटौ येषु तान्। तामसात् कर्मण इति वा शेषः। क्वचिद्रजस्तमः प्रचुरम्लेच्छादिदेशेषु सात्त्विकादि [4-]कर्मस्वरूपं तत्कर्तृस्वरूपं तद्बुद्धिस्वरूपं[-4] च स्पष्टं गीतं भगवता- ''नियतं सङ्गरहितमरागद्वेषतः कृतम्। अफलप्रेप्सुना कर्म [5-]यत्तत्सात्विकमुच्यते॥ यत्तु कामेप्सुना कर्म[-5] साहङ्कारेण वा पुनः। क्रियते बहुलायासं तद्राजसमुदाहृतम्॥ अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम्। मोहादारभ्यते कर्मयत्तत्तामसमुच्यते।'' (भ.गी. 18-23-25) इत्यादिना॥ २९॥

गुणकर्मानुसारेण जन्मापि न पुंस्त्वादिरूपेण नियतं प्राप्नोति किं त्वनियतमेवेत्याह[6] - **क्वचिदिति**। अन्धधीः अज्ञः, नोभयं नपुंसकं भवतीत्यर्थः। तत्रापि यथाकर्मगुणं कर्मगुणावनतिक्रम्य देवादिरूपेण भवः जन्म भवतीति शेषः॥ ३०॥

**विज०** कर्मकृदित्यत्र कीदृशं कर्म करोतीति तत्राह - **यदेति**। यदा अदृगज्ञानी पुरुषः संसारे इष्टानिष्टफलदमात्मानं स्वान्तर्यामिणमविज्ञाय प्राकृतेषु गुणेषु विषज्जते तदा स गुणाभिमानी देही शुक्लादीनि सात्त्विकादीनि कर्माणि यथा कुरुते तथा सात्त्विकादिशरीरतया जायते, अवशः विष्णुवशः। स इत्यनेन कर्मणः स्वातन्त्र्यं निराह - आत्मशब्दस्य साधारणत्वेन कथं निर्णय इत्यतो भगवन्तमित्यादिविशेषणत्रयम्॥ २७, २८॥

त्रिविधानां कर्मणां फलमाह - **शुक्लानिति**। प्रकाशभूयिष्ठांस्तेजोमयान् देवादीन्, क्रियायासान् क्लेशकर्मसाध्यान् राजसान् [7-]दुःखोदर्कान्[-7]दुःखप्रचुरान् मनुष्यादीन् तमश्शोकोत्कटान् तामसान्, स्वकर्मणः शोकभूयिष्ठान् तिर्यगादीन्, आप्नोतीत्यन्वयः॥ २९॥

क्वचित्क्वचिदिति बहुजन्मापेक्षया, नोभयं नपुंसकत्वमेतदेव विशिनष्टि - **देव इति**। यथाकर्मगुणं यथा यथा कर्मणां गुणानामानुगुण्यं तथा भव उत्पत्तिदेवादिविषया॥ ३०॥

**क्षुत्परीतो यथा दीनः सारमेयो गृहं गृहम्।**
**चरन् विन्दति यद्दिष्टं दण्डमोदनमेववा॥ ३१॥**

---

1. A. B. T यथाकर्म 2. A, B. T add शुक्लादि 3--3. W omits लोकान् 4--4. A. B. T कर्मकर्तृस्वरूपं तत् 5--5. W omits 6. W ेमित्याह
7--7. A. B omits

[1]तथा कामाशयो जीव उच्चावचपथा भ्रमन्।
उपर्यधो वा मध्ये वा याति दिष्टं प्रियाप्रियम्॥ ३२॥

दुःखेष्वेकतरेणापि [2]दैवभूतात्महेतुषु।
जीवस्य न व्यवच्छेदः स्याच्चेत्तत्तत्प्रतिक्रिया॥ ३३॥

यथा हि पुरुषो भारं शिरसा [3]गुरुमुद्वहन्।
तं स्कन्धेन [4]स आदत्ते तथा सर्वाः प्रतिक्रियाः॥ ३४॥

नैकान्ततः प्रतीकारः कर्मणां कर्म केवलम्।
द्वयं ह्यविद्योपसृतं स्वप्ने स्वप्न इवानघ॥ ३५॥

**श्रीध०** तेषु दैववशेन सुखदुःखे प्राप्नोतीति सदृष्टान्तमाह - **क्षुदिति** द्वाभ्याम्। क्षुधा परीतो व्याप्तः, सारमेयः श्वा, दण्डं दण्डेन ताडनम्, [5-]ओदनमन्नं[-5] वा॥ ३१॥

[6]**तथेति**। कामव्याप्त आशयो यस्य॥ ३२॥

ननु तर्हि सुखस्य सम्भवात् दुःखस्य च प्रतीकार सम्भवान्नैकान्ततो हेयत्वं तत्राह - **दुःखेष्विति**। दुःखस्य प्रतीकारः तावन्नास्ति। स्याच्चेत् तस्य [7]तस्य प्रतिक्रिया, तथापि त्रिविधेषु [8]दुःखेषु मध्ये एकतरेणापि दुःखेन व्यवच्छेदो वियोगो नास्ति॥ ३३॥

प्रतिक्रियाणामपि दुःख[9]रूपत्वादिति सदृष्टान्तमाह - **यथा हीति**॥ ३४॥

दुःखस्य मूलभूतानि [10]तु कर्माणि, प्रतिक्रियादिकर्मभि[11]रविरोधितया नैव निवर्तन्त इत्याह - **नेति**। नैकान्ततो [12]नियमेन अन्त्यन्तं सवासनं केवलं ज्ञानरहितमविद्ययोपसृतं प्राप्तम्, अतोऽविरोधान्न [13]निवर्त्यनिवर्तकत्वं [14]तस्येति भावः। अत्र दृष्टान्तः। स्वप्ने दृष्टः स्वप्नः प्रबोधं विना यथा तं स्वप्नमत्यन्तं न प्रतिकरोतीत्यर्थः॥ ३५॥

**वीर०** एवंविधेषु जन्मसु सुखलाभो दुर्लभ इति सदृष्टान्तमाह - **यथेति** द्वाभ्याम्। यथा क्षुधा परिवृतः [15]व्याप्तः अत एव दीनः, सारमेयः श्वा, प्रतिगृहमटन् यद्दिष्टं यत् स्वकर्मायत्तं दण्डेन ताडनं वा ओदनं वा विन्दति प्राप्नोति॥ ३१॥

---

1. V एवं  2. W दे°  3. W मुहुरुद्व°  4. A, B, G, I, J, M, Ma, T स आधत्ते; Ms समाधत्ते  5. B, J, V, Va omits  6. V एवमिति
7. Va omits तस्य  8. V omits दुःखेषु  9. V add °स्व°  10. B, J, Va omit तु  11. B, J, V, Va omit अविरोधितया  12. B, J, V, Va omit नियमेन
13. J omits निवर्त्य  14. B, J, V, Va omit तस्य  15. A, T omit व्याप्तः

एवं जीवोऽपि कामव्याप्तः आशयो यस्य, उच्चावचपथा उत्कृष्टापकृष्टमार्गेण, उपरि ऊर्ध्वलोकेषु, अधः अधोलोकेषु नरकेषु, मध्ये इहलोकेषु भ्रमन् "ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः। जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः" (भ.गी. 14-18) इत्युक्तरीत्या भ्रमन्, दिष्टं दैवायत्तं प्रियमप्रियं वा याति प्राप्नोति ॥ ३२ ॥

ननु तर्हि सुखस्य सम्भवात् दुःखस्य प्रतीकाररूपकर्मान्तरसम्भवान्नैकान्ततो हेयत्वं तत्राह - **दुःखेष्विति**। दैवभूतात्महेतुष्वाधिदैविकाधिभौतिकाध्यात्मिकतापरूपेण त्रिविधेषु दुःखेष्वन्यतरस्य प्रतिक्रिया स्याच्चेत्तथाप्यन्यतरेण न व्यवच्छेदः नासम्बन्धः। भगवदुपासनमन्तरेण न तापत्रयविनाशनसमर्था प्रतिक्रियाऽस्तीति भावः ॥ ३३ ॥

प्रतिक्रियापि दुःखरूपेति दृष्टान्तमाह - **यथा हीति**। यथा पुमान् गुरुं भारं शिरसा उद्वहन् शिरसो विश्रान्तये तद्भारं स्कन्धेनाधत्ते उद्वहति तथा सर्वाः प्रतिक्रिया दुःखप्रतीकारास्तादात्विकाल्पविश्रान्तिकरास्ता अपि दुःखरूपा इत्यर्थः ॥ ३४ ॥

किञ्च प्रतीकारोऽपि कर्मात्मक एव, दुःखहेतुरपि कर्मैव तत्रोभयोरप्यज्ञानमूलत्वेन दुःखहेतौ कर्मणि कर्मान्तरेण प्रतिकृतेऽपि न मूलं निवर्तते। ततश्च पुनरपि दुःखनिमित्तकर्मोदयान्नैकान्ततः कर्मणां प्रतीकारः सम्भवतीत्याह। केवलं ज्ञानविधुरं कर्म कर्मणां दुःखहेतूनामेकान्ततः निश्शेषतः प्रतीकारो न भवति। द्वयं निवर्त्यं निवर्तकं चेत्युभयविधं कर्म, हि यस्मात् अविद्योपसृतं देहात्मभ्रान्तिरूपाहङ्कारममकारात्मकाज्ञानेन उपसृष्टं गर्भितं तन्मूलमित्यर्थः। तत्र दृष्टान्तः - स्वप्ने स्वप्न इवेति, स्वशिरश्छेदादिविषये स्वप्ने जागरणेन निवृत्तेऽप्यज्ञानस्य मूलस्यानिवृत्तेः पुनः स्वप्नो भवति तद्वत्स्वप्ननिवर्तकंस्वप्नान्तरमिवेति वा ज्ञानहीनस्य कर्मणि प्रतिकृतेऽपि नाविद्यानिवृत्तिरित्यर्थः ॥ ३५ ॥

**विज०** तत्र दृष्टान्तमाह - **क्षुदिति**। दण्डं प्रहारं, दिष्टं दैवतः प्राप्तम् ॥ ३१ ॥

कामे विषये आशयो यस्य स तथा ॥ ३२ ॥

एवं भ्रमतः सुखं क्वापि न स्यात् किम्? तत्राह - **दुःखेष्विति**। दैवादिहेतुषु दुःखेषु मध्ये एकतरेण दुःखेनापि जीवस्य व्यवच्छेदो वियोगो नास्तीत्यन्वयः। प्रतिक्रियया सुखं स्यादत्राह - स्याच्चेदिति। तस्य तस्य दुःखस्य प्रतिक्रिया परिहारः, सोऽपि दुःखमेव ॥ ३३ ॥

स्कन्धस्य यथा भवति तथा सर्वाः प्रतिक्रियाः दुःखरूपा इत्यन्वयः ॥ ३४ ॥

अग्निष्टोमादिकर्मणान्यकर्मनिवृत्तौ प्रबोधकाभावात् सर्वदुःखव्यवच्छेदो घटत इति चेत्तत्राह - **नैकान्तत** इति। केवलं

श्रीनारायणार्पणबुद्धिरहितं कर्म कर्मणामेकान्ततो नियमेन प्रतीकारो न भवति, कुत इति तत्राह - द्वयमिति। निवर्त्यं निवर्तकं चेति कर्मद्वयमविद्योपसृतमीश्वराज्ञानानुविद्धं, हि यस्मात्तस्मादिति शेषः। तत्र दृष्टान्तः- स्वप्ने वर्तमानः स्वप्नो यथा तस्य निवर्तको न भवति, किन्तु अतः प्रबोधोऽस्मात् इति तत्र प्रबोधादावीश्वर एव। स्वप्नसंसृत्योः कियानेव विशेष इति॥ ३५॥

**अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते।**

**मनसा लिङ्गरूपेण स्वप्ने विचरतो यथा॥ ३६॥**

**अथात्मनोऽर्थभूतस्य यतोऽनर्थपरम्परा।**

**संसृतिस्तद्व्यवच्छेदो भक्त्या परमया गुरौ[1]॥ ३७॥**

**वासुदेवे भगवति भक्तियोगः समाहितः।**

**सध्रीचीनेन वैराग्यं ज्ञानं च जनयिष्यति॥ ३८॥**

**सोऽचिरादेव[2] राजर्षे स्यादच्युतकथाश्रयः।**

**शृण्वतः श्रद्दधानस्य नित्यदा स्यादधीयतः॥ ३९॥**

**यत्र भागवता राजन् साधवो विशदाशयाः[3]।**

**भगवद्गुणानुकथन श्रवण[4]व्यग्रचेतसः॥ ४०॥**

**श्रीध०** ननु तर्हि अज्ञानविलसितत्वेन संसृतिहेतोर्देहादेरप्यसत्वात् किं त[5]न्निवर्तन प्रयासेन ? तत्राह - **अर्थे हीति**। लिङ्गरूपेणोपाधिभूतेन॥ ३६॥

तदेवं संसृतिप्रकारमुक्त्वा तन्निवृत्तिप्रकारमाह - **अथेति**। अथ तस्मात् पुरुषार्थभूतस्यैवात्मनो यतोऽज्ञानान्मनसो वा अनर्थपरम्परारूपा[6] संसृतिर्भवति, तस्य व्यवच्छेदो निवृत्तिः[7], गुरुरूपे वासुदेवे भक्त्यैव॥ ३७॥

ननु संसृतिनिवृत्तिः वैराग्यपूर्वकाज्ज्ञानादेव न तु भक्त्या "तरति शोकमात्मवित्" (छान्दो. उ. 7-1-5) इत्यादिश्रुतेः। तत्राह - **वासुदेव** इति। सध्रीचीनेन समीचीनेन प्रकारेण॥ ३८॥

---

1. M, Ma, Ms हरौ 2. M, Ma °दिव 3. W विमला° 4. M, Ma °णऽव्य° 5. V adds तर्हि 6. V omits रूपा 7. B, J, V, Va omit निवृत्तिः

नन्वसौ महाफलो भक्तियोगः कथं स्यादत आह - **स** इति। हे राजर्षे[1] ! स तु अच्युतस्य कथामाश्रित्य वर्तमानोऽचिरात्स्यात्। कस्य स्यात्तदाह श्रृण्वतोऽधीयानस्य च ॥ ३९ ॥

[2-]ननु सा कथा[-2] कुत्र स्यात्तदाह - **यत्रेति**। भगवतो गुणानुकथने श्रवणे च व्यग्रं सत्वरं चेतो येषां ते ॥ ४० ॥

**वीर०** नन्वहम्ममाभिमानरूपाज्ञानमेव कर्मद्वारा दुःखहेतुरित्युक्तं, तर्हि अज्ञानमेव प्रतिक्रियतां तत्राह - **अर्थे** इति। अर्थे आत्मन्यविद्यमानेऽपि देवत्वमनुष्यत्वाद्याकाराभावेऽपि देहात्मभ्रान्तिमूला दुःखरूपा संसृतिर्न निवर्तते कुत इत्यत्राह - मनसेति। लिङ्गरूपेण जन्तुः देहात्माभिमानहेतुभूतमनस्सद्भावादित्यर्थः, मनसो भ्रान्तिजननद्वारा दुःखादिहेतुत्वे दृष्टान्तमाह - स्वप्न इति। यथा स्वप्ने विचरतः सङ्कल्प[3]विकल्पादिकं कुर्वतो मनसो हेतोर्देशान्तरगमनराज्याभिषेकस्वशिरश्छेदादिनिमित्तसुखदुःखादिकं भवति तथेत्यर्थः ॥ ३६ ॥

अतः पुरुषार्थभूतस्यात्मनो देहात्मभ्रान्त्यहङ्कारममकारतन्मूलोच्चावचकर्मद्वारानर्थरूपसंसारहेतुत्वान्मनसस्तदेव वशीकर्तव्यं, वशीकरणोपायश्च भगवद्भक्तिरेवेत्याह - **अथेति**। अथातः पुरुषार्थभूतस्यात्मनः अनर्थपरम्परादुःखपरम्परारूपा संसृतिर्यतो मनसो भवति तद्व्यवच्छेदः तस्य मनसो व्यवच्छेदः, दुःखनिमित्तदेहात्मभ्रान्त्याद्यजनकत्वरूपो व्यवच्छेदः मुक्तिरिति यावत् गुरौ भगवति परमया भक्त्या भवति[4]॥ ३७ ॥

कथं तद्व्यवच्छेदहेतुसम्बन्धः तत्राह - **वासुदेव** इति। सध्रीचीनेन समीचीनेन प्रकारेण वासुदेवे भगवति समाहितो निहितः कृत इति यावत् भक्तियोगः परभक्तियोगः, वैराग्यं विषयेष्वनासक्तिं, ज्ञानं परज्ञानं च जनयिष्यति परभक्त्यादिप्रणाड्या सुखदुःखादिनिवर्तकः परमभक्तियोग उदेष्यतीत्यर्थः ॥ ३८ ॥

परभक्तियोगोऽपि कुतः स्यात्तत्राह - **स** इति। अच्युतकथाश्रयः अच्युतस्यैव कथाश्रयो यस्य सः, परभक्तियोगः अचिरादेव स्यात्। हे राजर्षे ! भगवत्कथाश्रवणात्परभक्तियोग उदेष्यतीत्यर्थः। अच्युतकथाश्रयः परभक्तियोगः कथम्भूतस्य स्यात्तत्राह - नित्यदा अच्युतकथाः श्रृण्वतः श्रद्धधानस्य कथाश्रवणविषयनिष्ठायुक्तस्य नित्यमधीयतः कथा अधीयानस्य ॥ ३९ ॥

कुत्र श्रृण्वतस्तत्राह - **यत्रेति**। हे राजन् ! साधवः विमलान्तःकरणाः भगवतो गुणानुकथने श्रवणे च व्यग्रं सत्वरं चेतो येषां ते यत्र वसन्ति तत्रेत्यर्थः ॥ ४० ॥

---

1. A. B. J. Vv omit हे राजर्षे ! 2--2. A, B, J, Va omit 3. A, B, T omit विकल्प 4. A, B, T add परमभक्तियोगोऽपि न निर्निमित्तमुदेति।

**विज०** स्वप्नवद्धरेः संसारो निवर्ततामिति तत्राह - **अर्थे** इति। हरेरपरोक्षज्ञानलक्षणपदार्थे अविद्यमाने संसृतिर्न निवर्तते, कथमिव? लीलानां वासनानां गमकेनोद्बोधकेन मनसा स्वप्ने विचरतो विषयान् भुञ्जानस्य पुंसः संसारो यथा न निवर्तते निद्राया अनिवृत्तत्वात् तथात्र । ननु स्वप्नसंसारयोः कथं साम्यम्? स्वप्नदृष्टानां तत्क्षणं नष्टत्वात् संसारदृष्टानां किञ्चित्स्थायित्वदर्शनादित्यस्यापीदमेवोत्तरमित्यभिप्रायेणोक्त**मर्थे** इति । अयं भावः- यथार्थज्ञानाभावादुभयोः साम्यं, न तु स्थायित्वास्थायित्वात्, न हि दृष्टान्तदार्ष्टान्तिकयोः सर्वसाम्यं क्वापि दृष्टं ''संसृतेः स्वप्नसाम्यं तु यथार्थज्ञानवर्जनम्'' (शब्दनिर्णये) इति वचनात् ''जाग्रत्यविद्यमानं तु देहात्मत्वं तु केवलम्। अविद्यमानं स्वप्ने तु जाग्रत्वज्ञानमेव च'' (षाड्गुण्ये) इति वचनात् उभयत्र यथार्थ ज्ञानाभावोऽपि ज्ञायते। संसारे लब्धजन्मा यदि भगवज्ज्ञानं नापादयेत्तर्ह्ययं संसारो निष्प्रयोजनः स्यादित्यतो ह्यर्थे ह्यविद्यमानेपीति। न तु मिथ्यात्वादिममर्थं हीतिशब्देन सूचयति॥ ३६॥

एवं विधज्ञानोत्पत्तौ किं मुख्यसाधनमत्राह - **अथेति**। यस्मात् केवलकर्मणो दुःखहेतुः संसारः, सति भगवज्ज्ञाने च निवर्तते, अथ तस्मात्संसार निवृत्त्यर्थेऽर्थभूतस्य पुरुषार्थयोग्यस्यात्मनो जीवस्य यतो यस्य हरेः अज्ञानादनर्थपरम्परा श्वयोनेः कृकलासयोनिरित्यादिलक्षणा संसृतिर्या, तद्व्यवच्छेदस्तस्य संसारस्य निवृत्तिर्यया हरिभक्त्या स्यादिति यतस्तस्मात्तस्य हरेः ज्ञानजननीं भक्तिमेव कुर्यादित्यन्वयः॥ ३७॥

ज्ञानद्वारा भक्तेः संसारोच्छेदकत्वमिति भावेनाह - **वासुदेव** इति। सध्रीचीनेन प्राणायामादिवह्निना निर्दग्धमलेनान्तः करणेन समाहितः सम्यक् स्थापितः सध्रीचीनेन निष्कामेण पुरुषेणेति वा। यद्यपि भक्तेः पूर्वभाविवैराग्यं तथापि पश्चात् दृढं कृतवतीत्यतो वैराग्यं जनयिष्यतीति ज्ञानं द्विविधम्॥ ३८॥

भक्तियोगस्य साधनमाह - **सोऽचिरादिति**। अच्युतकथा आश्रयो यस्य स तथा, अनेन हरिकथा भक्तियोगस्य साधनम्। अच्युतकथाधिकार प्रकारमाह - श्रृण्वत इति। श्रद्धादिगुणसम्पत्तिरधिकार लक्षणम्॥ ३९॥

कुत्रेयं सम्भूयत इति तत्राह - **यत्रेति**। अव्यग्रचेतसस्तदेकचित्ताः॥ ४०॥

**तस्मिन्महन्मुखरिता मधुभिच्चरित्रपीयूषशेषसरितः[1] परितः स्रवन्ति।**
**ता ये पिबन्त्यवितृषो[2] नृप गाढकर्णैः तान्न स्पृशन्त्यशन तृड्भयशोकमोहाः॥ ४१॥**

---

1. M, Ma °तदोय°  2. M, Ma, Ms °नुसवं°

**एतैरुपद्रुतो नित्यं जीवलोकः स्वभावजैः ।**
**न करोति हरेर्नूनं कथामृतनिधौ रतिम् ।। ४२ ।।**

**प्रजापतिपतिस्साक्षाद्भगवान् गिरिशो मनुः ।**
**दक्षादयः प्रजाध्यक्षा नैष्ठिकाः सनकादयः ।। ४३ ।।**

**मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।**
**भृगुर्वसिष्ठ इत्येते मदन्ता ब्रह्मवादिनः ।। ४४ ।।**

**अद्यापि वाचस्पतयः तपोविद्यासमाधिभिः ।**
**पश्यन्तोऽपि न पश्यन्ति [1]पश्यन्त[2] परमेश्वरम् ।। ४५ ।।**

**श्रीध०** [3]ननु साधुसङ्गं विना स्वयमेव हरिकथाचिन्तनादिना भक्तिर्भवेदेवेत्याशङ्क्याह - **तस्मिन्निति** द्वाभ्याम् । तस्मिन् स्थाने महद्भिः मुखरिताः कीर्तिताः मधुभिदश्चरित्रमेव पीयूषं तदेव शिष्यत इति शेषो यासु, असारांशरहितशुद्धामृतवाहिन्य इत्यर्थः । अवितृषोऽलम्बुद्धिशून्यास्सन्तः, गाढैः सावधानैः कर्णैः ये ताः सरितः पिबन्ति सेवन्ते , अशनशब्देन क्षुल्लक्ष्यते । अशनादयस्तान् न स्पृशन्ति भक्तिरसिकान्न बाधन्त इत्यर्थः ।। ४१ ।।

सत्सङ्गमन्तरेण स्वयमेव कथाचिन्तनादावालस्यादिना रसावेशाभावाच्च क्षुत्पिपासाद्यभिभूतस्य भक्तिर्न सम्भवतीत्याह **एतैरिति** । [4-]स्वभावजैः अप्रमाणकैः, देहप्रयुक्तैर्वा यैस्तैरशनादिभिः नित्यमुपद्रुतोऽयं जीवलोकः । अमृतं निधीयतेऽस्मिन्निति अमृतनिधिः श्रीहरेः कथैव अमृतनिधिः तस्मिन् रतिं न करोति, नूनं निश्चितम्[-4] ।। ४२ ।।

भगवदनुग्रहमन्तरेण तु न कस्यापि ज्ञानसम्भव इति कैमुत्यन्यायेनाह - **प्रजापतिपतिरिति** चतुर्भिः । प्रजापतिपतिः ब्रह्मा ।। ४३ ।।

**मरीचिरिति** । मदन्ताः अहं नारदोऽन्ते येषां ते ।। ४४ ।।

**अद्येति** । वाचां पतयोऽपि तपोविद्यासमाधिभिरुपायैः पश्यन्तो विचिन्वन्तोऽपि पश्यन्तं सर्वसाक्षिणं न पश्यन्ति ।। ४५ ।।

**वीर०** तत्र कथं श्रवणं लभ्यते [5-]शृण्वतां च कानि दुःखानि नश्यन्ति[-5] तत्राह - **तस्मिन्निति** । तस्मिन् देशे सद्भिर्मुखरिताः मधुभिदो [6]भगवतः चरित्रमेव पीयूषं तदेव शेषः शिष्यत इति शेषः । असारांशरहितः सारांशो यासु ताः । सरितो नदीरूपा अच्युतकथाः

---

1. M, Ma, Ms तद्विष्णोः परमं पदम् 2. W °न्तः 3. Va omits 4--4. A, B, J, Va omit 5--5. W omits 6. W omits भगवतः

परितः स्रवन्ति प्रवर्तन्ते भागवतप्रचुरे देशे सुलभमेव भगवत्कथाश्रवणमिति भावः। ताः सरिद्रूपाः भगवत्कथा ये जनाश्च **अवितृषः** अलम्बुद्धिशून्यास्सन्तो गाढैः सावधानैः कर्णैः पिबन्ति श्रृण्वन्ति तानशनादयः न स्पृशन्ति न बाधन्ते ॥ ४१ ॥

भगवत्कथाश्रवणविरोधिनः अशनादय एवेत्याह - **एतैरिति** । स्वभावजैः देहस्वभावप्रयुक्तैरेतैरशनादिभिः नित्यमुपद्रुतो जीवलोकः हरेः कथामृतसमुद्रे रतिं न करोति, नूनं निश्चयः । भगवत्कथाश्रवणाभिमुख्यविरोधिनोऽशनादीन् शनैः सात्विकदेशस्थभागवतसङ्गतिलब्धभगवद्गुणश्रवणेन निरस्येदित्यर्थः ॥ ४२ ॥

एवं प्रथमं भागवतसङ्गः, ततो भगवद्गुणानुश्रवणं, ततो भगवदुपासनं, ततो विरागः, ततो भगवत्साक्षात्काररूपं परज्ञानं, ततो भगवदनुभवजन्यप्रीत्युत्कर्षरूपा परभक्तिः, ततो मुक्तिरिति प्रणाडी कथिता । इदानीं प्राप्यस्य परमात्मनो वाङ्मनसापरिच्छेद्यस्वरूपस्वभावस्य प्राप्त्युपयुक्तभक्तियोगानुष्ठानकारणं तदनुग्रहमन्तरेण नान्योऽस्तीत्याह - **प्रजापतिपतिरि**त्यादिना। प्रजापतिपतिः चतुर्मुखः, गिरिशो रुद्रः , मनुः स्वायम्भुवः, प्रजाध्यक्षा दक्षादयः, आदिशब्देन कश्यपादयो ग्राह्याः, तथा नैष्ठिकब्रह्मचारिणः सनकादयः ॥ ४३ ॥

मरीच्यादयो मत्पर्यन्ताः नारदपर्यन्ताः सर्वे ब्रह्मवादिनः ॥ ४४ ॥

तथा च वाचस्पतयः बृहस्पतिव्यासादयोऽद्यापि तपोविद्याद्युपायैः पश्यन्तोऽपि उपासीना अपि सर्वज्ञं परमेश्वरं [1-] न पश्यन्ति [-1] इयत्तया न पश्यन्ति वाङ्मनसाऽपरिच्छेद्यस्वरूपस्वभावत्वादिति भावः ॥ ४५ ॥

**विज०** तस्मिन् सतां समाजे, महद्भिः मुखरिताः शब्दात्मना निर्गमिता यास्ता सरितः, तान् पुरुषान् ॥ ४१ ॥

अशनादिस्पर्शफलमाह - **एतैरिति** । एतैरशनादिभिः स्वभावजैः सहजैः हरिकथामृतनिधिरति विघ्नफलैः ॥ ४२ ॥

अधुना अशनाद्युपद्रवविधुरेणापि साकल्येन श्रीहरिज्ञानं दुर्लभमित्याह - **प्रजापतिपतिरि**त्यादिना। "प्रजापतिपतिर्ब्रह्मा विरिञ्चश्चेति कथ्यते" (शब्दनिर्णये) इति वचनात् । प्रजापतिपतिः ब्रह्मा ॥ ४३ ॥

अहमेवान्तो येषां ते मदन्ताः ॥ ४४ ॥

ब्रह्मवादित्वेऽपि वाक्पटुत्वाभावान्न पश्यन्तीत्यतो वाचस्पतय इति । "यत्पश्यन्तोऽपि न पश्यन्ति तद्विष्णोः परमं पदम्" इत्यन्वयः ॥ ४५ ॥

---

1--1. A, B, T omit

शब्दब्रह्मणि दुष्पारे चरन्त उरुविस्तरे।
मन्त्रलिङ्गैर्व्यवच्छिन्नं भजन्तो न विदुः परम्॥ ४६॥

*सर्वेषामपि जन्तूनां सततं देहपोषणे।
अस्ति प्रज्ञा समायत्ता को विशेषस्तया नृणाम्॥

लब्ध्वेहान्ते मनुष्यत्वं हित्वा देहाद्यसद्ग्रहम्।
आत्मसृत्या विहायेदं जीवात्मा स विशिष्यते॥

यदा [1]यस्याऽनुगृह्णाति भगवानात्मभावितः।
स जहाति मतिं लोके वेदे च परिनिष्ठिताम्॥ ४७॥

तस्मात्कर्मसु बर्हिष्मन्नज्ञानादर्थकाशिषु।
माऽर्थदृष्टिं कृथाः श्रोत्रस्पर्शिष्वस्पृष्टवस्तुषु॥ ४८॥

[2]स्वं लोकं न विदुस्ते वै यत्र देवो जनार्दनः।
आहुर्धू[3]म्रधियो वेदं सकर्मकमतद्विदः॥ ४९॥

आस्तीर्य दर्भैः प्रागग्रैः कार्त्स्न्येन क्षितिमण्डलम्।
[4]स्तब्धो बृहद्वधान्मानी कर्म नावैषि यत्परम्॥ ५०॥

श्रीध० कुत इत्यत आह - **शब्दब्रह्मणीति**। शब्दब्रह्मणि वेदे उरु [5]महान् विस्तरो यस्य अर्थतोऽपि पारशून्ये तस्मिन् वर्तमानाः मन्त्राणां लिङ्गैर्वज्रहस्तत्वादिगुणयुक्त विविध[6]देवताभिधानसामर्थ्यैः परिच्छिन्नमेवेन्द्रादिदेवतारूपं तत्तत्कर्मा[7]भिमानात् तत्तद्रूपेण भजन्तः परं [8]परमेश्वरं न विदुः॥ ४६॥

तर्ह्यन्यः को नाम कर्माद्याग्रहं हित्वा परमेश्वरमेव भजे[9]दित्यत आह - **यदेति**। यदा यमनुगृह्णाति। अनुग्रहे हेतुः। आत्मनि भावितस्सन् स तदा लोके लोकव्यवहारे, वेदे च [10]वैदिकमार्गे परिनिष्ठितां मतिं त्यजति॥ ४७॥

* These two extra verses are found in M, Ma & Ms and the commentary of Vijayadwaja on the same verses are found in M, Ma & Ms Editions. 1. A, B, G, I, J, V यमनु 2. M, Ma, Ms स्व 3. Ms °म° 4. M, Ma ततो 5. B, J, V, Va omit महान् 6. A, B, J, Va omit देवता 7. A, B, J, Va °त्कर्माग्रहेण भजन्तः 8. V ईश्वरं 9. V °दत 10. A, B, J, Va कर्म°

**तस्मादिति**। अर्थकाशिषु परमार्थत्वेन प्रकाशमानेषु, [1-]अज्ञानाद्विवेकाभावात्[-1] पुरुषार्थबुद्धिं मा कृथाः [2]न कुरु। प्ररोचनाय केवलं श्रोत्रप्रियेषु [3]तत्त्वतस्तु न स्पृष्टं [4]परमार्थभूतं वस्तु यैः तेषु॥ ४८॥

ननु वेदेन स्वर्गादिसाधनत्वेनोक्तानि कर्माणीति वेदवादिनो वदन्ति, कथमस्पृष्टवस्तुष्वित्युच्यते तत्राह - **स्वमिति**। हे धूम्रधियः! मलिनबुद्धयः! सकर्मकं कर्मपरं, वेदमाहुः ते अतद्विदोऽवेदज्ञाः, यतस्ते स्वं स्वरूपभूतं लोकमात्मतत्त्वं वेदतात्पर्यगोचरं न विदुः। यत्र देवोऽस्ति॥ ४९॥

त्वं तु महामूर्ख इत्याह - **आस्तीर्येति**। बृहद्वधाद्बहुपशुवधात् मानी [5]महायज्वाऽहमित्यहङ्कारी, अतः स्तब्धोऽविनीतस्सन् कर्म नावैषि परम् [6-]आत्मतत्त्वज्ञानोपायभूतं[-6] विद्यास्वरूपं [7]यत् तच्च न वेत्सि॥ ५०॥

**वीर०** एत एव न जानन्ति किमु कर्मजडाः त्वादृशा न जानन्तीत्याह - **शब्दब्रह्मणीति**। उरु विस्तरे "अनन्ता वै वेदाः" इति श्रुतिविस्तरे दुष्पारे दुरधिगमतात्पर्ये शब्दब्रह्मणि शब्दात्मकेब्रह्मणि वेदे चरन्तः तत्र श्रुतपशुपुत्रवृष्ट्यन्नस्वर्गाद्यैहि-कामुष्मिकफललिप्सवः मन्त्रलिङ्गैः मन्त्रश्रुतवज्रहस्तत्वादिगुणलिङ्गैः व्यवच्छिन्नं [8]युक्तमिन्द्राद्यधिदेवतावर्गं भजन्तः समीहितसाधनतया यजन्तः, परं परमात्मानं न विदुः अपरिच्छेद्यस्वरूपस्वभावस्येयत्तया वेद्यत्वमसम्भवि। अपरिच्छिन्नत्वेन ज्ञानेऽपि तदुपासनमेव कारणं न केवलं कर्मेति भावः॥ ४६॥

यदा भगवानात्मभावित आत्मना स्वेनैव भावितः यदीयाऽऽनुषङ्गिक प्रासङ्गिकयादृच्छिकाद्यन्यतमाज्ञातसुकृतव्याज-मात्रसन्तुष्टेन स्वेनैव भावितः रक्षणोन्मुखः यमनुगृह्णाति स पुमां ल्लोके देहयापनोपयुक्ते कर्मणि शिश्नोदरादिव्यापारे वेदे च वेदपूर्वभागमात्रोदिते च कर्मणि परिनिष्ठितां मतिं जहाति भगवतानुगृहीत एव मुक्त्युपायोपसंहाराय प्रभवतीत्यर्थः॥ ४७॥

तस्माद्भगवदनुग्रहस्यैव कारणत्वात् हे बर्हिष्मन्! भगवदनुग्रहानुप्राप्तसत्सङ्गः त्वमर्थकाशिषु स्वर्गादिफलशोभिषु कर्मस्वज्ञानादर्थदृष्टिं पुरुषार्थसाधनमतिं मा कृथाः। तत्र हेतुः - श्रोत्रस्पर्शिषु प्ररोचनया केवलं श्रोत्रप्रियेषु न स्पृष्टं वस्तु निरतिशयपुरुषार्थरूपं यैस्तेषु, अनित्याल्पफलेषु बह्वायासेष्वित्यर्थः॥ ४८॥

ननु " अपाम सोमममृता अभूम अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम् " (ऋक्.सं 6-4-11) इत्यादिभिः कर्मसाध्यफलस्यापि नित्यत्वावगमात् कथमस्पृष्टवस्तुष्वित्युक्तं तत्राह - ये धूम्रधियः रजस्तमः प्रचुरबुद्धयः धूमवदावरकत्वात्

---

1--1. B, J, V, Va omit 2. B, J, V, Va omit न करु। 3. A, B, J, Va omit तत्त्वतस्तु 4. A, B, J, Va omit परमार्थभूतं 5. B, J, Va omit महा
6--6. A, B, J, Va omit 7. A, B, J, Va omit यत् 8. W omits युक्तम्

तमसो धूम्रधिय इत्युक्तम् । यत्र पूर्वोत्तरभागात्मके वेदे जनार्दनो भगवान् कर्मभिराराध्यत्वेनोपास्यत्वेन च प्रतिपन्नः तं वेदं सकर्मकं कर्मणा सहितं केवलकर्मतात्पर्यकमाहुस्ते अतद्विदः वेदतात्पर्यानभिज्ञाः न ब्रह्मवेदिन इत्यर्थः, यतस्ते स्वरूपभूतं लोकमात्मतत्त्वमपि न विदुः, केवलदेहात्मवेदिनः ''अक्षय्यं ह वै'' (ऋक्.सं. 6-4-11) इत्यादिवाक्यानि भगवदाराधनत्वेन कृतार्थानि । चातुर्मास्यादिकर्माणि भगवदुपासननिर्वर्तनद्वारा निश्श्रेयसरूपामृतत्वप्राप्तिप्रतिपादनपराणीत्येवं विधतात्पर्यमजानन्तः तानि वाक्यानि केवल स्वर्गादिसुखसाधनभूतकर्मपराणीति मन्वानाः केवलमज्ञा इत्यर्थः ॥ ४९ ॥

तस्मात् त्वमपि केवलकर्मजडो भूत्वा प्रागग्रैर्दर्भैः कृत्स्नं क्षितिमण्डलमास्तीर्य आस्तरणपूर्वकमिष्ट्वा बृहद्वधात् बहु पशुहिंसया मानी महायज्वाहमित्यभिमानी अतः स्तब्धोऽविनीतः , कर्म भगवदाराधनरूपं कर्म नावैषि न जानासि, किं तत्कर्म ? यत्परं श्रेष्ठं परमपुरुषार्थभूतमोक्षसाधनभूतं निवृत्तिधर्मापरपर्यायम् ॥ ५० ॥

**विज.** तत्साधनमानबाहुल्याभावात् तद्विषयज्ञानानुदयान्न पश्यन्ति चेदत्राह - शब्देति । निर्दोषः शब्दः आगम इति निर्दोषशब्दराशौ दुष्पारेऽनन्ते कुत इत्यत उक्तम् -

उरु विस्तर इति । चरन्तो जिज्ञासया वर्तमाना अपि मन्त्रलिङ्गैर्वेदोक्तलक्षणैर्व्यवच्छिन्नमुक्तमात्रं न तु सम्यगुक्तमेवंविधं परं परमात्मानं भजन्त उपासमाना अपि तन्न विदुरित्यन्वयः । ''बिभ्रद्रापिं हिरण्मयं वरुणो वस्तनिर्णिजम्'' (ऋक् . सं. 1-25-13) इत्यादिवेदो वदन्नपि अनुभवानारोहयितृत्वेन वक्ति । अतोऽप्रसिद्धस्वरूपत्वेन सम्यक् न जानन्ति, तस्य सेवापि न व्यर्थाः तत्प्रसादेनानुभवारोहोऽपि क्रमेण स्यादिति । तदुक्तम् - ''वेदो वदन्नपि हरिं न सम्यग्वक्ति कुत्रचित् । नारोहयत्यनुभवमप्रसिद्धस्वरूपतः ॥ तथा प्यनुभवारोहः प्रसन्ने केशवे भवेत् । '' (वाराहे) किञ्चिदेव सम्यक् स्वयं चानुभवत्यमुमिति । यद्वा मन्त्राख्यैर्लिङ्गैः हेतुभिर्व्यवच्छिन्नं क्रोडीकृतं कृष्णरामादिलक्षणं परमं भजन्तोऽपि तत्प्रसादमन्तरेण परं व्याप्तं साकल्येन न विदुरिति शबलं भजन्तः परं शुद्धं न विदुरित्यर्थोऽनुपपन्नः, परमार्थभेदाभावेनैकस्मिन् ज्ञातेऽन्यज्ञानस्य नान्तरीयत्वात् ''येनाश्रुतं श्रुतं भवति'' (छान्दो . उ. 6-1-3) इति श्रुतेश्च । यथा रामस्मरणेन कृष्णस्वरूपज्ञानं जाम्बवतस्तयोरेकत्वादित्याहुः ॥ ४६ ॥

नन्विदानीं माययाऽऽक्षिप्तमपि चेतनसमवेतं ज्ञानमदृष्टवशात् कस्मिं श्चित्कालेऽनुसन्धानलक्षणं किञ्चिद्विशेषमापादयेत् अतोऽनुसन्धानाननुसन्धाने युक्ते इति तत्राह - सर्वेषामिति । इह कर्मभुवि सर्वेषां जन्तूनां सन्ततं देहपोषणे प्रज्ञाबुद्धिः समायत्ता सन्ततास्ति नृणां तया प्रज्ञया को विशेषः स्वरूपानुसन्धानलक्षणः समापन्नो न कोऽपीत्यन्वयः । त्वत्पक्षे त्वदृष्टादीनां मिथ्यात्वेनार्थक्रियायामसामर्थ्यादेव न कस्यचिदैक्येन सन्धानमवश्यम्भावीति ॥ * ॥

जीवन्मुक्त्यवस्थायामपि जीवात्मत्वाहानेर्हरौ भेदः सत्य इति भावेन स्वरूपत्वसिद्धये साधनमाह - लब्ध्वेति। इह बहुजन्मनामन्ते भगवदुद्बोधितपूर्वाऽदृष्टविशेषान्मनुष्यत्वं लब्ध्वा ममाहमिति देहाद्यसन्नहं संसारे देही हित्वाऽऽत्मसृत्याऽऽत्मज्ञानेनेदं कलेबरं विहाय यः संसारी जीवात्मा विशिष्यते न तु ब्रह्मेत्यन्वयः ॥ ** ॥

हरिप्रसादं विना तज्ज्ञानं न स्यात्तस्मिन् सत्युत्पद्यमानस्य ज्ञानस्य फलमाह - यदेति। "आत्मेति तूपगच्छति ग्राहयन्ति च" (ब्रह्मसूत्रं 4-1-3) इति सूत्रोक्तप्रकारेणात्मभावितः मम स्वामी हरिर्नित्यमिति भावेनोपसितो [1-]भगवान् यस्य[-1] उपासकस्यानुगृह्णात्यात्मानं प्रकाश्यानुभवमुत्पादयति स पुमांल्लोके वेदे च परिनिष्ठितां मतिं जहाति, बाह्यपदार्थविषयां संविदमपहाय परमात्मानमेव सर्वेन्द्रियैरनुभवन् आस्त इत्यन्वयः। अनेनोपासकस्य मुक्तिकल्पने कथां ध्वनयति। तदुक्तम् - "यदा त्वनुभवी भूयाच्छब्दमात्रानुरोधनम्। त्यक्त्वाऽथ तं विदुः प्राज्ञा स्त्यक्तवेद इति स्म ह ॥ यदैवं त्यक्तवेदः स्यादथास्मान्मुच्यते भयात् ॥ " (महासंहितायाम् ) इति। निर्दोषशब्दलक्षणवेदप्रहाणे बौद्धराद्धान्तानुप्रवेशः स्यादित्यत उक्तम् - "प्रायस्तु वैदिका एव रुद्राद्या अपि वै पुरा" (महासंहितायाम्) इति आदिशब्देन मुक्तियोग्यमात्रं गृहीतं, पुरेत्यनेन जन्मप्रभृतिवैदिकत्वमस्तीति ज्ञापयति, प्राय इत्यनेन त्यक्तवेदत्वं पश्चादिति तदप्येतत् द्वयं कस्य मुख्यमित्यत उक्तम् - "वैदिकस्त्यक्तवेदश्च ब्रह्मैवैकः प्रजापतिः" (महासंहितायाम् ) इति रुद्रादीनां कथङ्कारं पश्चादपि त्यक्तवेदत्वं प्राप्तमित्यत उक्तं - "ततस्तु केशवं भक्त्या संपूज्य बहुजन्मसु। त्यक्तवेदत्वमापन्नाः प्रसादात्परमेष्ठिनः" (महासंहितायाम्) इति, "केवलं वेदशब्देन जानन् वैदिक उच्यते," (अध्यात्मे) "वेदं विनाप्यनुभवा ज्ज्ञानंस्तुत्यक्तवैदिकः" (अध्यऽत्मे ) इत्यनेन मिथो विरुद्धयोर्वैदिकत्यक्तवेदशब्दयोरेकाधिकरणत्वं कथं युज्यते इतीदं चोद्यमपनोदितम्, "तत्त्वं वेदानुसारेण चिन्तयन् वैदिको भवेत्। वेद ऊहामनुसरेद्यस्य स त्यक्तवैदिकः" (षाड्गुण्ये) इत्यनेन वेदशब्देन ज्ञातृत्वं तमन्तरेणानुभवितृत्वं च कथं विविच्यत इति चोद्यं परिहृतम्। त्यक्तवैदिकः त्यक्तवेदराशिरित्यर्थः ॥ ४७ ॥

उपसंहरति - **तस्मादिति**। यस्माज्ज्ञानेनैव मोक्षः तस्मादज्ञानाद्भगवत्तत्त्वापरिज्ञानादर्थकाशिषु प्रयोजनत्वेन प्रकाशमानेषु अग्निष्टोमादिलक्षणेषु कर्मस्वर्थदृष्टिं मा कृथाः न कुरु इत्यन्वयः। तत्प्रवृत्तौ निमित्तमाह - श्रोत्रस्पर्शिष्विति। अपाम सोममिति श्रवणे श्रोत्रसुखं स्पृशन्तीति श्रोत्रस्पर्शीनि, तेषु हेयत्वे कारणं वक्ति अस्पृष्टवस्तुष्विति। परमात्माख्यवस्तुसम्बन्धगन्धरहितेषु ॥ ४८ ॥

अज्ञानादित्युक्तं विवृणोति - **स्वं लोकमिति**। ये कर्मनिष्ठास्ते यत्र लोके जनार्दनो देवोऽस्ति तं स्वलोकं स्वेन प्राप्यं वैकुण्ठादिस्थानं न विदुरित्यन्वयः। अनेन वैकुण्ठादिस्थानमीदृशमिति न जानन्ति, किमुत हरिमित्यर्थात् ध्वनितमिति ज्ञायते।

---

1--1. A, B, omit

अन्यथा विदुश्चेत्याह - आहुरिति। धूम्रे धूमरते धूममार्गे धीर्येषां ते धूम्रधियः। तत्र निमित्तमाह - अतद्विद इति। तस्य वेदस्य तत्त्वं ब्रह्मलक्षणं न विदन्तीति, कर्मणा सह वर्तत इति सकर्मकस्तम्॥ ४९॥

कर्म विनान्यन्न वक्तीति सकर्मकत्वमित्ययमविवेक इत्याह - **आस्तीर्येति**। बृहतां बहूनां वधात् संज्ञपनलक्षणात् यष्टाहमिति मानी त्वं कर्म नावैषि प्राचीनाग्रदर्भास्तरणं कृत्वा पशुसंज्ञपनमेव जानासि, न तु कर्मस्वरूपमित्यर्थः। ''कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम्'' (भ.गी.4-15) इत्यादिना विधीयमानं यत्परं कर्म तन्न जानासीत्युच्यते, न तु कर्ममात्रम्॥ ५०॥

**तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया।**
**हरिर्देहभृतामात्मा स्वयं प्रकृतिरीश्वरः॥ ५१॥**

**तत्पादमूलं शरणं यतः क्षेमो नृणामिह।**
**स[1] वै प्रियतमश्चात्मा[2] यतो न भयमण्वपि॥ ५२॥**

**इति वेद स वै विद्वान् यो विद्वान् स[3] गुरुर्हरिः।**

**[4-]नारद उवाच[-4]**

**प्रश्न एवं हि संछिन्नो भवतः पुरुषर्षभ॥ ५३॥**
**अत्र मे वदतो गुह्यं निशामय सुनिश्चितम्॥ ५४॥**

**क्षुद्रञ्चरं सुमनसां शरणे मिथित्वा[5] रक्तं षडङ्घ्रिगणसामसु लुब्धकर्णम्।**
**अग्रे वृकानसुतृपो[6]ऽविगणय्य यान्तं पृष्ठे मृगं मृगय[7] लुब्धकबाणभिन्नम्॥ ५५॥**

**श्रीध०** नारदः स्वयं कृपया तदुभयं[8] निरूपयति - **तदिति**। हरिं तोषयतीति हरितोषं, यत्तदेव कर्म। यया तस्मिन् हरौ मतिर्भवति, सैव विद्या महाफलत्वात्। कुत इत्यपेक्षायां हरेः परमफलत्वं दर्शयन्नाह - हरिरिति द्वाभ्याम्। हरिः देहभृतामात्मा ईश्वरश्च। तत्र हेतुः। स्वयं स्वातन्त्र्येण प्रकृतिः कारणम्॥ ५१॥

अतः तेषां[9] तत्पादमूलमेव शरणमाश्रयः। यतो यस्मिन्। न च तद्भजनेऽन्यभजन इव दुःखं भयं चेत्याह - **स** इति। [10-]अस्य पुंसः सोऽयं श्रीहरिः प्रियतमः। स वै आत्मत्वात् राजादिस्तु द्रव्याद्युपाधिना प्रियः, यतः श्रीहरिचरणशरणस्य अण्वपि न भयम्। अतः तत्पादमूलं शरणमित्यनेन सम्बध्यते[-10]॥ ५१॥

---

1. T सोऽयं 2. M, Ma, Ms प्रियतमो ह्यस्य; V प्रियतमश्चास्य; W प्रेष्ठतमश्चात्मा 3. M, Ma, Ms स्व 4--4. Ma, Ms omit 5. Ms म॰
6. M, Ma ॰हृदो॰ 7. M, Ma ॰यु 8. A, B, J, Va तद्द्वयं 9. V omits तेषां 10--10. A, B, J, Va omit

[1]इदानीमेवंविधं[1] स्तौति - **इतीति**। इति यो वेद स एव विद्वान् स गुरुः स एव हरिश्च। उक्तमुपसंहरति - प्रश्न इति। एवं भवतः प्रश्नः संछिन्नः परिहृतः ॥ ५३ ॥

तदेवमात्मनो बन्धमोक्षप्रकारे कथारूपेण कथितेऽपि नातिनिर्विण्णचित्तं पुत्रागमनं प्रतीक्षमाणं सन्तं तत्क्षणमेव महाभयकम्पितसकलगात्रं गृहान्निर्वासयितुं हरिणरूपकमाह - **अत्रेति**। वदतो मे वचः श्रृणु ॥ ५४ ॥

**क्षुद्रमिति**। क्षुद्रमल्पं चरतीति तथा तम्। अलुक्। सुमनसां पुष्पाणां शरणे आश्रमे वाटिकायां मिथित्वा मिथः परस्परं स्त्रिया सह मिलित्वा तत्रैव रक्तमासक्तं षडङ्घ्रयो भ्रमरास्तेषां गणास्तेषां सामसु गीतेषु [2]लुब्धौ कर्णौ[2] यस्य तम्। परेषामसुभिर्हृतैः स्वीयानसूंस्तर्पयन्तीत्यसुतृपः तानविगणय्य अगणयित्वा लुब्धकस्य बाणेन भिन्नं मृगं मृगय अन्वेषय ॥ ५५ ॥

**वीर०** अमुक्तिसाधनं कर्म विद्यां च निन्दति - **तदिति**। हरितोषं भगवत्तोषकारणं यत्तदेव कर्म प्रशस्तमितरत् निन्दितं यया विद्यया ज्ञानेन तन्मतिः हरिभक्तिः भवति सैव विद्या प्रशस्ता इतरा निन्दितेत्यर्थः। तथा चोक्तम् ''तत्कर्म यन्नबन्धाय सा विद्या या विमुक्तये। आयासायापरं कर्म विद्यान्या शिल्पनैपुणम्'' (विष्णु.पु. 1-19-41) इति। काऽसौ विद्या यया हरिमतिरिति विवित्सायां तत्त्वहितपुरुषार्थज्ञानमेवेत्याह - हरिरिति। भगवान्निरस्तनिखिलदोषः समस्तकल्याणगुणाकरः ईश्वरः स्वयं प्रकृतिर्जगदुपादानकारणं देहभृतामात्मान्तः प्रविश्य धारकः निरस्तनिखिल[3]दोषसमस्तकल्याणगुणाकरत्व सर्वान्तरात्मत्व विशिष्टत्वरूपं परतत्वं भगवच्छरीरत्वतत्सृज्यत्वादिकं स्वस्य तत्त्वम् ॥ ५१ ॥

एवं तत्वमुक्तं हितमाह - तस्य भगवत आत्मनो निरुपाधिकशेषिणः पादमूलं शरणं समीहितोपायः इह यतः यत्पादमूलशरणवरणान्नृणां क्षेमः सुखं भवेदित्यर्थः। एवं हित उक्तः, स ह्युपायः। पुरुषार्थमाह - स वै भगवान् अस्य शरणं गतस्य प्रियतमः निरतिशयप्रीतिविषयः ''प्रियो हि ज्ञानिनोऽत्यर्थम्'' (भ.गी. 7-17) इति भगवदुक्तेः एवं [4]पुरुषार्थः उक्तः[4] निरतिशयसुखमेव हि पुरुषार्थः। भगवतो निरतिशयसुखरूपत्वस्य ''आनन्दो ब्रह्मेति व्यजानात्'' (तैत्ति. उ. 3-6) इत्यादि श्रुत्यावगमात्। ''को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयाति'' (तैत्ति. उ. 2-7) इत्यानन्दावहत्वश्रवणाद्भगवदनुभव एव पुरुषार्थ इति भावः ॥ ५२ ॥

इत्युक्तविधा[5]नात् तत्त्वहितपुरुषार्थान् यो वेद स वै स एव विद्वान् यश्च विद्वान् स एव गुरुः यश्च गुरुः स एव हरिः ''आचार्यो

1--1. A, B, J, Va omit 2--2. A, B, J, Va लुब्धः कर्णो 3. A, B, T दोषत्व 4--4. A, T omit 3. A, B, T °नान्

ब्रह्मणो मूर्तिः'' (मनु.स्मृ. 2.226) इत्युक्तेः तत्त्वहितपुरुषार्थज्ञानमेवावश्यमुपादेयमिति भावः। ''ब्रूहि मे विमलं ज्ञानं येन मुच्येय कर्मभिः '' (भाग. 4-25-5) इति त्वया कृतस्य ज्ञानविषयप्रश्नस्येदमेव हरिर्देहभृतामित्युक्तं प्रधानमुत्तरम्। अन्यत्सर्वमेतदुपपादकमित्यभिप्रायेण उपसंहरति - प्रश्न इति। हे पुरुषर्षभ! भवतः प्रश्न एवं संछिन्नः हेयोपादेयज्ञानविषयप्रश्नः तज्ज्ञानविवेचनात् दत्तोत्तरो जात इत्यर्थः॥ ५३॥

तदेवमात्मनो बन्धमोक्षकारणे कथिते अधुनैवं कथिताभ्यामपि नातिनिर्विण्णचित्तं पुत्रागमं प्रतीक्षमाणं सन्तं तत्क्षणमेव महाभयकम्पितसकलगात्रं गृहान्निर्यापयितुं हरिणरूपकमाह - **अत्रेति**। वदतो वचः सुनिश्चितं गुह्यं निशामय श्रृणु॥ ५४॥

किं तदित्यत्राह - क्षुद्रञ्चरं क्षुद्रमल्पं चरतीति तथा, अलुगार्षः, बाहुलकात् खश् प्रत्ययः, पूर्वपदस्य मुमागमः, क्रिया विशेषणम्। सुमनसां पुष्पाणां शरणे आश्रमे वाटिकायां, मिथित्वा मिथः परस्परं स्त्रिया सह मिलित्वा, तत्रैव रक्तं षडङ्घ्रयो भ्रमरास्तेषां गणाः तेषां सामसु गीतेषु, लुब्धौ कर्णौ यस्य तं, परेषामसुभिः स्वीयानसून् तर्पयन्तीत्यसुतृपः तानग्रे स्थितान् वृकान् अविगणय्यानालोच्य यान्तं चरन्तं पृष्ठे लुब्धकस्य बाणेन भिन्नं मृगं हरिणं मृगय अन्वेषय विचारयेति मृगपक्षेऽर्थः। प्रकृतार्थस्तु क्षुद्रञ्चरं फलभोक्तारं सुमनसां स्त्रीणां शरणे गृहे मिथित्वा मिथुनीभूय षडङ्घ्रिगणसामसु मृगसदृशगायकगीतेषु वृकान् वृकवद्भीषणानहोरात्रादीनसृतृपः आयुर्हरानविगणय्य पृष्ठे परोक्षे लुब्धकबाणभिन्नं मृत्युपाशग्रस्तं मृगसदृशमात्मानं मृगय पर्यालोचयेति॥ ५५॥

**विज०** कल्पोक्तद्रव्यसामग्र्या क्रियमाणस्य कर्मणः कथं परत्वाभाव इति तत्राह - **तत्कर्मेति**। हरे स्तोषोऽनुग्रहलक्षणो यस्मात्तत्कर्म तस्मात् ब्रह्मार्पणबुद्ध्या क्रियमाणस्य कर्मणः परत्वं, न द्रव्यसामग्र्या तस्यावरत्वेन दारिद्र्यहेतुत्वात्। ननु ममापि वेदविद्याधिकारित्वेन कर्मानुष्ठानस्य तत्पूर्वकत्वमस्तीति तत्राह - सा विद्येति। यया विद्यया तस्य हरेर्मतिर्ज्ञानमुत्पद्यते सा विद्या वेदार्थज्ञानलक्षणा नान्या, अन्या त्वविद्या कर्मविषया हेयपक्ष इति। कोऽसौ हरिः येन तज्ज्ञानपूर्वकमनुष्ठितं कर्म सफलं स्यादत्राह- हरिरिति। दुरितहरणशीलत्वात् हरिः देहभृतां जीवानामात्मा स्वामी स्वयं सर्वव्यावृत्तः प्रकृतिः मूलकारणमीश्वरोऽणिमाद्यैश्वर्यरूप एषां गुणानामधिकरणभूतो यः स हरिरिति ज्ञातव्यम्॥ ५१॥

हरिरेवंविधश्चेत्ततः किमत्राह - **तत्पादेति**। यतो यस्मात् क्षेमो भवेन्नृणां तस्य हरेः पादमूलं शरणं रक्षकं ''शरणं गृहरक्षित्रोः'' (अम.को. उ. 209) इत्यभिधानम्। ननु पित्रादीनां वयसि गते पुत्रादीनामपि शरणत्वदर्शनात् किं विशिष्योच्यत इति तत्राह - स वा इति। भगवत्सम्पर्कात् पुत्रादीनां प्रियत्वात् हरेः प्रियतमत्वं कुत इति तत्राह - यत इति। श्रीनारायणचरणारविन्दशरणं गतस्यास्य संसारिणोऽण्वपि भयं नास्ति यतोऽथ तस्माद्धरिः पुत्रादेः प्रेष्ठ इति कृत्वा पुंसस्तत्पादमूलं शरणमित्यन्वयः॥ ५२॥

एवं वेत्तुरेव विद्वत्ता नानेवंविद इत्याह - **इतीति**। इति शब्दो हेत्वर्थः। यस्माद्धरिचरणशरणस्य मोक्षादिसर्वपुरुषार्थावाप्तिः तस्माद्य एवं वेद स वा एव विद्वान् नान्यः, कुतः स्वगुरुः स्वापेक्षिताशेषज्ञानोपदेष्टा तत्र हरेः सनिधानविशेषात् तत्सामर्थ्यमस्येति भावेनाह - हरिरिति। अनेन गुर्वादिशब्दप्रयोगेण देवादीनां मुख्यविद्वत्तेत्याह॥ ५३॥

**अत्रेति**। निशामय श्रृणु॥ ५४,५५॥

**सुमनस्समानधर्माणां[1] स्त्रीणां शरण आश्रये[2] पुष्पमधुगन्धवत्क्षुद्रतमं[3] काम्यकर्मविपाकजं कामसुखलवं जिह्वोपस्थादि[4] विचिन्वन्तं मिथुनीभूय रक्तं[5] तदभिनिवेशितमानसं[6] षडङ्घ्रिगणसामगीतवदतिमनोहर वनिताजनालापेष्व[7]तितरां[8] प्रलोभितकर्णमग्रे वृकयूथवदात्मन आयुर्हरतोऽहोरात्रादिकान्[9] काल[10]विशेषानविगणय्य गृहेषु विहरन्तं पृष्ठत एव[11] ''परोक्षामनुप्रवृत्तो लुब्धकः कृतान्तः[12] आत्तशरोऽयमिह पराविध्यतीति[13] तमिममात्मानमहो राजन् निर्भिन्न[14]हृदयं द्रष्टुमर्हसीति[15] यथा[16-] मृगयुहतं मृगमिति[-16]॥ ५६॥**

**स त्वं विचक्ष्य[17] मृगचेष्टितमात्मनोऽन्तः चित्तं नियच्छ हृदि कर्णधुनीं च चित्ते[18]**
**जह्यङ्गनाश्रमम[19]सत्तमयूथगायं प्रीणीहि हंसशरणं विरम क्रमेण॥ ५७॥**

**राजोवाच[20]**

**श्रुतमन्वीक्षितं[21] ब्रह्मन् भगवान् यदभाषत।**
**नैतज्जानन्त्युपाध्यायाः किं न ब्रूयुर्विदुर्यदि॥ ५८॥**

**संशयोऽत्र तु[22] मे विप्र सञ्छिन्नस्तत्कृतो[23] महान्।**
**ऋषयोऽपि[24] हि मुह्यन्ति यत्र नेन्द्रियवृत्तयः॥ ५९॥**

---

1. A, B, G, I, J, T सुमनस्समधर्माणां; M, Ma सुमनसां समानधर्माणां; Ms सुमनसां सुमनस्सधर्मणां 2. A, B, G, I, J, M, Ma, T °मे 3. M °द्रं का° 4. A, B, G, I, J, Ms, T जैह्व्यौपस्थ्यादि, M, Ma जैह्व्योपस्थादि; W जैह्वौपस्थादि 5. A, B, G, I, J, M, Ma, Ms, T omit रक्तं 6. A, B, G, I, J, M, Ma, Ms, T °म° 7. A, B, G, I, J, M, Ma, T °ताऽऽदिज° 8. A, B, G, I, J, M, Ma, T add अति 9. A, B, G, T, J, M, Ma, T °त्रान्तान्; Ms °त्रादीन् 10. A, B, G, I, J, T add लव 11. A, B, G, I, J, T add एव 12. A, B, G, I, J, T अन्तश्शरेण य°; M, Ma, Ms शरेण य° 13. A, B, G, I, J, M, Ma, Ms, T omit इति 14. A, B, G, I, J, M, Ma, Ms, T भिन्न 15. Ms omits इति 16--16. A, B, G, I, J, Ma, T omit 17. M, Ma, Ms °क्ष्व 18. M, Ma चितिम्; I, Ms, V चित्तम् 19. M, Ma, Ms भ्रम 20. Ms प्राचीनबर्हिः 21. W °मान्वीक्षिकं 22. M, Ma, Ms न 23. M, Ma °ते 24. Ms, V वि

**कर्माण्यारभते येन पुमानिह विहाय तम् ।**
**अमुत्रान्येन देहेन जुष्टान्[1]यसकृदश्नुते ॥ ६० ॥**

**श्रीध०** श्लोकं प्रस्तुते योजयन् व्याचष्टे - **सुमन** इति । सुमनोभिः समानो धर्मः परिणामविरसत्वं यासां स्त्रीणाम् । मिथित्वेत्यस्य व्याख्या मिथुनीभूयेति । स्त्रीभिः सहेति शेषः । रक्तमित्यस्य व्याख्या तास्वभिनिविशितं मनो येन । असुतृप इत्यस्य व्याख्या आयुर्हरत इति । यान्तमित्यस्य व्याख्या विहरन्तमिति । अन्तर्न[2]लिकायां गूढेन शरेण पराविध्यति दूरादेव ताडयति ॥ ५६ ॥

उपदेशसारमाह - **स** इति । [3-]एवं त्वमात्मनः स्वस्य मृगवच्चेष्टितं[-3] विचक्ष्य विचार्य, अन्तर्हृदि चित्तं कर्णयोः [4-]श्रोत्रेन्द्रियस्य[-4] धुनीं नदीमिव, बहिर्वृ[5]त्तिं चित्ते नियच्छ । एतच्च सर्वेन्द्रियोपलक्षणार्थम् । अङ्गनाश्रमं गृहाश्रमं च जहि । कीदृशम् ? असत्तमानामतिकामुकानां यानि यूथानि तेषां गाथा वार्ता यस्मिन् । हंसानां जीवानां [6-]परमहंसानां वा[-6] शरणमीश्वरं प्रीणीहि[7] प्रीणय[8] । [9-]तस्मिन् स्नेहेन विश्वासलक्षणं भक्तिं कुर्वित्यर्थः । एवं क्रमेण सर्वतो विरम[-9] ॥ ५७ ॥

अर्थान्तरं प्रष्टुं पूर्वोक्तमर्थमनुवदति - **श्रुतमिति** । श्रुतमन्वीक्षितं विचारितं च । ब्रह्मन् ! हे नारद ! एतत्त्वदुक्तमात्मतत्त्वमुपाध्याया ये मम कर्मोपदेष्टार आचार्यास्ते न जानन्ति । [10-]तत्र हेतुः यदि विदुस्तर्हि किं न ब्रूयुरिति[-10] ॥ ५८ ॥

**संशय** इति । अन्तः तत्कृतः उपाध्यायकृतः तद्वाक्यविरोधेन [11]आत्मतत्वे असम्भावनारूपो महान् संशयः संछिन्नः त्वया, अत्र तु कश्चित्संशयो वर्तते, यत्रेन्द्रियवृत्तीनामप्रवृत्तेः मुह्यन्ति ॥ ५९ ॥

संशयमाह - **कर्माणीति** द्वाभ्याम् । कर्माणि येन देहेन करोति तमत्रैव विहायामुत्र लोकान्तरे कर्मोपस्थापितेनान्येन देहेन जुष्टानि उपयुक्तानि, जीवोऽश्नुते प्राप्नोति ॥ ६० ॥

**वीर०** स्वयमेव श्लोकं प्रस्तुतेऽर्थे योजयन् व्याचष्टे - **सुमनस** इति । सुमनोभिः पुष्पैः समानो धर्मो यासां तासां परिणामविकारित्वात् स्त्रीणां, शरणे इति प्रतीकः । आश्रये[12] इति व्याख्या । गृहस्थाश्रम इत्यर्थः । क्षुद्रञ्चरमिति व्याचष्टे - पुष्पेति । पुष्पगतमकरन्दलेशवदल्पं काम्यकर्मणां परिणामजं कामसुखलवं, काम्यन्त इति कामा विषयास्तेषां सुखलेशं जैह्वं[13] जिह्वयाऽऽसादित मौपस्थम्[14] उपस्थेनेन्द्रियेणाऽऽसादितं चादिर्यस्य तद्विचिन्वन्तं, मिथित्वेत्यस्य व्याख्यानं मिथुनीभूयेति । रक्तमित्यस्य व्याख्या

---

1. A, B, G, I, J, T °मि स यदश्नुते 2. V °र्नाडिकायां 3--3. B, J, V, Va omit 4--4. B, J, V, Va omit 5. V °त्तं 6--6. A, B, J, Va omit 7. B, J, V, Va omit प्रीणीहि 8. A, B, J, Va omit प्रीणय 9--9. A, B, J, Va omit 10--10. B, J, V, Va omit 11. A, B, Va omit आत्मतत्वे 12. A, B, T °मे 13. A, B, T जैह्व्यं 14. A, B, T °स्थ्यम्

तदभिनिवेशितमनसमिति, तासु अभिनिवेशितं मनो येन तं, षडङ्घ्रिगणसामस्विति व्याचष्टे । भ्रमरगणानां सामगीतवन्मधुरध्वनिवदतिमनोहरा ये इच्छाविषयस्त्रीजनालापास्तेषु, लुब्धकबाणमिति व्याचष्टे। अतितरां प्रलोभितौ कर्णौ यस्य तम् अग्र इत्यादि व्याचष्टे। अग्रे पुरतः वृकसमूहवदात्मनः स्वस्यायुर्हरानहोरात्रादिकालविशेषानविगणय्य यान्तमिति व्याचष्टे। गृहेषु [1]विहरन्तं वैषयिकसुखदुःखादिकमनुभवन्तं, पृष्ठे इति सप्तम्यन्तं सार्वविभक्तिकः तसिल्प्रत्ययान्तेनानूद्य व्याचष्टे पृष्ठतः, परोक्षमिति। लुब्धकबाणभिन्नमिति व्याचष्टे अनुप्रवृत्त इति। सामर्थ्यं लब्धं लुब्धक इत्यस्य व्याख्यानम्। कृतान्त इति आत्तः स्वीकृतः मारणरूपो येन, इह शरीरिणं देहिनं पराविध्यति दूरादेव ताडयति। मृगयेति व्याचष्टे। तमिमं देहिनमात्मानं स्वात्मानं द्रष्टुमालोचयितुमर्हसि। तत्र दृष्टान्तः - यथेति ॥ ५६ ॥

उपदेशसारमाह - **स** इति। स त्वमुक्तविधः त्वं मृगचेष्टितं विचक्ष्याऽऽलोच्य आत्मनः स्वस्यान्तर्हृदि [2]हृदयगुहायां चित्तं मनः नियच्छ नियतं कुरु, चित्ते च कर्णधुनीं कर्णयोः धुनीं नदीमिव स्थितां ध्वनिना नदीव श्रूयमाणां, कर्मसु रुच्युत्पादिकामर्थवादात्मिकां श्रुतिं नियच्छ, कर्मसु रुचिं त्यजेत्यर्थः। कर्मयोः धुनीं वृत्तिमिति वा। अस्मिन्नपि पक्षे स एवार्थः, अङ्गनायाः स्त्रियाः आश्रमं [3]गृहं जहि गृहाश्रमं त्यज। कीदृशम् ? असत्तमानामतिकामुकानां यानि यूथानि तेषां गाथा वार्ता यस्मिन्। हंसानां जीवानां शरणमिष्टोपायं रक्षितारं च भगवन्तं वृणीहि वृणु शरणं गच्छ। असत्तमयूथनाथमिति पाठे असत्तमयूथः नाथः निर्वाहको यस्य तम् अङ्गनाश्रममित्यर्थः। विरम सांसारिकप्रवृत्तेरिति शेषः ॥ ५७ ॥

एवमुपदिष्टचिदचिदीश्वरतत्त्वः कर्मसु समुत्पादितवैराग्यो राजा उक्तमभिनन्दन् पुनरन्यानि संशयपदानि आविष्कुर्वन् पृच्छति - **श्रुतमिति** [4]त्रिभिः। हे ब्रह्मन्! भगवन् भवान् यदभाषत तदान्वीक्षिकमात्मान्वीक्षणोपयोगि श्रोतव्यमर्थजातं मया श्रुतम्। [5]अन्वीक्षितमिति पाठे विचारितमित्यर्थः। एतद्भवतोपदिष्टमस्मदुपाध्यायाः कर्मोपदेष्टारस्ते न जानन्ति। तत्र लिङ्गमाह - यदि विदुस्तर्हि किमर्थं न ब्रूयुः अतोऽकथनान्न जानन्त्येवातिगुह्यं भवतोपदिष्टमिति भावः ॥ ५८ ॥

अतस्तत्कृत उपाध्यायकृतः तद्वाक्यविरोधेनात्मतत्त्वेऽसम्भावनारूपो महान् संशयः सञ्छिन्नस्त्वया। अत्रतु कश्चित्संशयो[6]ऽनुवर्तते। यत्र संशयपदे इन्द्रियवृत्तीनामप्रवृत्तिः तत्र ऋषयोऽपि मुह्यन्ति ॥ ५९ ॥

किमत्र संशयपदं तदाह - **कर्माणीति**। पुमान् येन देहेन कर्माणि पुण्यापुण्यरूपाणि अत्र लोके आरभते करोति तं देहमिहैव विहाय कर्मोपस्थापितेनान्येन देहेन जुष्टानि सेवितानि विषयीकृतानि सुखदुःखानि असकृत् पुनःपुनर्भुङ्क्ते ॥ ६० ॥

---

1. A, B, T मृगमिव चरन्तं 2. A, B, T हृदु° 3. A, B, T omit गृहं 4. W omits त्रिभिः 5. W आ° 6. W omits अनु°

**विज०** स्वाभीष्टप्रकाशनाय स्वयमेव व्याचष्टे - **सुमनसामिति**। सुमनसां समानधर्माणां पुष्पवत्कोमलशरीराणां शरण आश्रमे अन्यत्र पुष्पाश्रये वने क्षुद्रं पुष्पमधुगन्धवदल्पं, किं तत्? काम्यकर्मविपाकजं प्रवृत्तकर्मफलं विषयसुखलेशं जैह्व्योपस्थादिविषयं चरं चरन्तं भुञ्जानमितस्ततो गत्वा विचिन्वन्तमन्विच्छन्तं तदर्थित्वात् मिथुनीभूय तदभिनिविष्टचेतनं षडङ्घ्रिगणसामगानवत् भ्रमरनिकर-सुन्दरगानवदतिमनोहरस्त्रीजनसंलापेषु अतितरामत्यन्तं प्रलोभितौ कर्णौ यस्य स तथा तं तदेकमग्नश्रोत्रमित्यर्थः, कुतोऽग्रे वृकान् वृकसधर्मानसुहृदः असुलक्षणमायुर्हरतोऽहोरात्रादिकालविशेषानविगणय्यागणयित्वा यान्तं क्रीडागृहे विहरन्तमित्यर्थः, पृष्ठे परोक्षमवस्थितः उपशये स्थितो लुब्धकसमानः कृतान्तः शरसमेनादृष्टेन यमात्मानं पराविध्यति तमिममात्मानं जीवं भिन्नहृदयं मृगपर्यालोचनयालोच्य च द्रष्टुमर्हसीत्यर्थः। कथमिव? मृगयुहतं मृगं हरिणमिवेति॥ ५६॥

मद्वाक्ये श्रद्धा चेद्धितमुपदिशामीत्याह - **सत्वमिति**। यः पूर्वं कर्मठः स त्वं मृगवच्चेष्टितं चेष्टा यस्य स तथा तं, मृगस्येव विषयानन्विच्छतो जीवस्य चेष्टितमिति वा। विचक्ष्व पश्य। आत्मनस्तव चित्तं पूर्वकृतस्मरणसमर्थमन्तः करणविशेषमन्तः स्थिते हृदि सर्वपापहरे हृन्नाम्नि हरौ नियच्छ तत्रैव स्थापय। कर्णधुनीं कर्णधारामिव स्थितां चित्तं बुद्धिं च हरौ स्थापय। कर्णादीन्द्रियप्रवृत्तिहेतुभूतां वा कर्णाख्यधुनीं वा तत्कथाश्रवणे बुद्धिं च तद्गुणनिर्णये वा असत्तमानां विषयिणां यूथस्य गाथा विषयवार्तावदाकाशे यस्मिन् तमङ्गनाश्रमं[1] जहि। हंसो निर्दोषः परमात्मा मम शरणमिति शरणं प्रीणीहीति क्रमेण साधनसामग्र्यनुसारेण विरम संसाराद्विरतो भूया इत्यन्वयः॥ ५७॥

राजा तावदियन्तं कालं मया भाषितं तदस्य हृद्गतं नाभूत् प्रतिवाक्याश्रवणादिति संशयनिरासायाह - **श्रुतमिति**। श्रुतं श्रुति प्रसिद्धमन्वीक्षितं विचारितमात्मयोग्यज्ञानं यद्भगवानभाषत नैतन्ममोपाध्याया जानन्ति तत्र हेतुमाह - किं नेति। प्रथमं त्वन्मुखात् श्रुतं पश्चादन्वीक्षित माम्रेडितमिति वा॥ ५८॥

अथं किं तत्राह - **संशय** इति। अत्रास्मिन्नर्थे मे संशयो न छिन्नः अल्पत्वात् मया न छेदित इति नेत्याह-तत्कृत इति। तत्कृते तदर्थविषये महान् संशय इत्यर्थः। सूक्ष्मत्वेनाज्ञातविषयत्वात् महत्त्वं न तु स्थूलपरिमाणत्वादिति भावेनाह - ऋषय इति। कुत्र मुह्यन्तीत्यत्राह - यत्रेति। यत्र संशयार्थे चक्षुरादीन्द्रियव्यापारागोचरत्वादित्यर्थः, अतस्त्वां पृच्छामीति शेषः॥ ५९॥

कोऽसौ संशय इत्यत्राह - **कर्माणीति**। इह पुमान् येन देहेन कर्माण्यारभते तस्य प्रारब्धकर्मक्षये तं देहं विहायामुत्र परलोके स पुमान् येन प्रेताख्येन जुष्टानि कर्मफलानि अश्नुत इति यत् कथमन्यः कर्ताऽन्यो भोक्तेत्यकृताभ्यागमादिदोषापत्तेः॥ ६०॥

---

1. A °श्रमं

इति वेदविदां वादः[1] श्रूयते[2] तत्र तत्र ह।
कर्म च[3] क्रियते प्रोक्तं परोक्षं न प्रकाशते ॥ ६१ ॥

नारद उवाच

येनैवारभते[4] कर्म तेनैवामुत्र तत्पुमान्।
भुङ्क्ते ह्यव्यवधानेन लिङ्गेन मनसा स्वकम्[5] ॥ ६२ ॥

शयानमिममुत्सृज्य श्वसन्तं पुरुषो यथा।
कर्मात्मन्याऽऽहितं भुङ्क्ते तादृशेनेतरेण वा ॥ ६३ ॥

ममेति[6] मनसा यद्यदसावहमिति ब्रुवन्।
गृह्णीयात्तत्पुमान् राद्धं कर्म येन पुनर्भवः ॥ ६४ ॥

यथाऽनुमीयते चित्तमुभयैरिन्द्रियेहितैः[7]।
एवं प्राग्देहजं कर्म लक्ष्यते चित्तवृत्तिभिः ॥ ६५ ॥

**श्रीध० इतीति**। इति वादः श्रूयते "प्राप्य पुण्यकृतांल्लोकान्" (भ.गी. 6-41) इति। "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" (मनु.स्मृ. 12-9) इति। त्वया चोक्तं "शाश्वतीरनुभूयार्तिम्" (भाग. 4-28-27) इति। एतच्च कर्तृभोक्तृदेहभेदेन कृतनाशाकृताभ्यागमप्रसङ्गान्न सङ्गच्छत इति भावः। संशयान्तरमाह - प्रोक्तं वेदोक्तं कर्म यत्[8]क्रियते जनैः तच्चानन्तरक्षण एव परोक्षम् अदृश्यं सत् न प्रकाशते। अतः कर्मणो नष्टत्वात्तद्भोगोऽपि दुर्घट इति भावः ॥ ६१ ॥

प्रथमस्योत्तरमाह[9] - **येनैवेति**। [10-]लिङ्गशरीरस्य मनः प्रधानत्वात्। मनसा लिङ्गेनेति सामानाधिकरण्यम्। येनैव लिङ्गेन पुमान् कर्म आरभते[-10] तेनैव अव्यवधानेन कर्तृभोक्तृदेहविच्छेदं विना [11-]अमुत्र तत् स्वं कर्म भुङ्क्ते[-11]। स्थूलदेहनाशेऽपि मनःप्रधानस्य लिङ्गदेहस्यानाशान्नोक्तदोषप्रसङ्ग इत्यर्थः ॥ ६२ ॥

लिङ्गदेहविशिष्टस्य भोक्तृत्वं स्वप्नदृष्टान्तेन स्पष्टयति - **शयानमिति**। शयानमिमं जाग्रद्देहं श्वसन्तं जीवं तमुत्सृज्य तदभिमानं

---

1. M, Ma, Ms वाचः 2. M, Ma, Ms श्रूयन्ते 3. A, B, G, I, J, T यत्क्रि° 4. Ms, V °भ्यते 5. A, B, G, I, J, T स्वयम् 6. A, B, G, I, J, T ममैते 7. M, Ma, V °यैर्हितैः 8. V omits यत् 9. A, B, J, Va omit आह 10--10. A, B, J, Va omit 11--11. A, B, J, Va omit

त्यक्त्वात्मनि मनसि संस्काररूपेणाऽऽहितं कर्म यथा भुङ्क्ते तादृशेन शयानदेहसदृशेन कर्मोपस्थापितेन देहेनान्येन वा पश्वादिदेहेन तथा लोकान्तरेऽपीति भावः ॥ ६३ ॥

ननु भवतु नाम लिङ्गविशिष्टस्य अनेन दृष्टान्तेन भोक्तृत्वं, कर्तृत्वं तु दानप्रतिग्रहादिषु स्थूलदेहविशिष्टस्यैव दृश्यते तत्राह - **ममेति** । ममैते पुत्रादयः असावहं ब्राह्मण इति ब्रुवन् मनसा यद्यद्देहं गृह्णीयात् तत्[1] ततो देहाद्राद्धं सिद्धं कर्म पुमान् गृह्णीयात्, येन कर्मणा एवम[2]हङ्कारगृहीतेन पुनर्भवो भवति । अन्यथा जन्मानुपपत्तेः । अतोऽभिमन्तुः[3] मनोविशिष्टस्यैव कर्तृत्वम्, अभिमानविषयस्य तु देहस्य पुत्रादिदेहवत् द्वारमात्रत्व[4]मिति भावः ॥ ६४ ॥

यदुक्तं कर्मणो नष्टत्वात् नामुत्र भोग इति तत्राह - **यथेति** । उभयैर्ज्ञानकर्मरूपैरिन्द्रियाणामीहितैः कदाचित्कर्मप्रवृत्तिभिः चित्तमनुमीयते । सत्यपि सर्वेन्द्रिय विषयसम्बन्धे युगपज्ज्ञानानुत्पत्तेः । तदुक्तमक्षपादेन "युगपज्ज्ञानानुत्पत्तिमनसो लिङ्गम्" इति । एवं चित्तवृत्तिभिरपि पूर्वदेहजं कर्म लक्ष्यते तासामपि युग पदनुत्पत्तेः ॥ ६५ ॥

**वीर०** इत्येवंविधा वेदविदां भवादृशानां वाचः तत्र तत्र[5] स्मृतिपुराणादिषु श्रूयन्ते । तथाहि सूत्रं - "वर्णाश्चाश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टकुलजातिरूपा[6]श्रयश्रुतवित्तसुखमेधसो जन्म प्रतिपद्यन्ते विष्वञ्चो विपरीता नश्यन्ति" इति । भवताप्युक्तं "गुणाभिमानी स तदा कर्माणि कुरुतेऽवशः । शुक्लं कृष्णम्" (भाग. 4-29-27) इत्यादिना । संशयविषयमुद्धारयति - कर्म चेति । प्रोक्तं सुखदुःखहेतुत्वेन ब्रह्मवादिभिः प्रोक्तं पुण्यापुण्यरूपं कर्म क्रियते जनैः तच्चानन्तरक्षण एव परोक्षमदृश्यं सत् न प्रकाशते । न प्रकाशत इति वर्तमाननिर्देशेन प्राक्तनदेहकृतानां यथाऽस्मिन् देहे न प्रकाशस्तथैतद्देहकृतानामुत्तरजन्मन्यप्रकाशः । तथा यथैव पूर्व[7]पूर्वक्षणगोचराणामुत्तरोत्तरक्षणागोचरत्वं तथेति च दृष्टान्तद्वयमभिप्रेतम् । चकारेण कर्मणि हेतुभूतं सत्त्वादिगुणयुक्तं मनः, तद्युक्तं शरीरं च न प्रकाशत इति विवक्षितम् । न हि पूर्वदेहकृतकर्माणि तन्निमित्तं सत्त्वादिगुणयुक्तं मनः तद्युक्तं च शरीरं चेदानीमुपलक्ष्यन्ते, अतस्ते कर्मगुणमनोदेहाः पूर्वं नाऽऽसन् अतस्ते नेदानीं सुखादिहेतवः । एवं तत्तद्देहकृतकर्मगुणमनोदेहाः उत्तरजन्मसुखदुःखादिहेतवो न भविष्यन्ति , किन्तु निर्निमित्तमेव सुखदुःखप्राप्तिरिति मे प्रतिभातीत्यर्थः ॥ ६१ ॥

एवमापृष्टो भगवान् नारदः तत्प्रश्नं परिहरति - **येनैवेति** । तत्र यदुक्तमुत्तरोत्तर जन्मसुखदुःखादि हेतुभूतकर्माश्रयपूर्व[8]पूर्वदेहानां विनष्टत्वात्तन्निमित्तं सुखदुःखादिकमनुपपन्नं, न ह्याशुविनाशस्वभाव निराश्रय कर्मान्यकालिकसुखादिहेतुः, न हि विनष्टानां

---

1. V omits तत्  2. B, J, Va omit एवम्  3. V मातुः  4. V मात्रमिति  5. A, B,T omit तत्र  6. A, B, T रूपायुः  7. A, B, T omit पूर्व
8. A, B, T omit पूर्व

कुलालचीवरदण्डचक्रादिव्यापाराणां कालान्तरभाविघटादिहेतुत्वमिति येनैव मनसा निमित्तभूतेन पुरुषः कर्म आरभते तेनैवाव्यवधानेनाविश्लिष्टेन लिङ्गेन पुण्यापुण्यकर्म हेतुभूतेन मनसा स्वकं स्वकर्मानुगुणं सुखदुःखादिफलममुत्र परलोके भुङ्क्ते। स्थूलशरीरकर्मणो विनाशेऽपि मनसो लिङ्गभूतस्य साध्वसाधुकर्मनिमित्तभगवदनुग्रहनिग्रहरूपपुण्यापुण्यविषयस्य क्षेत्रज्ञस्य च देहान्तरेऽप्यनुवृत्तेः सुखाद्युपपत्तिरिति भावः। पुण्यापुण्ययोः भगवदनुग्रहनिग्रहरूपत्वं तदधिगमाधिकरणे भाष्यादौ स्पष्टमुक्तम्॥ ६२॥

लिङ्गात्मनोरनुवृत्त्या भोगोपपत्तिं दृष्टान्तेन स्पष्टयति - **शयानमिति**। शयानमिमं जाग्रद्देहं, श्वसन्तं जीवन्तमुत्सृज्य तदभिमानं त्यक्त्वा, आत्मनि मनस्याऽऽहितं दैवोपसादितं कर्म स्वप्नद्रष्ट्रैकानुभाव्यं तत्कालमात्रावस्थायि सुखदुःखादिस्वकर्मफलं यथा पुमान् तादृशेन शयानदेहसदृशेन मनुष्यदेहेनान्येन देवादिशरीरेण वा स्वप्ने भुङ्क्ते लिङ्गात्मनोरनुवृत्तेस्तथा लोकान्तरेऽपीति भावः॥ ६३॥

यदुक्तं कर्म क्रियमाणमन्तरक्षण एवं विनष्टं सत् कालान्तरानुभाव्यफलहेतुः कथमिति तत्राह - ममेति। पुमानसौ अहं ब्राह्मणोऽहं, क्षत्रियोऽहमिति ब्रुवन् देहात्माभिमानयुक्त इत्यर्थः। ममैतत् मत्फलसाधनत्वात् मदर्थमिदं कर्मेति मनसा यद्यत्कर्म गृह्णीयात् कुर्यादित्यर्थः। तत्तत्कर्मेति राद्धं सिद्धं कर्मणो विनाशेऽपि कर्मणः शक्तिरीश्वरस्य निग्रहानुग्रहरूपा सिद्धैवेत्यर्थः। कर्म विशिनष्टि - येन कर्मणा पुनर्भवः पुनर्जन्म भवेत्॥ ६४॥

मनसः कर्मणः पुनर्जन्मनश्च सद्भावे प्रमाणमाह - यथेति। उभयैः ज्ञानकर्मरूपैरिन्द्रियेहितैः [1-]इन्द्रियाणामीहितैः[-1] कादाचित्कप्रवृत्तिभिर्मनोऽनुमीयते, सत्यपि सर्वेन्द्रियविषयसम्बन्धे युगप[2]ज्ज्ञानानुपपत्तेः, तदुक्तमक्षपादेन ''युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्'' (न्या.सू. 1-16) इति। एवं चित्तवृत्तिभिरपि पूर्वदेहजं कर्म लक्ष्यते, तासामपि युगपदनुपपत्तेः। इन्द्रियैर्हितैरित्यपि पाठः। तत्र हितैर्गतैर्निवृत्तव्यापारैः इन्द्रियैः उभयैः ज्ञानकर्मरूपेण द्विविधैः मनोऽनुमीयते, तेषां क्रमव्यापारदर्शनादित्यर्थः। एवं चित्तवृत्तिभिः पूर्वदेहकृतं कर्मानुमीयते॥ ६५॥

**विज०** तदप्रामाणिकमिति च वक्तुं न शक्यमित्याह - **इतीति**। श्रूयन्त इत्यनेन श्रुतयः स्मृतयोऽपि गृह्यन्ते, तेनाऽऽबालवृद्धप्रसिद्धिः द्योत्यते, अतो महान् संशय इत्यर्थः। अनेन देहव्यतिरिक्तात्मसद्भावे कथमिति संशयो युज्यते, स एव नास्ति देहभस्मीभावेन तस्यापि भस्मीभूतत्वादिति मतमपि प्रत्युक्तम् आगमस्याप्रामाण्ये तद्गुरुवाक्यस्यापि समन्यायः स्यादिति, किञ्च स्वर्गादिकामैर्जनैः कर्म क्रियते तत्परोक्षं पश्चान्न प्रकाशते नष्टत्वात्, अतः तादृशं कर्म अर्थफलं न ददाति, न हि मृतः पिता पुत्रायाऽऽनीय कदलीफलं रातीति युज्यत इत्ययमन्योऽपि संशयः॥ ६१॥

---

1--1. A, B, T omit 2. W °पद्भावानु°

प्रथमप्रश्नं प्रत्याह - **येनेति**। लिङ्गं शरीरं तस्य मनःप्रधानत्वाल्लिङ्गेन मनसेति सामानाधिकरण्यं, मनसा प्रेरितेन येन लिङ्गेन देहेन पुमान् कर्माऽऽरभते तेनैवामुत्रस्वर्गादौ अव्यवधानेन प्रत्यक्षेण कालेन स्वकं कर्म भुङ्क्ते तत्फलं सुखदुःखलक्षणमनुभवतीत्यन्वयः। स्थूलशरीरस्य लिङ्गनिमित्तत्वात्तन्नाशेऽपि कर्तुः लिङ्गस्याविनष्टत्वान्नाकृताभ्यागमादिदोषप्रसक्तिः, सूक्ष्मरूपेण सत्त्वात् लिङ्गेन लीन कर्मफलज्ञापकेन मनसा तत्फलानुभवोपपत्तेरिति वा॥ ६२॥

कथमिव स्वप्नकाले श्वसन्तं प्राणवृत्तिमन्तं पर्यङ्के [1-] शयानं दृष्टिविषयं देहमुत्सृज्य पुरुषो भोक्ता तादृशेन शयने शयानशरीरसदृशेन [-1] इतरेण पतितदेहविलक्षणदेहेन वा, आत्मनि मनसि आहितं सन्निहितं कर्म भुङ्क्ते। एतदुक्तं भवति स्थूलदेहस्य शय्यायां शयनत्वात् स्वप्नभोगनिमित्तकर्मोपार्जितेन देहेन लिङ्गिन एव यथा भोक्तृत्वमत्राप्येवमिति आत्मन्याहितमित्यनेन द्वितीयप्रश्नोऽपि प्रयुक्त इति ज्ञायते॥ ६३॥

ननु साक्षात्कर्तृत्वं भोक्तृत्वं मनसो लिङ्गस्य उत उभयोः तद्वतो वेति संशयनिरासार्थमाह - **ममेति**। यः पुमान् ममेदं सुखसाधनमिति मनसा सङ्कल्प्य कृष्णमित्रस्याहिताग्नेः पुत्रोऽसावहं नारायणमित्रो याज्ञिकः कथं स्यामिति वाचा वदन् यद्यत्कर्म कर्तुं गृह्णीयादुपादत्ते स एव पुमान् तद्राद्धं सिद्धं कर्म भुङ्क्ते येन भुक्तशेषेण कर्मणा पुनर्भवः पुनरुत्पत्तिः मर्त्यलोक इति शेषः, तस्मात् साक्षात्कर्ता भोक्ता च पुरुष एव तत्र मनसोऽन्तरङ्गत्वमिति भावः। अनेन जन्मान्तरेऽपि कर्मणः फलदातृत्वप्रतीतेः, किं पुनः परलोक इति दर्शितम्॥ ६४॥

ननु कर्मणो देहाद्यारम्भकत्वं कथं सङ्घाघटीति आचरणानन्तरक्षण एव नष्टत्वात्, अतएव मनसोऽप्यन्तरङ्गत्वमिति न शक्यं कृष्णचापमुक्तशरवेगसंस्कारवत् कर्मणोऽपि कार्यकारणक्षमत्वोपपत्तिरन्तरङ्गत्वं मनसोऽन्वयव्यतिरेकसिद्धमित्यभिप्रेत्याह [2] - **यथेति**। उभयेषां ज्ञानकर्मेन्द्रियाणामुभयविधैरीहितैश्चित्तमन्तः करणापरपर्यायमस्तीत्यनुमीयते तस्मिन् सति ज्ञानं कर्म चोत्पद्यते असति आलोकादिसाधनसामग्र्यां सत्यामपि तस्मात्तन्नियामकमन्तः करणं किञ्चिदस्तीति ज्ञायते यथा तथान्तःकरणवृत्तिविषयेषु मनोव्यापारैः प्राग्देहजातं कर्म ईदृशं शुक्लरक्तकृष्णान्यतममिति लक्ष्यतेऽनुमीयते, देहवत एव ईदृशज्ञानसम्भवात्, कर्मणो देहाद्यारम्भकत्वं च युक्तमिति बोद्धव्यम्॥ ६५॥

**नानुभूतं क्व चानेन देहेनादृष्टमश्रुतम्।**
**कदाचिदुपलभ्येत यद्रूपं यादृगात्मनि॥ ६६॥**

1--1. A omits 2. A °मित्याह

तेनास्य तादृशं[1] राजन् लिङ्गिनो देहसम्भवम्[2]।
श्रद्धत्स्वाननुभूतो[3]ऽर्थो न मनः स्प्रष्टुमर्हति॥ ६७॥

मन एव मनुष्यस्य पूर्वरूपाणि शंसति।
भविष्यतश्च भद्रं ते तथैव न भविष्यतः॥ ६८॥

अदृष्टमश्रुतं चा[4]त्र क्वचिन्मनसि दृश्यते।
यथा[5] तथाऽनुमन्तव्यं देशकालक्रियाश्रयम्॥ ६९॥

सर्वे[6] क्रमानुरोधेन मनसीन्द्रियगोचराः।
आयान्ति स[7]र्वशो यान्ति सर्वे[8] समनसो जनाः॥ ७०॥

**श्रीध०** इतोऽपि कर्म लक्ष्यत इत्याह - **नानुभूतमिति** द्वाभ्याम्। अनेन वर्तमानेन देहेन क्व च कुत्रचिदपि यन्नानुभूत[9]मननुभूतमनुपभुक्तमदृष्टं चाश्रुतं च यद्रूपं यदात्मकं यादृक् यत्प्रकारं च तत्कदाचित् स्वप्नमनोरथादिष्वात्मनि मनस्युपल[10]भ्येत॥ ६६॥

**तेनेति**। तेन हेतुना अस्य लिङ्गिनो वासनाश्रयस्य जीवस्य तादृशं तदनुभावादियुक्तं पूर्वदेहसम्भवं श्रद्धत्स्वनिश्चयेन मन्यस्व। न ह्यननुभूतोऽर्थो मनःस्प्रष्टुं मनसि स्फुरितुमर्हसि॥ ६७॥

किञ्च मनोवृत्त्यैव पूर्वापराणि शुभाशुभनिमित्तानि शरीराणि वि[11]ज्ञायन्त इत्याह - **मन** एवेति। भद्रं त इति सम्यगवधानार्थमाशिषाऽभिनन्दति। भविष्यत उद्भवं प्राप्स्यतो, नभविष्यतो नीचत्वं प्राप्स्यतोऽपि, भावीनि रूपाणि शंसति। मन एवौदार्यकार्पण्यादिवृत्तिभिः पूर्वमप्येवमेवासीत् पश्चादप्येवमेव भविष्यतीति [12-]भूतभाविरूपाणि[-12] ज्ञापयतीत्यर्थः॥ ६८॥

न कदाचिद्दर्शनानर्हमपि स्वप्ने प्रतीयते यथा पर्वताग्रे समुद्रो, दिवा नक्षत्राणि, स्वशिरश्छेद इत्यादि तत्राह - **अदृष्टमिति**। अन्यदेशाश्रय समुद्रादिकं पर्वताग्रे, निशाश्रयं नक्षत्रादिकं दिवा, अभ्यङ्गादिक्रियाश्रयं स्वशिरश्छेदनाश्रयं निद्रादिदोषेण हि[13] तथा प्रतीयत इत्यनुमन्तव्यं परस्यापि तदनुपपत्तेः तुल्यत्वादिति भावः॥ ६९॥

---

1. M, Ma, Ms °शो 2. M, Ma, Ms °वः 3. M, Ma, Ms °तार्थं 4. M. Ma चेह 5. W य° 6. Ma कर्मानु 7. A, B, G, J, M, Ma, Ms, T वर्गशो; I बहुशो 8. M, Ma, Ms सुमनसो जवात् 9. V omits अननुभूतम् 10. A, B, V, Va लभ्यते 11. A, B, J, Va omit वि 12--12. B, J, V, Va omit 13. V omits हि तथा

ननु दरिद्रः क्वचिदात्मानं महाराजं[1] पश्यति महाराजश्च दरिद्रम्[2] आत्मानं पश्यति तत्कथमसम्भावितं सङ्गच्छेत[3] तत्राह - **सर्व** इति। आयान्ति भोग्यत्वेन प्राप्नुवन्ति, यान्ति च भोगानन्तरम्। यदि च कश्चिदमना भवेत् तर्ह्येवं न स्यान्न त्वेतदस्तीत्याह - सर्वे सुम न स इति। अतः सर्वेषां समनस्कत्वात् मनसि च सर्वार्थानां क्रमेण प्रवेशान्नात्यन्तादृष्टचरः कस्यापि कश्चिदर्थोऽस्तीत्यर्थः ॥ ७० ॥

**वीर०** तदेव विवृणोति - **नानुभूतमित्या**दिना। यादृगात्मनः मृदात्मको घट इतिवदयं निर्देशः, यादृशस्य वस्तुनो यद्रूपम् अनेन देहेनोपलक्षितेन पुंसा कुत्रचिदपि न दृष्टं न श्रुतमिन्द्रियान्तरेण प्रमाणान्तरेण च[4] अननुभूतं तन्न कदाचित् स्वप्नमनोरथादिषूपलभ्यते न बुद्धिस्थं भवेत्। इहजन्मन्यननुभूतमपि किञ्चित्कदाचिद् बुद्धिस्थं भवति इच्छाविषयतया मनसि वर्तत इत्यर्थः ॥ ६६ ॥

ततः किमित्यत्राह - **तेनेति**। अस्य लिङ्गिनः मनोयुक्तस्य पुंसः तेन अनुभूतार्थस्यैव मनोरथविषयत्वेन हेतुना हे राजन्! तादृशं मनोरथाविषयतदर्थानुभवयोग्यं देहसम्भवं श्रद्धत्स्व निश्चयेन मन्यस्व। अननुभूतार्थो न मनः स्प्रष्टुमर्हति। न ह्यननुभूतार्थो मनः मनसि स्प्रष्टुं स्फुरितुमर्हति न पूर्वकालाननुभूतार्थः कालान्तरे मनोरथविषयः स्यादित्यर्थः। अनुभूतार्थे एव मनोरथः इह जन्मन्यनुभूतार्थविषयमनोरथो वासनया सा च पूर्वानुभवादनुभवश्च देहयोगेनेति पूर्वजन्मसिद्धिः। जन्मतारतम्यनिर्हेतुकत्वायोगात् कर्मतारतम्य सिद्धिश्चेत्यर्थः ॥ ६७ ॥

**मन एवेति**। इदानीं सदसद्रुचिविशेषान्वितं "मन एव मनुष्यस्य पूर्वरूपाणि शंसति" (भाग. 4-29-68) प्रकृष्टाप्रकृष्टवासनानिमित्त सत्त्वादिगुणप्रचुरपूर्वदेहयोगाननुमापयति। भविष्यतो देहयोगान् न भविष्यतः वर्तमानान् सत्वादिगुणप्रचुरदेहयोगांश्च शंसति। सति सत्त्वैकनिष्ठे इति वक्ष्यमाणत्वात्। यद्वा न भविष्यतः अभविष्यतः वर्तमानमनुष्यरूपाणीत्यर्थः। भद्रं ते इति सम्यगवधारणार्थमाशिषाऽभिनन्दति ॥ ६८ ॥

अननुभूतार्थानां मनोरथाविषयत्वं "नानुभूतं क्वचानेन" (भाग. 4-29-66) इति व्यतिरेकमुखेनाभिधायान्वयमुखेनाप्याह **अदृष्टमिति**। इह जन्मनि क्वचिदप्यदृष्टमश्रुतं च मनसि दृश्यते मनोरथगोचरो भवतीत्यर्थः, केनाकारेण मनोरथगोचरत्वं पूर्वानुभवश्च तत्राह - यथेति। देशकालक्रियाश्रयं देशाश्रयं कालाश्रयं क्रियाश्रयं च रूपं यथा यथा येन येन प्रकारेण बुद्धिस्थं भवति तत्तथानुमन्तव्यं न त्वेवम्भूतमिति कार्त्स्न्येन वक्तुं शक्यं, बुद्धिस्थानां रूपाणामानन्त्यादित्यर्थः। मम निवासदेश ईदृशः स्यात्, एवंविधः कालो भवेदहमेव करवाणीति मनुष्याणामसम्भावितमर्थविशेषं प्रति मनोरथ-सहस्रं यथारुचि मनसि वर्तते इति यावत् ॥ ६९ ॥

---

1. A, B, J, Va राजा च  2. A, B, J, Va रङ्कम्  3. V °त्  4. A, B, T वा

ततः किम् ? पूर्वजन्मनः कर्मणश्च सिद्धावित्यत्राह - **सर्व** इति। इह जन्मनि मनोरथविषयभूताः पदार्थाः पूर्वजन्मनि क्रमेणेन्द्रियगोचरा भूत्वा क्रमेणेति मनस्सद्भावोऽपि दर्शितः। मनसोऽभावे सर्वेन्द्रियसम्बन्धाद्युगपत्सर्वेन्द्रियवृत्तिप्रसङ्गः, तत्सद्भावे तु येनेन्द्रियेण मनसः संयोगः तस्यैवेन्द्रियस्य व्यापार इत्युपपत्तिः। अत्र क्रमेणेन्द्रियगोचरा भूत्वा मनसि वर्तन्ते पूर्वानुभवजनितवासनाविशेषेण हि प्रतिपुरुषं रुचिविशेषः। न हि विना कारणेन कार्यं भवति एवं मनसि वर्तमानमनोरथसहस्रानुगुणं वासनानुमीयते, सा च पूर्वानुभवमनुमापयति, इह जन्मनि तादृगनुभवाभावाद्देहान्तरेण तदनुभव इति पूर्वजन्मसिद्धिः। जन्मतारतम्यस्य निर्हेतुकत्वायोगाद् विविधादृष्टसिद्धिरिति मनसः कर्मणः पूर्वजन्मनश्चोपादानं कृतं भवति। आयान्ति वासनोन्मेषादायान्ति बुद्धिस्था भवन्ति, यान्ति वासनाभिभवान्न बुद्धिस्था भवन्ति। यदि कश्चिदमना भवेत् तर्ह्येवं न स्यान्न त्वेतदस्तीत्याह - **सर्व** इति। अतः सर्वेषां समनस्कत्वात् मनसि च सर्वार्थानां क्रमाद्वासनानुसारेण प्रवेशान्नात्यन्ताननुभूतोऽर्थः कस्यापि कश्चिदस्तीत्यर्थः। नन्विह जन्मनि जन्मान्तरे वाऽनुभूतार्थ एव मनोरथविषय इत्युक्तम्। यद्येवं तर्हि मुक्तानन्दोऽपि मुमुक्षोः कदाचिन्मनोरथविषयो भवेदिति सोऽपि पूर्वमनुभूत एव स्यात् अस्त्विति चेन्न पुनर्जन्मानुपपत्तेः। "न च पुनरावर्तते" (छान्दो. उ. 1-15-1) इति श्रुतेः "अनावृत्तिश्शब्दात्"(ब्रह्म. सू. 4-4-22) इत्यादिसूत्रस्य च विरोधप्रसङ्गात्। मैवम्, प्रकृतिपरिणायात्मकदेहानुभाव्यानामेवाननुभूतानां मनोरथविषयत्वासम्भवाभिप्रायत्वात्तदुक्तेः। अस्तु वा मुक्तानन्दोऽपि मनोरथविषयस्तथापि मनोरथविषयो भवन् मुक्तानन्दः "सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा" (तैत्ति. उ. 2-1-1) इत्यादिवाक्यावगतनिरतिशयानन्दरूपत्वेन परोक्षमेव मनोरथविषयो विषयो भवेत्। अनुभवोऽपि पूर्वं शब्दजन्यप्रमिति विषयत्वेन परोक्षमेव स्यात्। अत एव हि "यद्रूपं यादृगात्मनि (भाग- 4-29-64) "यथा तथानुमन्तव्यं देशकालक्रियाश्रयम्" (भाग. 4-29-67) इत्युक्तम्। यादृग्रूपेण पूर्वमनुभूतं तादृग्रूपेणैव मनोरथविषयो भवतीति हि तदर्थः, ततश्चेदानीं मनोरथविषयस्यापि मुक्तानन्दस्य "सोऽश्नुते" (तैत्ति. उ. 2-1-1) इत्यादि मुक्तानन्दप्रकरणावगतप्रकारवैशिष्ट्येन परोक्षमेव मनोरथविषयत्वात्तस्य पूर्वानुभवोऽपि तादृश एव कल्प्यत इत्यपरोक्षमनुभूयमान एव मुक्तानन्दः पुनर्भवाभावहेतुरिति न श्रुतिसूत्रादिविरोधः। न च देशकालादयोऽप्यपरोक्षं न मनोरथविषया इति, तेषामपि परोक्ष एव पूर्वानुभव इति, न कस्यापि साक्षात् पूर्वानुभवोऽनुमीयते इति वाच्यम्, अपरोक्षं प्राकृतदेहानुभवयोग्यानामपि परोक्षानुभवकल्पनायां मानाभावात्, कल्पकस्य परोक्षाविषयमनोरथस्य परोक्षमपरोक्षं[1] वा अनुभववस्तुविषयकत्वदर्शनादिति॥ ७०॥

**विज०** किञ्च प्राणिनां प्रवृत्तिवैचित्र्यं दृश्यते तदपि वासनावैचित्र्यं विना न च घटत इति भावेनाह - **नानुभूतमिति**। यद्रूपं

---

1. W च

यस्य शुक्लादिरूपं तद्यद्रूपं यादृग्जातिलक्षणं यस्य तद्यादृक् यद्वस्तु स्वात्मनि क्वचित् कस्मिंश्चिद्देशे कदाचित्काले अनेन ईदृग्देहेनादृष्टम् अश्रुतं वा अनुभूतमननुभूतं वाऽऽत्मनि मनस्युपलभ्येत[1] तेनोपलम्भेन पूर्वस्मिन् जन्मनि दृष्टं श्रुतमनुभूतमित्युपलभ्येत बुध्येत नत्वन्यथा। अनेन देहेन जाग्रदवस्थायामदृष्टमश्रुतमननुभूतं नोपलभ्येत[2] स्वप्ने, किन्तु स्वप्ने दृष्टादिकमेव यथा तथा पूर्वस्मिन् जन्मनि दृष्टादिकमनेन देहेन पश्यतीति वा ॥ ६६ ॥

ननु कर्मणो देहाद्यारम्भकत्वं कथमित्यस्य चोद्यस्य परिहारः कथं स्फुटित इति तत्राह - **तेनेति**। यतः पूर्वकर्मानुसारेण दर्शनादिकं तेन तदनुसारेणास्य लिङ्गिनो देहसम्भवः तादृशः पूर्वानुसृत इति श्रद्धत्स्व आप्तिं कुरु। कुत इत्यतः उक्तमेवार्थं स्मारयति - अननुभूतार्थमिति। यतः पूर्वस्मिन् जन्मनि अननुभूतो योऽर्थस्तं मनः स्प्रष्टुं नार्हति इत्यन्वयः ॥ ६७ ॥

ननु देहवन्मनसोऽप्यनेकत्वे कथमेतदुक्तं घटत इत्याशङ्क्यामोक्षं लिङ्गशरीरवद्बाह्यान्तः करण मेकमेवेत्यभिप्रेत्याह - **मन** इति। मनसोऽनेकत्वे पूर्वानु भूतहिता दिज्ञापनमनुपपन्नं स्यादित्यर्थः "रूपं शब्दे पशौ श्लोके ग्रन्थावृत्तौ हितादिषु" (वैज.को-6-3-28) इति यादवः। स्वानुभवसिद्धः सर्वानु भूतार्थोऽपि कर्मणो देहाद्यारम्भकत्वं युक्तं मनसा संयुक्तत्वादित्यतो वा आह - मन इति। यथा ते तव मनो भविष्यतः तथा न भविष्यतो वर्तमानस्य तव मनः पूर्वरूपाणि शंसति एवं भविष्यतोऽपि तावद्भद्रं ज्ञापयतीति वा ॥ ६८ ॥

ननु यदवादि पूर्वानुभूतमेव मनः स्प्रष्टुमर्हति नाननुभूतमिति, तदयुक्तं यतः स्वप्नादौ स्वशिरश्छेदनादिकमत्यन्तादृष्टचरं दृश्यते तत्राह - **अदृष्टमिति**। इह जन्मन्यदृष्टमश्रुतं वा क्वचिन्मनसि दृश्यते तद्यथा घटते तथानुमन्तव्यम्। घटनीयं कथमत्राह - देशेति। देशकालक्रियाः आश्रयो यस्य दर्शनस्य तत्तथा देशान्तरे शिरः कालान्तरे छेदनक्रियां दृष्ट्वा स्वप्ने तयोः सामानाधिकरण्यं भ्रान्त्या पश्यतीति, अथवा नानुभूतमित्यनेन यदवादि तदनेनानुमीयते अत्र जन्मनि यददृष्टादिकं दृश्यते मनसि तद्यथा पूर्वजन्मनि दृष्टं श्रुतमनुभूतं तथानुमानं कर्तव्यं, जाग्रति बाह्याली प्रदेशे पूर्वाह्णे चरन्तमश्वं दृष्ट्वा स्वप्ने यथा तदवस्थं पश्यति तथा कर्माण्यपि तथार्यावर्ते द्वापरे सम्भूतोऽर्जुनः पञ्चतामुपेत्य केरलदेशे कलिकाले जातो यदत्रादृष्टादिकं पश्यति करोति वा तदार्यावर्ते द्वापरेऽनुष्ठितमिति ज्ञातव्यं, दृष्टश्रुतदर्शनादिमात्र एव दृष्टान्त इति न विरोधः ॥६९॥

ननु यदि पूर्वदृष्टादिकमेवेदानीं दृश्यते श्रूयते इति मतं तर्हि जन्मनामनन्तत्वादहमहमिकया युगपद्दर्शनादिकं प्रसज्येत तदयुक्तं विरोधादत्राह - **सर्व** इति। ये सर्वे शब्दादयो विषया बहुजन्मस्विन्द्रियद्वारेण मनसि प्रविष्टा वासनारूपेण स्थितास्ते सर्वेन्द्रियगोचरा विषयाः सुमनसो देवस्य हरेरिच्छया क्रमानुरोधेन क्रममनुसृत्य, मनसि जीवे वर्गश आयान्ति जवाद्वेगात् यान्ति च नदीप्रवाहवदित्यन्वयः

1. A, B लभ्यते 2. A, B लभ्यते

इन्द्रियद्वारेण मनसि प्रविष्टा इन्द्रियगोचराः शब्दादयः क्रमशो जीवे वर्गशः आयान्ति पुनः सुष्ठु मनसो वेगाद्यान्ति च सर्वपदार्थानामिह जन्मनि जन्मान्तरे वा मनसि इन्द्रियद्वारेण प्रवेशात् संस्कार रूपेण स्थिरत्वात् इहादृष्टस्य वाश्रुतस्य वानुभवो युज्यते इत्यतो वाह-**सर्व** इति। दवीयसि देशे काले चानुभूता नामधुनानुभवः कथं घटत इत्यतो वाह - सर्व इति। अचिन्त्यानन्तेश्वरशक्तिः प्रयोजिकेति सन्तोष्टव्यम्॥ ७०॥

**सत्त्वैकनिष्ठे मनसि भगवत्पार्श्ववर्तिनि।**
**तमश्चन्द्रमसीवेदमुपरज्याव भासते॥ ७१॥**

**नाहं ममेति भावो[1]ऽयं पुरूषे व्यवधीयते।**
**[2]यावत् बुद्धिमनोऽक्षार्थ गुणव्यू[3]हो ह्यनादिमान्॥ ७२॥**

**सुप्तिमूर्छोपतापेषु प्राणायनविघाततः।**
**नेहतेऽहमिति ज्ञानं मृत्युप्रज्वारयोरपि॥ ७३॥**

**गर्भे बाल्येऽप्यपौष्कल्यादेकादशविधं[4] तथा।**
**लिङ्गं न दृश्यते[5] यूनः कुह्वां चन्द्रमसो यथा॥ ७४॥**

**अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते।**
**ध्यायतो विषयानस्य स्वप्नेऽनर्थागमो यथा॥ ७५॥**

**श्रीध०** तदेवं सर्वैरपि सर्वेऽर्थाः क्रमेण दृश्यन्ते इत्युक्तम्, इदानीं युगपदपि सर्वदर्शनं कदाचिद्भवतीत्याह - **सत्त्वेति। सत्त्वैकनिष्ठे** [6-]सत्त्वमेव एका निष्ठा आलम्बनं यस्य,[-6] तस्मिन्, भगवत्पार्श्ववर्तिनि भगवद्ध्यानपरे मनसि इदं विश्वमुपरज्य संयोगमिव **प्राप्यावभासते।** प्रतीत्यनर्हस्यापि कदाचित्प्रतीतौ दृष्टान्तः - चन्द्रमस्युपरज्य तमो राहुरिव तदिदं शुद्धे[7] मनसि सर्वविषयस्फुरणं योगिप्रत्यक्षमिति प्रसिद्धम्॥ ७१॥

तदेवं स्थूलदेहनाशेऽपि लिङ्गदेशस्यानाशादन्यः कर्ताऽ[8]न्यो भोक्तेति दोषो नास्तीत्युक्तम्। तत्रैवं शङ्कते। ननु लिङ्गदेहस्य स्थूलदेह[9]द्वारेणैव कर्तृत्वभोक्तृत्वे न तु केवलस्य तत्र कदाचित् स्थूलदेहाभावे जीवस्य कर्तृत्वभोक्तृत्वाभावान्मुक्तिः प्रसज्येत तत्राह

1. W °वो यः 2. M, Ma, Ms ता° 3. W गूढो 4. A, B, G, I, J, M, Ma, Ms, T तदा 5. M, Ma °तेऽयूनः 6--6. A सत्त्वे एव एका निष्ठा यस्य; B, J, Va omit 7. V शुद्धमनसि 8. B, J, Va omit अन्यः 9. V omits देह

- **नेति**। अहम्ममेति भावः स्थूलदेहसम्बन्धः पुरुषे जीवे न व्यवधीयते न विच्छिन्नो भवति। किम्पर्यन्तम्? बुद्ध्यादीनां व्यूहः परिणामो लिङ्गं यावदस्ति अनादिमाननादिस्सन्॥ ७१॥

स्वापादौ अहङ्काराद्यभावात्तद्विच्छेदमाशङ्क्याह - **सुप्तीति** द्वाभ्याम्। सुप्त्यादिषु उपताप इष्टवियोगादिदुःखम्, तेष्वहमिति ज्ञानमहङ्कारो नेहते न प्रकाशते प्राणाय[1]तनानामिन्द्रियाणां विघातात्। [2]इन्द्रियैरिद ङ्कारास्पदवस्तुग्रहणे ह्यहङ्कारः स्फुरति नान्यथेत्यर्थः॥ ७३॥

**गर्भ** इति। अपौष्कल्यात् असम्पूर्णत्वात् प्राणाय[3]तनानामिति शेषः। यूनः तरुणस्य यदेकादशविधमेकादशेन्द्रियैः स्फुटं लिङ्गमहङ्कारकारणं तन्न दृश्यते। गर्भादाविति शेषः[4]। सतोऽप्यनभिव्यक्तौ दृष्टान्तः - कुह्वाम् अमावास्यायां चन्द्रमसो लिङ्गं रूपमिव॥ ७४॥

तस्मादहङ्कारास्पदस्य स्थूलदेहस्याविच्छेदाद् वस्तुभूतार्थाभावेऽपि संसृतिनिवृत्तिर्नास्तीत्याह - **अर्थे** हीति॥ ७५॥

**वीर०** [5]इदमेवाभिप्रेत्याह - **सत्त्वैकनिष्ठ** इति। सत्त्वैकप्रचुरे मनसि भगवत्पार्श्ववर्तिनि भगवद्भजनोपक्रमं कुर्वाणे सति तम अज्ञानं चन्द्रमस्युदिते सति तमस्तिमिरमिव उपरज्यावभासते उपरागवत् भूत्वावभासते ज्ञानशबलमवभासते, चन्द्रोदये हि आदित्योदय इव न निश्शेषतमः क्षयः, अपि तु ज्योत्स्नामिश्रं तमः, एवं भगवद्भजनोपक्रमदशायां ज्ञानमज्ञानशबलं वर्तते शास्त्रजन्यज्ञानस्य परोक्षरूपत्वात् ब्रह्मस्वरूपवदानन्दादयः परोक्षमेव विषया भवन्तीत्यर्थः। देहात्मभ्रमस्य देहसम्बन्धाधीनसुखदुःखादेश्चापरोक्षत्वात्ते साक्षादनुभवविषया एवेति भावः॥ ७१॥

किं वक्तव्यं संसारदशायां ब्रह्मस्वरूपतदानन्दादिकमपरोक्षं नावभासत इति यतः स्वात्मस्वरूपमेवापरोक्षं नावभासत इति सहेतुकमाह - *अहमिति। अनादिमान् जीवः अक्षमिन्द्रियम्, अर्थाः शब्दादयः, गुणः सत्त्वादिः एतैः यावदूढः आवृतः। व्यूह इति पाठे यावद्बुद्ध्यादव्यूहःसङ्घो यस्येत्यर्थः। तावदहम्ममेति भावो व्यवधीयते, व्यवधिवदाचर्यते स्वरूपतिरोधायकः अहम्ममाभिमानो न निवर्तते किन्त्वनुवर्तते इत्यर्थः॥ ७२॥

किमुत संसारिणो जीवस्य बुद्ध्यादिभ्यो विलक्षणं स्वस्वरूपमपरोक्षं नावभासत इति यतोऽनहमर्थोऽप्यज्ञानादहम्बुद्धिविषयत्वेनावभासमानो देहः सुषुप्त्यादौ नावभासत इत्याह - **सुप्तीति**। उपतापशब्देनातिशयितदुःखसम्भेदो विवक्षितः, मृत्युर्मरणं, प्रज्वारो ज्वरः, उपलक्षणमेतत्। ज्वरादिमूले मरणे चेति यावत्,

---

1. A, B, J, Va °यना 2. 3. A, B, J, Va °यना° 4. B, J, Va omit शेषः। 5. T एवमे°

* यद्यपि नाहंममेत्यादिरूपः मुद्रितः श्लोकः, तथापि अहं ममेत्यादिरूप एव श्रीवीरराघवव्याख्यानुसारोपाठः आदृतः

एतास्ववस्थासु [1-]प्राणायनस्य[-1] प्राणाश्रयस्य जीवस्य, विघाततः ज्ञानस्यातिसङ्कोचात्। न[2] हि ज्ञानसङ्कोचादपरः[3] तदानीं विघातः सम्भवति, तेनाहमिति ज्ञानं नेहते न स्फुरति देहेऽहम्बुद्धिर्नास्ति देहप्रतिपत्त्यभावादित्यर्थः ॥ ७३ ॥

ननु [4]सुप्त्यादावपि ज्ञानकर्मोभयेन्द्रियगुणस्य मनसश्च सद्भावादहमिति ज्ञानं कुतो नेहते ? तत्राह - **गर्भ** इति। यूनः तरुणस्य स्फुटं यदेकादशविधं लिङ्गं कर्मेन्द्रियज्ञानेन्द्रियमन आत्मकं लिङ्गं, व्यापारहेतुभूतं तद्गर्भे बाल्ये। अपिशब्दात् सुषुप्त्यादौ चापौष्कल्यात् अपुष्कलशक्तित्वान्न दृश्यते नाभिव्यक्तं नष्टप्रायं भवतीत्यर्थः। सतोऽप्यनभिव्यक्तौ दृष्टान्तः - कुह्वाममावास्यायां चन्द्रमसो लिङ्गं रूपमिवेति॥ ७४॥

ननु यदि गर्भादौ लिङ्गमेकादशविधमनभिव्यक्तं तर्हि तद्व्यापारभावात् संसृतिर्न स्यादित्यत्राह - **अर्थेति**। अनभिव्यक्तशक्तित्वादिन्द्रियाणां तद्व्यापाराभावादर्थे शब्दादिविषये, अविद्यमानेऽपि [5-]शब्दादिविषयानुभवाभावेऽपि[-5] विषयान् ध्यायतः "वर्तमानसमीपे भूते लट् शत्रादेशः" विषयध्यानप्रयुक्तवासनाविशिष्टस्येत्यर्थः। संसृतिः न निवर्तते तद्रागानुवृत्या संसारोऽनुवर्तते यथा स्वाप्नपदार्थानां प्रबोधदशायामविद्यमानत्वेऽपि स्वाप्नार्थज्ञानसूचितसुखदुःखाद्यनर्थागमः तद्वदित्यर्थः। [6]तथा च श्रुतिः-"यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात्तस्मिंश्च स्वप्नदर्शने" इति। "अथ स्वप्ने पुरुषं कृष्णं कृष्णदन्तं पश्यति। स एनं हन्ति" इत्यादिका॥ ७५॥

**विज०** जीवस्य मन आदेः स्वरूपत्वेऽनेकजन्मानुभूतपदार्थसंस्काराणामनेकत्वेन तदनुभवेनैव कालागमनात् कदाचिन्मुक्त्यनुदयेन यावज्जीवं संसार एव स्यात्, अस्वरूपत्वे लिङ्गशरीरादेः स्थूलदेहनाश एव नाशसम्भवेन पूर्वदृष्टादिपदार्थदर्शनाद्यनुपपत्तिरिति तत्राह - **सत्त्वैकनिष्ठ** इति। सत्त्वोजीवः तदेकनिष्ठे तद्रूपे भगवत्पार्श्ववर्तिनि भगवद्विषये मनसि इदं लिङ्ग शरीरादिकमुपरज्य स्वेच्छया सङ्गमय्यावभासते भिन्नतयेति शेषः। कथमिव चन्द्रमसि तमो राहुरिव मेघान्धकारो वा लिङ्गशरीरादेरस्वरूपत्वेऽपि भगवदपोक्षज्ञानं विना स्थूलदेहनाश एव नाशाभावात् चिरायुष्ट्वेन स्थितिसम्भवात् पूर्वकर्मनिमित्त सुखदुःखानुभवो घटत इति भावः। यद्वा सत्त्वगुणस्यैकत्वनिष्ठोत्कर्षो यस्मिंस्तत् सत्त्वैकनिष्ठं तस्मिन्। भगवत्पार्श्ववर्तिनीत्यनेन सत्त्वगुणोत्कर्षं लक्षयति, अन्यथा तन्न स्यात् एवंविधमनसि इदं दुःखादिकमुपरज्यावभासते प्रतीयते, निदर्शनं व्याख्यातार्थम्॥ ७१॥

नन्वेवं तर्हि कियन्तं कालमिदं दुःखादिकमवभासते इति तत्राह - **नाहमिति**। यावत्पुरुषेऽनादिमानयमहम्ममेति भावो न

---

1--1. A, T omit  2. A, B, T सहि  3. A, B, T add पयोयः  4. A, B, T सुषुप्त्या०  5--5. A, B, T omit  6. A, B, T य०

व्यवधीयते, तिरोहितो नष्टो न भवति, तावत् बुद्धिमनोऽक्षार्थगुणव्यूहः संसारोऽपि न तिरोहितो भवतीत्यर्थः। अनादिमानिति व्यूहविशेषणं वा, अनेन संसारस्य मिथ्यात्वं निराचष्ट "अक्षमिन्द्रियं स्रोतः" (हला.को.२-३८०) इत्यभिधानम्॥ ७२॥

ननु यद्यहम्ममेति भावतिरोभावः पुरुषार्थस्तर्हि[1] सुप्त्यादौ तत्सद्भावात्तदनुदयः कथमत्राह - **सुप्तीति**। सुप्त्यादौ प्राणानामिन्द्रियाणामयनस्य प्रवृत्तिलक्षणस्य विघाततो निरोधादभावादहमिति ज्ञानं नेहते नाभिव्यज्यते, तथापि स्वरूपेन्द्रियेणास्त्येव, सुखमहमस्वाप्समित्युत्तरकालीनानुभवदर्शनात्तदा तदभावे परामर्शानुपपत्तेः। उपतापः पुत्रादिवियोगदुःखानलज्वालाप्रवेशनं, मृत्युरपमृत्युः[2] देवदूतैर्नीतस्य किमर्थमानीतोऽयं नयतः स्वस्थानमिति वचनात् प्रत्यानयनदर्शनानुभावात् साक्षाद्देहवियोगलक्षण-मरणेऽहमिति ज्ञानं सन्दहेत्। प्रज्वारोऽतिरोगावस्था॥ ७३॥

ननु हन्तैवं तर्हि गर्भादिरुत्क्रान्तस्य तत्कालीनसुखदुःखपरामर्शादर्शनादत्राह - **गर्भ** इति। गर्भे वर्तमानस्य बाल्ये वयसि स्थितस्यायूनः बालस्य पुंसोऽपौष्कल्यादनुपचितावयवत्वात् पञ्चपञ्चज्ञानकर्मभेदेन सङ्ख्यातानीन्द्रियाणि मनश्चेत्येकादशविधमेकादशभ्यो विधीयते उत्पाद्यतेऽहम्ममेति ज्ञानाख्यं लिङ्गं लक्षणं न दृश्यते न ज्ञायते उक्तहेतोरित्यन्वयः। यावान् यावाञ्छरीरस्योपचयस्तावदिन्द्रियाणां पौष्कल्यं, तस्मिन्नुपचिते तेषामिति नियमात् तन्निमित्तमहम्ममेति ज्ञानं, तदभावे तदभाव इति गर्भादौ तदभाव इत्यर्थः। अत्रास्पष्टमात्रे दृष्टान्तमाह - चन्द्रमस इति। यथाऽमावास्यायां चन्द्रमसो लिङ्गं शरीरं न दृश्यते तथेति॥ ७४॥

ननु चन्द्रबिम्बावरणनिवृत्तिवदयं गर्भवासादिलक्षणः संसारोऽपि कालेन स्वतो निवर्तत इति तत्राह - **अर्थ** इति। अपि सम्भाविते ज्ञानलक्षणेऽर्थेऽविद्यमाने सत्यस्य जीवस्य संसृतिर्न निवर्तते हि यस्मात् तस्मात् निवर्तकमपेक्षितमित्यन्वयः। निवर्तकानुदये निमित्तमाह - ध्यायत इति। शब्दादिविषयध्यानं प्रतिबन्धकमित्यर्थः। स्वप्ने प्रवर्तमानस्य पुंसः प्रबोधाद्यभावेऽनर्थागमो यथा न निवर्तते तथेति विषयध्यानेन संसारपरम्परास्यादित्यभिप्रायेणानर्थागम इत्युक्तम्। चन्द्रबिम्बावरणानां मेघादीनां वाय्वादि सद्भाव एव कारणं प्रत्यक्षसिद्धमिति ज्ञातव्यम्॥ ७५॥

**एवं[3] पञ्चविधं लिङ्गं त्रिवृत् षोडशविस्तरम्[4]।**
**एष चेतनया युक्तो जीव इत्यभिधीयते॥ ७६॥**

**अनेन पुरुषो देहानुपादत्ते विमुञ्चति।**
**हर्षं शोकं भयं दुःखं सुखं चानेन विन्दति॥ ७७॥**

---

1. Ma adds तस्मिन् 2. A omits अपमृत्युः 3. M, Ma, Ms एकं 4. A, B, G, I, J, T, W विस्तृतम्

**यथा तृर्णजलूके[1]यं [2]नोपयात्यपयाति च।**
**न त्यजेन्म्रियमाणोऽपि प्राग्देहाभिमतिं जनः ॥**
**यावदन्यं न विन्देत व्यवधानेन कर्मणा[3]म् ॥ ७८ ॥**

**मन एव मनुष्येन्द्र भूतानां भवभावनम्।**
**[4]यदक्षै[5]श्चरितं ध्यायन् [6]कर्माण्याचिनुतेऽसकृत् ॥ ७९ ॥**

**सति कर्मण्यविद्यायां बन्ध [7]कर्मण्यनात्मनः।**
**अतस्त[8]दवबोधार्थं भज सर्वात्मना हरिम् ॥ ८० ॥**

**श्रीध०** यावल्लिङ्गं स्थूलदेहाविच्छेदात् संसार[9]निवृत्तिरित्येतत्प्रपञ्चयति - **एवमिति** सार्धैस्त्रिभिः। पञ्चविधं पञ्चतन्मात्रात्मकम्। त्रिवृत् त्रिगुणा[10]त्मकम्। षोडशविकारात्मना विस्तृतम् ॥ ७६,७७ ॥

नन्वेकं देहं विसृज्य देहान्तरप्रवेशात्पूर्वं [11]अदेहता स्यादेवेत्यत आह - **यथेति**। नापयाति पूर्वतृणस्यात्यागात् अपयाति च तृणान्तरधारणात्। तथा [12]जनः म्रियमाणोऽपि प्राग्देहाभिमतिं [13-]पूर्वदेहाभिमानं[-13] न त्यजेत्। अन्यं देहम्। कर्मणां प्राग्देहारम्भकाणां व्यवधानेन विच्छेदेन समाप्त्या ॥ ७८ ॥

प्रकरणार्थमुपसंहरति - **मन एवेति**। भवभावनं संसारहेतुः। [14]कथमिति तदाह - यदिति। चरितानुपभुक्तान् यतः कर्मणि सति ॥ ७९ ॥

ननु असङ्गस्य कुतः कर्म तत्राह - **सतीति**। अविद्यायां सत्यामनात्मनो देहादेः कर्मणि बन्धो भवति। अत इति। [15]ते अविद्यादीनां नाश एव अर्थो यस्य तथा सन्[-15]। विश्वस्थित्यादयोऽयतो हरेर्भवन्ति ॥ ८० ॥

**वीर०** एवं प्रश्नस्योत्तरमभिधाय पुनरपि स्मरणाय देहात्मनोराकारं वदन् देहसम्बन्धस्योत्तरोत्तरदेहसम्बन्धद्वाराऽनर्थहेतुत्वमाह - **एवमिति**। पञ्चविधं पञ्चप्रकारं पञ्चभूतात्मकं, षोडशविस्तरम् एकादशेन्द्रियतदाश्रयप्राणादिपञ्चकोपेतं, त्रिवृत् त्रिगुणात्मकं, लिङ्गं

---

1. M. Ma °का च 2. A. B. G. I. J. T ना° 3. W °णा 4. A. B. G. I. J. T यदाऽ° 5. A. B. G. I. J. T. W °तान् 6. V °णि कुरुते°
7. M, Ma, Ms कर्मण्य आत्मनः:; W कर्मज आत्मन। 8. A, B. G. I. J. T °दप वादार्थ; M. Ma °दप बाधार्थं; Ms °दव बाधार्थं। 9. V °न्नि°
10. A, B, J, Va °णम्। 11. A, B, J, Va वि 12. A. B. J. Va omit जनः 13--13. A. B. J. Va omit 14. A. B. J, Va कथं सति
15--15. A. B. J. Va omit

शरीरम् एवम्भूतमिति देहाकार उक्तः । जीवस्वरूपमाह - एष इति । चेतनया युक्तः एष जानामीति ज्ञानाश्रयतया स्फुटतरमवभासमानोऽहमर्थो जीव इत्यभिधीयत इत्यर्थः ॥ ७६ ॥

अनेन लिङ्गेन युक्तः तदेदानीमवभासमानः स पुरुषः ईदृशान् बहुदेहानुपादत्ते, विमुञ्चति तत्कृतहर्षशोकादिकं च विन्दति, आगामिसुखविषयं ज्ञानं हर्षः, आगामिदुःखविषयं ज्ञानं भयं, तत्र देहानुपाददत्[1] जीव अनेनोपादीयमानेन रमणीयदेहेन हर्षं सुखं च विन्दति, अनभिमतेन तु शोकं, विमुच्यमानेन तु भयं दुःखञ्च विन्दति, उपात्तदेहत्यागस्यानिष्टत्वात् ॥ ७७ ॥

अनिष्टतामेवाह - **यथेति** । यथेयं प्रसिद्धा तृणजलूका । स्वावष्टब्धं[2] तृणं हित्वा नोपयाति तृणान्तरं प्रति न गच्छति, किन्तु तदेव तृणमुपयाति[3] दृढतरं संश्लिष्यति । एवं म्रियमाणोऽपि जनः मरणे प्राग्देहाभिमतिं न त्यजतीत्यर्थः । नापयात्यपयाति चेति पाठे यथैव दैववशादपयाति मनसा त्यक्तुं नेच्छति । देहाभिमानपरित्यागस्यावधिमाह - यावदिति । कर्मणां व्यवधानेन कर्मभिस्तिरोधानेन यावद्देहादन्यमात्मानं न विन्देत तावन्न त्यजेदित्यर्थः ॥ ७८ ॥

प्रकरणार्थमुपसंहरति - **मन** इति । हे मनुष्येन्द्र ! भूतानां भवभावनं जन्महेतुर्मन एव । तदेवोपपादयति । अक्षैरिन्द्रियैश्चरितान् पूर्वमुपभुक्तान् विषयान् यद्येन मनसा ध्यायन् कर्माण्यसकृदाऽऽचिनुते करोति ॥ ७९ ॥

सति कर्मण्यविद्याया बन्धः, अविद्याया इति पञ्चमी, कर्मणि सति तत्कृतदेहेनाहङ्कार ममकाररूपाविद्याया आत्मनो बन्धः स्यात्, स चाविद्याया बन्धः कर्मकृतः, कर्म च विषयानुभवहेतुः अविद्यया कर्म, कर्मणा चाविद्येति अनादिः प्रवाहः इत्यर्थः । तन्मोचनोपायमाह - **अत** इति । तस्य देहविलक्षणस्य ब्रह्मात्मकस्य स्वात्मनः अवबोधार्थं सर्वात्मना करणत्रयेण हरिं भगवन्तं भज आत्मापरोक्षमपि भगवत्प्रसादादेव भवतीति भावः ॥ ८० ॥

**विज०** देहात्मबुद्धेः संसारस्य तत्त्वेन प्रतीतिः कथमित्याशङ्क्य योन्यम्योरिव चिदचिदोः संयोगलक्षणसम्पर्कादौपचारिकीयं प्रतीतिरित्यभिप्रेत्य तत्स्वरूपं निरूपयति - **एकमिति** । एकं लिङ्गं लिङ्गशरीरं षोडशविस्तरं कथम् ? त्रिवृत् प्राणेन्द्रियान्तः करणभेदेन त्रिविधम्, अनेन षोडशविस्तरत्वमवगतं, कथम्? पञ्चविधं, त्रिधा भिन्नया पञ्चविधया पञ्च प्राणाः, पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणीति पञ्चदशविधं, मनसा षोडशविधं तदुक्तं - ''प्राणेन्द्रियान्तः करणभेदेन त्रिविधं मतम् । पञ्च पञ्चैव ते सर्वे प्राणा बुद्धीन्द्रियाणि च । कर्मेन्द्रियाणि च तथा तस्मात्पञ्चविधं स्मृतम् । लिङ्गं षोडशकं प्राहुर्मनसा सह तत्पुनः ॥'' (ब्राह्मे) इति । एष षोडशविस्तारो देहश्चेतनया युक्तो जीवः प्राणीत्युच्यते, इति शब्दोऽत्र समाप्तिवचनः ॥ ७६ ॥

1. A, B, T दत्तं 2. A, B, T °ष्टम्भतृणं 3. W °यान्ति

अनेन लिङ्गशरीरेण स्थूलदेहानुपादत्ते। अनेन स्थूलदेहेन हर्षादिकमाप्नोति ॥ ७७ ॥

ननु यदानेन संसारी स्थूलदेहानुपादत्ते, तदा हर्षादिकं विन्दते, यदा तान् मुञ्चति तदा निवृत्तहर्षादित्वेन मुक्तिः स्यादित्यत्राह- **यथेति**। तृणजलूका कीटविशेषः यावदन्यत्तृणं न विन्देत तावन्नोपयाति, यावत् विन्देत[1] तावदेवापयाति पूर्वं गृहीतं विसृज्य पश्चात्तृणान्तरं यथा याति तथायं जनो म्रियमाणोऽपि पूर्वदेहाभिमतिं न त्यजेत्, देहान्तरं प्राप्य पूर्वं त्यजतीत्यर्थः। किमिति झटिति न त्यजतीति तत्राह- व्यवधानेनेति। कर्मणां प्राचीनानां व्यवधानेन विलम्बफलदातृत्वेन हेतुना अनेकेषां पूर्वेषां कर्मणां सत्वेन भगवत्प्रसादमन्तरेण विनाशानुपपत्तेः सर्वदेहवियोगासम्भवेन मुक्त्यनुदय इति भावः ॥ ७८ ॥

अनर्थदर्शनेन जातया विरक्त्या कर्माकरणेन तत्समाप्तेर्देहारम्भककर्माभावेन देहाभावान्निर्वाणोपपत्तिरिति तत्राह - मन एवेति। मनस्सम्प्रयुक्तैरक्षैश्चरितं कर्म ध्यायन् तदनुसारेणासकृत् कर्माण्याचिनुते करोतीति यत् तस्मात् मन एव भूतानां भवं संसारं जन्म वा भावयति उत्पादयतीति भवभावनं, मनः प्रधानत्वद्योतनार्थ एवशब्दः "न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्" (भ.गी. 3-5) इति स्मृतेः ॥ ७९ ॥

अविद्यायां विषयेच्छायां सत्यां कर्म भवति, तस्मिन् सत्यात्मनो जीवस्य बन्धः "कर्मण्यः कर्महेतुकः" इति यदतस्तदपबाधार्थं कर्मनिवृत्त्यर्थं, सर्वात्मना पुत्रादिस्नेहत्यागेन हरिं भजेत्यन्वयः। एनं जीवं बन्धयामीतीश्वरेच्छायां वा तस्येच्छया अपसरणार्थम्। न बन्धयामीति ॥ ८० ॥

**पश्यंस्तदात्मकं विश्वं स्थित्युत्पत्त्यप्यया यतः ॥ ८१ ॥**

***भक्तिः कृष्णे दया[2] जीवेष्वकुण्ठज्ञानमात्मनि।**
**यदि[3] स्यादात्मनो भूयादपवर्गस्तु संसृतेः ॥ (क)**

**अदृष्टं दृष्टवन्नङ्क्षेत्[4] भूतं स्वप्नवदन्यथा।**
**भूतं भवद्भविष्यच्च सुप्तं सर्वरहोरहः[5] ॥ (ख)**

****अन्नमय्या समुज्जिन्या व्यभिचार्यत्र सङ्गमः।**
**तत्र शरीर आनन्दः आकाशपुरुषोन्वयात् ॥ (ग)**

---

1. A, B विन्दते * The following two verses are found in M, Ma, Ms & V edns, only and the commentary on the same verses is found in M, Ma only 2. V यथा 3. V यर्हि 4. V °न्नष्टं 5. V °महो ** This extra verse is found in V edn only and it was not commented

## मैत्रेय उवाच

भागवतमुख्यो भगवान्नारदो हंसयोर्गतिम्।
प्रदर्श्य [1]नृपमामन्त्र्य सिद्धलोकं ततोऽगमत्॥ ८२॥

प्राचीनबर्ही राजर्षिः प्रजासर्[2]गाभिरक्षणे[3]।
आदिश्य पुत्रानगमत्तपसे कपिलाश्रमम्॥ ८३॥

तत्रैकाग्रमना [4]धीरो गोविन्दचरणाम्बुजम्।
विमुक्तसङ्गोऽनुभजन् भक्त्या [5]तत्साम्यतामगात्॥ ८४॥

एतदध्यात्मपारोक्ष्यं गीतं देवर्षिणाऽनघ।
यः श्रावयेद्यः शृणुयात्स लिङ्गेन विमुच्यते॥ ८५॥

एतन्मुकुन्दयशसा भुवनं पुनानं देवर्षिवर्यमुखनिस्सृतमात्मशौचम्।
यः कीर्त्यमान[6]मधिगच्छति पारमेष्ठ्यं नास्मिन् भवे भ्रमति मुक्तसमस्तबन्धः॥ ८६॥

अध्यात्मपारोक्ष्यमिदं मया[7]ऽभिहितमद्भुतम्।
एवं [8]स्त्रियाऽऽश्रमः पुंसश्छिन्नोऽमुत्र च संशयः॥ ८७॥

इति श्रीमद्भागवते महापुराणे अष्टादश साहस्र्यां
श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां
चतुर्थस्कन्धे एकोऽनत्रिंशोऽध्यायः॥ २९॥

**श्रीध० भागवतमुख्य** इति। हंसयोः जीवेश्वरयोः॥ ८२॥

**प्राचीनबर्हिरिति**। [9-]प्रजासर्गः पुत्रोत्पादनं जगदभिरक्षणं चेति द्वन्द्वैक्यम्[-9]। पुत्रानादिश्येति पुत्राणामादेशं मन्त्रिणामग्रे कथयित्वा। [10-]कपिलाश्रमं गङ्गासागरसङ्गमम्[-10]॥ ८३,८४॥

---

1. A, B, G, I, J, M, Ma, Ms, T ह्यमुमा° 2. Ms °र्गेऽभि° 3. V °णम् 4. A, B, G, I, J, M, Ma, T वीरो 5. V °त्समता° 6. V °भि
7. A, B, G, I, J, M, Ma, Ms, T °धिगत° 8. M, Ma, Ms त्रैय्याऽऽश्रयः 9--9. A, B, J, Va omit स 10--10. V omits

**एतदिति**। [1-]लिङ्गेन विमुच्यते विदेहकैवल्यं प्राप्नोति[-1]॥ ८५॥

**एतदिति**। [2-]एतत् अध्यात्मपारोक्ष्यम्[-2] आत्मशौचं मनश्शोधकं पारमेष्ठ्यं सर्वोत्कृष्टफल[3]प्रदम्॥ ८६॥

**अध्यात्मेति**। स्त्रीबुद्धिः तत्सहितस्याश्रमोऽहङ्कारः छिन्नो भवति, अमुत्र कर्मफलभोगः कथमिति संशयश्च छिन्नः॥ ८७॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्री श्रीधरस्वामि विरचितायां भावार्थदीपिकायां

व्याख्यायां एकोनत्रिंशोऽध्यायः॥ २९॥

**वीर०** कथम्भूतो जानीयात्तत्राह - विश्वं चिदचिदात्मकं जगद्भगवदात्मकं पश्यन् विश्वस्य तदात्मकत्वे हेतुं वदन् हरिं विशिनष्टि। यतो हरेर्हेतोः विश्वस्य स्थितिरप्ययो नाशश्चेत्यमी भवन्ति हरेः विश्वस्थित्यादिकारणत्वाद्धर्यात्मकं विश्वं पश्यतीत्यर्थः। स्थित्यादीनां तदात्मकत्वे हेतुत्वं श्रुतम्। "सर्वं खल्विदं ब्रह्म तज्जलानिति" (छान्दो उ. ३-१४-१) इति॥ ८१॥

संवादमुपसंहरति मुनिः। भागवतानां मध्ये मुख्यः भगवान्नारदो हंसयोः जीवपरयोर्गतिं स्वरूपं प्रदर्श्य उपदिश्य नृपं प्राचीनबर्हिषम् आमन्त्र्य अनुज्ञाप्य ततो ब्रह्मलोकमगात्॥ ८२॥

ततः प्राचीनबर्हिः प्रजासृष्टौ तद्रक्षणे च स्वपुत्राननुज्ञाप्य स्वयं तपश्चर्तुं कपिलाश्रममगात्॥ ८३॥

तत्र चाश्रमे धीरो वशीकृतेन्द्रियः, एकाग्रचित्तः विविक्तो भगवच्चरणाम्बुजं ध्यायन् तद्भक्त्या तत्साम्यतां तेन साम्यं यस्येति बहुव्रीहिः तत्साम्यवत्तामित्यर्थः, इयादगात्। तत्सात्मतामिति पाठे तेन भगवता समानात्मता[4] तत्साधर्म्यमित्यर्थः॥ ८४॥

श्रवणश्रावणादिफलमाह - **एतदिति**। हे अनघ! देवर्षिणा गीतमेतदध्यात्मपारोक्ष्यं यः [5]पुमान् श्रावयेत् श्रृणुयाद्वा स लिङ्गेन संसृतिहेतुना मनसा, दुःखहेतुना बन्धेन वा विमुच्यते मुक्तो भवेदित्यर्थः॥ ८५॥

एतदध्यात्मपारोक्ष्यं मुकुन्दयशसा युक्तमिति शेषः। अत एव भुवनं पुनानं पवित्रीकुर्वाणं नारदमुखान्निर्गलितमात्मशौचं मनश्शोधकं पारमेष्ठ्यं सर्वोत्कृष्टफलदं कीर्त्यमानं कथ्यमानं यः पुमानधिगच्छति स पुमान्निरस्तसमस्तबन्धः अस्मिन् भवे संसारे न भ्रमति॥ ८६॥

---

1--1. A, B, J, Va omit   2--2. A. B, J, Va omit   3. A, B, J. Va omit प्र.   4. A. B. T add समानता   5. A. B. T पुरुष

उक्तार्थानुपसंहरति[1] । अद्भुततमम्[2]इदम्[3]अध्यात्मपारोक्ष्यमध्यात्मतत्त्वस्य पारोक्ष्यं परोक्षवादो यस्मिन्, अत एवाद्भुतमाश्चर्यमध्यात्मस्य पारोक्ष्यं दुश्शकमित्यद्भुतमित्यर्थः । मया तुभ्यमभिहितं तथा पुंसः क्षेत्रज्ञस्य स्त्रियाश्रमः गृहस्थाश्रमत्वेन रूपितः कथितः, अमुत्र परलोके संशयः फलानुभवविषयो भवदीयसंशयश्च छिन्नः निरस्तः ॥ ८७ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां

व्याख्यायां एकोनत्रिंशोऽध्यायः ॥ २९ ॥

**विज०** भजनं नाम गुणोपसंहार स्तदर्थं तद्गुणानाह - **पश्यन्निति** । यतो हरेर्विश्वस्य स्थित्यादयः स्युस्तद्विश्वं तदात्मकं तद्व्याप्तं तदधीनसत्ताकं पश्यंश्चिन्तयन्निति पूर्वेणान्वयः । तत्तदधिकार्युपास्ति योग्यानां गुणानां स्थित्यादावन्तर्भावात्तदर्थं स्थित्यादिग्रहणम् ॥ ८१ ॥

नन्वेवमुपासीनस्य कदा साधनसामग्र्या मुक्तिः स्यादित्यत्राह - **भक्तिरिति** । कृष्णे पूर्णानन्दे हरावपरोक्षज्ञान जननी भक्तिः, उपलक्षणमेतत् स्वगुरुमारभ्य ब्रह्मान्तेषु स्वोत्तमेषु तत्तद्योग्यतानुसारेण निष्कपटा भक्तिश्च जीवेषु स्वाकारेषु या चित्तस्य द्रवीभावता दया, 'दय-दानगतिशोषणेषु' इति धातोः तत्त्वविरोधिषु शोषणहेतुर्द्वेषश्चात्मनि स्वस्वरूपेऽकुण्ठज्ञानं हरिदर्शनानन्तरं देहादिव्यतिरेकेण ज्ञानानन्दरूपोऽहमित्यव्यवधानेन निरन्तरानुभवलक्षणमितीयं साधनसामग्री यदि यदा स्यात्तदा कालव्यवधानमन्तरेणात्मनस्तव संसारादपवर्गः क्रियासाध्यफलावाप्तिः स्यदित्यन्वयः । "देहादिव्यतिरेकेण चिद्रूपोऽहमिति स्फुटम् । सदैवानुभवो भक्तिर्विष्णौ तद्दर्शनादनु ॥ यस्यासौ मुच्यते क्षिप्रं संसारान्नात्र संशयः ॥" (हरिवंशे) इत्यनेन हेतुवाचि तुशब्दसूचितेनोक्त एवार्थो नाद्वैतार्थः ॥ (क) ॥

ननु प्रथमभाविवैराग्याख्यसाधनमन्तरेण भक्त्यादिना कथं मुक्त्युदय इत्यतः सिंहावलोकनन्यायेन तदाह - **अदृष्टमिति** । अदृष्टं स्वर्गादिफलं सस्यादिदृष्टफलवन्नङ्क्ष्येन्नश्यति, भूतमुत्पन्नमिदं सर्वं जगद् अन्यथाऽनित्यं कथमिव स्वप्नदृष्टपदार्थसमं नश्वरत्वात् स्वप्नसमं तथा भविष्यच्च सर्वमनित्यत्वेन स्वप्नसममित्याह - भूतमिति । सुप्तशब्दस्य कथं स्वप्नार्थत्वमपर्यायत्वादितीयमाशङ्का । "सुषुप्तिस्वप्नयोश्चैव स्वर्गव्योम्नोस्तथैव च । अन्योन्यनामता ज्ञेया मतिबुद्ध्योस्तथैव च ॥" (शब्दनिर्णये) इत्यनेन परिहर्तव्येति । सर्वमनित्यं चेत् नित्यं वस्तु किं तदाह - सर्वरहोरह इति । सर्वरहः सर्वशास्त्रप्रतिपाद्येषु रहस्यं गुरूपदेशत्वाद्रह इति स्वभक्तदोषात् स्वयं च निर्दोषतया सदा स्थितं रहो ब्रह्म । तदुक्तम् "रहो ब्रह्म तथा यज्ञः स्वःसत्यमिति गीयते" (शब्दनिर्णये) इति । नित्यनिर्दोषं

1. A, T उक्तमर्थमुप॰ 2. A, B, T अद्भुतम् 3. A, T omit इदं

ब्रह्मेतरत्सर्वमनित्यमसारं चेति विज्ञानं वैराग्यमिति भावः, विरक्त्या भक्तिस्तया गुणोपसंहारलक्षणमुपासनं तेनापरोक्षज्ञानं तेन श्रीनारायणप्रसादः, तेन स्वयोग्यमुक्तिरिति क्रममुल्लङ्घ्य वैराग्यस्य सर्वत्रानुसन्धानार्थं पश्चादप्युक्तमिति ज्ञातव्यम् ॥ (ख)

उपसंहरति - **भागवतमुख्य** इति । हंसयोर्जीवपरमात्मनोर्गतिं सच्चिदानन्दलक्षणां हरेर्जगदुत्पत्त्यादिलक्षणां जीवस्य तदधीनत्वादि लक्षणां वा। सिद्धजातिषु नारदस्य प्राधान्यद्योतनाय प्रथमपादस्याक्षराधिक्यम् ॥ ८१ ॥

''सर्गः स्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु'' (अम.को. 3-178) इत्यभिधानात् प्रजानां स्वभावविद्याधर्मादिपुरुषार्थरक्षणे तत्परिपन्थिनिरासेनेति शेषः ॥ ८३ ॥

विमुक्तसङ्गो निष्कामस्तस्य हरेः साम्यतां निर्दोषत्वलक्षणाम् ॥ ८४ ॥

एतस्येतिहासस्याभ्यासेन किं फलमुदेति येनायमवश्यं ज्ञातव्यस्स्यादन्यथा नारदेन बाललीलाकथावद्विनोदार्थमुक्तं फलानुक्तेरिति परीक्षितो हार्दं चोद्यं शुकः परिहरतीत्याह - **एतदिति** । अधिकात्मनः परमात्मनोऽधिगतात्मनः प्रत्यक्षसिद्धस्य जीवात्मनो वा स्वरूपं पारोक्ष्यं परोक्षतया शब्दलक्षणतया गीतं शब्दितं न साक्षादुक्तं देवप्रियत्वात् ''परोक्षप्रिया इव हि देवाः'' (बृह.उ. 4-2-2) (उ. 3-14) इति श्रुतेरित्यर्थः । देवर्षिणेत्यनेन नारदस्य विनोदकथाकथनस्वभावो नास्तीति ध्वनयति । लिङ्गेन शरीरेण मुच्यते रहितो भवतीत्यनेन तृतीयावचनेन पूर्वमपि स्वरूपाद्भिन्नमिति ध्वनयति स्वरूपभूतदेहेन सहसैव गच्छतीति च ''सोनानन्दाद्विमुक्त आनन्दी भवति'' इति श्रुतेः ॥ ८५ ॥

न केवलमिदं प्राचीनबर्हिषः प्रयोजनं, किन्तु सर्वेषामपीति भावेन पुनरुक्तं विशिनष्टि - **एतदिति** । मुकुन्दस्य यशसा सहितमेतत्पुरञ्जनोपाख्यानमात्मशौचमात्मनो मनसः शुचिता यस्मात्तत्तथा पारमेष्ठ्यं परमेष्ठिनः सर्वोत्तमस्य हरेः ज्ञप्तौ परमसाधनमधिगच्छति, गुरोः सकाशात् जानाति, भवे संसारे यस्मिन् जन्मनि जानाति अस्मिन्निति वा । अनेन संसारभ्रम एव निवार्यते न तु तद्बन्ध इति मन्दाशङ्कां निवारयति मुक्तेति ॥ ८६ ॥

शिष्टजनेष्वेकेन मैत्रेयेणाधिगतत्वादेतच्चावश्यमधिगन्तव्यमिति भावेनाह - **अध्यात्मेति** । मया मैत्रेय नाम्ना गहनत्वात् अद्भुतमिदं नारदेन प्राचीनबर्हिषे उपदिष्टमध्यात्मपारोक्ष्यमधिकात् गुरुमुखादधीतमेव तवोपदिष्टमत एव त्वयाप्यतिश्रद्धयाधीत्याभ्यसनीयमिति शेषः । नन्वेतदधिगमेन यदि वेदविषयोऽपि संशयश्छिन्नः स्यात् तर्ह्यधिगन्तव्यान्तराभावेन धन्यः स्याम् अतः कथं निर्णयः स्यादत्राह - एवमिति । यः पुंसो जिज्ञासोस्त्रय्या आश्रयस्त्रिवेदीविषयः संशयोऽध्यात्मस्वरूपे छिन्न

एवामुत्राधिदैवादिस्वरूपे च संशयो मम च्छिन्नः स्यादिति शेषः। अनेन पुरञ्जनोपाख्यानस्य वेदविषयत्वप्रतीतेस्तदतिश्रद्धया ध्येयमिति सिद्धम्, यद्वा एतदध्यात्मपारोक्ष्यमधिगतं यथा एवं त्रयी चाधिगता एक विषय त्वात् ततः किं फलमत्राह - आश्रय इति। पुंस आश्रय इहामुत्र च संशयश्छिन्नोभवतीत्येतत्फलं भवतीत्यर्थः। अतिगहनं जलनिधिवत् क्षुराग्रमिव दुर्ग्रहं निशितं तीक्ष्णं पुरञ्जनोपाख्यानं व्याख्याच्छलेन मया [1]अतारि तरणिरिव व्योमतलं, पवनात्मज इव पयोराशिं, क्षुरधारामिव निगदतोऽतारिषमध्यात्मपारोक्ष्यम्॥ ८७॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां

टीकायां एकोनत्रिंशोऽध्यायः॥ २९॥



1. A, B अवातारि

# त्रिंशोऽध्यायः

## विदुर उवाच

ये त्वयाऽभिहिता ब्रह्मन् सुताः प्राचीनबर्हिषः ।
ते रुद्रगीतेन हरिं सिद्धि मापुः प्रतोष्य काम् ॥ १ ॥

[1]किं बार्हस्पत्येह परत्र वा[2]ऽथवा कैवल्यनाथप्रियपार्श्ववर्तिनः ।
आसाद्य देवं गिरिशं यदृच्छया प्रापुः परं नून मथ[3] प्रचेतसः ॥ २ ॥

## मैत्रेय उवाच

प्रचेतसोऽन्तरुदधौ पितु रादेशकारिणः ।
जपयज्ञेन तपसा पु[4]रञ्जन मतोषयन् ॥ ३ ॥

द[5]शवर्षसह[6]स्रान्ते पुरुष स्तु सनातनः ।
तेषा माविरभूत्कृच्छ्रं शान्तेन शमयन् रुचा ॥ ४ ॥

सुपर्णस्कन्ध मारूढो मेरुशृङ्ग मिवाम्बुदः ।
पीतवासा मणिग्रीवः कुर्वन् वितिमिरा दिशः ॥ ५ ॥

## श्री श्रीधरस्वामिविरचिता भावार्थदीपिका

प्रसङ्गात् पञ्चभिः प्रोक्तं वृत्तं प्राचीनबर्हिषः । वर्ण्यते च पुन र्द्वाभ्यां प्रस्तुतं तत्[7] प्रचेतसाम् ॥
तत्र त्रिंशे तपस्तुष्टात् ई[8]शाल्लब्धवरा स्ततः । आगत्य वार्क्षी मुद्वाह्य राज्यं चक्रु रितीर्यते ॥

**य** इति । हरिं प्रतोष्य कां सिद्धि मापुः ॥ १ ॥

**किमिति** । हे बार्हस्पत्य ! कस्याञ्चिद्विद्यायां बृहस्पतेः मैत्रेयः शिष्य इति ज्ञातव्यम् । ते यदृच्छया गिरिशं प्राप्य तस्यैव कैवल्यनाथप्रियस्य गिरिशस्य पार्श्ववर्तिनः तदनुगृहीताः सन्तो नूनं परं मोक्षं प्रापुरेव; ततः पूर्वं तु इह अथवा परत्र किं प्रापुः ॥ २ ॥

---

1. M, Ma किं चेह नार्हन्त्यपरत्र वा सुखं; Ms किं वेह नार्हन्त्यपरत्र वा सुखं 2. V वा फलं 3. Ms ⁰मदभ्र⁰ 4. V नि⁰ 5. M, Ma, Ms दिव्य 6. Ms ⁰प्राणां 7. V च 8. V देवा⁰

**प्रचेतस** इति। रुद्रगीत [1]स्तोत्रजपरूपेण यज्ञेन तपसा च [2]निरञ्जनं हरिम् ॥ ३ ॥

**दशवर्षे**ति। तेषां कृच्छ्रं तपःक्लेशं, रुचा कान्त्या शमयन् शान्तेन शुद्धसत्त्वेन वपुषा आविर्भूतः ॥ ४ ॥

**सुपर्णे**ति। सुपर्णस्कन्ध [3]मारूढः इत्यादीनां बर्हिष्मतः सुतान् आहेति तृतीयेनाऽन्वयः ॥ ५ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं प्रचेतसां वृत्तमसमाप्यै[4]वान्तरे प्राचीन बर्हिषो वृत्तान्त उक्तः। इदानीं तद्वृत्तान्ताशेषशुश्रूषया पृच्छति विदुरः य इति। हे ब्रह्मन्! मैत्रेय! ये प्राचीनबर्हिषः पुत्रा स्त्वयाऽभिहिताः, ते रुद्रगीतेन स्तोत्रेण हरिं प्रतोष्य तोषयित्वा कां सिद्धिं [5]किं फलं आपुः प्रापुः ॥ १ ॥

हे बार्हस्पत्य! मैत्रेय! कस्याञ्चित् विद्यायां बृहस्पतेः मैत्रेय शिशष्यः यदृच्छया गिरिशं प्राप्य कैवल्यनाथस्य मोक्षाधिपतेः भगवतो यः प्रियो रुद्रः तस्य पार्श्ववर्तिनः, तेन अनुगृहीताः प्रचेतसः नूनं परं मोक्षं प्रापुरेव; ततः पूर्वं तु इह अत्र लोके परत्र लोके वा किं प्रापुः ॥ २ ॥

एव मापृष्टो मुनिः प्रचेतसां कथाशेष माह - **प्रचेतस** इति। पितुः आज्ञाकारिणः अन्त रुदधौ समुद्रजलमध्ये रुद्रगीत जपयज्ञेन तपसा, तप -आलोचने, निदिध्यासनेन च निरञ्जनम् अपहतपाप्मानं परमपुरुषं अतोषयन् ॥ ३ ॥

सनातनः परमपुरुषः दशवर्षसहस्रान्ते दशसहस्रसंख्यातवत्सरपर्यन्ततपश्चर्या[6]न्ते तेषां कृच्छ्रं तपः क्लेशं रुचाकान्त्या शमयन् शान्तेन शुद्धसत्त्वमयेन वपुषा आविरभूत् ॥ ४ ॥

[7]हरिं विशिनष्टि - **सुपर्णस्कन्ध** मिति सार्धद्वयेन। सुपर्णस्य गरुडस्य स्कन्[8]धम् आरूढः, तमुपलक्षयति मेरोः शृङ्गम् अम्बुदो नीलमेघ इवेति। पीतं पिशङ्गं वासो वस्त्रं यस्य सः, मणिः कौस्तुभः, ग्रीवायां यस्य सः, दिशः वितिमिराः प्रकाशबहुलाः कुर्वाणः ॥ ७ ॥

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

अव्यक्तस्वभावो हरिः तप आदि साधनसामर्थ्येन प्रसन्नो व्यक्तो भवतीत्येत द्रुद्राद्युत्तमत्वं च निरूप्यतेऽस्मिन्नध्याये। तत्र पूर्वप्रसक्तप्रमेयं विस्तरतः श्रोतुकामो विदुरोमैत्रेयं पृच्छति - **ये त्वये**ति। रुद्रगीतेन सदाशिवोपदिष्टेन स्तोत्रेण हरिं प्रतोष्य कां सिद्धिं पुरुषार्थरूपां प्रापुरित्यन्वयः ॥ १ ॥

---

1. A, B, J, Va omit स्तोत्र 2. A, B, J, Va पु° 3. V °दिना 4. A, B, T °वाऽवान्तरे 5. A, B, J, omit किं 6. W °न्तं 7. A, B, T पुरुषं 8. A, B, T °न्धे

विष्णुतद्भक्तभक्तानां सिद्धि रस्त्येव, सा तु कीदृशीति भावेन पृच्छतीत्याह - **किञ्चेति**। तदेतत्प्रेयः (बृह.उ. 1-4-8) इति श्रुतेः। कैवल्यनाथ श्चासौ प्रियश्च कैवल्यनाथप्रियः, तस्य कैवल्यनाथप्रियस्य विष्णोः, कैवल्यस्य नाथः कैवल्यनाथः तस्य, कैवल्यनाथस्य प्रियो रुद्र स्तस्य वा, पार्श्ववर्तिनः समीपे वर्तमानाः पुरुषा इह लोकेऽथवा अमुष्मिं ल्लोके किं पुरुषार्थलक्षणं सुखं नार्हन्ति ? सर्व मर्हन्ति। तत्र प्रचेत रसो यदृच्छया दैवेच्छया गिरिश मासाद्य पर मुत्कृष्टं सुखं नूनं किं प्रापुरित्यन्वयः। गिरेः ब्रह्मणः प्रसादेन शं सुखं यस्य स गिरिशः। "तं ब्रह्म गिरि रित्याचक्षते इति श्रुतेः। गिरि वाचि शेत इति वा। गिरौ कैलासे शेते इति गिरिशः। पूर्वत्राऽलुक् समासः शीङों ड प्रत्ययश्च। प्रूपालन पूरणयोः इति धातोः परं जगत्पालनं मुक्तिलक्षणपूर्णानन्दमुतेति। अनेन प्रचेतसो यानि योग्यानि कल्याणानि अर्हन्ति, तेषु किम्मुख्या मापुरिति प्रश्नतात्पर्यार्थः॥ २॥

जगत्पालनादिसर्वाः सिद्धी रापुरिति परिहारं वक्तु मुपक्रमत इत्याह मैत्रेय इति। जपयज्ञेन रुद्रगीताख्य स्तोत्रयज्ञेन पुराणां शरीराणां जननात् जन्मना व्यञ्जयितृत्वात् पुरञ्जनो विष्णुः। पुरे अञ्जनात् व्यञ्जनात् पुरञ्जनो जीवः। यत स्तपसा पुरञ्जनं जीवनामान मशोयन् तेन पुरञ्जनं विष्णु मतोषयन्। प्रसादाभिमुखं चक्रुरित्यर्थद्वय द्योतनाय पुरञ्जनपदं प्रायोजीति अतः पूर्वोक्तः पुरञ्जनो नाऽत्रोच्यते - "पुरेषु त्वञ्जनाज्जीवः पुरञ्जन इतीरितः। पुराणां जनना द्विष्णुः व्यञ्जकत्वं द्वयो रपि" (तन्त्रभागवते) इति वचनात् सिद्धमिद मर्थद्वयमिति। लृतुलसानां दन्ताः, इचुयशानां तालु, इत्यतः तकारशकारयोः स्थानसामीप्यात् "उपूपध्मानीयाना मोष्ठौ" इत्यनुबन्धोकारस्यैकस्थानत्वा च्च वा अशोषयन् अतोषयन्निति युज्यते॥ ३॥

[1-]दिव्यवर्षसहस्राणा मित्यत्र सहस्रशब्दस्य यथाप्रतीतार्थस्य अनुपपन्नत्वात् बाहुल्यार्थ इति अङ्गीकर्तव्यः। प्रामाणिकत्वा च्च एतदुक्तम् - मानुषाणां वत्सराणां लक्षद्वादशकं पुरा। प्रचेतोभि रियं पृथ्वी पालिताऽव्याहतेन्द्रियैः॥ (ब्राह्माण्डे) इति[-1]। प्रचेतसां शान्तेन भगवन्निष्ठया जातयाऽनुग्रहलक्षणया रुचा तेषां कृच्छ्रं दुःखं शमयन्॥ ४॥

मणिग्रीवः कण्ठामुक्तकौस्तुभः वितिमिरा निरस्तान्धकाराः॥ ५॥

**[2]काशिष्णुना कनकवर्ण[3]विभूषणेन भ्राजत्कपोलवदनो विलसत्किरीटः।**
**[4]अष्टायुधैरनुचरैर्मुनिभिः सुरेन्द्रैः आसेवितो गरुडकिन्नरगीतकीर्तिः॥ ६॥**

**पीनायताष्टभुजमण्डलमध्यलक्ष्म्या स्पर्धच्छ्रिया परिवृतो वनमालया[5]ऽऽद्यः।**
**बर्हिष्मतः पुरुष आह सुतान् प्रपन्नान् पर्जन्यनादरुतया सघृणावलोकः॥ ७॥**

1--1. A, B, M, omit 2. M, Ma, Ms कासि°; W भ्राजि° 3. J °षितेन 4. M, Ma °धैः करवैः° 5. M, Ma °या यः

श्री भगवानुवाच[1]

वरं वृणीध्वं भद्रं वो यूयं मे नृपनन्दनाः ।
सौहार्देनापृथग्धर्मास्तुष्टोऽहं सौहृदेन वः ॥ ८ ॥

योऽनुस्मरति शय्यायां[2] युष्माननुदिनं नरः ।
तस्य भ्रातृष्वात्मसाम्यं तथाभूतेषु सौहृदम् ॥ ९ ॥

ये तु[3] मां रुद्रगीतेन सायं प्रातः समाहिताः ।
स्तुवन्त्यहं कामवरान् दास्ये प्रज्ञां च शोभनाम् ॥ १० ॥

**श्रीध० काशिष्णु**नेति । [4-]काशिष्णुना दीप्तिशीलेन[-4] कनकमयेन [5]सुवर्णवता विभूषणेन भ्राजमानं कपोलं वदनं च यस्य । अष्टभिरायुधैः गरुड एव किन्नर स्तेन पक्षस्वनैः गीता कीर्तिः यस्य ॥ ६ ॥

**पीनेति** । पीनाश्च ते आयता अष्टौ भुजाः तेषां, मण्डलं समूहः, तन्मध्ये स्थितया लक्ष्म्या स्पर्धमाना श्रीः शोभा यस्याः तथा वनमालया परिवृतः, आद्यः पुरुषः पर्जन्यस्य नाद इव रुतं नादो यस्याः तथा वाचा आह, सघृणोऽवलोको यस्य ॥ ७ ॥

**वरमिति** । यूयं मे मत्तो [6]वरं वृणीध्वं, सौहार्देन हेतुना अपृथक् [7-]एकविषयो धर्मो[-7] येषां [8]तेषां सम्बोधनम् । वः परस्परं सौहृदेन तुष्टोऽहम् ॥ ८ ॥

**य** इति । [9-]भ्रातृषु आत्मसाम्यं[-9] भूतेषु सौहृदं च भविष्यति ॥ ९ ॥

**ये** इति । तेभ्यो दास्ये, किं पुनर्युष्मभ्यमिति शेषः ॥ १० ॥

**वीर०** [10]कनकमयशोभनवर्ण विभूषणेन अत [11]एव भ्राजिष्णुना प्रकाशस्वभावेन भ्राजमानं कपोलं वदनं, च यस्य सः, प्रकाशमान किरीटयुक्तः अष्टायुधैः शङ्खचक्रगदापद्मशार्ङ्गशरखड्गखेटैः, पद्मस्य आयुधानन्तर्भूतत्वेऽपि , छत्रिन्यायेन आयुधशब्दः प्रयुक्तः । परशुपाशाङ्कुशाद्यन्यतमो वा अत्र अष्टमो विवक्षितः । [12-]अष्टायुधैः इत्यनेन अष्टभुज इत्यपि विवक्षितः[-12] । अनुचरैः पार्षदैः मुनिभिः सुरेन्द्रैः

---

1. Ms वैकुण्ठः 2. A, B, G, I, J, M, Ma, Ms, T सन्ध्यायां 3. V च 4--4. A, B, J, Va omit 5. A, B, J, Va omit सु 6. A. B. J, Va omit वरं 7--7. B, J, V, Va omit 8. V omits तेषां 9--9. A, B. J, Va omit 10. A, B, T add पुनः कीदृशः ? काशिष्णुनेति । 11. A. B, T add काशिष्णुना 12--12. W omits

ब्रह्मादिभिश्चासेवितः गरुड एव किन्नरः तस्य वेदात्मक पक्षध्वनिः गरुड किन्नर शब्दविवक्षितः तेन गीता कीर्तिः यस्य सः, यद्वा गरुडाः गरुड जातीयाः किन्नराश्च तैः गीता कीर्तिः यस्य सः ॥ ६ ॥

पीनाश्च ते आयताश्च अष्टौ भुजाः तेषां, मण्डलं समूहः, तन्मध्ये स्थितया लक्ष्म्या स्पर्धमाना श्रीः शोभा यस्याः तया वनमालया परिवृतः। आद्यः आदौ भवः जगत्कारण भूतः पुरुषः प्रपन्नान् बर्हिष्मतः सुतान् प्रति पर्जन्यनाद इव रुतं नादो यस्याः तया वाचा सघृणः कृपायुक्तोऽवलोको यस्य स आह ॥ ७ ॥

हे नृपनन्दनाः ! यूयं मे मत्तः वरं वृणीध्वं। वः भद्र मस्तु, परस्परसौहृदेन अपृथक्-धर्माः तुल्यधर्माणः यूयं वः युष्माकं सौहृदेनाऽहं तुष्टः ॥ ८ ॥

यो नरः अनुदिनं सायं प्रातः शय्यायां[1] युष्मान् अनुस्मरति। तस्य नरस्य भ्रातृषु आत्मसाम्यं आत्मना तुल्यं स्वात्मनीव प्रीतिः तथा भूतेषु सौहृद ञ्च भविष्यति ॥ ९ ॥

ये नराः सायं प्रातः समाहितचित्ता स्सन्तः रुद्रगीतेन मां स्तुवन्ति तेभ्योऽप्यहं कामवरान्, काम्यन्त इति कामाः। तान् वरान् अभीष्टान् वरान्[2] प्रज्ञां च दास्ये, किं पुन र्युष्माकम् ॥ १० ॥

**विज०** काशृ[3]-दीप्तौ। भ्राजद्भ्यां राजद्भ्यां कपोलाभ्यां युक्तं वदनं यस्य स तथा। भ्राजदित्युक्त्याऽत्मने पदे परस्मैपदित्वं काल्पनिक मिति ध्वनयति ॥ ६ ॥

पीनानाम् आयतानाम् अष्टानाम् भुजानां मण्डलस्य मध्ये वक्षसि स्थितया लक्ष्म्या सह स्पर्धमानवत् वर्तमाना श्रीः विकासलक्षणा यस्याः सा तथा। अश्ववदाचरतीति अश्वन् इत्यादौ दर्शनात् औपचारिकोऽयं प्रयोगः। न हि हरेरपि वक्षसि स्थितयोः लक्ष्मीवनमालयोः औत्सर्गिकी स्पर्धा सङ्घाघटीति ? पर्जन्यो मेघः तन्नादवदद्भुतं ध्वनि र्यस्याः सा तया वाचेति शेषः। घृणया दयया सहवर्तत इति सघृणः, तादृशोऽवलोको यस्य स तथा ॥ ७ ॥

**सौहार्देन** हेतुना अपृथग्धर्मा एकविषयधर्मचारिणः तेन किं तव तत्राह - **तुष्ट** इति। अतो वरं वृणीध्वम् इत्यर्थः ॥ ८ ॥

न केवलं मत्तो युष्माक मेव फल मन्येषां भवद[4]नुस्मर्तृणा मपि फलविशेषो भवतीत्याह - **य** इति। यथा मत्प्रीतिहेतुः मत्तोषकरं युष्मदपृथग्धर्मत्वस्मरणम्, इतरेषामपि भ्रातृषु आत्मसाम्यफलं स्यात् तथा ॥ ९ ॥

---

1. A, T सन्ध्यायां 2. A, B, T omit वरान् 3. B, M, Ma कासृ 4. Ma omit भवत्

रुद्रगीतेन मां स्तुवद्भ्योऽपि कामवरान् दास्यामीत्याह - **ये तु मामिति** ॥ १० ॥

**यद्यूयं पितुरादेश मग्रहीष्ट मुदाऽन्विताः ।**
**अथो व उशती कीर्तिः लोका ननु भविष्यति ॥ ११ ॥**

**भविता विश्रुतः पुत्रो[1]ऽनवमो [2]ब्रह्मणो गुणैः ।**
**य एता मात्मवीर्येण त्रिलोकीं पूरयिष्यति ॥ १२ ॥**

**कण्डोः प्रम्लोचया लब्धा कन्या [3]कमललोचना ।**
**तां चापविद्धां जगृहुः भूरु[4]हा नृपनन्दनाः ॥ १३ ॥**

**क्षुत्क्षामाया मुखे राजा सोमः पीयूषवर्षिणीम् ।**
**देशिनीं रोदमानाया निदधे स दयान्वितः ॥ १४ ॥**

**प्रजाविसर्ग आदिष्टाः पित्रा मा मनुवर्तता ।**
**तत्र कन्यां वरारोहां ता मुद्वहत मा चिरम् ॥ १५ ॥**

**श्रीध० यदिति** । अग्रहीष्ट गृहीतवन्तः । अथोइति हेतौ । लोका ननु लोकेषु, भविष्यति ; यद्वा लोकान् अनुभविष्यति द्रक्ष्यति व्याप्स्यती त्यर्थः ॥ ११ ॥

**भवितेति** । [5-]अनवमः अनूनः ब्रह्मपुत्राणां मध्ये अनवमो दक्ष इति वा[-5], आत्मनो वीर्येण सन्तानेन ॥ १२ ॥

पुत्रार्थ मादौ भार्यां सम्पादयति [6]भगवान् **कण्डोरिति** त्रिभिः । तपोनाशार्थं इन्द्रप्रेषितया प्रम्लोचया कण्डुर्नाम ऋषिः बहुकालं रेमे । सा च ततः स्वर्गं गच्छन्ती कण्डोः जातं गर्भं वृक्षेषु त्यक्त्वा जगाम । तदेतदुक्तम् - अपविद्धां त्यक्ताम् । [7-]भूरुहाः वृक्षाः, हे नृपनन्दनाः[-7] ! ॥ १३ ॥

**क्षुदिति** । स प्रसिद्धो वनस्पतीनां राजा सोमोऽमृतस्राविणीं देशिनीं तर्जनीं रुदत्याः तस्याः मुखे निदधे । अनेन अप्सरोगर्भसम्भवेन अमृताहारेण च तस्याः लावण्यं क्लमस्वेद दौर्गन्ध्यादिराहित्यं चोक्तम् ॥ १४ ॥

**प्रजेति** । मा मनुवर्तमानेन पित्रा नियुक्ता स्सन्तः तत्र प्रजाविसर्गे निमित्ते ता मुद्वहत ॥ १५ ॥

---

1. W नावमो 2. W विश्रुतो 3. W याऽमल 4. W °हो 5--5. A, B, J, Va omit 6. V omits भगवात् 7--7. A, B, J, Va omit

**वीर०** यत् यस्मात् यूयं पितु रादेश माज्ञां मुदा युक्ता स्सन्तोऽग्रहीष्ट गृहीतवन्तः, अतो वः युष्माकं उशती कमनीया कीर्तिः लोकान् अनुभविष्यति प्राप्स्यति लोकेषु विस्तरिष्यती त्यर्थः ॥ ११ ॥

"कण्डो र्मुने र्दुहितरं यूय मुद्वहत" इति वक्ष्यमाण स्तावत् कण्डुं तत्कन्यां च प्रस्तौति - **भवितेति**। विश्रुतः विश्रुन्नाम्नः पुत्रः गुणैः, विश्रुतः पितुः, नावमः न न्यूनः। विश्रुता समःभविता भविष्यतीत्यर्थः। यो वै श्रुतः एतां त्रिलोकी मात्मनो वीर्येण सन्तानेन पूरयिष्यति ॥ १२ ॥

वैश्रुतस्य कण्डोः सकाशात् प्रम्लोचया तपोनाशार्थ मिन्द्रेण प्रेषितया प्रम्लोचाख्यया अप्सरसा स्त्रिया या कन्या अमललोचना लब्धा, तां कन्यां अपविद्धां, पुन स्स्वर्गं प्रति गच्छन्त्या प्रम्लोचया वृक्षेषु त्यक्तां, भूरुहो[1] वनस्पतयः जगृहुः दुहितर ममन्यन्त हे नृपनन्दनाः ॥ १३ ॥

क्षुधा क्षमायाः[2] पीडितायाः अतो[3] रोदमानायाः तस्याः कन्यायाः मुखे वनस्पतीनां राजा सोम इति प्रसिद्धः अमृतस्राविणीं देशिनीं तर्जनीम् अङ्गुलीं[4] निदधे निहितवान्। अनेन अप्सरसो गर्भ सम्भवेन अमृताहारेण च तस्या लावण्यं क्लम-स्वेद-दौर्गन्ध्यादि-राहित्यञ्चोक्तम् ॥१४॥

मा मनुवर्तमानेन पित्रा बर्हिष्मता वः युष्मभ्यं प्रजासर्ग आदिष्ट आज्ञापितः, अत स्तत्र प्रजासर्गे यतमानाः यूयं तां पाति माकाङ्क्षन्तीं कन्यां उद्वहत चिरं विलन्बं मा कुरुत ॥ १५ ॥

**विज०** अन्यञ्च वरं दास्यामीत्याह - **यद्यूयमिति**। अनेन विमलकीर्तिकामैः पुरुषैः गुर्वादेशः सर्वथा अनुष्ठेय इति शिक्षा दर्शिता ॥ ११ ॥

सत्पुत्राभावे किं प्रयोजनं जन्मना ? "सोऽयं मनुष्यलोकः पुत्रेणजय्य" (बृह.उ.1-5-16) इति श्रुतेः। तत्राह - भवितेति। पुत्र शब्दार्थं ध्वनयति - **य एता मिति** ॥ १२ ॥

अनुकूलभार्याऽभावे कथ मौरसपुत्रसम्पदित्यत स्तत्प्राप्तिं वक्तु मुपक्रमते - **कण्डोरिति**। प्रम्लोचया अप्सरसा मातृपितृमरणकारणयोगे[5] तज्जातत्वात् तत्परिहारार्थ मपविद्धां त्यक्तां भूरुहा वृक्षा जगृहुः इत्यन्वयः ॥ १३ ॥

क्षुत् - क्षामाया श्रान्तायाः, स सोमः ॥ १४ ॥

---

1. A, B, T °हाः 2. W omits क्षामायाः 3. W omits अतो 4. W omits अङ्गुली° 5. A, B माता

प्रजाविसर्गे प्रजानां विविधसृष्टौ। ततः किमत्राह - **तत्रेति**। तत्र तस्मिन् कार्ये कर्तव्ये सति॥ १५॥

**अपृथग्धर्मशीलानां सर्वेषां वः सुमध्यमा।**
**अपृथग्धर्मशीलेयं भूया [1]त्पत्न्यर्पिताशया॥ १६॥**

**दिव्यवर्षसहस्राणां [2]सहस्रं महतौजसः।**
**भौमान् भोक्ष्यथ भोगान् वै दिव्यांश्चानुग्रहान्मम॥ १७॥**

**अथ मय्यनपायिन्या भक्त्या पक्वगुणाशयाः।**
**[3][4]उपयास्यथ मद्धाम निर्विद्य निरयादतः॥१८॥**

**गृहेष्वाविशतां चापि पुंसां कुशलकर्मणाम्।**
**मद्वार्तायातयामानां न बन्धाय गृहा मताः॥१९॥**

**[5]नव्यवद्धृदये यज्ज्ञो ब्रह्मैतत् ब्रह्मवादिभिः।**
**न मुह्यन्ति न शोचन्ति न हृष्यन्ति यतो गताः॥२०॥**

**श्रीध०** ननु बहूनां कथ मेका भार्या [6-]स्यात् इति लोकशास्त्रविरोधात्[-6] तत्राह - **अपृथगिति**। अपृथक् धर्मः शीलं च येषां तेषां वः पत्नी भूयात्, अर्पितो भवत्सु आशयो यया। धर्मशीलयोः ऐक्यात् मद्वाक्या च्च न दृष्टादृष्टविरोध इति भावः॥ १६॥

[7-]अन्यदपि मदाराधनफलं गृह्णीते[-7] त्यत आह - **दिव्येति**। अहतौजसः अप्रतिहतबलास्सन्तः॥ १७॥

**अथेति**। पक्व गुणो दग्ध कामादिमल आशयो येषां [8-]पक्वो गुणानां आशयो येषा मिति[-8] वा। अतो लोकद्वयभोगान् निरयप्रायान् निर्विद्य मत्स्थानं प्राप्स्यथ॥ १८॥

ननु गृहेषु प्रविष्टाना मस्माकं तदासक्त्या बन्ध एव स्यात्, कुतः ? तद्भक्तिः निर्वेदो वा तत्राह - **गृहेष्विति**। कुशलं मय्यर्पितं [9]सर्वं कर्म येषां, मद्वार्तया यातो यामः कालो येषाम्॥ १९॥

**त्वद्वार्तश्रोतृणां गृहैः न बन्ध इति कुतः? तत्राह - न व्यवदिति। यद्यस्मात् कथाश्रवणात् ज्ञः सर्वज्ञोऽ ह मीश्वरो ब्रह्मवादिभिः**

---

1. M, Ma प्रत्यर्पिता मया; Ms प्रत्यर्पिताशया; W प्रत्यर्पिताशया 2. T, W साहस्रममितौजसः 3. Ms, V उपा० 4. T ०स्यास्यथ 5. M, Ma, Ms न व्यवह्रियते 6--6. A, B, J, Va omit 7--7. A, B, J, Va omit 8--8. B, J, V, Va omit 9. A, B, J, Va omit सर्वं

[1] मत्कथा प्रवृत्तिभिः निमित्त भूतैः श्रोतॄणां हृत् हृदयं नव्यवत् प्रतिपदं नूतनवत् अये प्राप्नोमि [2-] मनस्यभिव्यक्तो भवामि [-2] । ननु त्वत्कथाश्रवणे कथं ब्रह्मसाक्षात्कारः ? तत्राह योऽह मेतदेव ब्रह्म, तत्र हेतुः - यतो गताः, यं मां प्राप्ता स्सन्तो मोहशोकहर्षान् न प्राप्नुवन्त्यतो मत्कथाश्रवणेन नव्यवत् मम हृद्याविर्भा वादस्यैव ब्रह्मसाक्षात्कारत्वात् गृहेषु वसतामपि न बन्ध इत्यर्थः ॥ २० ॥

**वीर०** ननु बहूनां कथं एका भार्या स्यात् ? तत्राह - अपृथगिति अपृथक् धर्मः शीलं यस्याः सेयं सुमध्यमा पत्नी भूयात्, धर्मशीलयोः ऐक्यात् मद्वाक्या च्च न दृष्टिविरोध इति भावः ॥ १६ ॥

दिव्यानां देवमान परिच्छिन्नानां वर्षसहस्राणां साहस्रं कालम् अमितौजसः अमित मोजः इन्द्रियशक्ति र्येषां ते यूयं भौमान् भोगान् भोक्ष्यथ ॥ १७ ॥

अनन्तर मव्यभिचारिण्या मयि भक्त्या पक्वगुणः दग्ध कामादिमलः आशयोऽन्तःकरणं येषां ते, अते निरयात् संसारान्निर्विद्य निर्वेदं लब्ध्वा, पक्वगुणआश्रया इति पाठे शान्तसत्त्वादिगुणवासनाः मद्धाम मत्स्थानं उपयास्यथ[3] प्राप्स्यथ ॥ १८ ॥

ननु भौमभोगासक्तानां नः त्वद्भक्तिः कथं भविष्यति? तत्राह - गृहेषु आविशतां प्रविष्टाना मपि कुशलं अनभिसंहितफलं कर्म येषां मद्वार्ता यातयामानां मत्कथाक्षपित कालानां गृहाः बन्धाय न मताः बन्धका न भवन्ति[4] ॥ १९ ॥

त्वद्वार्ताश्रोतॄणां गृहैः न बन्ध इति कुत स्तत्राह - **नव्यवदिति** । यत् यस्मात् यत्कथाश्रवणात् ज्ञः सर्वज्ञोऽह मीश्वरः ब्रह्मवादिभिः प्रवक्तृभिः निमित्तभूतैः श्रोतॄणां हृत् हृदयं नव्यवत् प्रतिपदं नूतनव दये प्राप्नोमि । [5-] मनस्यभिव्यक्तो भवामि ब्रह्मसाक्षात्कारो भवतीत्यर्थः । ननु त्वत्कथाश्रवणे कथं ब्रह्मसाक्षात्कारः? तत्राह - योऽहमेतदेव ब्रह्म । तत्र हेतुः - यतो गताः यं मां प्राप्ता स्सन्तः मोहशोकहर्षा न्न प्राप्नुवन्ति । अतो मत्कथाश्रवणेन नव्यवत् मम हृद्याविर्भावात्, अस्यैव ब्रह्मसाक्षात्कारत्वात् गृहेषु वसता मपि न बन्ध इत्यर्थः [-5] । न व्यवच्छिद्यते यज्ञ इति पाठे तु गृहेषु परब्रह्मभूतं मां कथयद्भिः यज्ञो मद्वक्यात्मक[6] ज्ञान यज्ञो, न व्यवच्छिद्यते विच्छिन्नो न भवति[7] । यज्ञं विशिनष्टि - यतो [8-] ज्ञानयज्ञात्[-8] मद्गतिं[9] गताः प्राकृतैः मोहादिभिः युक्ता न भवन्ति ॥ २० ॥

**विज०** बहूनामस्माकं इय मेकाऽनुकूला कथं स्या दत्रापि तादृशं वरं दास्यामीत्याह - **अपृथग्धर्मशीलानामिति** ॥ १६ ॥

दिव्यवर्षसहस्राणां इत्यत्र सहस्रशब्दो बहुलवाची प्रतीतार्थस्य प्रमाणविरुद्धत्वात् अनुपपन्नं तदुक्तम् "मनुष्याणां वत्सराणां [10-] लक्षद्वादशकं पुरा । प्रचेतोभि रियं पृथ्वी पालिताऽव्याहतेन्द्रियैः, [-10] (ब्रह्माण्डे ) इति ॥ १७ ॥

---

1. A. B. J. Va omit मत्कथा 2--2. A. B. J. Va omit 3. T उपस्थास्यथ 4. A. B. T add इत्यर्थः 5--5. A. B. T omit 6. A. B. T °ना 7. A. B. T add इत्यर्थः । 8--8. A. B. T योगात्मनि 9. A. B. T add इत्याह । 10--10. Ma omits

एव मैहिकं वरं दत्वा पारत्रिकं वरं ददाति - **अथेति**। पक्वः परिपाकं प्राप्तो गुणाशयः प्राकृतान्तः करणं येषां ते तथा। अतो निरयादस्मात् संसारात् ''अतो निन्दाहेतुचित्रेषु, (वैज.को. 8-7-16) इत्यभिधानात्। चित्रात् पुण्य पापमिश्रितात् ''चित्रमालेख्यमिश्रयोः, (वैज.को. 6-5-30) इत्यभिधानात्॥ १८॥

गृहाविष्टचेतस्त्वेन पुत्रमित्रादिस्नेहबद्धानां कथं धामप्रवेशो घटत इति तत्राह - **गृहेष्विति**। मद्वार्तया यातो गतो यामः कालविशेषो येषां ते तथा, ''गृहाः पुंसि च भूम्न्येव, (अम.को.2-2-5) इत्यमरः, जसि पुंलिङ्गः॥ १९॥

ननु भवद्वार्ता संसारच्छेदिनी यदि, तर्हि सर्वेऽपि किं न मुक्ताः? तस्याः सुलभत्वा दिति तत्राह - न व्यवह्रियत इति। यतो यस्य हरेः प्रसादा द्गताः सूक्ष्मेण मनसा अवगच्छन्तो जानन्तो ये विपदि न मुह्यन्ति, न शोचन्ति, सम्पदि न हृष्यन्ति तैः ब्रह्मवादिभिरप्येतत् यज्ञो ब्रह्मविष्ण्वाख्यं ब्रह्म यथानुभवं न व्यवह्रियत इत्यन्वयः। अतो मद्वार्तया असुलभत्वात् न सर्वेषां मुक्तिरित्यर्थः। ब्रह्मवादिभिः भवद्भिः गृहेऽपि यज्ञो निजकर्म न व्यवच्छिद्यते यतो भवन्तो मदाज्ञया गृहागता न मोहादिकं कुर्वन्तीत्येवमादि मयोपदिष्ट मेतद्रहस्यं तस्मान्मा शोचत इत्यपव्याख्यानं ''सूक्ष्मेण मनसा विद्मो वाचा वक्तुं न शक्नुमः, (भारते) इति वचनेन निरस्तमिति ज्ञायते। यज्ञपदस्य निजकर्मार्थत्वं ब्रह्मपदस्य रहस्यार्थत्वं च न व्यवच्छिद्यत इति ग्रन्थव्यत्यासश्च सम्प्रदायापरिज्ञान विजृम्भितश्चेति ''यज्ञो विष्णु र्देवता, ''ब्रह्मविदाप्नोति परम्, (तैति.उ. 2-1) इति। सूचनाय ब्रह्मवादिभिरिति प्रसिद्ध यज्ञपरिहाराय ब्रह्मेति, विप्रादिव्यावृत्तये यज्ञ इति॥ २०॥

## मैत्रेय उवाच

**एवं ब्रुवाणं पुरुषार्थ[1]भाजनं जनार्दनं प्राञ्जलयः प्रचेतसः।**
**तद्दर्शनध्वस्त तमोरजोमला गिराऽगृणन् गद्गदया सुहृत्तमम्॥ २१॥**

## प्रचेतस ऊचुः

**नमो नमः क्लेशविनाशनाय निरूपितोदारगुणा ह्वयाय।**
**मनो वचो वेग पुरोजवाय सर्वाक्षमार्गै रगता[2]ध्वने नमः॥ २२॥**
**शुद्धाय शान्ताय नमः स्वनि[3]ष्ठ मनस्यपा[4]र्थे विलसद् द्वया[5]य।**
**नमो जगत्स्थान लयोदयेषु गृहीतमायागुण विग्रहाय॥ २३॥**

---

1. W साधनं 2. Ms °त्मने 3. A, B, G, I, J, T, Ms, V, W °ष्ठ्या 4. A, B, G, I, J, T, V °र्थ° 5. W °यात्मने

**नमो विशुद्धसत्त्वाय हरये हरिमेधसे।**
**वासुदेवाय कृष्णाय प्रभवे सर्वसात्त्वताम् ॥ २४ ॥**

**नमः कमलनाभाय नमः कमलमालिने।**
**नमः कमल[1]पादाय नमस्ते कमल[2]ेक्षण ॥ २५ ॥**

**श्रीध० एवमिति**। पुरुषार्थं भाजयति प्रापयतीति तथा तम् ॥ २१ ॥

**नम** इति। वेदैः [3-]ब्रह्मवादिभिश्च[-3] सकलश्रेयस्साधनत्वेन निरूपिता उदारगुणाः आह्वया नामानि च यस्य, मनोवचसो वेगादपि पुरोऽग्रतो जवो वेगो यस्य। मनोवचसो रगोचरायेत्यर्थः। अत एव सर्वेषां अक्षाणां [4-]इन्द्रियाणां[-4] मार्गैः अगतोऽनवगतोऽध्वा यस्य तस्मै[5] नमः ॥ २२ ॥

**शुद्धाये**ति। स्वनिष्ठया स्वरूपस्थित्या [6]शुद्धाय अतः शान्ताय मनसि निमित्ते सति अपार्थं व्यर्थमेव विलसत् विस्फुरितं द्वयं (द्वैत) [7]रूपं यस्मिन्, गृहीता मायागुणैः विग्रहा ब्रह्मादिमूर्तयो येन ॥ २३ ॥

**नम** इति। स्वत स्तु विशुद्धसत्त्वरूपाय संसारं हरन्ती मेधा ज्ञानं यस्य तस्मै ॥ २४, २५ ॥

**वीर०** [8-]एवं भगवतोक्ता प्रचेतसः तमेव जनार्दन मगृणन्नित्याह मैत्रेयः[-8]। एवम् उक्तप्रकारेण ब्रुवाणं पुरुषार्थाना माश्रयं सुहृत्तमं जनार्दनं, तस्य जनार्दनस्य दर्शनेन ध्वस्तानि कामक्रोधादीनि रजआदि कार्यरूपाणि मलानि येषां ते, प्राञ्जलयः [9-]बद्धाञ्जलयो[-9] गद्गदगिरा अगृणन् तुष्टुवुः ॥ २१ ॥

आध्यात्मिकादिदुःखानां नाशाय उदारगुणाः यस्याह्वयैः नामभिः निरूपिताः स निरूपितोदारगुणाह्वयः तस्मै, मनोवचसोः वेगा दपि पुरोऽग्रतो वेगो यस्य, वाङ्मनसागोचरायेत्यर्थः। सर्वेषा मक्षाणा मिन्द्रियाणां मार्गाः वृत्तयः तैः, अगतः अविषयीकृतः अध्वा स्वप्राप्त्युपायः यस्य, इन्द्रियद्वारा अगोचरस्वप्राप्त्युपायायेत्यर्थः ॥ २२ ॥

शुद्धाय कर्मोपाधिरहिताय, शान्ताय ऊर्मिषट्करहिताय। तत्र हेतुः - स्वनिष्ठया स्वस्मिन्निष्ठाऽविच्छेदः अविच्छिन्नस्वानुभूत्या अपार्थे अपगतपुरुषार्थे पुरुषार्थभूतस्वरूपज्ञानरहिते मनसि विलसत् परस्परवैलक्षण्येन स्फुरत् द्वयं देहात्मनोः द्वयं येषां ते

---

1. V नेत्राय 2. V °लाङ्घ्रये 3--3. B, J, V, Va omit 4--4. A, B, J, Va omit 5. A, B, J, Va add ते 6. A adds सुखाय
7. A, B, J, Va omit रूपं 8--8. W omits 9--9. W omits

विलसद्द्वयाः, स्वस्वरूपज्ञानविधुरेऽपि मनसि भगवत्प्रसादवशात् देहात्मज्ञानसम्पन्ना इत्यर्थः । तेषां जीवानां आत्मने निरतिशयप्रीतिविषयाय जगतः स्थानलयोदयेषु स्थितिलयोत्पत्तिषु निमित्तभूतासु जगत्स्थित्याद्यर्थं गृहीता माया सङ्कल्पात्मकं ज्ञानं "माया वयुनं ज्ञानम्, (वेद.निघण्टुः- ३-९) इति ज्ञानपर्यायत्वात् मायाशब्दस्य । गुणौ तमोरजसी एव विग्रहौ पृथक्सिद्ध्यनर्हौ यस्य, स्थित्यर्थं स्वेच्छोपात्ताप्राकृतदिव्यमङ्गलविग्रहः लयार्थ मुत्पत्त्यर्थन्तु तमोरजः-प्रधानरुद्रब्रह्मविग्रहः तस्मै इत्यर्थः ॥ २३ ॥

स्थित्यर्थ[1] विष्णुतनोः प्राकृतत्वशङ्कापरिहाराय प्राहुः - विशुद्धसत्त्वायेति हरये बन्धहारिणे हरिमेधसे दुरितहारिमनीषाविषयाय सर्वभूतान्तरात्मने आनन्दकराय सात्वतां भक्तानां प्रभवे ॥ २४ ॥

कमलं जगदुत्पत्तिस्थानात्मकं नाभौ यस्य, कमलमालाऽस्यास्तीति तस्मै व्रीह्यादित्वात् मत्वर्थीयः इनिः । "[2-]अत इनिठनौ, (अष्टा. 5-2-115) इति तपरकरणात्[-2]। कमलवत्पादौ कोमलौ सुगन्धी सुन्दरौ च यस्य, कमलदलवत् विशाले अक्षिणी यस्य तस्मै ॥ २५ ॥

विज० प्रचेतोभिरेवं भगवतो मत मवाप्य स्वपरहितं किमकारीति तत्राह - एवमिति ॥ २१ ॥

स्तुतिः प्रेक्षावच्चित्तहर्षणी चेत् उपादेया स्यात्, अन्यथेत्थं बधिरवद्प्रयोजिकीत्यतोऽपि ग्राह्यगुणविशिष्टामाहुरित्याह - नमो नम इति । निरूपितोदार गुणाह्वयाय, निरूपिता उदारगुणा येषां ते, तथा, महागुणा उपाह्वया नामानि यस्य स तथा तस्मै, मनोवचोवेगपुरोजवाय वाङ्मनसयोः वेगादपि पुरःस्थितवेगाय, यद्वा वाङ्मनसवेग मतीत्य वर्तनवेगाय "तद्धावतोऽन्यान् अत्येति" (ईश 3.4) इति श्रुतेः । सर्वाक्षाणां सर्वेन्द्रियाणां मार्गे निर्मार्गणे रग ताध्वने ऽज्ञातमार्गाय ॥ २२ ॥

शुद्धायेत्येतत् अशुद्धाक्षाज्ञेयत्वे लिङ्गम् । शान्ताय पूर्णानन्दस्वभावाय अपगतोऽपेक्षितोऽर्थः यस्मा त्तदपार्थम्, तस्मिन् सुष्ठु निष्ठा व्यवस्था यस्य नास्ति, तत्स्वनिष्ठं संशयात्मक मित्यर्थः, तच्च मनः स्वनिष्ठमनः तस्मिन् समाधानरहिते मनसि विलसद्द्वयाय प्रकटित स्वतन्त्रवस्तुद्वयाय "सम्यगस्थित बुद्धीनां द्वितीयं दृश्यते हरेः । सम्यक् सुस्थितबुद्धीनां इदं सर्वं हरे र्वशः ॥ (भारते) इति वचना दुक्त एवाऽर्थो न तु प्रकटितप्रपञ्चरूपायेति । नित्यं गृहीताः मायाया गुणाः प्रकृते सत्त्वादिगुणाः सत्त्वादिगुण प्रवर्तनानुगुणाः सत्त्वादिगुणरहिता ज्ञानानन्दात्मकाः विग्रहा ब्रह्मादिशब्दवाच्याश्च येन स तथा तस्मै, "नित्यं गृहीता स्सत्त्वाद्या विग्रहाश्च त्रयस्सदा । ज्ञानानन्दात्मका स्ते तु विग्रहा निर्गुणा स्तथा । द्वौ तत्र ब्रह्म रुद्र स्तावेको वैकुण्ठधामगः" (प्रवृत्तिसंहितायाम्) इति वचनात् न प्रकृतिगुण विरचितदेहत्वं हरेरङ्गीकर्तुं युक्तम् ॥ २३ ॥

---

1. A. B. T °र्थं° 2--2. W omits

विशुद्ध श्चायं सत्त्वः सर्वगुणात्मकश्च विशुद्धसत्त्वः तस्मै। ''हरिः सर्वगुणात्मत्वात् सत्त्वइत्यभिधीयते'' (षाड्गुण्ये) इति वचनात् रज आदि मिश्ररहितसत्त्वगुणायेत्यर्थः नोचितः। ''हरणात् ज्ञानरूपत्वात् हरिमेधा विभुः स्मृतः'' (प्रकृतिसंहितायाम्) इत्यतः पापहरणात् ज्ञानरूपत्वात् हरिमेधाः। सृष्टौ रजस्सम्पर्कात् कपिलवर्ण ज्ञानः इत्यर्थो न ग्राह्यः। ''हरिर्ना कपिले त्रिषु'' (अम.को. 3-3-175) इत्यभिधानात्। अतो गदित एवाऽर्थः तस्मै॥ २४-२५॥

**नमः कमल किञ्जल्क पिशङ्गामलवाससे।**
**सर्वभूतनिवासाय नमोऽयुङ्क्ष्महि साक्षिणे॥ २६॥**

**रूपं भगवता त्वेतदशेषक्लेशसंक्षयम्।**
**आविष्कृतं नः क्लिष्टानां किमन्यदनु[1]कम्पितम्॥ २७॥**

**एताव[2]त्त्वं हि विभुभिः भाव्यं दीनेषु वत्सलैः।**
**यदनुस्मर्यते काले स्वबुद्ध्याऽभद्ररन्धन॥ २८॥**

**येनोपशान्ति र्भूतानां क्षुल्लकाना मपीह[3]ताम्।**
**अन्तर्हितोऽन्तर्हृदये कस्मान्नोवेद ना[4]शिषः॥ २९॥**

**असा वेव वरोऽस्माकमीप्सितो जगत[5]ः पते।**
**प्रसन्नो भगवान् ये[6]षां अपवर्गगुरु र्गतिः॥ ३०॥**

**श्रीध० नम** इति। [7-]कमलकिञ्जल्कपिशङ्गम् अमलं च वासो यस्य तस्मै[-7]। अयुङ्क्ष्महि कृतवन्तो वयम्॥ २६॥

यदुक्तं वरं वृणीध्व मिति तन्मनसि निधायाहुः - **रूपमिति**। समस्तानां क्लेशानां संक्षयो यस्मात् तत्, नः आविष्कृतं प्रकटितम्। अतः अन्यत् [8]अस्मात् किमनुकम्पितमनुकम्पा इय मेव अस्माकं परमानुकम्पेत्यर्थः॥ २७॥

कुत इत्यत आहुः- **एतावत्त्वमिति**। हे! अभद्ररन्धन अमङ्गलनाशक[9]! त्वप्रत्ययोऽत्र न विवक्षितः। एतावदेव, दीनेषु वत्सलैः प्रभुभिः भाव्यं कार्यं किं तत्तदाह - **यदिति**। अस्मदीया एत इति बुद्ध्या उचिते काले अनुस्मर्यते [10-]अनुस्मरणं क्रियते[-10] इति यत्। त्वया तु रूपमपि दर्शित मिति भावः॥ २८॥

---

1. M, Ma, Ms कम्पया 2. W °वदेव 3. M, Ma, Ms °हितम्। 4. W आ° 5. M, Ma, Ms °तां 6. M, Ma ए° 7--7. A, B, J, Va omit 8. A, B, J, Va omit अस्मात् 9. A, B, J, Va °न! 10--10. A, B, J, Va omit

**येनेति**। येन अनुस्मरणेन स्मृतानां तेषां उपशान्तिः सुखं भवति। किञ्च क्षुल्लकानां क्षुद्राणा[1]मपि भूतानां अन्तः हृदये अन्तर्हितोऽन्तर्यामित्वेन स्थितो भगवान्[2] ईहताम् [3-]ईहमानानाम्[-3] इच्छतां त्वदुपासकानां नोऽस्माक माशिषः कामान्[4] कस्माद्धेतोः न वेद जानात्येवेत्यर्थः॥ २९॥

**असाविति**। तथाऽपि वक्तव्यं चेत् तर्हि येषा मस्माकं भगवान्[5] प्रसन्नोऽसा वेव वरः भगवत्प्रसाद एव अस्माक मीप्सितोवर इत्यर्थः। अपवर्गगुरुः मोक्षमार्गप्रदर्शकः[6] गतिः स्वतश्च पुरुषार्थभूतः॥ ३०॥

**वीर०** कमलकिञ्जल्कवत् पिशङ्गम् अमलञ्च वासो वस्त्रं यस्य, सर्वभूतानां निवासाय आधाराय सर्वाणि भूतानि निवासः वासस्थानं शरीरं यस्येति वा। यद्यपीदं विशेषणद्वयं वासुदेवाय इत्यनेनैव गतं[7] तथाऽपि तद्विवरणरूपमिदं व्याख्येयम् साक्षिणे सर्वसाक्षाद्द्रष्ट्रे तुभ्यं नमः अयुङ्क्ष्महि[8] करवाम॥ २६॥

भगवद्दर्शनेनैव आत्मना मवाप्तसमस्तपुरुषार्थतामाहुः - आविष्कृतमिति। अशेषाणां क्लेशानां संक्षयो यस्मात्, तदेतद्रूपं भवता तापत्रयातुराणा मस्माक माविष्कृतं प्रकटीकृतम्। इतोऽन्यत् किम् अनुकम्पन मस्ति ? इयमेव त्वया कर्तव्याऽनुकम्पेत्यर्थः। अतो नाऽस्माभिः वरणीयोऽसीति भावः॥ २७॥

हे अमङ्गलनिरासक ! वत्सलैः प्रभुभिः दीनेषु भाव्यं कर्तव्यम्, एतावदेव। किं तत् ? तदाह अस्मदीया एत इतिबुद्ध्या उचितकालेऽनुस्मर्यत इति यत्त्वया तु रूप मपि दर्शित मिति भावः॥ २८॥

येनाऽनुस्मरणेन क्षुल्लकानां क्षुद्राणां उपशान्तिः दुरितोपशान्तिः भवति। किञ्च ईहतां कामयमानानां नोऽस्माकं अन्तः हृदये अन्तरात्मत्वेन स्थितो भवा नाशिषः कामान् कस्माद्धेतोः न वेद जानात्येवेत्यर्थः॥ २९॥

तथाऽपि वक्तव्यं चेत् तर्हि येषामस्माकं भगवान् प्रसन्नः असावेव वरः कुतः यतस्त्वम् अपवर्गगुरुः मुक्तिसाधनोपदेष्टा गति रपवर्गसाधनभूतश्च॥ ३०॥

**विज०** अयुङ्क्ष्महि नमस्काराख्यं योगमकार्ष्म॥ २६॥

अनुकम्पया भवताऽप्येतद्रूप माविष्कृत्म मन्यत्किम्? अस्मदनुकम्पां विना न किमपीत्यर्थः॥ २७॥

---

1. B, J, V, Va omit क्षुद्राणाम् 2. A, B, J, Va भवान् 3--3. A, B, J, Va omit 4. A, B, J, Va omit कामान् 5. V भवान् 6. V प्रवर्तकः
7. A, B, T अवगतं 8. W युङ्क्ष्महे

अभद्ररन्धन ! पापदहन ॥ २८ ॥

यदुक्तं हरिणा वरं वृणीध्वमिति तत्राहुरित्याह - **येनेति**। क्षुल्लकानां अल्पकानां अपि भूतानामन्तः हृदये अन्तर्हित स्त्वं तेषा मीहितं चेष्टितं चावैषि। तस्मात् न आशिषः कस्मात् न वेद ? अपि तु वेदेत्यन्वयः ॥ २९ ॥

त्वत्प्रसादा दन्यो वरो न प्रार्थनीय इत्याहुरित्याह असाविति। एषा मस्माकं भगवान् प्रसन्नः असौ भगवत्प्रसाद एवेप्सितो वरो नाऽन्य इत्यन्वयः ॥ ३० ॥

**वरं वृणीमहेऽथापि नाथ त्वत्परतः परात्।**
**न ह्यन्त[1] स्त्वद्विभूतीनां यो[2]ऽनन्त इति गीयसे[3] ॥ ३१ ॥**

**पारिजातेऽञ्जसा लब्धे[4] सारङ्गो[5]ऽन्यन्न सेवते।**
**त्वदंङ्घ्रिमूल मासाद्य साक्षात्किं किं वृणीमहे[6] ॥ ३२ ॥**

**यावत्ते मायया स्पृष्टा भ्रमाम इह कर्मभिः।**
**तावद्भवत्प्रसङ्गानां सङ्गः स्यान्नो भवे भवे ॥ ३३ ॥**

**तुलयाम लवेनाऽपि न स्वर्गं नाऽपुनर्भवम्।**
**भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः ॥ ३४ ॥**

**यत्रेड्यन्ते कथा मृष्टा स्तृष्णायाः प्रशमो यतः।**
**निर्वैरं यत्र भूतेषु नोद्वेगो यत्र कश्चन ॥ ३५ ॥**

**श्रीध० वर मिति**। यद्यप्येवं तथा[7]ऽपि हे नाथ ! त्वत् त्वत्तः वर मेकं वृणीमहे। कथम्भूतात् ? परतः कारणादपि परात् "अक्षरा त्परतः परः" (मुण्ड. उ. २-१-४) इति श्रुतेः। अतो यद्यपि त्वं दातुं समर्थो न च[8] दिव्यानां त्वद्विभूतीनां अन्तोऽस्ति, यतोऽन्तर्विभूतित्वात् अनन्त इति गीयसे ॥ ३१ ॥

**पारिजात** इति। तथाऽपि यथा सारङ्गो भ्रमरः पारिजाते अञ्जसा[9] सुखेन लब्धे सति, सुलभमपि अन्यं[10] वृक्षान्तरं न सेवते तथा

1. V ०न्तो यद्वि० 2. A, B, G, I, J, T, V सो० 3. M, Ma ०ते 4. M, Ma, Ms लभ्ये 5. V ०न्यं न 6. A, B, G, I, J, T ०हि 7. V अ०
8. A, B, J, Va देयानां 9. B, J, V, Va omit अञ्जसा 10. A, B, J, Va अन्यत्

वयमपि साक्षात् त्वदंङ्घ्रिमूलं प्राप्य किं किं वृणीमहे[1] न किञ्चिदित्यर्थः। यद्वा, किमप्यन्यत्तुच्छं, किमर्थं वृणीमहि यद्वा, यदि वृणीमहे[2] किं किं तर्हि वृणीमहे[3] अनन्तत्वेन मनोरथानां अनवस्थाना दित्यर्थः ॥ ३२ ॥

अत एतावदेव प्रार्थयामहे[4] इत्याहुः - **यावदिति**। स्पृष्टा व्याप्ता सन्तः[5] भवति प्रकृष्टः सङ्गो येषां तेषां सङ्गोऽस्माकं स्यात् ॥ ३३ ॥

ननु राज्यभोगान् स्वर्गापवर्गौ च विहाय किमिदं प्रार्थ्यते तत्राहुः - **तुलयामेति**। भगवत्सङ्गिनां [6-]भागवतानां[-6] सङ्गस्य लवेनाऽपि ॥ ३४ ॥

सत्सङ्गस्य श्रैष्ठ्यं प्रपञ्चयति - **यत्रेति** त्रिभिः। यत्र येषु [7-]भगवत्सङ्गिसङ्गेषु[-7] यतो याभ्यः कथाभ्यः निर्वैरं वैराभावः उद्वेगो भयम् ॥ ३५ ॥

**वीर०** यद्यप्येवम्, अथाऽपि हे नाथ ! परतो देहवि लक्षणा[?] त्मनः परा द्विलक्षणात् त्वत्[8] त्वत्तः प्रकृतिपुरुषविलक्षणात् त्वत्त इत्यर्थः। वरं वृणीमहे। कं वरं वृणुतेति[9] विवित्सायां त्वदीयानन्तगुणगणानुकथनमनुश्रवण परायणानां भागवतानां सङ्गमिति वक्तुं ताव दनन्तत्व माहुः[10]। यद्यस्मात् त्वत् विभूतीना मन्तो न ह्यस्ति अतस्त्वम् अनन्त इति गीयसे ॥ ३१ ॥

भागवतसङ्गलभ्यत्वद्गुणानुभव मन्तरेणाऽन्यं न वृणीमह इत्याहुः। पारिजाते मकरन्दनिर्भरे लब्धे सति सारङ्गो भृङ्गोऽन्यन्न सेवते, एवं त्वदङ्घ्रिमूलं निरतिशयसुखावह मासाद्य किं किं वृणीमहे न किमपीत्यर्थः ॥ ३२ ॥

एतावदेव प्रार्थयाम इत्याहुः। ते तव मायया स्पृष्टा मोहिता स्सन्तो वयं स्वकर्मभिः इह संसारे यावद्भ्रमाम स्तावत् भवतः प्रसङ्गो येषां तेषां भागवतानां सङ्गः प्रतिजन्म नोऽस्माकं स्यादित्येष एव वरोऽस्माभि र्वरणीयः ॥ ३३ ॥

ननु राज्यभोगस्वर्गान् हित्वा किमिदं प्रार्थ्यते तत्राहुः - **तुलयामे**ति। भगवत्सङ्गिनां सङ्गस्य लवेनाऽपि स्वर्गादिकं न तुलयाम न तुल्यं मन्यामहे, किमुत मर्त्यानां मरणशीलानां आशिषः राज्यभोगादिरूपाः तुलयाम इत्यर्थः ॥ ३४ ॥

सत्सङ्गस्य श्रैष्ठ्यं प्रपञ्चयति - **यत्रेति** त्रिभिः। यत्र भागवतेषु मृष्टाः कर्तरि क्तः, पापशोधिका मधुरा वा कथाः भगवत्कथा ईड्यन्ते प्रस्तूयन्ते यतः याभ्यः कथाभ्यः श्रूयमाणाभ्यः तृष्णाया विषयबुभुक्षायाः प्रशमः[11] प्रशान्तिः यत्र सत्सङ्गे सति [12-]भूतेषु निर्वैरं वैराभावः[-12], यत्र सत्सङ्गे सति कश्चन उद्वेगः भयं च नास्ति ॥ ३७ ॥

---

1. A, B, J, Va °हि 2. A, B, J, Va °हि 3. A, B,J,Va °हि 4. A, B, J, Va °मः 5. A, B, J, Va omit सन्तः 6--6. B, J, V, Va omit 7--7. B, J, V, Va omit 8. T omits त्वत् 9. B वृणते इति 10. W °ह 11. W omits प्रशमः 12--12. A, T omit

**विज०** यद्यपि भगवत्प्रसाद एवेप्सितो वर स्तथाऽपि परतः परात्त्वत्सङ्गतिलक्षणं[1] वरं वृणीम इत्यन्वयः । परतः परत्वमुपपादयति नहीति "नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप" (भ.गी. 10-40) अतोऽनन्तेन (ब्र.सू. 3-2-26) तथाहि - लिङ्गमपरो मात्रया इत्यादि " प्रमाणात् ।। ३१ ।।

यत स्त्वमेवानन्तोऽतोऽन्यस्मान्मनसा वराभिलाषो नास्त्येवेति भावेनाह - **पारिजात** इति । लुप्तोपममेतत् - यथा पारिजाते पुष्पेऽञ्जसा तत्त्वेन लभ्ये लब्धुं योग्ये सारङ्गो भृङ्गोऽन्यच्चम्पकादिपुष्पं न सेवते, तथा साक्षात् त्वदङ्घ्रिमूलं अवाप्य अन्य दभीष्टं किं किं वृणीमहे ? न किमपीत्यन्वयः ।। ३२ ।।

माभूदन्यतो वराभिलाषः, अस्मत्तः कोऽसौ वर इति तत्राह - **यावदिति** । भवतः प्रसङ्गो येषां ते भवत्प्रसङ्गाः तेषाम् ।। ३३ ।।

सत्सङ्गो वाच्छनीय इति भावेनाह - **तुलयाम** इति ।। ३४ ।।

सत्सङ्गतौ एते गुणा लभ्यन्ते इत्याह- **यत्रेति** ।। ३५ ।।

**यत्र नारायणः साक्षात् [2-]भगवान् न्यासिनां गतिः[-2] ।**
**[3]प्रस्तूयते सत्कथासु मुक्तसङ्गैः पुनःपुनः ।। ३६ ।।**

**तेषां विचरतां पद्भ्यां तीर्थानां पावनेच्छया ।**
**भीतस्य किं न रोचेत तावकानां समागमः ।। ३७ ।।**

**वयं तु साक्षात् [4]भगवन् भवस्य [5]प्रियस्य सख्युः क्षणसङ्गमेन ।**
**सुदुश्चिकि[6]त्स्यस्य भवस्य मृत्यो र्भिषक्तमं त्वाद्य गतिं गतास्[7]स्मः ।। ३८ ।।**

**यन्नः स्वधीतं गुरवः प्रसादिता विप्राश्च [8]वृद्धाश्च सदानुवृत्त्या ।**
**आर्या [9]नता स्सुहृदो भ्रातरश्च [10-]सर्वाणि भूतान्य[-10]नसूययैव ।। ३९ ।।**

**यन्नः सुतप्तं तप एतदीश निरन्धसां कालमदभ्रमप्सु ।**
**सर्वं तदेतत् पुरुषस्य भूम्नो वृणीमहे ते परितोषणाय ।। ४० ।।**

---

1. A, B सङ्गल° 2--2. W न्यासिनां परमा गतिः 3. A, B, G, I, J, T सं° 4. M, Ma, Ms °वत्प्रियस्य 5. M, Ma शिवस्य 6. A, B. J. Ma. T, V °त्स° 7. B. I, J. W स्म । 8. V सिद्धाश्च 9. M, Ma. Ms ह्यनाथास्सु° 10--10. W भूतानि सर्वाण्य°

**श्रीध० यत्रेति**[1]। न्यासिनां सन्न्यासिनां गतिः इष्टोपायः[-1] ॥ ३६ ॥

**तेषामिति**। पद्भ्यां पावनेच्छया संसारात् भीतस्य ॥ ३७ ॥

सत्सङ्गफल मस्माभिरेव अनुभूत मित्याहुः - **वयं त्विति**। तव यः प्रियः सखा तस्य, भवस्य रुद्रस्य[2] अत्यन्तमचिकित्सस्य [3-]असाध्यरोगरूपस्य[-3] भवस्य जन्मनो मृत्यो श्च भिषक्तमं सद्वैद्यं त्वा[4] इति त्वां गतिं प्राप्ताः ॥ ३८ ॥

वरान्तरं वृणते **यन्न** इति द्वाभ्याम्। नताः नमस्कृताः ॥ ३९ ॥

**यदिति**। निरन्धसां निरन्नानाम् [5-]अस्माकं[-5] अदभ्रं बहुकालं ते परितोषणाय भवत्विति वृणीमहे ॥ ४० ॥

**वीर.** यत्र सत्कथासु मुक्तसङ्गैः सद्भिः पुनःपुनः भगवान्नारायण एव न्यासिनां सन्न्यासिनां गति रिष्टोपायः प्रस्तूयते ॥ ३६ ॥

तेषां सतां तीर्थानां गङ्गादीनां पावनेच्छया गङ्गादीन् पवित्रीकर्तु मिच्छया पद्भ्यां चरतां तावकानां त्वद्भक्तानां समागमः सङ्गमः संसारा द्भीतस्य किं न रोचेत रोचेतैवेत्यर्थः ॥ ३७ ॥

सत्सङ्गस्य फल मस्माभि रेव अनुभूत मित्याहुः - **वयन्त्विति**। हे भगवन्! त्वत्प्रियस्य त्वत्सखस्य भवरूपमृत्युचिकित्सकस्य भवस्य रुद्रस्य क्षणमात्रसङ्गमेन भिषक्तमं संसृतिरूपरोगनिवारकं त्वां गतिं शरणं गताः प्राप्ता स्स्मः ॥ ३८ ॥

एवं सत्सङ्गं वृत्वा वरान्तरं वृणुते - यन्न इति द्वाभ्याम्। [6-]यदस्मदीय मध्ययनादिकं तदेतत्सर्वं सर्वान्तरात्मनः परमपुरुषस्य तव परितोषणाय वृणीमहे त्वत् परितोषणाय भवत्वित्यन्वयः[-6]। नोऽस्माभिः प्रसादिताः प्रसादं प्रापिताः सन्ततम् अनुवृत्त्या गुरवो वृद्धा विप्राश्च प्रसादिताः [7-]प्रसादं प्रापिताः[-7] आर्यागुर्वादयो नता नमस्कृताः तथा सुहृदादयः अनसूययैव प्रसादिताः निरन्धसां निरन्नानां नोऽस्माकमदभ्रं[8] बहुकाल मप्सु जलेषु यत्सुतप्तं तपः एतदध्ययनगुर्वादिप्रसादन नमस्कारतपादिकम् ॥ ३९-४० ॥

**विज० रुच्यभावे** कथं घटत इति तत्राह- **तेषामिति**। तीर्थानां पावनेच्छया पद्भ्यां तीर्थानि विचरतां तावकानां समागमः संसारा द्भीतस्य पुंसो न रोचते किं ? रोचत एवेत्यन्वयः। संसार रोग परिहारौषधपानसम्भवात् अत्र रुचिर्जायत इत्यर्थः ॥ ३६-३७ ॥

सत्सङ्गफल मनुभवसिद्धं चेत्याहुः इत्याह - **वयंत्विति**। भगवान् प्रियो यस्य स तथा तस्य तव प्रियस्य सख्युः संसारादौ सह कारिणः शिवस्य मृत्यो र्मारकस्य भिषक्तमं वैद्यश्रेष्ठम् ॥ ३८ ॥

---

1--1. A, B, J, Va omit 2. B, J, V, Va omit रुद्रस्य 3--3. B, J, V, Va omit 4. A, B, J. Va omit त्वा इति 5--5. B, J, V, Va omit
6--6. T omits 7--7. W omits 8. W omits अस्माकम्

वेदाध्ययनादिपुण्यं यत्तत्सर्वं भवत्प्रसादजनकमस्त्विति निवेदयन्तीत्याह - **यन्न** इति। सुष्ठु अधीतं वेदाध्ययनम्, अनाथा मृतभर्तृकाः ॥ ३९ ॥

निरन्धसां त्यक्तपितृदत्तान्नानां त्यक्तसर्वथान्नानां वा, अदभ्र मनल्पम् ॥ ४० ॥

**मनु स्स्वयम्भू र्भगवान् भवश्च येऽन्ये तपोज्ञान विशुद्धसत्त्वाः ।**
**अदृष्टपारा अपि यन्महिम्नः स्तुवन्त्यथो[1] त्वाऽऽत्मसमं गृणीमः ॥ ४१ ॥**

**नमः समाय शुद्धाय पुरुषाय पराय च।**
**वासुदेवाय सत्त्वाय तुभ्यं भगवते नमः ॥ ४२ ॥**

## मैत्रेय उवाच

**इति प्रचेतोभि रभिष्टुतो हरिः प्रीतस्तथेत्याह शरण्यवत्सलः ।**
**अनिच्छतां यान मतृप्तचक्षुषां ययौ स्वधामानपवर्गवीर्यः[2] ॥ ४३ ॥**

**अथ निर्याय सलिलात् प्रचेतस उदन्वतः ।**
**वीक्ष्याकुप्यन् द्रुमै श्छन्नां [3-]गां गां रोद्धु मिवोच्छ्रितैः[-3] ॥ ४४ ॥**

**ततोऽग्निमारुतौ राजन् अमुञ्चन् मुखतो रुषा।**
**महीं निर्वीरुधं कर्तुं[4] संवर्तक[5] इवात्यये ॥ ४५ ॥**

**श्रीध०** [6]अजानता मप्यस्माकं त्वत्स्तुतिः नाऽयुक्तेत्याहुः - **मनुरिति**। यस्य तव महिम्नो न दृष्टं पारं यैः, तेऽपि त्वामात्मसमं स्वमत्यनुरूपं यथा तथा स्तुवन्ति, अथो अतो वय मपि गृणीमः ॥ ४१ ॥

**नम** इति। [7-]समाय वैषम्यहीनाय, शुद्धाय रागादिरहिताय पराय उत्कृष्टाय[-7] सत्त्वमूर्तये वासुदेवाय ॥ ४२ ॥

**इतीति**। यानं स्वप्रयाण मनिच्छता मपि सतां स्वधाम ययौ[8]। अनपवर्गवीर्यः अकुण्ठितप्रभावः ॥ ४३ ॥

---

1. V °थ 2. M, Ma, Ms विक्रमः । 3--3. M, Ma, Ms गामारोद्धु मिवोत्थितैः । 4. M, Ma, Ms सा° 5. A, B, G, I, J, T °त्य°
6. A, B, J, Va अज्ञानाम° 7--7. A, B, J, Va omit 8. A, B, J, Va add भक्तहृदयं विवेश

**अथेति**। उदन्वतः सिन्धोः सलिलात् निर्याय निर्गत्य, गां स्वर्गं रोद्धु मिवोच्छ्रितैः द्रुमैः गां महीं छन्नां वीक्ष्य द्रुमेभ्योऽकुप्यन्। तदा हि प्राचीनबर्हिषः प्रव्रजितत्वा दराजके कर्षणाद्यभावात् द्रुमैः भूमि श्छन्नाऽभूत्॥ ४४॥

**तत** इति। निरस्ता वीरुधो यस्या स्तथाभूतां कर्तुम्, संवर्तकः कालाग्निरुद्रः, [1]अप्यये प्रलये॥ ४५॥

**वीर०** अजानता मप्यस्माकं त्वत्स्तुतिर्नाऽयुक्ता इत्याहुः। मन्वादयः तत्र भवोरुद्रः तथा ये तपोज्ञानाभ्यां कर्मयोग- ज्ञानयोगाभ्यां विशुद्धं सत्त्व मन्तःकरणं येषां ते तव महिम्नोऽदृष्टं पारं यै स्ते तथाभूता अपि त्वाम् आत्मसमं स्वमत्यनुरूपं यथा तथा स्तुवन्ति [2]अथो अतः वयमपि गृणीमः[3]॥ ४१॥

एवमात्मनां स्तुत्यर्हता माविष्कृत्य स्तुवन्तो नमस्कुर्वन्ति। समाय सर्वभूतसमाय वैषम्यरहितायेत्यर्थः। तत्र हेतुः शुद्धाय[4] अपापविद्धाय, पापहेतुकं हि वैषम्यं, परमपुरुषाय शुद्धसत्त्वमूर्तये वासुदेवाय नमः॥ ४२॥

एवं प्रचेतोभिः अभिष्टुतो भगवान् प्रीतः तत्स्तुत्या तथेत्याह, युष्मद्वरणानुसारेण युष्मदिष्टसिद्धिः अस्त्वित्याह, स्वलावण्यानुभवेन अतृप्तानि चक्षूंषि येषां तेषाम्, अत एव स्वयान मनिच्छतां प्रचेतसाम् अनपवर्गवीर्यः अपारपराक्रमो भगवान् शरण्य वत्सलः [5]स्वलोकं प्रति ययौ॥ ४३॥

अथ प्रचेतस उदन्वतः समुद्रस्य जला न्निर्गत्य गां स्वर्गं रोद्धुमिव उच्छ्रितैः उन्नतैः द्रुमैः गां महीं छन्नां वीक्ष्य द्रुमेभ्योऽकुप्यन्। तदा हि प्राचीनबर्हिषः प्रव्रजितत्वात् अराजके कृष्याद्यभावात् भूमिः द्रुमैः [6]प्रच्छन्नाऽभूत्॥ ४४॥

[7]महीं निरस्ता वीरुधः यस्याः तथाभूतां कर्तुं संवर्तके कल्पान्ते [8]अप्यये नाशे उपस्थिते सति यथा, तथा हे राजन्! रुषास्वमुखेभ्यः अग्निवायू अमुञ्चन्॥ ४५॥

**विज०** ननु ब्रह्मादिवत् परिच्छिन्नत्वे पूर्वोक्तानन्तत्वं न युज्यते, अपरिच्छिन्नत्वे स्तुति र्न घटत इति तत्राह - **मनुरिति**। तन्महिम्नः पार मदृष्टवन्तोऽपि ब्रह्मादयो वेदाद्युक्तानुसारेण यद्यथा त्वां स्तुवन्ति **अथो** तथा वय मपि आत्मबुद्धिसमं [9]गृणीमह इत्यन्वयः॥ ४१॥

आत्मसम मित्युक्त्या प्रचेतसां बुद्धीना मस्मद्बुद्धितो महागुणितत्वात् तदुक्तम्। स्तुतिपदाना मनेकार्थत्वेन अस्मद्बुद्ध्यविषयत्वेन नाऽस्माभिः तदर्थकथनाय प्रयत्नः क्रियते, किन्तु व्याख्यान प्रतिज्ञाभङ्ग परिहाराय प्रतीतोऽर्थः कथ्यते। तथा हि - समाय वैषम्य नैर्घृण्यरहिताय सहिता मा लक्ष्मी र्यस्य स समः तस्मा इति वा। "शुद्धाय निरञ्जनाय यदयं पाप्मन उत्सरस्तस्मात् पुरुषोनाम" इति

---

1. A, B. T omit अथो अतः 2. A, B, T add इत्यर्थः 3. A, B, T add विशुद्धाय 4. A, B, T स्वं 5. A, B, T उच्चक्रतैः 6. A, B, T omit प्र
7. A, B. T omit महीं 8. A. B, T अत्यये 9. A, B वृणीमह०

श्रुतेः। समस्तपाप विनाशनाय पराय उत्कृष्टाय वासुदेवाय बलज्ञानात्मकमुख्यप्राण प्रवर्तकार्थं सर्व माच्छाद्य अतिक्रम्य दीव्यतीति वासुदेव स्तस्मै सत्त्वाय पराक्रमरूपाय भगवते सौभाग्यरूपाय ऐश्वर्यादिगुणवते वा ॥ ४२ ॥

हरेः स्वधामप्रयाण माह - **इतीति**। यानं गमनम् अनपवर्गविक्रमः अविनष्टपराक्रमः अनेन कर्मणा मपि नित्यत्व मसूचीति ज्ञायते ॥ ४३ ॥

इदानीं प्रचेतसां विक्रमविशेषं वक्तु मुपक्रमते **अथेति**। गां भूमिम् ॥ ४४ ॥

अप्यये प्रलये सांवर्तकः प्रलयकालीनोऽग्निरिव ॥ ४५ ॥

**भस्मसात् क्रियमाणां स्तान् द्रुमान् वीक्ष्य पितामहः।**
**आगत[1] शशमयामास पुत्रान् बर्हिष्मतो नयैः ॥ ४६ ॥**

**तत्राऽवशिष्टा ये वृक्षा भीता दुहितरं तदा।**
**आजहु[2] स्ते प्रचेतोभ्यः उपदिष्टा स्स्वयम्भुवा ॥ ४७ ॥**

**ते च ब्रह्मण आदेशान्मारिषा मुपयेमिरे।**
**यस्यां महदवज्ञाना दजन्यजनयोनिजः ॥ ४८ ॥**

**चाक्षुषे त्वन्तरे प्राप्ते प्राक्सर्गे कालविद्रुते[3]।**
**य स्ससर्ज प्रजा इष्टाः[4] स दक्षो दैवचोदितः ॥ ४९ ॥**

**यो जायमान[5] स्सर्वेषां तेज स्तेजस्विनां रुचा।**
**स्वयोपादत्त[6] दाक्ष्याच्च कर्मणा[7] दक्ष मब्रुवन् ॥ ५० ॥**

**तं प्रजासर्गरक्षाया मनादि[8] भरतर्षभ।**
**युयोज युयुजे[9]ऽन्यांश्च[10] स वै सर्वप्रजापतीन् ॥ ५१ ॥**

इति श्रीमद्भागवते महापुराणे अष्टादश साहस्र्यां

---

1. W ⁰त्य श⁰ 2. A, B, G, I, J, T, V उज्जहु⁰ 3. M. Ma. Ms ⁰प्लु⁰ 4. Ms ⁰शिशिष्टाः 5. M. Ma. Ms न्यकचकार स⁰ 6. M. Ma. Ms **योग्योपात्त**
7. A, B, G, I, J, T ⁰णा 8. A, B, G, I, J, T ⁰दि रभिषिच्य च; M. Ma. Ms ⁰दि र्भगवानजः। 9. M. Ma युयुजु स्तं वै; Ms युयुजु स्ते वै; V युयुजेऽन्यान् वै
10. M, Ma, Ms **सर्वेऽन्ये च प्रजेश्वराः।**

श्रीहयग्रीवब्रह्मविद्यायां पारमहंस्यां संहितायां

चतुर्थस्कन्धे त्रिंशोऽध्यायः ॥ ३० ॥

**श्रीध० भस्मसादिति।** नयै र्युक्तिभिः ॥ ४६ ॥

**तत्रेति।** उज्जहुः समर्पयामासुः ॥ ४७ ॥

**त** इति। मारिषां वार्क्षीम् अजनयोनिः ब्रह्मा, तस्मा ज्जातो दक्षः महतः श्रीमहादेवस्य अवज्ञानात् पूर्व मयोनिजो ब्रह्मपुत्रोऽपिसन् क्षत्रियजातौ यस्यां [1-]वार्क्ष्या[-1]म् अजनि जातः ॥ ४८ ॥

**चाक्षुषे** इति। प्राक्सर्गे पूर्वदेहे कालेन विद्रुते गते [2]सति दैवेनेश्वरेण चोदित स्सन् [3-]यश्चाक्षुषेऽन्तरे[-3] इष्टाः प्रजाः ससर्ज। स दक्ष इति प्रसिद्धः ॥ ४९ ॥

**य** इति। [4]यः स्वया रुचा प्रभया तेज उपादत्त आच्छादितवान्। यं च कर्मदाक्ष्यात् दक्ष मब्रुवन् ॥ ५० ॥

**तमिति।** तमभिषिच्य अमादिः ब्रह्म। प्रजासर्गरक्षायां युयोज। स च दक्षोऽन्यान् मरीच्यादीन् तत्तद्व्या पारेषु नियुक्तवान् ॥ ५१ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे

श्री श्रीधरस्वामि विरचितायां भावार्थदीपिकायां

व्याख्यायां त्रिंशोऽध्यायः ॥ ३० ॥

**वीर०** ताभ्यां द्रुमान् भस्मराशीक्रियमाणान् तान् प्रचेतस श्च वीक्ष्य चतुर्मुखः आगत्य नयैः युक्तिभिः बर्हिष्मतः सुतान् शमयामास शान्तानकरोत् ॥ ४६ ॥

तत्र तेषु शान्तेषु सत्सु अवशिष्टा ये वृक्षाः वृक्षाभिमानिदेवताः भीता स्सन्तः स्वयम्भुवोपदिष्टाः दुहितरं प्रचेतोभ्यः उपजहुः समर्पयामासुः ॥ ४७ ॥

ते च प्रचेतसः ब्रह्मण आज्ञया मारिषाख्यां स्त्रिय मुपयेमिरे यस्यां मारिषाया मजनयोनिजः अजनो **ब्रह्मा** स एव योनिः तस्मा ज्जातो [5]दक्षः महदवज्ञानात् रुद्रावहेलना द्धेतोः अजन्युत्पादितः प्रचेतोभि रिति शेषः ॥ ४८ ॥

कोऽसा वजनयोनिजः यो मारिषायां जातस्तत्राह - **चाक्षुषे** मन्वन्तरे प्राप्ते पूर्वमन्वन्तरसर्गे कालेन विद्रुते उपसंहृते सति दैवे नेश्वरेण चोदित स्सन् इष्टाः प्रजाः यः ससर्ज सृष्टवान् [6]सः नाम्ना दक्षः ॥ ४९ ॥

1--1. B, J, V, Va omit 2. A, B, J, Va omit सति 3--3. B, J, V, Va omit 4. B, J, V, Va omit यः 5. A, B, T omit दक्षः 6. A, B, T omit स.

तस्मिन् दक्षशब्दस्य प्रवृत्तिनिमित्तमाह - **य** इति। यो जायमानः स्वया रुचा प्रभया सर्वेषां तेजस्विनां [1-]तेजोयुक्तानां[-1] तेज उपादत्त आच्छादितवान्, तस्मात् दाक्ष्यात् परतेजः प्रच्छादनसमर्थत्वात्, कर्मणा च निमित्तेन कर्मणि दक्षत्वाच्च [2]दक्ष इत्यब्रुवन् लोका इति शेषः ॥ ५० ॥

यं च कर्मदाक्ष्यात् दक्ष मब्रुवन् तमनादि र्भगवान् ब्रह्मा प्रजानां सर्गे रक्षायां च युयोज आदिदेश। स दक्षोऽन्यान् मरीच्या दीन् प्रजापतींस्तद्व्यापारेषु नियुक्तवान्॥ ५१ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे
श्रीवीरराघवविदुषा लिखितायां भागवतचन्द्रचन्द्रिकायां
व्याख्यायां त्रिंशोऽध्यायः ॥ ३० ॥

**विज०** ब्रह्मणाऽऽगत्य क्रियमाणं तत्क्रोधशमनप्रकार माह - **भस्मसादिति**। नयै र्युक्तिभिः ॥ ४६ ॥

प्रीतिकरणं विना केवलं नयै रेव कोपशान्तिः कथ मभूदिति तत्राह - **तत्रेति** ॥ ४७ ॥

प्रतिपक्षभूतैः वृक्षैः दीयमानं कन्यादानं निश्शङ्कं कथं संगच्छत इति तत्राह - **ते चेति**। आप्तत्वे ब्रह्मणो वचनं कारण मित्यर्थः। वन्ध्याचेत्किमित्युपनयन मकार्षु रिति तत्राह - यस्या मिति। न जायत इत्यजनो विष्णुः, स एव योनि रुत्पत्तौ कारणं यस्य सोऽजनयोनिः ब्रह्मा। तस्माज्जातोऽजनयोनिजो दक्षः अजनि जज्ञे, ता मुपयेमिरे इत्यन्वयः। महतो रुद्रस्य अवज्ञानात् निन्दनात्॥ ४८ ॥

तज्जन्मप्रयोजन माह - **चाक्षुष** इति। प्राक्सर्गे पूर्वसृष्टौ कालेन विप्लुते नष्टायां दैवेन विष्णुना ब्रह्मणा च चोदितः "चुद-प्रेरण" इति धातुः ॥ ४९ ॥

किन्नामाऽयं जात इति निरुक्तिपूर्वकं तन्नामाह - **य** इति। स्वयोग्योपात्त दाक्ष्यात् स्वयोगसामर्थ्येन प्राप्तपदत्वात्॥ ५० ॥

इदं च तन्नामकरणे लिङ्गमिति भावेनाह - **तं प्रजेति**। अनादि र्ब्रह्मा, प्रजेश्वरा मरीच्यादयः, युयुजुः अन्वाधानलक्षणं योग मकुर्वन्निति॥ ५१ ॥

इति श्रीमद्भागवते चतुर्थस्कन्धे
श्रीविजयध्वजतीर्थकृतायां पदरत्नावल्यां
टीकायां त्रिंशोऽध्यायः ॥ ३० ॥

---

1--1. W omits 2. A, B, T दक्ष मब्रु°

# एकत्रिंशोऽध्यायः

## मैत्रेय उवाच

**तत उत्पन्नविज्ञाना आश्वधोक्षजभाषितम् ।**

**स्मरन्त आत्मजे भार्यां विसृज्य प्राव्रजन् गृहात् ॥ १ ॥**

**दीक्षिता ब्रह्मसत्रेण सर्वभूतात्ममेधसा ।**

**प्रतीच्यां दिशि वेलायां सिद्धोऽभूद्यत्र जाजलिः[1] ॥ २ ॥**

**तान्निर्जितप्राण मनोवचो दृशो जितासनान् शान्तसमानविग्रहान् ।**

**परेऽमले ब्रह्मणि योजितात्मनः सुरासुरेड्यो ददृशे स्म नारदः ॥ ३ ॥**

**त मागतं त उत्थाय प्रणिपत्याभिवाद्य[2] च ।**

**पूजयित्वा यथादेशं सुखासीन मथाऽब्रुवन् ॥ ४ ॥**

## [3-]प्रचेतस ऊचुः[-3]

**स्वागतं ते सुरर्षेऽद्य दिष्ट्या नो दर्शनं गतः ।**

**तव चङ्क्रमणं ब्रह्मन्नभयाय यथा रवेः ॥ ५ ॥**

## श्री श्रीधरस्वामिविरचिता भावार्थदीपिका

एकत्रिंशे सुते दक्षे धुरं[4] न्यस्य वने सताम् । नारदोक्तेन मार्गेन[5] मुक्ति रुक्ता प्रचेतसाम् ॥

**तत** इति । ततो दिव्यवर्षसहस्राणां सहस्रस्यान्ते उत्पन्नविवेकज्ञामाः ते "उपयास्यथ मद्धाम निर्विद्य निरयादतः" (भाग. 4-30-18) इत्यधोक्षजभाषितं स्मरन्त आशु प्राव्रजन् ॥ १ ॥

**दीक्षिता** इति । ब्रह्मसत्रेण आत्मविमर्शेन दीक्षिताः कृतसङ्कल्पा बभूवुः । सर्वेषु[6] भूतेषु आत्मेति मेधा ज्ञानं यस्मिंस्तेन । क ? वेलायां समुद्रतटे जाजलिः[7] नाम ऋषिः ॥ २ ॥

---

1. V ⁰ब⁰  2. A. B. G. I. J. M. Ma. Ms ⁰नन्द्य  3--3. M, Ma, W omit  4. V प्रचेतसः  5. V गता मुक्ति मितीर्यते ॥  6. V सर्वभू⁰  7. V ⁰ब⁰

**तानिति** । निर्जिताः प्राणमनोवचोदृशो यैः तान् । शान्ताः उपरताः समाना मूलाधारा दारभ्य ऋजवो विग्रहायेषाम् । ब्रह्मणि योजित आत्मा यै स्तान् । सुरासुरै रीड्यः [1-]स्तुत्यः ददृशे[-1] दृष्टवान् ॥ ३ ॥

**तमिति** । उत्थाय [2]तं प्रणिपत्य यथादेशं यथाविधि पूजयित्वा ॥ ४, ५ ॥

## श्रीवीरराघवविदुषा लिखिता भागवतचन्द्रचन्द्रिका

एवं तपस्तोषित प्रत्यक्षित परमात्मानः प्रचेतसो मारिषा मुपयम्य तस्यां पुत्र मुत्पादयामासु रित्युक्तम् । अथ भगवदादिष्ट दिव्यवर्ष सहस्रपर्यन्तानुभूत राज्य भोगाः आत्मजारोपित राज्यभाराः प्रविष्ट जाजल्याश्रमाः नारदोपदिष्टात्म परमात्म याथात्म्याः उपासित परमात्मान स्तत्पद मापुरिति वदन्नुपसंहरति एकत्रिंशेन मुनिः - **तत** इति । दिव्यवर्षसहस्राणां सहस्रान्ते उत्पन्नविवेकात्मक ज्ञानाः **अधोक्षजस्य भाषितं** वचः **स्मरन्तः** आत्मजे दक्षे भार्यां विसृज्य भार्यापोषणमात्मजाधीनं कृत्वा गृहात्प्राव्रजन् ॥ १ ॥

ब्रह्मसूत्रेण ज्ञानयज्ञेन न्यासविधिना वा दीक्षिताः सङ्कल्पित ब्रह्मसत्रा बभूवु रित्यर्थः । ब्रह्मसत्रं विशिनष्टि - **सर्वभूतात्म मेधसेति** - सर्वभूतेषु आत्मा परमात्मा इति मेधा ज्ञानं यस्मिन् तेन सर्वात्मक ब्रह्मोपासनात्मकज्ञानेनेत्यर्थः । प्रथमान्तपाठे प्रचेतसां विशेषणं, सर्वात्मक ब्रह्मोपासनयुक्ताः । क्व दीक्षिताः ? तत्राह - प्रतीच्यां दिशि, वेलायां समुद्रतटे यत्र जाजलि र्नाम ऋषिः सिद्धोऽभूत् मुक्तो बभूव ॥ २ ॥

तान् प्रचेतसः, निर्जिताः प्राण मनोवचोदृशो यै स्ते, जित मासनं यै स्ते, शान्ताः निर्व्यापाराः समाना मूलाधारा दारभ्य ऋजवो विग्रहा येषां, परे ब्रह्मणि योजितः "ओमित्यात्मानं युञ्जीत" (म.ना.उ. 17-15) इत्युक्तरीत्या समर्पित आत्मा प्रत्यगात्मा यै स्ते तान् सुरासुरै रीड्यः स्तुत्यो नारदः ददृशे दृष्टवान् ॥ ३ ॥

सम्यगुत्थाय प्रणिपत्य दण्डवत्प्रणम्य अभिवाद्य गोत्र सूत्र नामादिकं सङ्कीर्त्य यथाविधि पूजयित्वा सुखे मृदुले आसने आसीन मब्रुवन् ऊचुः ॥ ४ ॥

उक्त मेवाह - **स्वागत** मिति । हे सुरर्षे ! ते [3]त्वया स्वागतं दिष्ट्या दैववशेन नोऽस्माकं दर्शनं गतः अस्मदीय चक्षुर्विषयो जातः । हे ब्रह्मन् ! तव **चङ्क्रमणं** सञ्चरणं लोकाना मभवाय मुक्तिसाधनोपदेशेन रक्षणाय, न विद्यते भयं यस्मा त्तस्मै, यथा रवे श्चङ्क्रमणं तद्वत् [4]सूर्यस्य **चङ्क्रमणं** हि समीहितसाधनानुष्ठापनेन लोकरक्षणार्थम् ॥ ५ ॥

1--1. B, J, V, Va omit 2. B, J, Va omit तं 3. A, T तव 4. W सूर्यच°

## श्रीविजयध्वजतीर्थकृता पदरत्नावली

शास्त्रान्तरेषु बहूना मितरेषां साधनानां मुक्तिसाधनत्वेन कथनस्य सावकाशत्व प्रकाशनाय अस्मिन्नध्याये पुनरपि मुक्तिसाधनं ब्रह्मज्ञान मेवेति निश्चीयते। तत्र तत्साधन मपि मुख्यं चतुर्थाश्रम एव। सर्वस्मा त्तस्य श्रैष्ठ्या दित्यभिप्रेत्य प्रचेतसां राज्य पालनानन्तरं तमाचष्टे **तत** इति। **आश्वा** विर्भूताधोक्षजभाषितं ततो मानुष गणित द्वादशलक्षकाला त्पर मुत्पन्नविज्ञानाः वेदान्तविज्ञानसुनिश्चितार्थाः अनेन सन्यासाधिकारे योग्यतां लक्षयति॥ १॥

एतदेव विशिनष्टि - **दीक्षिता** इति। सर्वभूतात्मनि सर्वभूतस्वामिनि सर्वभूतान्तर्यामिणि वा हरौ मेधा ज्ञानं यत्र **तद्ब्रह्म सत्रं**, यत्र तद्ब्रह्म सत्रं सर्वभूतात्ममेधः तेन ब्रह्मसत्रेण दीक्षिताः गृहीतसंन्यासाश्रमा इत्यर्थः ''पारिव्राज्यं ब्रह्मसत्रं न्यास इत्यभिधीयते'' इत्यभिधानात्। ब्रह्म विषयेण याग विशेषेणेति नाऽर्थोऽत्र ग्राह्यः, प्राव्रजन्निति विरोधाच्च ''हरिमेध स्तु संन्यासो हरौ मेधा यतो भवेदिति'' (षाड्गुण्ये) वचनेन संन्यासस्य विशेषितत्वा च्च न सर्वभूतानां स्वस्वरूपत्वज्ञानेने त्यर्थः। उत्तरत्राऽपि तत्त्वं नापुः; किन्तु तद्गत मिति वक्ष्यमाणत्वात्। यत्र जाजल स्तस्या पत्यं जाजलिः मुनिः सिद्धो मुक्तोऽभूत्तस्यां प्रतीच्यां दिशि समुद्रवेलायां हरि मुपासीनाः स्युः इत्यन्वयः॥ २॥

तत्राऽपि नारदसङ्गमं तेषा माह · **तान्निर्जितेति**। शान्तश्च समानश्च विग्रहो देहो येषां ते, तथा तान्, योजित मेकाग्रतया स्थापितं मनो यै स्ते तथा तान्॥ ३॥

यथाऽऽदेशं यथोपदेशं, देशानुसारेण वा॥ ४॥

चङ्क्रमणं पुनः पुनरागमनं, रवे रुदयाख्यागमनम्॥ ५॥

**यदादिष्टं भगवता शिवेनाधोक्षजेन च।**
**तद् गृहेषु प्रसक्तानां प्रायशः[1] क्षपितं प्रभो!॥ ६॥**

**तन्नः प्रद्योतयाऽध्यात्म[2]ज्ञानं तत्त्वार्थदर्शनम्।**
**येनाऽञ्जसा तरिष्यामो दुस्तर भवसागरम्॥ ७॥**

**मैत्रेय उवाच**

**इति प्रचेतसा[3] पृष्टो भगवान्नारदो मुनिः[4]।**
**भगवत्युत्तमश्लोक आविष्टात्माऽब्रवीन्नृपान्॥ ८॥**

---

1. V °यो नः 2. W °त्मं 3. A, B, G, I, J, T °सा 4. W मुनीन्

## नारद उवाच

तज्जन्म तानि कर्माणि तदायुस्तन्मनो वचः ।
नृणां येन[1] हि विश्वात्मा सेव्यते हरि रीश्वरः ॥ ९ ॥

किं जन्मभि स्त्रिभि र्वेह शौक्ल[2] सावित्र याज्ञिकैः ।
कर्मभि र्वा त्रयीप्रोक्तैः पुंसोऽपि विबुधायुषा[3] ॥ १० ॥

**श्रीध० यदिति** । आदिष्ट मुपदिष्टं यदात्मतत्त्वं क्षपितम् विस्मृतम् ॥ ६ ॥

***तदिति** । प्रद्योतय प्रकाशय, पुनरुपदेशेन तत्त्वं ब्रह्मलक्षण मर्थं दर्शयतीति तत्त्वार्थ दर्शनम् ॥ ७ ॥

**इतीति** । [4-]प्रचेतसा पृष्ट इति प्राधान्यात् एकस्य निर्देशः प्रचेतोभिः पृष्ट इत्यर्थः[-4] ॥ ८ ॥

अहो गृहप्रसक्त्या हरिसेवां विना सर्वं जन्मकर्मादिकं व्यर्थीकृत[5] मिति तान् शोचन्नाह - तज्जन्मेतिचतुर्भिः । [6-]येन जन्मादिना विश्वात्मेति सुलभत्व मुक्तम्[-6] । यतो जन्मादे र्हरिसेवैव फलम् । अत स्त द्विहीनं सर्वं व्यर्थ मित्यर्थः ॥ ९ ॥

**किमिति** । शौक्लं[7] शुक्लसम्बन्धि, जन्म विशुद्ध माता पितृभ्या मुत्पत्तिः, सावित्र मपनयनेन, याज्ञिकं दीक्षया, विबुधाना मिव दीर्घा युषाऽपि किम्[8] ॥ १० ॥

**वीर०** शिवेनाऽ ब्जजेन च यदात्मतत्त्व मुपदिष्टं तत् गृहेषु प्रसक्तानां नः क्षपितं विस्मृतम् ॥ ६ ॥

तद्विस्मृतं तत्त्वानां प्रकृतिपुरुषेश्वर तत्त्वानाम् अर्थानां पुरुषार्थानां च दर्शनं ज्ञानं यस्मिन् तत् अध्यात्मं[9] ज्ञानं नोऽस्मभ्यं प्रद्योतय प्रकाशय, येन त्वया प्रद्योतितेन अध्यात्मज्ञानेन दुस्तरं भवार्णवं अञ्जसा सुखेन तरिष्यामः ॥ ७ ॥

इत्येवं प्रचेतसा पृष्ट इति प्राधान्या देकस्य निर्देशः, प्रचेतोभिः पृष्ट इत्यर्थः । भगवति आविष्टः आसक्तः आत्मा मनो यस्य स, भगवान्नारदः मुनीन् मननशीलान् प्रचेतसः प्रत्यब्रवीत् ॥ ८ ॥

अहो गृहप्रसक्त्या हरिसेवां विना सर्वं जन्मकर्मादिकं व्यर्थी कृत मिति तान्[10] शोचन्नाह - **तज्जन्मेति** चतुर्भिः । येन जन्मादिना विश्वात्मा हरि स्सेव्यते तदेव जन्मकर्मादिकं सार्थकं भगवत्सेवाविहीनं तु व्यर्थ मित्यर्थः ॥ ९ ॥

---

1. A, B, G, J, T येनेह 2. I शौक्र; M, Ma, Ms शुक्ल 3. M, Ma °षः * It is not found in A, B, J, Va Edns. 4--4. A, B, J, Va इति प्रचेतोभिः पृष्टः ॥ ८ ॥
5. V व्यर्थं 6--6. B, J, V, Va omit 7. B, J, V, Va omit शौक्लं 8. A, B, J, Va omit किम् 9. A, B, T °त्मज्ञानं 10. W omits तान्

शुक्लं यौनं विशिष्टयोन्युत्पत्तिरूपं सावित्रं उपनयननिमित्तं जन्म, याज्ञिकं यज्ञदीक्षया जन्म, एभिः त्रिभिः जन्मभिः भगवत्सेवाविधुरैः किं साध्य मस्ति इति[1] तथा त्रयी विहितैः कर्मभिः पुंसः विबुधाना मिव दीर्घायुषाऽपि ॥ १० ॥

**विज०** सदाशिवाधोक्षजाभ्यां ज्ञानस्योपदिष्टत्वात् न मया पृथगुपदेशाय प्रयतनीय मिति तत्राह - **यदादिष्ट**मिति। क्षपितं नष्ट मिति यावत् ॥ ६ ॥

येनाऽऽत्मविज्ञानेन ॥ ७, ८ ॥

यद्धरिसेवासाधनं जन्मादि तदेव सफलं; न तु सत्कुलजन्मादीत्याह **तज्जन्मे**त्यादिना। येन जन्मादिना ॥ ९ ॥

किमित्येवं विशेष्य[2] स्तौषीति तत्राह - **किं जन्मभि**रिति। यत्र जन्मादौ हरि रात्मप्रदो न स्या त्तज्जन्मादिना किं फल मित्यन्वयः। शुक्लं जन्म उभयकुलशुद्धं, सावित्रं जन्म उपनयनादि, याज्ञीय मग्न्याधानलक्षणं जन्म ॥ १० ॥

**श्रुतेन[3] तपसा वा किं वचोभि श्चित्तवृत्तिभिः।**
**बुद्ध्या वा किं निपुणया बलेनेन्द्रियराधसा ॥ ११ ॥**

**किं वा योगेन सांख्येन न्यासस्वाध्याययो रपि।**
**किं वा श्रेयोभि रन्यैश्च न यत्रात्मप्रदो हरिः ॥ १२ ॥**

**श्रेयसा मपि सर्वेषा मात्मा ह्यवधि रर्थतः[4]।**
**सर्वेषा मपि भूतानां हरि रात्माऽऽत्मदः प्रियः ॥ १३ ॥**

**यथा तरो र्मूलनिषेचनेन तृप्यन्ति तत्स्कन्ध भुजोपशाखाः[5]।**
**प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हण मच्युतेज्या ॥ १४ ॥**

**यथैव सूर्या त्प्रभवन्ति वारः[6] पुनश्च तस्मिन् प्रविशन्ति काले।**
**भूतानि भूमौ स्थिरजङ्गमानि तथा हरा वेव गुणप्रवाहः ॥ १५ ॥**

**श्रीध०** **श्रुतेनेति**। वचोभिः वाग्विलासैः चित्तवृत्तिभिः नानावधानसामर्थ्यैः। [7-]बलेन शरीरशक्त्या[-7] इन्द्रियाणां राधसा पाटवेन ॥ ११ ॥

1. W omits इति 2. A, B °शि° 3. W कुलेन 4. M, Ms °र्थि° 5. W °रु° 6. M, Ms गावः 7--7. B, J, V, Va omit

**किमिति** । योगेन प्राणायामादिना सांख्येन देहादिव्यतिरिक्ता त्मज्ञानमात्रेण संन्यास वेदाध्ययनाभ्या मपि अन्यैरपि व्रतवैराग्या [1]दिभिः श्रेयस्साधनैः ॥ १२ ॥

नन्वेषां नाना फलसाधनानां हरिसेवा भावमात्रेण कुतो वैयर्थ्यं तत्राह - **श्रेयसा** मिति । [2]श्रेयसां फलाना मात्मैवावधिः परा काष्ठा । अर्थतः परमार्थतः आत्मार्थत्वेनैवान्येषां श्रेयसां प्रियत्वा दित्यर्थः । भवत्वात्मै[3]वावधि हरिः, किमायातं तत्राह - **सर्वेषा मपीति** । [4]आत्मा आत्मदश्चाविद्यानिरासेन स्वरूपाभिव्यञ्जकः, ऐश्वरे[5]णापि रूपेण बलिप्रभृतिभ्य इवात्मप्रदः प्रियश्च परमानन्दरूप त्वात् ॥ १३ ॥

किञ्च, नानाकर्मभि स्तत्तद्देवता प्रीति निमित्ता न्यपि फलानि हरिप्रीत्या भवन्ति केवलं तत्तद्देवताराधनेन तु न किञ्चिदिति सदृष्टान्त माह - **यथेति** । मूलात् प्रथमविभागाः स्कन्धाः तद्विभागाः भुजाः, तेषा मपि भागाः[6] उपशाखाः । [7]एतदुपलक्षणं पत्रपुष्पादयोऽपि तृप्यन्ति, न तु मूलसेकं विना स्वस्वनिषेचनेन प्राणस्यो पहारो भोजनं तस्मादेवे न्द्रियाणां तृप्ति र्न तु तत्तदिन्द्रियेषु पृथक् पृथक् अन्नलेपनेन । तथा ऽच्युताराधन मेव सर्वदेवताराधनं न पृथगित्यर्थः ॥ १४ ॥

कुतः ? सर्वमूलत्वादिति दृष्टान्तान्तर माह - **यथेति** । यथैव वारो जलानि वर्षाकाले सूर्या दुद्भवन्ति ग्रीष्मे तस्मि न्नेव प्रविशन्ति । अस्याऽप्रसिद्धत्वेन दृष्टान्तान्तर माह - यथा भूतानि भूमाविति गुण प्रवाहः चेतनाचेतनात्मकः प्रपञ्चः ॥ १५ ॥

**वीर०** वचोभिः वाग्विलासैः निपुणया सूक्ष्मया बलेन मनोदेहबलेन इन्द्रियाणां राधसा पाटवेन ॥ ११ ॥

योगेन प्राणायामादिना, सांख्येन देहादिव्यतिरिक्तात्मज्ञानमात्रेण चतुर्थाश्रमाध्ययनाभ्यां श्रेयस्साधनैः **अन्यैः** व्रतैश्च । "य आत्मदा बलदा" इति श्रुत्युक्तरीत्याऽऽत्मपर्यन्त प्रदानचतुरः आश्रितबन्धहरो भगवान् यत्र जन्मादिषु नाऽस्ति यैः जन्मादिभिः नाऽऽराध्यते तैः किं प्रयोजन मित्यर्थः ॥ १२ ॥

ननु जन्मादीनां प्रतिनियतफलानां भगवत्सेवा वैधुर्यमात्रेण कुतो निन्द्यता तत्राह - **श्रेयसा** मिति । अर्थतः वस्तुतः सर्वेषा मपि श्रेयसां परमात्मा हरिः, अवधिः परा काष्ठा हरे रन्य च्छ्रेयो नास्तीत्यर्थः । कुतः ? [8]हि यतो हरिः सर्वेषां प्रियः निरतिशय प्रीतिविषयः निरतिशयानन्दरूप प्रीति विषय एव हि परमं श्रेयः प्रियत्वे हेतुः - आत्मा, आत्मा हि निरतिशयप्रीति विषयः, यस्य प्रत्यगात्मनः सम्बन्धात् देहापत्य गृह पश्वादिकं सम्बन्ध पारम्पर्येण व्यवस्थित प्रीतिविषयं तस्याऽप्यात्मेत्यर्थः । न केवलं प्रिय एव, किन्तु स्वात्मपर्यन्त पुरुषार्थप्रदश्च, बलिप्रभृतिभ्यः स्वात्मदानं प्रसिद्धम् ॥ १३ ॥

---

1. V °दिश्रे° 2. B, J, V, Va omit श्रेयसां 3. A, B, J, Va omit एव 4. V omits आत्मा 5. V °र्येणाति° 6. V adds शाखाः तासा मपि भागाः 7. A, B, J, Va omit एतत् 8. W omits हि

य, तत्फलसाधनतया इन्द्रादिदेवताराधन मपि भगवत्येव पर्यवस्यति, तस्य सर्वदेवतान्तरात्मत्वात्, अतः साक्षात् तदाराधन मेव सर्वदेवताप्रीतिद्वारा समीहितपुरुषार्थ हेतुरिति सदृष्टान्त माह - **यथेति**। तरो वृक्षस्य मूलनिषेचनेन जल सेकेन[1] स्कन्धादयः यथा तृप्यन्ति, न तु प्रत्येकं स्कन्धादि सेचनेन। तत्र स्कन्धाः मूलात् पृथग्विभागाः भुजाः, तेषां विभागाः ऊरवः तेषा मपि विभागाः शाखाः तेषा मपि विभागा उपरिशाखाः[2], एतदुपलक्षणम्। तत्र पुष्प फलादयोऽपि तृप्यन्ति, यथा च प्राणोपहारात् प्राणाद्याहुतेः भोजना दिति यावत्। सर्वेन्द्रियाणां तृप्ति र्भवति। न तु तत्तदिन्द्रियेषु पृथगन्नलेपनेन। तथा अच्युतेज्या भगवदाराधनं सर्वार्हणं सर्वदेवतार्हणसाध्यं फलं साधयति॥ १४॥

कुतः ? सर्वकारणत्वात् सर्वान्तरात्मत्वाच्चेति सदृष्टान्त माह - **यथैवेति** द्वाभ्याम्। यथैव वारः आपः, वर्षाकाले सूर्यात् प्रभवन्ति उद्भवन्ति, ग्रीष्मे च तस्मिन्नेव प्रविशन्ति, अस्य अप्रसिद्धत्वेन दृष्टान्तान्तर माह - यथा भूतानि स्थावरजङ्गमात्मकानि भूमावेव प्रभवन्ति प्रविशन्ति च, तथा गुणप्रवाहः गुणपरिणाम रूपः प्रपञ्चः हरा वेव कारणभूते उद्भवति लीनो भवति च॥ १५॥

**विज.** इन्द्रियराधसा बहुग्रहणसामर्थ्येन॥ ११॥

सांख्येन यथार्थज्ञानेन न्यासस्वाध्याययोः क्रिययाऽपि अन्यै स्तीर्थसेवादिभिः॥ १२॥

इतोऽपि विहितानां पुण्यानां हरे रनुग्रहपर्यन्त मेव फलमित्याह - **श्रेयसा** मिति। यावत्प्रसीदति तावत्पर्यन्तं पुण्य फल मित्यवधे रर्थः। ननु सेवितः किं फलं ददाति ? येन श्रेयसा मवधिः स्या दित्याशंक्याऽन्ये सेविता यावत्प्रसीदन्ति, तावत्पर्यन्तं पुंसां स्वव्यतिरिक्त मेव पुण्यफलं प्रयच्छन्ति। अयं तु स्वात्मान मेव ददाती त्येतादृशः कृपासमुद्रः कोऽस्ती त्यभिसन्धायाह - सर्वेषा मिति। आत्मानन्दरूपः॥ १३॥

किं वा श्रेयोभि रन्यै रित्यत्र देवादिसेवालक्षण श्रेयांसि कथं निषिध्यन्ते ? तत्सेवाया अपि तत्तत्फलावाप्तये कर्तव्य त्वादिति तत्राह - **यथेति**। प्राणोपहारो भोजनलक्षण पूजा इन्द्रियाणां तृप्तिलक्षणपूजां जनयति। अच्युतेज्या सर्वदेवाद्यर्हण फलं ददाति। अत्रैवकारेण प्राधान्यपूजा निषिध्यते, नत्ववान्तर पूजा। तस्या विहितत्वेन अच्युतस्य पूजात्वा दित्यभिप्रायः "परिवारतया ग्राह्या अपि हेयाः प्रधानतः" इत्युक्तेः॥ १४॥

ननु हरिपूजया देवादिपूजाफलं कथं स्यात् ? न हि देवदत्तभोजनतृप्त्या यज्ञदत्त स्तृप्यतीति तत्राह - **यथेति**। उदय काले

. A, T सेचनेन 2. A, B, T तदुपरि

आषाढादिकाले वा गावो रश्मयो जलानि च सूर्या द्यथा प्रभवन्ति निर्गच्छन्ति उत्पद्यन्ते वा, पुनश्च सन्ध्याकाले हेमन्तादिकाले वा तस्मिन् सूर्ये प्रविशन्ति, गवां मण्डलप्रवेशो वारिणां मरीचिपीतत्व मित्येष विशेषः, यथा च स्थिरजङ्गमानि भूतानि भूमे रुत्पद्यन्ते भूमा वेव प्रविशन्ति, तथाऽयं गुणप्रवाह स्त्रिगुणात्मक जगल्लक्षणो हरे रुत्पद्यते हर्याधार तया तिष्ठतीत्यन्वयः। अनेन हरेः सर्वकर्तृत्वेन स्वतृप्त्या देवादीनां स्वाश्रितत्वेन तृप्ति र्युज्यत इत्येतत्सूचित मिति ॥ १५ ॥

**एतत्पदं तज्जगदात्मनः परं सकृद्विभातं सवितु र्यथा प्रभा।**
**यथाऽसवो जाग्रति सुप्तशक्तयो[1] द्रव्यक्रिया[2] ज्ञानभिदा भ्रमात्यये[3] ॥ १६ ॥**

**यथा नभस्यभ्रतमः प्रकाशा भवन्ति भूयो[4] न भवन्त्यनुक्रमात्।**
**एवं परे ब्रह्मणि शक्तय स्त्वमू रजस्तमस्सत्त्वमिति प्रवाहः ॥ १७ ॥**

**तेनैक मात्मान मशेष देहिनां कालं प्रधानं पुरुषं परेशम्[5]।**
**स्वतेजसा ध्वस्तगुणप्रवाह मात्मैकभावेन भजध्व मद्धा ॥ १८ ॥**

***निरस्तसङ्कल्प विकल्प मद्वयम् द्वयापवादोपरमोपलम्भनम्।**
****संज्ञप्तिमात्रं भजताऽमुया दृशा ह्यनादिमध्यान्त मजस्र निर्वृतम् ॥ १९ ॥**

**दयया सर्वभूतेषु सन्तुष्ट्या येन केन वा[6]।**
**सर्वेन्द्रियोपशान्त्या च तुष्य त्याशु जनार्दनः ॥ २० ॥**

**अपहत[7] सकलैषणा[8]मलात्म न्यविरत मेधित भावनोपहूतः।**
**निज जनवशगत्व मात्मनो[9] यन्न[10] सरति छिद्रव दक्षरः सतां हि ॥ २१ ॥**

**श्रीध०** ननु हरा वेव गुणप्रवाह इत्युक्ते तदाधारत्वेन सोपाधिकत्वं हरेः स्यादित्याशङ्क्याह - **एतदिति**। एतद्विश्वं विष्णोः तत् सर्वशास्त्रप्रसिद्धं पदं परं सर्वोपाधिरहितम्। तदुत्पन्नत्वा न्न ततः पृथगित्यर्थः। तर्हि कथ मन्यथा भाति तत्राह - सकृदिति। सकृत्कदाचिद्विभातं स्फुरितं गन्धर्वनगरवत् यथा सवितुः प्रभा न ततो भिन्ना, यथा च जाग्रति असवः इन्द्रियाणि स्फुरन्ति सुषुप्तौ तु

1. M वृत्तयो 2. M, Ms कारकविभ्र० 3. A, B, G, I, J, M, Ms, T ०यः 4. A, B, G, I, J, T भूपा 5. M प्रजे० * This verse is not found in A, B, G, I, J Edns only. ** This half verse reads thus in M Edn अनादिमध्यान्त मजस्रनिर्वृतिम् संज्ञप्तिमात्रं भजताऽमुया दृशा ॥ १९ ॥ 6. V चित् 7. M, Ma गत; W हृत 8. M, Ma ०ले० 9. M, Ms ०माप्त वान् यो न 10. A, B, G, I, J नोऽयत्न

सुप्तशक्तयो भवन्तीत्यर्थः। कथम्भूतोऽसौ हरिः ? द्रव्यादीनां त्रिविधाहङ्कारकार्याणां तन्निमित्तस्य भेदभ्रमस्य चात्ययो यस्मा त्सः। यद्वा, अजाग्रति सुषुप्तौ असवः सुप्ताः शक्तयः येषां ते भवन्ति द्रव्यादे रप्यत्ययो भवति। सवितुः प्रभे त्युद्गतौ दृष्टान्त इति॥ १६॥

नन्वसङ्गे हरौ कथं प्रपञ्चोत्पत्तिलयौ तत्राह - **यथेति**। अभ्रतमः प्रकाशा आगमापायिनो रजस्तमस्सत्त्वस्थानीयाः ज्ञेयाः[1]। हे भूपाः! प्रचेतसः! तथा[2] अमूः [3-]रज-आदयः[-3] शक्तयो भवन्ति[4] उद्भवन्ति[5], न भवन्ति लीयन्ते इत्येव मयं जगत्प्रवाहः॥ १७॥

**तेनेति**। तेन सर्वकारणत्वेन हेतुना [6-]अशेषदेहिना मात्मना[-6] कालो निमित्तम्। प्रधान मुपादानम्। पुरुषः कर्ता। एतत्त्रितयात्मकत्वा[7] त्सर्वकारणं परमेश्वरम् अद्धा साक्षा द्भजध्वम् कथम् ? आत्मन[8] एकभावेनाभिन्नत्वेन॥ १८-१९॥

अज्ञत्वेन[9] साधन माह - **दययेति**। दयादिभिः शीघ्रं तुष्यति॥ २०॥

ततो न कदाचिद्भक्त जनान्[10] त्यजतीत्याह - **अपहतेति**। अपहताः [11-]निरस्ताः[-11] सकला एषणाः कामा यस्मा त्स चासौ अमल आत्मा मन स्तस्मिन् सतां मनसि निरन्तर मेधितया भावनयोपहूतः सन्निधापित स्सन् अक्षरो हरि श्छिद्रवत् तत्रत्याकाशवत् ततो न सरति नाऽपयाति हि। किं कुर्वन् ? आत्मनः स्वस्य[12] निजजनवशगत्वं स्वभक्ताधीनत्वम् अयन् अवगच्छन्॥ २१॥

**वीर॰** एवं सर्वकारणत्व मुक्तम्। अथ सर्वात्मतामाह - तदेतज्जगत् आत्मनः परं पदं वासस्थानं गृहादि साम्य व्यावृत्त्यर्थ माह - सवितु र्यथा प्रभेति। सवितुः प्रभेव[13] कृत्स्नं जगत् परमात्मनोऽपृथक्सिद्धविशेषणं शरीर मित्यर्थः। जगतोऽनित्यत्वात् तन्निरूपित मात्मत्व मपि परमात्म न्यनियत मित्याशङ्कां निराकर्तुं जगद्विशिनष्टि - सकृद्विभातं सृष्टिदशायां स्थूलतया सकृद्वि भातं, सकृद्विभात मित्यनेन सकृत्संहारदशायां सूक्ष्मतया न[14] विभात मिति विवक्षितम्। स्थूल सूक्ष्म धर्म निवृत्तत्वेऽपि द्रव्यनित्यत्व मनेनाऽभिप्रेतम्। एतदेव स्पष्टयितुं सकृद्भानाभानयोः दृष्टान्त माह - यथेति। असुशब्देन प्राणायत्त व्यापाराणि इन्द्रियाणि लक्ष्यन्ते। असवः कदाचि ज्जाग्रति व्याप्रियन्ते, कदाचित् सुप्तशक्तयः निवृत्तव्यापाराः। कदेत्यत्राह - द्रव्येति। द्रव्यं भूतपञ्चकं ज्ञानक्रियाशब्दाभ्यां ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च लक्ष्यन्ते। इन्द्रिय भूतसंघातरूप देवमनुष्यादि देहात्म भ्रमात्यये सुषुप्ता वित्यर्थः। नहि तदानीं देहात्माभिमानः यथा प्राणाः जाग्रति सुप्तवृत्तय श्च भवन्ति। एवं जगत आविर्भाव तिरोभाव निमित्ते भानाभाने, न त्वेतावता द्रव्याऽनित्यता शङ्क्येति भावः॥ १६॥

एतदेव दृष्टान्तान्तरेण साधयति - **यथेति**। यथा नभस्याकाशे अभ्रतमः प्रकाशाः भवन्ति, कदाचिद्विभाता भवन्ति, कदाचिन्न

---

1. B, J, V, Va omit ज्ञेयाः। 2. B, J, V, Va omit तथा 3--3. B, J, V, Va omit 4. B, J, V, Va omit भवन्ति 5. V उत्पद्यन्ते 6--6. B, J, V, Va omit 7. V एवं त्रि॰ 8. V ॰ना 9. A, B, J, Va omit अज्ञत्वेन 10. B, J, V, Va omit भक्तजनान् 11--11. A omits 12. B, J, V, Va omit स्वस्य 13. A, B, T प्रभावत् 14. W नाव॰

विभाता भवन्ति। न हि भानाभावमात्रेण अभ्रादीना मसत्ता शङ्कितुं युक्ता। एवं हे भूपाः! प्रवाहः प्रवहमाना रजस्तमस्सत्व मित्येवंरूपाः अमू श्शक्तयः कार्योप योग्य पृथक्सिद्ध विशेषण भूताः परे ब्रह्मणि कदाचि द्भवन्ति न भवन्ति च। [1-]प्रवहते इति प्रवाहः[-1] वेदाः प्रमाण मितिवत्। शक्तयः प्रवाह इत्युक्तम्॥ १७॥

तेनावस्थानां स्थूलत्व सूक्ष्मत्वादीना मनित्यत्वेऽपि तदाश्रयस्य प्रकृति पुरुषात्मक द्रव्यस्य नित्यत्वा त्तस्य परमात्मानं प्रतिनियत शरीरत्वेन अशेषदेहिना मेकं आत्मानं कालं कालशरीरकं, प्रधानं प्रकृतिशरीरकं, पुरुषं जीवशरीरकम्। प्रकृति सम्बन्ध प्रयुक्त संसारित्व शंकां निरस्यति। स्वतेजसा स्वप्रकाशेन ध्वस्तः [2]निरस्तः गुणप्रवाहोदयः संसारो यस्य, नियन्तृतया प्रकृतिसम्बन्धो नतु जीवस्येव वश्यतयेति भावः। एवम्भूतं परेषां ब्रह्मादीना मपीशम् आत्मैकभावेन सर्वात्मकत्वेन सर्वेषा मात्मना मेकोऽन्तरात्मेति बुद्ध्या [3]अद्धा साक्षात् भजध्वम्॥ १८॥

कीदृशं तद्ब्रह्म स्वरूपम्? यद्भजध्व मित्युच्यते इति विवित्सायां प्रकृतिपुरुषविलक्षणं "सत्यं ज्ञानं मनन्तम्" (उ. 2-1-1) इति स्वरूपशोधक वाक्यावगतं ब्रह्मस्वरूपं शोधयं स्तद्भजते त्याह - **निरस्तेति**। निरस्तसङ्कल्पविकल्पं मानसबुद्धि सुखदुःखेच्छाद्वेषादिविकल्परहित मित्यर्थः। अनेन बद्धजीवव्यावृत्तिः अद्वयं द्वयं द्वयोः समुदायः, तदन्यत् स्वसजातीय द्वितीय वस्त्वभावात्। यथा - "न तत्सम श्चाऽभ्यधिक श्च दृश्यते" (श्वेता.उ. 6-8) इति अद्वितीय मित्यर्थः। अनेन मुक्त[4]जीवव्यावृत्तिः, तेषां सजातीय द्वितीय सद्भावात्। द्वयापवादोपरमोपलम्भनम्। द्वयशब्देन द्वैतं विवक्षितम्, तदेवापवादः। ब्रह्मज्ञानबाधकं देवमनुष्यादि भेदापवादविरमे उपलम्भनं यस्य तत् तथोक्तम्। देहात्मभ्रमनिवृत्ता वुपलभ्य मित्यर्थः। अजस्रनिर्वृतं नित्यानन्द धर्मकं, नित्यानन्दस्वरूपं वा, अतोऽपि प्रागुक्तार्थ उचितः। अनादि मध्यान्त मिति नित्यत्वस्य कथितत्वात्; अजस्रशब्दस्य पुनरुक्तिप्रसङ्गात्। संज्ञप्ति मात्रं क्वचिदप्य जडस्वरूपम् अमुया दृशा पूर्वोक्तज्ञानेन भजत। निरस्तसङ्कल्पविकल्प मिति पदेन "विशोकोऽविजिहत्सोऽपिपासः" (छान्दो. 8-1-59) "अस्थूल मनण्वह्रस्वम्" (बृह.उ. 3-8-8) इति वाक्योक्तं प्रकृति पुरुषवैलक्षण्यव दमलत्व मुक्तम्। अनादिमध्यान्त मिति सत्यत्व मुक्तम्। निर्विकारत्वं हि सत्यत्वं, संज्ञप्तिमात्र मिति ज्ञानशब्दार्थः उक्तः। "अजस्र निर्वृत" मित्यनेन "स एको ब्रह्मण आनन्दः" (तैत्ति. उ. 2-8) "आनन्दो ब्रह्म" (तैत्ति. उ. 3-6) - इत्याद्यर्थ उक्तः। समाभ्यधिकराहित्यवाचिनाऽद्वयशब्देन अनन्तत्व मुक्तम्। सद्वितीयं हि सर्वं देशादिभिः परिच्छिन्नम्; अतोऽद्वितीयत्वा दनन्तत्वसिद्धिः॥ १९॥

1--1. W omits 2. W omits निरस्तः 3. A omits अद्धा 4. W omits जीव

तदेवं सत्यत्वज्ञानत्वाऽनन्तत्वामलत्वविशिष्टं शोधक वाक्यावगतं परमात्मस्वरूप मुक्तम्। अमुये त्युक्तायाः दृशः साधनान्याह - **दययेति**। [1-]सर्वेषु उच्चावचेषु भूतेषु यथोचित सत्कारोपयोगिन्या दयया येन केनचि दैवाल्लब्धेनाऽन्नादिना अन्तर्बाह्येन्द्रिय निग्रहेण च अनुगृहीतया दृशा जनार्दन स्तुष्यति[-1]॥ २० ॥

ततस्तुष्टो भगवान् न कदाचित् त्यजतीत्याह - **अपहृतेति**[2]। अपहृता[3] निरस्ताः सकला एषणाः कामाः यस्मात् स चासौ अमलः आत्मा मनः तस्मिन्। एवं विधे सतां मनसि निरन्तरमेधितया भावनया भक्त्या उपहूतः सन्निधापितः सन् अक्षरो हरिः च्छिद्रवत् पृथक्सिद्धवत् ततो न सरति नाऽपयाति, किं कुर्वन् आत्मनः निज जनवश्यत्वं स्वभक्ताधीनत्वं यन् गच्छन्॥ २१ ॥

**विज०** अस्तु सर्वश्रेयसा मात्मावधित्व मेषु सत्सु कथं प्रकाशत इति - तत्राह **एतदिति**। पूर्व सञ्चीर्णश्रेयस्सु सत्सु, यदा सुप्तवृत्तयो विलीनश्वासादिवृत्तयोऽसुप्तप्रवृत्तयः प्रबुद्ध वृत्तयोऽसव इन्द्रियाणि जाग्रति पुरुषं बोधयन्ति उद्योगे स्थिता वा यदा च द्रव्यक्रिया कारक विभ्रमात्ययः तदा यत्तदुपनिषद्वेद्यं तदेत ज्जगत् आत्मनः प्रपञ्चस्वामिनो हरेः परं पदम्। यथा सवितुः प्रभा सकलपदार्थप्रकाशिका सूक्ष्माऽपि तथा सकृद्विभातं भवति। यथा नारदस्य पुनरभ्यासे सर्वदैवेत्यन्वयः देहात्मभावभ्रमो द्रव्यभ्रमः, अहं कर्तेति क्रियाभ्रमः, मदीयानीमानीन्द्रियाणि इति कारक भ्रमः, मुख्यप्राण प्रसादेन प्राणशब्दवाच्ये ष्विन्द्रियेषु ज्ञानार्थं पुरुषोद्बोधनोद्योगवत्सु जाग्रतो योगिनो ज्ञानोत्पत्त्या द्रव्यादिविभ्रमनिवृत्त्या भगवत्स्वरूपं प्रकाशत इति भावः। हरा वेव गुणप्रवाह इत्युक्ते गुणप्रवाहाधारत्वेन सोपाधिकत्वं हरेः स्या दित्यत आह - एत दिति। एतदेव विष्णोः पदं तदुत्पन्नं जगदात्मन उपाधेः पर मुपाध्य सम्बन्ध माधारा धेयभावो गगनगन्धर्वनगरवत् ज्ञातव्यः। तर्हि शून्यं तत्राह - सकृद्विभात मिति। प्रज्ञानधनं यथा सवितृप्रभा प्रभाता तद्वत्स्थितं यज्ज्ञानात् द्रव्यक्रिया ज्ञान भिदा भ्रमो जगद्भेदभ्रम स्तस्य निवृत्ति र्भवति। किं लक्षणो हरि रित्यनेन तल्लक्षणं तज्ज्ञानं चोच्यते। ननु प्रज्ञान घना ज्जडस्य जगतः कथ मुत्पत्ति रित्याशङ्क्य दृष्टान्तेनोपपादयति यथेति। यथाऽसवः इन्द्रियाणि अजाग्रति सुप्तिकाले सुप्तवृत्तयोऽपहृतव्यापारा आत्मनिलीना स्ततः प्रबोधे प्रज्ञानघनादप्यात्मनो जायन्ते। तद्वद्ब्रह्मणो जगदित्येत दपव्याख्यानम्। "आत्मभावः शरीरेषु द्रव्यभ्रम उदाहृतः। क्रियाभ्रम स्त्वहं कर्ता मदीयानीन्द्रियाणि तु। कारकभ्रम इत्युक्त स्त एते विभ्रमा यदा। श्वासादिवृत्तिलोपेन प्राणा उद्योगिनस्तदा। विलीयन्ते प्राणभक्त्या नित्यं स्वापवतां स्फुटम्। उद्योग एव जाग्रत्स्या द्योगिनां मुक्ति सिद्धये॥" (अध्यात्मे) इत्यनेनैतद्व्याख्यानरूपेण सम्प्रदायविभ्रम प्रकाशकेन निरस्त मिति ज्ञायते। "एको देवः सर्वभूतेषु गूढः" (श्वेता.उ. 6-11) "यस्मिन् सर्वाणि भूतानि" (ईश. 3.7) इत्यादिषु एकस्य हरे राधाराधेयभावस्य सत्यत्वावगमात्। न हि सुषुप्ता विन्द्रियाणा मात्मनि लयः, प्रज्ञानघना दुत्पादोऽपि स्वकपोलकल्पितत्व मन्तरेण प्रामाणिक इति॥ १६ ॥

1--1. T omits 2. A, B, T °ह° 3. A, B, T °ह°

ननु पङ्किलप्रदेशे प्रवर्तमान देवदत्तवत् सृष्ट्यादौ गुणपङ्के प्रवृत्तस्य तत्कृतलेपः स्यात्, सचाऽनुपपन्नो''ऽसङ्गोह्ययं पुरुषः'' (बृह.उ. 4-3-15) इति श्रुतेरिति तत्राह - **यथेति**। यथा नभस्यभ्रतमः प्रकाशा आगमापायिनः अनुक्रमेण भवन्ति च न तावताऽऽकाशस्य तत्सम्बन्ध लेपोऽस्ति। एवं परेऽसङ्गे ब्रह्मणि रजस्तमस्सत्त्व मित्यमूः शक्तयो भवन्ति। तदेका धीनत्वात् शक्तिशब्दवाच्याः इत्ययं गुण प्रवाहो न तस्मिन् विशेष मापादयती त्येत त्तुशब्दादवगन्तव्यम्। ननु शक्तीनां मिथ्यात्वात् शक्तिं प्रकाशयितुं नैपुण्याभावात् ब्रह्मणि लेपाभाव इत्यतो वाह इतीति। अयं सत्य इति शेषः। एतदभिप्रायेण प्रवाह इत्युक्तम्। यथाऽग्निप्रतिष्ठम्भन समर्थस्याऽपि तत्प्रयुक्त दाहदुःखाभावो, न त्वग्ने र्मिथ्यात्वा देवं ब्रह्मणो लेपकत्वशक्तिरपि द्रव्याणां भगवदधीनेति विशेषं तुशब्दो वक्तीति वा॥ १७॥

मथितार्थमाह - **तेनेति**। यत एवं प्रवृत्तिमत्त्वेऽपि तत्कृत दोष लेपाभाव स्तेन विष्णुरेक एव पूर्णो न त्वन्य इति लक्षणाऽऽत्मा एक इति भावेन एत मितः प्रेत्याभिसम्भावितास्मीति बुद्ध्या परमात्मानं भजध्व मित्यन्वयः। ''पूर्णो विष्णुः स एवैक इति भावो य ईरितः। आत्मैकभाव इति तं विदु र्ब्रह्मात्मदर्शिनः'' (सत्यसंहितायाम्) इति वचना दात्मैकभावेनेति नैक्य मुच्यते। ''एक मेवाद्वितीयम् (छान्दो. उ. 6-2-1) आत्मान मेवं लोकमुपासीत।'' (बृह.उ. 1-4-5) ''प्रधाना दिद मुत्पन्नम्'' इत्यादिश्रुतेः। सप्रमाणी कर्तु मेकमित्यादीनि विशेषणानि बोद्धव्यानि॥ १८॥

इत्थम्भावान्तर माह - **निरस्तेति**। भक्तानां निरस्तौ सङ्कल्पविकल्पौ येन स तथा हरिप्रसाद मन्तरेण तौ निरस्तौ न स्यातां पुंसा मित्यर्थः। त मद्वयं द्वितीयसमरहितं, ''संकल्पश्च विकल्पश्च ऋते विष्णुप्रसादतः। नैव सम्भवतो विष्णोः समा भावा तु सोऽद्वयः'' (तन्त्रभागवते) इति वचनं चाऽत्र मानम्। द्वयस्य पञ्चविधस्य भेदस्यापवादः। कुतर्कै[1] र्निरास स्तमुपरमन्ति न कुर्वन्तीति ते द्वयापवादोपरमा स्तेषु उपलम्भनं दर्शनं यस्य स तथा तं च न आदिमध्यान्ता यस्य स तथा, त मजस्रनिर्वृतिं नित्यानन्दं, संज्ञप्तिमात्रं ''विज्ञानधन'' इत्युक्तेः यादृशेन दर्शनेन निरस्तसङ्कल्पादिगुणविशेषाः तादृशेन नानुपसंहृत्य भजतेत्यन्वयः॥ १९॥

साधनान्तरं चाह - **दययेति**। येन केन चिच्छास्त्र विहितेन लब्धेन अन्नपानादिना सन्तुष्ट्याऽलम्बुद्ध्या॥ २०॥

ननु बहुजन्मचीर्ण सुकृतानन्त्येन प्रसाद्य सकृद्विभातं यदि पश्चान्नेति पक्षे बहुक्लेशेन साधनानुष्ठानं व्यर्थं पारदसाधनवदिति तत्राह - **अपगतेति**। अपगता दूरतो निरस्ताः समस्ताः सकला ईषणाः[2] पुत्रवित्तादिकामा यस्मात् स तथा। अत एव अमलश्चाऽऽत्मा अपगत सकलेषणामलात्मा[3] तस्मिन्। एवं विशुद्धान्तः करणे निरन्तर मेधितया भावनया भक्त्या आहूत इव आगत्याऽऽत्मानं

1. A तर्कभि° 2. A, B ए° 3. A, B °लै°

